*Parimal Sanskrit Series No. 11*

# RĀMĀYAṆA OF VĀLMĪKI

WITH THE COMMENTARIES
TILAKA OF RĀMA, RĀMĀYAṆAŚIROMAṆI OF ŚIVASAHĀYA AND BHŪṢAṆA OF GOVINDARĀJA

*EDITED BY*

SHASTRI SHRINIVASA KATTI MUDHOLAKARA

INCLUDES AN EXHAUSTIVE INTRODUCTION
IN SANSKRIT AND INDEX OF VERSES

*by*

SATKARI MUKHOPADHYAYA

## Vol. VII

UTTARAKĀṆḌA

*Sole Distributors* :
MEHARCHAND LACHHMANDAS
ORIENTAL BOOKSELLERS & PUBLISHERS
DARYAGANJ, NEW DELHI-110 002

परिमल संस्कृत ग्रन्थमाला संख्या-११

श्रीमद्वाल्मीकिमहामुनिप्रणीतं

# रामायणम्

रामप्रणीतरामायणतिलक—शिवसहायप्रणीत
रामायणशिरोमणि—गोविन्दराजप्रणीत-
रामायणभूषणेति-टीकात्रयेणोपस्कृतम् ।

तच्च

कट्टी श्रीनिवासशास्त्रिभिः

संशोधितं पाठान्तरैः टिप्पण्यादिभिश्च समलंकृतम्

तथा

श्रीसातकडिमुखोपाध्यायशर्मणा

विनिर्मितया विशदभूमिकया श्लोकानुक्रमण्या च
सनाथीकृतम् ।

सप्तमो भागः

[उत्तरकाण्डम्]

परिमल पब्लिकेशन्स

दिल्ली — अहमदाबाद

प्रकाशक :

**परिमल पब्लिकेशन्स**

३३/१७ शक्तिनगर
दिल्ली-११०००७
(भारत)

अधिकृत विक्रेता :

**मेहरचन्द लछमनदास**

प्रकाशक एवं पुस्तक-विक्रेता
१ अन्सारी रोड, दरियागंज
नई दिल्ली-११०००२ (भारत)

१९८३
मूल्य : रु० १७५

मुद्रक :

**ए० के० डिस्ट्रीब्यूटर्स, द्वारा**
**डीलक्स आफसेट प्रिंटर्स**
**दिल्ली-११००३५**

॥ श्रीः ॥

आदिकविश्रीवाल्मीकिमहामुनिप्रणीतम्

# रामायणम् ।

तिलक-रामायणशिरोमणि-गोविन्दराजीये(भूषणे)ति-

टीकात्रयसमलंकृतम्

## उत्तरकाण्डम् ।

### प्रथमः सर्गः ।

श्रीरामं विजयिनं श्रुत्वा प्रहृष्टानामभिनन्दितुकामानां चतुर्दिग्वासिनामृषीणामयोध्यायामागमनम् । रावणादिवधतुष्टानपि विशेषत इन्द्रजिद्वतिविस्मितान्मुनीन्प्रतीन्द्रजिच्चरित्रश्रवणे सकुतूहलं रामस्य प्रश्नः ।

**प्राप्तराज्यस्य रामस्य राक्षसानां वधे कृते । आजग्मुर्मुनयः सर्वे राघवं प्रतिनन्दितुम् ॥ १ ॥**

#### तिलकटीका ।

उत्तरे तूत्तरं कार्यं कृत्वायोध्यां निजे पदे ।
स्थापयित्वा स्वयं रेजे रामो नः कुलदैवतम् ॥

१ ] अथ रावणस्य ब्रह्मानुग्रहजबलवैभवप्रतिपादनद्वारा तज्जेतृत्वेन भगवति पराक्रमातिशयं प्रतिपादयितुं त्वद्दत्तवैभवं त्वयैवोपसंहृतमिति भगवन्महिमानं च स्तोतुमृषय आगता इत्याह–प्राप्तेति । राक्षसानां वधे कृतेऽनन्तरं प्राप्तराज्यस्य प्राप्तराज्याभिषेकस्य समीपं मुनय आजग्मुः । किमर्थम् । राघवं प्रतिनन्दितुम् । तद्वैभवमभिष्टोतुमित्यर्थः ॥ १ ॥

#### रामायणशिरोमणिः ।

स्वस्ति श्रीसदयं जितरिपुमभयं शरणदमनयं नृपनृपतिम्
सीतायुतशयनं पङ्कजनयनं कृतसखिचयनं दीनगतिम्
वन्दे श्रीरामं परमभिरामं जलदश्यामं मुकुटधरम्
सीताकरकरकं मनसिजहरकं श्रितसुखपरकं सकलवरम् ॥१॥
वन्दे रणधीरं श्रीमहावीरं सखितसमीरं पवनसुतम्
परसेवानिरतं परकृतिविरतं भुवने विततं वीरनुतम्
जयति श्रीगङ्गा दुरितनिभङ्गा यमुनासङ्गा गिरा युता
यत्तीरनिवासी सुखसुखभासी परप्रकाशी जन्हुसुता ॥ २ ॥
श्रीभारद्वाजो जयति विराजो मुनिगणराजो यस्य गुरुः
वल्मीकप्रसूतो नित्यं पूतो जितयमदूतो भक्तगुरुः
रामायणकर्ता संसृतिहर्ता दुःखविदर्त्तः दयानिधिम्
वन्दे गुरुमीशं सकलसुधीशं कृतपृथिवीशं शर्मविधिम् ॥ ३ ॥
कृत्वारसकाण्डे श्रुतिरसभाण्डे सद्ब्रह्माण्डे विदिततमे
रामायणतिलकं तत्त्वनिमिलकं हृतहृद्विलकं सुखपरमे
कुर्मः श्रुतिसारं श्रीविस्तारं श्रितजनतारं शिरोमणिम्
सत्तररतिकारं हृतभवभारं स्कन्धविदारं व सुमणिम् ॥ ४ ॥

षड्भिः काण्डैः राज्याभिषेकपर्यन्तं रामचरितं संवर्ण्योत्तरवृत्तान्तं वर्णयितुमुत्तरकाण्ड आरभ्यते तत्र प्रथमे सर्गे ऋषीणामागमनं वर्णयन्नाह—प्राप्तेत्यादिभिः । राक्षसानां वधे कृते सति सर्वे मुनयो राघवं प्रतिनन्दितुं प्राप्तराज्यस्य रामस्य समीपमाजग्मुः ॥ १ ॥

#### भूषणटीका ।

श्रीमद्वत्सकुलप्रदीपशठजित्पादारविन्दद्वयी—
सेवालब्धसमस्तशास्त्रवितितिर्गोविन्दराजाह्वयः ।
श्रीरामायणभूषणेऽत्र मुकुटीभूतां पराम्रुत्तरे
ग्रन्थे व्याकृतिमातनोति विदुषां प्रीतिः पुनर्वर्धताम् ॥१॥

प्राप्तेत्यादि । राक्षसानां वधे कृते सति प्राप्तराज्यस्य रामस्य अनादरे षष्ठी प्राप्तराज्यं राममनादृत्य राघवं लक्ष्मणं प्रतिनन्दितुं सर्वे ऋषय आजग्मुः । प्राधान्येनेन्द्रजिद्वधं प्रशंसिष्यन्ति रामस्य समीप इति शेष इत्येके । अत्र प्रेतिगायत्र्याः एकविंशाक्षरम् ॥ १ ॥ २ ॥

कौशिकोऽथ यवक्रीतो गार्ग्यो गालव एव च । कण्वो मेधातिथेः पुत्रः पूर्वस्यां दिशि ये श्रिताः ॥ २ ॥
स्वस्त्यात्रेयश्च भगवान्नमुचिः प्रमुचिस्तथा । अगस्त्योऽत्रिश्च भगवान्सुमुखो विमुखस्तथा ॥ ३ ॥
आजग्मुस्ते सहागस्त्या ये श्रिता दक्षिणां दिशम् । नृषङ्गुः कवषी धौम्यः कौषेयश्च महानृपिः ॥ ४ ॥
तेऽप्याजग्मुः सशिष्या वै ये श्रिताः पश्चिमां दिशम् । वसिष्ठः कश्यपोऽथात्रिर्विश्वामित्रः सगौतमः ॥ ५ ॥
जमदग्निर्भरद्वाजस्तेऽपि सप्तर्षयस्तथा । उदीच्यां दिशि सप्तैते नित्यमेव निवासिनः ॥ ६ ॥
संप्राप्यैते महात्मानो राघवस्य निवेशनम् । विष्ठिताः प्रतिहारार्थं हुताशनसमप्रभाः ॥ ७ ॥
वेदवेदाङ्गविदुषो नानाशास्त्रविशारदाः । द्वाःस्थं प्रोवाच धर्मात्मा अगस्त्यो मुनिसत्तमः ॥ ८ ॥
निवेद्यतां दाशरथेर्ऋषयो वयमागताः । प्रतीहारस्ततस्तूर्णमगस्त्यवचनाद्द्रुतम् ॥ ९ ॥
समीपं राघवस्याशु प्रविवेश महात्मनः । नयेङ्गितज्ञः सद्वृत्तो दक्षो धैर्यसमन्वितः ॥ १० ॥
स रामं दृश्य सहसा पूर्णचन्द्रसमद्युतिम् । अगस्त्यं कथयामास संप्राप्तमृषिसत्तमम् ॥ ११ ॥
श्रुत्वा प्राप्तान्मुनींस्तांस्तु बालसूर्यसमप्रभान् । प्रत्युवाच ततो द्वाःस्थं प्रवेशय यथासुखम् ॥ १२ ॥
दृष्ट्वा प्राप्तान्मुनींस्तांस्तु प्रत्युत्थाय कृताञ्जलिः । पाद्यार्घ्यादिभिरानर्च गां निवेद्य च सादरम् ॥१३॥

---

२ ] ति० टी०—पूर्वस्यां दिशि ये श्रिताः । पूर्वदिशि प्रधानतया ये स्थिता इत्यर्थः ॥ २ ॥

३–५ ] ति० टी०—स्वस्तिकर आत्रेय स्वस्त्यात्रेयः ॥ ३–५ ॥

६ ] ति० टी०—तेऽपि । उक्तवसिष्ठादिरूपाः सप्तर्षयोऽप्यागता इत्यर्थः । तेषां स्वरूपकथनम्—उदीच्यां दिशीत्यादि । ननु पुरोहितो वसिष्ठो नित्यं समीप एव वर्तते, को नामासौ वसिष्ठो य उत्तरदिशः कश्यपादिभिः सहागत इति चेच्छृणु । यथागस्त्यस्तेजोमण्डले नक्षत्रमये नित्यस्थितोऽपि योगवैभवाद्भूलोके स्वाश्रमस्थोऽपि, तथा वसिष्ठोऽपि ज्योतिर्मण्डले सप्तर्षिमध्यगोऽप्यस्ति, भूलोके च । तत्र सप्तर्षिमण्डलस्थस्तैः सहागत इत्युच्यते इति वदन्ति ॥ ६ ॥

रा० टी०—ऋषीणां नाम निर्दिशन्नाह—कौशिक इत्यादिभिः । पूर्वस्यां दिशि ये श्रिताः स्थिताः कौशिकादयस्ते ये च दक्षिणां दिशं श्रिताः स्वस्त्यात्रेयप्रभृतयस्ते च आजग्मुः तत्र स्वस्तिसम्पादक आत्रेय इति कर्मधारयः दत्तात्रेय इति पाठान्तरम् सार्द्धश्लोकद्वयमेकान्वयि ॥ ३ ॥

रा० टी०—नृषद्गुरिति । ये पश्चिमां दिशं श्रिताः ते नृषद्गुप्रभृतयोप्याजग्मुः ॥ ४ ॥

गो० टी०—स्वस्तीति । स्वस्तिकरः आत्रेयः ॥ ३ ॥४॥

रा० टी०—वशिष्ठ इति । उदीच्यां दिशि नित्यं निवासिनो य एते प्रसिद्धाः वसिष्ठादयःसप्तर्षयस्तेप्याजग्मुरित्यनुकृष्यते सार्द्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—वसिष्ठ इति । उक्ता वसिष्ठादयः सप्तेत्यर्थः । ननु वसिष्ठः अयोध्यायां पुरोहिततया नित्यं वर्तमानः कथमिदानीमुदीच्या दिशः समागत इत्युच्यते । सत्यम् । यथाऽगस्त्यो ज्योतिर्मण्डलस्थोपि भुवि तपःसमार्जनाय शरीरान्तरे स्थित आगतस्तथा वसिष्ठोऽपि ज्योतिर्मण्डलस्थः सप्तर्षिभिः समागत इति बोध्यम् । तदागमनदशायां नगरस्थो वसिष्ठो नायातः अत एव न परिगणितः । कौशिकः कुशिकवंश्यो विश्वामित्रादन्यः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—प्रतिहारो द्वाःस्थः । तदर्थं तन्मुखेन रामाय स्वागमननिवेदनार्थम् विष्ठिताः द्वारि स्थिता इत्यर्थः ॥ ७ ॥

रा० टी०—संप्राप्येति । वेदवेदाङ्गविदुषः तद्विद्वांसः एते पूर्वोक्ता महात्मानो राघवस्य निवेशनं संप्राप्य प्रतिहारार्थं प्रतीहारद्वारा रामाज्ञापूर्वकतद्वेश्मस्वप्रवेशार्थं विष्ठिताः संस्थिताः बभूवुरिति शेषः सार्धश्लोक एकान्वयी ॥ ७ ॥

गो० टी०—संप्राप्येति । प्रतिहारो द्वाःस्थः 'द्वारि द्वाःस्थे प्रतीहार' इत्यमरः ॥ ७ ॥ १२ ॥

८ ] ति० टी०—अवस्थानानन्तरं सर्वानुमत्यागस्त्यो द्वाःस्थमुवाच ॥ ८ ॥

रा० टी०—द्वाःस्थमिति । वयमृषय आगताः इति दाशरथेस्समीपे निवेद्यतामिति द्वाःस्थं प्रत्यगस्त्यः प्रोवाच ॥ ८ ॥

९ ] ति० टी०—किमुवाच तदाह—निवेद्यतामिति । तूर्णमिति मानसी त्वरा । द्रुतमिति कायिक्युक्ता ॥ ९ ॥

१०–१२ ] ति० टी०—आश्वित्यनेन राजावसरपरीक्षाभावो विवक्षितः ॥ १० ॥ १२ ॥

रा० टी०—प्रतिहार इति । प्रतिहारः अगस्त्यवचनात् राघवस्य समीपं प्रविवेश जगाम—दृश्येति । नयेङ्गितसत्वादिविशिष्टः स प्रतिहारः रामं दृश्य दृष्ट्वा प्राप्तमगस्त्यं कथयामास सार्धश्लोक एकान्वयी ॥ १०–११ ॥

रा० टी०—श्रुत्वेति 'मुनीन् प्राप्तान् श्रुत्वा यथासुखं प्रवेशयेति द्वाःस्थं प्रत्युवाच राम इति शेषः ॥ १२ ॥

१३ ] ति० टी०—निवेद्य । प्रत्येकमिति शेषः ॥ १३ ॥

---

१ मथेति गो. पा. । २ नृषद्गुरिति गो. रा. पा. । ३ कवष इति रा. पा. । ४ रौद्रेय इति गो.पा. । ५ ते इति गो.पाठः । ६ ऋषीनस्मान्समागतानिति गो. पाठः । ७ ऋषिभिः सहेति गो. पाठः ।

रामोऽभिवाद्य प्रयत आसनान्यादिदेश ह । तेषु काञ्चनचित्रेषु महत्सु च वरेषु च ॥ १४ ॥
कुशान्तर्धानदत्तेषु मृगचर्मयुतेषु च । यथार्हमुपविष्टास्ते आसनेष्वृषिपुंगवाः ॥ १५ ॥
रामेण कुशलं पृष्टाः सशिष्याः सपुरोगमाः । महर्षयो वेदविदो रामं वचनमब्रुवन् ॥
कुशलं नो महाबाहो सर्वत्र रघुनन्दन । ॥ १६ ॥
त्वां तु दिष्ट्या कुशलिनं पश्यामो हतशात्रवम् । दिष्ट्या त्वया हतो राजन्रावणो लोकरावणः ॥१७॥
नहि भारः स ते राम रावणः पुत्रपौत्रवान् । सधनुस्त्वं हि लोकांस्त्रीन्विजयेथा न संशयः ॥१८॥
दिष्ट्या त्वया हतो राम रावणः पुत्रपौत्रवान् । दिष्ट्या विजयिनं त्वाद्य पश्यामः सह सीतया ॥१९॥
लक्ष्मणेन च धर्मात्मन्भ्रात्रा त्वद्धितकारिणा । मातृभिर्भ्रातृसहितं पश्यामोऽद्य वयं नृप ॥ २० ॥
दिष्ट्या प्रहस्तो विकटो विरूपाक्षो महोदरः । अकम्पनश्च दुर्धर्षो निहतास्ते निशाचराः ॥ २१ ॥
यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते । दिष्ट्या ते समरे राम कुम्भकर्णो निपातितः ॥ २२ ॥
त्रिशिराश्चातिकायश्च देवान्तकनरान्तकौ । दिष्ट्या ते निहता राम महावीर्या निशाचराः ॥ २३ ॥
[ कुम्भश्चैव निकुम्भश्च राक्षसौ भीमदर्शनौ । दिष्ट्या तौ निहतौ राम कुम्भकर्णसुतौ मृधे ॥
युद्धोन्मत्तश्च मत्तश्च कालान्तकयमोपमौ । यज्ञकोपश्च बलवान्धूम्राक्षो नाम राक्षसः ॥
कुर्वन्तः कदनं घोरमेते शस्त्रास्त्रपारगाः । अन्तकप्रतिमैर्बाणैर्दिष्ट्या विनिहतास्त्वया ] ॥
दिष्ट्या त्वं राक्षसेन्द्रेण द्वन्द्वयुद्धमुपागतः । देवतानामवध्येन विजयं प्राप्तवानसि ॥ २४ ॥

---

रा० टी०–दृष्ट्वेति । प्राप्तान्मुनीन्दृष्ट्वा कृताञ्जलिः रामः प्रत्युवाच सत्कारकारकवचनमुच्चारयामास गां वृषभं निवेद्य प्रत्येकं दत्वा पाद्यार्घ्यादिभिः आनर्च च ॥ १३ ॥

गो० टी०–तानिति । अभिवाद्येति । समुदायं प्रतीति शेषः ॥ १३ ॥ १६ ॥

१४ ] ति० टी०–वरेषु बहुमूल्येषु ॥ १४ ॥

१५ ] ति० टी०–कुशान्तर्धानदत्तेषु कुशैरन्तर्धानं दत्तं कृतं येषु । कुशास्तृतेष्वित्यर्थः ॥ १५ ॥

रा० टी०–राम इति । प्रयतो रामः अभिवाद्य प्रणम्य आसनानि आदिदेश स्थातुमाज्ञापयामास अर्द्धं पृथक् । तेष्विति । ऋषिपुङ्गवाः कांचनान्येव चित्राणि तेषु महत्सु विशालेषु वरेषु उत्तमेषु कुशाः अन्तर्धानदत्ता अधोदेशे स्थापिता येषु किं च कुशैरन्तर्धानदत्तानि तिरोहितीकृतानि कुशैरास्तृतानीत्यर्थः तेषु मृगचर्मयुतेषु आसनेषु यथार्हमुपविष्टाः बभूवुरिति शेषः सार्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

१६ ] ति० टी०–सपुरोगमाः पुरोगमैः प्रधानैः सहिताः १६

रा० टी०–रामेणेति । रामेण कुशलं पृष्टाः महर्षयः राममब्रुवन् तत्प्रकारमाह–कुशलमित्यादिभिः । हे महाबाहो हतशात्रवं निहतशत्रुसमूहं कुशलिनं नित्यं कुशलयुक्तं त्वां दिष्ट्या भाग्यवशेन यस्मात्पश्यामः तस्मात् नोऽस्माकं कुशलं सर्वत्र सर्वदेशेषु अस्तीति शेषः ॥ १६ ॥

गो० टी०–कुशलमिति । सर्वत्र पुरकोशादिषु । दिष्ट्या दैवात् । हतशात्रवं हतशत्रुम् ॥ १७ ॥

१७ ] ति० टी०–हतशात्रवं शत्रुसमूहं त्वां भाग्येन कुशलिनं पश्यामः, तेन नः कुशलमेव । यत्त्वया शत्रुर्हतस्तेनैवास्माकं कुशलमित्यर्थः ॥ १७ ॥

रा० टी०–दिष्ट्येति । दिष्ट्या अस्मद्भाग्यवशेन रावणस्त्वया हतः अर्द्धं पृथक् ॥ १७ ॥

गो० टी०–दिष्ट्येति । रावणस्ते न हि भारः । तद्वधस्ते ईषत्कर्मेत्यर्थः ॥ १८ ॥

१८–१९ ] ति० टी०–दिष्ट्या त्वया हत इत्युक्त्वा पुनर्विचार्याहुः–नहीति । पुत्रपौत्रवानपि रावणस्ते न भारः । तद्वधस्तवेषत्कर इत्यर्थः । तदेव दर्शयति–सधनुरिति । विजयेथाः । 'विपराभ्यां जेः' इति तङ् ॥ १८ ॥ १९ ॥

रा० टी०–नहीति । हि यतः सधनुः धनुषा सहितस्त्वं त्रीन् लोकान् विजयेथा अतः स प्रसिद्धो रावणस्ते भारः भारवत्पीडाप्रदो न ॥ १८ ॥

रा० टी०–दिष्ट्येति । दिष्ट्या भाग्यवशेन त्वा त्वां पश्यामः ॥ १९ ॥

गो० टी०–तदेव दर्शयति–सधनुरित्यादि । विजयेथा इति "विपराभ्याम्०" इत्यात्मनेपदम् ॥ १९ ॥ २१ ॥

२०–२१ ] ति० टी०–लक्ष्मणेन चेति । अस्यार्धस्य दिष्ट्या राक्षसा हता इति शेषः । मातृभिरित्यस्य दिष्ट्येत्यादिः । युक्तमिति शेषः ॥ २० ॥ २१ ॥

रा० टी०–लक्ष्मणेनेति । अत्रापि दिष्ट्येत्यनुकृष्यते॥२०॥

रा० टी०–दिष्ट्येति ॥ २१ ॥

२२–२४ ] ति० टी०–यस्य प्रमाणादाकारप्रमाणात् ॥ २२–२४ ॥

---

१ राक्षसेश्वर इति गो. पाठः । २ पद्यत्रयमिदमधिकं गो. पाठे ।

संख्ये तस्य न किंचित्तु रावणस्य पराभवः । द्वन्द्वयुद्धमनुप्राप्तो दिष्ट्या ते रावणिर्हतः ॥ २५ ॥
दिष्ट्या तस्य महाबाहो कालस्येवाभिधावतः । मुक्तः सुररिपोर्वीर प्राप्तश्च विजयस्त्वया ॥ २६ ॥
अभिनन्दाम ते सर्वे संश्रुत्येन्द्रजितो वधम् । अवध्यः सर्वभूतानां महामायाधरो युधि ॥ २७ ॥
विस्मयस्त्वेष चास्माकं तं[2] श्रुत्वेन्द्रजितं हतम् । [ एते चान्ये च बहवो राक्षसाः कामरूपिणः ॥
दिष्ट्या त्वया हता वीरा रघूणां कुलवर्द्धन ] । दत्त्वा पुण्यामिमां वीर सौम्यामभयदक्षिणाम् ॥
दिष्ट्या वर्धसि काकुत्स्थ जयेनामित्रकर्शन ॥ २८ ॥
श्रुत्वा तु वचनं तेषां मुनीनां भावितात्मनाम् । विस्मयं परमं गत्वा रामः प्राञ्जलिरब्रवीत् ॥ २९ ॥
भगवन्तः कुंभकर्णं रावणं च निशाचरम् । अतिक्रम्य महावीर्यौ किं प्रशंसथ रावणिम् ॥ ३० ॥
महोदरं प्रहस्तं च विरूपाक्षं च राक्षसम् । मत्तोन्मत्तौ च दुर्धर्षौ देवान्तकनरान्तकौ ॥
अतिक्रम्य महावीरान् किं प्रशंसथ रावणिम् ॥ ३१ ॥
अतिकायं त्रिशिरसं धूम्राक्षं च निशाचरम् । अतिक्रम्य महावीर्यान्किं प्रशंसथ रावणिम् ॥ ३२ ॥
कीदृशो वै प्रभावोऽस्य किं बलं कः पराक्रमः । केन वा कारणेनैष रावणादतिरिच्यते ॥ ३३ ॥

रा० टी०–यस्येति । यस्य प्रमाणात् शरीरमहत्वात् विपुलमधिकं महत्वं न विद्यते स कुंभकर्णो निपातितः त्वयेति शेषः ॥ २२ ॥

रा० टी०–त्रिशिरा इति ॥ २३ ॥

रा० टी०–दिष्ट्येति । राक्षसेन्द्रेण रावणेन द्वन्द्वयुद्धमुपागतस्त्वं दिष्ट्यैव विजयं प्राप्तवान् असि ॥ २४ ॥

गो० टी०–यस्येति । प्रमाणात् शरीरपरिमाणात् २२–२६

२५ ] ति० टी०–दृश्यरावणवधेन तव भारस्तिरोहितः रावणिवध एव तु दुष्कर इत्याहुः—संख्ये तस्येति । संख्ये तस्य रावणस्य त्वत्कर्तृकः पराभव आक्रमणमिति यत्तन्न किंचित्, अपि तु दिष्ट्या तिरोधानसाधनयानभङ्गेन द्वन्द्वयुद्धमनुप्राप्तः, अत एव हतो रावणिरिति यदिदमेव बह्विति शेषः ॥ २९ ॥

रा० टी०–संख्ये इति । येन त्वया दिष्ट्या द्वन्द्वयुद्धमुपागतो रावणिर्हतः तस्य तव रावणस्य पराभवः रावणकर्मकपराभूतिः किञ्चिन्न ॥ २९ ॥

२६ ] ति० टी०–कालस्येवालक्ष्यमभिधावतस्तस्य मुक्तः शरबन्धादिकृतपरमकृच्छ्रादिति शेषः ॥ २६ ॥

रा० टी०–दिष्ट्येति । कालस्येवाभिधावतः सुररिपोरिन्द्रजितः मुक्तः तत्प्रक्षेपितब्रह्मास्त्रादिना रहितो भव इति शेषः अत एव त्वया विजयः प्राप्तः ॥ २६ ॥

गो० टी०–दिष्ट्या त्वमिति । द्वन्द्वयुद्धमुपागतः सन् विजयं प्राप्तवानसीत्यन्वयः ॥ २७ ॥ २८ ॥

२७ ] ति० टी०–विस्मयहेतुरवध्य इति । यतः सोऽवध्यत्वादिगुणः, अत एव च एष एवेन्द्रजिद्वधोऽस्माकं विस्मयो विस्मयकर इत्यन्वयः । तत्तस्मादिन्द्रजितं हतं श्रुत्वा वयं तुष्टा इति शेषः ॥ २७ ॥

२८ ] ति० टी०–अभयदक्षिणामभयदानं दत्त्वा । ऋषिभ्य इति शेषः । वर्धसि वर्धसे ॥ २८ ॥

रा० टी०–अभिनन्दामेति । यः सर्वभूतानामवध्यः । तस्येन्द्रजितो वधं संश्रुत्य ते अत्रागताः वयं सर्वे अभिनन्दाम अभिनन्दामः ॥ २७ ॥

रा० टी०–विस्मय इति । इन्द्रजितं हतं श्रुत्वा अस्माकमेषः इन्द्रजिद्वधश्रवणजनितो विस्मयो बभूवेति शेषः अर्द्धं पृथक् । दत्त्वेति । इमां इन्द्रजिद्वधसम्भूतां अभयदक्षिणां दत्त्वा जयेन वर्द्धसि दिष्ट्यैतत् ॥ २८ ॥

गो० टी०–दिष्ट्या तस्येति मुक्तः । तस्य रावणेः । शरबन्धादिति शेषः ॥ २९–३२ ॥

गो० टी०–दत्त्वेति । अभयदक्षिणामभयदानम् । देवर्षिभ्य इत्यर्थः । वर्धसि वर्धसे ॥ ३३ ॥

२९ ] ति० टी०–विस्मयं गत्वा । रावणिवधविषयवाक्येनेति शेषः ॥ २९ ॥

रा० टी०–श्रुत्वेति । रामोऽब्रवीत् ॥ २९ ॥

गो० टी०–श्रुत्वेति । विस्मयं गत्वा रावणिवधविषयवाक्येनेति शेषः ॥ ३४ ॥ ३८ ॥

३०–३२ ] ति० टी०–तदेवाह—भगवन्त इति संबोधनम् ॥ ३०–३२ ॥

रा० टी०–तदाकारमाह—भगवन्त इत्यादिभिः । रावणिं किं किमर्थं प्रशंसथ ॥ ३० ॥

रा० टी०–तदेव भंग्यन्तरेणाह–महोदरमिति । महोदरादीनतिक्रम्य रावणिं किं प्रशंसथ सार्द्धश्लोक एकान्वयी ३१॥३२

३३ ] ति० टी०–कीदृशोऽस्य प्रभावादिः । यतो युष्माभिः प्रशस्यत इति शेषः । प्रभावस्तपःप्रभावः । बलं शारीरम् ॥ ३३ ॥

१ सोऽवध्य इति गो. पाठः । २ तदिति गो. पाठः । ३ पद्यमेकमिदमधिकं गो. पाठे । ४ कर्मणेति रा. पाठः । ५ वीर्यानिति गो. रा. पाठः ।

शक्यं यदि मया श्रोतुं न खल्वाज्ञापयामि वः । यदि गुह्यं न चेद्वक्तुं श्रोतुमिच्छामि कथ्यताम्॥३४॥
शक्रोऽपि विजितस्तेन कथं लब्धवरश्च सः । कथं च बलवानन्पुत्रो न पिता तस्य रावणः॥३५॥
कथं पितुश्चाप्यधिको महाहवे शक्रस्य जेता हि कथं स राक्षसः ।
वराश्च लब्धाः कथयस्व मेऽद्य पौप्रच्छतश्चास्य मुनीन्द्र सर्वम् ॥ ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे प्रथमः सर्गः ॥ १ ॥

## द्वितीयः सर्गः ।

अगस्त्यस्तावदादौ रावणकुलं तज्जन्म च कथयितुं प्रवृत्तस्तत्र प्रजापतिसुतस्य पुलस्त्यस्योत्पत्तिं तत्तपोवर्णनं तस्य तृणबिन्दुकन्यायाः पाणिग्रहणं ततो विश्रवोऽभिधमुनेः संभवं च कथयामास ।

तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । कुम्भयोनिर्महातेजा वाक्यमेतदुवाच ह ॥ १ ॥
शृणु राम तथा वृत्तं तस्य तेजोबलं महत् । जघान शत्रून्येनासौ न च वध्यः स शत्रुभिः ॥२॥
तावत्ते रावणस्येदं कुलं जन्म च राघव । वरप्रदानं च तथा तस्मै दत्तं ब्रवीमि ते ॥ ३ ॥

रा० टी०–कीदृश इति । अस्येन्द्रजितः प्रभावः कीदृशः केन कारणेन एष इन्द्रजित् रावणादतिरिच्यते अधिकः प्रतीयते ॥ ३३ ॥

३४] ति० टी०–शक्यमिति । यदि गुह्यं न भवति, यदि युष्माभिर्वक्तुं शक्यम्, यदि च मया श्रोतुं शक्यं तदा कथ्यताम् श्रोतुमिच्छामि केवलम्, न खलु वक्तुमाज्ञापयामि॥३४॥

रा० टी०–शक्यमिति । यदि मया श्रोतुं शक्यं गुह्यं च न अत एव त्वया वक्तुं शक्यं तदा श्रोतुमिच्छामि अतः कथ्यताम् ॥ ३४ ॥

गो० टी०–शक्यमित्यादि । यदि गुह्यं न भवति । यदियुष्माभिः वक्तुं शक्यं यदि मया च श्रोतुम् तदा कथ्यताम् । अहं तु श्रोतुमिच्छामि केवलं नतु वक्तुमित्याज्ञापयामि ॥३९॥

३५-३६ ] ति० टी०–पिता रावणो न बलवान्पुत्रापेक्षयेति च कथम् ॥ ३५ ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे प्रथमः सर्गः ॥ १ ॥

रा० टी०–शक्र इति । शक्रोऽपि तेन कथं विजितः स इन्द्रजित् लब्धवरः कथं पुत्रश्च कथ बलवान् तस्य पिता तु कथं न बलवान् ॥ ३५ ॥

रा० टी०–कथमिति । स इन्द्रजित् पितुरधिकः कथं स राक्षसः शक्रस्य जेता कथं वराश्च कथं लब्धाः इति सर्वं मे सन्निधौ कथयस्व ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे प्रथमः सर्गः ॥ १ ॥

गो० टी०–शक्र इति । पिता रावणो न बलवान् पुत्रापेक्षयेति कथम् ॥ ४० ॥ ४१ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने प्रथमः सर्गः ॥ १ ॥

१ ] ति० टी०–अथ रावणाद्युत्पत्तिशेषतया तत्कूटस्थपौलस्त्योत्पत्तिमाह—तस्य तद्वचनमिति ॥ १ ॥

रा० टी०–रामप्रश्नश्रवणानन्तरकालिकं वृत्तान्तमाह—तस्येत्यादिभिः । कुम्भयोनिः राघवस्य वचनं श्रुत्वा एतद्वाक्यमुवाच ॥ १ ॥

२ ] ति० टी०–तस्य तेजआद्युद्दिश्य तथा वृत्तं वृत्तकथां ब्रवीमि त्वं शृणु । असौ रावणिर्येन कारणेन शत्रूञ्जघान स च शत्रुभिर्न वध्यस्तत्कारणं शृणु ॥ २ ॥

रा० टी०–तदाकारमाह—शृणु इत्यादिभिः । येन तेजोबलेन असौ इन्द्रजित् शत्रून् जघान स्वयं च शत्रुभिर्न वध्यः तत् महत्तेजो बलं यथा वृत्तं तथा शृणु ॥ २ ॥

गो० टी०–शृण्विति । असौ रावणिः न च शत्रुभिर्वध्यः । तत्कारणं शृण्विति संबन्धः ॥ २ ॥

३ ] ति० टी०–तावत्प्रथमं रावणस्य कुलादि ब्रवीमि पश्चाद्रावणेश्च वक्ष्यामीति शेषः । 'तावत्ते रावणस्य' इति पाठः ॥ ३ ॥

रा० टी०–तावदिति । तावदादौ रावणस्य कुलं जन्म च तस्मै रावणाय वरप्रदानं च यथा दत्तं तथा ब्रवीमि ॥ ३ ॥

गो० टी०–तावदिति । तावत् प्रथमम् रावणस्यैव कुलादिकं यमहं ते ब्रवीमि । पश्चाद्रावणेश्चेति शेषः ॥ ३ ॥

१ तत्पृच्छत इति गो. पाठः । २ राममिति गो. पाठः । ३ कथेति गो. पाठः ।

पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः । पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ॥४॥
नानुकीर्त्या गुणास्तस्य धर्मतः शीलतस्तथा । प्रजापतेः पुत्र इति वक्तुं शक्यं हि नामतः ॥ ५ ॥
प्रजापतिसुतत्वेन देवानां वल्लभो हि सः । इष्टः सर्वस्य लोकस्य गुणैः शुभ्रैर्महामतिः ॥ ६ ॥
स तु धर्मप्रसङ्गेन मेरोः पार्श्वे महागिरेः । तृणबिन्द्वाश्रमं गत्वाप्यवसन्मुनिपुंगवः ॥ ७ ॥
तपस्तेपे स धर्मात्मा स्वाध्यायनियतेन्द्रियः । गत्वाश्रमपदं तस्य विघ्नं कुर्वन्ति कन्यकाः ॥ ८ ॥
ऋषिपन्नगकन्याश्च राजर्षितनयाश्च याः । क्रीडन्त्योऽप्सरसश्चैव तं देशमुपपेदिरे ॥ ९ ॥
सर्वर्तुषूपभोग्यत्वाद्रम्यत्वात्काननस्य च । नित्यशस्तास्तु तं देशं गत्वा क्रीडन्ति कन्यकाः १०
देशस्य रमणीयत्वात्पुलस्त्यो यत्र स द्विजः । गायन्त्यो वादयन्त्यश्च लासयन्त्यस्तथैव च ॥ ११ ॥
मुनेस्तपस्विनस्तस्य विघ्नं चक्रुरनिन्दिताः । अथ रुष्टो महातेजा व्याजहार महामुनिः ॥ १२ ॥
या मे दर्शनमागच्छेत्सा गर्भं धारयिष्यति । तास्तु सर्वाः प्रतिश्रुत्य तस्य वाक्यं महात्मनः॥१३॥

---

४ ] ति० टी०–तत्र कुलमाह—पुरेति । पुलस्त्यो दशप्रजापतिष्वेकः पितामह इव । तपोवैभवजनितनिग्रहानुग्रहसामर्थ्यैरिति भावः ॥ ४ ॥

रा० टी०–तद्वचनाकारमाह—पुरेत्यादिभिः । पुरा पूर्वं कृतयुगे साक्षात् पितामह इव पुलस्त्यो नाम ब्रह्मर्षिः प्रजापतिसुतो बभूवेति शेषः ॥ ४ ॥

गो० टी०–तत्र प्रथमं कुलमाह—पुरेत्यादि । पुलस्त्यः दशप्रजापतिष्वेकः । पितामह इव पितृतुल्य इत्यर्थः ॥ ४ ॥

५–६ ] ति० टी०–तदेवाह—नानुकीर्त्या इति । विविच्य वर्णयितुमशक्यत्वादित्यर्थः । धर्मतः शीलतश्चोत्पन्ना गुणा इत्यन्वयः । अथ प्रकारान्तरेण तद्वैभवं बोधयति—प्रजापतेरिति । प्रजापतेः पुत्र इति नामत एव तत्संकीर्तनत एव तद्गुणाधिक्यं वक्तुं शक्यम् । प्रजापतिपुत्रत्वोक्त्या तस्येवास्याप्यनन्तकल्याणगुणत्वमुक्तं भवतीत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०–नेति । धर्मतो धर्मात् शीलतः शीलाच्च याताः तस्य पुलस्त्यस्य गुणाः अनुकीर्त्या कथनेनैव न ज्ञायन्त इति शेषः स्वत एव प्रकटिता इत्यर्थः अत एव अनुकीर्त्या परोपदेशेनैव नामतो नामोच्चारणेनैव वा प्रजापतेः पुत्र इति [illegible] न शक्यं तद्दर्शनमात्रेणैव अयं प्रजापतेः पुत्र इति ज्ञायते [illegible] ॥

[illegible] आपतीति । स पुलस्त्यः प्रजापतिसुत- [illegible] लोकस्य च वल्लभः प्रियः अत एव [illegible] ॥ ६ ॥

[illegible] । धर्मतः शीलत- [illegible] [illegible]

रा० टी०–स इति । स पुलस्त्यः धर्मप्रसङ्गेन तपआसक्तया मेरोः पार्श्वे विद्यमानं तृणबिन्द्वाश्रमं गत्वा न्यवसत् ॥ ७ ॥

गो० टी०–स त्वित्यादि । धर्मप्रसङ्गेन तपःसम्पादनेच्छयेत्यर्थः । तृणबिन्दुर्नाम ऋषिः ॥ ७–९ ॥

८–९ ] ति० टी०–विघ्नं कुर्वन्ति तृणाग्निन्यायेन, न तु बुद्धिपूर्वम् ॥ ८ ॥ ९ ॥

रा० टी०–तप इति । स पुलस्त्यः तपस्तेपे तस्य पुलस्त्यस्य आश्रमपदं गत्वा कन्यकाः विघ्नं कुर्वन्ति वह्निघृतकुम्भसम्बन्धन्यायेन तपोविघातमकुर्वन् ॥ ८ ॥

रा० टी०–तत्प्रकारमाह—ऋषीत्यादिभिः । ऋषिपन्नगकन्यादयः तं देशमुपपेदिरे ॥ ९ ॥

१० ] ति० टी०–तदेवाह—सर्वर्तुष्विति । तं देशमाश्रमदेशम् ॥ १० ॥

रा० टी०–तत्रागमने हेतुं वदन्नाह—सर्वेति । तं पुलस्त्यसंबन्धिनं देशं नित्यशो गत्वा कन्यकाः क्रीडन्ति ॥ १० ॥

गो० टी०–सर्वर्त्विति । तं देशमाश्रमपदम् ॥ १० ॥

११–१३ ] ति० टी०–वादयन्त्यः । वीणादिकमिति शेषः । लासयन्त्यो नृत्यन्त्यः ॥ ११–१३ ॥

रा० टी०–देशस्येति । अनिन्दिताः कन्यकाः तस्य पुलस्त्यस्य विघ्नं तपोविघातं चक्रुः सार्द्धश्लोक एकान्वयी ॥११॥

रा० टी०–अथेति । अथ तपोविघातानन्तरं या स्त्री मे दर्शनमागच्छेत् सा गर्भं धारयिष्यति इति वचः महामुनिः पुलस्त्यो व्याजहार ॥ १२ ॥

रा० टी०–ता इति । ताः कन्यकाः तस्य पुलस्त्यस्य वाक्यं प्रतिश्रुत्य ब्रह्मशापभयात् भीतास्सत्यः तं देशं नोप- [illegible] १३ ॥

[illegible] देशस्येति । लासयन्त्यः नृत्यन्त्यः॥११–१३॥

ब्रह्मशापभयाद्भीतास्तं देशं नोपचक्रमुः । तृणबिन्दोस्तु राजर्षेस्तनया न शृणोति तत् ॥ १४ ॥
गत्वाश्रमपदं तत्र विचचार सुनिर्भया । न चापश्यच्च सा तत्र कांचिदभ्यागतां सखीम् ॥ १५ ॥
तस्मिन्काले महातेजाः प्राजापत्यो महानृषिः । स्वाध्यायमकरोत्तत्र तपसा भावितः स्वयम् ॥ १६ ॥
सा तु वेदश्रुतिं श्रुत्वा दृष्ट्वा वै तपसो निधिम् । अभवत्पाण्डुदेहा सा सुव्यञ्जितशरीरजा ॥ १७ ॥
बभूव च समुद्विग्ना दृष्ट्वा तद्दोषमात्मनः । इदं मे किंत्विति ज्ञात्वा पितुर्गत्वाश्रमे स्थिता ॥ १८ ॥
तां तु दृष्ट्वा तथाभूतां तृणबिन्दुरथाब्रवीत् । किं त्वमेतत्त्वसदृशं धारयस्यात्मनो वपुः ॥ १९ ॥
सा तु कृत्वाञ्जलिं दीना कन्योवाच तपोधनम् । न जाने कारणं तात येन मे रूपमीदृशम् ॥ २० ॥
किं तु पूर्वं गतास्म्येका महर्षेर्भावितात्मनः । पुलस्त्यस्याश्रमं दिव्यमन्वेष्टुं स्वसखीजनम् ॥ २१ ॥
न च पश्याम्यहं तत्र कांचिदभ्यागतां सखीम् । रूपस्य तु विपर्यासं दृष्ट्वा त्रासादिहागता ॥ २२ ॥
तृणबिन्दुस्तु राजर्षिस्तपसा द्योतितप्रभः । ध्यानं विवेश तच्चापि अपश्यदृषिकर्मजम् ॥ २३ ॥
स तु विज्ञाय तं शापं महर्षेर्भावितात्मनः । गृहीत्वा तनयां गत्वा पुलस्त्यमिदमब्रवीत् ॥ २४ ॥
भगवंस्तनयां मे त्वं गुणैः स्वैरेव भूषिताम् । भिक्षां प्रतिगृहाणेमां महर्षे स्वयमुद्यताम् ॥ २५ ॥

---

१४-१५ ] ति० टी०–तदिति । शापवाक्यमित्यर्थः । न शृणोति न शुश्राव ॥ १४ ॥ १५ ॥

रा० टी०–तृणेति । राजर्षेः तृणबिन्दोस्तनया तत् पुलस्त्योच्चारितं न शृणोति अशृणोत् अत एव सुनिर्भया सती आश्रमपदं पुलस्त्याश्रमं गत्वा विचचार अभ्यागतां कांचित्सखीं तत्र नापश्यच्च सार्द्धश्लोक एकान्वयी ॥ १४–१५ ॥

१६ ] ति० टी०–स्वाध्यायं वेदाध्ययनम् ॥ १६ ॥

रा० टी०–तस्मिन्निति । तपसा स्वयं भावितः प्रकाशितः पुलस्त्यः तत्र तस्मिन् देशे स्वाध्यायं वेदाध्ययनमकरोत् ॥ १६ ॥

गो० टी०–तस्मिन्निति । स्वाध्यायमकरोत् वेदमपठदित्यर्थः ॥ १६ ॥

१७ ] ति० टी०–वेदश्रुतिं वेदध्वनिं श्रुत्वा कोऽधीत इति गत्वा तपसो निधिं दृष्ट्वा च पाण्डुदेहा गर्भोत्पत्त्या सुव्यञ्जितशरीरजा शरीराज्जायत इति शरीरजो गर्भः सुप्रकाशितो यस्याः सा ॥ १७ ॥

रा० टी०–सेति सा तृणबिन्दुतनया वेदश्रुतिं वेदानां वाक्यानि श्रुत्वा अत एव तपसो निधिं पुलस्त्यं दृष्ट्वा उच्चारयितृनिश्चयार्थमवलोक्य सुव्यञ्जितः प्रकाशितः शरीरजो गर्भो यस्याः अत एव पाण्डुदेहा अभवत् ॥ १७ ॥

गो० टी०–सात्विति । वेदश्रुतिं वेदध्वनिं श्रुत्वा कोऽधीत इति गत्वा दृष्ट्वा चेत्यर्थः । पाण्डुदेहा गर्भिणीत्वात् । सुव्यञ्जितः शरीरजो यस्याः सा तथा ॥ १७ ॥

१८ ] ति० टी०–तद्दोषं गर्भसंभवरूपदोषं दृष्ट्वोद्विग्ना बभूव । किं त्विति । दोषस्वरूपमिति ज्ञात्वेत्यर्थः ॥ १८ ॥

रा० टी०–बभूवेति । आत्मनो दोषं दृष्ट्वा इदं किमिति ज्ञात्वा सञ्चिन्त्य समुद्विग्ना तृणबिन्दुतनया पितुराश्रमे गत्वा स्थिता बभूव ॥ १८ ॥

गो० टी०–बभूवेति । इदं मे किम् एतत्किमिति ज्ञात्वा गर्भकारणमिदं किन्त्विति ज्ञात्वेत्यर्थः ॥ १८ ॥ २३ ॥

१९-२० ] ति०टी०–असदृशं कन्यात्वस्यायुक्तम् ॥ १९–२० ॥

रा० टी०–तामिति । तथा भूतां गर्भवतीं तां कन्यां दृष्ट्वा असदृशं स्वकुलायोग्यमेतत् कन्यात्वसमये गर्भयुक्तमात्मनो वपुश्शरीरं किं किमर्थं त्वं धारयसि इति वचः तृणबिन्दुरब्रवीत् ॥ १९ ॥

रा० टी०–सेति । सा कन्या तपोधनं तृणबिन्दुमुवाच तदाकारमाह मे रूपं येनेदृशं तत्कारणं न जाने ॥ २० ॥

२१-२२ ] ति० टी०–पूर्वं गता प्रथमं गता ॥ २१ ॥ २२ ॥

रा० टी०–कारणज्ञानार्थं स्ववृत्तमाह—किमिति द्वाभ्याम् । स्वसखीजनमन्वेष्टुं पुलस्त्यस्याश्रममेकाहं गतास्मि २१

रा० टी०–नेति । तत्र पुलस्त्यस्याश्रमे अभ्यागतां सखीं न पश्यामि अपश्यं रूपस्य विपर्यासं तु दृष्ट्वा इह तव समीपे आगता ॥ २२ ॥

२३ ] ति० टी०–तच्चापि । गर्भकारणमित्यर्थः ॥ २३ ॥

रा० टी०–तृणेति । तृणबिन्दुः ध्यानं विवेश अत एव तत् गर्भं ऋषिकर्मजं पुलस्त्यशापसमुद्भूतमपश्यत् अजानात् ॥ २३ ॥

२४ ] ति० टी०–तनयां गृहीत्वा पुलस्त्यं गत्वा ॥ २४ ॥

रा० टी०–स इति । स तृणबिन्दुः महर्षेः शापं विज्ञाय तनयां गृहीत्वा पुलस्त्यं गत्वाब्रवीत् ॥ २४ ॥

गो० टी०–स त्विति । तनयां गृहीत्वा पुलस्त्यं गत्वेत्यन्वयः ॥ २४ ॥

२५ ] ति० टी०–इमां भिक्षां प्रतिगृहाण भिक्षात्वेन स्वीकुर्वित्यब्रवीत् । नन्वूर्ध्वरेतसो मम नानया प्रयोजनम्

---

१ सापश्यस्थितेति गो. पाठः । २ ह्यपश्यदिति गो. पाठः ।

तपश्चरणयुक्तस्य श्राम्यमाणेन्द्रियस्य ते । शुश्रूषणपरा नित्यं भविष्यति न संशयः ॥ २६ ॥
तं ब्रुवाणं तु तद्वाक्यं राजर्षिं धार्मिकं तदा । जिघृक्षुरब्रवीत्कन्यां बाढमित्येव स द्विजः ॥ २७ ॥
दत्त्वा तु तनयां राजा स्वमाश्रमपदं गतः । सापि तत्रावसत्कन्या तोषयन्ती पतिं गुणैः ॥ २८ ॥
तस्यास्तु शीलवृत्ताभ्यां तुतोष मुनिपुंगवः । प्रीतः स तु महातेजा वाक्यमेतदुवाच ह ॥ २९ ॥
परितुष्टोऽस्मि सुश्रोणि गुणानां संपदा भृशम् । तस्माद्देवि ददाम्यद्य पुत्रमात्मसमं तव ॥
उभयोर्वंशकर्तारं पौलस्त्य इति विश्रुतम् ॥ ॥ ३० ॥
यस्मात्तु विश्रुतो वेदस्त्वयेहाध्ययतो मम । तस्मात्स विश्रवा नाम भविष्यति न संशयः ॥ ३१ ॥
एवमुक्ता तु सा देवी प्रहृष्टेनान्तरात्मना । अचिरेणैव कालेनासूत विश्रवसं सुतम् ॥
त्रिषु लोकेषु विख्यातं यशोधर्मसमन्वितम् ॥ ॥ ३२ ॥
श्रुतिमान्समदर्शी च व्रताचाररतस्तथा । पितेव तपसा युक्तो ह्यभवद्विश्रवा मुनिः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

तत्राह—स्वयमुद्यतामिति । 'उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजामाथो अपि दुष्कृतकर्मणः ॥' इत्युक्तेः । स्वयमुद्यतेयं ग्राह्यैवेत्यर्थः ॥ २५ ॥

रा० टी०–तदाकारमाह–भगवन्निति द्वाभ्याम् । स्वयमुद्यतामिमां मे कन्यां भिक्षां प्रतिगृहाण ॥ २५ ॥

गो० टी०–भगवन्निति । इमां भिक्षां गृहाणेति भिक्षात्वेन स्वीकुरुष्वेति अब्रवीदिति पूर्वेणान्वयः । नन्वूर्ध्वरेतसा मया कथं ग्राह्या किं वा मेऽनया प्रयोजनमित्यत्राह–उद्यतामिति । "उद्यतामाहृतां भिक्षां पुरस्तादप्रवेदिताम् । भोज्यां मेने प्रजानाथो अपि दुष्कृतकर्मणः" इत्युक्तेः स्वयमुद्यतेयं ग्राह्यैवेत्यर्थः ॥ २५ ॥ २७ ॥

२६] ति० टी०–तत्प्रतिग्रहफलमाह–शुश्रूषणपरेति २६

रा० टी०–तत्प्रयोजनमाह—तप इति । ते शुश्रूषणपरा भविष्यति ॥ २६ ॥

२७] ति० टी०–यथान्यायं पाणिग्रहणपूर्वकमिति शेषः२७

रा० टी०–तमिति । द्विजः स पुलस्त्यः कन्यां जिघृक्षुः सन् बाढमित्यब्रवीत् ॥ २७ ॥

२८-२९ ] ति० टी०–तदेवोक्तम्—तोषयन्ती पतिमिति ॥ २८ ॥ २९ ॥

रा० टी०–दत्त्वेति । राजा तनयां दत्त्वा स्वमाश्रमपदं गतः कन्या तु तत्रावसत् ॥ २८ ॥

रा० टी०–तस्या इति । तस्याः कन्यायाः शीलवृत्ताभ्यां मुनिपुङ्गवः पुलस्त्यस्तुतोष प्रीतस्सन् एतदुवाच च ॥ २९ ॥

गो० टी०–दत्त्वेति । यथान्यायं पाणिग्रहणपूर्वकमित्यर्थः ॥ २८ ॥ ३० ॥

३० ] ति० टी०–उभयोः । मातुः पितुश्चेत्यर्थः ॥ ३० ॥

रा० टी०–तदाकारमाह—परीति । गुणानां सम्पदा सम्पत्त्या अहं परितुष्टोऽस्मि तस्मात् हेतोः आत्मसमं स्वसदृशं पौलस्त्य इति विश्रुतं पुत्रं ददामि सार्द्धश्लोक एकान्वयी॥ ३० ॥

गो० टी०–उभयोरिति । उभयोरपि मातुः पितुश्चेत्यर्थः । अध्ययतः अधीयानस्येत्यर्थः । वेदो विश्रुतः गर्भहेतुरिति शेषः ॥ ३१ ॥ ३४ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वितीयः सर्गः ॥ २ ॥

३१-३३ ] ति० टी०–अध्ययतोऽधीयानस्य । वेदो विश्रुतः । गर्भहेतुरिति शेषः ॥ ३१ ॥ ३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्वितीयः सर्गः ॥ २ ॥

रा० टी०–यस्मादिति । अध्ययतः अधीयानस्य मम वेदः त्वयेह विश्रुतः तस्मात् स ते पुत्रः विश्रवा नाम भविष्यति ॥ ३१ ॥

रा० टी०–एवमिति । एवमुक्ता सा तृणबिन्दुसुता त्रिषु लोकेषु विख्यातं विश्रवसं सुतमसूत सार्द्धश्लोक एकान्वयी ॥ ३२ ॥

रा० टी०–श्रुतिमानिति । विश्रवा मुनिः पितेव तपसा युक्तोऽभवत् पूर्वरूपाभावः आर्षः ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्वितीयः सर्गः ॥ २ ॥

---

१ श्रम्यमाणेति गो. पाठः । २ स तु यथान्यायमिति गो. पाठः । ३ एव इति गो. पाठः । ४ ह्यभवदिति गो. पाठः ।

## तृतीयः सर्गः ।

विश्रवसोऽपि कुबेराख्यतनयस्योत्पत्तिः कुबेराय तत्तपःपरितुष्टेन ब्रह्मणा वरद्वयं वितीर्णं ततश्चतुर्थलोकपालत्वं पुष्पकविमानं च प्राप्य लङ्कायामुवास कुबेरः ।

अथ पुत्रः पुलस्त्यस्य विश्रवा मुनिपुंगवः । अचिरेणैव कालेन पितेव तपसि स्थितः ॥ १ ॥
सत्यवाञ्शीलवान्दान्तः स्वाध्यायनिरतः शुचिः । सर्वभोगेष्वसंसक्तो नित्यं धर्मपरायणः ॥ २ ॥
ज्ञात्वा तस्य तु तद्वृत्तं भरद्वाजो महामुनिः । ददौ विश्रवसे भार्यां स्वसुतां देववर्णिनीम् ॥ ३ ॥
प्रतिगृह्य तु धर्मेण भरद्वाजसुतां तदा । प्रजान्वीक्षिकया बुद्ध्या श्रेयो ह्यस्य विचिन्तयन् ॥ ४ ॥
मुदा परमया युक्तो विश्रवा मुनिपुंगवः । स तस्यां वीर्यसंपन्नमपत्यं परमाद्भुतम् ॥ ५ ॥
जनयामास धर्मज्ञः सर्वैर्ब्रह्मगुणैर्वृतम् । तस्मिञ्जाते तु संहृष्टः स[1] बभूव पितामहः ॥ ६ ॥
दृष्ट्वा श्रेयस्करीं बुद्धिं धनाध्यक्षो भविष्यति । नाम चास्याकरोत्प्रीतः सार्धं देवर्षिभिस्तदा ॥ ७ ॥
यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव । तस्माद्वैश्रवणो नाम भविष्यत्येष विश्रुतः ॥ ८ ॥
स तु वैश्रवणस्तत्र तपोवनगतस्तदा । अवर्धताहुतिहुतो महातेजा यथानलः ॥ ९ ॥
तस्याश्रमपदस्थस्य बुद्धिर्जज्ञे महात्मनः । चरिष्ये परमं धर्मं धर्मो हि परमा गतिः ॥ १० ॥

१-२ ] ति० टी०-अथ पौलस्त्याद्विश्रवसः कुबेरोत्पत्तिः—अथेति ॥ १ ॥ २ ॥

रा० टी०-विश्रवसो वृत्तान्तमाह—अथेत्यादिभिः । सत्यादिविशिष्टो विश्रवाः पितेव तपसि स्थितो बभूवेति शेषः श्लोकद्वयमेकान्वयि ॥ १-२ ॥

३ ] ति० टी०-तस्य तद्वृत्तम् । विश्रवसस्तादृशं चरित्रमित्यर्थः । देववर्णिनीं देवसमानरूपां तपार्मी च ॥ ३ ॥

रा० टी०-ज्ञात्वेति । भरद्वाजः तस्य विश्रवसः तत् उत्तमं वृत्तं ज्ञात्वा विश्रवसे स्वसुतां ददौ ॥ ३ ॥

गो० टी०-ज्ञात्वेति । तस्य तद्वृत्तं विश्रवसस्तादृशं चरितमित्यर्थः । देववर्णिनीं देवसमानरूपाम् ॥ ३ ॥

४ ] ति० टी०-प्रजान्वीक्षिकया प्रजानां शुभाशुभवीक्षणरूपया बुद्ध्या ज्योतिःशास्त्रसिद्धया । अस्योत्पादयिष्यमाणपुत्रस्य श्रेयोगुणं चिन्तयन् ॥ ४ ॥

५ ] ति० टी०-तस्यां भार्यायाम् ॥ ५ ॥

६ ] ति० टी०-सर्वैर्ब्रह्मगुणैः शमतपःशौचादिगुणैर्युक्तमपत्यं जनयामास । पितामहो वैश्रवणपितामहः । पुलस्त्य इत्यर्थः । अत्र स्थाने प्रजान्वेषिकयेत्यर्थमिति कतकस्वरसः । प्रजामन्विच्छति प्रजान्वेषिका, तद्गुणागुणपर्यालोचिका ज्योतिःशास्त्रविषया बुद्धिः, तयास्य वैश्रवणस्य श्रेयो विचिन्तयन्पुलस्त्यस्तस्मिन्विश्रवसः पुत्रे जाते तुष्टो बभूवेति तेन व्याख्यानात् ॥ ६ ॥

रा० टी०-प्रतीति । विश्रवाः प्रजान्वीक्षिकया प्रजानां शुभाशुभविचारिकया बुद्ध्या अस्य लोकस्य श्रेयो विचिन्तयन् सन् भरद्वाजसुतां धर्मेण वैवाहिकविधिना प्रतिगृह्य तस्यां भरद्वाजसुतायां ब्रह्मगुणैर्वृतमपत्यं जनयामास तस्मिन्नपत्ये जाते सति पितामहस्सन्तुष्टो बभूव श्लोकत्रयमेकान्वयि ॥ ४-६ ॥

गो० टी०-प्रतिगृह्येत्यादिश्लोकपञ्चकमेकं वाक्यम् । सर्वैर्ब्रह्मगुणैः । शमदमादिभिरित्यर्थः । पितामहः वैश्रवणपितामहः । पुलस्त्य इत्यर्थः । प्रजामन्विच्छतीति प्रजान्वेषिका "प्रत्ययस्थात्०" इतीत्वम् । अस्य विश्रवसस्तस्मिन्पुत्रे जाते तुष्टो बभूव । श्रेयस्करीं धनेशत्वरूपश्रेयःप्राप्तिहेतुभूतां जन्मलग्नपर्यालोचनया कालान्तरे धनाध्यक्षनामको भविष्यतीति निश्चित्य तत्काले विश्रवसोपत्यत्वाद्वैश्रवण इति विश्रुतो भविष्यतीति नाम च चकार । "विश्रवसो विश्रवणं वा" इति विश्रवणादेशः ॥ ४ ॥ १० ॥

७ ] ति० टी०-श्रेयस्करीं धनेशत्वरूपश्रेयःप्राप्तिहेतुभूततपोविषयां तस्य बुद्धिं दृष्ट्वा । जन्मलग्नपर्यालोचनयेति शेषः धनाध्यक्षो भविष्यति कालान्तरे एवंनामा भविष्यतीति संहृष्टो बभूवेत्यन्वयः ॥ ७ ॥

रा० टी०-दृष्ट्वेति । अस्य विश्रवसो बुद्धिं श्रेयस्करीं दृष्ट्वा ज्ञात्वा अयं धनाध्यक्षो भविष्यतीति हेतोः प्रीतस्सन् देवर्षिभिस्सार्धं नामाकरोत् ॥ ७ ॥

८-१० ] ति० टी०-यतो विश्रवसोऽपत्यं रूपसादृश्याद्विश्रवा इव स इवेति व्यवहारविषयस्तस्माद्वैश्रवण इति विश्रुतः प्रसिद्धो भविष्यति नाम । अपत्यप्रत्ययसंनियोगेन विश्रवसो विश्रवणादेशः ॥ ८ ॥ १० ॥

रा० टी०-यस्मादिति । सादृश्यात् रूपादिना तौल्यात् हेतोः विश्रवा इवैषः यस्मात् विश्रवसोऽपत्यं तस्मात् वैश्रवणो

[1] सभितिं गो. पाठः । [2] तस्येति गो. पाठः ।

स तु वर्षसहस्राणि तपस्तप्त्वा महावने । यन्त्रितो नियमैरुग्रैश्चकार सुमहत्तपः ॥ ११ ॥
पूर्णे वर्षसहस्रान्ते तं तं विधिमकल्पयत् । जलाशी मारुताहारो निराहारस्तथैव च ॥
एवं वर्षसहस्राणि जग्मुस्तान्येकवर्षवत् ॥ ॥ १२ ॥
अथ प्रीतो महातेजाः सेन्द्रैः सुरगणैः सह । गत्वा तस्याश्रमपदं ब्रह्मेदं वाक्यमब्रवीत् ॥ १३ ॥
परितुष्टोऽस्मि ते वत्स कर्मणानेन सुव्रत । वरं वृणीष्व भद्रं ते वरार्हस्त्वं महामते ॥ १४ ॥
अथाब्रवीद्वैश्रवणः पितामहमुपस्थितम् । भगवँल्लोकपालत्वमिच्छेयं लोकरक्षणम् ॥ १५ ॥
अथाब्रवीद्वैश्रवणं परितुष्टेन चेतसा । ब्रह्मा सुरगणैः सार्धं बाढमित्येव हृष्टवत् ॥ १६ ॥
अहं वै लोकपालानां चतुर्थं स्रष्टुमुद्यतः । यमेन्द्रवरुणानां च पदं यत्तव चेप्सितम् ॥ १७ ॥
तद्गच्छ बत धर्मज्ञ निधीशत्वमवाप्नुहि । शक्राम्बुपयमानां च चतुर्थस्त्वं भविष्यसि ॥ १८ ॥
एतच्च पुष्पकं नाम विमानं सूर्यसंनिभम् । प्रतिगृह्णीष्व यानार्थं त्रिदशैः समतां व्रज ॥ १९ ॥
स्वस्ति तेऽस्तु गमिष्यामः सर्व एव यथागतम् । कृतकृत्या वयं तात दत्त्वा तव वरद्वयम् ॥ २० ॥
इत्युक्त्वा स गतो ब्रह्मा स्वस्थानं त्रिदशैः सह । गतेषु ब्रह्मपूर्वेषु देवेष्वथ नभस्तलम् ॥ २१ ॥
धनेशः पितरं प्राह प्राञ्जलिः प्रयतात्मवान् । भगवँल्लब्धवानस्मि वरमिष्टं पितामहात् ॥ २२ ॥

---

नाम विश्रुतः ख्यातो भविष्यति वैश्रवणशब्दार्थः विश्रवसोऽपत्यमिति अपत्यप्रत्ययसंसर्गे विश्रवश्शब्दस्य विश्रवणादेशः ॥ ८ ॥

रा० टी०—स इति । तपोवनगतः वैश्रवणः आहुतिहुतोऽनल इवावर्द्धत ॥ ९ ॥

रा० टी०—तपोवनगमने हेतुमाह—तस्येति । हि यतः धर्मः परमा गतिः अतः परमं धर्मं चरिष्ये इति बुद्धिः आश्रमपदस्थस्य श्रमनिवर्तकस्थाने स्थितस्य तस्य वैश्रवणस्य जज्ञे ॥ १० ॥

११ ] ति० टी०—तपस्तप्त्वालोच्य नियमैर्यन्त्रितः । संजातनियम इत्यर्थः ॥ ११ ॥

रा० टी०—स इति । तपः तप्त्वा स्वश्रेयस्करत्वेन निश्चित्य वर्षसहस्राणि सुमहत्तपश्चकार ॥ ११ ॥

गो० टी०—स त्विति । नियमेन यन्त्रितः संजातबन्धनः ११

१२ ] ति० टी०—तं तं विधिम् । वक्ष्यमाणजलाशित्वादिविधिमित्यर्थः ॥ १२ ॥

रा० टी०—तत्प्रकारं बोधयन्नाह—पूर्ण इति । जलाशित्वादिविशिष्टो वैश्रवणः पूर्णे नियमपूर्त्यर्थं वर्षसहस्रान्ते वर्षसहस्रमध्ये तं तत्तत्काले विहितं विधिं विधानमकल्पयत् अकरोत् अदन्तोप्यन्तशब्दो मध्यवाची ॥ १२ ॥

रा० टी०—एवमिति । तानि तपःपराणि वर्षसहस्राणि एकवर्षवज्जग्मुः अर्द्धं पृथक् ॥ १२ ॥

गो० टी०—पूर्ण इति । तं तं विधिम् । विधिमेवाह—जलाशीत्यादि ॥ १२ ॥ १४ ॥

१३–१४ ] ति० टी०—अथ भगवत्प्रसादवैभवमाह—अथ प्रीत इति ॥ १३ ॥ १४ ॥

रा० टी०—अथेति । अथानन्तरं ब्रह्मा तस्य वैश्रवणस्याश्रमपदं गत्वा इदमब्रवीत् ॥ १३ ॥

रा० टी०—तदाकारमाह—परितुष्ट इति । त्वं वरं वृणीष्व ॥ १४ ॥

१५–१६ ] ति० टी०—लोकपालत्वं वित्तरक्षणं वैराजनिधिनाथत्वम् ॥ १५ ॥ १६ ॥

रा० टी०—अथेति । लोकपालत्वं वित्तरक्षणं चाहमिच्छेयमिति वैश्रवणः पितामहमब्रवीत् ॥ १५ ॥

रा० टी०—अथेति । ब्रह्मा हृष्टवत् हर्षयुक्तं यथा भवति तथा बाढमित्येव अब्रवीत् ॥ १६ ॥

गो० टी०—अथेति । वित्तरक्षणम् अशेषनिधिपतित्वम् ॥ १५ ॥ १७ ॥

१७–१८ ] ति० टी०—चतुर्थं चतुर्णां पूरणम् । यमादित्रयस्य यत्पदं लोकपालपदं यत्तवेप्सितं त्वं तद्गच्छ निधीशत्वं चाप्नुहि । एवं सति त्वं शक्रादीनां चतुर्थो भविष्यसीति संबन्धः ॥ १७ ॥ १८ ॥

रा०टी०—ब्रह्मोक्तिमेवाह—अहमिति । यत्पदं तवेप्सितं तत् यमादीनां लोकपालानां सम्बन्धि चतुर्थं पदं स्रष्टुमहमुद्यतः १७

गो०टी०—यमेति । यदीप्सितं तद्गच्छ निधीशत्वमवाप्नुहि १८

रा० टी०—तदिति । त्वं निधीशत्वमवाप्नुहि शक्रादीनां चतुर्थश्च त्वं भविष्यसि ॥ १८ ॥

१९ ] ति० टी०—त्रिदशैः समतां व्रज । नत्वृषिपुत्रत्वेनैव तिष्ठेत्यर्थः ॥ १९ ॥

रा० टी०—एतदिति । पुष्पकं नाम विमानं प्रतिगृह्णीष्व अत एव त्रिदशैस्समतां व्रज ॥ १९ ॥

गो० टी०—एतच्चेति । त्रिदशैः समतामिति । नतु ऋषिपुत्रवद्वर्तस्वेत्यर्थः ॥ १९ ॥ २७ ॥

२०–२२ ] ति० टी०—वरद्वयं निधीशत्वपुष्पकदानरूपम् ॥ २०–२२ ॥

---

१ नियमैरिति गो.पा. । २ स्वगिति गो.पा. । ३ स्थलमिति गो.पा. । ४ वने स इति गो.पा. । ५ अस्य चोत्तरस्य पादस्य व्यत्यासेन पाठो गो. पु. ।

नेवासनं न मे देवो विदधे स प्रजापतिः । तं पश्य भगवन्कंचिन्निवासं साधु मे प्रभो ॥
ा च पीडा भवेद्यत्र प्राणिनो यस्य कस्यचित् ॥ ॥ २३ ॥
एवमुक्तस्तु पुत्रेण विश्रवा मुनिपुंगवः । वचनं प्राह धर्मज्ञ श्रूयतामिति सत्तम ॥ २४ ॥
दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः । तस्याग्रे तु विशाला सा महेन्द्रस्य पुरी यथा ॥ २५ ॥
लङ्का नाम पुरी रम्या निर्मिता विश्वकर्मणा । राक्षसानां निवासार्थं यथेन्द्रस्यामरावती ॥ २६ ॥
तत्र त्वं वस भद्रं ते लङ्कायां नात्र संशयः । हेमप्राकारपरिखा यन्त्रशस्त्रसमावृता ॥ २७ ॥
रमणीया पुरी सा हि रुक्मवैदूर्यतोरणा । राक्षसैः सा परित्यक्ता पुरा विष्णुभयार्दितैः ॥ २८ ॥
शून्या रक्षोगणैः सर्वै रसातलतलं गतैः । शून्या संप्रति लङ्का सा प्रभुस्तस्या न विद्यते ॥ २९ ॥
स त्वं तत्र निवासाय गच्छ पुत्र यथासुखम् । निर्दोषस्तत्र ते वासो न बाधस्तत्र कस्यचित् ॥ ३० ॥
एतच्छ्रुत्वा स धर्मात्मा धर्मिष्ठं वचनं पितुः । निवासयामास तदा लङ्कां पर्वतमूर्धनि ॥ ३१ ॥
नैर्ऋतानां सहस्रैस्तु हृष्टैः प्रमुदितैः सदा । अचिरेणैव कालेन संपूर्णा तस्य शासनात् ॥ ३२ ॥
स तु तत्रावसत्प्रीतो धर्मात्मा नैर्ऋतर्षभः । समुद्रपरिखायां स लङ्कायां विश्रवात्मजः ॥ ३३ ॥
काले काले तु धर्मात्मा पुष्पकेण धनेश्वरः । अभ्यागच्छद्विनीतात्मा पितरं मातरं च हि ॥ ३४ ॥

---

रा० टी०—स्वस्तीति । तव वरद्वयं दत्वा कृतकृत्याः गमिष्यामः ॥ २० ॥

रा० टी०—इतीति । ब्रह्मा स्वस्थानं गतः अहं पृथक् । गेष्वि ते । ब्रह्मपूर्वेषु देवेषु नभस्तलं गतेषु सत्सु धनेशो वणः पितरं विश्रवसं प्राह ॥ २१-२२ ॥

२३-२६ ] ति० टी०—निवासनम् । निवासमित्यर्थः २३-२६

रा० टी०—तदाकारमाह—निवासनमिति । प्रजापतिः निवासनं निवासस्थानं न विदधे आज्ञापयामास अतः यत्र णिनः पीडा न भवेत् तं कंचित् निवासं पश्य आलोच्य हे सार्द्धश्लोक एकान्वयी ॥ २३ ॥

रा० टी०—एवमिति । विश्रवाः श्रूयतामिति वचनं ह ॥ २४ ॥

रा० टी०—तदुक्तिमेवाह—दक्षिणस्येत्यादिभिः । उदधे- रे त्रिकूटो नाम पर्वतोऽस्तीति शेषः तस्याग्रे शिखरे महे- स्य पुरीव लङ्का नाम पुरी वर्तत इति शेषः सार्द्धश्लोक कान्वयी ॥ २५ ॥

रा० टी०—राक्षसानामिति । इन्द्रस्य अमरावती इव क्षसानां निवासार्थं या लङ्का तस्यां त्वं वस ॥ २६ ॥

२७-३० ] ति० टी०—यन्त्ररूपैः शस्त्रैः समावृता २७-३०

रा० टी०—ननु तस्यां राक्षसास्सन्तीत्यत आह—हेमेति । ङ्का विष्णुभयार्दितैः राक्षसैः पुरा परित्यक्ता अत एव सर्वैः गणैः शून्या श्लोकद्वयमेकान्वयि ॥ २७ ॥

रा० टी०—शून्येति । तस्याः लङ्कायाः प्रभुर्न विद्यते त एव सा लङ्का शून्या अतो यथासुखं निवासाय तत्र त्वं गच्छ तत्र कस्यचिद्बाधो न अत एव ते वासो निर्दोषो भवि- ष्यतीति शेषः सार्द्धश्लोक एकान्वयी ॥ ३० ॥

गो० टी०—हेमेति । यन्त्ररूपैः शस्त्रैः समावृता ॥ २८-३१ ॥

३१ ] ति० टी०—निवासयामास । निवासमकरो- दित्यर्थः ॥ ३१ ॥

रा० टी०—एतदिति । स वैश्रवणः पितुर्वचनं श्रुत्वा पर्वतमूर्द्धनि विद्यमानो लङ्कां निवासयामास ॥ ३१ ॥

गो० टी०—एतदिति । प्रमुदितैः सह निवासयामासेति योजना ॥ ३२ ॥

३२-३४ ] ति० टी०—प्रमुदितैर्नैर्ऋतानां सहस्रैः सह निवासयामासेति संबन्धः । संपूर्णा धनधान्यादिसर्वैश्वर्यपूर्णा । शासनात्पालनात् ॥ ३२-३४ ॥

रा० टी०—नैर्ऋतानामिति । तस्य वैश्रवणस्य शासनात् नैर्ऋतानां सहस्रैर्बहुभिर्नैर्ऋतैरित्यर्थः सम्पूर्णा लङ्काभवदिति शेषः ॥ ३२ ॥

रा० टी०—स इति । नैर्ऋतर्षभो विश्रवात्मजः लङ्का- यामवसत् ॥ ३३ ॥

रा० टी०—काल इति । काले काले सेवासमये धनेश्वरः पुष्पकेण पितरं मातरं चाभ्यगच्छत् ॥ ३४ ॥

गो० टी०—अचिरेणेति । संपूर्णधनधान्यादिसर्वैश्वर्यपूर्णे- त्यर्थः ॥ ३३ ॥ ३६ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्री- रामायणव्याख्याने तृतीयः सर्गः ॥ ३ ॥

---

१ धर्मज्ञः इति गो. रा. पाठः । २ परिखेति गो. पाठः । ३ बाधेति गो. पाठः । ४ सहेति गो. पाठः ।

स देवगन्धर्वगणैरभिष्टुतस्तथाप्सरोनृत्यविभूषितालयः ।
गभस्तिभिः सूर्य इवावभासयन्पितुः समीपं प्रययौ स वित्तपः ॥ ३५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे तृतीयः सर्गः ॥ ३ ॥

## चतुर्थः सर्गः ।

पुना रामेण पृष्टोऽगस्त्यो राक्षसवंशवर्णनप्रस्तावेन हेतितनयस्य विद्युत्केशस्योत्पत्तिं तत्तनयस्य सुकेशस्य च जन्म तस्य च कारुण्यमापन्नाभ्यां पार्वतीपरमेश्वराभ्यां पुरस्याकाशगस्य तथामरत्वस्य च प्राप्तिमकथयत् ।

श्रुत्वागस्त्येरितं वाक्यं रामो विस्मयमागतः । कथमासीत्तु लङ्कायां संभवो रक्षसां पुरा ॥ १ ॥
ततः शिरः कम्पयित्वा त्रेताग्निसमविग्रहम् । तमगस्त्यं मुहुर्दृष्ट्वा स्मयमानोऽभ्यभाषत ॥ २ ॥
भगवन्पूर्वमप्येषा लङ्कासीत्पिशिताशिनाम् । श्रुत्वेदं भगवद्वाक्यं जातो मे विस्मयः परः ॥ ३ ॥
पुलस्त्यवंशादुद्भूता राक्षसा इति नः श्रुतम् । इदानीमन्यतश्चापि संभवः कीर्तितस्त्वया ॥ ४ ॥
रावणात्कुम्भकर्णाच्च प्रहस्ताद्विकटादपि । रावणस्य च पुत्रेभ्यः किं नु ते बलवत्तराः ॥ ५ ॥

---

३५ ] ति० टी०—अवभासयन्शोभमानः अप्सरोनृत्यैर्विभूषितमालयं पुष्पकं यस्य सः ॥ ३५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे तृतीयः सर्गः ॥ ३ ॥

रा० टी०—स इति । अप्सरसां नृत्यैः विभूषितमालयं पुष्पकं यस्य स वित्तपः गभस्तिभिः स प्रसिद्धः सूर्य इव अवभासयन् सन् पितुस्समीपं प्रययौ ॥ ३५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे तृतीयः सर्गः ॥ ३ ॥

१ ] ति० टी०—लङ्कायां पूर्वमपि रक्षःस्थितिं श्रुत्वा विस्मितेन रामेण तेषामुत्पत्त्यादिप्रश्नेऽगस्त्येन तत्प्रतिपादनं श्रुत्वेति विस्मयमागत इत्युक्तम्, तत्र किंविषयकश्रवणाद्विस्मयप्राप्तिस्तत्राह—कथमिति । पुरा धनदावस्थितेः पूर्वमपि रक्षसां संभवोऽवस्थानादिसंभव इति यदुक्तम्, तत्तु कथमासीदिति विस्मयमागतः ॥ १ ॥

रा० टी०—अगस्त्यवचनश्रवणानन्तरकालिकं वृत्तान्तमाह—श्रुत्वेत्यादिभिः । रामः विस्मयमागतः प्राप्तः विस्मयाकारमाह पुरा पूर्वं लङ्कायां रक्षसां संभवः कथमासीत् राक्षससम्भवस्य विश्रवस एव प्रसिद्धत्वात् इति तात्पर्यम् ॥ १ ॥

गो० टी०—श्रुत्वेत्यादि । लङ्कायां धनदाधिष्ठानात् पूर्वमपि रक्षसां संभवः अपःस्थानादिसंभवः इति यदुक्तं तत् श्रुत्वा विस्मयमागत इत्यन्वयः ॥ १ ॥

२ ] ति० टी०—ततो विस्मयप्राप्त्यनन्तरम् । मुहुः स्मयमानो विस्मयं कुर्वन् ॥ २ ॥

रा० टी०—तत इति । स्मयमानो विस्मयं प्राप्नुवन् रामः अगस्त्यं मुहुर्दृष्ट्वा अभ्यभाषत ॥ २ ॥

गो० टी०—तत इत्यादि । ततो मुहुः शिरः कम्पयित्वा विस्मयमागतः सन् अगस्त्यं दृष्ट्वाऽभ्यभाषत ॥ २ ॥

३ ] ति० टी०—तदेवाह—भगवन्निति । पूर्वमपि विश्रवःपुत्रवैश्रवणरावणयोः पूर्वमपि लङ्का पिशिताशिनामावास आसीदिति भगवद्वाक्यमन्यतोऽपि रक्षःसंभवपरं श्रुत्वा मे विस्मयो जातः ॥ ३ ॥

रा० टी०—तदाकारमाह—भगवन्नित्यादिभिः । पूर्वमपि लङ्का पिशिताशिनां राक्षसानामासीत् इदं भगवतो भवतो वाक्यं श्रुत्वा मे परो विस्मयो जातः ॥ ३ ॥

गो० टी०—भगवन्निति । पूर्वं रावणकुबेरयोः पूर्वमपि लङ्का पिशिताशिनामासीदावास आसीदितीदानीमुक्तं श्रुत्वा मम विस्मयो जनितः ॥ ३ ॥

४ ] ति० टी०—तदेवाह—पुलस्त्येति । नोऽस्माकम् । अन्यतश्चापि संभवः कीर्तितः । लङ्का राक्षसानां निवासार्थं निर्मितेति विश्रवोवाक्यात्त्वद्वादेनेत्यर्थः ॥ ४ ॥

रा० टी०—विस्मये कारणमाह—पुलस्त्येति । राक्षसाः पुलस्त्यवंशादुद्भूता इति नोऽस्माभिः श्रुतमिदानीं तु अन्यतोऽपि सम्भवः राक्षसोत्पत्तिः त्वया कीर्तितः एतेन पूर्वराक्षसोत्पत्तिं वर्णयेति सूचितम् ॥ ४ ॥

गो० टी०—कुतो विस्मय इत्याशङ्क्य विरुद्धश्रवणादित्याह—पुलस्त्येति । नः अस्माभिः पूजायां बहुवचनम् । श्रुतं कर्णाकर्णिकयेति शेषः ॥ ४–७ ॥

५ ] ति० टी०—रावणपुत्रा इन्द्रजिदतिकायादयस्तेभ्यस्ते बलवत्तराः किं नु । यतो विष्णुना तद्विद्रावणं पतितमिति भावः ॥ ५ ॥

रा० टी०—रावणादिति । रावणादिभ्यः ते पौर्वकालिकराक्षसा बलवत्तराः किं नु एतदुत्तरं वदेति तात्पर्यम् ॥५॥

क एषां पूर्वको ब्रह्मन्किंनामा च बलोत्कटः । अपराधं च कं प्राप्य विष्णुना द्राविताः कथम् ॥ ६ ॥
एतद्विस्तारतः सर्वं कथयस्व ममानघ । कुतूहलमिदं मह्यं नुद भानुर्यथा तमः ॥ ७ ॥
राघवस्य वचः श्रुत्वा संस्कारालंकृतं शुभम् । अथ विस्मयमानस्तमगस्त्यः प्राह राघवम् ॥ ८ ॥
प्रजापतिः पुरा सृष्ट्वा अपः सलिलसंभवः । तासां गोपायने सत्त्वानसृजत्पद्मसंभवः ॥ ९ ॥
ते सत्त्वाः सत्त्वकर्तारं विनीतवदुपस्थिताः । किं कुर्म इति भाषन्तः क्षुत्पिपासाभयार्दिताः ॥ १० ॥
प्रजापतिस्तु तान्सर्वान्प्रत्याह प्रहसन्निव । आभाष्य वाचा यत्नेन रक्षध्वमिति मानवाः ॥ ११ ॥
रक्षाम इति तत्रान्यैर्यक्षाम इति चापरैः । भुंक्षिताभुंक्षितैरुक्तस्ततस्तानाह भूतकृत् ॥ १२ ॥

६ ] ति० टी०—पूर्वकः कूटस्थस्तद्वंश्याश्च राक्षसाः कमपराधं प्राप्य विष्णुना द्राविताः कथं च द्राविताः ॥ ६ ॥

रा० टी०—क इति । तेषां पूर्वरक्षसां पूर्वकः प्रथमः को बलोत्कटः अतिबलः कमपराधं प्राप्य विष्णुना कथं द्रावितः ६

७ ] ति० टी०—प्राचीनरक्षःकथनेन मह्यं कृतमिदं कुतूहलं भानुर्यथा तमो नुदति तथा नुद ॥ ७ ॥

रा० टी०—एतदिति । एतत् यत्पृष्टं सर्वं विस्तरतः कथयस्व अत एव भानुस्तम इव मह्यं ममेदं कौतूहलं नुद निवर्त्तय ॥ ७ ॥

८ ] ति० टी०—संस्कारालंकृतं पदवाक्यार्थसंस्कारयुतम् । विस्मयमानः । सर्वज्ञोऽप्येवं नाटयतीति विस्मयः ॥ ८ ॥

रा० टी०—राघवस्येति । संस्कारैः पदवाक्यार्थसंस्कृतिभिरलंकृतम् राघवस्य वचः श्रुत्वा विस्मयमानोगस्त्यः राघवं प्राह ॥ ८ ॥

गो० टी०—राघवस्येति । संस्कारेति पदवाक्यार्थजसंस्कारेति यावत् । ईषद्विस्मयमान इति । सर्वज्ञोप्यजानन्निव पृच्छतीति विस्मितम् ॥ ८ ॥

९ ] ति० टी०—अपः सृष्ट्वा । भूमेरधोभागवर्तिनीरपः सृष्ट्वेत्यर्थः । तत्र सलिलसंभवः प्रजापतिरभूदित्यन्वयः । 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥' इति मनूक्तेः । 'आपो वा इदमग्र आसन् । स प्रजापतिः पुष्करपर्णे समभवत्' । तथा 'आपो वा इदमग्रे सलिलमासीत् । तस्मिन्प्रजापतिर्वायुर्भूत्वाचरत् । स इमामपश्यत् । तां वराहो भूत्वाहरत्' 'इति श्रुतेश्च । तदेव पद्मसंभव इत्यनेन दर्शितम् । तासां स्वसृष्टानामपां गोपायने रक्षणनिमित्तं सत्त्वान्भूतानि । जन्तूनित्यर्थः ॥ ९ ॥

रा० टी०—तदाकारमाह—प्रजापतिरित्यादिभिः । प्रजापतिः सर्वेषां स्वामी परमात्मशरीरप्रकाशं पुरा पूर्वं अपो जलानि सृष्ट्वा आकाशादिक्रमेणोत्पाद्य सलिलसंभवः सलिलात्सलिलपद्मात् प्रादुर्भूतो बभूवेति शेषः रजोगुणग्रहणेन ब्रह्माभवदिति शेषः पद्मसम्भवो ब्रह्मा तु तासां पद्मद्वारा स्वोत्पादनहेतूनामपां गोपायने रक्षणार्थं सत्वान् प्राणिविशेषानसृजत् ॥ ९ ॥

गो० टी०—प्रजापतिरिति । सलिलसंभवः पद्मसंभवः सलिले पद्मसंभव इत्यर्थः प्रजापतिः ब्रह्मा । अहरन्ते अपः सृष्ट्वा भूमेरधः स्थिताः समुद्ररूपिणीः सृष्ट्वा रात्र्यवसाने तत्रैव सलिले विष्णुनाभिकमले वर्तमानः प्रजापतिः तासामपां गोपायने रक्षणनिमित्तम् सत्त्वान् जन्तूनसृजत् । पुँल्लिङ्गत्वमार्षम् ॥ ९ ॥

१० ] ति० टी०—विनीतवत्पितरि विनीताः सन्तः क्षुत्पिपासाजनितभयेनार्दिताः ॥ १० ॥

रा० टी०—ते इति । ते सृष्टाः सत्वाः किं कुर्म इति भाषन्तस्सन्तः सत्वकर्त्तारं ब्रह्माणमुपस्थिता बभूवुरिति शेषः॥१०॥

गो० टी०—त इति । तानि सत्त्वानि किं कुर्मः किं करवामेति भाषन्तः क्षुत्पिपासाभयार्दिताः सन्तः सत्त्वकर्तारं स्वस्रष्टारं विनीतवदुपस्थिताः ॥ १० ॥

११ ] ति० टी०—प्रहसन्निव । उक्तभयखिद्यमानस्वप्रजाविषयकदयावशात्प्रहासः । मानवः इत्यनेन तेषामुभयदृश्यत्वग्रहः सूचितः । वाचा हे सत्त्वानीति वाचाभाष्य संबोध्य यत्नेनेमा अपो रक्षध्वमिति तानि सत्त्वान्याह ॥ ११ ॥

रा० टी०—प्रजापतिरिति । प्रजापतिर्ब्रह्मा हे मानवाः मन्त्रशक्त्या सम्भूताः इत्याभाष्य सम्बोध्य रक्षध्वमिति तान् सृष्टान् सत्वान् प्रत्याह ॥ ११ ॥

गो० टी०—प्रजापतिस्त्विति । प्रहसन्निव भयार्दितस्वप्रजाविषयदयावशात् प्रहसन्नित्यर्थः । मानदः बहुमानदः । भयनिवृत्तिमनुगृह्णन्नित्यर्थः । हे सत्त्वानीति वाचा आभाष्य संबोध्य रक्षध्वं यत्नेन रक्षध्वमिमा अप इति ॥ ११ ॥

१२ ] ति० टी०—तत्र तेषु भगवन्नियुक्तभूतेषु मध्ये । भगवत्प्रयुक्तरक्षध्वमितिपदस्याविनाशेनावस्थापनमर्थ इति केचन प्रपन्नाः, उत्तरोत्तराभिवर्धनरूपपूजनमर्थ इति परे प्रपन्नाः। तत्राद्या रक्षामेति प्रतिवचनं दत्तवन्तः । परे यक्षामेति । 'यक्ष पूजायाम्' । उभयमपि लोडुत्तमबहुवचनम् । बुभुक्षिताबुभुक्षितैरित्यस्य स्थाने भुङ्क्षिताभुङ्क्षितैरित्यार्षमभ्यासलोपानुस्वाराभ्याम् । अबुभुक्षिताः पिपासिताः ॥ १२ ॥

१ ईपदिति गो. पाठः । २ ह्यप इति गो. पाठः । ३ तान्याह सत्वानीति गो. पाठः । ४ मानद इति गो. पाठः । ५ रक्षामेति चेति गो. पाठः । ६ जक्षाम इति गो. पाठः । * इदं चिन्त्यं सत्वमस्त्री तु जन्तुष्वित्यमरोक्तेः ।

रक्षाम इति यैरुक्तं राक्षसास्ते भवन्तु वः । येक्षाम इति यैरुक्तं यक्षा एव भवन्तु वः ॥ १३ ॥
तत्र हेतिः प्रहेतिश्च भ्रातरौ राक्षसाधिपौ । मधुकैटभसंकाशौ बभूवतुररिंदमौ ॥ १४ ॥
प्रहेतिर्धार्मिकस्तत्र तपोवनगतस्तदा । हेतिर्दारक्रियार्थे तु परं यत्नमथाकरोत् ॥ १५ ॥
स कालभगिनीं कन्यां भयां नाम महाभयाम् । उदावहदमेयात्मा स्वयमेव महामतिः ॥ १६ ॥
स तस्यां जनयामास हेती राक्षसपुंगवः । पुत्रं पुत्रवतां श्रेष्ठो विद्युत्केशमिति श्रुतम् ॥ १७ ॥
विद्युत्केशो हेतिपुत्रः स दीप्तार्कसमप्रभः । व्यवर्धत महातेजास्तोयमध्य इवाम्बुजम् ॥ १८ ॥
स यदा यौवनं भद्रमनुप्राप्तो निशाचरः । ततो दारक्रियां तस्य कर्तुं व्यवसितः पिता ॥ १९ ॥
संध्यादुहितरं सोऽथ संध्यातुल्यां प्रभावतः । वरयामास पुत्रार्थं हेती राक्षसपुंगवः ॥ २० ॥
अवश्यमेव दातव्या परस्मै सेति संध्यया । चिन्तयित्वा सुता दत्ता विद्युत्केशाय राघव ॥ २१ ॥
संध्यायास्तनयां लब्ध्वा विद्युत्केशो निशाचरः । रमते स तया सार्धं पौलोम्या मघवानिव ॥ २२ ॥
केनचित्त्वथ कालेन राम सालकटङ्कटा । विद्युत्केशाद्गर्भमाप घनराजिरिवार्णवात् ॥ २३ ॥

---

रा० टी०–रक्षाम इति । भुंक्षिताः बुभुक्षिता अपि वयं रक्षाम इत्यन्यैः कैश्चित् भुंक्षितैः बुभुक्षितैरुक्तः भुंक्षिता अपि वयं यक्षाम पूजयाम इत्यपरैः भुंक्षितैरुक्तश्च भूतकृद्ब्रह्मा तानाह भुंक्षिता भुंक्षितैरित्यार्षं यक्षपूजायामिति धातोर्लोटि यक्षामेति ॥ १२ ॥

गो० टी०–तानि सत्त्वान्याह–रक्षामेति । तत्र तेषु सत्त्वेषु मध्ये । अन्यैः कैश्चित्सत्त्वैः रक्षामेत्युक्तः । तथापरैर्जक्षामेत्युक्तः प्रजापतिः । उभयमपि लोडुत्तमबहुवचनम् । "जक्ष, भक्ष-हसनयोः" । कैश्चिन्न वयं रक्षाम किन्तु जक्षामेत्युक्तः । कैः रक्षामेत्युक्तम् कैर्वा जक्षामेत्युक्तं तत्राह–भुक्षिताभुक्षितैरिति अभ्यासलोपश्छान्दसः । अबुभुक्षितैः रक्षामेत्युक्तं बुभुक्षितैस्तु जक्षामेत्युक्तमिति क्रमः ॥ १२ ॥

१३ ] ति० टी०–वो युष्माकं मध्ये ॥ १३ ॥

रा० टी०–तदाकारमाह–रक्षामेति । वो युष्माकं मध्ये रक्षामेति यैरुक्तं ते राक्षसाः भवन्तु यक्षाम इति यैरुक्तं ते यक्षाः भवन्तु ॥ १३ ॥

गो० टी०–रक्षामेति । वः युष्माकं मध्ये । यैः रक्षामेत्युक्तं ते राक्षसा भवन्तु । यैर्जक्षामेत्युक्तं ते यक्षा भवन्तु । वर्णव्यत्यय आर्षः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०–तत्र भगवत्सृष्टभगवद्विभक्तजातिभेदरक्षोमध्ये । मधुकैटभावसुरौ ॥ १४ ॥

रा० टी०–तत्रेति । तत्र राक्षसमध्ये मधुकैटभसंकाशौ हेतिः प्रहेतिश्च भ्रातरौ बभूवतुः ॥ १४ ॥

१५ ] ति० टी०–तपोवनगतः । विरक्तः सन्निति शेषः ॥ १५

रा० टी०–प्रहेतिरिति । तत्र तयोर्मध्ये प्रहेतिः तपोवनगतोऽभवदिति शेषः हेतिस्तु दारक्रियार्थं बद्धाहार्थं यत्नमकरोत् ॥ १५ ॥

गो० टी०–प्रहेतिरिति । तत्र राक्षसेषु । तपोवनगत इति । विरक्तो भूत्वेति शेषः ॥ १५ ॥

१६–१८ ] ति० टी०–परं यत्नमेव दर्शयति—स इति । कालो वैवस्वतः । स्वयमेवेति । गत्वा प्रार्थनां कृत्वेति शेषः ॥ १६–१८ ॥

रा० टी०–स इति । स हेतिः भयां नाम कालभगिनीं स्वयमेव उदाहवत् ॥ १६ ॥

रा० टी०–स इति । पुत्रवतां श्रेष्ठो हेतिः तस्यां कालभगिन्यां विद्युत्केशमिति श्रुतं पुत्रं जनयामास ॥ १७ ॥

गो० टी०–स इति । कालो यमः । स्वयमेवेति । प्रार्थनां गत्वेत्यर्थः । अस्यैव विवरणं दारक्रियार्थं इत्यादि ॥ १६ ॥ १७ ॥

रा० टी०–विद्युत्केश इति । हेतिपुत्रो विद्युत्केशः अम्बुजमिव तोयमध्ये व्यवर्द्धत ॥ १८ ॥

गो० टी०–विद्युत्केश इति । तोयं मध्ये यस्य स तोयमध्यः ॥ १८ ॥

१९ ] ति० टी०–पिता हेतिः ॥ १९ ॥

रा० टी०–स इति । निशाचरः स विद्युत्केशः यदा यौवनमनुप्राप्तः ततस्तदा तस्य विद्युत्केशस्य दारक्रियां कर्तुं पिता हेतिः व्यवसितोऽभवदिति शेषः ॥ १९ ॥

गो० टी०–स इति । पिता हेतिः ॥ १९–२३ ॥

२०–२३ ] ति० टी०–प्रभावतः सन्ध्यातुल्यामिति संबन्धः सन्ध्यादुहिता सालकटङ्कटाख्या । इयं च रक्षःप्राधान्येन भगवत्सृष्टत्वाद्राक्षसी ॥ २०–२३ ॥

रा० टी०–सन्ध्येति । हेतिः प्रभावतः सन्ध्यातुल्यां सन्ध्यादुहितरं वरयामास ॥ २० ॥

रा० टी०–अवश्यमिति । सा कन्या परस्मै सा अवश्यं दातव्या इति चिन्तयित्वा संध्यासुता विद्युत्केशाय दत्ता ॥ २१ ॥

रा० टी०–संध्याया इति । विद्युत्केशः तया सं सार्द्ध तया सार्द्धं रमते ॥ २२ ॥

---

१ जक्षाम इति गो. पाठः । २ भयावहामिति. गो पाठः । ३ केश इति गो. पाठः । ४ रमेति गो. पाठः । ५ सालमिति रा. पा. ।

ततः सा राक्षसी गर्भं घनगर्भसमप्रभम् । प्रसूता मन्दरं गत्वा गङ्गा गर्भमिवाग्निजम् ॥
समुत्सृज्य तु सा गर्भं विद्युत्केशरतार्थिनी ॥ ॥ २४ ॥
रेमे तु सार्धं पतिना विसृज्य सुतमात्मजम् । उत्सृष्टस्तु तदा गर्भो घनशब्दसमस्वनः ॥ २५ ॥
तयोत्सृष्टः स तु शिशुः शरदर्कसमद्युतिः । निधायास्ये स्वयं मुष्टिं रुरोद शनकैस्तदा ॥ २६ ॥
ततो वृषभमास्थाय पार्वत्या सहितः शिवः । वायुमार्गेण गच्छन्वै शुश्राव रुदितस्वनम् ॥ २७ ॥
अपश्यदुमया सार्धं रुदन्तं राक्षसात्मजम् । कारुण्यभावात्पार्वत्या भवस्त्रिपुरसूदनः ॥ २८ ॥
तं राक्षसात्मजं चक्रे मातुरेव वयःसमम् । अमरं चैव तं कृत्वा महादेवोऽक्षरोऽव्ययः ॥ २९ ॥
पुरमाकाशगं प्रादात्पार्वत्याः प्रियकाम्यया । उभयापि वरो दत्तो राक्षसीनां नृपात्मज ॥ ३० ॥
सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च । सद्य एव वयःप्राप्तिं मातुरेव वयःसमम् ॥ ३१ ॥
ततः सुकेशो वरदानगर्वितः श्रियं प्रभोः प्राप्य हरस्य पार्श्वतः ।
चचार सर्वत्र महान्महामतिः खगं पुरं प्राप्य पुरंदरो यथा ॥ ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

रा० टी०—केन चिदिति । सालंकटंकटा तदभिधा संध्यादुहिता केनचित् कालेन विद्युत्केशात् गर्भमाप ॥ २३ ॥

२४ ] ति० टी०—घनगर्भसमप्रभं जलगर्भमेघसमकान्तिम् प्रसूता प्रसूतवती । अग्निजं गर्भम् अग्निविसृष्टं माहेश्वरं गर्भमित्यर्थः । विद्युत्केशरतार्थिनी विद्युत्केशेन सह रतं क्रीडामर्थयति तादृशी । बभूवेति शेषः ॥ २४ ॥

रा० टी०—तत इति । सा सालंकटंकटा मन्दरं गत्वा अग्निजमग्निना त्यक्तं शांभवं गर्भं गंगेव गर्भं प्रसूता अभवदिति शेषः ॥ २४ ॥

गो० टी०—तत इति । प्रसूता प्रसूतवती । अग्निजं गर्भमिति । अग्निना विसृष्टं माहेश्वरं गर्भमित्यर्थः । घनगर्भोऽशनिः ॥ २४–२७ ॥

२५–२७ ] ति० टी०—तत आत्मनः सकाशाज्जातं सुतं विसृज्य पतिना रेमे ॥ २५–२७ ॥

रा० टी०—समुत्सृज्येति । सा संध्यातनया विद्युत्केशरतार्थिनी सती गर्भं समुत्सृज्य विद्युत्केशसमीपमगच्छदिति शेषः अत एव आत्मजं सुतं विसृज्य पतिसमीपं प्राप्ता सा पतिना पत्या सार्द्धं रेमे उत्सृष्टो गर्भस्तु घनशब्दसमस्वनोऽभवदिति शेषः सार्द्धश्लोक एकान्वयी ॥ २५ ॥

रा० टी०—तयेति । तया संध्यासुतया उत्सृष्टः शिशुः आस्ये स्वमुखे मुष्टिं निधाय रुरोद ॥ २६ ॥

रा० टी०—तत इति । वायुमार्गेण गच्छन् शिवः रुदतः स्वनं शुश्राव ॥ २७ ॥

२८ ] ति० टी०—कारुण्यभावात्कारुण्ययुक्तो भावश्चित्तं तस्मात्पार्वत्या । प्रेरित इति शेषः ॥ २८ ॥

रा० टी०—अपश्यदिति । रुदन्तं राक्षसात्मजं भवः उमया सार्द्धमपश्यत् अत एव पार्वत्याः कारुण्यभावाद्धेतोः राक्षसात्मजं मातुर्वयस्समं मातृवयस्सदृशवयस्कं चक्रे सार्द्धश्लोक एकान्वयी ॥ २८ ॥

गो० टी०—अपश्यदिति । कारुण्येन सहितः भावश्चित्तं कारुण्यभावः तस्मात् ॥ २८ ॥

२९ ] ति० टी०—मातुरेव वयःसमम् । मातृवयस्कमित्यर्थः ॥ २९ ॥

रा० टी०—अमरमिति । महादेवः तं राक्षसममरं कृत्वा आकाशगं पुरं पुराकारविमानं प्रादात् ॥ २९ ॥

गो० टी०—तमिति । अक्षरोऽव्यय इति षड्भावराहित्योपलक्षणम् । पार्वत्या प्रेरित इति शेषः । इदमेव दर्शयति—वक्ष्यमाणप्रियकाम्ययेति ॥ २९ ॥ ३० ॥

३० ] ति० टी०—तदाह—पार्वत्याः प्रियकाम्ययेति ॥ ३० ॥

रा० टी०—उभयेति । उभयापि राक्षसीनां राक्षसीभ्यो वरो दत्तः अर्द्धं पृथक् ॥ ३० ॥

३१ ] ति० टी०—सद्योपलब्धिरित्यार्षः संधिः ॥ ३१ ॥

रा० टी०—वराकारमाह—सद्य इति । गर्भस्य सद्योपलब्धिः शीघ्रं प्राप्तिः सन्धिरार्षः सद्यःप्रसूतिरुत्पत्तिश्च मातुर्वयस्सममेव सद्यो वयःप्राप्तिः ॥ ३१ ॥

गो० टी०—सद्य इति । सद्योपलब्धिरित्यार्षः संधिः । मातुरेव वयःसमं वयःप्राप्तिरिति योजना ॥ ३१ ॥

३२ ] ति० टी०—सुकेश इत्यनुवादात्तन्नामकत्वमस्य बोध्यम् । खगमाकाशगम् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

१ विसृज्येति गो. पाठः । २ राक्षसानामिति गो. पाठः । ३ प्राप्तिरिति गो. रा. पाठः ।

## पञ्चमः सर्गः ।

सुकेशात्पुत्रत्रयस्य जननं तेषां तपश्चरणं तेन तुष्टाद्ब्रह्मणो वरप्राप्तिस्तन्मत्तानां तेषामखिलसुरासुराणां पीडां पीडितानामसुराणां लङ्कायां प्रच्छन्नवासं सुकेशतनयानां पृथगपत्योत्पत्तिं च कुम्भजोऽकथयत् ।

सुकेशं धार्मिकं दृष्ट्वा वरलब्धं च राक्षसम् । ग्रामणीर्नाम गन्धर्वो विश्वावसुसमप्रभः ॥ १ ॥
तस्य देववती नाम द्वितीया श्रीरिवात्मजा । त्रिषु लोकेषु विख्याता रूपयौवनशालिनी ॥ २ ॥
तां सुकेशाय धर्मात्मा ददौ रक्षः श्रियं यथा । वरदानकृतैश्वर्यं सा तं प्राप्य पतिं प्रियम् ॥ ३ ॥
आसीद्देववती तुष्टा धनं प्राप्येव निर्धनः । स तया सह संयुक्तो रराज रजनीचरः ॥ ४ ॥
अञ्जनादभिनिष्क्रान्तः करेण्वेव महागजः । ततः काले सुकेशस्तु जनयामास राघव ॥
त्रीन् पुत्राञ्जनयामास त्रेताग्निसमविग्रहान् । ॥ ५ ॥
माल्यवन्तं सुमालिं च मालिं च बलिनां वरम् । त्रींस्त्रिनेत्रसमान्पुत्रान्राक्षसान्राक्षसाधिपः ॥ ६ ॥
त्रयो लोका इवाव्यग्राः स्थितास्त्रय इवाग्नयः । त्रयो मन्त्रा इवात्युग्रास्त्रयो घोरा इवामयाः ॥ ७ ॥

रा० टी०—तत इति । प्रभोः हरस्य पार्श्वतस्समीपे श्रियं प्राप्य खगं पुरं च प्राप्य वरदानगर्वितस्सुकेशः सर्वत्र चचार ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुर्थः सर्गः ॥ ४ ॥

गो० टी०—तत इति । सुकेश इत्यनुवादादेव तन्नामकरणं सिद्धम् । खगम् आकाशगम् ॥ ३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्थः सर्गः ॥ ४ ॥

१–२ ] ति० टी०—वरलब्धं लब्धवरम् ॥ १ ॥ २ ॥

रा० टी०—सुकेशवृत्तान्तमाह—सुकेशमित्यादिभिः । वरलब्धं लब्धवरं सुकेशं दृष्ट्वा ग्रामणीर्नाम गन्धर्वः प्रससादेति शेषः ॥ १ ॥

रा० टी०—प्रसादफलमाह—तस्येति । तस्य ग्रामण्यः देववती नाम या आत्मजा तां सुकेशाय ददौ सार्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०—सुकेशमित्यादिसार्धद्वयम् । वरलब्धं लब्धवरम् । गन्धर्व आसीत् स तं सुकेशं दृष्ट्वा तस्मै सुकेशाय ददावित्यन्वयः । रक्षःश्रियं राक्षसश्रियम् ॥ १–३ ॥

३–४ ] ति० टी०—वरदानेन कृतमैश्वर्यं यस्य तम् ॥ ३ ॥ ४ ॥

रा० टी०—वरेति । वरदानकृतमैश्वर्यं यस्य तं पतिं सा देववती धनं प्राप्य निर्धन इव तुष्टा आसीत् ॥ ३ ॥

रा० टी०—स इति । तया देववत्या सह संयुक्तो रजनीचरः अञ्जनात् दिग्गजात् अभिनिष्क्रान्त उत्पन्नः करेण्वा सह संयुक्तो महागज इव रराज ॥ ४ ॥

गो० टी०—स इति । अञ्जनादञ्जनाख्यगजात् अभिनिष्क्रान्त उत्पन्नः महागजः करेण्वेव रराज ॥ ४–६ ॥

५–६ ] ति० टी०—अञ्जनादञ्जनाख्यदिग्गजादभिनिष्क्रान्त उत्पन्नः । किं जनयामासेत्यत्राह—त्रीन्पुत्राञ्जनयामासेति । 'तान्पुत्रान्' इति पाठान्तरम् । तान्प्रसिद्धान्वक्ष्यमाणान्वेत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०—तत इति । काले उत्पत्तिसमये सुकेशो जनयामास अर्धं पृथक् ॥ ५ ॥

रा० टी०—किं जनयामासेत्याकाङ्क्षायामाह त्रीन् माल्यवत्प्रभृतीन् पुत्रान् जनयामास ॥ ६ ॥

रा० टी०—त्रीनिति । राक्षसाधिपः त्रिनेत्रसमान् शम्भुसदृशान् त्रीन् पुत्रान् अवलोक्य मुमुदे इति शेषः अर्धं पृथक् ॥ ६ ॥

७ ] ति० टी०—मन्त्रा इव । उत्साहप्रभुमन्त्रशक्तिमयाभिमन्त्राभिवेदाश्च । आमयत्रयं वातपित्तश्लेष्मरूपम् । अत्रोपमाचतुष्टये स्थिरत्वतेजस्वित्वापरिमितसामर्थ्यहिंसकत्वानि साधारणधर्माः ॥ ७ ॥

रा० टी०—पुत्रान् एव वर्णयति—त्रय इति । त्रयो लोकाः सर्वावलोकनकर्तारो ब्रह्मादय इव अव्यग्राः त्रयोऽग्नय इव स्थिताः संस्थापिताः त्रयो ब्रह्मादित्रितयसंबन्धिनो मंत्रा इव अत्युग्राः त्रयः वातादित्रितयजत्वेन त्रिविधाः आमया महारोगा इव घोराः अभवन्निति शेषः ॥ ७ ॥

गो० टी०—त्रयो लोका इत्यादि श्लोकद्वयम् । त्रयो मन्त्राः उत्साहप्रभुमन्त्रशक्तयः । त्रयो वेदा वा । त्रय आमयाः वातपित्तश्लेष्मरूपाः । त्रेताग्निसमवर्चस इति तेजोतिशय उक्तः । पूर्वसाहित्यप्राधानात्व्याधयोपेक्षिता इति संधिरार्षः ॥ ७–१३ ॥

१ देववत्यामिति गो. पाठः ।

त्रयः सुकेशस्य सुतास्त्रेताग्निसमतेजसः । विवृद्धिमगमंस्तत्र व्याधयोपेक्षिता इव ॥ ८ ॥
वरप्राप्तिं पितुस्ते तु ज्ञात्वैश्वर्यं तपोबलात् । तपस्तप्तुं गता मेरुं भ्रातरः कृतनिश्चयाः ॥ ९ ॥
प्रगृह्य नियमान्घोरान्राक्षसा नृपसत्तम । विचेरुस्ते तपो घोरं सर्वभूतभयावहम् ॥ १० ॥
सत्यार्जवशमोपेतैस्तपोभिर्भुवि[2] दुर्लभैः । संतापयन्तस्त्रीँल्लोकान्सदेवासुरमानुषान् ॥ ११ ॥
ततो विभुश्चतुर्वक्त्रो विमानवरमाश्रितः । सुकेशपुत्रानामन्त्र्य वरदोऽस्मीत्यभाषत ॥ १२ ॥
ब्रह्माणं वरदं ज्ञात्वा सेन्द्रैर्देवगणैर्वृतम् । ऊचुः प्राञ्जलयः सर्वे वेपमाना इव द्रुमाः ॥ १३ ॥
तपसाराधितो देव यदि नो दिशसे वरम् । अजेयाः शत्रुहन्तारस्तथैव चिरजीविनः ॥
प्रभविष्णवो भवामेति परस्परमनुव्रताः । ॥ १४ ॥
एवं भविष्यथेत्युक्त्वा[3] सुकेशतनयान्विभुः । स ययौ ब्रह्मलोकाय ब्रह्मा ब्राह्मणवत्सलः ॥ १५ ॥
वरं लब्ध्वा तु ते सर्वे राम रात्रिचरास्तदा । सुरासुरान्प्रबाधन्ते वरदानसुनिर्भयाः ॥ १६ ॥
तैर्बाध्यमानास्त्रिदशाः[4] सर्षिसङ्घाः सचारणाः । त्रातारं नाधिगच्छन्ति निरयस्था यथा नराः ॥ १७ ॥
अथ ते विश्वकर्माणं शिल्पिनां वरमव्ययम् । ऊचुः समेत्य संहृष्टा राक्षसा रघुसत्तम ॥ १८ ॥
ओजस्तेजोबलवतां महतामात्मतेजसा । गृहकर्ता भवानेव देवानां हृदयेप्सितम् ॥ १९ ॥
अस्माकमपि तावत्त्वं गृहं कुरु महामते । हिमवन्तमुपाश्रित्य[5] मेरुमन्दरमेव वा ॥ २० ॥
महेश्वरगृहप्रख्यं गृहं नः क्रियतां महत् । विश्वकर्मा ततस्तेषां राक्षसानां महाभुजः ॥ २१ ॥
निवासं कथयामास शक्रस्येवामरावतीम् । दक्षिणस्योदधेस्तीरे त्रिकूटो नाम पर्वतः ॥ २२ ॥

---

८-१३ ] ति० टी०-व्याधयोपेक्षिता इव । उपेक्षिता अचिकित्सिता व्याधय इवेत्यर्थः । संधिरार्षः ॥ ८-१३ ॥

रा० टी०-त्रय इति । सुकेशस्य त्रयस्सुताः उपेक्षिता व्याधय इव विवृद्धिमगमन् ॥ ८ ॥

रा० टी०-वरेति । ते त्रयः पुत्राः पितुर्वरप्राप्तिं तयोर्मातापित्रोस्तपोबलादैश्वर्यं च ज्ञात्वा तपस्तप्तुं कृतनिश्चयाः सन्तः मेरुं गताः ॥ ९ ॥

रा० टी०-प्रगृह्येति । राक्षसाः घोरं तपो विचेरुः ॥ १० ॥

रा० टी०-सत्येति । सत्यादिभिरुपेतैः तपोभिः त्रीन् लोकान् संतापयन्तो बभूवुरिति शेषः ॥ ११ ॥

रा० टी०-तत इति । चतुर्वक्त्रो ब्रह्मा सुकेशपुत्रानामंत्र्य सम्बोध्य वरदोऽस्मीत्यभाषत ॥ १२ ॥

रा० टी०-ब्रह्माणं वरदं ज्ञात्वा प्राञ्जलयस्सर्वे राक्षसाः ब्रह्माणमूचुः ॥ १३ ॥

१४ ] ति० टी०-दिशसे ददासि । अजेया जेतुमनर्हाः प्रभविष्णवः यणार्षः । प्रभव इति यावत् । परस्परमनुव्रताः, अनुरक्ताश्च भवामेत्यनुकर्षः ॥ १४ ॥

रा० टी०-तदाकारमाह-तपसेति । नस्तपसाराधितस्त्वं यदि वरं दिशसे ददासि तदा अजेयत्वादिविशिष्टाः वयं भवाम प्रभविष्णवः प्रभाववन्तः सञ्ज्ञापूर्वकविधेरनित्यत्वात् गुणाभावः सार्द्धश्लोक एकान्वयी ॥ १४ ॥

गो० टी०-तपसेति । प्रभविष्णवः यणार्षः । अनुव्रताः । अनुरक्ताश्च भवामेत्यनुकर्षः ॥ १४ ॥ १५ ॥

१५-१७ ] ति० टी०-ब्रह्मलोकाय तं प्राप्तुम् । ब्राह्मणवत्सलः । तेषां स्वमुखजत्वाज्ज्येष्ठत्वाच्च तेषु वात्सल्यम् ॥ १५-१७ ॥

रा० टी०-एवमिति । ब्रह्मा एवं भविष्यत इति सुकेशतनयान् उक्त्वा ब्रह्मलोकाय ययौ अत एव ज्ञापकादगुणः १५

रा० टी०-वरमिति । वरं लब्ध्वा अत एव वरदानेन सुनिर्भयाः ते त्रयः सुरासुरान् प्रबाधन्ते ॥ १६ ॥

रा० टी०-तैरिति । तैर्बध्यमानाः त्रिदशाः निरयस्था नरा इव त्रातारं नाधिगच्छन्ति प्राप्नुवन् ॥ १७ ॥

गो० टी०-एवमिति । ब्रह्मलोकाय ब्रह्मलोकं गन्तुम् । "तुमर्थे०"* इत्यादिना चतुर्थी ॥ १६-२२ ॥

१८ ] ति० टी०-अथ ते माल्यवदादयः । अव्ययं चिरजीविनम् ॥ १८ ॥

रा० टी०-अथेति । ते सुकेशसुताः विश्वकर्माणं समेत्य ऊचुः ॥ १८ ॥

१९-२२ ] ति० टी०-ओजस्तेजोबलवताम्, अत एव महतां देवानां भवानेवात्मतेजसात्मसामर्थ्येन गृहकर्ता स त्वमस्माकमपि हृदयेप्सितं गृहं कुर्विति संबन्धः ॥ १९-२२ ॥

रा० टी०-तदाकारमाह-ओज इति सार्द्धद्वयाभ्याम् ।

---

१ ईश्वरेति गो. पाठः । २ भतीति गो. पाठः । ३ भविष्यतीति गो. भविष्यतेति च रा. पा. । ४ बध्यमाना इति गो. रा.पा. । ५ अपेति गो.पा.।
* इदं चिन्त्यम् " क्रियार्थोपपदस्येत्यनेनैवात्र चतुर्थीति भाति ।

सुवेल इति चाप्यन्यो द्वितीयो राक्षसेश्वराः । शिखरे तस्य शैलस्य मध्यमेऽम्बुदसंनिभे ॥ २३ ॥
शकुनैरपि दुष्प्रापे टङ्कच्छिन्नचतुर्दिशि । त्रिंशद्योजनविस्तीर्णा शतयोजनमायता ॥ २४ ॥
स्वर्णप्राकारसंवीता हेमतोरणसंवृता । मया लङ्केति नगरी शक्राज्ञप्तेन निर्मिता ॥ २५ ॥
तस्यां वसत दुर्धर्षा यूयं राक्षसपुंगवाः । अमरावतीं समासाद्य सेन्द्रा इव दिवौकसः ॥ २६ ॥
लङ्कादुर्गं समासाद्य राक्षसैर्बहुभिर्वृताः । भविष्यथ दुराधर्षाः शत्रूणां शत्रुसूदनाः ॥ २७ ॥
विश्वकर्मवचः श्रुत्वा ततस्ते राक्षसोत्तमाः । सहस्रानुचरा भूत्वा गत्वा तामवसन्पुरीम् ॥ २८ ॥
दृढप्राकारपरिखां हैमैर्गृहशतैर्वृताम् । लङ्कामवाप्य ते हृष्टा न्यवसन्रजनीचराः ॥ २९ ॥
एतस्मिन्नेव काले तु यथाकामं च राघव । नर्मदा नाम गन्धर्वी बभूव रघुनन्दन ॥ ३० ॥
तस्याः कन्यात्रयं ह्यासीद्ध्रीश्रीकीर्तिसमद्युति । ज्येष्ठक्रमेण सा तेषां राक्षसानामराक्षसी ॥ ३१ ॥
कन्यास्ताः प्रददौ हृष्टा पूर्णचन्द्रनिभाननाः । त्रयाणां राक्षसेन्द्राणां तिस्रो गन्धर्वकन्यकाः ॥ ३२ ॥

महतां देवानां गृहकर्ता भवानेव अतः हिमवन्तं मेरुमन्दरं चोपाश्रित्य अस्माकमपि हृदयेप्सितं गृहं कुरु श्लोकद्वयमेकान्वयी ॥ १९ ॥ २० ॥

रा० टी०—महेश्वरेति । महेश्वरगृहप्रख्यं महत् विशालं नो गृहं क्रियताम् अर्द्धं पृथक् । विश्वकर्मेति । विश्वकर्मा शक्रस्यामरावतीमिव तेषां निवासं कथयामास ॥ २१ ॥

रा० टी०—तत् कथनमेवाह—दक्षिणस्येति । उदधेः दक्षिणे तीरे त्रिकूटो नाम पर्वतोऽस्तीति शेषः अन्यस्ततो भिन्नः द्वितीयस्तत्सदृशः सुवेल इति ख्यातः पर्वतोऽस्ति ॥२३॥

गो० टी०—दक्षिणस्येत्यादि सार्धत्रयम् । अम्बुदसन्निभे मेघसमानरूपे मध्यमे शिखरे । शकुनैरपि दुष्प्राप इत्यत्र हेतुः टङ्कच्छिन्नचतुर्दिशीति ॥ २३—२६ ॥

२३ ] ति० टी०—द्वितीयः । तत्सदृश इत्यर्थः । मध्यमे शिखर इति संबन्धः ॥ २३ ॥

२४—२५ ] ति० टी०—शकुनैरपि दुष्प्रापे इत्यत्र हेतुः—टङ्कच्छिन्नचतुर्दिशि ॥ २४ ॥ २५ ॥

रा० टी०—शिखर इति । टंकच्छिन्नचतुर्दिशि टंकेन शिलाविदारकखनित्रविशेषेण छिन्नाः चतुर्दिशः सर्वदिग्वर्त्याश्रयाः यस्य तस्मिन् किंच टंकेन असिना छिन्नाः विद्धाः सर्वदिग्वर्त्याश्रयाः यस्य तस्मिन् असिप्राहतसर्वदिशीत्यर्थः किंच टंकवत् छिन्नाः छेदकाः चतुर्दिशः सर्वदिग्वर्तितटाः यस्य तस्मिन् 'टंकोनीलकपित्थे च खनित्रे टंकनेस्त्रियाम् जंघायां स्त्री पुमान् क्रोपे कोशासिग्रावदारणे' इति मेदिनी। अत एव शकुनैः पक्षिभिरपि दुष्प्रापे अम्बुदसंनिभे तस्य त्रिकूटस्य शैलस्य शिखरे त्रिंशद्योजनविस्तीर्णा शतयोजनमायता स्वर्णप्राकारैस्संवीता आच्छादिता लंका नाम नगरी मया निर्मिताऽस्तीति शेषः अर्द्धचतुष्टयमेकान्वयि ॥ २४ ॥ २५ ॥

२६—२७ ] ति० टी०—अमरावतीं समासाद्येति नवाक्षरपादतार्षी ॥ २६ ॥ २७ ॥

रा० टी०—तस्यामिति । हे राक्षसपुंगवाः तस्यां लङ्कायां यूयं वसत ॥ २६ ॥

रा० टी०—लंकेति । राक्षसैर्वृताः भवन्तः लङ्कादुर्गं समासाद्य शत्रूणां दुर्धर्षा भविष्यन्ति ॥ २७ ॥

गो० टी०—अमरावतीमिति । अमरावतीं समासाद्येति पदवशादक्षराधिक्यम् ॥ २७ ॥ २८ ॥

२८—३० ] ति० टी०—सहस्रमनेकेऽनुचरा येषां ते सहस्रानुचराः ॥ २८ ॥ ३० ॥

रा० टी०—विश्वकर्मेति । राक्षसोत्तमाः सहस्रानुचरा भूत्वा पुरीं लंकां गत्वा अवसन् ॥ २८ ॥

रा० टी०—तदेव भंग्यन्तरेणाह- दृढेति । दृढाः प्राकाराः परिखाश्च यस्याः हैमैः हेममयैः गृहशतैर्वृतां लंकामवाप्य हृष्टाः रजनीचराः न्यवसन् ॥ २९ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नेव काले नर्मदा नाम गंधर्वी बभूव ॥ ३० ॥

गो० टी०—विश्वकर्मेति । सहस्रमनेके अनुचरा येषां ते सहस्रानुचराः ॥ २९—३१ ॥

३१—३२ ] ति० टी०—अराक्षसी राक्षसजातिभिन्ना ॥ ३१ ॥ ३२

रा० टी०—तस्या इति । तस्याः गंधर्व्याः ह्रीप्रभृतिसमद्युति कन्यात्रयमासीत् अर्द्धं पृथक् ॥ ३१ ॥

रा० टी०—ज्येष्ठेति । अराक्षसी राक्षसजातिभिन्ना सा नर्मदा ज्येष्ठक्रमेण राक्षसानां राक्षसेभ्यः ताः तिस्रः कन्याः प्रददौ ॥ ३२ ॥

गो० टी०—तस्या इति । अराक्षसी राक्षसजातिव्यतिरिक्ता ॥ ३२ ॥

रा० टी०—त्रयाणामिति । भगदेवते नक्षत्रे मात्रा गंधर्वकन्यका दत्ताः ॥ ३३ ॥

गो० टी०—कन्या इति । भगदैवतनक्षत्रमुत्तराफाल्गुनी ॥ ३३—४३ ॥

१ तत्र सत्तमा इति गो. पाठः । २ शक्रेति गो. पाठः ।

दत्ता मात्रा महाभागा नक्षत्रे भगदैवते । कृतदारास्तु ते राम सुकेशतनयास्तदा ॥ ३३ ॥
चिक्रीडुः सह भार्याभिरप्सरोभिरिवामराः । ततो माल्यवतो भार्या सुन्दरी नाम सुन्दरी॥ ३४ ॥
स तस्यां जनयामास यदपत्यं निबोध तत् । वज्रमुष्टिर्विरूपाक्षोदुर्मुखश्चैव राक्षसः ॥ ३५ ॥
सुप्तघ्नो यज्ञकोपश्च मत्तोन्मत्तौ तथैव च । अनला चाभवत्कन्या सुन्दर्यां राम सुन्दरी ॥ ३६ ॥
सुमालिनोऽपि भार्यासीत्पूर्णचद्रनिभानना । नाम्ना केतुमती राम प्राणेभ्योऽपि गरीयसी॥ ३७ ॥
सुमाली जनयामास यदपत्यं निशाचरः । केतुमत्यां महाराज तन्निबोधानुपूर्वशः ॥ ३८ ॥
प्रहस्तोऽकम्पनश्चैव विकटः कालिकामुखः । धूम्राक्षश्चैव दण्डश्च सुपार्श्वश्च महाबलः ॥ ३९ ॥
संह्रादिः प्रघसश्चैव भासकर्णश्च राक्षसः । राका पुष्पोत्कटा चैव कैकसी च शुचिस्मिता ॥
कुम्भीनसी च इत्येते सुमालेः प्रसवाः स्मृताः । ॥ ४० ॥
मालेस्तु वसुदा नाम गन्धर्वी रूपशालिनी । भार्यासीत्पद्मपत्राक्षी स्वक्षी यक्षीवरोपमा ॥ ४१ ॥
सुमालेरनुजस्तस्यां जनयामास यत्प्रभो । अपत्यं कथ्यमानं तु मया त्वं शृणु राघव ॥ ४२ ॥
अनलश्चानिलश्चैव हरः संपातिरेव च । एते बिभीषणामात्या मालेयास्ते निशाचराः॥ ४३ ॥

ततस्तु ते राक्षसपुंगवास्त्रयो निशाचरैः पुत्रशतैश्च संवृताः
सुरान्सहेन्द्रानृषिनागयक्षान्बबाधिरे तान्बहुवीर्यदर्पिताः ॥ ४४ ॥
जगद्भ्रमन्तोऽनिलवद्दुरासदा रणेषु मृत्युप्रतिमानतेजसः ॥
वरप्रदानादपि गर्विता भृशं क्रतुक्रियाणां प्रशमंकराः सदा ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

---

३३-४० ] ति० टी०—मात्रा दत्ताः । मात्रा नर्मदये-च्छया दत्ता इत्यर्थः । भगदैवतं नक्षत्रमुत्तराफाल्गुनी॥३३-४०॥

रा० टी०—कृतेति । कृतदाराः सुकेशतनया भार्याभिः सह चिक्रीडुः ॥ ३४ ॥

रा० टी०—तत इति । सुन्दरी सौन्दर्यविशिष्टा सुन्दरी नाम माल्यवतो भार्या अभवदिति शेषः स माल्यवान् तस्यां सुन्दर्यां यदपत्यं जनयामास तत् निबोध ॥ ३५ ॥

रा० टी०—तत्बोधमेवाह वज्रेति । वज्रमुष्टिप्रभृतयः पुत्राः सुन्दर्यामभवन् अनला कन्या चाभवत् सार्द्धश्लोक एकान्वयी ॥ ३६ ॥

रा० टी०—सुमालिन इति । सुमालिनो भार्या नाम्ना केतुमती आसीत् ॥ ३७ ॥

रा० टी०—सुमालीति । केतुमत्यां सुमाली यदपत्यं जनयामास तत् अनुपूर्वशो निबोध ॥ ३८ ॥

रा० टी०—तद्बोधनमेवाह—प्रहस्त इति । प्रहस्तप्रभृतयः इत्येते सुमालेः प्रसवा-स्मृताः इकारान्तोपि सुमालिशब्दः सार्द्ध-श्लोकद्वयमेकान्वयि ॥ ३९ ॥ ४० ॥

४१-४२ ] ति० टी०—स्वक्षी मधुरदृ-शुताक्षा । यक्षीवरा यक्षीश्रेष्ठा तयोपमीयते सा यक्षीवरोपमा ॥ ४१ ॥ ४२ ॥

रा० टी०—मालेरिति । यक्षीवरोपमा वसुदा नाम गंधर्वी मालेर्भार्या आसीत् ॥ ४१ ॥

रा० टी०—सुमालेरिति । सुमालेरनुजः माली तस्या वसुदायां यदपत्यं जनयामास तत् मया कथ्यमानं त्वं शृणु४२

४३-४४ ] ति० टी०—मालेयाः । 'इतश्चानिमः' इति ढक् ॥ ४३ ॥ ४४ ॥

रा० टी०—तत् कथनमेवाह—अनल इति । अनलादयो मालेयाः विभीषणामात्याः अभवन्निति शेषः ॥ ४३ ॥

रा० टी०—तत इति । राक्षसपुंगवाः सहेन्द्रान् सुरान् ऋषिप्रभृतींश्च बबाधिरे ॥ ४४ ॥

४५ ] ति० टी०—प्रशमंकरा इत्यार्षः खच् ॥ ४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

रा० टी०—जगदिति । अनिलवज्जगद्भ्रमन्तः रणेषु दुरासदाः वरप्रदानात् भृशं गर्विताः राक्षसाः क्रतुक्रियाणां सदा प्रशमंकरा दूषका इत्यर्थः बभूवुः ॥ ४५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

गो० टी०—अनिल इति । मालेया इति "इतश्च०" इति ढक् ॥ ४४ ॥ ४५ ॥

गो० टी०—जगद्भिति । प्रशमंकरा इत्यार्षः खच् ॥४६॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चमः सर्गः ॥ ५ ॥

---

१ कालकार्मुक इति गो. पाठः । २ स्मितेति गो. रा. पाठः । ३ स्विति गो. पाठः । ४ मतीति गो. पाठः ।

## षष्ठः सर्गः

वरदृप्तैः सुकेशतनयैर्बाध्यमानाः मुनिदेवादयो भीताः शङ्करं प्रार्थ्यापि तेन निराकृतास्ते विष्णुमुपजग्मुः तेषु च विष्णोरभयं प्राप्य निवृत्तेषु माल्यवदादयोऽपि निर्जरोद्योगं विमृश्य तान् भृशं पीडयांचक्रुः वासुदेवस्तु गरुडमारुह्य ताञ्जेतुमागच्छत् ।

तैर्वध्यमाना देवाश्च ऋषयश्च तपोधनाः । भयार्ताः शरणं जग्मुर्देवदेवं महेश्वरम् ॥ १ ॥
जगत्सृष्ट्यन्तकर्तारमजमव्यक्तरूपिणम् । आधारं सर्वलोकानामाराध्यं परमं गुरुम् ॥ २ ॥
ते समेत्य तु कामारिं त्रिपुरारिं त्रिलोचनम् । ऊचुः प्राञ्जलयो देवा भयगद्गदभाषिणः ॥ ३ ॥
सुकेशपुत्रैर्भगवन्पितामहवरोद्धतैः । प्रजाध्यक्ष प्रजाः सर्वा बाध्यन्ते रिपुबाधनैः ॥ ४ ॥
शरणान्यशरण्यानि आश्रमाणि कृतानि नः । स्वर्गाच्च देवान्प्रच्याव्य स्वर्गे क्रीडन्ति देववत् ॥ ५ ॥
अहं विष्णुरहं रुद्रो ब्रह्माहं देवराडहम् । अहं यमश्च वरुणश्चन्द्रोऽहं रविरप्यहम् ॥ ६ ॥
इति माली सुमाली च माल्यवांश्चैव राक्षसाः । बाधन्ते समरोद्धर्षा ये च तेषां पुरःसराः ॥ ७ ॥
तन्नो देव भयार्तानामभयं दातुमर्हसि । अशिवं वपुरास्थाय जहि वै देवकण्टकान् ॥ ८ ॥
इत्युक्तस्तु सुरैः सर्वैः कपर्दी नीललोहितः । सुकेशं प्रति सापेक्षः प्राह देवगणान्प्रभुः ॥ ९ ॥
अहं तान्न हनिष्यामि मैमावध्या हि ते सुराः । किं तु मन्त्रं प्रदास्यामि यो वै तान्निहनिष्यति ॥ १० ॥

---

१-३ ] ति० टी०—अथ माल्यवदापीडितदेवगणस्य विष्णुनाभयदानं श्रुत्वा नारायणप्रेरकदेवगणवधे तेषां प्रवृत्तिः—तैर्वध्यमाना इति ॥ १-३ ॥

रा० टी०—राक्षसानां वृत्तान्तमेवाह—तैरित्यादिभिः । तैः राक्षसैर्वध्यमाना देवादयः महेश्वरं शरणं जग्मुः ॥ १ ॥

रा० टी०—जगदिति । जगतः सृष्टेः अन्तस्य विनाशस्य च कर्तारमुत्पत्यादित्रयकारणमित्यर्थः । कामारिं त्रिपुरारिं देवास्समेत्य भयगद्गदभाषिणः सन्तः ऊचुः श्लोकद्वयमेकान्वयि॥२॥३॥

गो० टी०—तैरित्यादि । शरण्यानि शरणार्हाणि देवपित्रतिथिपशुपक्ष्यादिरक्षणार्हाणि ॥ १--६ ॥

४ ] ति० टी०—प्रजाध्यक्षस्य भगवतः प्रजापतेः प्रजा देवनरतिर्यगादिरूपाः । रिपुबाधनैः । रिपूणां बाधनं बाधस्तैर्हेतुभिरित्यर्थः ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—सुकेशेत्यादिभिः । अरिपुबाधनैः न रिपवो येषां ते महान्त इत्यर्थः । तानपि बाधन्ते तैः सुकेशपुत्रैः सर्वाः प्रजाः बाध्यन्ते ॥ ४ ॥

५-६ ] ति० टी०—शरणानि शरणार्हाणि देवपित्रतिथिपशुपक्ष्यादिरक्षणार्हाणि । देवान्प्रच्याव्य ये सर्वे स्वर्गे देववत्क्रीडन्ति ॥ ५ ॥ ६ ॥

रा० टी०—शरण्यानीति । देवान् स्वर्गात्प्रच्याव्य स्वर्गे क्रीडन्ति अत एव शरण्यानि रक्षणार्हानि नोऽस्माकमाश्रमाणि अशरण्यानि कृतानि ॥ ५ ॥

रा० टी०—अहमिति । विष्णुप्रभृतिरहमेव इति मत्वा मालिप्रभृतयः ये तेषां पुरःसरास्ते च बाधन्ते श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

७ ] ति० टी०—समरे सङ्ग्रामे उद्धर्ष उत्साहो येषां ते॥७॥

गो० टी०—इतीति । समरे उद्धर्षो येषां ते समरोद्धर्षाः॥७॥

८ ] ति० टी०—अशिवमसौम्यम् । रौद्रमिति यावत् । 'रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरान्या शिवान्या' इति श्रुतेः ॥ ८ ॥

रा० टी०—तदिति । भयार्तानां नोऽस्माकमभयं दातुमर्हसि तदुपायमाह—अशिवं खलानाममंगलकारकं वपुरास्थाय प्रकटय्य देवकण्टकान् जहि ॥ ८ ॥

गो० टी०—अशिवमिति । अशिवमसौम्यं क्रूरमित्यर्थः ॥ ८ ॥

९ ] ति० टी०—सुकेशं प्रति सापेक्षः । सुकेशस्य स्वेनोज्जीवितत्वान्माल्यवदादीनां तत्पुत्रत्वात्स्वकर्तृकतत्संहारस्यानौचित्यं मन्वान इत्यर्थः ॥ ९ ॥

रा० टी०—इतीति । सुरैरित्युक्तोपि सुकेशं प्रति सापेक्षः पूर्वं स्वरक्षित्वात् इदानीमपि स्वस्मात्तद्रक्षाकांक्षी कपर्दी शिवः देवगणान् प्राह ॥ ९ ॥

गो० टी०—इत्युक्त इति । सुकेशं प्रति सापेक्ष इति । सुकेशस्य स्वाश्रितत्वात्तत्पुत्रवधानौचित्यम् इत्याशङ्क्येत्यर्थः ॥९॥

१० ] ति० टी०—ममावध्या वरहेतोर्वधानर्हाः । मन्त्रमुपायम् ॥ १० ॥

रा० टी०—तदाकारमाह—अहमिति । ते सुराः ममावध्याः मया पालितत्वाद्धन्तुमनर्हाः अतः अहं तान् न हनिष्यामि किन्तु यस्तान् निहनिष्यति तं मन्त्रमुपायं प्रदास्यामि बोधयामि ॥ १० ॥

---

१ शरण्यानीति गो. रा. पाठः । २ ह्याश्रमाणीति गो. पाठः । ३ ममेति गो. पाठः ।

एतमेव समुद्योगं पुरस्कृत्य महर्षयः । गच्छध्वं शरणं विष्णुं हनिष्यति स तान्प्रभुः ॥ ११ ॥
ततस्तु जयशब्देन प्रतिनन्द्य महेश्वरम् । विष्णोः समीपमाजग्मुर्निशाचरभयार्दिताः ॥ १२ ॥
शङ्खचक्रधरं देवं प्रणम्य बहुमान्य च । ऊचुः संभ्रान्तवद्वाक्यं सुकेशतनयान्प्रति ॥ १३ ॥
सुकेशतनयैर्देव त्रिभिस्त्रेताग्निसंनिभैः । आक्रम्य वरदानेन स्थानान्यपहृतानि नः ॥ १४ ॥
लङ्का नाम पुरी दुर्गा त्रिकूटशिखरे स्थिता । तत्र स्थिताः प्रबाधन्ते सर्वान्नः क्षणदाचराः ॥ १५ ॥
स त्वमस्मद्धितार्थाय जहि तान्मधुसूदन । शरणं त्वां वयं प्राप्ता गतिर्भव सुरेश्वर ॥ १६ ॥
चक्रकृत्तास्यकमलान्निवेदय यमाय वै । भयेष्वभयदोऽस्माकं नान्योऽस्ति भवता विना ॥ १७ ॥
राक्षसान्समरे हृष्टान्सानुबन्धान्मदोद्धतान् । नुद त्वं नो भयं देव नीहारमिव भास्करः ॥ १८ ॥
इत्येवं दैवतैरुक्तो देवदेवो जनार्दनः । अभयं भयदोऽरीणां दत्त्वा देवानुवाच ह ॥ १९ ॥
सुकेशं राक्षसं जाने ईशानवरदर्पितम् । तांश्चास्य तनयाञ्जाने येषां ज्येष्ठः स माल्यवान् ॥ २० ॥
तानहं समतिक्रान्तमर्यादान्राक्षसाधमान् । निहनिष्यामि संक्रुद्धः सुरा भवत विज्वराः ॥ २१ ॥
इत्युक्तास्ते सुराः सर्वे विष्णुना प्रभविष्णुना । यथावासं ययुर्हृष्टाः प्रशंसन्तो जनार्दनम् ॥ २२ ॥
विबुधानां समुद्योगं माल्यवांस्तु निशाचरः । श्रुत्वा तौ भ्रातरौ वीराविदं वचनमब्रवीत् ॥ २३ ॥
अमरा ऋषयश्चैव संगम्य किल शंकरम् । अस्मद्वधं परीप्सन्त इदं वचनमब्रुवन् ॥ २४ ॥
सुकेशतनया देव वरदानबलोद्धताः । बाधन्तेऽस्मान्समुद्दृप्ता घोररूपाः पदे पदे ॥ २५ ॥

---

गो॰ टी॰—प्रथमं रुद्रसमीपगमनं कृतोयमनर्थ इति द्योतयितुमाह—अहमिति । मन्त्रमुपायम् ॥ १० ॥

११–१२ ] ति॰ टी॰—एतमेव समुद्योगम्, न तु कालान्तरीयमित्यर्थः ॥ ११ ॥ १२ ॥

रा॰ टी॰—एतमिति । एतं स्वदैन्योच्चारणादिरूपं समुद्योगं पुरस्कृत्य यूयं विष्णुं शरणं गच्छध्वं स विष्णुस्तान् हनिष्यति ॥ ११ ॥

रा॰ टी॰—त इति । निशाचरभयार्दिताः देवादयः जयशब्देन महेश्वरं प्रतिनन्द्य विष्णोस्समीपमाजग्मुः ॥ १२ ॥

गो॰ टी॰—एतमिति । एतमेव समुद्योगमिति । न तु कालान्तरीयमित्यर्थः । प्रभुर्ममापि प्रभुः ॥ ११ ॥ १२ ॥

१३–१७ ] ति॰ टी॰—संभ्रान्तवत्संभ्रान्ताहम् । सुकेशतनयान्प्रति । तानुद्दिश्येत्यर्थः ॥ १३–१७ ॥

रा॰टी॰—शंखेति । शंखचक्रधरं विष्णुं प्रणम्य सुकेशतनयान्प्रति सुकेशतनयेभ्यः सम्भ्रान्तवत् भयविशिष्टं वाक्यमूचुः १३

रा॰ टी॰—तदाकारमाह—सुकेशेत्यादिभिः । सुकेशतनयैः वरदानेन हेतुना नोस्मानाक्रम्य स्थानानि अपहृतानि १४

रा॰ टी॰—ननु भवन्तोपि अन्यत्रैव तिष्ठन्तु इत्यत आहुः—लङ्केति । त्रिकूटशिखरे स्थिता लङ्का नाम पुरी अस्तीति शेषः अत्र स्थित्वा क्षणदाचराः राक्षसाः नोऽस्मान् प्रबाधन्ते ॥ १५ ॥

रा॰ टी॰—स इति । शरणं त्वां वयं प्राप्ताः अतो गतिरस्माकमाश्रयो भव अत एव अस्मद्धितार्थाय तान् राक्षसान् जहि १६

रा॰ टी॰—राक्षसानिति । सानुबन्धान् अनुचरसहितान् राक्षसान् हत्वेति शेषः । भास्करो नीहारमिव नो भयं नुद १७

गो॰ टी॰—शङ्खेति । सम्भ्रान्तवत् संभ्रान्ताः सन्तः ॥ १३–१७ ॥

१८–२० ] ति॰ टी॰—सानुबन्धान्सानुचरान्राक्षसान् । जहीति शेषः । नो भयं च नुद ॥ १८–२० ॥

रा॰ टी॰—इतीति । जनार्दनः अभयं दत्वा देवानुवाच १८

रा॰ टी॰—तदाकारमाह—सुकेशमिति । ईशानवरेण दर्पितं सुकेशमस्य तनयाँश्च जाने ॥ १९ ॥

गो॰ टी॰—राक्षसानिति । सानुबन्धाः सानुचराः ॥ १८–२४ ॥

२१–२२ ] ति॰ टी॰—अतिक्रान्तमर्यादान् । मर्यादा वध्यावध्यव्यवस्था ॥ २१ ॥ २२ ॥

रा॰ टी॰—तानिति । राक्षसाधमान् अहं निहनिष्यामि अतो हे सुराः यूयं विज्वरा भवत ॥ २० ॥

रा॰ टी॰—इतीति । विष्णुना इत्युक्तास्सुराः यथावासं ययुः ॥ २१ ॥

२३ ] ति॰ टी॰—तौ भ्रातरौ सुमालिमालिनौ ॥ २३ ॥

रा॰ टी॰—विबुधानामिति । माल्यवान् विबुधानां देवानां समुद्योगं श्रुत्वा भ्रातराविदमब्रवीत् ॥ २२ ॥

२४ ] ति॰ टी॰—परीप्सन्त इच्छन्तः ॥ २४ ॥

रा टी॰—तदाकारमाह—अमरा इत्यादिभिः । अस्मद्वधं परीप्सन्तः समिच्छन्तः अमरा ऋषयश्च शंकरं संगम्य इदमब्रुवन् ॥ २४ ॥

२५ ] ति॰ टी॰—पदे पदे प्रतिक्षणम् ॥ २५ ॥

---

१ दुष्टानिति गो. पाठः ।

राक्षसैरभिभूताः स्मो न शक्ताः स्म प्रजापते । स्वेषु सद्मसु संस्थातुं भयात्तेषां दुरात्मनाम् ॥ २६ ॥
तदस्माकं हितार्थाय जहि तांश्च त्रिलोचन । राक्षसान्हुंकृतेनैव दह प्रदहतां वर ॥ २७ ॥
इत्येवं त्रिदशैरुक्तो निशम्यान्धकसूदनः । शिरः करं च धुन्वान इदं वचनमब्रवीत् ॥ २८ ॥
अवध्या मम ते देवाः सुकेशतनया रणे । मन्त्रं तु वः प्रदास्यामि यस्तान्वै निहनिष्यति॥ २९ ॥
योऽसौ चक्रगदापाणिः पीतवासा जनार्दनः । हरिर्नारायणः श्रीमाञ्शरणं तं प्रपद्यथ ॥ ३० ॥
हरादवाप्य ते मन्त्रं कामारिमभिवाद्य च । नारायणालयं प्राप्य तस्मै सर्वं न्यवेदयन ॥ ३१ ॥
ततो नारायणेनोक्ता देवा इन्द्रपुरोगमाः । सुरारींस्तान्हनिष्यामि सुरा भवत निर्भयाः ॥ ३२ ॥
देवानां भयभीतानां हरिणा राक्षसर्षभौ । प्रतिज्ञातो वधोऽस्माकं चिन्त्यतां यदिह क्षमम्॥ ३३ ॥
हिरण्यकशिपोर्मृत्युरन्येषां च सुरद्विषाम् । नमुचिः कालनेमिश्च संह्लादो वीरसत्तमः ॥ ३४ ॥
राधेयो बहुमायी च लोकपालोऽथ धार्मिकः । यमलार्जुनौ च हार्दिक्यः शुम्भश्चैव निशुम्भकः॥ ३५ ॥
असुरा दानवाश्चैव सत्त्ववन्तो महाबलाः । सर्वे समरमासाद्य न श्रूयन्तेऽपराजिताः ॥ ३६ ॥
सर्वैः क्रतुशतैरिष्टं सर्वे मायाविदस्तथा । सर्वे सर्वास्त्रकुशलाः सर्वे शत्रुभयंकराः ॥ ३७ ॥
नारायणेन निहताः शतशोऽथ सहस्रशः । एतज्ज्ञात्वा तु सर्वेषां क्षमं कर्तुमिहार्हथ ॥
दुःखं नारायणं जेतुं यो नो हन्तुमिहेच्छति । ॥ ३८ ॥
ततः सुमाली माली च श्रुत्वा माल्यवतो वचः । ऊचतुर्भ्रातरं ज्येष्ठमश्विनाविव वासवम् ॥ ३९ ॥

---

रा० टी०—तदाकारमाह—सुकेशेति । सुकेशतनयाः पदे पदे क्षणे क्षणे अस्मान् बाधन्ते ॥ २५ ॥

गो० टी०—सुकेशेति । पदे पदे प्रतिक्षणमित्यर्थः २५–२७

२६–२७ ] ति० टी०—प्रजापते दुष्टनिग्रहद्वारा प्रजारक्षक ॥ २६ ॥ २७ ॥

रा० टी०—राक्षसैरिति । राक्षसैरभिभूताः वयं स्वेषु सद्मसु स्थातुं न शक्ताः स्म ॥ २६ ॥

रा० टी०—तदिति । अस्माकं हितार्थाय राक्षसान् जहि तत्स्वरूपमाह हुंकृतेनैव दह ॥ २७ ॥

२८ ] ति० टी०—शिरः करं च धुन्वानः । 'विषवृक्षोऽपि—' इति न्यायेन स्ववधानर्हा इत्याशयेनेति भावः ॥ २८ ॥

रा० टी०—इतीति । अन्धकसूदनः शिवः शिरः करं च धुन्वानः हननाभावसूचकत्वेन चालयमानः सन् इदमब्रवीत् २८

गो० टी०—इतीति । शिरः करं च धुन्वान इति सुरोक्तस्यासाध्यताद्योतनम् ॥ २८ ॥

२९–३० ] ति० टी०—तदेवाह—अवध्या इति । २९ । ३० ॥

रा० टी०—तदाकारमाह—अवध्या इति द्वाभ्याम् २९

रा० टी०—य इति । यो हरिः तं शरणं प्रपद्यथ ॥ ३० ॥

गो० टी०—अवध्या इति । अवध्यत्वे हेतुः सुकेशतनया इति ॥ २९ ॥ ३८ ॥

३१–३३ ] ति० टी०—ते देवा मन्त्रमवाप्येत्यन्वयः ३१–३३

रा० टी०—हरादिति । ते देवादयः हरात् मन्त्रमवाप्य नारायणालयं प्राप्य तस्मै सर्वं स्वकृत्तं न्यवेदयन् ॥ ३१ ॥

रा० टी०—तत इति । सुरारीन् अहं हनिष्यामि अतो हे सुराः निर्भया भवत इति नारायणेन देवा उक्ताः ॥ ३२ ॥

रा० टी०—देवानामिति । भयभीतानां देवानां मध्ये हरिणा अस्माकं वधः प्रतिज्ञातः अतो हे राक्षसर्षभौ क्षममुचितं चिन्त्यताम् ॥ ३३ ॥

३४–३५ ] ति० टी०—चिन्तार्हत्वं दर्शयति—हिरण्येत्यादि ॥ ३४ ॥ ३५ ॥

३६–३८ ] ति० टी०—अपराजिता इति छेदः॥३६–३८॥

रा० टी०—नन्वतिप्रबलत्वात् अस्माकं मृत्युर्नैव भविष्यतीत्यत आह—हिरण्येति । हिरण्यकशिपोः अन्येषां च सुरद्विषां मृत्युरभवदेवेति शेषः । अत एव नमुचिप्रभृतयो महाबलाः समरमासाद्य पराजितास्सन्तः न श्रूयन्ते मृता इत्यर्थः । श्लोकत्रयमेकान्वयि ॥ ३४–३६ ॥

रा० टी०—ननु ते केवलबलवन्त एव वयन्तु यागादिक्रियावन्त इति नास्माकं भयमित्यत आह—सर्वैरिति । शतशः सहस्रशो ये नारायणेन निहताः तैस्सर्वैः क्रतुशतैः अनेकक्रतुभिरिष्टं सर्वे मायावित्त्वादिविशिष्टाश्च अभवन्निति शेषः । अतः यो नोस्मान् हन्तुमिच्छति तं नारायणं जेतुं दुःखमतः सर्वेषामेतद्वृत्तं ज्ञात्वा क्षममुचितं कर्तुमर्हथ एतेन नारायणविरोधिनां सुकर्माणि फलदानि न भवन्तीति सूचितम् । सार्धश्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

३९ ] ति० टी०—अश्विनाविव वासवमिति । 'भगांशाविव' इति पाठे भगस्तदंशोऽर्यमा ताविवेत्यर्थः ॥ ३९ ॥

---

१ स्मेति गो. रा. पाठः । २ विज्वरा इति गो. पाठः । ३ इदमर्धं गो. पुस्तके नास्ति । ४ भगांशाविति गो. पाठः ।

स्वधीतं दत्तमिष्टं च ऐश्वर्यं परिपालितम् । आयुर्निरामयं प्राप्तं सुधर्मः स्थापितः पथि ॥ ४० ॥
देवसागरमक्षोभ्यं शस्त्रैः समवगाह्य च । जिता द्विषो ह्यप्रतिमास्तन्नो मृत्युकृतं भयम् ॥ ४१ ॥
नारायणश्च रुद्रश्च शक्रश्चापि यमस्तथा । अस्माकं प्रमुखे स्थातुं सर्वे बिभ्यति सर्वदा ॥ ४२ ॥
विष्णोर्द्वेषस्य नास्त्येव कारणं राक्षसेश्वर । देवानामेव दोषेण विष्णोः प्रचलितं मनः ॥ ४३ ॥
तस्मादद्यैव सहिताः सर्वेऽन्योन्यसमावृताः । देवानेव जिघांसामो येभ्यो दोषः समुत्थितः ॥ ४४ ॥
एवं संमन्त्र्य बलिनः सर्वसैन्यसमुपासिताः । उद्योगं घोषयित्वा तु सर्वे नैर्ऋतपुंगवाः ॥ ४५ ॥
युद्धाय निर्ययुः क्रुद्धाः जम्भवृत्रादयो यथा । इति ते राम संमन्त्र्य सर्वोद्योगेन राक्षसाः ॥ ४६ ॥
युद्धाय निर्ययुः सर्वे महाकाया महाबलाः । स्यन्दनैर्वारणैश्चैव हयैश्च करिसंनिभैः ॥ ४७ ॥
खरैर्गोभिरथोष्ट्रैश्च शिंशुमारैर्भुजंगमैः । मकरैः कच्छपैर्मीनैर्विहंगैर्गरुडोपमैः ॥ ४८ ॥
सिंहैर्व्याघ्रैर्वराहैश्च सृमरैश्चमरैरपि । त्यक्त्वा लङ्कां गताः सर्वे राक्षसा बलगर्विताः ॥ ४९ ॥
प्रयाता देवलोकाय योद्धुं दैवतशत्रवः । लङ्काविपर्ययं दृष्ट्वा यानि लङ्कालयान्यथ ॥ ५० ॥
भूतानि भयदर्शीनि विमनस्कानि सर्वशः । रथोत्तमैरुह्यमानाः शतशोऽथ सहस्रशः ॥ ५१ ॥

रा० टी०–तत इति । सुमाली माली च माल्यवतो वचः श्रुत्वा ज्येष्ठं भ्रातरमूचतुः ॥ ३९ ॥

गो० टी०–तत इति । भगांशावित्र । भगः पूर्वफल्गुनीनक्षत्रदेवता तदंशः अर्यमा उत्तरफल्गुनीनक्षत्रदेवता ॥ ३९–४२ ॥

४०–४२ ] ति० टी०–निरामयं नीरोगम् । सुधर्मः शोभनो धर्मः । पथि स्थापितः । प्राक्सम्यगनुष्ठितैरध्ययनादिभिरिति शेषः । यतो द्विषो देवा जितास्ततस्तस्मादस्माकं मृत्युकृतं भयं नास्तीत्यर्थः । कर्तव्यावशेषाभावान्मृत्यावपि न क्षतिरिति भावः ॥ ४०–४२ ॥

रा० टी०–तदाकारमाह–स्वधीतमित्यादिभिः । पथि कुलपरंपरायां सुधर्मः स्थापितः एतेनैतत्कर्मप्रभावादस्माकं विजयो भविष्यतीति सूचितम् ॥ ४० ॥

रा० टी०–देवेति । देवसागरं देवरूपसमुद्रं शस्त्रैस्समवगाह्य अप्रतिमाः द्विषो जिताः अत एव प्रमुखे संग्रामे स्थातुं नारायणादयो बिभ्यति तत्तेषामस्माकं मृत्युकृतं भयं नो नास्ति श्लोकद्वयमेकान्वयि ॥ ४१ ॥ ४२ ॥

४३ ] ति० टी०–विष्णोर्द्वेषस्य कारणं नास्ति । अस्माभिस्तदपराधाकरणादिति भावः । विष्णोर्दोषश्च नास्त्यत्र कारणम् । 'राक्षसेश्वर' इति पाठे विष्णोरस्मद्वधप्रतिज्ञायां यः कारणं स्यात्तादृशो विष्णोः सहजो दोषो नास्तीत्यर्थः । कथं तर्हीदानीमस्मासु द्वेषो विष्णोरत आह–देवानामिति । दोषेणोपजापेन ॥ ४३ ॥

रा० टी०–ननु तथात्वे कथं विष्णुना वधः प्रतिज्ञात इत्यत आह–विष्णोरिति । यद्यपि विष्णोर्द्वेषस्य कारणं नास्त्येव तथापि देवानां दोषेणैव विष्णोर्मनः प्रचलितम् ॥ ४३ ॥

गो० टी०–विष्णोरिति । विष्णोर्द्वेषस्य कारणं नास्तीति । अस्माभिस्तदपकाराकरणादिति भावः ॥ ४३ ॥

४४–४७ ] ति० टी०–जिघांसामः । स्वार्थे सनार्थः । हन्म इत्यर्थः ॥ ४४–४७ ॥

४८ ] ति० टी०–खरादयो वाहनानि ॥ ४८ ॥

रा० टी०–तस्मादिति । तस्मादुक्तहेतोः येभ्यो दोषः समुत्थितः तान् देवानेव सहिताः परस्परं हितत्वेन विद्यमानाः अन्योन्यसमावृताः वयं जिघांसामः ॥ ४३ ॥

रा० टी०–एवमिति । सैन्यसमुपासिताः पालितसैन्याः सर्वे राक्षसपुंगवाः एवं संमन्त्र्य उद्योगं घोषयित्वा संश्राव्य जंभवृत्रादयः युद्धाय निर्ययुः सार्धश्लोक एकान्वयी ॥ ४४ ॥ ४५ ॥

रा० टी०–तत्प्रकारमाह–इतीति । सर्वोद्योगेन निखिलयत्नेनोपलक्षिता राक्षसाः स्यन्दनादिभिर्युद्धाय निर्ययुः श्लोकत्रयमेकान्वयि ॥ ४६–४८ ॥

गो० टी०–तस्मादिति । जिघांसाम इति स्वार्थे सन्नार्थः ॥ ४४–४६ ॥

गो० टी०–वाहनान्याह–स्यन्दनैरित्यादिना । सृमरैः गवयैः ॥ ४७–४९ ॥

४९ ] ति० टी०–सृमरो गवयः । सृमरचमरयोर्नीलश्वेतपुच्छयोगाद्भेद इति तीर्थः ॥ ४९ ॥

रा० टी०–त्यक्त्वेति । बलगर्विता ये राक्षसा योद्धुं देवलोकाय गतास्ते प्रयाताः प्राप्ताः ॥ ४९ ॥

५०–५१ ] ति० टी०–लङ्काविपर्ययं लङ्कानाशम् । लङ्कालयानि भूतानि तत्रत्यानि दैवतानि विमनस्कान्यासन् ॥ ५०–५१

रा० टी०–लंकेति । यानि लंकालयानि भूतानि पद्मप्रभृतीनि लंकाविपर्ययं कुशकुनादिना लंकाया विध्वंसं दृष्ट्वा ज्ञात्वा भयदर्शीनि अत एव विमनस्कानि बभूवुरिति शेषः ॥ ५० ॥

रा० टी०–रथोत्तमैरिति । शतशः सहस्रशो राक्षसाः

१ प्रापित इति गो. पाठः । २ देवस्येति गो. पाठः । ३ समुद्युक्ता इति गो. पाठः । ४ सर्वसैन्यसमावृता इति गो. पाठः । ५ जिघांसामेति गो. पाठः । ६ सर्वे इति गो. रा. पाठः । ७ समावृता इति गो. पाठः । ८ बला इवेति गो. पाठः । ९ गिरौति गो. पाठः । १० शिंशिति गो. पाठः ।

प्रयाता राक्षसास्तूर्णं देवलोकं प्रयत्नतः । रक्षसामेव मार्गेण दैवतान्यपचक्रमुः ॥ ५२ ॥
[ भूतानि भयदर्शीनि विषमस्थानि सर्वशः ।
भौमाश्चैवान्तरिक्षाश्च कालाज्ञप्ता भयावहाः । उत्पाता राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ५३ ॥
अस्थीनि मेघा ववृषुरुष्णं शोणितमेव च । वेलां समुद्राश्चोत्क्रान्ताश्चेलुश्चाप्यथ भूधराः ॥ ५४ ॥
अट्टहासान्विमुञ्चन्तो घननादसमस्वनाः । वाश्यन्त्यश्च शिवास्तत्र दारुणं घोरदर्शनाः ॥ ५५ ॥
संपतन्त्यथ भूतानि दृश्यन्ते च यथाक्रमम् । गृध्रचक्रं महच्चात्र प्रज्वालोद्गारिभिर्मुखैः ॥ ५६ ॥
रक्षोगणस्योपरिष्टात्परिभ्रमति कालवत् । कपोता रक्तपादाश्च सारिका विद्रुता ययुः ॥ ५७ ॥
काका वाश्यन्ति तत्रैव बिडालाश्च द्विपादिकाः । उत्पातांस्ताननादृत्य राक्षसा बलदर्पिताः ॥ ५८ ॥
यान्त्येव न निवर्तन्ते मृत्युपाशावपाशिताः । माल्यवांश्च सुमाली च माली च सुमहाबलः ॥ ५९ ॥
पुरःसरा राक्षसानां ज्वलिता इव पावकाः । माल्यवन्तं तु ते सर्वे माल्यवन्तमिवाचलम् ॥ ६० ॥
निशाचरा आश्रयन्ति धातारमिव देवताः । तद्बलं राक्षसेन्द्राणां महाभ्रघननादितम् ॥ ६१ ॥
जयेप्सया देवलोकं ययौ मालिवशे स्थितम् । राक्षसानां समुद्योगं तं तु नारायणः प्रभुः ॥ ६२ ॥
देवदूतादुपश्रुत्य चक्रे युद्धे तदा मनः । ससज्जायुधतूणीरो वैनतेयोपरि स्थितः ॥ ६३ ॥
आसाद्य कवचं दिव्यं सहस्रार्कसमद्युति । आबध्य शरसंपूर्णे इषुधी विमले तदा ॥ ६४ ॥

प्रयत्नतो देवलोकं प्रयाताः दैवतानि तु रक्षसां मार्गेणैव अपचक्रमुः अपगताः बभूवुः सार्द्धश्लोक एकान्वयी ॥ ५२ ॥

गो० टी०—लङ्केति । लङ्काविपर्ययं लङ्काविनाशम् दृष्ट्वा यानि लङ्कानिलयानि भूतानि तत्रत्यानि दैवतानि विमनस्कान्यासन्निति शेषः ॥ ५० ॥ ५१ ॥

५२ ] ति० टी०—रक्षसामेव मार्गेण तत्पात्रया सहैवापचक्रमुरपगताः ॥ ५२ ॥

गो० टी०—प्रयाता इति । रक्षसां मार्गेण तत्पात्रया सहैवापचक्रमुः ॥ ५२ ॥

५३–५४ ] ति० टी०—कालाज्ञप्ताः कालप्रेरिता भौमादय उत्पाताः ॥ ५३ ॥ ५४ ॥

रा० टी०—भौमा इति । कालेनाज्ञप्ताः प्रेरिताः भौमादय उत्पाताः राक्षसेन्द्राणामभावाय समुत्थिताः ॥ ५३ ॥

रा० टी०—उत्पाताकारमाह—अस्थीनीत्यादिभिः । मेघाः अस्थीनि उष्णं शोणितं च ववृषुः घननादेन समः स्वनो येषां ते अत एव अट्टहासान् विमुञ्चन्त इव समुद्राः वेलामुत्क्रान्ताः भूधराश्चेलुश्च सार्द्धश्लोक एकान्वयी ॥ ५४ ॥

गो० टी०—भौमाश्चेति । कालाज्ञप्ताः कालप्रेरिताः ॥ ५३–५७ ॥

५५ ] ति०टी०—घननादेन मेघस्वनेन समः स्वनो येषां ते विमुञ्चन्त इत्यस्य जाता इति शेषः। एवं वाश्यन्त्य इत्यस्यापि ५५

रा० टी०—वाश्यन्त्य इति । दारुणं वाश्यन्त्यश्शिवाः घोरदर्शना बभूवुरिति शेषः । भूतानि पृथिव्यादीनि सम्पतन्तीव दृश्यन्ते ॥ ५५ ॥

५६–५८ ] ति० टी०—गृध्रचक्रं गृध्रसमूहः ॥५६–५८॥

रा० टी०—गृध्रेति । महत् गृध्रचक्रं गृध्रसमूहः प्रज्वालोद्गारिभिर्मुखैरुपलक्षितं सत् रक्षोगणस्योपरिष्टात् कालवत्परिभ्रमति ॥ ५६ ॥

रा० टी०—कपोता इति । कपोतादयः विद्रुताः पलायिताः सन्तो ययुः काकादयः तत्रैव वाश्यन्ति ॥ ५७ ॥

रा० टी०—उत्पातानिति । बलगर्विताः मृत्युपाशेनावपाशिताः बद्धाः राक्षसाः उत्पातानानादृत्य यान्त्येव न निवर्तन्ते ५८

गो० टी०—उत्पातानिति । मृत्युपाशावपाशिताः संजातबन्धनाः ॥ ५८ ॥

५९ ] ति०–टी०—मृत्युपाशैरवपाशिताः संजातबन्धनाः ५९

रा० टी०—माल्यवानिति । राक्षसानां पुरस्सराः माल्यवत्प्रभृतयः पावका इव ज्वलिता बभूवुरिति शेषः ॥ ५९ ।

गो०टी०—माल्यवानिति । माल्यवन्तं पर्वतम् ५९–६७

६० ] ति०टी०—माल्यवन्तमचलं माल्यवदाख्यकुलपर्वतम् ।

रा० टी०—माल्यवन्तमिति । निशाचराः माल्यवन्तमचलमिव माल्यवन्तमाश्रयन्ति ॥ ६० ॥

६१–६४ ] ति० टी०—महाभ्रघननादितं महामेघसमूहवन्नादितं संजातनादम् ॥ ६१–६४ ॥

१ इदमर्धमधिकं गो. पु. । २ ज्वलनेति गो. पाठः । ३ राक्षसानामुपरि खे भ्रमतेऽकातचक्रवदिति गो. पाठः । ४ नै इति गो.रा. पाठः ।५ द्विपादय इति गो. पाठः । ६ बद्धा इति गो. पाठः । ७ आसन्पुरःसरास्तेषां क्रतूनामिति गो. पाठः । ८ चेति गो. पाठः । ९ ह्याश्रयन्तीति गो. पाठः ।

श्रोणिसूत्रं च खड्गं च विमलं कमलेक्षणः । शङ्खचक्रगदाशार्ङ्गखड्गांश्चैव वरायुधान् ॥ ६५ ॥
संपूर्णं गिरिसंकाशं वैनतेयमथास्थितः । राक्षसानामभावाय ययौ तूर्णतरं प्रभुः ॥ ६६ ॥
सुपर्णपृष्ठे स बभौ श्यामः पीताम्बरो हरिः । काञ्चनस्य गिरेः शृङ्गे सतडित्तोयदो यथा ॥ ६७ ॥
स सिद्धदेवर्षिमहोरगैश्च गन्धर्वयक्षैरुपगीयमानः ।
समाससादासुरसैन्यशत्रुश्चक्रासिशार्ङ्गायुधशङ्खपाणिः ॥ ॥ ६८ ॥
सुपर्णपक्षानिलनुन्नपक्षं भ्रमत्पताकं प्रविकीर्णशस्त्रम् ।
चचाल तद्राक्षसराजसैन्यं चलोपलं नीलमिवाचलाग्रम् ॥ ॥ ६९ ॥
ततः शितैः शोणितमांसरूषितैर्युगान्तवैश्वानरतुल्यविग्रहैः ।
निशाचराः संपरिवार्य माधवं वरायुधैर्निर्बिभिदुः सहस्रशः ॥ ॥ ७० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षष्ठः सर्गः ॥ ६ ॥

## सप्तमः सर्गः ।

स नारायणः शङ्खनादेनासुरांस्त्रासयन्भयानके समरे चक्रेण मालिनः शीर्षमपातयत् मालिनं हतं दृष्ट्वा शोकार्तौ भ्रातरौ भग्नं स्वबलं गृहीत्वा लङ्कां प्रविविशतुः ।

नारायणगिरिं ते तु गर्जन्तो राक्षसाम्बुदाः । अर्दयन्तोऽस्त्रवर्षेण वर्षेणेवाद्रिमम्बुदाः ॥ १ ॥
श्यामावदातस्तैर्विष्णुर्नीलैर्नक्तंचरोत्तमैः । वृतोऽञ्जनगिरीवायं वर्षमाणैः पयोधरैः ॥ २ ॥

६५–६८] ति० टी०–श्रोणिसूत्रं खड्गबन्धनभूतम्६६-६८

रा० टी०–तदिति । मालिवशे स्थितं महाभ्रघनवत् नादितं नादविशिष्टं राक्षसेन्द्राणां बलं जयेप्सया देवलोकं ययौ६१

रा० टी०–राक्षसानामिति । नारायणः राक्षसानां समुद्योगं देवदूतादुपश्रुत्य युद्धे मनश्चक्रे अत एव वैनतेयोपरि स्थितस्सन् आयुधतूणीरौ ससज्ज जग्राह सार्द्धश्लोक एकान्वयी॥६२॥

रा० टी०–आयुधतूणीर इति पाठे आयुधेन युक्तस्तूणीरो यस्येत्यर्थः ॥ ६३ ॥

रा० टी०–आसाद्येति । कवचमासाद्य शरसम्पूर्णे इषुधी श्रोणिसूत्रादींश्चाबध्य वैनतेयमास्थितस्सन् राक्षसानामभावाय तूर्णतरं ययौ अर्द्धपद्यमेकान्वयि ॥ ६४–६६ ॥

रा० टी०–सुपर्णेति । काञ्चनस्य गिरेश्शृंगे सतडित्तोयद इव पीताम्बरो हरिः सुपर्णस्य गरुडस्य पृष्ठे बभौ ॥६७॥

रा० टी०–स इति । देवर्षिप्रभृतिभिरुपगीयमानः अमरेभ्यो यानि सैन्यानि राक्षससेनाः तेषां शत्रुश्शातयिता विष्णुस्समाससाद जगाम ॥ ६८ ॥

६९ ] ति०टी०–सुपर्णपक्षानिलेन नुन्नपक्षं क्षोभितबलम् । चलोपलं चला उपला यस्य तत् ॥ ६९ ॥

रा० टी०–सुपर्णेति । सुपर्णपक्षानिलेन नुन्नाः प्रकम्पिताः पक्षाः मुख्यराक्षसा यस्मिन् भ्रमन्ती पताका यस्मिन् प्रविकीर्णानि शस्त्राणि यस्मिन् तत् राक्षसराजसैन्यं चलानि उपलानि यस्य तत् नीलमचलाग्रमिव चचाल ॥ ६९ ॥

गो० टी०–सुपर्णेति । नुन्नपक्षं क्षोभितबलम् । चलोपलमिति बहुव्रीहिः ॥ ६८ ॥

७० ] ति० टी०–विग्रह आकारः ॥ ७० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणतिलके उत्तरकाण्डे षष्ठः सर्गः ॥ ६ ॥

रा० टी०–तत इति । निशाचराः शितैर्वरायुधैर्माधवं संपरिवार्य निर्बिभिदुः ॥ ७० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षष्ठः सर्गः ॥ ६ ॥

गो० टी०–तत इति । विग्रहः आकारः ॥ ६९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षष्ठः सर्गः ॥ ६ ॥

१ ] ति० टी०–अथ राक्षसोपरुद्धेन हरिणा तद्विद्रावणम् नारायणगिरिमिति । रूपकमिदम् ॥ १ ॥

रा० टी०–युद्धमेव वर्णयति—नारायणेत्यादिभिः । नारायणगिरिं तद्रूपपर्वतमस्त्रवर्षणार्दयन्तः राक्षसाम्बुदाः वर्षेणाद्रिमर्दयन्तोऽम्बुदा इव गर्जन्तो बभूवुरिति शेषः ॥ १ ॥

२] ति० टी०–श्यामः सन्नवदातो निर्मलः । अञ्जनगिरीवेति विभक्तिलोप आर्षः, ततः संधिः ॥ २ ॥

१ आख्यप्रवरेति गो. पाठः । २ सुवर्णेति रा. सुपर्णमिति च गो. पाठः । ३ अमरेति रा. पा. ४ शत्रूनिति गो. पाठः ५ नील इवाचलेन्द्र इति गो. पाठः । ६ शरैरिति गो. पाठः । ७ ववर्षुः शरेति गो. पाठः । ८ आसीदिति गो. पाठः ।

शलभा इव केदारं मशका इव पावकम्[1] । यथामृतघटं दंशा मकरा इव चार्णवम् ॥ ३ ॥
तथा रक्षोधनुर्मुक्ता वज्रानिलमनोजवाः । हरिं विशन्ति स्म शरा लोका इव विपर्यये ॥ ४ ॥
स्यन्दनैः स्यन्दनगता गजैश्च गजमूर्धगाः[2] । अश्वारोहास्तथाश्वैश्च पादाताश्चाम्बरे स्थिताः ॥ ५ ॥
राक्षसेन्द्रा गिरिनिभाः शरैः शक्त्यृष्टितोमरैः । निरुच्छ्वासं हरिं चक्रुः प्राणायामा इव द्विजम् ॥ ६ ॥
निशाचरैस्ताड्यमानो मीनैरिव महोदधिः । शार्ङ्गमायम्य दुर्धर्षो राक्षसेभ्योऽसृजच्छरान् ॥ ७ ॥
शरैः पूर्णायतोत्सृष्टैर्वज्रकल्पैर्[3]मनोजवैः । चिच्छेद विष्णुर्निशितैः शतशोऽथ सहस्रशः ॥ ८ ॥
विद्राव्य शरवर्षेण वर्षं[4] वायुरिवोत्थितम् । पाञ्चजन्यं महाशङ्खं प्रदध्मौ पुरुषोत्तमः ॥ ९ ॥
सोऽम्बुजो हरिणाध्मातः सर्वप्राणेन शङ्खराट् । ररास भीमनिर्ह्रादस्त्रैलोक्यं व्यथयन्निव ॥ १० ॥
शङ्खराजरवः सोऽथ त्रासयामास राक्षसान् । मृगराज इवारण्ये समदानिव कुञ्जरान् ॥ ११ ॥
न शेकुरश्वाः संस्थातुं विमदाः कुञ्जराभवन् । स्यन्दनेभ्यश्च्युता वीराः शङ्खरावितदुर्बलाः ॥ १२ ॥
शार्ङ्गचापविनिर्मुक्ता वज्रतुल्याननाः शराः । विदार्य तानि रक्षांसि सुपुङ्खा विविशुः क्षितिम् ॥ १३ ॥
भिद्यमानाः शरैः संख्ये नारायणकरच्युतैः । निपेतू राक्षसा भूमौ शैला वज्रहता इव ॥ १४ ॥

---

**रा० टी०–श्यामेति** । वर्षमाणैः पयोधरैर्वृतोऽञ्जनगिरिरिव श्याम एव अवदातो निर्मलो विष्णुर्नीलैर्नक्तंचरोत्तमैः वृतोऽभवदिति शेषः । अञ्जनगिरीत्यत्र सुपां सुलुगिति सोर्लुक् ॥ २ ॥

**गो० टी०–श्यामेति** । श्यामः सन्नवदातः शुभ्रः श्यामावदातः निर्मल इत्यर्थः । अञ्जनगिरीवेति विभक्तिलोपः छान्दसः ॥ २ ॥

**३ ] ति० टी०**–अमृतघटं क्षौद्रघटं । दंशाः । वनमक्षिका इत्यर्थः ॥ ३ ॥

**४ ] ति० टी०**–वज्रानिलमनोजवाः वज्रसारा अनिलमनोवज्जवो वेगो येषां ते । विपर्यये प्रलयकाले लोका यथा हरिं विशन्ति तद्वत् ॥ ४ ॥

**रा० टी०–शलभा इति** । शलभाः केदारं शाल्यादिक्षेत्रमिव मशकाः पावकमिव अमृतेन मधुना युक्तं घटं दंशा वनमक्षिका इव मकराः अर्णवमिव विपर्यये प्रलयसमये लोका इव रक्षोधनुर्मुक्ताः शराः हरिं विशन्तिस्म श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

**गो० टी०–शलभा इति** । अमृतघटं मधुघटम् । दंशाः वनमक्षिकाः । तथेति । वज्राः वज्रधारा इव स्थिताः अनिलमनोजवाश्च । विपर्यये संहारकाले हरिं लोकाः प्रजा इव ॥ ३ ॥ ४ ॥

**५ ] ति० टी०**–स्यन्दनादिभिः सहाम्बरे स्थितास्तद्गताः ५

**रा० टी०–स्यन्दनैरिति** । स्यन्दनगताः स्यन्दनारोहाः स्यन्दनैस्सह गजमूर्द्धगाः गजश्रेष्ठारूढाः गजैस्सह अश्वारोहाः अश्वैस्सह पदाताश्च अम्बरे स्थिताः ॥ ५ ॥

**गो० टी०–स्यन्दनैरिति** ॥ ५ ॥

**६–७ ] ति० टी०**–हरिं निरुच्छ्वासं चक्रुः ॥ ६ ॥ ७ ॥

**रा० टी०–राक्षसेन्द्र इति** । राक्षसेन्द्राः शरादिभिः शक्त्यादिभिः हरिं निरुच्छ्वासं चक्रुः तत्र दृष्टान्तः प्राणायामाः प्राणायामसमयः द्विजमिव ॥ ६ ॥

**रा० टी०–निशाचरैरिति** । निशाचरैस्ताड्यमानो दुर्धर्षो हरिः शार्ङ्गं धनुरायम्य राक्षसेभ्यश्शरान् असृजत् ॥ ७ ॥

**गो० टी०–राक्षसेन्द्रा इति** । हरिं निरुच्छ्वासं चक्रुः उच्छ्वासानवसरवन्तं कृतवन्तः ॥ ६ ॥ ७ ॥

**८–९ ] ति० टी०**–पूर्णायतोत्सृष्टैः पूर्णाकृष्टतयोत्सृष्टैः वज्रकल्पैर्वज्रवदकुण्ठैः ॥ ८ ॥ ९ ॥

**रा० टी०–शरैरिति** । विष्णुः पूर्णायतेन अत्यन्तमाकृष्टतया उत्सृष्टैस्त्यक्तैः शरैः शतशः सहस्रशो राक्षसान् चिच्छेद ॥ ८ ॥

**रा० टी०–विद्राव्येति** । वर्षं वायुरिव शरवर्षेण विद्राव्य पाञ्चजन्यशंखं प्रदध्मौ ॥ ९ ॥

**गो० टी०–शरैरिति** । पूर्णायततया उत्सृष्टैः वज्रवक्त्रैः वज्रमिवाकुण्ठं वक्त्रं येषां तैः ॥ ८ ॥ ९ ॥

**१०–११ ] ति० टी०**–अम्बुजः शङ्खः । सर्वप्राणेन सर्वबलेन । शङ्खराडिति विशेषणम् ध्मातो वादितः ॥ १० ॥ ११ ॥

**रा० टी०–स इति** । सर्वप्राणेन अतिप्रयत्नेन हरिणा ध्मातः शंखराट् अम्बुजः शंखः त्रैलोक्यं व्यथयन्निव ररास १०

**रा० टी०–शंखेति** । मृगराजः कुञ्जरानिव शंखराजरवः राक्षसान् त्रासयामास ॥ ११ ॥

**गो० टी०–स इति** । अम्बुजः शङ्खः । सर्वप्राणेन सर्वबलेन । ध्मातः आध्मानितः ॥ १० ॥ ११ ॥

**१२–१४ ] ति० टी०**–भवन्नभवन् शङ्खरावितेन शङ्खशब्देन दुर्बलाः क्षीणबलाः । स्वार्थे णिः ॥ १२ ॥ १४ ॥

**रा० टी०–नेति** । शंखरावितेन शंखस्वनेन दुर्बलाः अश्वाः रथतुरगाः संस्थातुं न शेकुः कुञ्जरा रथगजाः विमदाभवन् अभवन् अत एव वीराः स्यन्दनेभ्यः च्युताः ॥ १२ ॥

---

१ पर्वतमिति गो. पाठः । २ पृष्ठेति गो. पाठः । ३ वक्त्रैरिति गो. पाठः । ४ वर्षेति गो. पाठः ।

व्रणानि परगात्रेभ्यो विष्णुचक्रकृतानि हि[1] । असृक्क्षरन्ति धाराभिः स्वर्णधारा इवाचलाः ॥ १५ ॥
शङ्खराजरवश्चापि शार्ङ्गचापरवस्तथा । राक्षसानां रवांश्चापि ग्रसते वैष्णवो रवः ॥ १६ ॥
तेषां शिरोधरान्धूताञ्छरध्वजधनूंषि च । रथान्पताकास्तूणीरांश्चिच्छेद स हरिः शरैः ॥ १७ ॥
सूर्यादिव करा घोरा वार्योघा[2] इव सागरात् । पर्वतादिव नागेन्द्रा धारौघा इव चाम्बुदात् ॥ १८ ॥
तथा शार्ङ्गविनिर्मुक्ताः शरा नारायणेरितात्[3] । निर्धावन्तीषवस्तूर्णं शतशोऽथ सहस्रशः ॥ १९ ॥
शरभेण यथा सिंहाः सिंहेन द्विरदा यथा । द्विरदेन यथा व्याघ्रा व्याघ्रेण द्वीपिनो यथा ॥ २० ॥
द्वीपिनेव यथा श्वानः शुना मार्जारको यथा । मार्जारेण यथा सर्पाः सर्पेण च यथाखवः ॥ २१ ॥
तथा ते राक्षसाः सर्वे विष्णुना प्रभविष्णुना । द्रवन्ति द्राविताश्चान्ये शायिताश्च महीतले ॥ २२ ॥
राक्षसानां सहस्राणि निहत्य मधुसूदनः । वारिजं पूरयामास तोयदं सुरराडिव ॥ २३ ॥
नारायणशरत्रस्तं शङ्खनादसुविह्वलम् । ययौ लङ्कामभिमुखं प्रभग्नं राक्षसं बलम् ॥ २४ ॥
प्रभग्ने राक्षसबले नारायणशराहते । सुमाली शरवर्षेण निववार रणे हरिम् ॥ २५ ॥
स तु तं छादयामास नीहार इव भास्करम् । राक्षसाः सत्त्वसंपन्नाः पुनर्धैर्यं समादधुः ॥ २६ ॥
अथ सोऽभ्यपतद्रोषाद्राक्षसो बलदर्पितः । महानादं प्रकुर्वाणो राक्षसाञ्जीवयन्निव ॥ २७ ॥

---

रा० टी०—शार्ङ्गेति । वज्रतुल्याननाः शराः रक्षांसि विदार्य क्षितिं विविशुः ॥ १३ ॥

रा० टी०—भिद्यमाना इति । शरैर्भिद्यमानाः राक्षसाः वज्रहताः शैला इव भूमौ निपेतुः ॥ १४ ॥

गो० टी०—न शेकुरिति । कुञ्जराभवन्नित्यार्षः संधिः । भवन्निति वा छेदः शङ्खरावितेन शङ्खध्वनिना स्वार्थे णिः॥१२॥१८

१५ ] ति० टी०—स्वर्णधाराः गैरिकधराः । 'गैरिकेऽपि सुवर्णं स्यात्' ॥ १९ ॥

रा० टी०—व्रणानीति । विष्णुचक्रकृतानि व्रणानि परगात्रेभ्यः स्वाधोवयवेभ्यः धाराभिः असृक् रुधिरं क्षरन्ति तत्र दृष्टान्तः स्वर्णधाराः गैरिकप्रवाहान् अचला इव गैरिकेपि सुवर्णं स्यादितिं भट्टाः वस्तुतस्तु शोभनानि गैरिकसंसर्गेण शोभाविशिष्टानि ऋणानि जलानि यासु ता एव धाराः इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—रवांश्चापि । अपिना प्राणांश्च वैष्णवो विष्णूत्पादितः ॥ १६ ॥

रा० टी०—शंखराजेति । वैष्णवः विष्णुनोत्पादितः अरवः अरं प्रकाशं वाति प्राप्नोति सः शंखराजरवः शार्ङ्गचापरवश्च राक्षसानां रवान् ग्रसते किञ्च वैष्णवः विष्णुमुखोच्चारितो रवश्चेत्यर्थः ॥ १६ ॥

१७-१८ ] ति० टी०—शिरोधरान्कण्ठान्॥ १७ ॥ १८॥

१९-२० ] ति० टी०—विनिर्मुक्ता विनिर्मोक्तुं प्रक्रान्ताः शरा आसन्निति पृथग्योज्यम् । अथ नारायणेरितान्नारायणव्यापारत इषवो निर्धावन्ति । सहस्रशः शतशः ॥ १९ ॥ २०॥

रा० टी०—तेषामिति । हरिः तेषां रक्षसां धूतान् प्रकम्पितान् शिरोधरान् कण्ठान् शरादींश्च चिच्छेद ॥ १७ ॥

रा० टी०—सूर्येति । सूर्यात् कराः किरणा इव सागरात् वार्योघाः वारिसमूहा इव पर्वतात् नागेन्द्रा महासर्पा इव अम्बुदात् मेघात् धारौघा इव नारायणेरिताः नारायणव्यापारात् शार्ङ्गविनिर्मुक्ताः शरा विघातकाः इषवः तूर्णं निर्धावन्ति श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

रा० टी०—शरभेणेति । सिंहेन द्विरदो हस्ती यथा व्याघ्रेण द्वीपिनः क्षुद्रव्याघ्रा यथा द्वीपिना श्वानो यथा सर्पेण आखवो मूषका यथा तथा सर्वे राक्षसाः विष्णुना द्राविताः सन्तो द्रवन्ति अन्ये च महीतले शायिता निहता इत्यर्थः । श्लोकत्रयमेकान्वयि ॥ २०—२२ ॥

गो० टी०—तथेति । शार्ङ्गविनिर्मुक्ताः इत्येतद्विष्णोरिति—निर्धावन्तीति । द्वीपिनः क्षुद्रव्याघ्राः ॥ १९ ॥ २० ॥

२१ ] ति० टी०—द्वीपी क्षुद्रव्याघ्रः आखवो मूषिकाः २१

२२-२३ ] ति० टी०—महीतले शायिताः । अनुद्रुत्येति शेषः ॥ २२ ॥ २३ ॥

गो० टी०—द्वीपिनेति । आखवो मूषिकाः ॥ २१ ॥२२॥

रा० टी०—राक्षसानामिति । मधुसूदनः राक्षसानां सहस्राणि निहत्य वारिजं समुद्रं पूरयामास तत्र दृष्टान्तः तोयदं मेघं सुरराट् इव वारिजशब्दार्थस्तु वारि जनयति मेघद्वारा प्रकटयतीति ॥ २३ ॥

गो० टी०—राक्षसानामिति । सुरराडिवेति इन्द्रस्य मेघनियन्तृत्वात्तथोक्तम् ॥ २३ ॥

२४ ] ति० टी०—राक्षसं रक्षःसंबन्धि ॥ २४ ॥

रा० टी०—नारायणेति । नारायणशरेण त्रस्तं शंखनादेन सुविह्वलं राक्षसं बलं लंकामभिमुखं सत् ययौ ॥ २४ ॥

गो० टी०—नारायणेति । राक्षसं रक्षःसंबन्धि ॥२४—२८॥

२५, २७ ] ति० टी०—निववार वारयामास ॥२५—२७॥

---

१ वै इति गो. पाठः । २ ऊर्मयः सागरादिवेति गो. पाठः । ३ ईरिता इति गो. पाठः ।

उत्क्षिप्य लम्बाभरणं धुन्वन्करमिव द्विपः । ररास राक्षसो हर्षात्सतडित्तोयदो यथा ॥ २८ ॥
सुमालेर्नर्दतस्तस्य शिरो ज्वलितकुण्डलम् । चिच्छेद यन्तुरश्वाश्च भ्रान्तास्तस्य तु रक्षसः ॥ २९ ॥
तैरश्वैर्भ्राम्यते भ्रान्तैः सुमाली राक्षसेश्वरः । इन्द्रियाश्वैः परिभ्रान्तैर्धृतिहीनो यथा नरः ॥ ३० ॥
ततो विष्णुं महाबाहुं प्रपतन्तं रणाजिरे । हृते सुमालेरश्वैश्च रथे विष्णुरथं प्रति ॥
माली चाभ्यद्रवद्युक्तः प्रगृह्य [1]सशरासनम् ॥ ॥ ३१ ॥
मालेर्धनुश्च्युता बाणाः कार्तस्वरविभूषिताः । विविशुर्हरिमासाद्य क्रौञ्चं पत्ररथा इव ॥ ३२ ॥
अर्द्यमानः शरैः सोऽथ मालिमुक्तैः सहस्रशः । चुक्षुभे न रणे विष्णुर्जितेन्द्रिय इवाधिभिः ॥ ३३ ॥
अथ मौर्वीस्वनं कृत्वा भगवान्भूतभावनः । मालिनं प्रति बाणौघान्ससर्जासिगदाधरः[2] ॥ ३४ ॥
ते मालिदेहमासाद्य वज्रविद्युत्प्रभाः शराः । पिबन्ति रुधिरं तस्य नागा इव सुधारसम् ॥ ३५ ॥
मालिनं विमुखं कृत्वा शङ्खचक्रगदाधरः । मालिमौलिं ध्वजं चापं वाजिनश्चाप्यपातयत् ॥ ३६ ॥
विरथस्तु गदां गृह्य माली नक्तंचरोत्तमः । आपुप्लुवे गदापाणिर्गिर्यग्रादिव केसरी ॥ ३७ ॥
गदया गरुडेशानमीशानमिव चान्तकः । ललाटदेशेऽभ्यहनद्वज्रेणेन्द्रो यथाचलम् ॥ ३८ ॥
गदयाभिहतस्तेन मालिना गरुडो भृशम् । रणात्पराङ्मुखं देवं कृतवान्वेदनातुरः ॥ ३९ ॥

---

रा० टी०–प्रभग्न इति । राक्षसबले नारायणशराहते अत एव प्रभग्ने सति सुमाली शरवर्षेण हरिं निववार ॥ २५ ॥

रा० टी०–स इति । तु यदा नीहारं भास्करमिव स सुमाली तं विष्णुं छादयामास तदा सत्वसम्पन्ना बलवन्तो राक्षसाः धैर्यं पुनस्समादधुः ॥ २६ ॥

रा० टी०–अथेति । अथानन्तरं स सुमाली राक्षसान् जीवयन्निव अभ्यपतत् हरिसम्मुखं प्राप ॥ २७ ॥

२८ ] लम्बाभरणं लम्बमानमाभरणमुत्क्षिप्य विमुच्य । द्विपः करमिव शुण्डादण्डमिव ॥ २८ ॥

रा० टी०–उत्क्षिप्येति । लम्बाभरणं लम्बायमानमाभरणं यस्मिन् तं करमुत्क्षिप्य द्विपः करमिव धुन्वन्सन् राक्षसो ररास तत्र दृष्टान्तः सतडित्तोयदो यथा ॥ २८ ॥

२९ ] ति० टी०–यन्तुः शिरश्चिच्छेद । ततस्तस्याश्वा नष्टसारथित्वादनवस्थितगतिकाः । आसन्नित्यर्थः ॥ २९ ॥

रा० टी०–सुमालेरिति । सुमालेर्यन्तुस्सारथेश्च शिरः चिच्छेद अतः तस्य रक्षसोऽश्वाः भ्रान्ताः अनवस्थितगतयो बभूवुरिति शेषः ॥ २९ ॥

गो० टी०–सुमालेरिति । यन्तुः सारथेः । भ्रान्ताः नष्टसारथिकत्वादनवस्थितगतिका इत्यर्थः ॥ २९ ॥

३० ] ति० टी०–भ्राम्यते भ्राम्यते स्म ॥ ३० ॥

रा० टी०–तैरिति । सुमाली भ्रान्तैरश्वैर्भ्राम्यते बभ्राम तत्र दृष्टान्तः परिभ्रान्तैः इन्द्रियाश्वैर्धृतिहीना नर इव ॥ ३० ॥

गो० टी०–तैरिति । इन्द्रियार्थैरश्वैः धृतिहीनो नरः यथा तथा सुमाली बभ्रामेत्यर्थः ॥ ३०—३३ ॥

३१ ] ति० टी०–सुमाले रथेऽश्वैर्हृते इतस्ततोऽपकृष्यमाणे सति रथादवप्लुत्य विष्णुरथं प्रति धनुः प्रगृह्य युक्तोऽभ्यद्रवत् ३१

रा० टी०–तत इति । सुमालेः रथे विष्णुरथं प्रतिहृते प्रापिते सति माली विष्णुमभ्यद्रवत् सार्द्धश्लोक एकान्वयी ३१

३२–३४ ] ति० टी०–क्रौञ्चं क्रौञ्चाद्रिम् । पत्ररथाः पक्षिणः ॥ ३२ ॥ ३४ ॥

रा० टी०–मालेरिति । मालेर्धनुश्च्युताः बाणाः क्रौञ्चं तदभिधगिरिं पत्ररथाः पक्षिण इव हरिमासाद्य विविशुः ॥ ३२ ॥

रा० टी०–अर्द्यमान इति । मालिमुक्तैश्शरैरर्द्यमानः प्राप्यमानोऽपि विष्णुः आधिभिः जितेन्द्रिय इव न चुक्षुभे ॥ ३३ ॥

रा० टी०–अथेति । असिगदाधरो विष्णुः मालिनं प्रति बाणौघान् ससर्ज ॥ ३४ ॥

गो० टी०–अथेति । मौर्वीस्वनं श्रुत्वेत्यनेन मालिशरस्याच्छिन्नगतिर्गम्यते ॥ ३४ ॥

३५ ] ति० टी०–नागाः सर्पाः ॥ ३५ ॥

रा० टी०–ते इति । ते शराः मालिदेहमासाद्य तस्य मालिदेहस्य रुधिरं नागास्सुधारसमिव पिबन्ति ॥ ३५ ॥

गो० टी०–त इति । नागाः सर्पाः । सुधारसम् अमृतम् गरुडानीतम् ॥ ३५ ॥

३६–३७] ति० टी०–मालिमौलिं मालिमुकुटम् ३६॥३७

रा० टी०–मालिनमिति । शंखादिधरो विष्णुर्मालिनं शरैर्विमुखं विकृताननं कृत्वा मालिमौलिप्रभृतीन् अपातयत् ३६

रा० टी०–विरथ इति । विरथो माली गिर्यग्रात् केसरी सिंह इव आपुप्लुवे ॥ ३७ ॥

गो० टी०–मालिनमिति । मालिमौलिं मालिमुकुटम् ॥ ३६ ॥ ३७ ॥

३८–३९ ] ति० टी०–गरुडानां पक्षिणामीशानं गरुडम् ।

---

१ सशरं धनुरिति गो. पाठः । २ अरिनिषूदन इति गो. पाठः ।

पराङ्मुखे कृते देवे मालिना गरुडेन वै । उदतिष्ठन्महाञ्शब्दो रक्षसामभिनर्दताम् ॥ ४० ॥
रक्षसां रुवतां रावं श्रुत्वा हरिहयानुजः । तिर्यगास्थाय संक्रुद्धः पक्षीशे भगवान्हरिः ॥ ४१ ॥
पराङ्मुखोऽप्युत्ससर्ज मालेश्चक्रं जिघांसया । तत्सूर्यमण्डलाभासं स्वभासा भासयन्नभः ॥ ४२ ॥
कालचक्रनिभं चक्रं मालेः शीर्षमपातयत् । तच्छिरो राक्षसेन्द्रस्य चक्रोत्कृत्तं विभीषणम् ॥
पपात रुधिरोद्गारि पुरा राहुशिरो यथा । ॥ ४३ ॥
ततः सुरैः संप्रहृष्टैः सर्वप्राणसमीरितः । सिंहनादरवो मुक्तः साधु देवेतिवादिभिः ॥ ४४ ॥
मालिनं निहतं दृष्ट्वा सुमाली माल्यवानपि । सबलौ शोकसंतप्तौ लङ्कामेव प्रधावितौ ॥ ४५ ॥
गरुडस्तु समाश्वस्तः संनिवृत्य यथा पुरा । राक्षसान्द्रावयामास पक्षवातेन कोपितः ॥ ४६ ॥
चक्रकृत्तास्यकमला गदासंचूर्णितोरसः । लाङ्गलग्लपितग्रीवा मुसलैर्भिन्नमस्तकाः ॥ ४७ ॥
केचिच्चैवासिना छिन्नास्तथान्ये शरताडिताः । निपेतुरम्बरात्तूर्णं राक्षसाः सागराम्भसि ॥ ४८ ॥

नारायणोऽपीषुवराशनीभिर्विदारयामास धनुर्विमुक्तैः ।
नक्तंचरान्धूतविमुक्तकेशान्यथाशनीभिः सतडिन्महाभ्रः ॥ ॥ ४९ ॥
भिन्नातपत्रं पतमानशस्त्रं शरैरपध्वस्तविनीतवेषम् ।
विनिःसृतान्त्रं भयलोलनेत्रं बलं तदुन्मत्ततरं बभूव ॥ ॥ ५० ॥

---

ईशानमन्तक इव । श्वेतारण्ये मार्कण्डेयरक्षणार्थं कस्यचिद्राज्ञो रक्षणार्थं चेशानान्तकयोर्युद्धमभूत् तदान्तकेन रुद्रोपर्यायुधप्रक्षेपः कृत इति पुराणप्रसिद्धेयं कथा ॥ ३८ ॥ ३९ ॥

रा० टी०–गदयेति । ईशानं शिवमंतक इव गरुडानां पक्षिविशेषाणामीशानं ललाटदेशेऽभ्यहनत् ॥ ३८ ॥

रा० टी०–गदयेति । मालिना गदयाभिहतो गरुडः वेदनातुरस्सन् देवं विष्णुं गणात् पराङ्मुखं कृतवान् विष्णुं गृहीत्वैव बहिर्गत इत्यर्थः ॥ ३९ ॥

गो० टी०–गदयेति । गरुडाः पक्षिणः तदीशानं वैनतेयम् ॥ ३८—४० ॥

४० ] ति० टी०–मालिना गरुडेन मालिताडनपराङ्मुखगरुडेन देवे पराङ्मुखः कृत इत्यन्वयः ॥ ४० ॥

रा० टी०–पराङ्मुख इति । मालिना गरुडेन सह देवे विष्णौ पराङ्मुखे कृते सति अभिनर्दतां रक्षसां महान् शब्दः उदतिष्ठत् ॥ ४० ॥

४१ ] ति० टी०–हरिहयानुज इन्द्रानुजः । तिर्यगिति विमुखे पक्षीशे तिर्यग्वलितग्रीवमास्थाय स्थित्वा ॥ ४१ ॥

रा० टी०–रक्षसामिति । हरिहयस्य इन्द्रस्य अनुगो विष्णुः रक्षसां एवं श्रुत्वा संक्रुद्धः सन् पक्षीशे तिर्यगास्थाय मालेर्जिघांसया चक्रं ससर्ज सार्धश्लोक एकान्वयी ॥ ४१ ॥

गो० टी०–रक्षसामिति । हरिहयानुजः इन्द्रानुजः ४१-४४

४२-४३ ] ति० टी०–मालेर्जिघांसया चक्रमुत्ससर्ज । कालचक्रनिभं दिनमासादिरूपेण परिवर्तमानकालचक्रसदृशम् । तेनाप्रतिघात्यत्वमुक्तम् ॥ ४२ ॥ ४३ ॥

रा० टी०–तदिति । स्वभासा नभो भासयत् तच्चक्रं मालेश्शीर्षमपातयत् ॥ ४२ ॥

रा० टी०–तदिति । विभीषणं भयंकरं राक्षसेन्द्रस्य शिरः राहुशिर इव पपात ॥ ४३ ॥

४४-४६ ] ति० टी०–सर्वप्राणसमीरितः सर्वबलेन प्रवर्तितः ॥ ४४—४६ ॥

रा० टी०–तत इति । साधु देवेति वादिभिस्सुरैस्सर्वप्राणसमीरितः अतिप्रयत्नेन युक्तः सिंहनादरवः मुक्तः कृतः ४४

रा० टी०–मालिनमिति । सुमाली माल्यवानपि लंकामेव प्रधावितौ बभूवतुरिति शेषः ॥ ४५ ॥

रा० टी०–गरुड इति । समाश्वस्तो गरुडस्संनिवृत्य रणभूमिमागम्येत्यर्थः । पक्षवातेन राक्षसान् द्रावयमास ॥४६॥

गो० टी०–तत इति । सर्वप्राणसमीरितः सर्वबलेन प्रवर्तितः ॥ ४५—४९ ॥

४७-४८ ] ति० टी०–लाङ्गलेन हलेन ग्लपिता हता ग्रीवा येषां ते ॥ ४७ ॥ ४८ ॥

रा० टी०–इदानीं विष्णुकर्तृकराक्षसविघातमाह—चक्रेत्यादिभिः । चक्रेण कृत्तानि छिन्नानि आस्यकमलानि येषां लाङ्गलेन हलेन ग्लपिता अपहता ग्रीवा येषां ते केचित् असिना छिन्नाः अन्ये शरताडिताः राक्षसाः सागराम्भसि निपेतुः श्लोकद्वयमेकान्वयि ॥ ४७ ॥ ४८ ॥

४९ ] ति० टी०–अशनीभिरिति दीर्घ आर्षः । मुक्तविधूतकेशान्मुक्तकेशान्विधूतकेशांश्च ॥ ४९ ॥

रा० टी०–नारायण इति । धनुर्मुक्तैः इषुवराशनीभिः । अशनिसदृशेषुवरैः नक्तंचरान् अवशिष्टराक्षसान् नारायणो विदारयामास तत्र दृष्टान्तः अशनीभिः अशनिभिः सतडिन्महाभ्रः तदभिमानिदेव इव शरीरस्य महाभ्रोपमा पीताम्बरस्य तडिदुपमा ॥ ४९ ॥

गो० टी०–नारायण इति । अशनीभिरित्यार्षो दीर्घः ५०

५० ] ति० टी०–शरैरपध्वस्तो दूरीकृतो विनीतवेषः

सिंहार्दितानामिव कुञ्जराणां निशाचराणां सह कुञ्जराणाम् ।
रवाश्च वेगाश्च समं बभूवुः पुराणसिंहेन विमर्दितानाम् ॥ ॥ ५१ ॥
ते वार्यमाणा हरिबाणजालैः स्वबाणजालानि समुत्सृजन्तः ।
धावन्ति नक्तंचरकालमेघा वायुप्रणुन्ना इव कालमेघाः ॥ ॥ ५२ ॥
चक्रप्रहारैर्विनिकृत्तशीर्षाः संचूर्णिताङ्गाश्च गदाप्रहारैः ।
असिप्रहारैर्द्विविधा विभिन्नाः पतन्ति शैला इव राक्षसेन्द्राः ॥ ॥ ५३ ॥
विलम्बमानैर्मणिहारकुण्डलैर्निशाचरैर्नीलबलाहकोपमैः ।
निपात्यमानैर्ददृशे निरन्तरं निपात्यमानैरिव नीलपर्वतैः ॥ ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

## अष्टमः सर्गः ।

ततो माल्यवान्सुमाली च चिरं घोरं युद्धापि विष्णुना पराभूतौ हतावशिष्टबलपरिवृतौ लङ्कां विहाय रसातलं प्रविष्टौ धनदस्तु लङ्कायां मुदित उवास ।

हन्यमाने बले तस्मिन्पद्मनाभेन पृष्ठतः । माल्यवान्संनिवृत्तोऽथ वेलामेत्य इवार्णवः ॥ १ ॥
संरक्तनयनः क्रोधाच्चलन्मौलिर्निशाचरः । पद्मनाभमिदं प्राह वचनं पुरुषोत्तमम् ॥ २ ॥

---

सौम्यवेषो यस्य तत् । उन्मत्ततरमतिशयेन विस्मृतस्वपरविवेकम् ॥ ५० ॥

रा० टी०–भिन्नेति । शरैर्भिन्नानि छिन्नानि आतपत्राणि यस्मिन् पतमानानि शस्त्राणि यस्मिन् अपध्वस्ताः विनीतवेषा यस्य विनिस्सृतानि अंत्राणि यस्मात् तद्बलमुन्मत्ततरं विस्मृतविवेकं बभूव ॥ ५० ॥

गो० टी०–भिन्नातपत्रमिति । उन्मत्ततरम् अतिशयेन विस्मृतस्वपरविवेकम् ॥ ५१ ॥

५१ ] ति० टी०–पुराणसिंहेन नृसिंहेन ॥ ५१ ॥

रा० टी०–सिंहार्दितानामिति । सिंहार्दितानां कुञ्जराणां रवा वेगा इव पुराणसिंहेन विष्णुना विमर्दितानां सह कुञ्जराणां निशाचराणां रवाः हाहेति स्वनाः वेगाः पतनादिषु व्यापारविशेषाः समं बभूवुः ॥ ५१ ॥

गो० टी०–सिंहार्दितानामिति । पुराणसिंहेन नरसिंहेन ॥ ५२ ॥

५२ ] ति० टी०–समुत्सृजन्तस्त्यक्तवन्तः ॥ ५२ ॥

रा० टी०–ते इति । हरिबाणजालैः वार्यमाणाः आव्रियमाणाः स्वबाणजालानि समुत्सृजन्तः नक्तंचरकालमेघा धावन्ति ५२

गो० टी०–त इति । समुत्सृजन्तस्त्यक्तवन्तः ॥ ५३ ॥

५३ ] ति० टी०–द्विविधाविभिन्नाः द्विविधया प्रकारद्वयेन विभिन्ना खण्डिताः ॥ ५३ ॥

रा० टी०–चक्रेति । राक्षसेन्द्राः शैला इव पतन्ति ॥ ५३ ॥

गो० टी०–चक्रप्रहारैरिति । द्विविधया द्विप्रकारेण विभिन्नाः । खण्डिता इत्यर्थः ॥ ५४ ॥ ५६ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तमः सर्गः ॥ ७ ॥

५४ ] ति० टी०–भूमण्डलमिति शेषः । तन्निरन्तरं व्याप्तं ददृशे ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे सप्तमः सर्गः ॥ ७ ॥

रा० टी०–विलम्बमानैरिति । विलम्बमानैर्हस्तादीनां छिन्नत्वेन अवलंबरहितैः अत एव निपात्यमानैः मणिहारकुण्डलैः नीलबलाहकोपमैः नीलपर्वतैरिव नीलपर्वतसदृशैः निशाचरैश्च निरन्तरमन्तररहितं ददृशे भुवस्तलमिति शेषः ॥ ५४॥

इति श्रीरामाभिरामे श्रीरामीये रामायणशिरोमणौ वाल्मीकीय आदिकाव्ये उत्तरकाण्डे सप्तमः सर्गः ॥ ७ ॥

---

१ ] ति० टी०–अथ सुमालिमाल्यवतोः पराजितयोर्लङ्कां विहाय पातालप्रवेशः—हन्यमाने इति । पृष्ठत इति । अनुद्रुत्येति शेषः । एत्य इवेत्यसंधिरार्षः अर्णवो वेलामेत्य यथा निवर्तते तथा निवृत्त इत्यर्थः ॥ १ ॥

रा० टी०–माल्यवतो युद्धं वर्णयन्नाह—हन्यमान इत्यादिभिः । बले पद्मनाभेन हन्यमाने सति माल्यवान् वेलाме-

---

१ भिन्ना इति गो० पाठः ।

नारायण न जानीषे क्षात्रधर्मं पुरातनम् । अयुद्धमनसो भीतानस्मान्हंसि यथेतरः ॥ ३ ॥
पराङ्मुखवधं पापं यः करोति सुरेश्वर । स हन्ता न गतः स्वर्गं लभते पुण्यकर्मणाम् ॥ ४ ॥
युद्धश्रद्धाथवा तेऽस्ति शङ्खचक्रगदाधर । अहं स्थितोऽस्मि पश्यामि बलं दर्शय यत्तव ॥ ५ ॥
माल्यवन्तं स्थितं दृष्ट्वा माल्यवन्तमिवाचलम् । उवाच राक्षसेन्द्रं तं देवराजानुजो बली ॥ ६ ॥
युष्मत्तो भयभीतानां देवानां वै मयाभयम् । राक्षसोत्सादनं दत्तं तदेतदनुपाल्यते ॥ ७ ॥
प्राणैरपि प्रियं कार्यं देवानां हि सदा मया । सोऽहं वो निहनिष्यामि रसातलगतानपि ॥ ८ ॥
देवदेवं ब्रुवाणं तं रक्ताम्बुरुहलोचनम् । शक्त्या बिभेद संक्रुद्धो राक्षसेन्द्रो भुजान्तरे ॥ ९ ॥
माल्यवद्भुजनिर्मुक्ता शक्तिर्घण्टाकृतस्वना । हरेरुरसि बभ्राज मेघस्थेव शतह्रदा ॥ १० ॥
ततस्तामेव चोत्कृष्य शक्तिं शक्तिधरप्रियः । माल्यवन्तं समुद्दिश्य चिक्षेपाम्बुरुहेक्षणः ॥ ११ ॥
स्कन्दोत्सृष्टेव सा शक्तिर्गोविन्दकरनिःसृता । काङ्क्षन्ती राक्षसं प्रायान्महोल्केवाञ्जनाचलम् ॥ १२ ॥
सा तस्योरसि विस्तीर्णे हारभारावभासिते । आपतद्राक्षसेन्द्रस्य गिरिकूट इवाशनिः ॥ १३ ॥
तया भिन्नतनुत्राणः प्राविशद्विपुलं तमः । माल्यवान्पुनराश्वस्तस्तस्थौ गिरिरिवाचलः ॥ १४ ॥
ततः कौलायसं शूलं कण्टकैर्बहुभिश्चितम् । प्रगृह्याभ्यहनद्देवं स्तनयोरन्तरे दृढम् ॥ १५ ॥

---

त्य अर्णव इव पृष्ठतः सन्निवृत्तः क्रोधात् संरक्तनयनः अत एव चलन्मौलिर्निशाचरो माल्यवान् पद्मनाभमिदं प्राह श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो०टी०–हन्यमान इत्यादि। पृष्ठतः अनुद्रुत्येति शेषः१-२

३ ] ति० टी०–योऽस्मान्हंसि स त्वं न जानीषे इत्यन्वयः। यथतरः प्राकृतजन इव ॥ ३ ॥

रा० टी०–तदाकारमाह—नारायणेत्यादिभिः। अयुद्धमनसो भीतान् अस्मान् राक्षसान् इतरः पापात्मेव यस्मात्त्वं हंसि अतः क्षात्रधर्मं त्वं न जानीषे ॥ ३ ॥

गो० टी०–नारायणेति। यथेतरः क्षुद्रजन इव ॥३–५॥

४ ] ति० टी०–पराङ्मुखवधरूपं पापम्। स हन्ता इतो देहाद्गतः सन्स्वर्गं न लभते। 'स हन्ता न हतः' इति पाठे हतः। दैवहत इत्यर्थः ॥ ४ ॥

रा० टी०–पराङ्मुखेति। पराङ्मुखवधं पापं यो गतः पराङ्मुखमनुप्राप्तस्सन् करोति स हन्ता स्वर्गं न लभते ॥ ४ ॥

५ ] ति० टी०–तत्तव बलमहं यथा पश्यामि तथा दर्शयेत्यर्थः ॥ ५ ॥

रा० टी०–युद्धेति। यदि ते युद्धश्रद्धा तर्हि यत्तव बलं तद्दर्शय अहं स्थितोस्मि पश्यामि च ॥ ५ ॥

६ ] अथ पराङ्मुखवधदोषः स्वप्रतिज्ञापालनप्रवृत्तस्य नास्तीत्याह—उवाचेत्यादि ॥ ६ ॥

रा० टी०–माल्यवन्तमिति। देवराजानुजो विष्णुः माल्यवन्तमुवाच ॥ ६ ॥

गो० टी०–पराङ्मुखवधोक्तदोषः स्वप्रतिज्ञापालनपरस्य नास्तीत्याह–माल्यवन्तमिति ॥ ६—१० ॥

७–१० ] ति० टी०–मया भयभीतानां देवानामभयं वै दत्तम्, तदेतदभयदानं राक्षसोत्सादनं कुर्वता मयानुपाल्यते ७॥१०

रा० टी०–तदाकारमाह—युष्मत्त इति। राक्षसानामुत्सादनं यस्मिन् तद्देवानामभयं मया दत्तं तदेतत् अनुपाल्यते प्रतिज्ञापालनार्थमेव हन्यते इत्यर्थः ॥ ७ ॥

रा० टी०–प्राणैरिति। येन मया देवानां प्रियं प्राणैरपि कार्यं सोहं रसातलगतानपि वो युष्मान् निहनिष्यामि ॥ ८ ॥

रा० टी०–देवेति। राक्षसेन्द्रः देवदेवं विष्णुं भुजांतरे बिभेद ॥ ९ ॥

रा० टी०–माल्यवदिति। माल्यवतो भुजात् निर्मुक्ता शक्तिः मेघस्था शतह्रदा विद्युदिव बभ्राज ॥ १० ॥

११–१२ ति० टी०–शक्तिधरो गुहः स प्रियो यस्य तस्य प्रियो वा ॥ ११ ॥ १२ ॥

रा० टी०–तत इति। शक्तिधरः गुहः प्रियो यस्य तस्य प्रियो वा विष्णुः तां माल्यवन्निर्मुक्तां शक्तिमुत्कृष्य माल्यवन्तं समुद्दिश्य चिक्षेप ॥ ११ ॥

रा० टी०–स्कन्देति। स्कन्देन उत्सृष्टेव गोविन्दकरनिःसृता शक्तिः राक्षसं कांक्षन्ती हन्तुमिच्छन्ती सती अञ्जनाचलं महोल्केव प्रायात् ॥ १२ ॥

गो टी०–तत इति। तामेव स्ववक्षोलग्नामेव। शक्तिधरप्रियः सुब्रह्मण्यप्रियः। माहेश्वरार्चनं चिन्त्यम् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०–हारभारो हारसमूहस्तेनावभासिते। गिरिकूटे गिरिशृङ्गे ॥ १३ ॥

रा० टी०–सेति। हारभारावभासिते राक्षसेन्द्रस्योरसि गिरिकूटे अशनिरिव अपतत् ॥ १३ ॥

गो० टी०–सेति। हारभासा मुक्ताहारकान्त्या। कूटं शृङ्गम् ॥ १३ ॥

१४–१५ ] तमो मोहम् ॥ १४ ॥ १५ ॥

---

१ स्यमुरेतर इति गो. पाठः। २ माहेन्द्रीति गो. पाठः। ३ अपतदिति गो. रा. पाठः। ४ कार्ष्णेति गो. पाठः।

तथैव रणरक्तस्तु मुष्टिना वासवानुजम् । ताडयित्वा धनुर्मात्रमपक्रान्तो निशाचरः ॥ १६ ॥
ततोऽम्बरे महाञ्छब्दः साधुसाध्विति चोत्थितः । आहत्य राक्षसो विष्णुं गरुडं चाप्यताडयत् ॥ १७ ॥
वैनतेयस्ततः क्रुद्धः पक्षवातेन राक्षसम् । व्यपोहद्बलवान्वायुः शुष्कपर्णचयं यथा ॥ १८ ॥
द्विजेन्द्रपक्षवातेन द्रावितं दृश्य पूर्वजम् । सुमाली स्वबलैः सार्धं लङ्कामभिमुखो ययौ ॥ १९ ॥
पक्षवातबलोद्धूतो माल्यवानपि राक्षसः । स्वबलेन समागम्य ययौ लङ्कां ह्रिया वृतः ॥ २० ॥
एवं ते राक्षसा रामे हरिणा कमलेक्षण । बहुशः संयुगे भग्ना हतप्रवरनायकाः ॥ २१ ॥
अशक्नुवन्तस्ते विष्णुं प्रतियोद्धुं बलार्दिताः । त्यक्त्वा लङ्कां गता वस्तुं पातालं सहपत्नयः ॥ २२ ॥
सुमालिनं समासाद्य राक्षसं रघुसत्तम । स्थिताः प्रख्यातवीर्यास्ते वंशे सालकटङ्कटे ॥ २३ ॥
ये त्वया निहतास्ते तु पौलस्त्या नाम राक्षसाः । सुमाली माल्यवान्माली ये च तेषां पुरःसराः ॥ ॥
सर्वे एते महाभागा रावणाद्बलवत्तराः ॥ ॥ २४ ॥
न चान्यो राक्षसान्हन्ता सुरारीन्देवकण्टकान् । ऋते नारायणं देवं शङ्खचक्रगदाधरम् ॥ २५ ॥

रा० टी०—तयेति । तया शक्त्या भिन्नं तनुत्राणं यस्य भिन्नगात्र इत्यर्थः । माल्यवान् विपुलं तमो मोहं प्राविशत् पुनराश्वस्तस्सन् तस्थौ ॥ १४ ॥

रा० टी०—तत इति । अम्बरे स्थितो माल्यवान् कालायसं शूलं प्रगृह्य देवं विष्णुं स्तनयोरभ्यहनत् अभ्यहन् ॥ १५ ॥

गो० टी०—तयेति । तमः मोहः ॥ १४ ॥ १५ ॥

१६-१७ ] ति० टी०—रणरक्तो रणप्रियः । अपक्रान्तः पृष्ठतः परावृत्तः ॥ १६ ॥ १७ ॥

रा० टी०—तथेति । रणरक्तो निशाचरः मुष्टिनापि वासवानुजं ताडयित्वा धनुर्मात्रमपक्रान्तोऽभवदिति शेषः ॥ १६ ॥

रा० टी०—तत इति । ततोऽनन्तरमम्बरे साधुसाध्विति महान् शब्द उत्थितः राक्षसानामिति शेषः । राक्षसस्तु विष्णुं गरुडं चाहत्य अताडयत् ॥ १७ ॥

गो० टी०—तथेति । रणे रक्तः रणप्रियः । मुष्टिना च ताडयित्वा अपक्रान्तः । पृष्ठत इति शेषः ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—वायुः शुष्कपर्णचयं यथा व्यपोहति, तथा राक्षसं पक्षवातेन व्यपोहयत् ॥ १८ ॥

रा० टी०—वैनतेय इति । वैनतेयः पक्षवातेन राक्षसं व्यपोहत् अचालयत् तत्र दृष्टान्तः वायुः शुष्कपर्णचयं यथा १८

गो० टी०—वैनतेय इति । वायुः शुष्कपर्णं यथा व्यपोहति तथा पक्षपातेन राक्षसं व्यपौहत् ॥ १८ ॥

१९-२१ ] ति० टी०—दृश्य दृष्ट्वा ॥ १९-२१ ॥

रा० टी०—द्विजेन्द्रमिति । सुमाली द्विजेन्द्रपक्षवातेन द्रावितं पूर्वजं दृश्य दृष्ट्वा लंकामभिमुखस्सन् ययौ ॥ १९ ॥

रा० टी०—पक्षेति । पक्षवातबलेनोद्धूतः अत एव ह्रिया वृतो माल्यवानपि स्वबलेन समागम्य लंकां ययौ ॥ २० ॥

रा० टी०—एवमिति । एवं बहुशो राक्षसा हरिणा भग्नाः ॥ २१ ॥

गो० टी०—द्विजेन्द्रेति । दृश्य दृष्ट्वा ॥ १९—२१ ॥

२२ ] ति० टी०—सहपत्नयः सस्त्रीकाः ॥ २२ ॥

रा० टी०—अशक्नुवन्त इति । विष्णुं प्रतियोद्धुमशक्नुवन्तस्सहपत्नयः सपत्नीकाः राक्षसाः लंकां त्यक्त्वा पातालं वस्तुं गताः ॥ २२ ॥

गो० टी०—अशक्नुवन्त इति । सहपत्नयः सस्त्रीका इत्यर्थः ॥ २२ ॥

२३ ] ति० टी०—सालकटङ्कटे सालकटङ्कटा माल्यवदादेः पितामही विद्युत्केशपत्नी तदीये वंशे वृद्धाच्छाभाव आर्षः । सुमालिनं समासाद्याश्रित्य राक्षसाः स्थिताः ॥ २३ ॥

रा० टी०—सुमालिनमिति । सालकटंकटे सालकटङ्कटा माल्यवत्प्रभृतीनां पितामही विद्युत्केशपत्नी तस्या अयं तस्मिन् वंशे विद्यमानं सुमालिनम् समासाद्य प्रख्यातवीर्यास्ते विष्णुपराभूता राक्षसाः स्थिताः ॥ २३ ॥

गो० टी०—सुमालिनमिति । सालकटङ्कटे सालकटङ्कटा माल्यवदादीनां पितामही विद्युत्केशपत्नी तस्याः संबन्धी सालकटङ्कटः तस्मिन्वंशे प्रख्यातवीर्याः वृद्धाच्छाभाव आर्षः ॥ २३ ॥

२४ ] ति० टी०—पौलस्त्याः पुलस्त्यवंश्याः त्वया ये कुम्भकर्णादयो हतास्तेभ्यस्तथा रावणाच्च माल्यवदादयो बलवत्तराः ॥ २४ ॥

रा० टी०—ये इति । रावणात् रावणापराधाद्धेतोः एते पौलस्त्या राक्षसाः रावणप्रभृतयस्त्वया निहतास्ते ये माल्यवत्प्रभृतयः ये च तेषां पुरस्सरास्तेभ्यो बलवत्तरा अभवन्निति शेषः । सार्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—य इति । ये पौलस्त्या रावणादयो निहतास्तेभ्यः रावणाच्च माल्यवदादयो बलवत्तराः ॥ २४ ॥

२५ ] ति० टी०—तर्हि किं मे प्राशस्त्यं भवद्भिरुच्यते—न

१ तेनेति गो. पाठः । २ भयेति गो. पाठः । ३ सर्वे तेभ्यो. महाभागेति गो. पाठः ।

भवान्नारायणो देवश्चतुर्बाहुः सनातनः । राक्षसान्हन्तुमुत्पन्नो ह्यजय्यः प्रभुरव्ययः ॥ २६ ॥
नष्टधर्मव्यवस्थानां काले काले प्रजाकरः । उत्पद्यते दस्युवधे शरणागतवत्सलः ॥ २७ ॥
एषा मया तव नराधिप राक्षसानामुत्पत्तिरद्य कथिता सकला यथावत् ।
भूयो निबोध रघुसत्तम रावणस्य जन्मप्रभावमतुलं ससुतस्य सर्वम् ॥ ॥ २८ ॥
चिरात्सुमाली व्यचरद्रसातलं स राक्षसो विष्णुभयार्दितस्तदा ।
पुत्रैश्च पौत्रैश्च समन्वितो बली ततस्तु लङ्कामवसद्धनेश्वरः ॥ ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डेऽष्टमः सर्गः ॥ ८ ॥

## नवमः सर्गः ।

ततः सुमालिनो दुहितरि कैकस्यां रावणकुम्भकर्णयोरीश्वरभक्तश्रेसरस्य विभीषणस्य शूर्पणखाभिधतनयायाश्चोत्पत्तिः तत्र रावणकुम्भकर्णौ जननीप्रेरितौ घोरं तपश्चेरतुः तुष्टाच्चतुर्मुखाज्जयावहान्वराँल्लेभाते

कस्यचित्त्वथ कालस्य सुमाली नाम राक्षसः । रसातलान्मर्त्यलोकं सर्वं वै विचचार ह ॥ १ ॥
नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः । कन्यां दुहितरं गृह्य विना पद्ममिव श्रियम् ॥ २ ॥
राक्षसेन्द्रः स तु तदा विचरन्वै महीतले । तदापश्यत्स गच्छन्तं पुष्पकेण धनेश्वरम् ॥ ३ ॥

---

चान्य इति । तदपि प्राशस्त्यं तवैवेति भावः । राक्षसान्हन्तॄन् । 'न लोक—' इति षष्ठीनिषेधः । देवकण्टकान् देवपीडाकरान्देवशत्रून् । यस्त्वं हन्ता स नारायणमृते नारयणं विनान्यो न केवलमनुष्यो न ॥ २९ ॥

रा० टी०—नेति । नारो नीतिस्तेनैव अयते गच्छतीति नारायणस्त्वं मर्यादापुरुषोत्तममित्यर्थः । तथाहि न्याय्यात्पथः प्रचलनं यतो नैवास्य विद्यते अतो नारायणो रामो विद्वद्भिः परिकीर्तित इत्याप्तवाक् देवं नित्यविहारिणम् शंखचक्रगदाधरम् शंखचक्रगदास्सन्ति अस्येति स नारायणो धरो यस्मात् तं विष्णोरुत्तममित्यर्थः । ऋते विना अन्यः राक्षसान् साकेतावतीर्णपौलस्त्यरक्षसः हन्ता न ॥ २९ ॥

गो० टी०—तर्हि किं मे प्राशस्त्यं भवद्भिरुच्यत इति शङ्कायां तत्प्राशस्त्यमपि तवैवेत्याह—न चान्य इति । राक्षसान्हन्तेति । स त्वम् ॥ २९—२९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टमः सर्गः ॥ ८ ॥

२६-२९ ] ति० टी०—उक्तमेवार्थमन्वयमुखेनाह—भवानिति । उत्पन्नो मायया गृहीतदेहः ॥ २६ ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे अष्टमः सर्गः ॥ ८ ॥

रा० टी०—ननु स क इत्यत आह—भवानिति । नारायणो मर्यादापुरुषोत्तमो देवो नित्यविहारी चतुर्बाहुः । चतुरोऽर्थादीन् वाहयति आश्रितेभ्यः प्रापयतीति सः सनातनो नित्यः अजय्यः सर्वैर्जेतुमशक्यः प्रभुः नियन्तुरपि नियन्ता अव्ययः सर्वविकारशून्यः भवानेव राक्षसान् राक्षसत्वं हन्तुं निवर्तयितुमुत्पन्नः प्रादुर्भूतः ॥ २६ ॥

रा० टी०—द्वयोः प्रादुर्भावो यथाकालं सर्वदैवेति बोधयन्नाह—नष्टेति । नष्टा धर्मव्यवस्था यैस्तेषां रक्षसां काले विनाशसमये काले भवदुपदेशे सति प्रजाकरो विष्णुः उत्पद्यते दस्युवधे चोरप्रायसाकेतावतीर्णप्रतापिरावणविघातार्थं शरणागतवत्सलो भवान् उत्पद्यते ॥ २७ ॥

रा० टी०—एषेति । रावणस्य जन्म प्रभावं च निबोध वर्णयामीत्यर्थः ॥ २८ ॥

रा० टी०—प्रतिज्ञामाह—चिरादिति । ततो रसातलगमनानन्तरं धनेश्वरः कुबेरः अवसत् ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टमः सर्गः ॥ ८ ॥

१ ] ति० टी०—रसातलादिति । निसृत्येति शेषः॥१॥

२-३ ] ति० टी०—कन्यामविवाहिताम् । विना पद्मं पद्मं त्यक्त्वा स्थिताम् ॥ २ ॥ ३ ॥

रा० टी०—सुमालिनो वृत्तान्तमाह—कस्यचिदित्यादिभिः । कस्यचित्कालस्य अथानन्तरं सुमाली राक्षसः कन्यां कमनीयां दुहितरं गृह्य गृहीत्वा रसातलात् आगम्य मर्त्यलोकं विचचार श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

रा० टी०—राक्षसेन्द्र इति । महीतले विचरन् राक्षसेन्द्रः स सुमाली महीतले विचरन्सन्नास्तेति शेषः । अर्धं पृथक् तदेति । पितरं विश्रवसं द्रष्टुं गच्छन्तं धनेश्वरं स सुमाली अपश्यत् ॥ ३ ॥

---

१ स्मातेति गो. पाठः । २ तकमिति गो. पाठः ।

गच्छन्तं पितरं द्रष्टुं पुलस्त्यतनयं विभुम् । तं दृष्ट्वामरसंकाशं गच्छन्तं पावकोपमम् ॥ ४ ॥
रसातलं प्रविष्टः सन्मर्त्यलोकात्सविस्मयः । इत्येवं चिन्तयामास राक्षसानां महामतिः ॥ ५ ॥
किं कृत्वा श्रेय इत्येवं वर्धेमहि कथं वयम् । नीलजीमूतसंकाशस्तप्तकाञ्चनकुण्डलः ॥ ६ ॥
राक्षसेन्द्रः स तु तदा चिन्तयत्सुमहामतिः । अथाब्रवीत्सुतां रक्षः कैकसीं नाम नामतः ॥ ७ ॥
पुत्रि प्रदानकालोऽयं यौवनं व्यतिवर्तते । प्रत्याख्यानाच्च भीतैस्त्वं न वरैः परिगृह्यसे ॥ ८ ॥
तत्कृते च वयं सर्वे यन्त्रिता धर्मबुद्धयः । त्वं हि सर्वगुणोपेता श्रीः साक्षादिव पुत्रिके ॥ ९ ॥
कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम् । न ज्ञायते च कः कन्यां वरयेदिति कन्यके ॥१०॥
मातुः कुलं पितृकुलं यत्र चैव च दीयते । कुलत्रयं सदा कन्यां संशये स्थाप्य तिष्ठति ॥११॥
सा त्वं मुनिवरं श्रेष्ठं प्रजापतिकुलोद्भवम् । भज विश्रवसं पुत्रि पौलस्त्यं वरय स्वयम् ॥१२॥
ईदृशास्ते भविष्यन्ति पुत्राः पुत्रि न संशयः । तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ॥१३॥
सा तु तद्वचनं श्रुत्वा कन्यका पितृगौरवात् । तत्र गत्वा च सा तस्थौ विश्रवा यत्र तप्यते ॥१४॥

---

गो० टी०—कस्यंचिदिति । विना पद्यं पद्यं त्यक्त्वा स्थिताम् ॥ १—९ ॥

४] ति० टी०—अमरसंकाशमृषिपुत्रत्वेऽपि प्राप्तदेवरूपम् ४

५–७ ] ति० टी०—तं दृष्ट्वा पुनारसातलं प्रविष्ट इत्यर्थः । 'रसातलात्प्रविष्टः सन्मर्त्यलोकम्' इति पाठे उक्तानुवाद एवायम् इत्येवं चिन्तयामासेत्यन्वयः ॥ ९ ॥ ७ ॥

रा० टी०—तमिति । राक्षसानां मध्ये महामतिः सुमाली गच्छन्तं तं धनेश्वरं दृष्ट्वा मर्त्यलोकात् रसातलं प्रविष्टस्सन् इत्येवं चिन्तयामास सार्द्धश्लोक एकान्वयी ॥ ४ ॥ ५ ॥

रा० टी०—चिन्ताकारमाह—किमिति । राक्षसेन्द्रः किं कृत्वा एवं कुबेरसदृशं श्रेयः प्राप्नुयाम इति शेषः । कथं वा वर्द्धेमहि इत्यचिन्तयत् सार्द्धश्लोक एकान्वयी ॥ ६ ॥

रा० टी०—अथेति । कैकसीं नाम पुत्रीं नामतः प्रसिद्धमब्रवीत् अर्द्धं पृथक् ॥ ७ ॥

गो० टी०—किंकृतमिति । राक्षसानां श्रेयः किंकृतं स्यात् केनोपायेन कृतं स्यात् । कथं वयं वर्धेमहीत्येवं चिन्तयामासेति योजना ॥ ६ ॥

८ ] ति० टी०—प्रत्याख्यानाद्भीतैः प्रत्याख्यानशङ्कया भीतैर्न वरैर्न प्रतिगृह्यसे याच्यसे। यद्वा प्रत्याख्यानभीतैरस्माभिस्त्वं वरैः परिगृह्यसे प्रतिग्रहं न कार्यसे ॥ ८ ॥

रा० टी०—तदाकारमाह—पुत्रीत्यादिभिः। यतस्ते यौवनं व्यतिवर्तते अतोऽयं प्रदानकालः विवाहसमयः ननु समयप्राप्तौ कश्चिन्मां वरिष्यत्येवेत्यत आह प्रत्याख्यानात् अनङ्गीकारसंशयाद्भीतैर्वरैः त्वं न परिगृह्यसे ॥ ८ ॥

गो० टी०—पुत्रीति । प्रत्याख्यानात् भीतैरस्माभिस्त्वं वरैर्न प्रतिगृह्यसे । प्रतिग्रहं न प्राप्नोषीत्यर्थः ॥ ७ ॥

९ ] ति० टी०—त्वत्कृते तव विशिष्टवरलाभार्थं। यन्त्रिताः कृतप्रयासाः । धर्मबुद्धयो विवाहधर्मसिद्धिनिमित्तं विचारवन्तः ९

रा० टी०—त्वादिति । धर्मबुद्धयो वयं त्वत्कृते यन्त्रिताः संकुचिता. हि यतः त्वं सर्वगुणोपेता अत एव श्रीरिवासि एतेन त्वत्सदृशः पतिर्दुर्लभ इति द्योतितम् ॥ ९ ॥

गो० टी०—त्वत्कृत इति । यन्त्रिताः कृतप्रयासाः । धर्मबुद्धयः विवाहधर्मनिमित्तचिन्तावन्तः ॥ ८ ॥

१० ] ति० टी०—कन्यापितृत्वस्य दुःखत्वमेवाह—न ज्ञायत इति । को वरयेदिति न ज्ञायते इति दुःखम् ॥ १० ॥

रा० टी०—कन्येति । कः कन्यां वरयेत् इति न ज्ञायते अतो मानकाङ्क्षिणां कन्यापितृत्वं दुःखं दुःखहेतुः ॥ १० ॥

गो० टी०—कन्यापितृत्वस्य दुःखत्वमेव प्रदर्शयति—न ज्ञायत इति ॥ ९ ॥

११ ] ति० टी०—वरणानन्तरमपि दुःखमेवेत्याह—मातुः कुलमिति । संशये स्थाप्य तिष्ठति । कथमस्याश्चारित्रभंशो न भविष्यतीत्येवं कुलत्रयं चिन्ताक्रान्तं भवतीत्यर्थः॥११॥

रा० टी०—सर्वत्वं विटण्वन्नाह—मातुरिति । यत्र यस्मिन् दीयते तत्र कुलत्रयं संशये कथमस्यास्सदाचारो निर्वहिष्यतीति विचिकित्सायामित्यर्थः । स्थाप्य स्थापयित्वा तिष्ठति ॥ ११ ॥

गो० टी०—अथ वरणानन्तरमपि विशिष्य दुःखहेतुत्वं कन्याया इत्याह—मातुरिति । संशये स्थाप्य तिष्ठतीति । कथमस्याश्चारित्रभंशो न भविष्यतीति कुलत्रयं चिन्ताकुलमेव सदा भवतीत्यर्थः ॥ १० ॥

१२ ] ति० टी०—सा त्वं विश्रवसं भज सेवस्व । सेवनेन च भर्तृत्वेन वरय ॥ १२ ॥

रा० टी०—सेति । विश्रवसं त्वं स्वयं वरय भज च १२

१३–१४ ] ति० टी०—कीदृशास्तत्राह—यादृशोऽयं धनेश्वर इति ॥ १३ ॥ १४ ॥

रा० टी०—ईदृशा इति । ते पुत्राः ईदृशा भविष्यन्ति नत्र

---

१ स्वच्छन्दमिति गो.पाठः। २ तपनेति गो. पाठः। ३ कृतमिति गो.पाठः। ४ पद्यमिदं गो. पु. नास्ति । ५ प्रतीति गो.पाठः । ६ श्रेति गो. पाठः ।

एतस्मिन्नन्तरे राम पुलस्त्यतनयो द्विजः । अग्निहोत्रमुपातिष्ठच्चतुर्थ इव पावकः ॥ १५ ॥
अविचिन्त्य तु तां वेलां दारुणां पितृगौरवात् । उपसृत्याग्रतस्तस्य चरणाधोमुखी स्थिता ॥ १६ ॥
विलिखन्ती मुहुर्भूमिमङ्गुष्ठाग्रेण भामिनी । स तु तां वीक्ष्य सुश्रोणीं पूर्णचन्द्रनिभाननाम् ॥ १७ ॥
अब्रवीत्परमोदारो दीप्यमानां स्वतेजसा । भद्रे कस्यासि दुहिता कुतो वा त्वमिहागता
किं कार्यं कस्य वा हेतोस्तत्त्वतो ब्रूहि शोभने ॥ ॥ १८ ॥
एवमुक्ता तु सा कन्या कृताञ्जलिरथाब्रवीत् । आत्मप्रभावेण मुने ज्ञातुमर्हसि मे मतम् ॥ १९ ॥
किं तु मां विद्धि ब्रह्मर्षे शासनात्पितुरागताम् । कैकसी नाम नाम्नाहं शेषं त्वं ज्ञातुमर्हसि ॥ २० ॥
स तु गत्वा मुनिर्ध्यानं वाक्यमेतदुवाच ह । विज्ञातं ते मया भद्रे कारणं यन्मनोगतम् ॥ २१ ॥
सुताभिलाषो मत्तस्ते मत्तमातंगगामिनि । दारुणायां तु वेलायां यस्मात्त्वं मामुपस्थिता ॥ २२ ॥

---

कीदृशा इत्यत आह यादृशोऽयं धनेश्वरः तादृशः तेजसा भास्करसमो भविष्यति वचनविपरिणामेनात्राप्यन्वयः किञ्च तेजसा भास्करसमो यादृशोऽयं धनेश्वरः ईदृशास्ते पुत्रा भविष्यन्ति ॥ १३ ॥

रा० टी०—सेति । पितृगौरवात् हेतोः कन्यका यत्र विश्रवास्तप्यते तत्र गत्वा तस्थौ ॥ १४ ॥

१५ ] ति० टी०—उपातिष्ठत् । प्रदोषेऽग्निहोत्रं कृतवानित्यर्थः ॥ १५ ॥

रा० टी०—एतस्मिन्निति । पुलस्त्यतनयः अग्निहोत्रमुपातिष्ठत् ॥ १५ ॥

गो० टी०—एतस्मिन्निति । उपातिष्ठत् प्रदोषे अग्निहोत्रं कृतवानित्यर्थः ॥ १४ ॥

१६ ] ति० टी०—दारुणां तां वेलाम् । प्रदोषकालमित्यर्थः । पितृगौरवादुपसृत्य महाबलपराक्रमत्वेन ख्यातस्य सुमालिनः पुत्री, अहमतो न प्राकृतेनर्षिणानादरणीयेत्याशयेनेत्यर्थः । चरणमवलोकयदधः प्रवर्तितं मुखं यस्याः सा चरणाधोमुखी स्थिता ॥ १६ ॥

रा० टी०—अविचिन्त्येति । तां प्रदोषाभिधां दारुणां वेलामविचिन्त्य तस्य विश्रवसोऽग्रत उपसृत्य चरणाधोभागे मुखं यस्याः सा ऋषिचरणमवलोकयन्तीत्यर्थः । अंगुष्ठाग्रेण भूमिं विलिखन्ती सती स्थिताभवदिति शेषः सार्द्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—अविचिन्त्येति । पितृगौरवात् पितरि बहुमानात् चरणाधोमुखी चरणसमीपाधोमुखी । विलिखन्तीति चिन्तानुभावः ॥ १६ ॥

१७ ] ति० टी०—अङ्गुष्ठाग्रेण मुहुर्भूमिं विलिखन्त्यधोमुखी स्थितेति संबन्धः ॥ १७ ॥

रा० टी०—स इति । स विश्रवा तां कैकसीं वीक्ष्य अब्रवीत् ॥ १७ ॥

गो० टी०—सन्त्विति । कुतः कस्माद्देशात् । किं कार्यं मया कर्तव्यं कस्य हेतोः कस्मै प्रयोजनाय ॥ १६ ॥ १७ ॥

१८ ] ति० टी०—किं कार्यमस्माभिरनुष्ठेयं त्वं कस्य हेतोः किंनिमित्तमिहागता ॥ १८ ॥

रा० टी०—तदाकारमाह—भद्र इत्यादिभिः । हे भद्रे ! त्वं कस्य दुहितासि कुतो हेतोस्त्वमिहागता किं कार्यं कर्तव्यमस्माभिरिति शेषः इति तत्त्वतस्त्वं ब्रूहि ॥ १८ ॥

१९ ] ति० टी०—मे मतमभिमतं भर्त्रपेक्षालक्षणम् । तस्य लज्जावशात्स्ववाचा कथनमनुचितमिति भावः ॥ १९ ॥

रा० टी०—एवमिति । एवमुक्ता कन्या अब्रवीत् तदाकारमाह—आत्मनस्स्वस्य प्रभावेण तपोबलेन मे मतमभिप्रायं ज्ञातुमर्हसि ॥ १९ ॥

गो० टी०—एवमिति । मे मतं त्वद्भर्तृकत्वाभिलाषित्वम् ॥ १८ ॥

२० ] ति० टी०—स्ववक्तव्यांशमाह—किं त्विति ॥ २० ॥

रा० टी०—यत्स्वेन वक्तव्यं तदाह—किमिति । नाम्ना कैकसी या नाम प्रसिद्धा तां मां पितुश्शासनात् आज्ञातः । आगतां विद्धि शेषं त्वं ज्ञातुमर्हसि ॥ २० ॥

गो० टी०—तच्च वक्तुं लज्जावशादनुचितमिति सूचयित्वा वक्तुमुचितमाह—किन्त्विति ॥ १९ ॥

२१ ] ति० टी०—कारणमागमनकारणम् ॥ २१ ॥

रा० टी०—स इति । स कैकस्योक्तो मुनिर्विश्रवा ध्यानं गत्वा कृत्वेत्यर्थः । एतद्वाक्यमुवाच तदाकारमाह—ते मनोगतं कारणमागमनहेतुर्मया विज्ञातम् ॥ २१ ॥

गो० टी०—स त्विति । कारणमागमनकारणम् ॥ २० ॥

२२ ] ति० टी०—तदेवाह—सुतेति ॥ २२ ॥

रा० टी०—स्वविज्ञातमेवाह—सुतेति । मत्तस्ते सुताभिलाषोऽस्तीति शेषः । अहं पृथक्—दारुणायामिति । यस्मात् त्वं दारुणायां वेलायामुपस्थिता तस्मात् यादृशान् सुतान् जनयिष्यसि तादृशान् शृणु ॥ २२ ॥

गो० टी०—तदेवाह—सुतेति ॥ २१ ॥

शृणु तस्मात्सुतान्भद्रे यादृशाञ्जनयिष्यसि । दारुणान्दारुणाकारान्दारुणाभिजनप्रियान् ॥ २३ ॥
प्रसविष्यसि सुश्रोणि राक्षसान्क्रूरकर्मणः । सा तु तद्वचनं श्रुत्वा प्रणिपत्याब्रवीद्वचः ॥ २४ ॥
भगवन्नीदृशान्पुत्रांस्त्वत्तोऽहं ब्रह्मवादिनः । नेच्छामि सुदुराचारान्प्रसादं कर्तुमर्हसि ॥ २५ ॥
कन्यया त्वेवमुक्तस्तु विश्रवा मुनिपुंगवः । उवाच कैकसीं भूयः पूर्णेन्दुरिव रोहिणीम् ॥ २६ ॥
पश्चिमो यस्तव सुतो भविष्यति शुभानने । मम वंशानुरूपः स धर्मात्मा च न संशयः ॥ २७ ॥
एवमुक्ता तु सा कन्या राम कालेन केन चित् । जनयामास बीभत्सं रक्षोरूपं सुदारुणम् ॥ २८ ॥
दशग्रीवं महादंष्ट्रं नीलाञ्जनचयोपमम् । ताम्रोष्ठं विंशतिभुजं महास्यं दीप्तमूर्धजम् ॥ २९ ॥
तस्मिञ्जाते ततस्तस्मिन्सज्वालकवलाः शिवाः । क्रव्यादाश्चापसव्यानि मण्डलानि प्रचक्रमुः ॥ ३० ॥
ववर्ष रुधिरं देवो मेघाश्च खरनिःस्वनाः । प्रबभौ न च सूर्यो वै महोल्काश्चापतन्भुवि ॥ ३१ ॥
चकम्पे जगती चैव ववुर्वाताः सुदारुणाः । अक्षोभ्यः क्षुभितश्चैव समुद्रः सरितां पतिः ॥ ३२ ॥
अथ नामाकरोत्तस्य पितामहसमः पिता । दशग्रीवः प्रसूतोऽयं दशग्रीवो भविष्यति ॥ ३३ ॥
तस्य त्वनन्तरं जातः कुम्भकर्णो महाबलः । प्रमाणाद्यस्य विपुलं प्रमाणं नेह विद्यते ॥ ३४ ॥
ततः शूर्पणखा नाम संजज्ञे विकृतानना । विभीषणश्च धर्मात्मा कैकस्याः पश्चिमः सुतः ॥ ३५ ॥

२३-२४ ] ति० टी०-दारुणान्क्रूरस्वभावान्दारुणाभिजनाः क्रूरबन्धवो राक्षसरूपाः प्रिया येषां तान् ॥ २३ ॥ २४ ॥

रा० टी०-दारुणानिति । क्रूरकर्मणः अत एव दारुणान् क्रूरस्वभावान् अत एव दारुणाभिजनप्रियान् दारुणाकारान् राक्षसान् प्रसविष्यसि जनयिष्यसि ॥ २३ ॥

रा० टी०-सेति । सा कैकसी अब्रवीत् अर्धं पृथक् २४॥

गो० टी०-शृण्विति । दारुणान् क्रूरस्वभावान् दारुणाकारान् क्रूरवेषान् दारुणाभिजनप्रियान् । दारुणाभिजने क्रूरबन्धौ राक्षसरूपे प्रियं येषां तान् ॥ २२-२८ ॥

२५-२६ ] ति० टी०-भगवन्ब्रह्मवादिनस्त्वत्त ईदृशान्पुत्रान्नेच्छामि, अत उत्तमपुत्रार्थं प्रसादं कर्तुमर्हसीत्यन्वयः २५।२६

रा० टी०-तदाकारमाह—ईदृशान् । दुराचारान् पुत्रान् त्वत्तोऽहं नेच्छामि अतः प्रसादं कर्तुमर्हसि ॥ २५ ॥

रा० टी०-कन्ययेति । विश्रवाः कैकसीं भूय उवाच २६

२७-२९ ] ति० टी०-पश्चिमः कनिष्ठः स मम वंशानुरूपो धर्मात्मा चेति न संशयः ॥ २७-२९ ॥

रा० टी०-तदाकारमाह—पश्चिम इति । पश्चिमः कनिष्ठः तव सुतः विभीषण इत्यर्थः । मम वंशानुरूपो धर्मात्मा भविष्यति ॥ २७ ॥

रा० टी०-एवमिति । एवमुक्ता सा कैकसी केन चित् कालेन बीभत्सं दारुणं रक्षोरूपं दशग्रीवं जनयामास अर्धचतुष्टयमेकान्वयि ॥ २८ ॥ २९ ॥

३०-३२ ] ति० टी०-सज्वालकवलाः ज्वालारूपास्यान्तर्गतकवलसहिताः ॥ ३०-३२ ॥

रा० टी०-तस्मिन्निति । तस्मिन् क्रूरत्वसंपादके काले तस्मिन् रावणे जाते सति सज्वालकवलाः ज्वालारूपमुखान्तर्गतकवलविशिष्टाः शिवाः क्रव्यादा गृध्रादयश्च अपसव्यानि मण्डलानि प्रचक्रमुः ॥ ३० ॥

गो० टी०-तस्मिन्निति । सज्वालकवलाः ज्वालारूपास्यान्तर्गतकवलाः शिवाः वृद्धजम्बुकाः ॥ २९ ॥

रा० टी०-ववर्षेति । देवः रुधिरं ववर्ष मेघाः खरनिःस्वनाः अभवन्निति शेषः सूर्यः न प्रबभौ महोल्काश्च भुवि अपतन् ॥ ३१ ॥

रा० टी०-चकम्प इति । अक्षोभ्योऽपि समुद्रः क्षुभितो भवतीति शेषः ॥ ३२ ॥

गो० टी०-ववर्षेति । देवः पर्जन्यदेवः ॥ ३०-३२ ॥

३३-३५ ] ति० टी०-दशग्रीव इति । कामरूपत्वाद्यान्तःपुरादावेकवक्त्रत्वं द्विभुजत्वं चास्येति बोध्यम् ॥३३-३५॥

रा० टी०-अथेति । तस्य दशग्रीवस्य पिता यतोऽयं दशग्रीवः प्रसूतः अतो दशग्रीवः तन्नामा भविष्यति इति नामाकरोत् ॥ ३३ ॥

रा० टी०-तस्येति । यस्य प्रमाणात् शरीरवैपुल्यात् विपुलमधिकं प्रमाणं वैपुल्यं न विद्यते स कुम्भकर्णः तस्य रावणस्यानन्तरं जातः ॥ ३४ ॥

रा० टी०-तत इति । ततः कुम्भकर्णजननानन्तरं शूर्पणखा नाम संजज्ञे विभीषणस्तु पश्चिमः कनिष्ठः सुतोऽभवदिति शेषः ॥ ३५ ॥

गो० टी०-तस्य त्विति । यस्य प्रमाणाद्विपुलं प्रमाणं नेह विद्यते नैवास्ति । प्रमाणभूतेष्विति शेषः ॥ ३३-३५ ॥

१ भविष्यतीति गो. पाठः । २ तु तत्काले इति गो. पाठः ।

तस्मिञ्जाते महासत्त्वे पुष्पवर्षं पपात ह । नभःस्थाने दुन्दुभयो देवानां प्राणदंस्तथा ॥
वाक्यं चैवान्तरिक्षे च साधु साध्विति तत्तदा ॥ ॥ ३६ ॥
तौ तु तत्र महारण्ये वव्रधाते महौजसौ । कुम्भकर्णदशग्रीवौ लोकोद्वेगकरौ तदा ॥ ३७ ॥
कुम्भकर्णः प्रमत्तस्तु महर्षीन्धर्मवत्सलान् । त्रैलोक्ये नित्यासंतुष्टो भक्षयन्विचचार ह ॥ ३८ ॥
विभीषणस्तु धर्मात्मा नित्यं धर्मेव्यवस्थितः । स्वाध्यायनियताहार उवास विजितेन्द्रियः ॥ ३९ ॥
अथ वैश्रवणो देवस्तत्र कालेन केन चित् । आगतः पितरं द्रष्टुं पुष्पकेण धनेश्वरः ॥ ४० ॥
तं दृष्ट्वा कैकसी तत्र ज्वलन्तमिव तेजसा । आगम्य राक्षसी तत्र दशग्रीवमुवाच ह ॥ ४१ ॥
पुत्र वैश्रवणं पश्य भ्रातरं तेजसा वृतम् । भ्रातृभावे समे चापि पश्यात्मानं त्वमीदृशम् ॥ ४२ ॥
दशग्रीव तथा यत्नं कुरुष्वामितविक्रम । यथा त्वमपि मे पुत्र भवेर्वैश्रवणोपमः ॥ ४३ ॥
मातुस्तद्वचनं श्रुत्वा दशग्रीवः प्रतापवान् । अमर्षमतुलं लेभे प्रतिज्ञां चाकरोत्तदा ॥ ४४ ॥
सत्यं ते प्रतिजानामि भ्रातृतुल्योऽधिकोऽपि वा । भविष्याम्योजसा चैव संतापं त्यज हृद्गतम् ॥ ४५ ॥
ततः क्रोधेन तेनैव दशग्रीवः सहानुजः । चिकीर्षुर्दुष्करं कर्म तपसे धृतमानसः ॥ ४६ ॥

---

३६ ] ति० टी०—अन्तरिक्षे साधुसाध्विति वाक्यं तदासीदिति शेषः ॥ ३६ ॥

रा० टी०—तस्मिन्निति । तस्मिन् विभीषणे जाते सति पुष्पवर्षं पपात देवानां दुन्दुभयः प्राणदंश्च अन्तरिक्षे साधु साध्विति वाक्यमश्रूयतेति शेषः सार्द्धश्लोक एकान्वयी ॥३६॥

३७ ] ति० टी०—तत्र महारण्ये पितुर्विश्रवस आश्रमारण्ये ॥ ३७ ॥

रा० टी०—ताविति । कुम्भकर्णदशग्रीवौ वव्रधाते ॥३७॥

गो० टी०—ताविति । तत्र महारण्ये पितुराश्रमारण्ये ॥ ३७ ॥ ३८ ॥

३८ ] ति० टी०—नित्यासंतुष्टः कियदपि भक्षणे न कदाचिदपि संतुष्टः ॥ ३८ ॥

रा० टी०—कुम्भकर्ण इति । नित्यासन्तुष्टः कुम्भकर्णः त्रैलोक्ये महर्षीन् भक्षयन्सन् विचचार ॥ ३८ ॥

३९-४१ ] ति० टी०—स्वाध्यायनियताहारः । स्वाध्यायनियतो नियताहारश्चेत्यर्थः ॥ ३९-४१ ॥

रा० टी०—विभीषण इति । धर्मात्मा विभीषणस्तु स्वाध्यायाय वेदाध्ययनाय नियतः आहारो यस्य विजितानि इन्द्रियाणि येन तादृशस्सन् उवास ॥ ३९ ॥

रा० टी०—अथेति । वैश्रवणः कुबेरः केन चित्कालेन पितरं द्रष्टुं पुष्पकेणागतः ॥ ४० ॥

रा० टी०—तमिति । कैकसी राक्षसी राक्षसकन्या तेजसा ज्वलन्तमिव तं धनेशं दृष्ट्वा दशग्रीवमुवाच ॥ ४१ ॥

गो० टी०—विभीषण इति । स्वाध्यायं नियतम् आहारः अहरहरिति स्वाध्यायनियताहारः ॥ ३९—४१ ॥

४२ ] ति० टी०—आत्मानमीदृशं पश्य । कुबेरवद्दिव्यवैभवरहितं प्राकृतरक्षोरूपमित्यर्थः ॥ ४२ ॥

रा० टी०—तदाकारमाह—पुत्रमिति । समे तुल्येऽपि भ्रातृभावे भ्रातॄणां धर्मे तेजसा वृतं भ्रातरं वैश्रवणमीदृशं ऐश्वर्यहीनमात्मानं च पश्य ॥ ४२ ॥

गो० टी०—पुत्रेति । आत्मानमीदृशं कुबेरवद्दिव्यवैभवरहितम् । दरिद्रमित्यर्थः ॥ ४२—४८ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने नवमः सर्गः ॥ ९ ॥

४३-४५ ] ति० टी०—तस्माद्दशग्रीवेति ॥ ४३-४५ ॥

रा० टी०—दशग्रीवेति । यथा त्वमपि वैश्रवणोपमो भवेः तथा यत्नं कुरुष्व ॥ ४३ ॥

रा० टी०—मातुरिति । दशग्रीवः अमर्षं लेभे प्रतिज्ञामकरोच्च ॥ ४४ ॥

रा० टी०—तदाकारमाह—सत्यमिति । भ्रातृतुल्योऽधिकोवाहं भविष्यामि इति सत्यं ते प्रतिजानामि अतस्संतापं त्यज ॥ ४५ ॥

४६ ] ति० टी०—तपसे तपोऽर्थम् । धृतमानसो निश्चितान्तःकरणः ॥ ४६ ॥

रा० टी०—तत इति । सहानुजो दशग्रीवः क्रोधेन दुष्करं कर्म चिकीर्षुस्सन् तपसे धृतमानसोऽभवदिति शेषः ॥ ४६ ॥

---

१ तदेति गो. पाठः । २ त्रैलोक्यं भक्षयन्नित्यासन्तुष्ट इति गो. पाठः । ३ धर्मे इति गो. पाठः ।

प्राप्स्यामि तपसा काममिति कृत्वाध्यवस्य च । आगच्छदात्मसिद्ध्यर्थं गोकर्णस्याश्रमं शुभम् ॥४७॥
स राक्षसस्तत्र सहानुजस्तदा तपश्चचारातुलमुग्रविक्रमः ।
अतोषयच्चापि पितामहं विभुं ददौ स तुष्टश्च वराञ्जयावहान् ॥ ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे नवमः सर्गः ॥ ९ ॥

## दशमः सर्गः ।

रावणादीनां कीदृशं तपश्चरणमित्यादि पृष्टोऽगस्त्यस्तत्कथयति सुघोरतपसा तुष्टः प्रजापतिर्दशग्रीवाय मानवेतरावध्यत्वं कुम्भकर्णाय चिरकालस्वापं विभीषणाय च सद्धर्माचरणरतत्वं वितताररेत्यादि ।

अथाब्रवीन्मुनिं रामः कथं ते भ्रातरो वने । कीदृशं तु तदा ब्रह्मंस्तपस्तेपुर्महाबलाः ॥ १ ॥
अगस्त्यस्त्वब्रवीत्तत्र रामं सुप्रीतमानसम् । तांस्तान्धर्मविधींस्तत्र भ्रातरस्ते समाविशन् ॥ २ ॥
कुम्भकर्णस्ततो यत्तो नित्यं धर्मपथे स्थितः । तताप ग्रीष्मकाले तु पञ्चाग्नीन्परितः स्थितः ॥ ३ ॥
मेघाम्बुसिक्तो वर्षासु वीरासनमसेवत । नित्यं च शिशिरे काले जलमध्यप्रतिश्रयः ॥ ४ ॥
एवं वर्षसहस्राणि दश तस्यापचक्रमुः । धर्मे प्रयतमानस्य सत्पथे निष्ठितस्य च ॥ ५ ॥
विभीषणस्तु धर्मात्मा नित्यं धर्मपरः शुचिः । पञ्चवर्षसहस्राणि पादेनैकेन तस्थिवान् ॥ ६ ॥
समाप्ते नियमे तस्य ननृतुश्चाप्सरोगणाः । पपात पुष्पवर्षं च तुष्टुवुश्चापि देवताः ॥ ७ ॥
पञ्चवर्षसहस्राणि सूर्यं चैवान्ववर्तत । तस्थौ चोर्ध्वशिरोबाहुः स्वाध्याये धृतमानसः ॥ ८ ॥

४७-४८ ] ति० टी०—इति कृत्वा इति बुद्धिं कृत्वा । अध्यवस्य तथा निश्चित्य च ॥ ४७ ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे नवमः सर्गः ॥ ९ ॥

रा० टी०—प्राप्स्यामीति । तपसा कामं प्राप्स्याम्येव इति कृत्वा विचार्य अध्यवस्य निश्चित्य च गोकर्णस्याश्रममागच्छत् ॥ ४७ ॥

रा० टी०—स इति । राक्षसो रावणः तपश्चचार अत एव पितामहं ब्रह्माणमतोषयत् अत एव तुष्टस्स पितामहः जयावहान् वरान् ददौ ॥ ४८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे नवमः सर्गः ॥ ९ ॥

---

१ ] ति० टी०—भ्रातरो रावणकुम्भकर्णविभीषणाः ॥ १ ॥

रा० टी०—रावणतपोवर्णनफलकं रामप्रश्नमाह—अथेति । भ्रातरस्ते रावणादयः कीदृशं कथं च तपस्तेपुः इति मुनिमगस्त्यं रामोऽब्रवीत् ॥ १ ॥

२ ] ति० टी०—तांस्तान्धर्मविधीन्धर्मानुष्ठानानि ॥ २ ॥

रा० टी०—अगस्त्य इति । ते भ्रातरः यान् यान् धर्मविधीन् समाविशन् अकुर्वन् तान् तान् अगस्त्यो राममब्रवीत् ॥ २ ॥

३ ] ति० टी०—संक्षेपेणोक्तं प्रपञ्चयति—कुम्भकर्ण इत्यादि । 'वह्निभिः सूर्यपञ्चमैः' इति पाठे सूर्यः पञ्चमो येषां तैर्वह्निभिरित्यर्थः । 'पञ्चाग्नीन्परितः स्थितः' इति पाठेऽपि सूर्यसहिता एव पञ्चाग्नयः ॥ ३ ॥

रा० टी०—तदाकारमाह—कुम्भकर्ण इत्यादिभिः । यत्तो नियतचित्तः कुम्भकर्णः ग्रीष्मकाले परितश्चतुर्दिक्षु आकाशे च पञ्चाग्नीन् स्थितः स्थापितस्सन् तताप ॥ ३ ॥

४-७ ] ति० टी०—वामोरूपरि दक्षिणजङ्घां प्रतिष्ठाप्य स्थितिर्वीरासनम् । जलमध्यं प्रतिश्रय आवासो यस्य सः ॥४-७॥

रा० टी०—मेघेति । वर्षासु मेघाम्बुसिक्तः सन् वीरासनमसेवत शिशिरे तु नित्यं जलमध्यं प्रतिश्रय आश्रयो यस्य स आसीदिति शेषः ॥ ४ ॥

रा० टी०—एवमिति । तस्य कुम्भकर्णस्य एवं दशवर्षसहस्राणि अपचक्रमुः ॥ ५ ॥

रा० टी०—विभीषण इति । विभीषणस्तु पञ्चवर्षसहस्राणि एकेन पादेन तस्थिवान् ॥ ६ ॥

रा० टी०—समाप्त इति । तस्य विभीषणस्य नियमे समाप्ते सति अप्सरोगणाः ननृतुः देवतास्तुष्टुवुश्च ॥ ७ ॥

गो० टी०—मेघेति । वीरासनं नाम वामोरूपरि दक्षिणजङ्घां प्रतिष्ठाप्य स्थितिः ॥ ४—७ ॥

८ ] ति० टी०—सूर्यानुवृत्तिमाह—ऊर्ध्वशिरोबाहुरिति ॥ ८ ॥

---

१ चकारेति गो. पाठः । २ क्षुभिता इति गो. पाठः ।

एवं विभीषणस्यापि स्वर्गस्थस्येव नन्दने । दशवर्षसहस्राणि गतानि नियतात्मनः ॥ ९ ॥
दशवर्षसहस्रं तु निराहारो दशाननः । पूर्णे वर्षसहस्रे तु शिरश्चाग्नौ जुहाव सः ॥ १० ॥
एवं वर्षसहस्राणि नव तस्यातिचक्रमुः । शिरांसि नव चाप्यस्य प्रविष्टानि हुताशनम् ॥ ११ ॥
अथ वर्षसहस्रे तु दशमे दशमं शिरः । छेत्तुकामे दशग्रीवे प्राप्तस्तत्र पितामहः ॥ १२ ॥
पितामहस्तु सुप्रीतः सार्धं देवैरुपस्थितः । तव तावद्दशग्रीव प्रीतोऽस्मीत्यभ्यभाषत ॥ १३ ॥
शीघ्रं वरय धर्मज्ञ वरो यस्तेऽभिकाङ्क्षितः । कं ते कामं करोम्यद्य न वृथा ते परिश्रमः ॥ १४ ॥
अथाब्रवीद्दशग्रीवः प्रहृष्टेनान्तरात्मना । प्रणम्य शिरसा देवं हर्षगद्गदया गिरा ॥ १५ ॥
भगवन्प्राणिनां नित्यं नान्यत्र मरणाद्भयम् । नास्ति मृत्युसमः शत्रुरमरत्वमहं वृणे ॥ १६ ॥
एवमुक्तस्तदा ब्रह्मा दशग्रीवमुवाच ह । नास्ति सर्वामरत्वं ते वरमन्यं वृणीष्व मे ॥ १७ ॥
एवमुक्ते तदा राम ब्रह्मणा लोककर्तृणा । दशग्रीव उवाचेदं कृताञ्जलिरथाग्रतः ॥ १८ ॥
सुपर्णनागयक्षाणां दैत्यदानवरक्षसाम् । अवध्योऽहं प्रजाध्यक्ष देवतानां च शाश्वत ॥ १९ ॥
नहि चिन्ता ममान्येषु प्राणिष्वमरपूजित । तृणभूता हि ते मन्ये प्राणिनो मानुषादयः ॥ २० ॥
एवमुक्तस्तु धर्मात्मा दशग्रीवेण रक्षसा । उवाच वचनं देवः सह देवैः पितामहः ॥ २१ ॥
भविष्यत्येवमेतत्ते वचो राक्षसपुंगव । एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ २२ ॥
शृणु चापि वरो भूयः प्रीतस्येह शुभो मम । हुतानि यानि शीर्षाणि पूर्वमग्नौ त्वयानघ ॥ २३ ॥
पुनस्तानि भविष्यन्ति तथैव तव राक्षस । वितरामीह ते सौम्य वरं चान्यं दुरासदम् ॥ २४ ॥

---

रा० टी०–पञ्चेति । पञ्चवर्षसहस्राणि सूर्यमेव अन्ववर्तत अनुवर्तनाकारमाह ऊर्द्धशिरोबाहुस्सन् तस्थौ ॥ ८ ॥

गो० टी०–पञ्चेति । सूर्यं चैवेति चकारेण पूर्ववदेकपादस्थितिः समुच्चीयते ॥ ८ ॥

९–१६ ] ति० टी०–स्वर्गस्थस्य देवस्य नन्दन इवेत्यनेन तपःप्रवृत्तिसंतोषो दर्शितः ॥ ९–१६ ॥

रा० टी०–एवमिति । नन्दने स्वर्गस्थस्येव एवं वर्तमानस्य विभीषणस्यापि दशवर्षसहस्राणि गतानि एतदुपमालङ्कारेण विभीषणस्य वासनाराहित्यं सूचितम् ॥ ९ ॥

रा० टी०–दशेति । दशाननस्तु दशवर्षसहस्रं निराहारोऽभवदिति शेषः वर्षसहस्रे पूर्णे तु अग्नौ शिरो जुहाव ॥ १० ॥

रा० टी०–एवमिति । एवं प्रतिवर्षसहस्रं शिरोहवनप्रकारेण तस्य रावणस्य वर्षसहस्राणि अतिचक्रमुः अत एव नव शिरांसि हुताशनं प्रविष्टानि ॥ ११ ॥

रा० टी०–अथेति । दशमे वर्षसहस्रे दशग्रीवे दशमं शिरः छेत्तुकामे सति पितामहस्तत्र प्राप्तः ॥ १२ ॥

रा० टी०–पितामह इति । देवैस्सार्द्धमुपस्थितः पितामहः हे दशग्रीव ! तव प्रीतोऽस्मि अतो यस्तेऽभिकांक्षितो वरः तं शीघ्रं वरय ते कं कामं करोमि ते परिश्रमो वृथा न इत्यभ्यभाषत श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

रा० टी०–अथेति । दशग्रीवः शिरसा देवं प्रणम्याब्रवीत् ॥ १५ ॥

रा० टी०–तदाकारमाह–भगवन्निति । मरणादन्यत्र अन्यत् प्राणिनां भयं न अतो मृत्युसमश्शत्रुर्न अतोऽमरत्वमहं वृणे ॥ १६ ॥

गो० टी०–एवमिति । स्वर्गस्थस्य देवस्य नन्दन इवेत्यनेन तपःप्रवृत्तिसंतोष उक्तः ॥ ९—३० ॥

१७–१८ ] ति० टी०–मे मत्तः ॥ १७ ॥ १८ ॥

रा० टी०–एवमिति । सर्वामरत्वं ते नास्ति अतोऽन्यं वरं वृणीष्व ॥ १७ ॥

रा० टी०–एवमिति । ब्रह्मणा एवमुक्तो दशग्रीव इदमुवाच ॥ १८ ॥

१९–२२ ] ति० टी०–उक्तमेवं वरं सापेक्षमाह—सुपर्णेति ॥ १९–२२ ॥

रा० टी०–तदाकारमाह–सुपर्णेति । सुपर्णादीनामवध्योऽहं भवेयमिति शेषः ॥ १९ ॥

रा० टी०–ननु अन्येभ्यो भयसत्वे किमनया प्रार्थनयेत्यत आह–नहीति । ये मानुषादयः प्राकृता मनुष्यप्रभृतयः प्राणिनः ते ममाग्रे तृणभूता इत्यहं मन्ये अतोऽन्येषु प्राणिषु मम चिन्ता न ॥ २० ॥

रा० टी०–एवमिति । एवमुक्तः पितामहस्ते वचः अभिलषितमित्यर्थः भविष्यत्येव एवं वचनमुक्त्वा भूयोऽपरो वरो मम मत्तः शृणु इत्युवाच श्लोकद्वयमेकान्वयि ॥ २१ ॥ २२ ॥

२३–२४ ] ति० टी०–भूयोऽन्यः शुभो वरो दीयते तच्छृणु ॥ २३ ॥ २४ ॥

रा० टी०–तदाकारमाह–हुतानीति । यानि शीर्षाणि त्वया हुतानि तानि पुनस्तथैव भविष्यन्ति ॥ २३ ॥

छन्दतस्तव रूपं च मनसा यद्यथेप्सितम् । [ [1]भविष्यति न सन्देहो मद्वरात्तवराक्षस ] ॥
एवं पितामहोक्तं[2] च दशग्रीवस्य रक्षसः । ॥ २५ ॥
अग्नौ हुतानि शीर्षाणि पुनस्तान्युत्थितानि वै । एवमुक्त्वा तु तं राम दशग्रीवं पितामहः ॥ २६ ॥
विभीषणमथोवाच वाक्यं लोकपितामहः । विभीषण त्वया वत्स धर्मसंहितबुद्धिना ॥ २७ ॥
परितुष्टोऽस्मि धर्मात्मन्वरं वरय सुव्रत । विभीषणस्तु धर्मात्मा वचनं प्राह साञ्जलिः॥ २८ ॥
वृतः सर्वगुणैर्नित्यं चन्द्रमा रश्मिभिर्यथा । भगवन्कृतकृत्योऽहं यन्मे लोकगुरुः स्वयम् ॥ २९ ॥
प्रीतेन यदि दातव्यो वरो मे शृणु सुव्रत । परमापद्गतस्यापि धर्मे मम मतिर्भवेत् ॥ ३० ॥
अशिक्षितं च ब्रह्मास्त्रं भगवन्प्रतिभातु मे । या या मे जायते बुद्धिर्येषु येष्वाश्रमेषु च ॥ ३१ ॥
सा सा भवतु धर्मिष्ठा तं [3]तं धर्मं च पालये । एष मे परमोदार वरः परमको मतः ॥ ३२ ॥
नहि धर्माभिरक्तानां लोके किंचन दुर्लभम् । पुनः प्रजापतिः प्रीतो विभीषणमुवाच ह ॥ ३३ ॥
धर्मिष्ठ त्वं यथा वत्स तथा चैतद्भविष्यति । यस्माद्राक्षसयोनौ ते जातस्यामित्रनाशन ॥ ३४ ॥
नाधर्मे जायते बुद्धिरमरत्वं ददामि ते । इत्युक्त्वा कुम्भकर्णाय वरं दातुमव[4]स्थितम् ॥ ३५ ॥
प्रजापतिं सुराः सर्वे वाक्यं प्राञ्जलयोऽब्रुवन् । न तावत्कुम्भकर्णाय प्रदातव्यो वरस्त्वया ॥ ३६ ॥

---

रा० टी०—वितरामीति । मनसा यत्तवेप्सितं तद्रूपं तव छन्दतः इच्छयैव यथावद्भविष्यतीति शेषः इत्यन्यं वरं वितरामि ददामि ॥ २४ ॥

२५–२८ ] ति० टी०—अन्यं वरं च वितरामीत्युक्तं तमेवाह—छन्दत इति । मनसा यद्यथेप्सितं रूपं तत्तच्छन्दत इच्छामात्रेण भविष्यति ॥ २५–२८ ॥

रा० टी०—एवमिति । दशग्रीवस्य अग्नौ हुतानि शीर्षाणि पुनरुत्थितानि अभवन्निति शेषः ॥ २५ ॥

रा० टी०—एवमिति । लोकपितामह एवमुक्त्वा विभीषणमुवाच ॥ २६ ॥

रा० टी०—तदाकारमाह—विभीषणेति । हे विभीषण त्वयाहं परितुष्टः परितोषितोऽस्मि अतो वरं वरय ॥ २७ ॥

रा० टी०—विभीषण इति । सर्वगुणैर्वृतो विभीषणः वचनं प्राह ॥ २८ ॥

२९ ] ति० टी०—हे भगवन्, लोकगुरुरुत्पत्तिज्ञप्तिदाता भवान्यन्मह्यं प्रीत एतेनैवाहं कृतकृत्योऽस्मि, सर्वगुणैः पुरुषार्थैर्वृतश्चास्मि । त्वत्प्रीतेरेव सर्वपुरुषार्थसाधनत्वात् ॥ २९ ॥

रा० टी०—तदाकारमाह—भगवन्निति । लोकगुरुः भवान् यत्स्वयं मे समीपमागत इति शेषः अतोऽहं कृतकृत्यः अतः प्रीतेन भवता यदि वरो दातव्यः तर्हि शृणु ॥ २९ ॥

३० ] ति० टी०—अथापि यदि प्रसन्नेन त्वयावश्यं कश्चिद्वरो दातव्यस्तदा तं वरं शृणु । परमापद्गतस्य सांसारिकव्यवहारतः परमामापदं प्राप्तस्यापि मम धर्मे नारायणे मतिर्भवेत् । 'रामो विग्रहवान्धर्मः' इत्युक्तेरत्र धर्मपदेन नारायणः । अन्यथा 'सा सा भवतु धर्मिष्ठ' इत्यनेन पौनरुक्त्यं स्यात् ॥ ३० ॥

रा० टी०—तदाकारमाह—परमेति । परमापद्गतस्यापि मम मतिः धर्मे एव भवेत् अशिक्षितमपि ब्रह्मास्त्रं मे प्रतिभातु ॥ ३० ॥

गो० टी०—परमेति श्लोकद्वयमेकं वाक्यम् । ब्रह्मास्त्रं ब्रह्मास्त्रमन्त्रम् । पालये पालयेयम् ॥ ३१—३८ ॥

३१ ] ति० टी०—अशिक्षितम् । सद्गुरूपदेशं विनापीत्यर्थः । ब्रह्मास्त्रं ब्रह्मविद्या । येति । एतद्वरणमशेषब्रह्मविद्यासिद्धिप्रतिबन्धकनिवृत्तये ॥ ३१ ॥

रा० टी०—या येति । येषु येषु आश्रमेषु ब्रह्मचर्यादिषु या या मे बुद्धिर्जायते जायेत सा सा धर्मिष्ठा तत्तदाश्रमोचितधर्मविशिष्टा भवतु अत एव तं तं धर्ममहं पालये पालयेयम् ॥ ३१ ॥

३२ ] ति० टी०—एतल्लाभाय तत्तद्धर्मं च पालये पालयेयम् । परमोदार परमदातः ॥ ३२ ॥

रा० टी०—ननु ऐश्वर्यादिः कुतो न प्रार्थ्यते इत्यत आह—एष इति । हि यतः धर्माभिरक्तानां किंचन न दुर्लभमतः एष एव वरः परमकः अत्युत्तमो मे मतः ॥ ३२ ॥

३३ ] ति० टी०—ईदृशस्य वरस्य परमकत्वं स्वयमेवाह—नहीति ॥ ३३ ॥

रा० टी०—पुनरिति । प्रजापतिः विभीषणं पुनरुवाच तदाकारमाह हे धर्मिष्ठ ! यथा त्वं तथैव एतत्तव प्रार्थनमतः एतद् भविष्यत्येव ॥ ३३ ॥

३४–३६ ] ति० टी०—राक्षसयोनौ जातस्यापि यतोऽधर्मे बुद्धिर्न जायते, ततः प्रीतोऽहममरत्वं ते ददामि । एवमप्रार्थितममरत्वं ब्रह्मणः सकाशाद्धर्मबलाल्लब्धं विभीषणेनेति निष्कामतया देवोपासनं सर्वार्थसाधनमिति बोध्यम् ॥ ३४–३६ ॥

रा० टी०—तस्मादिति । यस्मात् राक्षसयोनौ जात-

---

१ इदमर्धमाधिकं गो. पाठे । २ उक्तस्येति गो. रा. पाठः । ३ त्विति गो. पाठः । ४ उपेति गो. पाठः ।

जानीषे हि यथा लोकांस्त्रासयत्येष दुर्मतिः । नन्दनेऽप्सरसः सप्त महेन्द्रानुचरा दश ॥ ३७ ॥
अनेन भक्षिता ब्रह्मन्नृषयो मानुषास्तथा । अलब्धवरैपूर्णेन यत्कृतं राक्षसेन तु ॥ ३८ ॥
यैद्येष वरलब्धः स्याद्भक्षयेद्भुवनत्रयम् । वरव्याजेन मोहोऽस्मै दीयताममितप्रभ ॥ ३९ ॥
लोकानां स्वस्ति चैवं स्याद्भवेदस्य च संमतिः । एवमुक्तः सुरैर्ब्रह्माचिन्तयत्पद्मसंभवः ॥ ४० ॥
चिन्तिता चोपतस्थेऽस्य पार्श्वं देवी सरस्वती । प्राञ्जलिः सा तु पार्श्वस्था प्राह वाक्यं सरस्वती॥४१॥
ईयमस्म्यागता देव किं कार्यं करवाण्यहम् । प्रजापतिस्तु तां प्राप्तां प्राह वाक्यं सरस्वतीम्॥ ४२ ॥
वाणि त्वं राक्षसेन्द्रस्य भव वर्ग्देवतेप्सिता । तथेत्युक्त्वा प्रविष्टा सा प्रजापतिरथाब्रवीत् ॥ ४३ ॥
कुम्भकर्ण महाबाहो वरं वरय यो मतः । कुम्भकर्णस्तु तद्वाक्यं श्रुत्वा वचनमब्रवीत् ॥ ४४ ॥
स्वप्तुं वर्षाण्यनेकानि देवदेव ममेप्सितम् । एवमस्त्विति तं चोक्त्वा प्रायाद्ब्रह्मा सुरैः समम्॥ ४५ ॥
देवी सरस्वती चैव राक्षसं तं जहौ पुनः । ब्रह्मणा सह देवेषु गतेषु च नभःस्थलम् ॥ ४६ ॥

---

स्यापि ते बुद्धिः अधर्मे न जायते तस्मात् अमरत्वं मरणराहित्यं ते ददामि ॥ ३४ ॥

रा० टी०—इतीति । कुम्भकर्णाय वरं दातुमवस्थितं प्रजापतिं सर्वे सुराः अब्रुवन् ॥ ३५ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । एष कुम्भकर्णः यथा लोकान् त्रासयति तथा त्वं जानीषे तस्मात् कुम्भकर्णाय वरस्त्वया न दातव्यः ॥ ३६ ॥

३७–३८ ] ति० टी०—एष दुर्मतिर्लोकाँल्लोकाँस्त्रासयतीति जानीषे । तदेव दर्शयति—नन्दने इति ॥ ३७ ॥ ३८ ॥

रा० टी०—त्रासनमेवाह—नन्दन इति । नन्दने इन्द्रवने सप्ताप्सरसः दश महेन्द्रानुचराश्च अनेन कुम्भकर्णेन भक्षिताः ऋषयो मानुषाश्च भक्षिताः बहव इति शेषः ॥ ३७ ॥

रा० टी०—अलब्धेति । अलब्धवरपूर्णेन न लब्धो वरः पूर्णः पूर्णावस्था च येन तेन राक्षसेन कुम्भकर्णेन यद्यस्मात् हेतोः कृतं बहूनां भक्षणमिति शेषः तस्माद्धेतोः यद्येष पूर्णावस्थो वरलब्धः स्यात् तर्हि भुवनत्रयं भक्षयेत् ॥ ३८ ॥

गो० टी०—अलब्धवरपूर्वेण पूर्वमलब्धवरेण कुम्भकर्णेन यत् भक्षणात्मकं कर्म कृतं तत् तस्मात् कारणात् वरलब्धः लब्धवरः स्याद्यदि भुवनत्रयमपि भक्षयेदित्यर्थः ॥ ३९ ॥

३९ ] ति० टी०—मोहोऽज्ञानम् ॥ ३९ ॥

रा० टी०—ननु किं कर्तव्यमित्यत आह—वरेति । वरव्याजेन अस्मै मोहः विवेकाभावो दीयताम् एवं सति लोकानां स्वस्ति स्यात् अस्य कुम्भकर्णस्य सम्मतिस्सम्माननं च भवेत् ३९

गो० टी०—वरव्याजेनेति । मोहः अज्ञानम् । एवं मोहस्यैव प्रदाने अस्य च सन्नतिः शिक्षा भवेत् ॥ ४० ॥

४०–४२ ] ति० टी०—एवं मोहदानेनैव लोकानां स्वस्ति स्यात्, अस्य संमतिः संमाननं च स्यात् । अचिन्तयत् । देवीमिति शेषः ॥ ४०–४२ ॥

रा० टी०—एवमिति । एवमुक्तो ब्रह्मा अचिन्तयत् सरस्वतीमिति शेषः अत एव चिन्तिता सरस्वती अस्य ब्रह्मणः पार्श्वमुपतस्थे ॥ ४० ॥

रा० टी०—प्रांजलिरिति । अहमिदमागतास्मि किं कार्यं करवाणि इति वाक्यं पार्श्वस्था सरस्वती प्राह ॥ ४१ ॥

गो० टी०—एवमिति । अचिन्तयत् । देवीमिति शेषः ॥ ४१ ॥ ४२ ॥

रा० टी०—प्रजापतिरिति । हे वाणि त्वं देवतेप्सिता देवानामीप्सितप्रदा सती राक्षसेन्द्रस्य वाग्भव इति वाक्यं प्रजापतिः सरस्वतीं प्राह ॥ ४२ ॥

गो० टी०—प्रजापतिरिति । भव या देवतेप्सिता । यादृग्रूपा दैवतैः काङ्क्षिता तादृशी भवेत्यर्थः ॥ ४३ ॥

४३ ] ति० टी०—अस्यास्ये देवतेप्सिता देवानामिष्टा वाग्भव । याचतः कुम्भकर्णस्य वदनाद्देवानुकूला निःसरेत्यर्थः । अथाब्रवीत् । सरस्वतीप्रवेशानन्तरमित्यर्थः ॥ ४३ ॥

रा० टी०—तथेति । सा सरस्वती तथेत्युक्त्वा प्रविष्टा कुम्भकर्णस्य मुखे इति शेषः प्रजापतिस्तु यो मत ईप्सितः तं वरं वरय इति वाक्यमब्रवीत् ॥ ४३ ॥

गो० टी०—तथेति । प्रविष्टा सा देवतोक्तरूपा प्रविष्टेत्यर्थः ॥ ४४—४८ ॥

४४ ] ति० टी०—तद्वाक्यं ब्रह्मवाक्यम् ॥ ४४ ॥

रा० टी०—कुम्भकर्ण इति । हे देवदेव अनेकानि एकभिन्नानि कपिञ्जलाधिकरणन्यायेन त्रीणीत्यर्थः वर्षाणि स्वप्तुं ममेप्सितमस्तीति वचनमब्रवीत् एतेन वरान्तरयाचनाभावमात्रेणैव देवानां सन्तोषो जात इति ध्वनितम् अत एव युद्धकाण्डोक्तः तस्मात्त्वमद्यप्रभृति मृतकल्पश्शयिष्यस इति पुनर्ब्रह्मशापस्संगच्छते अत एव रावणप्रार्थनानन्तरकालिकं शयिताह्येष षण्मासमेकाहं जागरिष्यतीति ब्रह्मप्रसादवचनं सानुकूलम् एतेन अत्र षण्मासादर्वाक् जागरणं नेति नियमः तदधिकापि निद्रा भवत्येवेति वरस्वरूपं बोध्यमिति भट्टोक्तिश्चिन्त्या तस्य वरान्तरत्वात् अत्रत्यवरबोधकश्लोकेनेदृशार्थालाभाच्चेति दिक् ॥ ४४ ॥

४५–४६ ] ति० टी०—एवमित्यत्र षण्मासादर्वाग्जाग-

---

१ पूर्वेणेति गो. पाठः । २ तदेष इति गो. पाठः । ३ इदमिति रा. पा. । ४ येति गो. पाठः ।

विमुक्तोऽसौ सरस्वत्या स्वां संज्ञां च ततो गतः । कुम्भकर्णस्तु दुष्टात्मा चिन्तयामास दुःखितः ॥ ४७ ॥
ईदृशं किमिदं वाक्यं ममाद्य वदनाच्च्युतम् । अहं व्यामोहितो देवैरिति मन्ये तदागतैः ॥ ४८ ॥
एवं लब्धवराः सर्वे भ्रातरो दीप्ततेजसः । श्लेष्मातकवनं गत्वा तत्र ते न्यवसन्सुखम् ॥ ४९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे दशमः सर्गः ॥ १० ॥

## एकादशः सर्गः ।

नरवाहनाधीना लङ्केयमस्मदीया त्वया पुनर्ग्रहीतव्येति मातामहेनोपदिष्टो रावणः कुबेरे पूज्यभावात्तदनङ्गीकुर्वन्नपि प्रहस्तोपदेशात्पुनर्यक्षेश्वराल्लङ्कामात्मसात्कृतवान् ।

सुमाली वरलब्धांस्तु ज्ञात्वा चैतान्निशाचरान् । उदतिष्ठद्भयं त्यक्त्वा सानुगः स रसातलात् ॥ १ ॥
मारीचश्च प्रहस्तश्च विरूपाक्षो महोदरः । उदतिष्ठन्सुसंरब्धाः सचिवास्तस्य रक्षसः ॥ २ ॥
सुमाली सचिवैः सार्धं वृतो राक्षसपुंगवैः । अभिगम्य दशग्रीवं परिष्वज्येदमब्रवीत् ॥ ३ ॥
दिष्ट्या ते वत्स संप्राप्तश्चिन्तितोऽयं मनोरथः । यस्त्वं त्रिभुवनश्रेष्ठाल्लब्धवान्वरमुत्तमम् ॥ ४ ॥
यत्कृते च वयं लङ्कां त्यक्त्वा याता रसातलम् । तद्गतं नो महाबाहो महद्विष्णुकृतं भयम् ॥ ५ ॥
असकृत्तद्भयाद्भग्नाः परित्यज्य स्वमालयम् । विद्रुताः सहिताः सर्वे प्रविष्टाः स्म रसातलम् ॥ ६ ॥

र्णं नेति नियमः । तदधिका निद्रा तु भवत्येवेति वरस्वरूपं बोध्यम् । अत एव 'षण्मासान्स्वपिति' इति पूर्वं विभीषणोक्त्या वर्षाण्यनेकानीति कुम्भकर्णोक्त्या च न पूर्वोक्तस्य विरोधः ॥ ४५ ॥ ४६ ॥

रा० टी०—एवमिति । ब्रह्मा एवमस्त्वित्युक्त्वा प्रायात् सरस्वती तु तं राक्षसं जहौ ॥ ४५ ॥

रा० टी०—ब्रह्मणेति । देवेषु नभःस्थलं गतेषु सत्सु सरस्वत्या विमुक्तः कुम्भकर्णः स्वां संज्ञां प्रकृतिं गतोऽभवदिति शेषः ॥ ४६ ॥

४७-४८ ] ति० टी०—स्वां संज्ञां यथाप्राप्तस्वबुद्धिं गतः प्राप्तः ॥ ४७ ॥ ४८ ॥

रा० टी०—कुम्भकर्ण इति । ईदृशं वाक्यं मम वदनात् किं किमर्थं च्युतमिति कुम्भकर्णः चिन्तयामास ॥ ४७ ॥

रा० टी०—तन्निश्चयमाह—अहमिति । देवैरहं व्यामोहित इति मन्ये अहं पृथक् ॥ ४८ ॥

४९ ] ति० टी०—श्लेष्मातकवनं तत्प्रचुरं पितुस्तपोवनम् ॥ ४९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे दशमः सर्गः ॥ १० ॥

रा० टी०—एवमिति । लब्धवरास्सर्वे भ्रातरः श्लेष्मातकवनं गत्वा तत्र सुखं न्यवसन् ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे दशमः सर्गः ॥ १० ॥

गो० टी०—अहमिति । श्लेष्मातकवनं तत्प्रचुरं पितुस्तपोवनमित्यर्थः ॥ ४९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने दशमः सर्गः ॥ १० ॥

१ ] ति० टी०—अथ धनदमपसार्य रावणस्य लङ्काप्रवेशः—सुमालीति ॥ १ ॥

रा० टी०—रावणादीनां लब्धवरानन्तरकालिकं वृत्तान्तमाह—सुमालीत्यादिभिः । सुमाली एतान् रावणादीन् वरलब्धान् ज्ञात्वा अत एव भयं त्यक्त्वा रसातलादुदतिष्ठत् ॥ १ ॥

२-४ ] ति० टी०—तस्य सचिवाः सुमालिनः सचिवाः २-४

रा० टी०—मारीच इति । तस्य सुमालिनः सचिवाः मारीचादयः उदतिष्ठन् ॥ २ ॥

रा० टी०—सुमालीति । राक्षसपुङ्गवैस्तैस्सुमाली सचिवैस्सार्द्धं दशग्रीवमभिगम्य परिष्वज्य च इदमब्रवीत् ॥ ३ ॥

रा० टी०—तदाकारमाह—दिष्ट्येत्यादिभिः । दिष्ट्या भाग्यवशेन यस्त्वं त्रिभुवनश्रेष्ठात् उत्तमं वरं लब्धवान् तेन ते त्वया चिन्तितोऽयं मनोरथः संप्राप्तः ॥ ४ ॥

५-६ ] ति० टी०—यत्कृते यद्विष्णुभयनिमित्तत्तद्भयं नोऽस्माकं गतम् ॥ ५ ॥ ६ ॥

रा० टी०—यदिति । यत्कृते वयं रसातलं याताः तद्विष्णुकृतं नोऽस्माकं भयं गतम् ॥ ५ ॥

रा० टी०—असकृदिति । तस्य विष्णोर्भयात् असकृत् भग्नाः अत एव स्वमालयं परित्यज्य विद्रुताः पलायिता वयं सर्वे रसातलं प्रविष्टाः स्म ॥ ६ ॥

१ भीता इति गो. पाठः ।

असमदीया च लङ्केयं नगरी राक्षसोषिता । निवेशिना तत्र भ्रात्रा धनाध्यक्षेण धीमता ॥ ७ ॥
यदि नामात्र शक्यं स्यात्साम्ना दानेन वानघ । तरसा वा महाबाहो प्रत्यानेतुं कृतं भवेत् ॥ ८ ॥
त्वं चै लङ्केश्वरस्तात भविष्यसि न संशयः । त्वया राक्षसवंशोऽयं निमग्नोऽपि समुद्धृतः ॥ ९ ॥
सर्वेषां नः प्रभुश्चैव भविष्यसि महाबल । अथाब्रवीद्दशग्रीवो मातामहमुपस्थितम् ॥ १० ॥
वित्तेशो गुरुरस्माकं नार्हसे वक्तुमीदृशम् । साम्ना हि राक्षसेन्द्रेण प्रत्याख्यातो गरीयसा ॥ ११ ॥
किंचिन्नाह तदा रक्षो ज्ञात्वा तस्य चिकीर्षितम् । कस्यचित्त्वथ कालस्य वसन्तं रावणं ततः ॥ १२ ॥
[ उक्तवन्तं तथा वाक्यं दशग्रीवं निशाचरः । ]
प्रहस्तः प्रश्रितं वाक्यमिदमाह स रावणम् । दशग्रीव महाबाहो नार्हसे वक्तुमीदृशम् ॥ १३ ॥
सौभ्रात्रं नास्ति शूराणां शृणु चेदं वचो मम । अदितिश्च दितिश्चैव भगिन्यौ सहिते हि ते ॥ १४ ॥
भार्ये परमरूपिण्यौ कश्यपस्य प्रजापतेः । अदितिर्जनयामास देवांस्त्रिभुवनेश्वरान् ॥ १५ ॥
दितिस्त्वजनयद्दैत्यान्कश्यपस्यात्मसंभवान् । दैत्यानां किल धर्मज्ञ पुरेयं सवनार्णवा ॥ १६ ॥
सपर्वता मही वीर तेऽभवन्प्रभविष्णवः । निहत्य तांस्तु समरे विष्णुना प्रभविष्णुना ॥ १७ ॥
देवानां वशमानीतं त्रैलोक्यमिदमव्ययम् । नैतदेको भवानेव करिष्यति विपर्ययम् ॥ १८ ॥
सुरासुरैराचरितं तत्कुरुष्व वचो मम । एवमुक्तो दशग्रीवः प्रहृष्टेनान्तरात्मना ॥ १९ ॥

---

**गो० टी०—यत्कृत इति** । महद्विष्णुकृतं यद्भयं तन्निरस्तमित्यर्थः ॥ ५—७ ॥

६ ] **ति० टी०—निवेशिता** अधिष्ठिता ॥ ७ ॥

**रा० टी०—अस्मदीयेति** । या धनाध्यक्षेण निवेशिता सेयं लंकास्मदीया अत एव पूर्वं राक्षसैरुषिता ॥ ७ ॥

८-१० ] **ति० टी०—सामादिना** लङ्कां प्रत्यानेतुं यदि नाम शक्यं स्यात्तदा नः कार्यं कृतं भवेत् ॥ ८—१० ॥

**रा० टी०—यदीति** । साम्ना दानेन वा तरसा शौर्येण वा लंका प्रत्यानेतुमस्मान् प्रापयितुं यदि शक्यं स्यात् तदा कृतमस्मत्प्रयोजनं साधितं स्यात् ॥ ८ ॥

**गो० टी०—यदीत्यादि** । सामादिना लङ्का प्रचालयितुं यदि नाम शक्यं स्यात्तदा नः कार्यं भवेदित्यर्थः ॥ ८—११ ॥

**रा० टी०—**ननु तेन मम किं सेत्स्यतीत्यत आह—**त्वमिति** । त्वं लंकेश्वरो भविष्यसि अत एव निमग्नोयं राक्षसवंशः त्वया समुद्धृतः अतः सर्वेषां नः प्रभुर्भविष्यसि सार्द्धश्लोक एकान्वयी ९

**रा० टी०—अथेति** । वित्तेशः अस्माकं गुरुः अतः ईदृशं वक्तुं नार्हसि इति वचनं दशग्रीवः मातामहं सुमालिनमब्रवीत् १०

११-१३ ] **ति० टी०—नार्हसे** । ज्येष्ठनिरसनं वक्तुं नार्हसीत्यर्थः ॥ ११—१३ ॥

**रा० टी०—साम्नेति** । राक्षसेन्द्रेण रावणेन साम्ना प्रत्याख्यातः सुमाली रक्षः तस्य रावणस्य चिकीर्षितं ज्ञात्वा किंचिन्नाह ॥ ११ ॥

**रा० टी०—कस्य चिदिति** । कस्य चित्कालस्यापगमे सतीति शेषः वसन्तं रावणं प्रश्रितं वाक्यं प्रहस्त आह ॥ १२ ॥

**रा० टी०—**तदाकारमाह—**दशग्रीवेत्यादिभिः** । यत शूराणां सौभात्रं नास्ति अतः ईदृशं वक्तुं नार्हसे सुमालिनं प्रतीति शेषः ॥ १३ ॥

१४-१६ ] **ति० टी०—अदितिदिती** भिन्नोदरभगिन्यौ ते सहिते हिते परस्परानुरक्ते भूत्वा कश्यपस्य भार्ये अभूतामिति शेषः ॥ १४—१६ ॥

**रा० टी०—**तत्र शिष्टाचारं प्रमाणयति—**अदितिरिति** अदितिर्दितिश्च कश्यपस्य भार्ये बभूवतुरिति शेषः ॥ १४ ॥

**रा० टी०—अदितिरिति** । अदितिर्देवान् जनयामास दितिस्तु दैत्यान् जनयत् अजनयत् ॥ १५ ॥

**रा० टी०—दैत्यानामिति** । पुरा इयं मही दैत्यानामभवदिति शेषः अत एव ते दैत्याः प्रभविष्णवः प्रभाववन्त इत्यर्थः अभवन् ॥ १६ ॥

**गो० टी०—अदितिश्चेति** । सहिते हिते अन्योन्यानुरक्ते ॥ १५—१८ ॥

१७ ] **ति० टी०—**ते दैत्याः पुरा प्रभविष्णवोऽभवन्पश्चाद्विष्णुना तान्दैत्यान्निहत्य ॥ १७ ॥

**रा० टी०—निहत्येति** । विष्णुना दैत्यान् निहत्य इदं त्रैलोक्यं देवानां वशमानीतम् ॥ १७ ॥

१८-१९ ] **ति० टी०—**विपर्ययं भ्रातृद्रोहरूपम् ॥ १८ ॥ १९ ॥

**रा० टी०—नेति** । एतत् परस्वामिकपुरादिस्वाधीनीकरणं विपर्ययमेको भवानेव न करिष्यति किं तु सुरासुरैरप्याचरितं तत्तस्मात् हेतोः मम वचनं पुरस्वाधीनीकारकवाक्यं कुरुष्व ॥ १८ ॥

---

१ धिष्ठितेति गो. पाठः । २ त्विति गो. पाठः । ३ अपीति गो. पाठः । ४ इदमर्धमधिकं गो. पु. । ५ कारणमिति गो. पाठः । ६ पुत्रानिति गो. पाठः । ७ पुरेति गो. पाठः । ८ सवनार्णवेति गो. रा. पाठः ।

चिन्तयित्वा मुहूर्तं वै बाढमित्येव सोऽब्रवीत् । स तु तेनैव हर्षेण तस्मिन्नहनि वीर्यवान् ॥ २० ॥
वनं गतो दशग्रीवः सह तैः क्षणदाचरैः । त्रिकूटस्थः स तु तदा दशग्रीवो निशाचरः ॥ २१ ॥
प्रेषयामास दौत्येन प्रहस्तं वाक्यकोविदं[1] । प्रहस्त शीघ्रं गच्छ त्वं ब्रूहि नैर्ऋतपुंगवम् ॥ २२ ॥
वचसा मम वित्तेशं सामपूर्वमिदं वचः । इयं लङ्का पुरी राजन्राक्षसानां महात्मनाम् ॥ २३ ॥
त्वया निवेशिता सौम्य नैतद्युक्तं तवानघ । तद्भवान्यदि नो ह्यद्य दद्यादतुलविक्रम ॥ २४ ॥
कृता भवेन्मम प्रीतिर्धर्मश्चैवानुपालितः । स तु गत्वा पुरीं लङ्कां धनदेन सुरक्षिताम् ॥ २५ ॥
अब्रवीत्परमोदारं वित्तपालमिदं वचः । प्रेषितोऽहं तव भ्रात्रा दशग्रीवेण सुव्रत ॥ २६ ॥
त्वत्समीपं महाबाहो सर्वशस्त्रभृतां वर । [ तच्छ्रूयतां महाप्राज्ञ सर्वशास्त्रविशारद[3] ॥
वचनं मम वित्तेश यद्ब्रवीति दशाननः ॥ ]
॥ २७ ॥
इयं किल पुरी रम्या सुमालिप्रमुखैः पुरा । भुक्तपूर्वा विशालाक्ष राक्षसैर्भीमविक्रमैः ॥ २८ ॥
तेन विज्ञाप्यते सोऽयं सांप्रतं विश्रवात्मज । तदेषा दीयतां तात याचतस्तस्य सामतः ॥ २९ ॥
प्रहस्तादपि संश्रुत्य देवो वैश्रवणो वचः । प्रत्युवाच प्रहस्तं तं वाक्यं वाक्यविदां वरः ॥ ३० ॥
दत्ता ममेयं पित्रा तु लङ्का शून्या निशाचरैः । निवेशिता[4] च मे रक्षो दानमानादिभिर्गुणैः ॥ ३१ ॥
ब्रूहि गच्छ दशग्रीवं पुरी राज्यं च यन्मम । तवाप्येतन्महाबाहो भुङ्क्ष्व राज्यमकण्टकम् ॥ ३२ ॥

---

रा० टी०–एवमिति । दशग्रीवः बाढमित्येवं वचनमब्रवीत् ॥ १९ ॥

गो० टी०–नैतदिति । विपर्ययं भ्रातृद्रोहरूपम् सुराछरैराचरितं मार्गम् ॥ १९—२० ॥

२० ] ति० टी०–तस्मिन्नहनि प्रहस्तोपदेशदिन एव ॥ २० ॥

रा० टी०–स इति । तेन लंकापुरं प्राप्स्यामीति निश्चयजनितेन हर्षेणोपलक्षितो दशग्रीवः तैः प्रहस्तादिभिः क्षणदाचरैस्सह वनं गतः ॥ २० ॥

गो० टी०–स त्विति । तस्मिन्नहनि प्रहस्तोपदेशाहनि वनं श्लेष्मातकवनम् ॥ २१ ॥

२१–२३ ] ति० टी०–वनं लङ्कासमीपवनं गतस्त्रिकूटस्थो भूत्वा प्रहस्तं दौत्येन प्रेषयामास ॥ २१—२३ ॥

रा० टी०–त्रिकूटस्थ इति । त्रिकूटस्थो दशग्रीवः प्रहस्तं दौत्येन प्रेषयामास ॥ २१ ॥

गो० टी०–त्रिकूटस्थ इति । त्रिकूटस्थो भूत्वा प्रहस्तं दूत्येन प्रेषयामास ॥ २२ ॥

रा० टी०–प्रेषणप्रकारमाह–प्रहस्तेत्यादिभिः । हे प्रहस्त मम वचसा मत्संदेशत्वेन वित्तेशं सामपूर्वमिदं वचो ब्रूहि ॥ २२ ॥

रा० टी०–संदेशाकारमाह–इयमिति द्वाभ्याम् । रक्षसामियं लंका त्वया निवेशिता अधिष्ठिता एतत्तव न युक्तम् ॥ २३ ॥

गो० टी०–प्रहस्तेति । नैर्ऋतपुङ्गवं कुबेरम् । लङ्कायां पूर्वस्थितनैर्ऋताधिपत्यात् ॥ २३—३७ ॥

२४–२६ ] ति० टी०–त्वया निवेशिताधिष्ठिता । तां यदि भवान्नो दद्यात्तर्हि मम प्रीतिः कृता भवेत् ॥ २४—२६ ॥

२७ ] ति० टी०–दशाननो यद्ब्रवीति तद्वचनं मम मुखाच्छृण्विति शेषः ॥ २७ ॥

रा० टी०–तदिति । तद्राक्षसीयत्वात् हेतोः यदि नोऽस्मभ्यं भवान् दद्यात् तर्हि मम प्रीतिः कृता भवेत् ॥ २४ ॥

रा० टी०–स इति । सः रावणेन शिक्षितः प्रहस्तः लंकां गत्वा वित्तपालमिदं वचोऽब्रवीत् ॥ २५ ॥

रा० टी०–तदाकारमाह–प्रेषित इति । दशग्रीवेण त्वत्समीपमहं प्रेषितः अतः यद्दशाननो ब्रवीति अब्रवीत् तदेव मम वचनमवेहीति शेषः सार्द्धश्लोक एकान्वयी ॥ २६—२७ ॥

२९–३२ ] ति० टी०–तेनेति । येन पूर्वं राक्षसैर्भुक्ता तेन हेतुना सांप्रतं दीयताम् । सोऽयमर्थो विज्ञाप्यते ॥ २९—३२ ॥

रा० टी०–तद्वचनाकारमाह—इयमिति द्वाभ्याम् । इयं लंका राक्षसैः भुक्तपूर्वा अभवदिति शेषः अतः तेन रावणेन सः लंकारूपोऽयमर्थः विज्ञाप्यते याच्यते इत्यर्थः । तत्तस्माद्धेतोः एषा लंका याचतो रावणस्य दीयतां श्लोकद्वयमेकान्वयि ॥ २८—२९ ॥

रा० टी०–प्रहस्तादिति । वैश्रवणः प्रहस्तात् संश्रुत्य प्रहस्तं प्रत्युवाच ॥ ३० ॥

रा० टी०–तदाकारमाह—दत्तेति सार्द्धद्वाभ्याम् । रक्षो हे रावण निशाचरैश्शून्या इयं लंका मम मम पित्रा दत्ता अत एव दानमानादिभिर्गुणैर्निवेशिता यथायोग्यं संस्थापिता च ३१

रा० टी०–ब्रूहीति । यत् मम पुरी राज्यं च तदेतत्तवापि अतः अकण्टकं यथा भवति तथा भुङ्क्ष्व ॥ ३२ ॥

---

१ कोविदमिति गो. पाठः । २ इदमर्धमधिकं गो. पाठे । ३ विशारद इति गो. पाठः । ४ निवासिते च मे यक्षैरिति गो. पाठः ।

अविभक्तं त्वया सार्धं राज्यं यच्चापि मे वसु। एवमुक्त्वा धनाध्यक्षो जगाम पितुरन्तिकम्॥ ३३ ॥
अभिवाद्य गुरुं प्राह रावणस्य यदीप्सितम्। एष तात दशग्रीवो दूतं प्रेषितवान्मम ॥ ३४ ॥
दीयतां नगरी लङ्का पूर्वं रक्षोगणोषिता। मयात्र यदनुष्ठेयं तन्ममाचक्ष्व सुव्रत ॥ ३५ ॥
ब्रह्मर्षिस्त्वेवमुक्तोऽसौ विश्रवा मुनिपुंगवः। प्राञ्जलिं धनदं प्राह शृणु पुत्र वचो मम ॥ ३६ ॥
दशग्रीवो महाबाहुरुक्तवान्मम संनिधौ। मया निर्भर्त्सितश्चासीद्बहुशोक्तः सुदुर्मतिः ॥ ३७ ॥
स क्रोधेन मया चोक्तो ध्वंससे च पुनः पुनः। श्रेयोऽभियुक्तं धर्म्यं च शृणु पुत्र वचो मम ॥ ३८ ॥
वरप्रदानसंमूढो मान्यामान्यं सुदुर्मतिः। न वेत्ति मम शापाच्च प्रकृतिं दारुणां गतः ॥ ३९ ॥
तस्माद्गच्छ महाबाहो कैलासं धरणीधरम्। निवेशय निवासार्थं त्यक्त्वा लङ्कां सहानुगः ॥ ४० ॥
तत्र मन्दाकिनी रम्या नदीनामुत्तमा नदी। काञ्चनैः सूर्यसंकाशैः पङ्कजैः संवृतोदका ॥ ४१ ॥
कुमुदैरुत्पलैश्चैव अन्यैश्चैव सुगन्धिभिः। तत्र देवाः सगन्धर्वाः साप्सरोरगकिंनराः ॥ ४२ ॥
विहारशीलाः सततं रमन्ते सर्वदाश्रिताः। नहि क्षमं तवानेन वैरं धनद रक्षसा ॥
जानीषे हि यथानेन लब्धः परमको वरः ॥ ॥ ४३ ॥
एवमुक्तो गृहीत्वा तु तद्वचः पितृगौरवात्। सदारपुत्रः सामात्यः सवाहनधनो गतः ॥ ४४ ॥
प्रहस्तोऽथ दशग्रीवं गत्वा वचनमब्रवीत्। प्रहृष्टात्मा महात्मानं सहामात्यं सहानुजम् ॥ ४५ ॥

---

३३-३६ ] ति० टी०-मम राज्यं वसु च त्वया विभक्तमस्त्विति शेषः। एवं त्वदीयमपि मयेति ॥ ३३—३६ ॥

रा० टी०-अभेदे हेतुमाह—अविभक्तमिति। मे राज्यं वसु च मया अविभक्तमेवमुक्त्वा धनाध्यक्षः पितुरन्तिकं जगाम ॥ ३३ ॥

रा० टी०-अभिवाद्येति। गुरुं पितरमभिवाद्य रावणस्य यदीप्सितं तत्प्राह अर्द्धं पृथक् ईप्सिताकारमाह—एष इति। दशग्रीवः मम समीपे दूतं प्रेषितवान् तत्प्रयोजनमाह नगरी लंका दीयताम् अत्र अस्मिन् विषये यन्मयानुष्ठेयं तत् मम समीपे आचक्ष्व सार्द्धश्लोक एकान्वयी ॥ ३४ ॥ ३५ ॥

रा० टी०-ब्रह्मर्षिरिति। एवमुक्तो विश्रवाः धनदं प्राह३६

३७ ] ति० टी०-बहुशोक्त इति संधिरार्षः ॥ ३७ ॥

रा० टी०-तदाकारमाह—दशग्रीव इति। दशग्रीवः मम सन्निधौ उक्तवान् मया बहुशो भर्त्सितश्चासीत् अत एव त्वं ध्वंससे मर्यादामिति शेषः इति क्रोधेन मयोक्तश्च अतः श्रेयोभियुक्तं ममेदं वचश्शृणु बहुशोक्त इत्यत्र सन्धिस्तु त्रिपाद्याः क्वचिदसिद्धत्वाभावबोधनात् श्लोकद्वयमेकान्वयि ॥३७॥३८॥

गो० टी०-दशग्रीव इति। बहुशोक्त इति संधिः छान्दसः ॥ ३८ ॥

३८ ] ति० टी०-ध्वंससे। ध्वस्तधर्मन्यायमर्यादो जायसे इत्यर्थः ॥ ३८ ॥

गो० टी०-स इति। ध्वंसते ध्वस्तधर्मन्यायमर्यादो जायते ॥ ३९ ॥

३९ ] ति० टी०-मम शापात्तन्मातृदर्शनकालकृतात् ३९

रा० टी०-तदाकारमाह—वरेति। वरप्रदानेन संमूढः मम शापात् तन्मातृकर्तृकासमययाचनहेतुकदुरुक्त्या दारुणां प्रकृतिं गतो रावणः मान्यामान्यं न वेत्ति एतेन मदुक्तं न स्वीकृतमिति सूचितम् तस्मात् कैलासं धरणीधरं त्वं गच्छ निवासार्थं निवेशय स्वानुगान् संस्थापय श्लोकद्वयमेकान्वयि३९॥४०

गो० टी०-वरप्रदानादिति। मम शापात्। तन्मातृदर्शनकालकृतादिति शेषः ॥ ४० ॥

४० ] ति० टी०-निवासार्थं निवेशय। पुरमिति शेषः४०

गो० टी०-तस्मादिति। निवासार्थं निवेशय निवेशनं पुरं कुरु ॥ ४१—५१ ॥

४१-४४ ] ति० टी०-सूर्यसंकाशैः सूर्यवदुज्ज्वलैः४१-४४

रा० टी०-तत्स्थानस्य वासयोग्यत्वं बोधयन्नाह—तत्रेति। पंकजैः संवृतमुदकं यस्यास्सा कुमुदादिभिरुपलक्षिता मन्दाकिनी नाम नदी तत्रास्तीति शेषः सार्द्धश्लोक एकान्वयी॥४१॥

रा० टी०-तत्रेति। तत्र कैलासे विहारशीला देवादयः सर्वदा श्रितास्सन्तस्सततं रमन्ते ॥ ४२ ॥

रा० टी०-नहीति। अनेन रावणेन यथा वरो लब्धः तथा त्वं जानीषे अतः रक्षसा रावणेन वैरं तव न क्षमं योग्यम् ॥ ४३ ॥

रा० टी०-एवमिति। एवमुक्तो धनदः तत् पित्रोक्तं वचो गृहीत्वा दारादिसहितस्सन् गतः कैलासमिति शेषः ॥ ४४ ॥

४५ ] ति० टी०-एवं प्रहस्तवचः श्रुत्वा रावणः प्रहृष्टात्माभवदिति शेषः ॥ ४५ ॥

रा० टी०-प्रहस्त इति। प्रहस्तः दशग्रीवं गत्वाब्रवीत्४५

---

१ अभीति रा. अवीति गो. पाठः। २ ध्वंसत इति गो. पा.। ३ आश्रिति गो. पाठः।

शून्या सा नगरी लङ्का त्यक्त्वैनां धनदो गतः । प्रविश्य तां सहास्माभिः स्वधर्मं तत्र पालय ॥ ४६ ॥
एवमुक्तो दशग्रीवः प्रहस्तेन महाबलः । विवेश नगरीं लङ्कां भ्रातृभिः सबलानुगैः ॥ ४७ ॥
धनदेन परित्यक्तां सुविभक्तमहापथाम् । आरुरोह स देवारिः स्वर्गं देवाधिपो यथा ॥ ४८ ॥
स चाभिषिक्तः क्षणदाचरैस्तदा निवेशयामास पुरीं दशाननः ।
निकामपूर्णा च बभूव सा पुरी निशाचरैर्नीलबलाहकोपमैः ॥ ४९ ॥
धनेश्वरस्त्वथ पितृवाक्यगौरवान्न्यवेशयच्छशिविमले गिरौ पुरीम् ।
स्वलंकृतैर्भवनवरैर्विभूषितां पुरंदरः स्वरिव यथामरावतीम् ॥ ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकादशः सर्गः ॥ ११ ॥

## द्वादशः सर्गः

रावणादिभ्रातृत्रयस्य स्वस्वयोग्यदारैर्मन्दोदर्यादिभिर्विवाहः मयासुरस्य दशग्रीवायामोघशक्त्यायुधार्पणम् मन्दोदर्यामिन्द्रजिदुत्पत्तिश्च ।

राक्षसेन्द्रोऽभिषिक्तस्तु भ्रातृभिः सहितस्तदा । ततः प्रदानं राक्षस्या भगिन्याः समचिन्तयत् ॥१॥
ददौ तां कालकेन्द्राय दानवेन्द्राय राक्षसीम् । स्वसां शूर्पणखां नाम विद्युज्जिह्वाय राक्षसः ॥ २ ॥
अथ दत्त्वा स्वयं रक्षो मृगयामटते स्म तत् । तत्रापश्यत्ततो राम मयं नाम दितेः सुतम् ॥ ३ ॥
कन्यासहायं तं दृष्ट्वा दशग्रीवो निशाचरः । अपृच्छत्को भवानेको निर्मनुष्यमृगे वने ॥ ४ ॥
अनया मृगशावाक्ष्या किमर्थं सह तिष्ठसि । मयस्तदाब्रवीद्राम पृच्छन्तं तं निशाचरम् ॥ ५ ॥
श्रूयतां सर्वमाख्यास्ये यथावृत्तमिदं तव । हेमा नामाप्सरास्तत्र श्रुतपूर्वा यदि त्वया ॥ ६ ॥
दैवतैर्मम सा दत्ता पौलोमीव शतक्रतोः । तस्यां सक्तमना ह्यासं दशवर्षशतान्यहम् ॥ ७ ॥

४६-४८ ] ति० टी०—यतस्त्यक्त्वैमां गतस्ततोऽस्माभिः सह सा तां प्रविश्य धर्मं प्रतिपालयेति प्रहस्तेनोक्तो रावणस्तां प्रविवेश ॥ ४६—४७ ॥

रा० टी०—तत्स्वरूपमाह—शून्येति । लंका शून्या तत्र हेतुः धनदः एनां लंकां त्यक्त्वा गतः अतः तां लंकां प्रविश्य स्वधर्मं पालय ॥ ४६ ॥

रा० टी०—एवमिति । एवमुक्तो दशग्रीवः लंकां विवेश ॥

रा० टी०—तदेव भंग्यन्तरेणाह—धनदेनेति । सुविभक्ताः महापथा यस्यां तां लंकां स्वर्गं देवाधिप इव आरुरोह ॥४८॥

४९ ] ति० टी०—निकामपूर्णात्यन्तपूर्णा ॥ ४९ ॥

रा० टी०—स इति । क्षणदाचरैः राक्षसैरभिषिक्तो दशाननः पुरीं लंकां निवेशयामास अत एव पुरी निशाचरैः निकामपूर्णा बभूव ॥ ४९ ॥

५० ] ति० टी०—शशिविमले गिरौ कैलासे । 'पुरंदरस्येव तदामरावतीम्' इति पाठोऽयुक्तश्छन्दोभङ्गाभावाय ॥५०॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकादशः सर्गः ॥ ११ ॥

रा० टी०—धनेश्वर इति । धनेश्वरः शशिविमले गिरौ पुरीं पुरन्दरः स्वरमरावतीमिव न्यवेशयत् ॥ ५० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकादशः सर्गः ॥ ११ ॥

गो० टी०—धनेश्वर इति । शशिनिमले गिरौ कैलासे पुरीमलकाम् । अत्र छन्दोभङ्ग आर्षो ज्ञेयः ॥ ५२ ॥

इति श्रीगोविन्दराजविरचिते भूषणाख्याने उत्तर-श्रीरामायणव्याख्याने एकादशः सर्गः ॥ ११ ॥

१-२ ] ति० टी०—अथेन्द्रजिदुत्पत्तिः—राक्षसेन्द्र इति ॥ १ ॥ २ ॥

रा० टी०—रावणकर्तृकलंकाप्रवेशानन्तरकालिकं वृत्तमाह—राक्षसेन्द्र इत्यादिभिः । अभिषिक्तः भ्रातृभिस्सहितः राक्षसेन्द्रः भगिन्याः शूर्पणखायाः प्रदानं समचिन्तयत् ॥ १ ॥

रा० टी०—ददाविति । शूर्पणखां विद्युज्जिह्वाय ददौ ॥२॥

गो० टी०—स्वसारमिति । कालकेयाय कालकपुत्राय ॥ २—६ ॥

३-७ ] ति० टी०—रामेति संबुद्धिः ॥ ३—७ ॥

१ प्रतीति गो. पाठः । २ पुरंदरस्येव तदेति गो. पाठः । ३ भ्रातृभ्यामिति गो. पाठः । ४ स्वसारमिति गो.पाठः । ५ कालकेयायेति गो. रा. पा. । ६ ददाविति गो.पाठः । ७ ममेति गो. पाठः । ८ तातेति गो. पाठः । ९ तातेति गो. पाठः ।

सा च दैवतकार्येण त्रयोदश समा गताः । वर्षं चतुर्दशं चैव ततो हेममयं पुरम् ॥ ८ ॥
वज्रवैदूर्यचित्रं च मायया निर्मितं मया । तत्राहमवसं दीनस्तया हीनः सुदुःखितः ॥ ९ ॥
तस्मात्पुरा दुहितरं गृहीत्वा वनमागतः । इयं ममात्मजा राजंस्तस्याः कुक्षौ विवर्धिता ॥ १० ॥
भर्तारमनया सार्धमस्याः प्राप्तोऽस्मि मार्गितुम् । कन्यापितृत्वं दुःखं हि सर्वेषां मानकाङ्क्षिणाम्॥ ११ ॥
कन्या हि द्वे कुले नित्यं संशये स्थाप्य तिष्ठति । पुत्रद्वयं ममाप्यस्यां भार्यायां संबभूव ह ॥ १२ ॥
मायावी प्रथमस्तात दुन्दुभिस्तदनन्तरः । एवं ते सर्वमाख्यातं याथातथ्येन पृच्छतः ॥ १३ ॥
त्वामिदानीं कथं तात जानीयां को भवानिति । एवमुक्तं तु तद्रक्षो विनीतमिदमब्रवीत् ॥ १४ ॥
अहं पौलस्त्यतनयो दशग्रीवश्च नामतः । मुनेर्विश्रवसो यस्तु तृतीयो ब्रह्मणोऽभवत् ॥ १५ ॥
एवमुक्तस्तदा राम राक्षसेन्द्रेण दानवः । महर्षेस्तनयं ज्ञात्वा मयो दानवपुंगवः ॥ १६ ॥
दातुं दुहितरं तस्मै रोचयामास तत्र वै । करेण तु करं तस्या ग्राहयित्वा मयस्तदा ॥ १७ ॥

---

रा०टी०—अथेति । रक्षो रावणः दत्त्वा शूर्पणखामिति शेषः मृगयामुद्दिश्य तद्वनमटते स्म तत्र वने दितेस्सुतमपश्यत् ॥३॥

रा० टी०—कन्येति । कन्यायाः सहायं तं मयं दृष्ट्वा दशग्रीवोऽपृच्छत् तदाकारमाह निर्गता मनुष्यमृगा यस्मात् अतिभयङ्करमित्यर्थः किंच निर्मनुष्या मनुष्यरहिता मृगा यस्मिन् मृगमात्रसेवितमित्यर्थः तस्मिन् वने एकः पुरुषान्तररहितो भवान् कः अनया कन्यया सह किमर्थं तिष्ठति तदा पृच्छन्तं निशाचरं मयोऽब्रवीत् श्लोकद्वयमेकान्वयि ॥ ४–५ ॥

रा० टी०—तदाकारमाह—श्रूयतामित्यादिभिः । यथावृत्तं वृत्तमनतिक्रम्य सर्वमिदं तव सन्निधावाख्यास्ये अतः श्रूयताम् अर्द्ध पृथक् आख्यानाकारमाह—हेमेत्यादिभिः । यदि कदाचित् त्वयापि श्रुतपूर्वा हेमानामाप्सरा दैवतैर्मम दत्ता तस्यां दशवर्षशतानि सक्तमनाः अहमासं सार्द्धश्लोक एकान्वयी ॥ ६ ॥ ७ ॥

गो० टी०—तस्यामिति । वर्षं चतुर्दशसंख्याविशिष्टं वर्षं च गतमित्यर्थः ॥ ७ ॥

८ ] ति० टी०—गता । देवलोकमिति शेषः । ततस्त्रयोदश समा वर्षाणि गताः गतानि । चतुर्दशं च तद्विरहितस्य गतमित्यनुकर्षः । हेममयं सुवर्णप्रचुरम् ॥ ८ ॥

९] ति० टी०—मायया विचित्रनिर्माणशक्त्या निर्मितम्९

रा० टी०—सेति । सा हेमा दैवतकार्येण हेतुना स्वर्गं गतेति शेषः तत आरभ्य त्रयोदश समाः वर्षाणि गताः चतुर्दशं च वर्षं गतं ततोऽनन्तरं हेममयं पुरं मया मायया निर्मितं तत्र पुरे तया हीनोहमवसम् श्लोकद्वयमेकान्वयि ॥ ८—९ ॥

गो० टी०—तस्या इति । हेममयं पुरं हेमपुरम् । मायया विचित्रनिर्माणशक्त्या ॥ ८ ॥ ९ ॥

१० ] ति० टी०—तस्याः कुक्षौ । हेमाया गर्भे इत्यर्थः१०

रा० टी०—तस्मादिति । तस्याः हेमायाः कुक्षौ विवर्द्धिता इयं या ममात्मजा तां दुहितरं गृहीत्वा तस्मात् हेममयात् पुरात् वनमागतः ॥ १० ॥

गो० टी०—तस्मादिति । तस्याः कुक्षौ । हेमाया गर्भे इत्यर्थः ॥ १० ॥

११ ] ति० टी०—मार्गितुं प्राप्तोऽस्मि । मानकाङ्क्षिणामभिमानेच्छूनां दुःखमभिमाननिवर्तकत्वात् ॥ ११ ॥

रा० टी०—आगमनप्रयोजनमाह—भर्त्तारमिति । अस्याः भर्त्तारं मार्गितुमनया सार्द्धं प्राप्तोस्मि हि यतः कन्यापितृत्वं दुःखं हि यतः कन्या द्वे कुले कुलद्वयं संशये स्थाप्य स्थापयित्वा तिष्ठति सार्द्धश्लोक एकान्वयी ॥ ११ ॥

गो० टी०—भर्तारमिति । अस्या भर्त्तारं मार्गितुम् अनया प्राप्तोस्मि ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—अस्यां हेमायाम् ॥ १२ ॥

रा० टी०—पुत्रेति । अस्यां हेमायां प्रथमो मायावी तदनन्तरो दुन्दुभिः इति पुत्रद्वयमपि संबभूव पृच्छतस्ते समीपे याथातथ्येन एवं सर्वमाख्यातं सार्द्धश्लोक एकान्वयी ॥ १२ ॥

१३–१४ ] ति० टी०—मायावी तन्नामकः ॥ १३–१४ ॥

रा० टी०—त्वामिति । को भवानिति त्वामिदानीं कथं जानीयाम् एतेन त्वमपि स्वकुलादि वदेति सूचितम् एवमुक्तं तद्रक्षो रावण इदमब्रवीत् ॥ १४ ॥

गो० टी०—मायावीति । मायावी च वालिना पलायितोत्रैव प्रविष्टो नाशित इति ज्ञेयम् ॥ १३–१७ ॥

१५ ] ति० टी०—पौलस्त्यतनय इत्युक्तमेवार्थं स्पष्टमाह—मुनेरिति । यो मुनिर्विश्रवा ब्रह्मणस्तृतीयापत्यं तस्य भगवतो विश्रवसोऽहं तनय इत्यर्थः ॥ १५ ॥

रा० टी०—तदाकारमाह—अहमिति । यो ब्रह्मणस्तृतीयस्तृतीयापत्यमभवत् तस्मात् विश्रवसो मुनेरहं जातोऽस्मीति शेषः अत एव पौलस्त्यतनयः नामतो दशग्रीवोहमस्मि ॥१५॥

१६–१७] ति० टी०—तं महर्षेस्तनयं ज्ञात्वा दुहितरं तस्मै दातुं रोचयामास । तत्र वै महाकुलप्रसूतत्वज्ञानकाले ॥ १६ ॥

रा० टी०—एवमिति । राक्षसेन्द्रेण एवमुक्तः दानवपुङ्गवो दानवो मयः महर्षेस्तनयं ज्ञात्वा तस्मै रावणाय दुहितरं दातुं रोचयामास सार्द्धश्लोक एकान्वयी ॥ १६ ॥

---

१ गता वर्षाश्चतुर्दश । तस्याः कृते च हेमायाः सर्वमिति गो. पाठः । २ हर्षमुपागत इति गो. पाठः । ३ यत्रेति गो. पाठः ।

प्रहसन्प्राह दैत्येन्द्रो राक्षसेन्द्रमिदं वचः । इयं ममात्मजा राजन्हेमयाप्सरसा धृता ॥ १८ ॥
कन्या मन्दोदरी नाम पत्न्यर्थं प्रतिगृह्यताम् । बाढमित्येव तं राम दशग्रीवोऽभ्यभाषत ॥ १९ ॥
प्रज्वाल्य तत्र चैवाग्निमकरोत्पाणिसंग्रहम् । स हि तस्य मयो राम शापाभिज्ञस्तपोधनात् ॥ २० ॥
विदित्वा तेन सा दत्ता तस्य पैतामहं कुलम् । अमोघां तस्य शक्तिं च प्रददौ परमाद्भुताम् ॥ २१ ॥
परेण तपसा लब्धां जघ्निवाँल्लक्ष्मणं यया । एवं स कृत्वा दारान्वै लङ्काया ईश्वरः प्रभुः ॥ २२ ॥
गत्वा तु नगरीं भार्ये भ्रातृभ्यां समुपाहरत् । वैरोचनस्य दौहित्रीं वज्रज्वालेति नामतः ॥ २३ ॥
तां भार्यां कुम्भकर्णस्य रावणः समकल्पयत् । गन्धर्वराजस्य सुतां शैलूषस्य महात्मनः ॥ २४ ॥
सरमां नाम धर्मज्ञां लेभे भार्यां विभीषणः । तीरे तु सरसो वै तु संजज्ञे मानसस्य हि ॥ २५ ॥
सरस्तदा मानसं तु ववृधे जलदागमे । मात्रा तु तस्याः कन्यायाः स्नेहेनाक्रन्दितं वचः ॥२६॥
सरो मा वर्धतेत्युक्तं ततः सा सरमाभवत् । एवं ते कृतदारा वै रेमिरे तत्र राक्षसाः ॥ २७ ॥
स्वां स्वां भार्यामुपादाय गन्धर्वा इव नन्दने । ततो मन्दोदरी पुत्रं मेघनादमजीजनत् ॥ २८ ॥
स एष इन्द्रजिन्नाम युष्माभिरभिधीयते । जातमात्रेण हि पुरा तेन रावणसूनुना ॥ २९ ॥
रुदता सुमहान्मुक्तो नादो जलधरोपमः । जडीकृता च सा लङ्का तस्य नादेन राघव ॥ ३० ॥
पिता तस्याकरोन्नाम मेघनाद इति स्वयम् । सोवर्धत तदा राम रावणान्तःपुरे शुभे ॥ ३१ ॥
रक्ष्यमाणो वरस्त्रीभिश्छन्नः काष्ठैरिवानलः । मातापित्रोर्महाहर्षं जनयन्रावणात्मजः ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

रा० टी०—करणेति । मयः तस्याः कन्यायाः करं करेण रावणहस्तेन ग्राहयित्वा प्रहसन्सन् राक्षसेन्द्रं रावणमिदं प्राह १७

१८-१९ ] ति० टी०—धृता धृतगर्भा । प्रसूतेत्यर्थः ॥

रा० टी०—तदाकारमाह—इयमिति । हेमया धृता मन्दोदरी नाम ममात्मजा कन्या पत्न्यर्थं प्रतिगृह्यतां त्वयेति शेषः॥१८॥

रा० टी०—बाढमिति । दशग्रीवः बाढमित्यभ्यभाषत अत एव अग्निं प्रज्वाल्य पाणिसंग्रहं पाणिग्रहणविधिमकरोत् ॥१९॥

गो० टी०—इयमिति । धृता धृतगर्भा प्रसूतेत्यर्थः १८-१९

२० ] ति० टी०—तपोधनाज्जातशापाभिज्ञः । दारुणप्रकृतिर्भविष्यतीति श्रुतशापवृत्तान्त इत्यर्थः ॥ २० ॥

रा० टी०—स इति । यद्यपि मयः तपोधनात् विश्रवसो जातस्य शापस्य अभिज्ञस्तथापि तस्य रावणस्य पैतामहं कुलं ज्ञात्वा तेन मयेन सा कन्या दत्ता हि यद्यपीत्यर्थं ॥ २० ॥

गो० टी०—स हीति । शापाभिज्ञ इति । दारुणप्रकृतिर्भविष्यतीति श्रुतशापवृत्तान्त इति भावः । पुलस्त्यशापश्चेत्केवलं कुलमेव बहुमन्यतेत्यर्थः ॥ २०-२४ ॥

२१ ] ति० टी०-तेन हेतुना । यद्यस्मै इयं कन्या न दीयते तदा दारुणप्रकृतित्वान्मां निगृह्य बलादति ग्रहीष्यतीति ज्ञानेन महाकुलप्रसूतत्वज्ञानेन चेत्यर्थः ॥ २१ ॥

रा० टी०—अमोघामिति । यया लक्ष्मणं जघ्निवान् तां शक्तिं प्रददौ ॥ २१ ॥

२२ ] ति० टी०—लब्धाम् । मयेनेति शेषः ॥ २२ ॥

रा० टी०—एवमिति । लंकाया ईश्वरः एवं दारान् कृत्वा नगरीं लङ्कां गत्वा भ्रातृभ्यामपि भार्ये समुपाहरत् विवाहविधिना प्रापयत् ॥ २२ ॥

२३-२४ ] ति० टी०—भ्रातृभ्यां सह समुपाहरद्कृतवान् । 'उदवाहयत्' इति पाठान्तरम् ॥ २३ ॥ २४ ॥

रा० टी०—तत्प्रकारमाह—वैरोचनेत्यादिभिः । नामतः प्रज्वालेति वैरोचनस्य या दौहित्री तां दौहित्रीं कुम्भकर्णस्य भार्यां रावणस्समकल्पयत् ॥ २३ ॥

रा० टी०—गन्धर्वेति । विभीषणः गन्धर्वराजस्य शैलूषस्य सरमां नाम सुतां भार्यां लेभे ॥ २४ ॥

२५ ] ति० टी०—सरमाया विभीषणपत्न्या नाम निर्वक्ति—तीरे त्विति ॥ २५ ॥

२६-२९ ] ति० टी०—तदास्या मानससरस्तीर उत्पत्तिकाले । मानसं सरो जलदागमनिमित्ततस्तच्छिशुपर्यन्तं ववृधे । ततो भीतायाः कन्याया आक्रन्दितं श्रुत्वा तस्या मात्रा कन्यास्नेहेन सरो मा वर्धतेत्युक्तम् । ततः सा कन्या सरमाभवत् । पृषोदरादित्वात्साधुः ॥ २६—२९ ॥

३०-३२] ति०टी०—जलधरोपमो जलधरनादोपमः ३०-३२

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्वादशः सर्गः ॥ १२ ॥

---

१ स्वीकृतदारो वै इति गो. पाठः । २ वर्धयस्वेतीति गो. पाठः । ३ गर्म्येति गो. पाठः ।

# त्रयोदशः सर्गः ।

अथ कुम्भकर्णो निद्रयाहमाकुलः सुखशयनीय विविक्तं गृहं कारयेति तेनोक्तेन दशशिरसा निर्मापिते मन्दिरे चिरं सुष्वाप ततो देवर्षियक्षगन्धर्वान्प्रबाधमानं दशग्रीवं निशम्य तस्मात्तमपावर्तयितुं मनुष्यधर्मा संदेशहरं प्राहिणोत् । तदुक्तमनादृत्य दृप्तो लङ्केश्वरस्त्रैलोक्यविजयाकांक्षी निर्ययौ धनेश्वरमेवादौ ।

अथ लोकेश्वरोत्सृष्टा तत्र कालेन केन चित् । निद्रा समभवत्तीव्रा कुम्भकर्णस्य रूपिणी ॥ १ ॥
ततो भ्रातरमासीनं कुम्भकर्णोऽब्रवीद्वचः । निद्रा मां बाधते राजन्कारयस्व ममालयम् ॥ २ ॥
विनियुक्तास्ततो राज्ञा शिल्पिनो विश्वकर्मवत् । विस्तीर्णं योजनं स्निग्धं ततो द्विगुणमायतम् ॥ ३ ॥
दर्शनीयं निराबाधं कुम्भकर्णस्य चक्रिरे । स्फाटिकैः काञ्चनैश्चित्रैः स्तम्भैः सर्वत्र शोभितम् ॥ ४ ॥
वैदूर्यकृतसोपानं किङ्किणीजालकं तथा । दान्ततोरणविन्यस्तं वज्रस्फटिकवेदिकम् ॥ ५ ॥
मनोहरं सर्वसुखं कारयामास राक्षसः । सर्वत्र सुखदं नित्यं मेरोः पुण्यां गुहामिव ॥ ६ ॥
तत्र निद्रां समाविष्टः कुम्भकर्णो महाबलः । बहून्यब्दसहस्राणि शयानो न च बुद्ध्यते ॥ ७ ॥
निद्राभिभूते तु तदा कुम्भकर्णे दशाननः । देवर्षियक्षगन्धर्वान्संजघ्ने हि निरङ्कुशः ॥ ८ ॥
उद्यानानि विचित्राणि नन्दनादीनि यानि च । तानि गत्वा सुसंक्रुद्धो भिनत्ति स्म दशाननः ॥ ९ ॥
नदीं गज इव क्रीडन्वृक्षान्वायुरिव क्षिपन् । नगान्वज्र इवोत्सृष्टो विध्वंसयति राक्षसः ॥ १० ॥

---

रा०टी०—सरमानामत्वे कारणमाह—तीर इतिद्वाभ्याम् । यदा मानसस्य सरसः तीरे सा संजज्ञे तदा जलदागमे सति मानसं सरो वर्द्धे तस्याः माता तु सरो मा वर्द्धत इत्याक्रन्दितं विक्लवं वच उक्तं ततो हेतोः सा सरमाभवत् श्लोकद्वयमेकान्वयि ॥ २५—२६ ॥

रा० टी०—एवमिति । एवं कृतदाराः ते रावणप्रभृतयः स्वां स्वां भार्यामुपादाय रेमिरे ॥ २७ ॥

रा० टी०—तत इति । मेघनादं मन्दोदरी अजीजनत् स मन्दोदरीजनित एष मेघनादो युष्माभिरिन्द्रजिन्नामाभिधीयते कथ्यते ॥ २८ ॥

रा० टी०—मेघनादनामत्वे कारणमाह—जातेति । जातमात्रेण रुदता रावणसूनुना जलधरोपमो महान्नादो मुक्तः अत एव तस्य नादेन लङ्का जडीकृता अतः तस्य बालस्य मेघनाद इति नाम पिता स्वयमकरोत् अर्द्धचतुष्टयमेकान्वयि ॥२९॥३०॥

रा० टी०—स इति । वरस्त्रीभिः रक्ष्यमाणः काष्ठैः छन्नोऽनल इव स मेघनादः मातापित्रोर्महाहर्षं जनयन् सन् रावणान्तःपुरे अवर्द्धत सार्द्धश्लोक एकान्वयी ॥ ३१ ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्वादशः सर्गः ॥ १२ ॥

गो० टी०—सरमाशब्दं निर्वक्ति—तीरे इत्यादि । सरो मा वर्धयस्वेत्युक्त्या सरमेति नामासीत् पृषोदरादित्वात्साधुः ॥ २५—३२ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणभूषणव्याख्याने द्वादशः सर्गः ॥ १२ ॥

१—२ ] ति० टी०—लोकेश्वरेण ब्रह्मणोत्सृष्टा प्रेषिता रूपिणी जृम्भादिरूपेण रूपवती समभवत्प्राप्ता ॥ १ ॥ २ ॥

रा० टी०—कुम्भकर्णवृत्तान्तं वर्णयन्नाह—अथेत्यादिभिः । केनचित्कालेन लोकेश्वरेण ब्रह्मणोत्सृष्टा तद्वचनप्रभावेणोत्पन्नेत्यर्थः रूपिणी जृम्भादिरूपविशिष्टा कुम्भकर्णस्य निद्रा तीव्रा समभवत् ॥ १ ॥

रा० टी०—तत इति । हे राजन् निद्रा मां बाधते अतः ममालयं चिरशयनयोग्यगृहं कारयस्व इति वचः कुम्भकर्णो भ्रातरं रावणमब्रवीत् ॥ २ ॥

गो० टी०—अथेत्यादि । लोकेश्वरेण ब्रह्मणोत्सृष्टा प्रेषिता रूपिणी मूर्ता ॥ १ ॥ २ ॥

३—४ ] ति० टी०—विश्वकर्मवत्तत्सदृशाः । विस्तीर्णं योजनम् । तिर्यङ्मानेनेति शेषः । ततस्तिर्यङ्मानात् । एवं च युद्धकाण्डे ययोजनायतामित्युक्तं तद्द्विगुणयोजनायतामित्यर्थकं बोध्यम् ॥ ३ ॥ ४ ॥

रा० टी०—विनियुक्ता इति । राज्ञा रावणेन विनियुक्ता विश्वकर्मवत् शिल्पिनः योजनं विस्तीर्णं ततो द्विगुणमायतं स्फाटिकादिभिः स्तम्भैश्शोभितं किंकिणीनां जालं यस्मिन्दान्तेन गजदन्तनिर्मितेन तोरणेन विन्यस्तं वज्रस्फटिकानां वेदिका यस्मिन् तदालयं चक्रिरे श्लोकत्रयमेकान्वयि ॥ ३-५ ॥

गो० टी०—विनियुक्ता इति । विस्तीर्णं योजनमिति । तिर्यङ्मानेनेति शेषः । ततो द्विगुणमायतम् । युद्धकाण्डे योजनायतमित्युक्तं द्विगुणयोजनायतपरम् ॥ ३ ॥ ४ ॥

५—१० ] ति० टी०—किङ्किणीजालकं किङ्किणीनां

---

१ शुभ्रमिति गो. पाठः । २ प्रेति गो. पाठः ।

यथावृत्तं तु विज्ञाय दशग्रीवं धनेश्वरः । कुलानुरूपं धर्मज्ञो वृत्तं संस्मृत्य चात्मनः ॥ ११ ॥
सौभ्रात्रदर्शनार्थं तु दूतं वैश्रवणस्तदा । लङ्कां संप्रेषयामास दशग्रीवस्य वै हितम् ॥ १२ ॥
स गत्वा नगरीं लङ्कामाससाद विभीषणम् । मानितस्तेन धर्मेण पृष्टश्चागमनं प्रति ॥ १३ ॥
पृष्ट्वा च कुशलं राज्ञो ज्ञातीनां च विभीषणः । सभायां दर्शयामास तमासीनं दशाननम् ॥ १४ ॥
स दृष्ट्वा तत्र राजानं दीप्यमानं स्वतेजसा । जयेति वाचा संपूज्य तूष्णीं समभिवर्तते ॥ १५ ॥
स[३] तत्रोत्तमपर्यङ्के वरास्तरणशोभिते । उपविष्टं दशग्रीवं दूतो वाक्यमथाब्रवीत् ॥ १६ ॥
राजन्वदामि ते सर्वं भ्राता तव यदब्रवीत् । उभयोः सदृशं वीर वृत्तस्य च कुलस्य च ॥ १७ ॥
साधु पर्याप्तमेतावत्कृ[४]त्यश्चारित्रसंग्रहः । साधु धर्मे व्यवस्थानं क्रियतां यदि शक्यते॥ १८ ॥

---

जालानि यस्मिंस्तत् । दान्ततोरणं दन्तविकारतोरणं तस्य विन्यस्तं विन्यासो यत्र तत् ॥ ९—१० ॥

गो० टी०–वैडूर्येति । किङ्किणीजालकं प्रान्तेषु किङ्किणीजालयुक्तम् । दान्तो दन्तविकारः ॥ ९–१० ॥

रा० टी०–मनोहरमिति । मेरोर्गुहामिव मनोहरमालयं राक्षसः कारयामास ॥ ६ ॥

रा० टी०–तत्रेति । तत्रालये निद्रां समाविष्टः अत एव बहून्यब्दसहस्राणि शयानः कुम्भकर्णो न बुध्यते जागर्ति ॥७॥

रा० टी०–निद्रेति । कुम्भकर्णे निद्राभिभूते सति निरंकुशो दशाननः देवादीन् संजघ्ने ॥ ८ ॥

रा० टी०–उद्यानानीति । सुसंक्रुद्धः देवकर्तृककुम्भकर्णवरयाचनकालककुम्भकर्णवचनविपरीतकरणस्मृतिजनितक्रोधविशिष्टो दशाननः नन्दनादीनि यान्युद्यानानि तानि भिनत्ति स्म ॥ ९ ॥

रा० टी०–नदीमिति । राक्षसो रावणः नद्यादीन् विध्वंसयति ॥ १० ॥

११ ] ति० टी०–आत्मनः कुलानुरूपं वृत्तं संस्मृत्येति । बोधनीयत्वेनेति शेषः ॥ ११ ॥

रा० टी०–तथेति । धनेश्वरः तथावृत्तं दशग्रीवं विज्ञाय कुलानुरूपमात्मनो वृत्तं संस्मृत्य च सौभ्रात्रदर्शनार्थं दशग्रीवस्य हितं दूतं संप्रेषयामास श्लोकद्वयमेकान्वयि ॥ ११-१२ ॥

गो० टी०–तथेति । कुलानुरूपं वृत्तमिति । असक्तमिति शेषः ॥ ११ ॥

१२ ] ति० टी०–सौभ्रात्रदर्शनार्थं तद्दर्शयितुम् । हितमिति । वक्तुमिति शेषः ॥ १२ ॥

गो० टी०–सौभ्रात्रेति । हितं हितपरम् ॥ १२ ॥

१३ ] ति० टी०–आगमन् । प्रतिकार्यमिति शेषः॥१३॥

रा० टी०–स इति । स दूतः लङ्कां गत्वा विभीषणमाससाद प्राप तेन विभीषणेन मानितः आगमनं प्रति आगमनप्रयोजनमित्यर्थः पृष्टश्च ॥ १३ ॥

गो०टी०–स इति । आगमनं प्रतीति कार्यमिति शेषः१३

१४ ] ति० टी–राज्ञो धनदस्य । तं कुबेरदूतम् ॥ १४ ॥

रा० टी०–पृष्ट्वेति । विभीषणः राज्ञः कुबेरस्य ज्ञातीनां च कुशलं पृष्ट्वा दशाननं दर्शयामास ॥ १४ ॥

गो० टी०–पृष्ट्वेति । राज्ञः कुबेरस्य । तं दूतम्॥१४॥१६॥

१५–१६ ] ति० टी०–तूष्णीं समभिवर्तते । क्षणमात्रमिति शेषः ॥ १५ ॥ १६ ॥

रा० टी०–स इति । स दूतः राजानं रावणं दृष्ट्वा जयेति वाचा सम्पूज्य तूष्णीं समभिवर्तत समभ्यवर्तत अतिष्ठत्॥१५॥

रा० टी०–स इति । स दूतः उत्तमपर्यङ्के उपविष्टं दशग्रीवमब्रवीत् ॥ १६ ॥

१७ ] ति० टी० उभयोर्मातापित्रोः कुलस्य तयोर्वृत्तस्य च सदृशम् ॥ १७ ॥

रा० टी० तदाकारमाह—राजन्निति । उभयोः मातापित्रोः कुलस्य वृत्तस्य सदाचारस्य च सदृशं तव भ्राता यदब्रवीत् तत्सर्वं वदामि ॥ १७ ॥

गो० टी०–राजन्निति । उभयोरिति उभयोर्मातापित्रोः कुलस्याभिजनस्य तयोर्वृत्तस्य च सदृशं यथा तथा॥ १७ ॥

१८ ] ति० टी०–साधु सम्यक् । एतावत्पर्याप्तमेतावदेव पापमलम् । इतः परं चारित्रसंग्रहः कृत्यः कार्यः । तदेव दार्ढ्याय पुनराह—साध्विति । व्यवस्थानं व्यवस्थितिः । यदि शक्यते इत्यनेन कृत्यत्वाभियोगबुद्धिर्व्यावर्त्यते । कतकस्तु—'कृतश्चारित्रसंग्रहः' इति पठित्वा साधु सम्यक्चारित्रसंग्रह आचारसंग्रहः कृतः संपादितश्चेदेतावदेव पर्याप्तमिहामुत्राभ्युदयाय । अस्यैव विवरणं साध्वित्याह ॥ १८ ॥

रा० टी० तदाकारमाह—साध्विति । एतावत् एतत्परिमितमेव पापमित्यर्थः पर्याप्तं बहु कृतमित्यर्थः इतःप्रभृति न कर्तव्यमिति तात्पर्यम् अतः चारित्रस्य सदाचारस्य संग्रहः साधु यथा भवति तथा कृत्यः कार्यः अतो यदि शक्यते तर्हि धर्मे व्यवस्थानमास्था साधु क्रियताम् ॥ १८ ॥

गो० टी०–साध्विति । साधु सम्यक् । चारित्रसंग्रहः कृतश्चेदेतावदेव पर्याप्तम् । उक्तमर्थं विवृणोति—साध्वित्यादि । व्यवस्थानं व्यवस्थितिः । यदि शक्यत इत्युक्त्या उपेक्षया नियोगबुद्धिर्व्यावर्तते ॥ १८ ॥

---

१ तथेति गो. रा. पाठः । २ वर्ततेति गो. रा. पाठः । ३ तामिति गो. पाठः । ४ कृत इति गो. पाठः ।

दृष्टं मे नन्दनं भग्नमृषयो निहताः श्रुताः । देवतानां समुद्योगस्त्वत्तो राजन्मया श्रुतः ॥ १९ ॥
निराकृतश्च बहुशस्त्वयाहं राक्षसाधिप । सापराधोऽपि बालो हि रक्षितव्यः स्वबान्धवैः॥२०॥
अहं तु हिमवत्पृष्ठं गतो धर्ममुपासितुम् । रौद्रं व्रतं समास्थाय नियतो नियतेन्द्रियः ॥ २१ ॥
तत्र देवो मया दृष्ट उमया सहितः प्रभुः । सव्यं चक्षुर्मया दैवात्तत्र देव्यां निपातितम्॥ २२ ॥
कान्वेषेति महाराज न खल्वन्येन हेतुना । रूपं चानुपमं कृत्वा रुद्राणी तत्र तिष्ठति ॥ २३ ॥
देव्या दिव्यप्रभावेण दग्धं सव्यं ममेक्षणम् । रेणुध्वस्तमिव ज्योतिः पिङ्गलत्वमुपागतम् ॥ २४ ॥
ततोऽहमन्यद्विस्तीर्णं गत्वा तस्य गिरेस्तटम् । तूष्णीं वर्षशतान्यष्टौ समधारं महाव्रतम् ॥ २५ ॥
समाप्ते नियमे तस्मिंस्तत्र देवो महेश्वरः । ततः प्रीतेन मनसा प्राह वाक्यमिदं प्रभुः ॥ २६ ॥
प्रीतोऽस्मि तव धर्मज्ञ तपसानेन सुव्रत । मया चैतद्व्रतं चीर्णं त्वया चैव धनाधिप ॥ २७ ॥
तृतीयः पुरुषो नास्ति यश्चरेद्व्रतमीदृशम् । व्रतं सुदुष्करं ह्येतन्मयैवोत्पादितं पुरा ॥ २८ ॥
तत्सखित्वं मया सौम्य रोचयस्व धनेश्वर । तपसा निर्जितश्चैव सखा भव ममानघ ॥ २९ ॥

१९ ] ति० टी०—उपदेशप्रयोजकमसद्वृत्तं दृश्यते श्रूयते चेत्याह—दृष्टमिति । मे मया त्वत्तस्त्वन्निमित्तो देवतानां समुद्योगः प्रतिक्रियासंपादनविषय इति शेषः ॥ १९ ॥

रा० टी०—तत्कृतपापस्वरूपं बोधयन्नाह—दृष्टमिति । त्वत्तस्त्वया भग्नं नन्दनं दृष्टं त्वत्तो निहता ऋषयः श्रुताः अत एव समुद्योगः त्वद्वधोपायकरणं श्रुतः ॥ १९ ॥

गो० टी०—तस्य क्रूरत्वान्मायाचारित्वव्यवस्थानेन विना किं कृतमित्यत्राह—दृष्टमित्यादिना । त्वत्तः त्वया । मम मया । समुद्योग इति । प्रतिक्रियाकरणायेति शेषः ॥१९॥

२० ] ति० टी०—यद्यपि त्वयाहं निराकृतः, अथापि मम त्वं रक्ष्य एव । तत्र हेतुः—सापराधोऽपीति । स्वबान्धवैः पित्रादिभिः ॥ २० ॥

रा० टी०—निराकृत इति । यद्यपि त्वयाहं बहुशो निराकृतः तथापि सापराधोऽपि बालः स्वबान्धवैः रक्षितव्यः एतेन त्वद्रक्षणार्थमेवेदं मयोच्यते इति सूचितम् तेन मद्वचनानादरे तव कल्याणं न भवितेति ध्वनितम् ॥ २० ॥

गो० टी०—निराकृत इति । रमणीयाः तोषणीयाः स्वबान्धवाः बाल्यादज्ञानादपराद्धाः त्वया कृतापराधा आसन्नित्यर्थः ॥ २० ॥

२१–२२ ] ति० टी०—त्वद्रक्षणहेतोरेव—अहं त्विति । रौद्रं रुद्रप्रसादकरम् ॥ २१ ॥ २२॥

२३ ] ति० टी०—किमिति देव्यां चक्षुर्निपातितं तत्राह—कान्विति । अन्येन हेतुना । विकारादिनेत्यर्थः । कान्विति सूचितविस्मयहेतुमाह—रूपं चेति ॥ २३ ॥

रा० टी०—ननु पापाचरणसमये एव कुतो न निवारितमित्यत आह—अहमित्यादिभिः । रौद्रं व्रतं समास्थाय धर्ममुपासितुं हिमवत्पृष्ठमहं गतः ॥ २१ ॥

रा० टी०—तत्रेति । तत्र हिमवत्पृष्ठे उमया सहितो देवो मया दृष्टः दैवात् भाग्यवशात् का नु एषा इति हेतोः सव्यं वामं चक्षुः देव्यां निपातितमन्येन हेतुना न तत्र तस्मिन् समये अनुपमं रूपं कृत्वा रुद्राणी तिष्ठति अतिष्ठत श्लोकद्वयमेकान्वयि ॥ २२–२३ ॥

गो० टी०—अहमिति । रौद्रं रुद्रप्रसादकव्रतम् । इदं तु केदारव्रतमित्याहुः ॥ २१—२८ ॥

२४ ] ति० टी०—दग्धं नष्टम् । सव्येतरत्तु रेणुध्वस्तं रेणुस्पर्शकलुषीकृतम् । ज्योतिषा तेजसा पिङ्गलं तस्य भावस्तत्त्वम् । यद्वा कलुषितज्योतिरिव पिङ्गत्वं प्राप्तमित्यर्थः २४

रा० टी०—देव्या इति । देव्याः रुद्राण्याः दिव्यप्रभावेण मम सव्यमीक्षणं चक्षुर्दग्धं मम ज्योतिः इतरनयनकान्तिः रेणुध्वस्तमिव पिङ्गलत्वमुपागतम् ॥ २४ ॥

२५–२६ ] ति० टी०—समधारं समधारयम्॥२५॥२६॥

रा० टी०—तत इति । ततोऽनन्तरं गिरेरन्यत्तटं गत्वा अष्टौ वर्षशतानि तूष्णीं महाव्रतं समधारं समधारयम् ॥ २५ ॥

रा० टी०—समाप्त इति । नियमे समाप्ते सति महेश्वरः इदं वाक्यं प्राह ॥ २६ ॥

२७–२८ ] ति० टी०—एतद्व्रतं त्वदाचरितं महाव्रतम् ॥ २७ ॥ २८ ॥

रा० टी०—तदाकारमाह—प्रीत इति । अहं प्रीतोस्मि तत्र हेतुः य एतद्व्रतं चरेत् स तृतीयो नास्ति सार्धश्लोक एकान्वयी ॥ २७ ॥ २८ ॥

रा० टी०—एतद्व्रतकर्तुस्तृतीयस्याभावे हेतुं वदन्नाह—व्रतमिति । एतद्व्रतं पुरा मयैव उत्पादितं तन्मयोत्पादितव्रताचरणाद्धेतोः मया सखित्वं समारोचय अत एव मम सखा भव सार्द्धश्लोक एकान्वयी ॥ २९ ॥

गो० टी०—व्रतमिति । रोचयस्व स्वरुचितं कुरु॥२९॥३१॥

२९ ] ति० टी०—रोचयस्व । रुचितं रुचिविषयमित्यर्थः ॥ २९॥

१ वृत्तमिति गो. पाठः । २ सह देव्या मयेति गो. पाठः । ३ का न्वियमिति गो. पाठः । ४ ह्यौति गो. पाठः । ५ आधारमिति गो. पाठः। ६ प्रीति गो. पाठः । ७ दुष्कृतमिति रा. निश्चयमिति च गो. पाठः ।

देव्या दग्धं प्रभावेण यच्च सव्यं तवेक्षणम् । पैङ्गल्यं यदवाप्तं हि देव्या रूपनिरीक्षणात् ॥ ३० ॥
एकाक्षिपिङ्गलीत्येव नाम स्थास्यति शाश्वतम् । एवं तेन सखित्वं च प्राप्यानुज्ञां च शंकरात् ॥३१॥
आगतेन मया चैवं श्रुतस्ते पापनिश्चयः । तदधर्मिष्ठसंयोगान्निवर्त कुलदूषणात् ॥ ३२ ॥
चिन्त्यते हि वधोपायः सर्षिसङ्घैः सुरैस्तव । एवमुक्तो दशग्रीवः कोपसंरक्तलोचनः ॥ ३३ ॥
हस्तान्दन्तांश्च संपिष्य वाक्यमेतदुवाच ह । विज्ञातं ते मया दूत वाक्यं यत्त्वं प्रभाषसे ॥ ३४ ॥
नैव त्वमसि नैवासौ भ्राता येनासि चोदितः । हितं नैष ममैतद्धि ब्रवीति धनरक्षकः ॥ ३५ ॥
महेश्वरसखित्वं तु मूढः श्रावयते किल । नैवेदं[1] क्षमणीयं मे यदेतद्भाषितं त्वया ॥ ३६ ॥
यदेतावन्मया कालं दूत तस्य तु मर्षितम् । न हन्तव्यो गुरुर्ज्येष्ठो मयायमिति मन्यते ॥ ३७ ॥
तस्य त्विदानीं श्रुत्वा मे वाक्यमेषा कृता मतिः । त्रींल्लोकानपि जेष्यामि बाहुवीर्यमुपाश्रितः ॥ ३८ ॥
एतन्मुहूर्तमेवाहं तस्यैकस्य तु वै कृते । चतुरो लोकपालांस्तान्नयिष्यामि यमक्षयम् ॥ ३९ ॥

३० ] ति० टी०–पैङ्गल्यमिति । इतरदिति शेषः॥३०॥

रा० टी०–देव्या इति । देव्याः प्रभावेण यत्सव्यं तवेक्षणं दग्धं पैङ्गल्यं च यदवाप्तं तेन हेतुना एकाक्षपिङ्गली इति मम शाश्वतं स्थास्यति सार्द्धश्लोक एकान्वयी ॥ ३० ॥

३१ ] ति० टी०–एवं तेन शिवेन ॥ ३१ ॥

रा० टी०–एवमिति । एवं सखित्वं प्राप्य आगतेन मया ते पापनिश्चयः श्रुतः एतेन पापाचरणसमये मया न श्रुतमिति व्यञ्जितम् ॥ ३१ ॥

३२-३३ ] ति० टी०–निवर्त निवर्तस्व ॥ ३२ ॥ ३३ ॥

रा० टी०–तदिति । हि यतः ते वधोपायः सुरैश्चिन्त्यते तत्तस्माद्धेतोः अधर्मिष्ठसंयोगात् निवर्त निवर्तस्व ॥ ३२ ॥

रा० टी०–एवमिति । दशग्रीवः हस्तान् दंतांश्च संपिष्य एतद्वाक्यमुवाच ॥ ३३ ॥

गो० टी०–आगत्येति । आगत्य स्वगृहमागत्य । मे स्थितेन मया । अधर्मः तव पापविनिश्चयः श्रुतः ॥ ३२ ॥

गो० टी०–तदिति । तदधर्मत्वाद्धेतोः । कुलदूषणादधर्मिष्ठसंसर्गान्निवर्त निवर्तस्व ॥ ३३ ॥ ३४ ॥

३४ ] ति० टी०–वाक्यं विज्ञातं वाक्यतात्पर्यार्थो विज्ञातः ॥ ३४ ॥

रा० टी०–तदाकारमाह—विज्ञातमित्यादिभिः । यत्त्वं प्रभाषसे तन्मया विज्ञातमनिष्टमेव भाषसे इत्यर्थः अतः त्वं नैवासि येन च त्वं चोदितोऽसि स भ्रातापि नैवास्ति उभावपि हनिष्यामीति तात्पर्यम् ॥ ३४ ॥

गो टी०–विज्ञातमिति । वाक्यं विज्ञातमिति वाक्यतात्पर्यार्थो विज्ञात इत्यर्थः ॥ ३६ ॥

३५ ] ति० टी०–येन भ्रात्रा चोदितोऽसौ भ्राता त्वं च नैवासि न भविष्यसि । तत्र हेतुः—हितमिति । एष धनरक्षको मे हितं नैव ब्रवीति ॥ ३५ ॥

रा० टी०–हितमिति । धनरक्षकः एतत् मम हितं न ब्रवीति किन्तु महेश्वरसखित्वं श्रावयते ॥ ३५ ॥

गो० टी०–हितमिति । धनरक्षको मे हितमिति ब्रवीति । एतद्धि मे न हितं न सममनुचितं चेत्यर्थः । हे मूढ महेश्वरसखित्वं तद्रूपबलसंपत्तिं श्रावयसे किल ॥ ३६ ॥

३६ ] ति० टी०–किं तर्हि ब्रवीतीत्यत्राह—महेश्वरसखित्वमिति । तद्रूपबलसंपदमित्यर्थः कुबेरेण स्ववृत्तान्तोक्तावपि रावणः स्वदुर्मत्या विपरीतं गृहीतवान् । यत्त्वयैतत्कुबेरप्राबल्यं भाषितं तन्नैव क्षमणीयं क्षमार्हम् ॥ ३६ ॥

रा० टी०–नेति । तस्य कुबेरस्य एतद्वचनं यत्त्वया भाषितं तन्नैव क्षमणीयम् तथापि तावत्कालं मयेदं मर्षितम् एकं यदिति संबोधनं यत्नशीलेति तदर्थः ॥ ३६ ॥

गो० टी०–न चेदमिति । इदं न मर्षणीयं यत्त्वयाभिहितं भाषितं तदपि न मर्षणीयमित्यर्थः ॥ ३७ ॥

३७ ] ति० टी०–एतावत्कालं मया तस्य मर्षितं क्षान्तं तदिति हेतोर्यतो मदन्तरात्मेतः पूर्वमयं ज्येष्ठो गुरुर्न हन्तव्य इति मन्यते मन्यते स्म ततो हेतोरित्यर्थः ॥ ३७ ॥

रा० टी०–एतावत्कालपर्यन्तं क्षमायां हेतुं वदन्नाह—नेति । ज्येष्ठो गुरुः अतो यत्न हन्तव्यः इति मया मन्यते अमन्यत इदानीं तस्य वाक्यं श्रुत्वा तु एषा मतिः कृता ॥३७॥

गो० टी०–न हन्तव्य इति । मम हृदयं गुरुः न हन्तव्य इति पूर्वमेव मन्यते स्म । तथापि तस्यैकस्य ते एषा मतिर्जायते । कृतशब्दार्थमाह–त्रीनिति ॥ ३८ ॥ ३९ ॥

३८ ] ति० टी०–एषा मतिः कृता केत्यत्राह—त्रीनिति ॥ ३८ ॥

रा० टी०–तत्स्वरूपमाह–त्रीनिति । एकस्य तस्य धनदस्य कृते त्रीन् लोकान् जेष्यामि चतुरो लोकपालांस्तु यमक्षयं नयिष्यामि नेष्यामि सार्द्धश्लोक एकान्वयी ॥ ३८ ॥

३९ ] ति० टी०–एतन्मुहूर्तमस्मिन्मुहूर्ते । तस्यैकस्य तु वैकृते । वधप्रसङ्ग इत्यर्थः ॥ ३९ ॥

१ इदमर्धं 'प्रीतः प्रीतेन मनसेति षड्विंशपद्योत्तरार्धात्परतः पाठितं गो.पु. । २ पिङ्गलेति गो. पाठः । ३ आगत्य च श्रुतोयं मे तव पापविनिश्चय इति गो. पाठः । ४ हुद्ध इति गो. पाठः । ५ हस्ताविति गो. पाठः । ६ संपीड्योति गो.पाठः । ७ यस्येति गो.पाठः । ८ एतदिति गो. पाठः । ९ नेति गो.पाठः ।

एवमुक्त्वा तु लङ्केशो दूतं खड्गेन जघ्निवान् । ददौ भक्षयितुं ह्येनं राक्षसानां दुरात्मनाम्॥ ४० ॥
ततः कृतस्वस्त्ययनो रथमारुह्य रावणः । त्रैलोक्यविजयाकांक्षी ययौ यत्र धनेश्वरः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

## चतुर्दशः सर्गः ।

रावणानुचराणां यक्षाणां च परस्परजयैषिणां रोमहर्षणः संग्रामः तत्र यक्षाणां पराजयश्च ।

ततः स सचिवैः सार्धं षड्भिर्नित्यबलोद्धतः । महोदरप्रहस्ताभ्यां मारीचशुकसारणैः ॥ १ ॥
धूम्राक्षेण च वीरेण नित्यं समरगर्धिना । वृतः संप्रययौ श्रीमान्क्रोधाल्लोकान्दहन्निव ॥ २ ॥
पुराणि स नदीः शैलान्वनान्युपवनानि च । अतिक्रम्य मुहूर्तेन कैलासं गिरिमागमत् ॥ ३ ॥
संनिविष्टं गिरौ तस्मिन्राक्षसेन्द्रं निशम्य तु । युद्धेप्सुं तं कृतोत्साहं दुरात्मानं समन्त्रिणम् ॥ ४ ॥
यक्षा न शेकुः संस्थातुं प्रमुखे तस्य रक्षसः । राज्ञो भ्रातेति विज्ञाय गता यत्र धनेश्वरः ॥ ५ ॥
ते गत्वा सर्वमाचख्युर्भ्रातुस्तस्य चिकीर्षितम् । अनुज्ञाता ययुर्हृष्टा युद्धाय धनदेन ते ॥ ६ ॥
ततो बलानां संक्षोभो व्यवर्धत इवोदधेः । तस्य नैऋतराजस्य शैलं संचलयन्निव ॥ ७ ॥
ततो युद्धं समभवद्यक्षराक्षससंकुलम् । व्यथिताश्चाभवंस्तत्र सचिवा राक्षसस्य ते ॥ ८ ॥
स दृष्ट्वा तादृशं सैन्यं दशग्रीवो निशाचरः । हर्षनादान्बहून्कृत्वा स क्रोधादभ्यभाषत ॥ ९ ॥

---

रा० टी०–एवमिति । लंकेशः दूतं जघ्निवान् राक्षसानां राक्षसेभ्यः भक्षयितुं ददौ च ॥ ३९ ॥

गो० टी०–एतदिति । तस्यैकस्य कृते वधप्रसङ्ग इति शेषः ॥ ४० ॥

४०–४१ ] ति० टी०–एनं खड्गच्छिन्नं दूतं भक्षयितुमाज्ञां कृतवानिति शेषः ॥ ४०–४१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

रा० टी०–तत इति । रावणः त्रैलोक्यविजयाकांक्षी सन् यत्र धनेश्वरस्तत्र ययौ ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

गो० टी०–एवमिति । एनं खड्गच्छिन्नमित्यर्थः॥४१॥४२॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रयोदशः सर्गः ॥ १३ ॥

१–३] ति० टी०–अथादौ कुबेरजयः–तत इति॥१–३॥

रा० टी०–रावणगमनप्रकारं बोधयन्नाह–तत इत्यादिभिः षड्भिः । महोदरप्रभृतिभिः सचिवैस्सार्द्धं नित्यं बलोद्धतस्स रावणः सचिवैर्वृतस्सन् लोकान्दहन्निव संप्रययौ श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

रा० टी०–पुराणीति । स रावणः मुहूर्तेन पुरादीनतिक्रम्य कैलासमागमत् ॥ ३ ॥

४ ] ति० टी०–समन्त्रिणं महोदरादिषण्मन्त्रिसहितम्॥४॥

५–६ ] ति० टी०–न शेकुरित्यत्र हेतुः—राज्ञो भ्रातेति । कुबेरस्य भ्रातेत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०–सन्निविष्टमिति । युद्धेप्सुं राक्षसेन्द्रं रावणम् तस्मिन् गिरौ सन्निविष्टं निशम्य राज्ञो धनदस्य भ्रातेति विज्ञाय यक्षास्संमुखे स्थातुं न शेकुः अतो यत्र धनेश्वरः तत्र गताः श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

रा० टी०–ते इति । ते यक्षा. भ्रातुः रावणस्य चिकीर्षितं तस्य धनदस्य समीपे आचख्युः धनदेन अनुज्ञातास्सन्तः युद्धाय ययुश्च ॥ ६ ॥

गो० टी०–यक्षा इति । न शेकुरित्यत्र हेतुमाह–राज्ञो भ्रातेति ॥ ५—८ ॥

७–८ ] ति० टी०–तस्य नैर्ऋतराजस्य बलानां संक्षोभः शैलं कैलासं चालयन्निव व्यवर्धत । उदधेः क्षोभो यथा ॥७॥८॥

रा० टी०–तत इति । उदधेस्संक्षोभ इव नैर्ऋतराजस्य बलानां संक्षोभः शैलं सञ्चालयन्निव व्यवर्द्धत ॥ ७ ॥

रा० टी०–तत इति । यक्षैः राक्षसैश्च संकुलं युद्धं समभवत् राक्षसस्य सचिवास्तु व्यथिता अभवन् ॥ ८ ॥

९ ] ति० टी०–हर्षनादाहर्षजसिंहनादान् ॥ ९ ॥

रा० टी०–स इति । रावणः बहून् हर्षनादान् कृत्वा सक्रोधात् क्रोधत्वसहितात् हेतोः अभ्यधावत ॥ ९ ॥

गो० टी०–स दृष्ट्वेति । हर्षनादं सिंहनादम् ॥ ९ ॥

---

१ ह्येति गो. पाठः । २ अत्यर्थमिति गो. पाठः । ३ महोदधेरिति गो. पाठः । ४ अधावतेति गो. रा. पाठः ।

ये तु ते राक्षसेन्द्रस्य सचिवा घोरविक्रमाः । तेषां सहस्रमेकैको यक्षाणां समयोधयत् ॥ १० ॥
ततो गदाभिर्मुसलैरसिभिः शक्तितोमरैः । हन्यमानो दशग्रीवस्तत्सैन्यं समगाहत ॥ ११ ॥
स निरुच्छ्वासवत्तत्र वध्यमानो दशाननः । वर्षद्भिरिव जीमूतैर्धाराभिरवरुध्यत ॥ १२ ॥
न चकार व्यथां चैव यक्षशस्त्रैः समाहतः । महीधर इवाम्भोदैर्धाराशतसमुक्षितः ॥ १३ ॥
स महात्मा समुद्यम्य कालदण्डोपमां गदाम् । प्रविवेश ततः सैन्यं नयन्यक्षान्यमक्षयम् ॥ १४ ॥
स कक्षमिव विस्तीर्णं शुष्केन्धनमिवाकुलम् । वातेनाग्निरिवादीप्तो यक्षसैन्यं ददाह तत् ॥ १५ ॥
तैस्तु तत्र महामात्यैर्महोदरशुकादिभिः । अल्पावशेषास्ते यक्षाः कृता वातैरिवाम्बुदाः॥ १६ ॥
केचित्समाहता भग्नाः पतिताः समरे क्षितौ । ओष्ठांश्च दशनैस्तीक्ष्णैरदशन्कुपिता रणे ॥ १७ ॥
श्रान्ताश्चान्योन्यमालिङ्ग्य भ्रष्टशस्त्रा रणाजिरे । सीदन्ति च तदा यक्षाः कूला इव जलेन ह ॥ १८ ॥
हतानां गच्छतां स्वर्गं युध्यतामथ धावताम् । प्रेक्षतामृषिसङ्घानां न बभूव तदान्तरम् ॥ १९ ॥
भग्नांस्तु तान्समालक्ष्य यक्षेन्द्रांस्तु महाबलान् । धनाध्यक्षो महाबाहुः प्रेषयामास यक्षकान् ॥ २० ॥
एतस्मिन्नन्तरे राम विस्तीर्णबलवाहनः । प्रेषितो न्यपतद्यक्षो नाम्ना संयोधकण्टकः ॥ २१ ॥
तेन चक्रेण मारीचो विष्णुनेव रणे हतः । पतितो भूतले शैलात्क्षीणपुण्य इव ग्रहः ॥ २२ ॥

१०-११ ] ति० टी०–ये रावणसचिवास्तेषामेकैकस्तेषां सहस्रसंख्यानां यक्षाणां सहस्रमयोधयत् ॥ १० ॥ ११ ॥

रा० टी०–ये इति । ये राक्षसेन्द्रस्य सचिवाः तेषामेकैकः यक्षाणां सहस्रं समयोधयत् ॥ १० ॥

रा० टी०–तत इति । गदादिभिर्हन्यमानो दशग्रीवः तेषां यक्षाणां सैन्यं समगाहत अमथ्नात् ॥ ११ ॥

गो० टी०–ये त्विति । सहस्राणां यक्षाणामेकैकं सहस्रं प्रत्येकमयोधयन् ॥ १०—१८ ॥

१२ ] ति० टी०–धाराभिः शस्त्रसमूहैः ॥ १२ ॥

रा० टी०–स इति । वर्षद्भिर्जीमूतैरिव यक्षैरिति शेषः धाराभिर्बाणपरम्पराभिः निरुच्छ्वासवत् यथा भवति तथा वध्यमानो दशाननः अव॰ अत अवारुध्यत ॥ १२ ॥

१३-१४ ] ति० टी०–धाराशतसमुक्षितः शस्त्रक्षतजन्यरुधिरधाराशतसमुक्षितः ॥ १३ ॥ १४ ॥

रा० टी०–नेति । यक्षशस्त्रैः समाहतो रावणः अम्भोदैर्धाराशतसमुक्षितो महीधर इव व्यथां न चकार प्राप ॥ १३ ॥

रा० टी०–स इति । स रावणः गदां समुद्यम्य यक्षान् यमक्षयं नयन् नेतुं सैन्यं प्रविवेश ॥ १४ ॥

१५ ] ति० टी०–कक्षं तृणं तद्वद्विस्तीर्णम् । शुष्केन्धनमिवाकुलं शुष्केन्धने आकुलत्वं च झटिति वह्निव्याप्यत्वम् । यक्षसैन्यं वातेनादीप्तोऽग्निरिव रावणो ददाह ॥ १५ ॥

रा० टी०–स इति । स रावणः कक्षादीन् आदीप्तो वह्निरिव यक्षसैन्यं ददाह ॥ १५ ॥

१६ ] ति० टी०–रावणेन सह वर्तमानैस्तैरमात्यैर्यक्षा अल्पावशेषाः कृताः ॥ १६ ॥

रा० टी०–तैरिति । अल्पावशेषाः ये यक्षाः ते महोदरशुकादिभिः वातैरम्बुदा इव कृताः विनाशिताः ॥ १६ ॥

१७ ] ति० टी०–भग्ना भग्नगात्राः ॥ १७ ॥

रा० टी०–केचिदिति । केचित्समाहताः भग्नाः भग्नगात्राः सन्तः समरे क्षितौ पतिताः अपरे कुपिताः दशनैरोष्ठानदशन् १७

१८ ] ति० टी०–कूला इति लिङ्गव्यत्ययः ॥ १८ ॥

रा० टी०–श्रान्ता इति । रणाजिरे भ्रष्टशस्त्राः श्रान्ताः यक्षाः जलेन कूलाः कूलानीव अन्योन्यमालिङ्ग्यैव सीदन्ति इव एवार्थे ॥ १८ ॥

१९-२१ ] ति० टी०–भूतले धावतां परैर्हतानामथानन्तरं स्वर्गं गच्छतां गत्वा तत्र स्थितानां व्योम्नि स्थित्वा युद्धं प्रेक्षतां प्रेक्षमाणानामृषिसंघानां च दिव्याकाशेऽन्तरं स्थातुमवकाशो न बभूव ॥ १९--२१ ॥

रा० टी०–हतानामिति । हननादिक्रियाविशिष्टानां विशिष्टान् प्रेक्षतामृषिसंघानामृषिसंघैः अन्तरमवकाशसहितं न बभूव अन्तरिक्षमिति शेषः किञ्च हननादिक्रियाविशिष्टैर्यक्षैः प्रेक्षणक्रियाविशिष्टऋषिसङ्घैश्च अन्तरमवकाशसहितं नभो न बभूव॥१९॥

रा० टी०–भग्नानिति । धनाध्यक्षः यक्षेन्द्रान् भग्नान् समालक्ष्य यक्षकान् महायक्षान्तराणि प्रेषयामास ॥ २० ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये नाम्ना संयोधकण्टको यक्षो न्यपतत् ॥ २१ ॥

गो० टी०–हतानामिति । पृथिवीतले युध्यतां हतानामत एव स्वर्गस्थानां तथा व्योम्नि स्थित्वा युद्धं प्रेक्षतां प्रेक्षमाणानामृषिसंघानां च दिवि आकाशे अन्तरमवस्थातुमवकाशः न बभूव । व्योम्नि निबिडमभूदित्यर्थः ॥ १९—२८ ॥

२२ ] ति० टी०–तेन संयोधकण्टकाख्येन यक्षेण चक्रेण हतः पीडितो मारीचः शैलात्कैलासाद्भूतले पतितः । संयोधानां समक्षयोद्धॄणां कण्टकः संहर्तेति संयोधकण्टकः ॥ २२ ॥

१ दुरात्मेति गो. पाठः । २ आयत्त इति गो. पाठः । ३ पृथिवीतल इति गो. पाठः । ४ न बभूवान्तरं दिवीति गो. पाठः ।

ससंज्ञस्तु मुहूर्तेन स विश्रम्य निशाचरः। तं यक्षं योधयामास स च भग्नः प्रदुद्रुवे ॥ २३ ॥
ततः काञ्चनचित्राङ्गं वैदूर्यरजतोक्षितम्। मर्यादां प्रतिहाराणां तोरणान्तरमाविशत् ॥ २४ ॥
तं तु राजन्दशग्रीवं प्रविशन्तं निशाचरम्। सूर्यभानुरिति ख्यातो द्वारपालो न्यवारयत्॥ २५ ॥
स वार्यमाणो यक्षेण प्रविवेश निशाचरः। यदा तु वारितो राम न व्यतिष्ठत्स राक्षसः ॥२६॥
ततस्तोरणमुत्पाट्य तेन यक्षेण ताडितः। रुधिरं प्रस्रवन्भाति शैलो धातुस्रवैरिव ॥ २७ ॥
स शैलशिखराभेण तोरणेन समाहतः। जगाम न क्षतिं वीरो वरदानात्स्वयंभुवः ॥ २८ ॥
तेनैव तोरणेनाथ यक्षस्तेनाभिताडितः। नादृश्यत तदा यक्षो भस्मीकृततनुस्तदा ॥ २९ ॥
ततः प्रदुद्रुवुः सर्वे दृष्ट्वा रक्षःपराक्रमम्। ततो नदीर्गुहाश्चैव विविशुर्भयपीडिताः ॥
त्यक्तप्रहरणाः श्रान्ता विवर्णवदनास्तदा ॥ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

## पञ्चदशः सर्गः।

अमरविस्मयकारिणि तस्मिन् रणेऽसुरहतये धनाध्यक्षप्रहितेन माणिभद्रेण हतेऽपि निशाचरसङ्घे रावणस्तं पराभूयान्तेऽलकेशमपि जित्वा कामगं पुष्पकाख्यं व्योमयानमपि तस्यापाहरत्।

ततस्ताँल्लक्ष्य वित्रस्तान्यक्षेन्द्रांश्च सहस्रशः। धनाध्यक्षो महायक्षं माणिचारमथाब्रवीत् ॥ १ ॥
रावणं जहि यक्षेन्द्र दुर्वृत्तं पापचेतसम्। शरणं भव वीराणां यक्षाणां युद्धशालिनाम् ॥ २ ॥
एवमुक्तो महाबाहुर्माणिभद्रः सुदुर्जयः। वृतो यक्षसहस्रैस्तु चतुर्भिः समयोधयत् ॥ ३ ॥
ते गदामुसलप्रासैः शक्तितोमरमुद्गरैः। अभिघ्नन्तस्तदा यक्षा राक्षसान्समुपाद्रवन् ॥ ४ ॥
कुर्वन्तस्तुमुलं युद्धं चरन्तः श्येनवल्लघु। बाढं प्रयच्छ नेच्छामि दीयतामिति भाषिणः ॥ ५ ॥
ततो देवाः सगन्धर्वा ऋषयो ब्रह्मवादिनः। दृष्ट्वा तत्तुमुलं युद्धं परं विस्मयमागमन् ॥ ६ ॥
यक्षाणां तु प्रहस्तेन सहस्रं निहतं रणे। महोदरेण चानिन्द्यं सहस्रमपरं हतम् ॥ ७ ॥
क्रुद्धेन च तदा राजन्मारीचेन युयुत्सुना। निमेषान्तरमात्रेण द्वे सहस्रे निपातिते ॥ ८ ॥

---

रा० टी०—तेनेति। विष्णुनेव तेन संयोधकण्टकेन चक्रेण हतस्ताडितो मारीचः शैलात् भूतले पतितः ॥ २२ ॥

२३-३०] ति० टी० स च यक्षश्च ॥ मर्यादां जनप्रवेशावधिं प्रतीहाराणां तोरणान्तरं द्वारमध्यमिति तीर्थः। आविशत् रावण इति शेषः ॥ धातुस्रवैर्युतः शैल इव ॥ तोरणेन तोरणस्थदण्डेन ॥ भस्मीकृततनुरिति। चूर्णीकृततनुरित्यर्थः ॥ २९ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

रा० टी०—सेति। मुहूर्तेन ससञ्ज्ञः स मारीचः यक्षं योधयामास स यक्षस्तु भग्नस्सन् प्रदुद्रुवे ॥ तत इति। काञ्चनेन चित्राण्यङ्गानि यस्य वैदूर्यरजताभ्यामुक्षितं प्रतिहाराणां मर्यादां तोरणान्तरं बहिर्द्वारमध्यमाविशत् रावण इति शेषः ॥ तमिति। प्रविशन्तं दशग्रीवं द्वारपालो न्यवारयत ॥ स इति। यक्षेण वार्यमाणोऽपि रावणः प्रविवेश अर्द्धं पृथक्—यदेति। वारितो रावणः यदा न व्यतिष्ठत् ततस्तदा तोरणं तस्य दण्डमुत्पाट्य यक्षेण ताडितः अत एव रुधिरं स्रवन् रावणः धातुस्रवैरुपलक्षितः शैल इव भाति सार्द्धश्लोक एकान्वयी ॥ स इति। तोरणेन समाहतः स रावणः स्वयंभुवो वरदानात् हेतोः क्षितिं न जगाम ॥ तेनेति। तेन रावणेन तेनैव तोरणेन अभिताडितः अत एव भस्मीकृता चूर्णीकृता तनुर्यस्य स यक्षो नादृश्यत ॥ तत इति। रक्षःपराक्रमं दृष्ट्वा सर्वे यक्षाः प्रदुद्रुवुः नदीर्गुहाश्च विविशुश्च सार्धश्लोक एकान्वयी ॥ २३—३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुर्दशः सर्गः ॥ १४ ॥

गो० टी०—तेनैवेति। भस्मीकृततनुरिति। रावणकृततोरणदण्डसमाहननेन चूर्णित इत्यर्थः ॥ २९ ॥ ३० ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्दशः सर्गः ॥ १४ ॥

१-८] ति० टी० अथ पुष्पकग्रहः—तत इति। लक्ष्य लक्षयित्वा। माणिचारो माणिभद्रः ॥ १-८ ॥

---

१ रजसेति गो. पाठः। २ भद्रमिति गो. पा.।

क च यक्षार्जवं युद्धं क च मायाबलाश्रयम् । रक्षसां पुरुषव्याघ्र तेन तेऽभ्यधिका युधि ॥ ९ ॥
धूम्राक्षेण समागम्य माणिभद्रो महारणे । मुसलेनोरसि क्रोधात्ताडितो न च कम्पितः ॥१०॥
ततो गदां समाविध्य माणिभद्रेण राक्षसः । धूम्राक्षस्ताडितो मूर्ध्नि विह्वलः स पपात ह ॥११॥
धूम्राक्षं ताडितं दृष्ट्वा पतितं शोणितोक्षितम् । अभ्यधावत संग्रामे माणिभद्रं दशाननः ॥ १२ ॥
संक्रुद्धमभिधावन्तं माणिभद्रो दशाननम् । शक्तिभिस्ताडयामास तिसृभिर्यक्षपुंगवः ॥ १३ ॥
ताडितो माणिभद्रस्य मुकुटे प्राहरद्रणे । तस्य तेन प्रहारेण मुकुटं पार्श्वमागतम् ॥ १४ ॥
[ [1]ततः संयुध्यमानेन विष्टब्धो न व्यकम्पत । ]
ततः[2]प्रभृति यक्षोऽसौ पार्श्वमौलिरि[3]भूत्किल । तस्मिंस्तु विमुखीभूते माणिभद्रे महात्मनि ॥
संनादः सुमहान्राजंस्तस्मिन्शैले व्यवर्धत ॥ ॥ १५ ॥
ततो दूरात्प्रदद्दशे धनाध्यक्षो गदाधरः । शुक्रप्रौष्ठपदाभ्यां च पद्मशङ्खसमावृतः ॥ १६ ॥

---

रा० टी०—यक्षपराभवानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः । धनाध्यक्षः यक्षेन्द्रान् वित्रस्तान् लक्ष्य लक्षयित्वा अवलोक्य माणिभद्रं महायक्षमब्रवीत् ॥ १ ॥

रा० टी०—तदाकारमाह—रावणमिति । दुर्वृत्तं रावणं जहि अत एव वीराणां शरणमाश्रयो भव ॥ २ ॥

रा० टी०—एवमिति । एवमुक्तश्चतुर्भिर्यक्षसहस्रैर्वृतो माणिभद्रस्समयोधयत् ॥ ३ ॥

रा० टी०—युद्धाकारमाह—ते इत्यादिभिः । गदादिभिरभिघ्नन्तो यक्षाः राक्षसान् समुपाद्रवन् ॥ ४ ॥

रा० टी०—कुर्वन्त इति । युद्धं कुर्वन्तः अत एव श्येनवत् लघु क्षिप्रं यथा भवति तथा चरन्तो यक्षादयः प्रयच्छ युद्धमिति शेषः नेच्छामि निवर्तितुमिति शेषः दीयतां स्वशस्त्रमिति शेषः किञ्च दीयतां छिद्यताम् अस्य शस्त्रमिति शेषः इतिभाषिणो बभूवुरिति शेषः ॥ ५ ॥

रा० टी०—तत इति । देवादयः तुमुलं युद्धं दृष्ट्वा परं विस्मयमागमन् ॥ ६ ॥

रा० टी०—यक्षाणामिति । प्रहस्तेन यक्षाणां सहस्रं निहतं महोदरेण तु अपरं सहस्रं हतम् ॥ ७ ॥

रा० टी०—क्रुद्धेनेति । मारीचेन द्वे सहस्रे निपातिते ८

गो० टी०—ततस्तानित्यादि । माणिचारः माणिभद्रः ॥ १ ॥ १३ ॥

९-१३ ] ति० टी०—ते राक्षसाः ॥ ९-१३ ॥

रा० टी०—तत्र हेतुमाह—क चेति । यक्षाणामार्जवः सरलता यस्मिन् तद्युद्धं क मायाबलाश्रयं च क द्वयोर्महदन्तरालमित्यर्थः तेन हेतुना युधि राक्षसा अभ्यधिकाः ॥ ९ ॥

रा० टी०—धूम्राक्षेणेति । धूम्राक्षेण समागम्य उरसि मुशलेन ताडितोपि माणिभद्रः न कम्पितः ॥ १० ॥

रा० टी०—तत इति । माणिभद्रेण गदां समाविध्य दृढं गृहीत्वा मूर्ध्नि ताडितः अत एव विह्वलो भूत्वा धूम्राक्षः पपात ११

रा० टी०—धूम्राक्षमिति । दशाननो माणिभद्रमभ्यधावत ॥ १२ ॥

रा० टी०—संक्रुद्धमिति । माणिभद्रः अभिधावन्तं दशाननं तिसृभिः शक्तिभिः ताडयामास ॥ १३ ॥

१४] ति० टी०—ताडित इति । तिसृभिः शक्तिभिस्ताडितो राक्षसेन्द्रो गदया माणिभद्रस्य मुकुटे मुकुटस्थले प्राहरत् । तच्च मुकुटस्थलं तेन प्रहारेण पार्श्वमेकपार्श्वमागतं प्राप्तम् ॥ १४ ॥

रा० टी०—ताडित इति । ताडितो रावणः माणिभद्रस्य मुकुटे प्राहरत् तेन प्रहारेण तस्य माणिभद्रस्य मुकुटं पार्श्वमेकपार्श्वभागमागतम् पतितमित्यर्थः ॥ १४ ॥

गो० टी०—ताडित इति । ताडितः शक्तिताडितः रावणः माणिभद्रं गदया मुकुटे प्राहरत् । तच्च मुकुटम् प्रहारात्पार्श्वमागतम् ॥ १४ ॥

१५ ] ति० टी०—संनादो रक्षसाम् ॥ १५ ॥

रा० टी०—तत इति । ततःप्रभृति तत्कालादारभ्य असौ माणिभद्रः पार्श्वमौलिरभूत् अर्द्ध पृथक् तस्मिन्निति माणिभद्रे विमुखीभूते संग्रामान्निवृत्ते सति तस्मिन् शैले सुमहान् सन्नादो व्यवर्द्धत ॥ १५ ॥

गो० टी०—तत इति । संयुद्ध्यमानेन माणिभद्रेण विष्टब्धो निरुद्धः न व्यकम्पत ॥ १५ ॥

१६ ] ति० टी०—पद्मशङ्खसमावृतः शङ्खपद्मनिध्यभिमानिदेवसंवृतः शुक्रप्रौष्ठपदाभ्यां निधिरक्षकमन्त्रिभ्यां सह धनाध्यक्षः प्रदद्दशे भ्रातरमिति संबन्धः ॥ १६ ॥

रा० टी०—तत इति । ततस्तस्माद्भवणानन्तरं शुक्रप्रौष्ठपदाभ्यां तत्तत्संज्ञकनिधिरक्षकाभ्यामुपलक्षितः पद्मशंखैः तदभिमानिदेवैस्समावृतो धनाध्यक्षो ददृशे ॥ १६ ॥

गो० टी०—शङ्खपद्मसमावृतः शङ्खपद्मनिध्यभिमानिदेवैः संवृतः । शुक्रप्रोष्ठपदाभ्यां च सह प्रदद्दशे शुक्रप्रोष्ठपदौ मन्त्रिणौ ॥ १६ ॥

---

१ तमिति गो. पाठः । २ इदमर्धमधिकं गो. पाठे । ३ तदेति गो. पाठः । ४ इति स्मृत इति गो. पाठः ।

स दृष्ट्वा भ्रातरं संख्ये शापाद्विभ्रष्टगौरवम् । उवाच वचनं धीमान्युक्तं पैतामहे कुले ॥ १७ ॥
यन्मया वार्यमाणस्त्वं नावगच्छसि दुर्मते । पश्चादस्य फलं प्राप्य ज्ञास्यसे निरयं गतः ॥ १८ ॥
यो हि मोहाद्विषं पीत्वा नावगच्छति दुर्मतिः । स तस्य परिणामान्ते जानीते कर्मणः फलम् ॥१९॥
दैवतानि न नन्दन्ति धर्मयुक्तेन केन चित् । येन त्वमीदृशं भावं नीतस्तच्च न बुद्ध्यसे ॥ २० ॥
मातरं पितरं विप्रमाचार्यं चावमन्य वै । स पश्यति फलं तस्य प्रेतराजवशं गतः ॥ २१ ॥
अध्रुवे हि शरीरे यो न करोति तपोर्जनम् । स पश्चात्तप्यते मूढो मृतो गत्वात्मनो गतिम् ॥ २२ ॥
[ धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखमेव च । तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत् ॥
पापस्य हि फलं दुःखं तद्भोक्तव्यमिहात्मना । तस्मादात्मापघातार्थं मूढः पापं करिष्यति ]॥
कस्य चिन्न हि दुर्बुद्धेश्छन्दतो जायते मतिः । यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ २३ ॥
ऋद्धिं रूपं बलं पुत्रान्वित्तं शूरत्वमेव च । प्राप्नुवन्ति नरा लोके निर्जितं पुण्यकर्मभिः ॥ २४ ॥

---

१७ ] ति० टी०—शापाद्विश्रवसः कृताद्दारुणस्वभावो भविष्यतीति शापात् । विभ्रष्टगौरवं वन्दनादिप्रयोजकश्रेष्ठत्वगौरवरहितम् अकृतवन्दनादिव्यवहारमिति यावत् । पैतामहे कुले युक्तं तत्कुले उत्पत्तेर्युक्तं वचनमुवाचेत्यर्थः ॥ १७ ॥

रा० टी०—स इति । स धनाध्यक्षः शापात् दारुणस्वभावो भविष्यसीति वचनात् विभ्रष्टं गौरवं गुरुत्वप्रयुक्तप्रणामादिर्यस्य तं भ्रातरं रावणं दृष्ट्वा पैतामहे कुले युक्तमुचितं वचनमुवाच ॥ १७ ॥

गो० टी०—स इति । शापात् पितृकृतदारुणत्वशापात् विभ्रष्टगौरवः वन्दनादिप्रयोजकज्येष्ठगौरवरहितः । युक्तमिति पैतामहे कुले उत्पत्तेरिति शेषः ॥ १७ ॥

१८ ] ति० टी०—वार्यमाणः । असद्वृत्तादिति शेषः । नावगच्छसि । अस्य मद्वचनाकरणस्य पूज्यपूजाव्यतिक्रमादिदोषस्य च फलं परिपाकं प्राप्य तद्वशान्निरयं गतो ज्ञास्यसे । अहं साधु न कृतवान्, किं तु पापमेवेति परितप्स्यसे इत्यर्थः ॥ १८ ॥

रा० टी०—तदाकारमाह—यदिति । मया वार्यमाणस्त्वं यन्नावगच्छसि बुध्यसे तस्मात् अस्य दुष्कृतकर्मणः फलं प्राप्य निरयं गतस्सन् ज्ञास्यसे ज्ञास्यसि ॥ १८ ॥

गो० टी०—यदिति । अस्य फलं कुलाचारस्य फलं परिपाकं प्राप्य ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—तत्कालानवगतदुःखसाधनस्य कालान्तरे फलपाकतो ज्ञाने दृष्टान्तः—यो हीति ॥ १९ ॥

रा० टी०—ननु स्वकृतकर्माणि पापत्वेन मयि न प्रतीयन्ते इति कथं तेषां निरयदातृत्वमित्यत आह—य इति । यो मोहात् अविवेकात् विषं पीत्वापि नावगच्छति जानाति स दुर्मतिः तस्य विषस्य परिणामान्ते रूपांतरप्राप्तौ कर्मणः विषपानस्य फलं जानीते एतेन अज्ञातस्यापि कर्मणः फलं भवतीति सूचितम् ॥ १९ ॥

२० ] ति० टी०—दैवतानि ब्रह्मरुद्रादयः । धर्मयुक्तेन केनचित्प्राकृतेन व्यापारेण त्वामिदानीं नाभिनन्दन्ति त्वयि विमुखा भवन्ति । संप्रति त्वयि धर्माभावाद्येन देवतानभिनन्दनेन त्वमीदृशं भावं क्रूरं नीतः प्रापितः सन्नावबुद्ध्यसे॥२०॥

रा० टी०—दैवतानीति । येन केन चित् हेतुना ईदृशं ऋषिप्रभृतिहिंसारूपं भावं धर्मं नीतः प्राप्तस्त्वं तत् हिंसनं न बुध्यसे पापत्वेन न जानासि ज्ञात्वा न निवर्तसे इत्यर्थः तेन हेतुना धर्मयुक्तेनोपलक्षितानि दैवतानि ब्रह्मादयो न नन्दन्ति एतेन तव विनाशकालः संप्राप्त इति सूचितम् ॥ २० ॥

गो० टी०—देवता इति । धर्मयुक्तेन तव केन चिद्व्यापारेण त्वामिदानीं नाभिनन्दन्ति । धर्माभावात्त्वयि विमुखा भवन्तीत्यर्थः । येन देवतावैमुख्येन । त्वमीदृशं क्रूरं भावं नीतः सन्नावबुध्यसे ॥ २० ॥ २१ ॥

२१ ] ति० टी०—तस्य मात्राद्यवमानस्य । अत्र मात्रादिपदं पूज्योपलक्षणम् ॥ २१ ॥

रा० टी०—ननु मास्तु तेषां नन्दनमित्यत आह—मातरमिति । यः मात्रादीन् अवमान्य वर्तत इति शेषः सः तस्य फलं प्रेतराजवशं गतस्सन् पश्यति ॥ २१ ॥

२२ ] ति० टी०—तपोर्जनं तपःसंपादनम् । आत्मनो गतिमात्मनः कर्मसंपादितां गतिम् ॥ २२ ॥

रा० टी०—अध्रुव इति । अध्रुवे शरीरे यस्तपोर्जनं परमात्मतोषकतपसः संग्रहं न करोति स मूढो मृतस्सन् आत्मनः स्वक्रियायाः गतिं फलं गत्वा पश्चात्तप्यते ॥ २२ ॥

गो० टी०—अध्रुव इति । तपसः आर्जनं संपादनम् २२-२४

२३-२४ ] ति० टी०—दुर्बुद्धेर्बुद्धिरहितस्य कस्य चित्कस्यापि पुरुषस्य छन्दतः पित्रादिसेवां विना स्वेच्छामात्रेण मतिः शुभा मतिर्न जायते, अतो मात्रादिसेवाहीनो यादृशं स्वदुर्मत्यनुरूपं दुष्कर्म कुरुते तादृशं तदनुरूपं निरयगामित्वादिरूपं फलमश्नुते प्राप्नोति ॥ २३ ॥ २४ ॥

---

१ देवता नाभीति गो. पाठः । २ सन्नावेति गो. पाठः । ३ यो हीति गो. पाठः । ४ मन्यते इति गो. पाठः । ५ इदं पद्यद्वयमधिकं गो. पु. । ६ बुद्धिरूपं फलं पुत्रान् शौर्यं शूरत्वमेव चेति गो. पाठः ।

एवं निरयगामी त्वं यस्य ते मतिरीदृशी । न त्वां समभिभाषिष्येऽसद्वृत्तेष्वेष निर्णयः ॥ २५ ॥
एवमुक्तास्ततस्तेन तस्यामात्याः समाहताः । मारीचप्रमुखाः सर्वे विमुखा विप्रदुद्रुवुः ॥ २६ ॥
ततस्तेन दशग्रीवो यक्षेन्द्रेण महात्मना । गदयाभिहतो मूर्ध्नि न च स्थानात्प्रकम्पितः ॥ २७ ॥
ततस्तौ राम निघ्नन्तौ तदान्योन्यं महामृधे । न विह्वलौ न च श्रान्तौ तावुभौ यक्षराक्षसौ ॥ २८ ॥
आग्नेयमस्त्रं तस्मै स मुमोच धनदस्तदा । राक्षसेन्द्रो वारुणेन तदस्त्रं प्रत्यवारयत् ॥ २९ ॥
ततो मायां प्रविष्टोऽसौ राक्षसीं राक्षसेश्वरः । रूपाणां शतसाहस्रं विनाशाय चकार च ॥ ३० ॥
व्याघ्रो वराहो जीमूतः पर्वतः सागरो द्रुमः । यक्षो दैत्यस्वरूपी च सोऽदृश्यत दशाननः ॥ ३१ ॥
बहूनि च करोति स्म दृश्यन्ते न त्वसौ ततः । प्रतिगृह्य ततो राम महदस्त्रं दशाननः ॥
जघान मूर्ध्नि धनदं व्याविद्ध्य महतीं गदाम् ॥ ॥ ३२ ॥
एवं स तेनाभिहतो विह्वलः शोणितोक्षितः । कृत्तमूल इवाशोको निपपात धनाधिपः ॥ ३३ ॥
ततः पद्मादिभिस्तत्र निधिभिः स तदा वृतः । धनदोच्छ्वासितस्तैस्तु वनमानीय नन्दनम् ॥ ३४ ॥

रा० टी०—नन्वेवं मतिर्मयि कुतो नास्तीत्यत आह—कस्य चिदिति । कस्य चित् दुर्बुद्धेः छन्दतः गुर्वादिसेवामन्तरा मतिः सुबुद्धिर्न जायते अत एव यादृशं कर्म निषिद्धक्रियां कुरुते तादृशं फलमश्नुते ॥ २३ ॥

रा० टी०—तदेव विशदयन्नाह—ऋद्धिमिति । नराः पुण्यकर्मभिर्निर्जितं सम्पादितमृद्ध्यादि प्राप्नुवन्ति ॥ २४ ॥

गो० टी०—कस्य चिदिति । दुर्बुद्धेर्बुद्धिरहितस्य कस्यापि पुरुषस्य । छन्दतः पितृमात्रादिसेवां विना स्वेच्छामात्रेण धीर्मतिः शुभमतिर्न हि जायते ॥ २५ ॥ २६ ॥

२५ ] ति० टी० एवमिति । एवं क्रूरकर्मा त्वं निरयगामी भविष्यसि । यस्य त ईदृशी मतिः, अतस्त्वां न समभिभाषिष्ये । एष एवासद्वृत्तेषु सद्वृत्तानां निर्णयोऽनुष्ठेयनिश्चयः २५

रा० टी०—एवमिति । यस्य ते मतिः ईदृशी स त्वमेवं खललोकवन्निरयगाम्यसि अतः त्वां न समभिभाषिष्ये ननु संभाषणाभावेन किमित्यत आह असद्वृत्तेषु एषः भाषणाभाव एव निर्णयः ॥ २५ ॥

गो० टी०—एवमिति । एवं क्रूरकर्मा त्वं निरयगामी भविष्यसि । यस्य ते ईदृशी मतिः तादृशं त्वां न समभिभाषिष्ये । दुर्वृत्तस्य विषये एष एव हि निर्णय इत्यर्थः ॥ २७ ॥

२६ ] ति० टी० एवमुक्ता रावणवदेव यूयमप्यसंभाष्या इत्युक्ताः । तत एवंवचनानन्तरं तेन धनदेन समाहतास्ताडिता मारीचप्रमुखाः सर्वे विमुखा युद्धविमुखा विप्रदुद्रुवुः ॥ २६ ॥

रा० टी०—एवमिति । तेन धनदेन एवं रावणवचनवदुक्ता यूयमपि न संभाष्या इति कथिता इत्यर्थः अत एव समाहताः ताडिताः मारीचप्रमुखाः विमुखास्सन्तो विप्रदुद्रुवुः॥२६॥

गो० टी०—एवमुक्ता इति । रावणवत् यूयमपसंभाष्या इत्युक्ता इत्यर्थः । समाहताः धनदेन ताडिताः ॥ २८ ॥

२७-२९ ] ति० टी०—ततस्तद्विद्रावणानन्तरम् । तेन धनदेन ॥ २७–२९ ॥

रा० टी०—तत इति । ततो विद्रवणानन्तरम् तेन धनदेन गदया मूर्ध्नि अभिहतोऽपि दशग्रीवः स्थानात् न प्रकम्पितः॥२७॥

रा० टी०—तत इति । अन्योन्यं निघ्नन्तौ यक्षराक्षसौ विह्वलौ न श्रान्तौ च न ॥ २८ ॥

रा० टी०—आग्नेयमिति । धनदः आग्नेयमस्त्रं तस्मै रावणाय मुमोच राक्षसेन्द्रस्तु वारुणेन तदस्त्रं प्रत्यवारयत् २९

३० ] ति० टी०—राक्षसेश्वरो रावणो विनाशाय धनदनाशाय रूपाणां शतसाहस्रं चकार ॥ ३० ॥

रा० टी०—तत इति । राक्षसीं मायां प्रविष्टो राक्षसेश्वरः विनाशाय अरीणां विध्वंसाय रूपाणां शतसाहस्रं चकार ॥३०॥

गो० टी०—तत इति । मायां प्रविष्टः अदृश्यत्वं प्राप्त इत्यर्थः । निधिभिर्देवताभिः । धनदोच्छ्वासित इति संधिरार्षः ॥ ३२ ॥ ३७ ॥

३१ ] ति० टी०—रूपाण्याह—व्याघ्र इति ॥ ३१ ॥

रा० टी०—रूपाणि बोधयन्नाह—व्याघ्र इति । व्याघ्रत्वाद्यन्यतमविशिष्टो दशाननोऽदृश्यत ॥ ३१ ॥

३२-३३ ] ति० टी०—बहूनि शस्त्रवर्षाणि च करोति स्म । तान्येव दृश्यन्ते न त्वसौ तथा मायाप्रयुक्तव्याघ्रादय एव दृश्यन्ते न त्वसौ ॥ ३२ ॥ ३३ ॥

रा० टी०—बहूनीति । दशाननः बहूनि रूपाणि करोति स्म तान्येव रूपाणि दृश्यन्ते असौ दशाननस्तु न दृश्यते अदृष्टं पृथक् ॥ ३२ ॥

रा० टी०—प्रतीति । ततोऽनन्तरं दशाननः महदस्त्रं गदां प्रतिगृह्य व्याविध्य प्रक्षिप्य धनदं मूर्ध्नि जघान ॥ ३३ ॥

रा० टी०—एवमिति । एवं तेनास्त्रेणाभिहतः अत एव शोणितेनोक्षितो धनाधिपः कृत्तमूलोऽशोकस्तदभिधवृक्ष इव निपपात ॥ ३४ ॥

३४ ] ति० टी०—निधिभिर्निधिदेवताभिः । धनदोच्छ्वासित इति संधिरार्षः ॥ ३४ ॥

१ बभूवतुरमर्षणाविति गो. पाठः ।

निर्जित्य राक्षसेन्द्रस्तं धनदं हृष्टमानसः । पुष्पकं तस्य जग्राह विमानं जयलक्षणम् ॥ ३५ ॥
काञ्चनस्तम्भसंवीतं वैदूर्यमणितोरणम् । मुक्ताजालप्रतिच्छन्नं सर्वकालफलद्रुमम् ॥ ३६ ॥
मनोजवं कामगमं कामरूपं विहंगमम् । मणिकाञ्चनसोपानं तप्तकाञ्चनवेदिकम् ॥ ३७ ॥
देवोपवाह्यमक्षय्यं सदादृष्टिमनःसुखम् । बह्वाश्चर्यं भक्तिचित्रं ब्रह्मणा परिनिर्मितम् ॥ ३८ ॥
निर्मितं सर्वकामैस्तु मनोहरमनुत्तमम् । न तु शीतं न चोष्णं च सर्वर्तुसुखदं शुभम् ॥ ३९ ॥
स तं राजा समारुह्य कामगं वीर्यनिर्जितम् । जितं त्रिभुवनं मेने दर्पोत्सेकात्सुदुर्मतिः ॥
जित्वा वैश्रवणं देवं कैलासात्समवातरत् ॥ ४० ॥
स तेजसा विपुलमवाप्य तं जयं प्रतापवान्विमलकिरीटहारवान् ।
रराज वै परमविमानमास्थितो निशाचरः सदसि गतो यथानलः ॥ ४१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

## षोडशः सर्गः ।

अनन्तरं पुष्पकमारुह्य महासेनप्रसूतिं शरवणं गत्वा कैलासं प्रविविक्षुमात्मानं निवारयन्तं नन्दीश्वरं वानरमुखं वीक्ष्य प्रहसन् रावणस्तेन शप्तोऽपि न निवर्तमानः कैलासं चालयन् रुद्रपादाङ्गुष्ठपीडनदुर्धरभारतद्गिरिनिष्पिष्टाखिलभुजः शाश्वतीः समाः परितोष्य बहुभिः स्तोत्रैः शङ्करं तल्लब्धवरः खड्गं च चन्द्रहासाख्यं गृहीत्वा न्यवर्तत ।

स जित्वा धनदं राम भ्रातरं राक्षसाधिपः । महासेनप्रसूतिं तद्ययौ शरवणं महत् ॥ १ ॥
अथापश्यद्दशग्रीवो रौक्मं शरवणं महत् । गभस्तिजालसंवीतं द्वितीयमिव भास्करम् ॥ २ ॥

---

रा० टी०–तत इति । ततो निपातानन्तरं पद्मादिभिर्निधिभिस्तद्देवताभिर्वृतो धनदः तैः पद्मादिभिर्नन्दनमानीय उच्छ्वासितः सन्धिरार्षः ॥ ३९ ॥

३५–३७ ] ति० टी०–जयलक्षणं जयचिह्नम् । ख्यापयन्निति शेषः ॥ ३५–३७ ॥

३८–४१ ] ति० टी०–ब्रह्मणा विश्वकर्मणा ॥ ३८–४१ ॥

रा० टी०–निर्जित्येति । राक्षसेन्द्रो धनदं निर्जित्य काञ्चनस्तम्भैस्सम्वीतं वैदूर्यमणेस्तोरणं बहिर्द्वारं यस्मिन् सर्वकामफलाः द्रुमाः यस्मिन् कामरूपाः विहंगमाः यस्मिन् मणिना युक्तानि काञ्चनानि सोपानानि यस्मिन् तप्तकाञ्चनी वेदिका यस्मिन् देवैरुपवाह्यं यस्येति वा सदादृष्टिमनःसुखं भक्त्या यथोचितगृहविभागेन चित्रं ब्रह्मणा विश्वकर्मणा परिनिर्मितं परिनिर्मापितं सर्वकामैर्निर्मितं संयुक्तं न शीतमतिशीतभिन्नं नचोष्ममत्युष्णमित्यमत एव सर्वर्तुषु सुखदं पुष्पकं नाम तस्य विमानं जग्राह श्लोकपञ्चकमेकान्वयि ॥३६–४०॥

रा० टी०–स इति । राजा रावणः वीर्येण निर्जितं तं पुष्पकं समारुह्य त्रिभुवनं जितं मेने ॥ ४१ ॥

गो० टी०–निर्जित्येति । जयलक्षणं जयचिह्नम् । ख्यापयन्तीति शेषः ॥ ३८ ॥ ४९ ॥

इति श्रीगो०श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पंचदशः सर्गः ॥ १५ ॥

४२ ] ति० टी०–कतकस्तु त्रयस्त्रिंशच्छ्लोकसंख्यामत्र सर्गे लिलेख ॥ ४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

रा० टी०–जित्वेति । वैश्रवणं जित्वा कैलासात् समवातरत् रावण इति शेषः अर्द्धं पृथक् स इति । विमलकिरीटहारवान् रावणः विपुलं जयमवाप्य सदसि गतस्सन् अनल इव रराज ॥ ४२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चदशः सर्गः ॥ १५ ॥

१–२ ] ति० टी०–स जित्वेति । महासेनस्य स्कन्दस्य प्रसूतिर्यस्मिंस्तच्छरवणं ययौ ॥ १ ॥ २ ॥

रा० टी०–पुष्पकविमानानयनानन्तरकालिकं वृत्तांतमाह—स इत्यादिभिः । रावणः धनदं जित्वा महासेनस्य स्कन्दस्य प्रसूतिरुत्पत्तिर्यस्मिन् तत् शरवणं ययौ ॥ १ ॥

रा० टी०–अथेति । गभस्तीनां किरणानां जालैस्सम्वीतमत एव द्वितीयं भास्करमिव वनानि जलानि अन्तरे यस्य तं कञ्चित् पर्वतमारुह्य पुष्पकं विष्टम्भितं रावणः प्रेक्षते प्रैक्षत सार्द्धश्लोक एकान्वयी ॥ २ ॥

गो० टी०–स जित्वेत्यादि । महासेनप्रसूतिं स्कन्दप्र-

---

१ कामेति गो. रा. पाठः । २ स्वेति गो. पाठः ।

स पर्वतं समारुह्य कंचिद्रम्यवनान्तरम् । प्रेक्षते पुष्पकं तत्र रामविष्टम्भितं तदा ॥ ३ ॥
विष्टब्धं किमिदं कस्मान्नागमत्कामगं कृतम् । अचिन्तयद्राक्षसेन्द्रः सचिवैस्तैः समावृतः ॥ ४ ॥
किंनिमित्तमिच्छया मे नेदं गच्छति पुष्पकम् । पर्वतस्योपरिष्ठस्य कर्मेदं कस्यचिद्भवेत् ॥ ५ ॥
ततोऽब्रवीत्तदा राम मारीचो बुद्धिकोविदः । नेदं निष्कारणं राजन्पुष्पकं यन्न गच्छति ॥ ६ ॥
अथ वा पुष्पकमिदं धनदान्नान्यवाहनम् । अतो निस्पन्दमभवद्धनाध्यक्षविनाकृतम् ॥ ७ ॥
इति वाक्यान्तरे तस्य करालः कृष्णपिङ्गलः । वामनो विकटो मुण्डी नन्दी ह्रस्वभुजो बली ॥ ८ ॥
ततः पार्श्वमुपागम्य भवस्यानुचरोऽब्रवीत् । नन्दीश्वरो वचश्चेदं राक्षसेन्द्रमशङ्कितः ॥ ९ ॥
निवर्तस्व दशग्रीव शैले क्रीडति शंकरः । सुपर्णनागयक्षाणां देवगन्धर्वरक्षसाम् ॥ १० ॥
सर्वेषामेव भूतानामगम्यः पर्वतः कृतः । [तन्निवर्तस्व दुर्बुद्धे मा विनाशमवाप्स्यसि ॥]
इति नन्दिवचः श्रुत्वा क्रोधात्कम्पितकुण्डलः । ॥ ११ ॥
रोषात्तु ताम्रनयनः पुष्पकादवरुह्य सः । कोऽयं शंकर इत्युक्त्वा शैलमूलमुपागतः ॥ १२ ॥
सोऽपश्यन्नन्दिनं तत्र देवस्यादूरतः स्थितम् । दीप्तं शूलमवष्टभ्य द्वितीयमिव शंकरम् ॥ १३ ॥

---

सूतिस्थानम् । अपश्यदित्यादि पूर्वसर्गान्तोक्तसंक्षेपप्रपञ्चनम् ॥ १ ॥ २ ॥

३ ] ति० टी०—विष्टम्भितं निरुद्धसंचारम् ॥ ३ ॥

गो० टी०—स इति । विष्टम्भितं रुद्राज्ञया रुद्धसंचारम्। कामगं पुष्पकम् अगममिति राक्षसश्चिन्तयामासेत्यन्वयः ३॥४

४ ] ति० टी०—कामगं स्वामिचित्तानुकूलसंचारवत्कृतं निर्मितमिदं विष्टब्धं किम् । तदेवाह—कस्मान्नागमदित्यचिन्तयत् ॥ ४ ॥

रा० टी०—विष्टब्धमिति । कामगं कृतकामगत्वेन रचितमिदं पुष्पकं कस्मान्नागमत् किं किमर्थं विष्टब्धं निरुद्धमिति राक्षसेन्द्रोऽचिन्तयत् ॥ ३ ॥

५ ] ति० टी०—मे ममेच्छया पुष्पकं न गच्छति तदिदं किंनिमित्तमिति विचिन्त्य स्वयमेव हेतुं तर्कयति—पर्वतस्येति। पर्वतोपरि स्थितस्येत्यर्थः । कस्य चित्पुरुषस्येदं कर्म स्तम्भनकर्म भवेत् ॥ ५ ॥

रा० टी०—किमिति । इच्छया इदं पुष्पकं किंनिमित्तं कस्मात् कारणान्न गच्छति स्वनिश्चयमाह पर्वतस्योपरिष्ठस्य पर्वतोपरिभागे स्थितस्य कस्य चित् इदं कर्म भवेत् ॥ ४ ॥

गो० टी०—किंनिमित्तमिति । कस्य कस्य पुरुषस्य इदं कर्म भवेत् ॥ ५–२२ ॥

६ ] ति० टी०—मारीचोऽपि तदुक्तमेवानुवदति—तत इति । पुष्पकं न गच्छतीति यन्नेदं निष्कारणम् ॥ ६ ॥

रा० टी०—तत इति । मारीचोऽब्रवीत् तदाकारमाह—यत्पुष्पकं न गच्छति तन्निष्कारणं न किञ्चित्कारणमस्त्येवेत्यर्थः ॥ ५ ॥

७–८ ] ति० टी०—कारणमूहयित्वाह—अथवेति । धनदान्नान्यवाहनम् । धनदादन्यस्य वाहनं नेत्यर्थः ॥ ७ ॥ ८॥

९–१० ] ति० टी०—पार्श्वे । रावणस्येति शेषः । अशङ्कित उपागम्याब्रवीदित्यन्वयः ॥ ९ ॥ १० ॥

रा० टी०—अथवेति । अथवा इदं पुष्पकं धनदात् अन्यस्य वाहनं न अत एव धनाध्यक्षेण विनाकृतं निस्पन्दं गमनरहितमभवत् ॥ ६ ॥

रा० टी०—इतीति । तस्य मारीचस्य इति वाक्यांतरे कथनमध्यसमये करालो भयंकरः कृष्णपिङ्गलः वामनः खर्वः अत एव ह्रस्वभुजो भवस्यानुचरो नन्दी नित्यानन्दयुक्तो नन्दीश्वरः इदं वाक्यमब्रवीत् अर्द्धचतुष्टयमेकान्वयि ॥ ७–८ ॥

रा० टी०—तदाकारमाह—निवर्तस्वेत्यादिभिः । शैले शंकरः क्रीडति अत एव सुपर्णादीनामगम्यः पर्वतः कृतः अतस्त्वं निवर्तस्व सार्द्धश्लोक एकान्वयी ॥ ९–१० ॥

११ ] ति० टी०—कृतः । ईश्वरेच्छयेति शेषः ॥ ११ ॥

रा० टी०—इतीति । नन्दिवचः श्रुत्वा स रावणः पुष्पकादवरुह्य कोऽयं शंकर इत्युक्त्वा शैलमूलमुपागतोऽभवदिति शेषः सार्द्धश्लोक एकान्वयी ॥ ११ ॥

१२–१३ ] ति० टी०—शैलमूलमुपागतः । अन्तरिक्षात्पर्वतं प्राप्तः ॥ १२ ॥ १३ ॥

रा० टी०—स इति । स रावणः देवस्य शिवस्यादूरतः स्थितं नन्दिनमपश्यत् ॥ १२ ॥

---

१ अपश्यदिति गो. पाठः । २ पुष्पकं दृष्ट्वा ह्यगममिति गो. पाठः । ३ चेच्छयेति गो. पाठः । ४ इदमर्धमधिकं गो. पाठे ।

तं दृष्ट्वा वानरमुखमवज्ञाय स राक्षसः । प्रहासं मुमुचे तत्र सतोय इव तोयदः ॥ १४ ॥
तं क्रुद्धो भगवान्नन्दी शंकरस्यापरा तनुः । अब्रवीत्तत्र तद्रक्षो दशाननमुपस्थितम् ॥ १५ ॥
यस्माद्वानररूपं मामवज्ञाय दशानन । अशनीपातसंकाशमपहासं प्रमुक्तवान् ॥ १६ ॥
तस्मान्मद्वीर्यसंयुक्ता मद्रूपसमतेजसः । उत्पत्स्यन्ति वधार्थं हि कुलस्य तव वानराः ॥ १७ ॥
नखदंष्ट्रायुधाः क्रूर मनःसंपातरंहसः । युद्धोन्मत्ता बलोद्रिक्ताः शैला इव विसर्पिणः ॥ १८ ॥
ते तव प्रबलं दर्पमुत्सेधं च पृथग्विधम् । व्यपनेष्यन्ति संभूय सहामात्यसुतस्य च ॥ १९ ॥
किं त्विदानीं मया शक्यं हन्तुं त्वां हे निशाचर । न हन्तव्यो हतस्त्वं हि पूर्वमेव स्वकर्मभिः ॥ २० ॥
इत्युदीरितवाक्ये तु देवे तस्मिन्महात्मनि । देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता ॥ २१ ॥
अचिन्तयित्वा स तदा नन्दिवाक्यं महाबलः । पर्वतं तु समासाद्य वाक्यमाह दशाननः ॥ २२ ॥
पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः । तमिमं शैलमुन्मूलं करोमि तव गोपते ॥ २३ ॥
केन प्रभावेण भवो नित्यं क्रीडति राजवत् । विज्ञातव्यं न जानीते भयस्थानमुपस्थितम् ॥ २४ ॥
एवमुक्त्वा ततो राम भुजान्विक्षिप्य पर्वते । तोलयामास तं शीघ्रं स शैलः समकम्पत ॥ २५ ॥
चालनात्पर्वतस्यैव गणा देवस्य कम्पिताः । चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् ॥ २६ ॥
ततो राम महादेवो देवानां प्रवरो हरः । पादाङ्गुष्ठेन तं शैलं पीडयामास लीलया ॥ २७ ॥

१४-१८ ] शि० टी०-प्रहासं मुमुचे । कृतवानित्यर्थः ॥ १४-१८ ॥

रा० टी०-तमिति । राक्षसो रावणः तं नन्दिनं दृष्ट्वा अवज्ञाय अनादृत्य तोयद इव प्रहासं मुमुचे चकार ॥ १३ ॥

रा० टी०-तमिति । शंकरस्यापरा तनुः क्रुद्धो नन्दी दशाननमब्रवीत् ॥ १४ ॥

रा० टी०-तदाकारमाह—यस्मादिति । यस्मात् वानररूपं मामवज्ञाय अपहासं प्रमुक्तवानसि तस्मात् मद्वीर्यसंयुक्ताः अहं वीर्यसंयुक्तो यैस्ते मद्रूपस्य समं तेजो रूपं येषां किञ्च मद्रूपसमे सकलमद्रूपे तेजो यैः ते वानराः तव कुलस्य वधार्थमुत्पत्स्यन्ति अर्द्धचतुष्टयमेकान्वयि ॥ १५-१६ ॥

रा० टी०-नखेति । मनस्सम्पात इव रंहो वेगो येषां विसर्पिणः शैला इव ये वानराः ते तव प्रबलं दर्पं गर्वमुत्सेधं शरीरोन्नतत्वं च व्यपनेष्यन्ति अर्द्धचतुष्टयमेकान्वयि १७-१८

१९ ] ति० टी०-दर्प आन्तरः । उत्सेधः शारीरः॥१९॥

२० ] ति० टी०-किंत्विति । हे निशाचर, त्वां हन्तुं यद्यपि मया शक्यमथापीदानीं न हन्तव्यः । भगवद्वचनानुपालनायेति शेषः । किं च त्वं पूर्वमेव स्वकर्मभिः स्वदुष्कृतैर्हत एवासि । कालान्तरे मद्रूपैरेव हन्तव्यो भविष्यसीति भावः॥२०

रा० टी०-किमिति । हे निशाचर यद्यपि त्वां हन्तुमिदानीं मया शक्यं तथापि त्वं न हंतव्यः हि यतः स्वकर्मभिः पूर्वमेव हतोऽसि॥ १९ ॥

२१-२२ ] ति० टी०-तद्वाक्यसमनन्तरं देवदुन्दुभ्यादिप्रवृत्तिस्तु तच्छापेन रावणवधनिश्चयजसंतोषात् ॥२१॥२२॥

रा० टी०-इतीति । देवे नन्दीश्वरे इत्युदीरितवाक्ये सति देवदुन्दुभयो नेदुः ॥ २० ॥

रा० टी०-अचिन्तयित्वेति । महाबलो रावणः नन्दिवाक्यमचिन्तयित्वा पर्वतं समासाद्य वाक्यमाह ॥ २१ ॥

२३-२४ ] ति० टी०-यत्कृते यदाश्रयक्रीडानिमित्तं गच्छतो मम पुष्पकस्य गतिश्छिन्ना त्वया । हे गोपते रुद्र, तवेमं पर्वतमुन्मूलं करोमि ॥ २३ ॥ २४ ॥

रा० टी०-तदाकारमाह—पुष्पकस्येति । यत्कृते यदर्थं पुष्पकस्य गतिस्त्वया छिन्ना तमिमं शैलमुन्मूलं करोमि॥२२॥

रा० टी०-केनेति । भवः प्रभावेण नित्यं क्रीडति विज्ञातव्यमुपस्थितभयस्थानं न जानीते च ॥ २३ ॥

गो० टी०-पुष्पकस्येति । गोपते हे वृषभपते रुद्र२३-२७

२५ ] ति० टी०-पर्वते पर्वताधस्तात् ॥ २५ ॥

रा० टी०-एवमिति । एवमुक्त्वा स रावणः पर्वते भुजान् विक्षिप्य तं पर्वतं तोलयामास अत एव शैलस्समकम्पत ॥ २४ ॥

२६-२७ ] ति० टी०-आश्लिष्टाश्लिष्टवती । कर्तरि क्तः ॥ २६ ॥ २७ ॥

रा० टी०-चालनादिति । पर्वतस्य चालनात् देवस्य शम्भोर्गणाः कम्पिताः पार्वती चचाल अत एव महेश्वरमाश्लिष्टाभवदिति शेषः ॥ २५ ॥

रा० टी०-तत इति । महादेवः तं शैलं पादांगुष्ठेन लीलयैव पीडयामास ॥ २६ ॥

१ मद्रूपसंपन्ना मद्वीर्यसमतेजस इति गो. पाठः । २ क्रूरा इति गो. पाठः । ३ शैलमिति गो. पाठः ।

पीडितास्तु ततस्तस्य शैलैस्तम्भोपमा भुजाः । विस्मिताश्चाभवंस्तत्र सचिवास्तस्य रक्षसः ॥ २८ ॥
रक्षसा तेन रोषाच्च भुजानां पीडनात्तथा । मुक्तो विरावः सहसा त्रैलोक्यं येन कम्पितम् ॥२९॥
मेनिरे वज्रनिष्पेषं तस्यामात्या युगक्षये । तदा वर्त्मसु चलिता देवा इन्द्रपुरोगमाः ॥ ३० ॥
समुद्राश्चापि संक्षुब्धाश्चलिताश्चापि पर्वताः । यक्षा विद्याधराः सिद्धाः किमेतदिति चाब्रुवन् ॥३१॥
[ अथ ते मन्त्रिणस्तस्य विक्रोशन्तमथाब्रुवन् ।]
तोषयस्व महादेवं नीलकण्ठमुमापतिम् । तमृते शरणं नान्यं पश्यामोऽत्र दशानन ॥ ३२ ॥
स्तुतिभिः प्रणतो भूत्वा तमेव शरणं व्रज । कृपालुः शंकरस्तुष्टः प्रसादं ते विधास्यति ॥ ३३ ॥
एवमुक्तस्तदामात्यैस्तुष्टाव वृषभध्वजम् । सामभिर्विविधैः स्तोत्रैः प्रणम्य स दशाननः ॥
संवत्सरसहस्रं तु रुदतो रक्षसो गतम् ॥ ॥ ३४ ॥
ततः प्रीतो महादेवः शैलाग्रे विष्ठितं प्रभुः । मुक्त्वा चास्य भुजान्राम प्राह वाक्यं दशाननम् ॥३५॥
प्रीतोऽस्मि तव वीरस्य शौटीर्याच्च दशानन । शैलाक्रान्तेन यो मुक्तस्त्वयारावः सुदारुणः ॥३६॥
यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना राजन्भविष्यसि ॥३७॥
देवता मानुषा यक्षा ये चान्ये जगतीतले । एवं त्वामभिधास्यन्ति रावणं लोकरावणम् ॥ ३८ ॥
गच्छ पौलस्त्य विस्रब्धं पथा येन त्वमिच्छसि । मया चैवाभ्यनुज्ञातो राक्षसाधिप गम्यताम् ॥ ३९ ॥

२८-२९ ] ति० टी०-तस्य पर्वताधोभागगता भुजाः पीडिताः । अभवन्निति शेषः ॥ २८ ॥ २९ ॥

३०-३१ ] ति० टी०-तस्यामात्यास्तदीयं शब्दं युगक्षये जायमानं वज्रनिष्पेषं मेनिरे तदा तच्छब्दश्रवणकाले । वर्त्मस्विति । वर्त्मसु स्थिता देवा वर्त्मभ्यः प्रचलिता इत्यर्थः ॥३१

रा० टी०-पीडिता इति । तस्य रावणस्य शैलस्तम्भोपमा भुजाः पीडिताः अत एव सचिवा विस्मिता अभवन् २७

गो० टी०-पीडिता इति । अधोगताः पर्वतस्याधोभागगताः भुजाः पीडिता आसन् ॥ २८ ॥ २९ ॥

रा० टी०-रक्षसेति । रोषात् भुजानां पीडनाच्च रक्षसा विरावो रोदनमुक्तः कृतः येन त्रैलोक्यं कम्पितमत एव तस्य रावणस्यामात्या युगक्षये जातं वज्रनिष्पेषं मेनिरे सार्द्धश्लोक एकान्वयी ॥ २८—२९ ॥

रा० टी०-तदेति । वर्त्मसु तारापथेषु स्थिताः देवाः चलिता अभवन् समुद्राश्च संक्षुब्धाः अत एव यक्षादयः किमेतदित्यब्रुवन् सार्द्धश्लोक एकान्वयी ॥ ३० ॥

३२-३५ ] ति० टी०-अथ तन्मन्त्रिण आहुः—तोषयस्वेति ॥ ३२-३५ ॥

रा० टी०-तोषयस्वेति । यतो महादेवं विना अन्यं शरणं न पश्यामः अतः तमेव तोषयस्व ॥ ३१ ॥

रा० टी०-तत्प्रकारमाह—स्तुतिभिरिति । स्तुतिभिः प्रणतो भूत्वा तन्महादेवमेव शरणं व्रज तुष्टः शंकरः ते प्रसादं विधास्यति ॥ ३२ ॥

रा० टी०-एवमिति । एवममात्यैरुक्तो दशाननः प्रणम्य सामभिः सान्त्वनकारकैः विविधैः स्तोत्रैः वृषभध्वजं तुष्टाव ॥ ३३ ॥

रा० टी०-संवत्सरेति । रुदतो रक्षसः संवत्सरसहस्रं गतम् अर्द्धं पृथक् ॥ ३४ ॥

रा० टी०-तत इति । प्रीतो महादेवः अस्य रावणस्य भुजान् मुक्त्वा दशाननं प्राह ॥ ३५ ॥

३६ ] ति० टी०-शौटीर्यात् । चास्स्तुतेः ॥ ३६ ॥

रा० टी०-तदाकारमाह—प्रीत इत्यादिभिः । शैलाक्रान्तेन त्वया शौण्डीर्यात् अतिबलात् यो रावः त्वया मुक्तः तेन तव रावेण प्रीतोऽस्मि ॥ ३६ ॥

३७-३८ ] ति० टी०-रावितं शब्दितम् ॥ ३७ ॥ ३८ ॥

रा० टी०-यस्मादिति । यस्मात् लोकत्रयं त्वया रावितं तस्मात् नाम्ना रावणो नाम प्रसिद्धं भविष्यसि ॥ ३७ ॥

रा० टी०-देवतेति । देवतादयः एवं लोकरावणं त्वां रावणमभिधास्यन्ति कथयिष्यन्ति ॥ ३८ ॥

३९ ] ति० टी०-मयाभ्यनुज्ञातः । पुष्पकेण गमनायेति शेषः । असीति च, अतो गम्यताम् ॥ ३९ ॥

रा० टी०-गच्छेति । हे पौलस्त्य विस्रब्धं मद्विषये सविश्वासं यथा भवति तथा येन पथाध्वना गम्यतां स्वस्थानसंयोगमिच्छसि तेन पथा मयाभ्यनुज्ञातस्त्वं गच्छ ॥ ३९ ॥

गो० टी०-मया त्वमभ्यनुज्ञातः । पुष्पकेण गमनायेति शेषः ॥ ४० ॥ ४२ ॥

१ शैलस्याधोगता इति गो. पाठः । २ तदेति गो. पाठः । ३ स्थेति गो. पाठः । ४ इदमर्धमधिकं गो. पाठे । ५ विष्ठित इति गो. रा. पाठः । ६ वीर्यस्येति गो. पाठः ।

एवमुक्तस्तु लङ्केशः शंभुना स्वयमब्रवीत् । प्रीतो यदि महादेव वरं मे देहि याचतः ॥ ४० ॥
अवध्यत्वं मया प्राप्तं देवगन्धर्वदानवैः । राक्षसैर्गुह्यकैर्नागैर्ये चान्ये बलवत्तराः ॥ ४१ ॥
मानुषान्न गणे देव स्वल्पास्ते मम संमताः । दीर्घमायुश्च मे प्राप्तं ब्रह्मणस्त्रिपुरान्तक ॥
वाञ्छितं चायुषः शेषं शस्त्रं त्वं च प्रयच्छ मे ॥ ॥ ४२ ॥
एवमुक्तस्ततस्तेन रावणेन स शंकरः । ददौ खड्गं महादीप्तं चन्द्रहासमिति श्रुतम् ॥
आयुषश्चावशेषं च ददौ भूतपतिस्तदा ॥ ॥ ४३ ॥
दत्त्वोवाच ततः शंभुर्नावज्ञेयमिदं त्वया । अवज्ञातं यदि हि ते मामेवैष्यत्यसंशयः ॥ ४४ ॥
एवं महेश्वरेणैव कृतनामा स रावणः । अभिवाद्य महादेवमारुरोहाथ पुष्पकम् ॥ ४५ ॥
ततो महीतलं राम पर्यक्रामत रावणः । क्षत्रियान्सुमहावीर्यान्बाधमानस्ततस्ततः ॥ ४६ ॥
केचित्तेजस्विनः शूराः क्षत्रिया युद्धदुर्मदाः । तच्छासनमकुर्वन्तो विनेशुः सपरिच्छदाः ॥ ४७ ॥
अपरे दुर्जयं रक्षो जानन्तः प्राज्ञसंमताः । जिताः स्म इत्यभाषन्त राक्षसं बलदर्पितम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षोडशः सर्गः ॥ १६ ॥

---

४०-४१ ] ति० टी०-यदि प्रीतो यदि च वरं ददासि तदा याचतो मे देहीत्यर्थः ॥ ४० ॥ ४१ ॥

रा० टी०-एवमिति । लंकेशोऽब्रवीत् तदाकारमाह यदि त्वं प्रीतस्तदा याचतो मे वरं देहि ॥ ४० ॥

रा० टी०-वराकारं बोधयितुमाह अवध्यत्वमिति देवादिभिरवध्यत्वं दीर्घमायुश्च ब्रह्मणो मया प्राप्तं मानुषान्प्राकृतमनुष्यांस्तु न गणे गणयामि अतः आयुषः शेषं ब्रह्मदत्तायुषो भोगादवशिष्टमायुः शस्त्रं च प्रयच्छ सार्द्धश्लोकद्वयमेकान्वयि आयुश्शेषयाचनेन तस्यातिभीतत्वं व्यक्तम् ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०-न गणे । न गणयामीत्यर्थः । तत्र हेतुः-स्वल्पा इति । स्वल्पबलवीर्या इत्यर्थः । वाञ्छितं चायुषः शेषं भगवद्दत्तदीर्घायुष्याद्यो भागो गतस्तस्माच्छेषमवशिष्टमायुर्वाञ्छितं तदेतैर्दुष्कर्मभिर्यथा विनष्टं न भवति तथा प्रयच्छ । तस्मिंश्चायुषि सर्वजयाय शस्त्रं च दिव्यं प्रयच्छ ॥ ४२ ॥

गो० टी०-मानुषानिति । न गणे न गणयामि ॥४३॥

गो० टी०-वाञ्छितमिति । ब्रह्मदत्तदीर्घायुष्याद्यो भागः ततस्तस्माच्छेषमवशिष्टं वाञ्छितमिदानीमेव दुष्कर्मणा केनाप्यविनष्टं मे प्रयच्छ ॥ ४४ ॥

४३ ] ति० टी०-आयुषश्चावशेषं ददौ । शापार्धनाश्यत्वेन ददावित्यर्थः ॥ ४३ ॥

रा० टी०-एवमिति । एवमुक्तश्शंकरः चन्द्रहासमिति श्रुतं खड्गं ददौ आयुषोऽवशेषं च ददौ सार्धश्लोक एकान्वयी ४३

गो० टी०-ददाविति । आयुषश्चेति । ब्रह्मा दीर्घायुष्यस्त्वेतावांस्तत्रास्यापमृत्यवो देवतादिभ्यः प्राप्ताः परिहृता भवन्तु । रामेण वध इति स्थित्वा मत्वेत्यर्थः ॥ ४५ ॥

४४-४८ ] ति० टी०-इदं नावज्ञेयम् । शस्त्रस्यास्यं पूजौदासीन्यं न कार्यमित्यर्थः ॥ ४४-४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षोडशः सर्गः ॥ १६ ॥

रा० टी०-दत्त्वेति । शम्भुर्दत्त्वा इदं शस्त्रं त्वया नावज्ञेयं यद्यवज्ञातं स्यात् तर्हि मामेव एष्यति इत्युवाच ॥ ४५ ॥

रा० टी०-एवमिति । रावणः पुष्पकमारुरोह ॥ ४६ ॥

रा० टी०-तत इति । क्षत्रियान् बाधमानो रावणः महीतलं पर्यक्रामत ॥ ४७ ॥

रा० टी०-बाधमेव विशदयन्नाह-केचिदिति । तच्छासनमकुर्वन्तः केचित् क्षत्रियाः विनेशुः रावणेन विनाशिता इत्यर्थः ॥ ४८ ॥

रा० टी०-अपरे इति । प्राज्ञैस्सम्मताः अयमजेय इत्युपदिष्टाः अत एव दुर्जयं रक्षो जानन्तः अपरे क्षत्रियाः जिताः स्म इति राक्षसं रावणमभाषन्त ॥ ४९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षोडशः सर्गः ॥ १६ ॥

गो० टी०-दत्त्वेति । इदं खड्गरूपास्त्रं नावज्ञेयम् । एकस्मिन्नपि दिने पूजौदासीन्यं न कर्तव्यमित्यर्थः । अवज्ञातं यदि ॥ ४६—५० ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षोडशः सर्गः ॥ १६ ॥

---

१ स्थित्वेति गो. पाठः । २ तले इति गो. पाठः । ३ इतस्ततः-इति गो. पाठः ।

## सप्तदशः सर्गः ।

एव पुनराहिण्डमानस्य रावणस्य वेदवत्या दर्शनं कामुकतया बलाद्धर्षयंस्तया घर्षणतप्तयाऽत एवाग्निं प्रविशन्त्या द्वितीयजन्मनि त्वां समूलं नाशयिष्यामीति शप्तः अत एव भो दाशरथे सैव वेदवती मैथिली तत्कृते राक्षसवंशध्वंस इति कुम्भयोनिः शंसति ।

अथ राजन्महाबाहुर्विचरन्पृथिवीतले । हिमवद्वनमासाद्य परिचक्राम रावणः ॥ १ ॥
तत्रापश्यत्स वै कन्यां कृष्णाजिनजटाधराम् । आर्षेण विधिना युक्तां दीप्यन्तीं देवतामिव ॥ २ ॥
स दृष्ट्वा रूपसंपन्नां कन्यां तां सुमहाव्रताम् । काममोहपरीतात्मा पप्रच्छ प्रहसन्निव ॥ ३ ॥
किमिदं वर्तसे भद्रे विरुद्धं यौवनस्य ते । नहि युक्ता तवैतस्य रूपस्यैवं प्रतिक्रिया ॥ ४ ॥
रूपं तेऽनुपमं भीरु कामोन्मादकरं नृणाम् । न युक्तं तपसि स्थातुं निर्गतो ह्येष निर्णयः ॥ ५ ॥
कस्यासि किमिदं भद्रे कश्च भर्ता वरानने । येन संभुज्यसे भीरु स नरः पुण्यभाग्भुवि ॥ ६ ॥
पृच्छतः शंस मे सर्वं कस्य हेतोः परिश्रमः । एवमुक्ता तु सा कन्या रावणेन यशस्विनी ॥ ७ ॥
अब्रवीद्विधिवत्कृत्वा तस्यातिथ्यं तपोधना । कुशध्वजो नाम मे पिता ब्रह्मर्षिरमितप्रभः ॥
बृहस्पतिसुतः श्रीमान्बुद्ध्या तुल्यो बृहस्पतेः ॥ ॥ ८ ॥
तस्याहं कुर्वतो नित्यं वेदाभ्यासं महात्मनः । संभूता वाङ्मयी कन्या नाम्ना वेदवती स्मृता ॥ ९ ॥
ततो देवाः सगन्धर्वा यक्षराक्षसपन्नगाः । ते चापि गत्वा पितरं वरणं रोचयन्ति मे ॥ १० ॥
न च मां स पिता तेभ्यो दत्तवान्राक्षसेश्वर । कारणं तद्वदिष्यामि निशामय महाभुज ॥ ११ ॥

१ ] ति० टी०—अथ वेदवत्या रावणस्य शापदानकथनपूर्वकं सैवेयं जनकात्मजेति कथनम्—अथ राजन्निति ॥१॥

रा० टी०—रावणवृत्तान्तमेवाह—अथेत्यादिभिः । रावणः हिमवद्वनमासाद्य परिचक्राम ॥ १ ॥

गो० टी०—अथ राजन्नित्यादि । आर्षेण विधिना तपोनुष्ठानेन ॥ १ ॥ २ ॥

२ ] ति० टी०—आर्षेण विधिना तपोनुष्ठानेन ॥ २ ॥

रा० टी०—तत्रेति । तत्र हिमवद्वने आर्षेण विधिना युक्तामृषिप्रोक्तकर्मकर्त्रीमित्यर्थः कृष्णाजिनजटाधरां कन्यामपश्यत् ॥ २ ॥

३ ] ति० टी०—प्रहसन्निवारण्ये मयानाथा सुकन्या प्राप्तेति संतोषजः प्रहास इति कतकः ॥ ३ ॥

रा० टी०—स इति । रूपसम्पन्नां कन्यां दृष्ट्वा मोहपरीतात्मा रावणः प्रहसन्निव पप्रच्छ ॥ ३ ॥

गो० टी०—स इति । प्रहसन्निति । दुर्लभकन्यालाभात्प्रहासः ॥ ३ ॥

४ ] ति० टी०—एवं प्रतिक्रिया इदमाचरणम् ॥ ४ ॥

रा० टी०—तदाकारमाह—किमित्यादिभिः । ते यौवनस्य विरुद्धं विरोधीदं किं किमर्थं वर्तसे तव एतस्य रूपस्य एवं प्रतिक्रिया विपर्ययो न युक्तम् ॥ ४ ॥

गो० टी०—किमिति । इदं प्रतिक्रिया । इदं यौवनप्रतिकूलक्रिया ॥ ४—१० ॥

५ ] ति० टी०—निर्गतः प्रसिद्ध एष निर्णयः । वृद्धानामिति शेषः ॥ ५ ॥

रा० टी०—तदेव स्पष्टमाह—रूपमिति । ते अनुपमं रूपं नृणां कामोन्मादकरमस्तीति शेषः अतः तपसि स्थातुं त्वया न युक्तमेष निर्णयः निर्गतोऽस्माभिर्ज्ञातः ॥ ५ ॥

६ ] ति० टी०—कस्यासि । दुहितेति शेषः । किमिदं व्रतमित्यर्थः ॥ ६ ॥

रा० टी०—कस्येति । त्वं कस्यासि इदं किं क्रियते इति शेषः ते भर्ता कः येन त्वं सम्भुज्यसे स नरः भुवि पुण्यभाक् ते परिश्रमः कस्य हेतोः इति पृच्छतो मे शंस सार्धश्लोक एकान्वयी ॥ ६ ॥

७–८ ] ति० टी०—कस्य हेतोः किंफलनिमित्तम् ॥७॥८॥

रा० टी०—एवमिति । एवमुक्ता कन्या तस्य रावणस्य विधिवत् आतिथ्यं कृत्वाऽब्रवीत् ॥ ७ ॥

रा० टी०—तदाकारमाह—कुशध्वज इत्यादिभिः । मम पिता बृहस्पतिसुतः कुशध्वजः ॥ ८ ॥

९ ] ति० टी०—वेदाभ्यासं कुर्वतो महात्मनस्तस्य सकाशाद्वाङ्मयी वाङ्मयवेदमूर्तिः कन्याहं संभूता, अत एवाहं पित्रा नाम्ना वेदवतीति स्मृता । भगवतः शक्तिर्लक्ष्मीरेव रावणवधाय रावणं शप्तुमत्रावतीर्णा । अस्या वाङ्मयीत्वं सार्वात्म्यात्, अत एव वक्ष्यति पितुर्मे विष्णुर्जामाताभिप्रेत इति ॥ ९ ॥

१०–११ ] ति० टी०—ते देवादयो वरणं रोचयन्ति । रुचिः क्रियासामान्ये । वरणं कुर्वन्ति ममेत्यर्थः ॥ १० ॥ ११ ॥

१ स महीतल इति गो. पाठः । २ तपस इति गो. पाठः । ३ ममेति गो. पाठः । ४ इदं पद्यं रा. पुस्तके नास्ति । ५ संभूयेति गो. पाठः । ६ निशाचर निशामयेति गो. पाठः ।

पितुस्तु मम जामाता विष्णुः किल सुरेश्वर । अभिप्रेतस्त्रिलोकेशस्तस्मान्नान्यस्य मे पिता॥ १२ ॥
दातुमिच्छति तस्मै तु तच्छ्रुत्वा बलदर्पितः । शंभुर्नाम ततो राजा दैत्यानां कुपितोऽभवत् ॥
तेन रात्रौ शयानो मे पिता पापेन हिंसितः ॥ ॥ १३ ॥
ततो मे जननी दीना तच्छरीरं पितुर्मम । परिष्वज्य महाभागा प्रविष्टा हव्यवाहनम् ॥ १४ ॥
ततो मनोरथं सत्यं पितुर्नारायणं प्रति । करोमीति तमेवाहं हृदयेन समुद्वहे ॥ १५ ॥
इति प्रतिज्ञामारुह्य चरामि विपुलं तपः । एतत्ते सर्वमाख्यातं मया राक्षसपुंगव ॥ १६ ॥
नारायणो मम पतिर्न त्वन्यः पुरुषोत्तमात् । आश्रये नियमं घोरं नारायणपरीप्सया ॥ १७ ॥
विज्ञातस्त्वं हि मे राजन्गच्छ पौलस्त्यनन्दन । जानामि तपसा सर्वं त्रैलोक्ये यद्धि वर्तते ॥ १८ ॥
सोऽब्रवीद्रावणो भूयस्तां कन्यां सुमहाव्रताम् । अवरुह्य विमानाग्रात्कंदर्पशरपीडितः ॥ १९ ॥
अवलिप्तासि सुश्रोणि यस्यास्ते मतिरीदृशी । वृद्धानां मृगशावाक्षि भ्राजते पुण्यसंचयः ॥ २० ॥
त्वं सर्वगुणसंपन्ना नार्हसे वक्तुमीदृशम् । त्रैलोक्यसुन्दरी भीरु यौवनं तेऽतिवर्तते ॥ २१ ॥
अहं लङ्कापतिर्भद्रे दशग्रीव इति श्रुतः । तस्य मे भव भार्या त्वं भुङ्क्ष्व भोगान्यथासुखम् २२
कश्च तावदसौ यं त्वं विष्णुरित्यभिभाषसे । वीर्येण तपसा चैव भोगेन च बलेन च ॥
स मया नो समो भद्रे यं त्वं कामयसेऽङ्गने ॥ ॥ २३ ॥

---

रा० टी०—तत इति । ततो ये देवादयः ते पितरं गत्वा मे वरणं रोचयन्ति ॥ ९ ॥

रा० टी०—नेति । स पिता मां तेभ्यो न दत्तवान् तत् तत्र कारणं वदिष्यामि त्वं निशामय शृणु ॥ १० ॥

१२-१४] ति० टी०—अन्यस्य। अन्यस्मै इत्यर्थः१२–१४

रा० टी०—तत् कारणमेवाह पितुरित्यादिभिः । मम पितुर्जामाता विष्णुरभिप्रेतः तस्मात् मे पिता अन्यस्य अन्यस्मै दातुं नेच्छति तच्छ्रुत्वा दैत्यानां राजा शम्भुः तस्मै मदिपत्रे कुपितोऽभवत् अर्द्धचतुष्टयमेकान्वयि ॥ ११ ॥ १२ ॥

रा० टी०—तेनेति । तेन शम्भुना राज्ञा शयानो मम पिता हिंसितोऽभवदिति शेषः अर्द्धं पृथक् ॥ १३ ॥

रा० टी०—तत इति । ततः पितुर्मरणात् दीना मे जननी मम पितुश्शरीरं परिष्वज्य हव्यवाहनमग्निं प्रविष्टा १४

१५ ] ति० टी०—नारायणं नारस्य जीवसमूहस्यायनम्, नारा आपोऽयनं यस्येति वा, तं प्रतिगतं पितुर्मनोरथं सत्यं करोमीतीच्छया तं नारायणमेव हृदयेनोद्वहे ॥ १५ ॥

रा० टी०—तत इति । नारायणं प्रति पितुर्मनोरथं सत्यं करोमि इति हेतोः तं नारायणमेव हृदयेनाहं समुद्वहे ॥१५॥

१६–१७ ] ति० टी०—इति प्रतिज्ञां प्रागुक्तेच्छाविषयविषयाम् । आरुह्य कृत्वा ॥ १६ ॥ १७ ॥

रा० टी०—इतीति । इति पितृकृतां प्रतिज्ञामारुह्य अनुरुध्य विपुलं तपश्चरामि एतत्सर्वं वृत्तान्तमाख्यातम् ॥ १६ ॥

रा० टी०—नारायण इति । पुरुषोत्तमात् रामात् योऽन्यः अत्यन्तभिन्नो न स नारायण एव मम पतिः अत एव नारायणपरीप्सया घोरं नियममाश्रये ॥ १७ ॥

१८–१९ ] ति० टी०—कथं विज्ञातस्तत्राह—जानामीति ॥ १८ ॥ १९ ॥

रा० टी०—विज्ञात इति । यत् त्रैलोक्ये वर्तते तत्सर्वं तपसाहं जानामि अतः मे मया त्वं विज्ञातः अतः हे पौलस्त्यनन्दन त्वं गच्छ ॥ १८॥

रा० टी०—स इति । कन्दर्पशरपीडितो रावणः विमानाग्र्यात् अवरुह्य भूयोऽब्रवीत् ॥ १९ ॥

२०–२२ ] ति० टी०—पुण्यसंचयः पुण्यसंग्रहणं वृद्धानामेव भ्राजते । न तु युवत्या इत्यर्थः ॥ २०—२२ ॥

रा० टी०—तदाक्षरमाह—अवलिप्तेति । त्वमवलिप्ता गर्वविशिष्टासि स्वकर्तव्यं न जानासीति तात्पर्यं तेन तपस्त्वया न कर्तव्यमिति सूचितं ननु तपसां निरवलम्बनत्वापत्तिरित्यत आह पुण्यसंचयो वृद्धानां भ्राजते ॥ २० ॥

रा० टी०—त्वमिति । सर्वगुणसम्पन्ना त्वमीदृशं तपश्चरणविषयकं वचो वक्तुं नार्हसे तत्र हेतुः ते यौवनमतिवर्तते २१

रा० टी०—ननु तपश्चरणाभावे विष्णोरप्राप्ता ममोद्वाहाभावापत्तिरित्यत आह—अहमिति । योऽहं लंकापतिः तस्य मे भार्या त्वं भव अत एव भोगान् यथासुखं भुंक्ष्व ॥ २२ ॥

गो० टी०—अवलिप्तेति । वृद्धानामिति । पुण्यसंचयः पुण्यसंग्रहणं वृद्धानामेव भ्राजते न तु बालयूनोः ॥ २१—३९ ॥

२३ ] ति० टी०—कश्चेति । मदपेक्षयात्यल्पवीर्यादियुक्तः ॥ २३ ॥

रा० टी०—क इति । यं त्वं विष्णुरित्यभिभाषसे स कः

१ दंभुरिति गो. पाठः । २ भ्रम्यादिति रा. पा. । ३ नीति गो. पाठः । ४ न मया स इति गो. पाठः ।

इत्युक्तवति तस्मिंस्तु वेदवत्यथ साब्रवीत् । मा मैवमिति सा कन्या तमुवाच निशाचरम् ॥२४॥
त्रैलोक्याधिपतिं विष्णुं सर्वलोकनमस्कृतम् । त्वदृते राक्षसेन्द्रान्यः कोऽवमन्येत बुद्धिमान् ॥ २५ ॥
एवमुक्तस्तया तत्र वेदवत्या निशाचरः । मूर्धजेषु तदा कन्यां कराग्रेण परामृशत् ॥ २६ ॥
ततो वेदवती क्रुद्धा केशान्हस्तेन साच्छिनत् । असिर्भूत्वा करस्तस्याः केशांश्छिन्नांस्तदाकरोत् २७
सा ज्वलन्तीव रोषेण दहन्तीव निशाचरम् । उवाचाग्निं समाधाय मरणाय कृतत्वरा ॥ २८ ॥
धर्षितायास्त्वयानार्य न मे जीवितमिष्यते । रक्षस्तस्मात्प्रवेक्ष्यामि पश्यतस्ते हुताशनम् ॥ २९ ॥
यस्मात्तु धर्षिता चाहं त्वया पापात्मना वने । तस्मात्तव वधार्थं हि समुत्पत्स्येत्यहं[1] पुनः ॥ ३० ॥
नहि शक्यः स्त्रिया हन्तुं पुरुषः पापनिश्चयः । शापे त्वयि मयोत्सृष्टे तपसश्च व्ययो भवेत्॥ ३१ ॥
यदि त्वस्ति मया किंचित्कृतं दत्तं हुतं तथा । तस्मात्त्वयोनिजा साध्वी भवेयं धर्मिणः सुता ॥३२॥
एवमुक्त्वा प्रविष्टा सा ज्वलितं जातवेदसम् । पपात च दिवो दिव्या पुष्पवृष्टिः समन्ततः ॥ ३३ ॥
[ पुनरेव[2] समुद्भूता पद्मे पद्मसमप्रभा । तस्मादपि पुनः प्राप्तां पूर्ववत्तेन रक्षसा ॥
कन्यां कमलगर्भाभां प्रगृह्य स्वगृहं ययौ । प्रगृह्य रावणस्त्वेतां दर्शयामास मन्त्रिणे ॥
लक्षणज्ञो निरीक्ष्यैव रावणं चैवमब्रवीत् । गृहस्थैषा हि सुश्रोणी त्वद्वधायैव दृश्यते ॥
एतच्छ्रुत्वार्णवे राम तां प्रचिक्षेप रावणः । सा चैव क्षितिमासाद्य यज्ञायतनमध्यगा ॥
राज्ञो हलमुखोत्कृष्टा पुनरप्युत्थिता सती । ]
सैषा जनकराजस्य प्रसूता तनया प्रभो । तव भार्या महाबाहो विष्णुस्त्वं हि सनातनः ॥३४॥

---

मत्तो हीन इत्यर्थः अर्द्धं पृथक् तदेव भंग्यंतरेणाह—वीर्येणेति। यं त्वं कामयसे स विष्णुः वीर्यादिना मया समो न ॥ २३ ॥

२४–२६ ] ति० टी०—मा मैवम् । विष्णुविषये वदेति शेषः ॥ २४–२६ ॥

रा० टी०—इतीति। तस्मिन् रावणे इत्युक्तवति सति वेदवती मा मेति वक्तो निशाचरमुवाच ॥ २४

रा० टी०—त्रैलोक्येति । त्वदृते त्वां विना कोन्यो बुद्धिमान् त्रैलोक्याधिपतिं विष्णुमवमन्येत ॥ २५ ॥

रा० टी०—एवमिति । निशाचरः कराग्रेण मूर्द्धजेषु कन्यां परामृशत् ॥ २६ ॥

२७–२८ ] ति० टी०—हस्तेन केशच्छेदः कथं तत्राह — असिर्भूत्वेति ॥ २७ ॥ २८ ॥

रा० टी०—तत इति । क्रुद्धा वेदवती हस्तेन केशान् अच्छिनत् ननु हस्तेन कथं केशच्छेद इत्यत आह तस्याः करः असिर्भूत्वा केशान् छिन्नान् अकरोत् ॥ २७ ॥

रा० टी०—सेति । सा वेदवती अग्निं समाधाय रावणायोवाच ॥ २८ ॥

२९ ] ति० टी०—धर्षितायाः केशस्पर्शेन स्त्रीभावं प्रापितायाः ॥ २९ ॥

रा० टी०—तदाकारमाह—धर्षितायाः इति । त्वया धर्षितायाः मे जीवितं नेष्यते तस्मात् ते पश्यतः सतः हुताशनं प्रवेक्ष्यामि ॥ २९ ॥

३०] ति० टी०—पुनः समुत्पत्स्यति। समुत्पत्स्ये इत्यर्थः ३०

रा० टी०—यस्मादिति । यस्मात्त्वयाहं धर्षिता तस्मात्तव वधार्थमहं पुनस्समुत्पत्स्यति समुत्पत्स्ये ॥ ३० ॥

३१ ] ति० टी०—व्ययः । ब्रह्मवरदानादिदानीं तव मरणाभावेन वृथा व्यय इत्यर्थः ॥ ३१ ॥

रा० टी०—नहीति । पापनिश्चयः पुरुषः स्त्रिया हन्तुं न शक्यः स्पर्शशङ्कया पापिना सह युद्धं न योग्यमिति तात्पर्यम् । शापे उत्सृष्टे तु तपसो व्ययो भवेत् एतेन उपायतः त्वां घातयिष्यामीति सूचितम् ॥ ३१ ॥

३२ ] ति० टी०—अयोनिजा भूत्वा धर्मिणो धर्मिष्ठस्य ध्यायतः सुता भवेयम् ॥ ३२ ॥

रा० टी०—यदीति । यदि मया किञ्चिद्दत्ताद्यस्ति तदा तस्मात् धर्मिणो जनकस्य सुता भवेयं प्राप्नुयाम् सम्प्रदायस्य कर्मत्वविवक्षया न द्वितीया ॥ ३२ ॥

३३ ] ति० टी०—अत्रापि पुष्पवर्षं रावणनाशनिश्चयजसंतोषात् ॥ ३३ ॥

रा० टी०—एवमिति । सा वेदवती जातवेदसं वह्निं प्रविष्टा तदा पुष्पवृष्टिः समन्ततो दिवः पपात ॥ ३३ ॥

३४ ] ति० टी०—सैषा । कृतरावणवधप्रतिज्ञा । वेदवत्येवेत्यर्थः । विष्णुस्त्वमिति । अनेन सीताया लक्ष्मीत्वं स्फुटमेवोक्तम् । तदुक्तं पराशरेण—' राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति ॥ ३४ ॥

---

[1] समुत्पत्स्येह्यहमिति गो. पाठः । [2] इदं सार्धपञ्चचतुष्टयमधिकं गो. पु. ।

पूर्वं क्रोधहतः शत्रुर्ययासौ निहतस्तया। उपाश्रयित्वा शैलाभस्तव वीर्यममानुषम् ॥ ३५ ॥
एवमेषा महाभागा मर्त्येषूत्पत्स्यते पुनः। क्षेत्रे हलमुखोत्कृष्टे वेद्यामग्निशिखोपमा ॥ ३६ ॥
एषा वेदवती नाम पूर्वमासीत्कृते युगे। त्रेतायुगमनुप्राप्य वधार्थं तस्य रक्षसः ॥
उत्पन्ना मैथिलकुले जनकस्य महात्मनः। सीतोत्पन्ना तु सीतेति मानुषैः पुनरुच्यते ॥ ३७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

## अष्टादशः सर्गः ।

दिग्विजयप्रसङ्गेन पर्यटतो रावणस्य यजतो मरुत्तस्य संगमः विप्रहायाहूतः स राजा ऋत्विग्भिर्दीक्षितत्वान्निषिद्धस्तावन्मात्रेणापि रावणः स्वजयमुद्धोष्य गतः तद्भयाद्गृहीततरूपान्तरेन्द्रादिभ्यो मयूरादीनां पृथक्पृथग्वरप्राप्तिश्च ।

प्रविष्टायां हुताशं तु वेदवत्यां स रावणः। पुष्पकं तु समारुह्य परिचक्राम मेदिनीम् ॥ १ ॥

रा० टी०—सेति। सा वेदवती प्राप्तीच्छाविषयीभूता जनकराजस्य तनया नित्यपुत्री एषा सीता तव भार्या प्रसूता तत्रैव प्रादुर्भूता त्वं तु सनातनः सनति सर्वं रचयतीति सनं यतो वा इमानि भूतानि जायन्ते इत्यादिश्रुतिप्रतिपादितं प्रकाशब्रह्म तदुपलक्षितब्रह्मादीन् आतनोति तत्तत्कार्यप्रवर्तकत्वेन विस्तारयति स विष्णुरसीति शेषः वेदवती प्राप्तीच्छावतीत्यनेन वेदवत्यपि तत्रैव कुले प्रादुर्भूतेति सूचितम् तेन एतत्सम्मत्यैव मन्थरया सर्वं विपरीतं कारितमिति व्यक्तम् वेदवत्येव भरतेन विवाहितेति बालायोध्ययोर्निरूपितम् ॥ ३४ ॥

३५ ] ति० टी०—यथा वेदवत्या पूर्वं तदवतारे क्रोधहतो यः शत्रुः सोऽसौ शैलाभः पुनस्तयैव यथाप्रतिज्ञं त्वां पतिं प्राप्य पतिभूतस्य तवामानुषं वीर्यमुपाश्रयित्वोपाश्रित्य निहतः। अनेन सीतैव रावणवधे मुख्यं कारणम्, रामे तु हन्तृत्वमारोपितमिति सूचितम् ॥ ३५ ॥

रा० टी०—पूर्वमिति। यया वेदवत्या शैलाभः शत्रुरसौ रावणः पूर्वं क्रोधहतः क्रोधेन हतो निहतप्रायः तया वेदवत्या उपाश्रयित्वा जानकीमाश्रित्य निहतः अतः तव वीर्यममानुषं प्राकृतमानुषवीर्याद्विलक्षणम् ॥ ३५ ॥

गो० टी०—पूर्वमित्यादि। वेदवत्या यः शत्रुः क्रोधाहितः[1] सोऽसौ शैलाभः शत्रू रावणः पुनस्तयैव यथाप्रतिज्ञं पतिं च प्राप्तया पतिभूतस्य तव मानुषं वीर्यमुपाश्रयित्वा अत्र निहतः ३६

३६ ] ति० टी०—भाविकल्पेष्वप्येवमेवावतारादिकल्पेन 'कल्पो व्याख्येयः' इति न्यायादित्याह—एवमिति। एषा महाभागा एवमेव मर्त्येषु भाविषु हलमुखोत्कृष्टे क्षेत्रे पुनःपुनरुत्पत्स्यते। उक्तप्रयोजनायेति शेषः। उत्पत्तिरत्राविर्भावः। एतेन भगवतोऽपि तथावतारः सूचित एव ॥ ३६ ॥

रा० टी०—उपसंहरन्नाह—एवमिति। एषा सीता हलमुखोत्कृष्टे क्षेत्रे पुनः प्रतापमस्य रावणभवनसमये मर्त्येषूत्पत्स्यते ॥ ३६ ॥

गो० टी०—एवमित्यादि। उत्पत्स्येयम्। व्यत्यय आर्षः ॥ ३७–३९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तदशः सर्गः ॥ १७ ॥

३७ ] ति० टी०—सीताविर्भावो वैशाखे शुक्लनवम्यामिति महासुन्दरीतन्त्रे उक्तम्—'वैशाखे शुक्लनवम्यामुत्पन्ना सावनीसुता। सीतामुखात्सा संजाता पालिता जनकेन च ॥ रामपत्नी महाभागा सीता नामेति विश्रुता। तस्मिन्दिने रामभक्ताः श्रद्धाभक्तिसमन्विताः ॥ महोत्सवपराः सर्वे वित्तशाठ्यविवर्जिताः। गीतवादित्रनृत्याद्ये रामभक्तिपरायणाः ॥ वैशाखसितनवम्यां पुराणपठनं तथा। लक्ष्मीसूक्तं पठंस्तत्र याति रामं सनातनम् ॥ सौभाग्यं धनधान्यं च पुत्रसंततिविस्तृतम्। रामप्रसादाल्लभते मुच्यते सर्वपातकात् ॥' इति। उपसंहरति—एषेति। 'आसीत्कृते युगे' इत्यनन्तरं त्रेतायुगमिति। जनकस्योत्पन्ना। न्यायतः पुत्रीत्वेनोत्पन्नेत्यर्थः ॥ ३७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तदशः सर्गः ॥ १७ ॥

रा० टी०—वेदवत्याः उत्पत्तिप्रकारं बोधयन्नाह—एषेति। या एषा वेदवती पूर्वं कृतयुगे आसीत् सा त्रेतायुगमनुप्राप्य रक्षसस्तस्य रावणस्य वधार्थं मन्थराप्रेरणाद्वारकहननार्थम् महात्मनो जनकस्य मैथिलकुले उत्पन्ना ॥ ३७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकांडे सप्तदशः सर्गः ॥ १७ ॥

१ ] ति० टी०—प्रविष्टायामिति ॥ १ ॥

रा० टी०—वेदवत्याः वह्निप्रवेशानन्तरकालिकं वृत्तमाह—प्रविष्टायामित्यादिभिः। रावणः पुष्पकं समारुह्य मेदिनीं परिचक्राम ॥ १ ॥

गो० टी०—प्रविष्टायामित्यादि। उशीरबीजमिति देशनाम ॥ १–८ ॥[2]

१ आहित इति गो. पा. । २ इदमर्धमधिकं गो. पु. ।

ततो मरुत्तं नृपतिं यजन्तं सह दैवतैः । उशीरबीजमासाद्य ददर्श स तु रावणः ॥ २ ॥
संवर्तो नाम ब्रह्मर्षिः साक्षाद्भ्राता बृहस्पतेः । याजयामास धर्मज्ञः सर्वैर्देवगणैर्वृतः ॥ ३ ॥
दृष्ट्वा देवास्तु तद्रक्षो वरदानेन दुर्जयम् । तिर्यग्योनिं समाविष्टास्तस्य धर्षणभीरवः ॥ ४ ॥
इन्द्रो मयूरः संवृत्तो धर्मराजस्तु वायसः । कृकलासो धनाध्यक्षो हंसश्च वरुणोऽभवत् ॥ ५ ॥
अन्येष्वपि गतेष्वेवं देवेष्वरिनिषूदन । रावणः प्राविशद्यज्ञं सारमेय इवाशुचिः ॥ ६ ॥
तं च राजानमासाद्य रावणो राक्षसाधिपः । प्राह युद्धं प्रयच्छेति निर्जितोऽस्मीति वा वद ॥७॥
ततो मरुत्तो नृपतिः को भवानित्युवाच तम् । अवहासं ततो मुक्त्वा रावणो वाक्यमब्रवीत् ॥८॥
अकुतूहलभावेन प्रीतोऽस्मि तव पार्थिव । धनदस्यानुजं यो मां नावगच्छसि रावणम् ॥ ९ ॥
त्रिषु लोकेषु कोऽन्योऽस्ति यो न जानाति मे बलम्। भ्रातरं येन निर्जित्य विमानमिदमाहृतम् ॥ १० ॥
ततो मरुत्तः स नृपस्तं रावणमथाब्रवीत् । धन्यः खलु भवान्येन ज्येष्ठो भ्राता रणे जितः॥
न त्वया सदृशः श्लाघ्यस्त्रिषु लोकेषु विद्यते । नाधर्मसहितं श्लाघ्यं तल्लोकं प्रतिसंहितम् ॥
कर्म दौरात्म्यकं कृत्वा श्लाघ्यसे भ्रातृनिर्जयात्॥ ॥ ११ ॥
कं त्वं प्राक्केवलं धर्मं चरित्वा लब्धवान्वरम् । श्रुतपूर्वं हि न मया भाषसे यादृशं स्वयम् ॥ १२ ॥

---

२ ] ति० टी०—उशीरबीजमिति देशनाम ॥ २ ॥

रा० टी०—तत इति । रावणः उशीरबीजं तदभिधं देशमासाद्य प्राप्य देवैस्सह यजन्तं मरुत्तं नृपतिं ददर्श ॥ २ ॥

रा० टी०—सम्वर्त्त इति । सम्वर्त्तो नाम ब्रह्मर्षिः याजयामास ॥ ३ ॥

३–५ ] ति० टी०—देवगणैर्वृतः । अपरोक्षतया हविर्भागार्थमवस्थितैरिति शेषः ॥ ३–५ ॥

रा० टी०—दृष्ट्वेति । तस्य रावणस्य धर्षणेन भीरवो देवाः दुर्जयं रक्षो दृष्ट्वा तिर्यग्योनिसमाविष्टाः ॥ ४ ॥

रा० टी०—समावेशप्रकारमाह—इन्द्र इति । इन्द्रो मयूरः सम्वृतः आविष्टत्वेन बभूव ॥ ५ ॥

६–७ ] ति० टी०—अन्येष्वपि देवेष्वेवंगतेषु । तिर्यग्योनिस्वरूपं गतेष्वित्यर्थः ॥ ६ ॥ ७ ॥

रा० टी०—अन्येष्विति । अन्येषु अपि देवेषु एवं गतेषु तिर्यग्योनिं प्रविष्टेषु सत्सु सारमेयः श्वा इव अशुचिः रावणः यज्ञं प्राविशत् ॥ ६ ॥

रा० टी०—तमिति । तं मरुत्तराजानमासाद्य युद्धं प्रयच्छ निर्जितोऽस्मीति वद वा इति वचनं रावणः प्राह ॥ ७ ॥

८ ] ति० टी०—मुक्त्वा कृत्वा ॥ ८ ॥

रा० टी०—तत इति । मरुत्तो नृपतिः को भवान् इति तं रावणमुवाच रावणस्तु अवहासमुक्त्वा कृत्वा अब्रवीत् ॥ ८ ॥

९ ] ति० टी०—अकुतूहलभावेन मां दृष्ट्वाप्यविस्मयनिर्भयानादरभावेन यो नावगच्छसि तस्य तव प्रीतोऽस्मि ॥ ९ ॥

रा० टी०—तद्वाकारमाह—अकौतूहलेति । यस्त्वं धनदस्यानुजं रावणं मां न अवगच्छसि जानासि तस्य तव अकौतूहलभावेन मां दृष्ट्वापि भयाज्ञत्पत्त्या प्रीतोऽस्मि ॥ ९ ॥

गो० टी०—अकुतूहलेति । अकुतूहलभावेन मां दृष्ट्वाऽप्यविस्मयनिर्भयानादरभावेनेत्यर्थः । यो नावगच्छसि तस्य तवेत्यन्वयः ॥ ९–१२ ॥

१० ] ति० टी०—कोऽन्योऽस्ति न कोऽपि । सर्वेऽपि जानन्तीत्यर्थः ॥ १० ॥

रा० टी०—त्रिष्विति । येन मया भ्रातरं निर्जित्य इदं विमानमाहृतं तस्य मे बलमन्यस्त्वद्भिन्नः यो न जानाति स कोऽस्ति ॥ १० ॥

११ ] ति० टी०—अथ मरुत्तो व्याजस्तुत्याह—धन्य इति ॥ ११ ॥

रा० टी०—तत इति । मरुत्तो नृपः रावणमब्रवीत् अर्थं पृथक् तदाकारमाह—धन्य इत्यादिभिः । येन त्वया ज्येष्ठो भ्राता जितः तस्य तव सदृशः श्लाघ्यो नास्ति अतो भवान् धन्यः ॥ ११ ॥

१२ ] ति० टी०—‘ लोकेषु विद्यते ’ इत्युत्तरम् ‘ नाधर्मसहितं श्लाघ्यं न लोकप्रतिसंहितम् । कर्म दौरात्म्यकं कृत्वा श्लाघसे भ्रातृनिर्जयात् ॥ ’ इत्येकः श्लोकः प्रक्षिप्तः । उक्तार्थत्वादिति कतकः । कं त्वमिति । केवलं पुज्यपूजासहितं कं धर्मं प्राक्चरित्वा वरं लब्धवानसि । तथाविधोऽपि कश्चिद्धर्म इति चेन्न श्रुतपूर्वं इत्याह—श्रुतेति । यादृशं भाषसे त्वेवपीडारूपं समाचारम् ॥ १२ ॥ १३ ॥

रा० टी०—कमिति । कं धर्मं चरित्वा वरं लब्धवान् मया तु यादृशं स्वकर्म त्वं स्वयं भाषसे तादृशं न श्रुतपूर्वम् ॥

रा० टी०—तिष्ठेति । त्वां यमक्षयमद्य प्रेषयामि अतो जीवन्न प्रतियास्यसि ॥ १३ ॥

गो० टी०—कं त्वमिति । प्राक् पूर्वम् । त्वं केवलं धर्म-

---

१ दर्शनेति गो पाठः । २ रक्षेति गो. पाठः । ३ समासाद्येति गो. पाठः । ४ इदं पद्यमधिकं गो. पुस्तके । ५ भाषस इति गो. रा. पाठः ।

तिष्ठेदानीं न मे जीवन्प्रतियास्यसि दुर्मते । अद्य त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥१३॥
ततः शरासनं गृह्य सायकांश्च नराधिपः । रणाय निर्ययौ क्रुद्धः संवर्तो मार्गमावृणोत् ॥१४॥
सोऽब्रवीत्स्नेहसंयुक्तं मरुत्तं तं महानृषिः । श्रोतव्यं यदि मद्वाक्यं संप्रहारो न ते क्षमः ॥१५॥
माहेश्वरमिदं सत्रमसमाप्तं कुलं दहेत् । दीक्षितस्य कुतो युद्धं क्रोधित्वं दीक्षिते कुतः ॥१६॥
संशयश्च जये नित्यं राक्षसश्च सुदुर्जयः । स निवृत्तो गुरोर्वाक्यान्मरुत्तः पृथिवीपतिः ॥
विसृज्य सशरं चापं स्वस्थो मखमुखोऽभवत् ॥ ॥ १७ ॥
ततस्तं निर्जितं मत्वा घोषयामास वै शुकः । रावणो जयतीत्युच्चैर्हर्षान्नादं विमुक्तवान् ॥ १८ ॥
तान्भक्षयित्वा तत्रस्थान्महर्षीन्यज्ञमागतान् । वितृप्तो रुधिरैस्तेषां पुनः संप्रययौ महीम् ॥ १९ ॥
रावणे तु गते देवाः सेन्द्राश्चैव दिवौकसः । ततः स्वां योनिमासाद्य तानि सत्त्वानि चाब्रुवन् ॥ २० ॥
हर्षात्तदाब्रवीदिन्द्रो मयूरं नीलबर्हिणम् । प्रीतोऽस्मि तव धर्मज्ञ भुजंगाद्धि न ते भयम् ॥ २१ ॥
इदं नेत्रसहस्रं तु यत्तद्बर्हे भविष्यति । वर्षमाणे मयि मुदं प्राप्स्यसे प्रीतिलक्षणम्[1] ॥
एवमिन्द्रो वरं प्रादान्मयूरस्य सुरेश्वरः ॥ ॥ २२ ॥
नीलाः किल पुरा बर्हा मयूराणां नराधिप । सुराधिपाद्वरं प्राप्य गताः सर्वेऽपि बर्हिणः ॥ २३ ॥

दोषहीनं धर्मं चरित्वा किमपि वरं लब्धवानिति श्रुतपूर्वम् । इदानीं यादृशं भ्रातृविजयरूपमधर्मं भाषसे तन्न श्रुतपूर्वमित्यर्थः ॥ १३--१४ ॥

१४ ] ति० टी०–मार्गमावृणोत् । रणायागतस्य रावणस्येति भावः ॥ १४ ॥

रा० टी०–तत इति । नराधिपो मरुत्तः सायकान् गृह्य गृहीत्वा रणाय निर्ययौ सम्वर्त्तऋषिस्तु मार्गं मरुत्तपथमावृणोत् ॥ १४ ॥

गो० टी०–तत इति । मार्गमावृणोत् । निर्यातस्येति शेषः ॥ १५ ॥

१५ ] ति० टी०–महानृषिः संवर्तः ॥ १५ ॥

रा० टी०–स इति । ऋषिः मरुत्तमब्रवीत् तदाकारमाह यदि मद्वाक्यं श्रोतव्यं तर्हि ते संप्रहारो न क्षमः युक्तः ॥ १५ ॥

गो० टी०–स इति । महानृषिः । तत्पुरोहित इत्यर्थः ॥ १६--२१ ॥

१६ ] ति० टी०–माहेश्वरं तद्दैवत्यम् । सत्रं यागः॥१६॥

रा० टी०–अयुक्तत्वे हेतुमाह--माहेश्वरमिति । असमाप्तं माहेश्वरं सत्रं दीक्षितस्य कुलं दहेत् अतो दीक्षितस्य युद्धं कुतः क्रोधित्वं च कुतः न सम्भवतीत्यर्थः ॥ १६ ॥

१७–१८ ] ति०टी०–मखमुखो मखसमाप्त्युन्मुखः१७-१८

रा० टी०–संशय इति । जये नित्यं संशयः राक्षसश्च दुर्जयः अतो युद्धं न कर्त्तव्यमिति तात्पर्यम् अर्द्धं पृथक् स इति गुरोर्वाक्यात् निवृत्तो मरुत्तः चापं विसृज्य स्वस्थस्सन् मखमुखः अभवत् ॥ १७ ॥

रा० टी०–तत इति । शुकः रावणामात्यः रावणो जयतीति नादं विमुक्तवान् ॥ १८ ॥

१९ ] ति० टी०–वितृप्तो विशेषेण तृप्तः ॥ १९ ॥

रा० टी०–तानिति । यज्ञमागतान् महर्षीन् भक्षयित्वा तेषां रुधिरैर्वितृप्तो रावणः पुनः सम्प्रययौ ॥ १९ ॥

२०–२१ ] ति० टी०–स्वां योनिं स्वस्वप्रकृतिमासाद्य तानि सत्त्वानि प्राक्कार्यवशगृहीतमूर्तिजातीयप्राणिनः ॥२१॥

रा० टी०–रावण इति । रावणे गते सति देवाः स्वां योनिमासाद्य तानि स्वस्वप्रवेशाधिकरणीभूतानि सत्वानि अब्रुवन् ॥ २० ॥

रा० टी०–तदाकारमाह–हर्षादित्यादिभिः । इन्द्रो मयूरमब्रवीत् तदाकारमाह अहं तव प्रीतोऽस्मि अतो भुजङ्गात् ते भयं न ॥ २१ ॥

गो० टी०–रावण इति । स्वां योनिं स्वस्वप्रकृतिमासाद्य । तानि सत्त्वानि । प्राक्कार्यवशगृहीतमूर्तिसजातीयप्राणिन इत्यर्थः ॥ २२--२३ ॥

२२ ] ति० टी०–प्रीतिलक्षणं मत्प्रीतिचिह्नम् ॥ २२ ॥

रा० टी०–इदमिति । इदं मदीयं यन्नेत्रसहस्रं तत्ते बर्हे भविष्यति मयि वर्षमाणे तु मुदं प्राप्स्यसे ॥ २२ ॥

रा० टी०–एवमिति । एवमिन्द्रो वरं प्रादात् अर्धं पृथक् मयूराणां पूर्वरूपमाह नीला इति मयूराणां बर्हाः पुरा नीला एव नेत्ररहिता इत्यर्थः सुराधिपात् वरं प्राप्य तु सर्वे मयूराः बर्हिणः प्रशस्तबर्हविशिष्टाः नेत्रयुक्तपक्षवन्तो बभूवुरित्यर्थः २३॥

गो०टी०–इदमिति । प्रीतिलक्षणां मत्प्रीतिचिह्नभूताम् २४

२३ ] ति० टी०–नीलाः किलेति । नेत्ररहिताः केवलं नीला इत्यर्थः ॥ २३ ॥

गो० टी०–नीला इति । नीलाः किलेति । नेत्ररहिता इत्यर्थः ॥ २५ ॥

[1] लक्षणामिति गो० पाठः ।

धर्मराजोऽब्रवीद्राम प्राग्वंशे वायसं प्रति । पक्षिस्तवास्मि सुप्रीतः प्रीतस्य वचनं शृणु ॥ २४ ॥
यथान्ये विविधै रोगैः पीड्यन्ते प्राणिनो मया । ते न ते प्रभविष्यन्ति मयि प्रीते न संशयः ॥ २५ ॥
मृत्युतस्ते भयं नास्ति वरान्मम विहंगम । यावत्त्वां न वधिष्यन्ति नरास्तावद्भविष्यसि ॥ २६ ॥
ये च मद्विषयस्था वै मानवाः क्षुधयार्दिताः । त्वयि भुक्ते सुतृप्तास्ते भविष्यन्ति सबान्धवाः ॥ २७ ॥
वरुणस्त्वब्रवीद्धंसं गङ्गातोयविचारिणम् । श्रूयतां प्रीतिसंयुक्तं ततः पत्ररथेश्वरम् ॥ २८ ॥
वर्णो मनोरमः सौम्यश्चन्द्रमण्डलसंनिभः । भविष्यति तवोदग्रः शुद्धफेनसमप्रभः ॥ २९ ॥
मच्छरीरं समासाद्य कान्तो नित्यं भविष्यसि । प्राप्स्यसे चातुलां प्रीतिमेतन्मे प्रीतिलक्षणम् ॥ ३० ॥
हंसानां हि पुरा राम न वर्णः सर्वपाण्डुरः । पक्षा नीलाग्रसंवीताः क्रोडाः शष्पाग्रनिर्मलाः ॥ ३१ ॥
अथाब्रवीद्वैश्रवणः कृकलासं गिरौ स्थितम् । हैरण्यं संप्रयच्छामि वर्णं प्रीतस्तवाप्यहम् ॥ ३२ ॥
सद्रव्यं च शिरो नित्यं भविष्यति तवाक्षयम् । एष काञ्चनको वर्णो मत्प्रीत्या ते भविष्यति ॥ ३३ ॥

---

२४ ] ति० टी०—प्राग्वंशे प्राग्घविर्गेहे ॥ २४ ॥

रा० टी०—धर्मराज इति । प्राग्वंशे प्राक्हविर्गृहे संस्थितं वायसं धर्मराजोऽब्रवीत् तदाकारमाह अहं सुप्रीतोस्मि अतः प्रीतस्य मे वचनं शृणु ॥ २५ ॥

गो० टी०—धर्मराज इति । प्राग्वंशे यज्ञशालादारुणि २६

२५ ] ति० टी०—ते रोगास्ते तव मयि प्रीते सति न प्रभविष्यन्ति ॥ २५ ॥

रा० टी०—तदाकारमाह--यथेत्यादिभिः । यैर्विविधैः रोगैः अन्ये प्राणिनः पीड्यन्ते ते रोगाः ते न प्रभविष्यन्ति अत एव मृत्युतः अकारणकमृत्योः ते भयं नास्ति अतो नराः यावत्त्वां न वधिष्यन्ति तावत्त्वं भविष्यसि स्थास्यसि न मरिष्यसीत्यर्थः श्लोकद्वयमेकान्वयि ॥ २६-२७ ॥

गो० टी०—यथेति । ते तव । ते रोगाः । न प्रभविष्यन्ति । प्रीते इति च्छेदः ॥ २७ ॥

२६ ] ति० टी०—मृत्योरशक्यपरिहारत्वादाह—यावदिति ॥ २६ ॥

गो० टी०—मृत्युत इति । "जातस्य हि ध्रुवो मृत्युः" इत्यशक्यपरिहारत्वादाह—यावत्त्वामित्यादि ॥ २८ ॥

२७-२९ ] ति० टी०—मद्विषयस्था यमलोकस्थाः २७-२९

रा० टी०—ये इति । क्षुधयार्दिताः मद्विषयस्थाः संयमन्यां प्राप्ताः ये मानवाः ते त्वयि भुक्ते तत्पुत्रादिना भोजिते सति सुतृप्ताः भविष्यन्ति ॥ २८ ॥

रा० टी०—वरुण इति । वरुणो हंसमब्रवीत् तदाकारमाह हे पत्ररथेश्वर प्रीतिसंयुक्तं वचः श्रूयताम् ॥ २९ ॥

रा० टी०—तदाकारमाह--वर्ण इति । तव वर्णः चन्द्रमण्डलसंनिभः शुद्धफेनसमप्रभश्च भविष्यति ॥ ३० ॥

गो० टी०—एत इति । मद्विषयस्था यमलोकस्थाः २९-३१

३० ] ति० टी०—मच्छरीरं जलम् । जलमूर्तित्वात्तस्य ॥ ३० ॥

रा० टी०—मच्छरीरमिति । मच्छरीरं जलं नित्यं समासाद्य कान्तो भविष्यसि अतुलां प्रीतिं प्राप्स्यसि एतद्वचनं मे प्रीतिलक्षणम् ॥ ३१ ॥

गो० टी०—मच्छरीरमिति । मच्छरीरं जलमूर्तिम् ॥ ३२ ॥

३१-३२ ] ति० टी०—नीलेन नीलवर्णेनाग्रेऽग्रदेशे संवीताः प्राप्ताः । शष्पं बालतृणं तदग्रवन्निर्मलाः । कोमलश्याम-वर्णा इत्यर्थः । क्रोडं भुजान्तरम् ॥ ३१ ॥ ३२ ॥

रा० टी०—हंसानामिति । पुरा हंसानां वर्णः सर्वपाण्डुरो न किन्तु पक्षाः नीलेन नीलवर्णेन अग्रे अग्रभागे सम्वीताः युक्ताः क्रोडाः भुजान्तराणि तु शष्पाग्रवत् बालतृणाग्रभागवत् निर्मलाः ॥ ३२ ॥

रा० टी०—अथेति । वैश्रवणः कृकलासमब्रवीत् तदाकारमाह तव प्रीतोहं हैरण्यं वर्णं संप्रयच्छामि अतः तव शिरः नित्यं सद्रव्यं सुवर्णवर्णं भविष्यति एष एतत्प्रकारकः काञ्चनको वर्णस्ते भविष्यति श्लोकद्वयमेकान्वयि ॥ ३३-३४ ॥

गो० टी०—हंसानामिति । क्रोडः भुजान्तरम् । शष्पाग्रनिर्मलाः बालतृणाग्रवन्निर्मलाः । कोमलश्यामवर्णा इत्यर्थः ॥ ३३--३४ ॥

३३ ] ति० टी०—शिरो नित्यं सद्रव्यम् । स्वर्णवर्णमित्यर्थः । तदेवाह—एष काञ्चनक इति । पूर्वं हि कृकलासा अञ्जनवर्णा इत्याहुः ॥ ३३ ॥

गो० टी०--सद्रव्यमिति । एतदेवाह—एष काञ्चनक इति ॥ ३५ ॥

गो० टी०—स्वभवनमिति । मरुत्तेन सह स्वर्गमित्यर्थः ३६

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तररामायणव्याख्यानेऽष्टादशः सर्गः ॥ १८ ॥

---

१ विविधै गो. पाठः । २-हारिणमिति गो. पाठः । ३ वच इति गो. पाठः । ४ ईश्वरेति गो. रा. पा. । ५ नीलवर्णः सपाण्डुर इति गो. पाठः ।

एवं दत्त्वा वरांस्तेभ्यस्तस्मिन्यज्ञोत्सवे सुराः । निर्वृत्ते सह राज्ञा ते पुनः स्वभवनं गताः ॥ ३४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

## एकोनविंशः सर्गः ।

एवं जगज्जिगीषू रावणोऽनरण्येनेक्ष्वाकुवंशराजेन संगतोऽन्त सुदारुणं युध्यमानेनापि पराभूतेन त्रिविष्टपमारुरुक्षुणा तेनारेऽधमाचिरादेव मत्कुलावतारिणा रामेण पराजेष्यसे इति शप्तः ।

अथ जित्वा मरुत्तं स प्रययौ राक्षसाधिपः । नगराणि नरेन्द्राणां युद्धकाङ्क्षी दशाननः ॥ १ ॥
समासाद्य तु राजेन्द्रान्महेन्द्रवरुणोपमान् । अब्रवीद्राक्षसेन्द्रस्तु युद्धं मे दीयतामिति ॥ २ ॥
निर्जिताः स्मेति वा ब्रूत एष मे हि सुनिश्चयः । अन्यथा कुर्वतामेवं मोक्षो नैवोपपद्यते ॥ ३ ॥
ततस्त्वभीरवः प्राज्ञाः पार्थिवा धर्मनिश्चयाः । मन्त्रयित्वा ततोऽन्योन्यं राजानः सुमहाबलाः ॥ ४ ॥
निर्जिताः स्मेत्यभाषन्त ज्ञात्वा वरबलं रिपोः । दुष्यन्तः सुरथो गाधिर्गयो राजा पुरूरवः ॥ ५ ॥
एते सर्वेऽब्रुवंस्तात निर्जिताः स्मेति पार्थिवाः । अथायोध्यां समासाद्य रावणो राक्षसाधिपः ॥ ६ ॥
सुगुप्तामनरण्येन शक्रेणेवामरावतीम् । स तं पुरुषशार्दूलं पुरंदरसमं बले ॥ ७ ॥
प्राह राजानमासाद्य युद्धं देहीति रावणः । निर्जितोऽस्मीति वा ब्रूहि त्वमेवं मम शासनम् ॥ ८ ॥
अयोध्याधिपतिस्तस्य श्रुत्वा पापात्मनो वचः । अनरण्यस्तु संक्रुद्धो राक्षसेन्द्रमथाब्रवीत् ॥ ९ ॥
दीयते द्वन्द्वयुद्धं ते राक्षसाधिपते मया । संतिष्ठ क्षिप्रमायत्तो भव चैवं भवाम्यहम् ॥ १० ॥

---

३४ ] ति० टी०—राज्ञा सह स्वभवनं गताः । मरुत्तेन सह स्वर्गमित्यर्थः ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

रा० टी०—एवमिति । यज्ञोत्सवे निवृत्ते सति राज्ञा सह सुराः स्वभवनं गताः ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डेऽष्टादशः सर्गः ॥ १८ ॥

१-२ ] ति० टी०—अथेति ॥ १ ॥ २ ॥

३ ] ति० टी०—एवमकुर्वतां युद्धं निर्जिताः स्मेतिवचनं वा कुर्वताम् । अन्यथा प्रकारान्तरेण मोक्षो मदुपरोधान्नास्तीत्यर्थः ॥ ३ ॥

रा० टी०—रावणकर्तृकमरुत्तविजयानन्तरकालिकं वृत्तमाह—अथेत्यादिभिः । राक्षसाधिपः मरुत्तं जित्वा नरेन्द्राणां नगराणि ययौ ॥ १ ॥

रा० टी०—समासाद्येति । राक्षसेन्द्रः राजेन्द्रान् समासाद्य युद्धं मे दीयतां निर्जिताः स्मेति ब्रूत वा अन्यथा कुर्वतां युष्माकं मोक्षः मत्कर्तृकत्यागः नैवोपपद्यते एष एव मे सुनिश्चयः इत्यब्रवीत् श्लोकद्वयमेकान्वयि ॥ २-३ ॥

४ ] ति० टी०—अभीरवः सन्तोऽपि राजानः पार्थिवाः पृथ्वीपतयो निर्जिताः स्मेत्यभाषन्त ॥ ४ ॥

रा० टी०—तत इति । अभीरवोपि प्राज्ञाः पार्थिवाः रिपोः रावणस्य वरबलं ज्ञात्वा अन्योन्यं मंत्रयित्वा निर्जिताः स्मेत्यभाषन्त सार्द्धश्लोक एकान्वयी ॥ ४ ॥

५-९ ] ति० टी०—तानाह—दुष्यन्त इति । भिन्नभिन्नकालवर्तिनो दुष्यन्तादयः स्वस्वकाले रावणं प्रति जितत्ववादं वरदानादुक्तवन्तः ॥ ५-९ ॥

रा० टी०—दुष्यन्त इति । दुष्यन्तादयोऽपि निर्जिताः स्मेत्यब्रुवन् ॥ ५ ॥

रा० टी०—अथेति । रावणः अनरण्येन गुप्तामयोध्यां समासाद्य अतिष्ठत् इति शेषः ॥ ६ ॥

रा० टी०—स इति । रावणः तमनरण्यं समासाद्य युद्धं देहि निर्जितोस्मीति ब्रूहि वा एवं मम शासनमाज्ञास्तीति शेषः इति प्राह सार्द्धश्लोक एकान्वयी ॥ ७-८ ॥

रा० टी०—अयोध्येति । अनरण्यः राक्षसेन्द्रमब्रवीत्॥९॥

१० ] ति० टी०—अहं चैवं भवामि । आयत्तो भवामीत्यर्थः ॥ १० ॥

रा० टी०—तदाकारमाह-दीयत इति । मया द्वन्द्वयुद्धं दीयते अतस्त्वमायत्तो भव अहमायत्तो भवामि ॥ १० ॥

---

१ निवृत्ता इति गो. पाठः ।

अथ पूर्वं श्रुतार्थेन निर्जितं सुमहद्बलम् । निष्क्रामत्तन्नरेन्द्रस्य बलं रक्षोवधोद्यतम् ॥ ११ ॥
नागानां दशसाहस्रं वाजिनां नियुतं तथा । रथानां बहुसाहस्रं पत्तीनां च नरोत्तम ॥ १२ ॥
महीं संछाद्य निष्क्रान्तं सपदातिरथं रणे । ततः प्रवृत्तं सुमहद्युद्धं युद्धविशारद ॥ १३ ॥
अनरण्यस्य नृपते राक्षसेन्द्रस्य चाद्भुतम् । तद्रावणबलं प्राप्य बलं तस्य महीपतेः ॥ १४ ॥
प्राणश्यत तदा सर्वं हव्यं हुतमिवानले । युद्ध्वा च सुचिरं कालं कृत्वा विक्रममुत्तमम्॥ १५ ॥
प्रज्वलन्तं तमासाद्य क्षिप्रमेवावशेषितम् । प्राविशत्संकुलं तत्र शलभा इव पावकम् ॥ १६ ॥
[ नैश्यति स्म बलं तत्र हव्यं हुतमिवानले ] ।
सोऽपश्यत्तन्नरेन्द्रस्तु नश्यमानं महाबलम् । महार्णवं समासाद्य वनापगशतं यथा ॥ १७ ॥
ततः शक्रधनुःप्रख्यं धनुर्विस्फारयन्स्वयम् । आससाद नरेन्द्रस्तं रावणं क्रोधमूर्च्छितः ॥ १८ ॥
अनरण्येन तेऽमात्या मारीचशुकसारणाः । प्रहस्तसहिता भग्ना व्यद्रवन्त मृगा इव ॥ १९ ॥
ततो बाणशतान्यष्टौ पातयामास मूर्धनि । तस्य राक्षसराजस्य इक्ष्वाकुकुलनन्दनः ॥ २० ॥
तस्य बाणाः पतन्तस्ते चक्रिरे न क्षतं क्वचित् । वारिधारा इवाभ्रेभ्यः पतन्त्यो गिरिमूर्धनि ॥ २१ ॥
ततो राक्षसराजेन क्रुद्धेन नृपतिस्तदा । तलेनाभिहतो मूर्ध्नि स रथान्निपपात ह ॥ २२ ॥
स राजा पतितो भूमौ विह्वलैः प्रविवेपितः । वज्रदग्ध इवारण्ये सालो निपतितो यथा ॥ २३ ॥

---

गो० टी०—दीयत इति । संतिष्ठ । एवमह भवामीति । आयत्तो भवामीत्यर्थः ॥ १० ॥

११-१३ ] ति० टी०—पूर्वं श्रुतार्थेन श्रुतरावणवृत्तान्तेन निर्जितम् । भावे क्तः । निर्जयं प्रति यत्सुमहद्बलं नियुक्तं तन्नरेन्द्रस्य बलं रक्षोवधोद्यतं निष्क्रामन्निरक्रामत्॥१३॥

रा० टी०—अथेति । पूर्वं श्रुतोऽर्थो रावणवृत्तं येन तेन अनरण्येन नियुक्तं यत्सुमहद्बलं तत् नरेन्द्रस्य बलं रक्षोवधोद्यतं सत् निष्क्रामत् निरक्रामत् ॥ ११ ॥

रा० टी०—सेनासंख्यां कुर्वन्नाह—नागानामिति । सपदातिभिः रथैश्च सहितं बलं महीं संछाद्य निष्क्रान्तं सार्धश्लोक एकान्वयी ॥ १२ ॥

रा० टी०—तत इति । अनरण्यस्य राक्षसेन्द्रस्य च सुमहद्युद्धं प्रवृत्तम् ॥ १३ ॥

गो० टी०—अथेति । पूर्वं रावणगमनात्पूर्वं श्रुतार्थेन श्रुतरावणवृत्तान्तेन । तन्नरेन्द्रस्य बलम् । निष्क्रामत् निरक्रामत्११-१५

१४-१५ ] ति० टी०—तस्य महीपतेर्बलं रावणबलं प्राप्य सुचिरं कालं युद्धोत्तममधिकं विक्रमं च कृत्वा तदा सर्वं प्राणश्यत ॥ १४ ॥ १५ ॥

रा० टी०—तदिति । महीपतेर्बलं रावणबलं प्राप्य अनिले हुतं हव्यमिव प्राणश्यत ॥ १४ ॥

रा० टी०—युद्ध्वेति । अवशेषितं बलं सुचिरं कालं युध्वा प्रज्वलन्तं पावकं शलभा इव संकुलं रिपुसैन्यं प्राविशत् सार्धश्लोक एकान्वयी ॥ १५ ॥

१६ ] ति० टी०—प्रज्वलन्तं रावणमासाद्य क्षिप्रमेवावशेषितमल्पावशिष्टं सत्तत्र रणे पावकं प्राप्य शलभा इव संकुलं नाशं प्राविशत्प्राप्तमभूत् ॥ १६ ॥

गो० टी०—प्रज्वलन्तमिति । समासाद्येति । तं रावणमासाद्य क्षिप्रमेवावशेषितम् अल्पावशिष्टमभवदित्यर्थः । तत्र रणे शलभाः पावकमिव संकुलं समूहनाशनम् प्राविशत् प्रापत् १६-२१

१७-२२ ] ति० टी०—वनापगशतं वनं जलं तत्पूर्णनदीशतम् । आर्षो ह्रस्वः ॥ १७-२२ ॥

रा० टी०—स इति । नरेन्द्रो महार्णवं समासाद्य वनेन जलेन युक्तमापगाशतं बहुनदीमिव किंच आपगाशतस्य वनानि जलानि वनापगशतमिव नश्यमानं महाबलमपश्यत् ॥ १६ ॥

रा० टी०—तत इति । नरेन्द्रो धनुर्विस्फारयन्सन् रावणं स्वयमाससाद ॥ १७ ॥

रा० टी०—अनरण्येनेति । अनरण्येन भग्नाः मारीचादयो मृगा इव व्यद्रवन्त ॥ १८ ॥

रा० टी०—तत इति । इक्ष्वाकुकुलनन्दनः अष्टौ बाणशतानि राक्षसराजस्य रावणस्य मूर्धनि पातयामास ॥ १९ ॥

रा० टी०—तस्येति । गिरिमूर्धनि अभ्रेभ्यः पतन्त्यो वारिधारा इव पतन्तस्तस्य बाणाः क्वचित् क्षतं न चक्रिरे २०

रा० टी०—तत इति । राक्षसराजेन मूर्ध्नि अभिहतो नृपतिः रथान्निपपात ॥ २१ ॥

२३ ] ति० टी०—वज्रदग्धोऽशनिहतः ॥ २३ ॥

रा० टी०—स इति । वज्रदग्धो निपतितस्साल इव विह्वलो राजा प्रविवेपितस्सन् भूमौ पतितो दृश्यत इति शेषः ॥२२॥

---

१ इदमर्धमधिकं गो. पाठे । २ विह्वलाङ्गः प्रवेपित इति गो. पाठः ।

तं प्रहस्याब्रवीद्रक्ष इक्ष्वाकुं पृथिवीपतिम् । किमिदानीं फलं प्राप्तं त्वया मां प्रति युद्ध्यता ॥ २४ ॥
त्रैलोक्ये नास्ति यो द्वन्द्वं मम दद्यान्नराधिप । शङ्के प्रसक्तो भोगेषु न शृणोषि बलं मम ॥ २५ ॥
तस्यैवं ब्रुवतो राजा मन्दासुर्वाक्यमब्रवीत् । किं शक्यमिह कर्तुं वै कालो हि दुरतिक्रमः ॥ २६ ॥
नह्यहं निर्जितो रक्षस्त्वया चात्मप्रशंसिना । कालेनैव विपन्नोऽहं हेतुभूतस्तु मे भवान् ॥ २७ ॥
किं त्विदानीं मया शक्यं कर्तुं प्राणपरिक्षये । नह्यहं विमुखी रक्षो युध्यमानस्त्वया हतः ॥ २८ ॥
इक्ष्वाकुपरिभावित्वाद्वचो वक्ष्यामि राक्षस । यदि दत्तं यदि हुतं यदि मे सुकृतं तपः ॥
यदि गुप्ताः प्रजाः सम्यक्तदा सत्यं वचोऽस्तु मे ॥ ॥ २९ ॥
उत्पत्स्यते कुले ह्यस्मिन्निक्ष्वाकूणां महात्मनाम् । रामो दाशरथिर्नाम यस्ते प्राणान्हरिष्यति ॥ ३० ॥
ततो जलधरोदग्रस्ताडितो देवदुन्दुभिः । तस्मिन्नुदाहृते शापे पुष्पवृष्टिश्च खाच्च्युता ॥ ३१ ॥
ततः स राजा राजेन्द्र गतः स्थानं त्रिविष्टपम् । स्वर्गते च नृपे तस्मिन्राक्षसः सोऽपसर्पत ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

## विंशः सर्गः

मर्त्यलोकाञ्जिगीषुं रावणं तत्पुरो मशकायमानेन जराव्याधिशताकुलेन च क्षुद्रमर्त्यलोकेन किमनः प्रेतराजं निगृण्हीष्वेत्युपदिश्य नारदः प्राहिणोत् स्वयं तद्द्रष्टुकामः समुपाद्रवद्यमपुरम् ।

ततो वित्रासयन्मर्त्यान्पृथिव्यां राक्षसाधिपः । आससाद घने तस्मिन्नारदं मुनिपुंगवम् ॥ १ ॥

---

२४-२६ ] ति० टी०-इक्ष्वाकुं तद्वंश्यमनरण्यम् । किं फलं प्राप्तम् । निर्जितोऽस्मीति वचनमनुक्त्वेति शेषः २४-२६

रा० टी०-तमिति । रक्षः पृथिवीपतिं प्रहस्याब्रवीत् तदाकारमाह मां प्रति युध्यता त्वया किं फलं प्राप्तम् ॥ २३ ॥

रा० टी०-त्रैलोक्य इति । यो द्वन्द्वं युद्धं दद्यात् स त्रैलोक्ये नास्ति इत्यहं शङ्के मन्ये त्वं तु भोगेषु प्रसक्तस्सन् मम बलं न शृणोपि अशृणोः ॥ २४ ॥

रा० टी०-तस्येति । मंदासुः राजा वाक्यमब्रवीत् तदाकारमाह यतः कालो दुरतिक्रमः अतो मया किं कर्तुं शक्यम्॥२५॥

गो० टी०-तमिति । इक्ष्वाकुमिक्ष्वाकुवंश्यम् । किं फलं प्राप्तम् । निर्जितोऽस्मीति वचनमनुक्त्वेति शेषः ॥२४-२६॥

२७-२८ ] ति० टी०-अहं त्वया न निर्जितः, किं तु प्राप्तेन कालेनैव विपन्न इत्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०-नेति । त्वयाहं न निर्जितः किन्तु कालेनैव अहं विपन्नः पञ्चत्वं प्राप्तः भवांस्तु हेतुभूत एव एतेन स्वमृत्युकालं ज्ञात्वैवाहं युद्धे प्रवृत्तोऽस्मीति सूचितम् ॥ २६ ॥

रा० टी०-किमिति । प्राणपरिक्षये प्राणापगमसमये मया किं कर्तुं शक्यं युद्धमेव कर्तुं योग्यमित्यर्थः अत एव अहं न विमुखः युद्धात् पराङ्मुखः किन्तु युध्यमानस्त्वत्रैव त्वया हतः२७

गो० टी०-न ह्यहमिति । त्वया न जित इति । अपि तु प्राप्तेनैव कालेन विपन्न इत्यर्थः ॥ २७ ॥ २८ ॥

२९-३० ] ति० टी०-इक्ष्वाकुपरिभावित्वात् । त्वदुक्तावमाननवाक्यस्येक्ष्वाकुकुलपरिभवरूपत्वादित्यर्थः । वचः शापरूपम् ॥ २९ ॥ ३० ॥

रा० टी०-इक्ष्वाकिति । इक्ष्वाकोरेव परिभवति तच्छीलः तत्वात् तवेति शेषः इदं वचो वक्ष्यामि अहं पृथक् ॥२८॥

रा० टी०-यदीति । मम वचस्सत्यमस्तु ॥ २९ ॥

रा० टी०-तद्वचनाकारमाह-उत्पत्स्यते इति । यस्ते प्राणान् हरिष्यति स रामः इक्ष्वाकूणां कुले एव उत्पत्स्यते३०

गो० टी०-इक्ष्वाकिति । इक्ष्वाकुपरिभावित्वात् तत्कुलपरिभावित्वादित्यर्थः ॥ २९-३१ ॥

३१ ] ति० टी०-पुष्पवृष्टिरत्रापि प्राग्वत् ॥ ३१ ॥

रा० टी०-तत इति । शापे रावणविघातबोधकवचने उदाहृते राज्ञा कथिते जलधरोदग्रः अधिकशब्दवान् देवदुन्दुभिः ताडितोऽभवदिति शेषः ॥ ३१ ॥

३२ ] ति० टी०-अपसर्पतापासर्पत् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनविंशः सर्गः ॥ १९ ॥

रा० टी०-तत इति । राजा अनरण्यः त्रिविष्टपं स्वर्गं स्थानं गतः तस्मिन् स्वर्गते सति राक्षसो रावणोऽपसर्पत अगच्छत् ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनविंशः सर्गः ॥ १९ ॥

गो० टी०-तत इति । अपसर्पत अपासर्पत् । अपगतवानित्यर्थः ॥ ३२ ॥

इति श्री० मणि०उत्तर०श्री० एकोनविंशः सर्गः ॥ १९ ॥

१ ] ति० टी०-आससाद घने तस्मिन्निति । तस्मिन्काले घने घनपृष्ठे स्थितं मुनिश्रेष्ठं नारदमाससाद ॥ १ ॥

तस्याभिवादनं कृत्वा दशग्रीवो निशाचरः । अब्रवीत्कुशलं पृष्ट्वा हेतुमागमनस्य च ॥ २ ॥
नारदस्तु महातेजा देवर्षिरमितप्रभः । अब्रवीन्मेघपृष्ठस्थो रावणं पुष्पके स्थितम् ॥ ३ ॥
राक्षसाधिपते सौम्य तिष्ठ विश्रवसः सुत । प्रीतोऽस्म्यभिजनोपेत विक्रमैरूर्जितैस्तव ॥ ४ ॥
विष्णुना दैत्यघातैश्च गन्धर्वोरगधर्षणैः । त्वया समं विमर्दैश्च भृशं हि परितोषितः ॥ ५ ॥
किंचिद्वक्ष्यामि तावत्तु श्रोतव्यं श्रोष्यसे यदि । [ श्रुत्वा चानन्तरं कार्यं त्वया राक्षससत्तम ।]
तन्मे निगदतस्तात समाधिं श्रवणे कुरु ॥ ॥ ६ ॥
किमयं वध्यते तात त्वयावध्येन दैवतैः । हत एव ह्ययं लोको यदा मृत्युवशं गतः ॥ ७ ॥
देवदानवदैत्यानां यक्षगन्धर्वरक्षसाम् । अवध्येन त्वया लोकः क्लेष्टुं योग्यो न मानुषः ॥ ८ ॥
नित्यं श्रेयसि संमूढं महद्भिर्व्यसनैर्वृतम् । हन्यात्कस्तादृशं लोकं जराव्याधिशतैर्युतम् ॥ ९ ॥
तैस्तैरनिष्टोपगमैरजस्रं यत्र कुत्र कः । मतिमान्मानुषे लोके युद्धेन प्रणयी भवेत् ॥ १० ॥
क्षीयमाणं दैवहतं क्षुत्पिपासाजरादिभिः । विषादशोकसंमूढं लोकं त्वं क्षपयस्व मा ॥ ११ ॥

---

रा० टी०—अयोध्यातो निर्गमनानन्तरकालिकं रावणवृत्तमाह—तत इत्यादिभिः । राक्षसाधिपः मर्त्यान् वित्रासयन्सन् घने मेघसमीपे स्थितं नारदमाससाद ॥ १ ॥

गो० टी०—ततो वित्रासयन्नित्यादि—आससाद । घने तस्मिन्निति । तस्मिन्काले घने घनपृष्ठे स्थितं नारदमित्यर्थः ॥ १ ॥

२-३ ] ति० टी०—कुशलं पृष्ट्वागमनस्य हेतुमब्रवीत् । पप्रच्छेत्यर्थः ॥ २ ॥ ३ ॥

रा० टी०—तस्येति । निशाचरः कुशलं पृष्ट्वा आगमनस्य हेतुमब्रवीत् अपृच्छदित्यर्थः ॥ २ ॥

रा० टी०—नारद इति । नारदो रावणमब्रवीत् ॥ ३ ॥

गो० टी०—तस्येति—हेतुमागमनस्य चेत्यत्रापि पृष्ट्वेत्यन्वयः ॥ २-३ ॥

४ ] ति० टी०—तिष्ठ । मद्वचः श्रोतुमिति शेषः ॥ ४ ॥

रा० टी०—तदाकारमाह—राक्षसाधिपत इति । हे अभिजनोपेत दुर्जितैः प्रवृद्धैः तव विक्रमैः अहं प्रीतोऽस्मि त्वं तिष्ठ ॥ ४ ॥

गो० टी०—राक्षसाधिपत इति । तिष्ठेति । मद्वचनं श्रोतुमिति शेषः । विष्णुर्दैत्यघातादिर्दृष्टान्तार्थः ॥ ४-५ ॥

५ ] ति० टी०—विष्णुना दैत्यघातादिभिरहं तोषितः । त्वया समं गन्धर्वोरगधर्षणैर्विमर्दैर्भाविभिः परितोषितो भविष्यामीत्यर्थः ॥ ५ ॥

रा० टी०—विष्णुनेति । दैत्यघातैः दैत्यानां घातो येषु तैर्विमर्दैर्विष्णुनाहं परितोषितः गन्धर्वोरगधर्षणे गन्धर्वादीनां धर्षणं येषु तैर्विमर्दैस्तु समं कृत्स्नं यथा भवति तथा त्वयाहं परितोषितोऽस्मि ॥ ५ ॥

६ ] ति० टी०—समाधिं चित्तैकाग्र्यम् ॥ ६ ॥

रा० टी०—किञ्चिदिति । यदि त्वं श्रोष्यसे तर्हि किञ्चित्कथ्यं वक्ष्यामि निगदतो मम श्रवणे समाधिं चित्तैकाग्र्यं कुरु ॥ ६ ॥

गो० टी०—किंचिदिति—समाधिमैकाग्र्यम् ॥ ६ ॥

७-८ ] ति० टी०—अयं लोको मर्त्यलोकः । दैवतैरवध्येनेत्यनेन मर्त्येभ्यो भयराहित्यमुक्तम् ॥ ७ ॥ ८ ॥

रा० टी०—तद्वचनाकारमाह—किमिति । यदा अयं लोको मृत्युवशं गतः तदा हत एव अतः दैवतैरवध्येन त्वया किं किमर्थं वध्यते ॥ ७ ॥

रा० टी०—देवेति । मानुषो लोकः क्लेष्टुं त्वया न योग्यः ॥ ८ ॥

गो० टी०—अयं लोकः । त्वया अवध्येनेति छेदः ॥ ८-९ ॥

९ ] ति० टी०—श्रेयसि संमूढं श्रेयआचरणे बुद्धिहीनम् । व्यसनान्येव जरेत्यादिना स्पष्टीकृतानि ॥ ९ ॥

रा० टी०—नित्यमिति । श्रेयसि कल्याणमार्गे सम्मूढं तमजानन्तमित्यर्थः अत एव व्यसनैर्दुःखैर्वृतं जराव्याधिशतैर्युतं तादृशं मानुषं लोकं को हन्यात् ॥ ९ ॥

१० ] ति० टी०—नानाविधैरनिष्टोपगमैरनिष्टसंबन्धैर्यत्रकुत्र यत्रकुत्रापि पीडिते मानुषे लोके को मतिमांस्तस्य युद्धेन वधे प्रणयी भवेत्, न कोऽपि ॥ १० ॥

रा० टी०—तैरिति । तैस्तैः प्रसिद्धैः अनिष्टोपगमैः अनिष्टत्वेन प्रतीयमानैर्विशिष्ट यत्रकुत्र मानुषे लोके युद्धेन कः प्रणयी भवेत् ॥ १० ॥

गो० टी०—तैस्तैरिति । युद्धेनेति । मतिमान् कदा तस्मिन्मर्त्यलोके युद्धेन वधप्रणयी भवेत् न कोपीत्यर्थः ॥ १० ॥

११ ] ति० टी०—किं च मृतमारणवद्युद्धेन तेषां वधो व्यर्थ इत्याह—क्षीयमाणमिति । विषादो व्याध्यादिजं दुःखम् । शोको बन्धुवियोगादिजं दुःखम् ॥ ११ ॥

रा० टी०—क्षीयमाणमिति । मा क्षपयस्व विनाशय ११

---

१ ते इति गो. पाठः । २ इदमर्धमधिकं गो. पाठे । ३ युक्त इति गो. पाठः ।

पश्य तावन्महाबाहो राक्षसेश्वर मानुषम् । मूढमेवं विचित्रार्थं यस्य न ज्ञायते गतिः ॥ १२ ॥
क्वचिद्वादित्रनृत्यादि सेव्यते मुदितैर्जनैः । रुद्यते चापरैरार्तैर्धाराश्रुनयनाननैः ॥ १३ ॥
मातापितृसुतस्नेहभार्याबन्धुमनोरमैः । मोहितोऽयं जनो ध्वस्तः क्लेशं स्वं नावबुध्यते॥ १४ ॥
तत्किमेवं परिक्लिश्य लोकं मोहनिराकृतम् । जित एव त्वया सौम्य मर्त्यलोको न संशयः॥१५॥
अवश्यमेभिः सर्वैश्च गन्तव्यं यमसादनम् । तन्निगृह्णीष्व पौलस्त्य यमं परपुरंजय ॥ १६ ॥
तस्मिञ्जिते जितं सर्वं भवत्येव न संशयः । एवमुक्तस्तु लङ्केशो दीप्यमानं स्वतेजसा ॥ १७ ॥
अब्रवीन्नारदं तत्र संप्रहस्याभिवाद्य च । महर्षे देवगन्धर्वविहार समरप्रिय ॥ १८ ॥
अहं समुद्यतो गन्तुं विजयार्थं रसातलम् । ततो लोकत्रयं जित्वा स्थाप्य नागान्सुरान्वशे ॥
समुद्रममृतार्थं च मथिष्यामि रसालयम् ॥ ॥ १९ ॥
अथाब्रवीद्दशग्रीवं नारदो भगवानृषिः । क्व खल्विदानीं मार्गेण त्वयेहान्येन गम्यते ॥ २० ॥
अयं खलु सुदुर्गम्यः प्रेतराजपुरं प्रति । मार्गो गच्छति दुर्धर्ष यमस्यामित्रकर्शन ॥ २१ ॥

---

गो० टी०–किं च मृतमारणवद्बुद्धेन तेषां वधो व्यर्थ इत्याह–क्षीयमाणमिति ॥ ११-१२ ॥

१२ ] ति० टी०–यस्य मनुष्यलोकस्य गतिर्दुःखादिभोगकालो न ज्ञायते तेन लोकेनेति शेषः । एवं ज्ञानराहित्येन मूढमपि विचित्रार्थं नानाविधक्षुद्रपुरुषार्थसक्तं मानुषं लोकं पश्य ॥ १२ ॥

रा०टी०–पश्येति । यस्य गतिः अवस्थितिर्न ज्ञायते तं मानुषं लोकं विचित्रार्थमनेकविधाधिव्याधिविशिष्टं पश्य जानीहि१२

१३ ] ति० टी०–तदेवाह–क्वचिदिति । धाराश्रुनयनोपेतमाननं येषां तैः ॥ १३ ॥

रा० टी०–क्वचिदिति । क्वचित् कदाचित् मुदितैर्जनैर्वादित्रनृत्यादि सेव्यते धाराश्रुभिः अश्रुधाराभिरुपलक्षितैर्नयनैर्युक्तमाननं येषां तैरपरैः रुद्यते ॥ १३ ॥

गो० टी०–क्वचिदिति–धाराश्रुनयनाननैः धाराभूताश्रुनयनयुक्तमुखैः ॥ १३ ॥

१४ ] ति० टी०–मात्रादिस्नेहैर्भार्यादिमनोरमैः । भार्यादिविषयकमनोरथैरित्यर्थः । मोहितः, अत एव ध्वस्तोऽयः पतितः । स्वं क्लेशं पारलौकिकम् ॥ १४ ॥

रा० टी०–मातेति । मात्रादिस्नेहैः भार्याबन्धुषु मनोरमैः अनेकविधमनोरथैर्मोहितः अत एव ध्वस्तोयं जनः स्वं क्लेशं नावबुध्यते ॥ १४ ॥

गो० टी०–मातेति–भार्याबन्धुमनोरमैः भार्याबन्धुषु मनोरमो मनोरमणं प्रीतिर्येषां तैः क्लेशं पारलौकिकदुःखम्॥१४॥

१५-१७ ] ति० टी०–एवंप्रकारेण मोहेनाज्ञानेन निराकृतं प्रच्यावितार्थम् ॥ १५-१७ ॥

रा० टी०–तदिति । त्वया मर्त्यलोको जित एव उत्तमार्गो जये तदधमाः जितप्राया एवेत्यर्थः तत्तस्मात् हेतोः मोहनिराकृतं लोकं परिक्लिश्य किं न किमपीत्यर्थः ॥ १५ ॥

रा० टी०–अवश्यमिति । सर्वैर्यमसादनमवश्यं गन्तव्यं यम एव सर्वेभ्यः प्रबल इत्यर्थः अतो यमं निगृह्णीष्व तस्मिन् जिते सति सर्वं जितं भवति भविष्यति सार्द्धश्लोक एकान्वयी॥१६॥

रा० टी०–एवमिति । एवमुक्तो लंकेशो नारदमब्रवीत्१७

गो० टी०–अलमेनं परिक्लिश्येति–मोहनिराकृतः अज्ञानेन प्रच्यावितार्थः ॥ १५-१७ ॥

१८ ] ति० टी०–देवगन्धर्वविहार तल्लोकक्रीडापर, समरप्रिय समरदर्शनप्रिय ॥ १८ ॥

रा० टी०–तदाकारमाह–महर्ष इति । देवगन्धर्वाणां विहारः विहरणमिव तत्सम्बोधनं विजयार्थं रसातलं गन्तुमहं समुद्यतोस्मि ॥ १८ ॥

गो० टी०–महर्ष इति–देवगन्धर्वविहार देवगन्धर्वैर्गानपरैर्विहारपर । समरप्रिय समरदर्शनप्रिय ॥ १८ ॥

१९ ] ति० टी०– ततो रसातलजयानन्तरम् । रसस्यामृतरूपरसस्यालयं समुद्रं मथिष्यामि ॥ १९ ॥

रा० टी०–तत इति । नागान्सुरांश्च वशे आस्थाप्य अमृतार्थं रसालयं रसानामाश्रयं समुद्रं मथिष्यामि ॥ १९ ॥

गो० टी०–तत इति–रसालयम् अमृतरमालयम् । खल्विति ॥ १९ ॥

२० ] ति० टी०–इदानीं रसातलं जिगमिषुणा त्वयान्येन मार्गेण रसातलमार्गव्यतिरिक्तमार्गेण क्व खलु गम्यते ॥२०॥

रा० टी०–अथेति । नारदो दशग्रीवमब्रवीत् तदाकारमाह अन्येन मार्गेण त्वया क्व खलु किमर्थं गम्यते यमराजपुरमार्गेणैव गम्यतामित्यर्थः ॥ २० ॥

गो० टी०–अथेति–इदानीं रसातलजिगमिषुणा त्वया अन्येन मार्गेण रसातलमार्गव्यतिरिक्तमार्गेण क्व गम्यते॥२०॥

२१ ] ति० टी०–कस्य देशस्य तर्ह्ययं मार्गोऽत आह–अयं खल्विवति । सुदुर्गम्यः सुदुर्गमः । यदार्षः । यमस्य यमपुरस्य ॥ २१ ॥

---

१ अलमेनमिति गो. पाठः । २ त्वया ह्यन्येति गो. पाठः । ३ दुर्धर्ष इति गो. पाठः ।

स तु शारदमेघाभं हासं मुक्त्वा दशाननः । उवाच कृतमित्येव वचनं चेदमब्रवीत् ॥ २२ ॥
तस्मादेवं महाब्रह्म वैवस्वतवधोद्यतः । गच्छामि दक्षिणामाशां यत्र सूर्यात्मजो नृप ॥ २३ ॥
मया हि भगवन्क्रोधात्प्रतिज्ञातं रणार्थिना । अवजेष्यामि चतुरो लोकपालानिति प्रभो ॥ २४ ॥
तदिह प्रस्थितोऽहं वै पितृराजपुरं प्रति । प्राणिसंक्लेशकर्तारं योजयिष्यामि मृत्युना ॥ २५ ॥
एवमुक्त्वा दशग्रीवो मुनिं तमभिवाद्य च । प्रययौ दक्षिणामाशां प्रविष्टः सह मन्त्रिभिः ॥ २६ ॥
नारदस्तु महातेजा मुहूर्तं ध्यानमास्थितः । चिन्तयामास विप्रेन्द्रो विधूम इव पावकः ॥ २७ ॥
येन लोकास्त्रयः सेन्द्राः क्लिश्यन्ते सचराचराः । क्षीणे चायुषि धर्मेण स कालो जेष्यते कथम् ॥ २८ ॥
स्वदत्तकृतसाक्षी यो द्वितीय इव पावकः । लब्धसंज्ञा विचेष्टन्ते लोका यस्य महात्मनः ॥ २९ ॥
यस्य नित्यं त्रयो लोका विद्रवन्ति भयार्दिताः । तं कथं राक्षसेन्द्रोऽसौ स्वयमेव गमिष्यति ॥ ३० ॥
यो विधाता च धाता च सुकृतं दुष्कृतं तथा । त्रैलोक्यं विजितं येन तं कथं विजयिष्यते ॥
अपरं किं तु कृत्वैवं विधानं संविधास्यति ॥ ॥ ३१ ॥

---

रा० टी०—ननु कः स मार्ग इत्यत आह—अयमिति । छदुर्गम्यः अन्यैर्गन्तुमशक्यः अयं मत्समीपस्थ एव मार्गः प्रेतराजपुरं प्रति गच्छति एतेन यमपुरमेव गच्छेति सूचितम् ॥ २१ ॥

गो० टी०—कस्य तर्ह्ययं मार्ग इत्यपेक्षायामाह—अयं खल्वित्यादि—छदुर्गम्यः छदुर्गमः । यदार्षः ॥ २१ ॥

२२ ] ति० टी०—हासं मुक्त्वा कृत्वा शारदमेघाभं नारदं प्रति कृतमिति वचोऽब्रवीत् यमपुरमार्गेण गमनं तज्जयश्च मम सिद्ध एवेत्यब्रवीदित्यर्थः ॥ २२ ॥

रा० टी०—स इति । दशाननः हासं मुक्त्वा कृत्वा कृतं भवदुक्तमार्गाकृतमिदं वचनमब्रवीत् ॥ २२ ॥

गो० टी०—स त्विति—हासं मुक्त्वेति । कृत्वेति यावत् । शारदमेघाभं नारदं प्रति कृतमित्येवावोचत् । तन्मार्गेणैव गमनं तज्जयश्च मम सिद्ध एवेत्युवाचेत्यर्थः ॥ २२ ॥

२३-२५ ] ति० टी०—यस्मात्त्वया मार्ग उपदिष्टो यतश्चतुर्दिक्पालजयो मया प्रतिज्ञातस्तस्मादेवमनेनैव मार्गेण हे महाब्रह्म । 'कुमहद्भ्यामन्यतरस्याम्' इत्यच् । दक्षिणामाशां गच्छामि ॥ २३-२५ ॥

रा० टी०—तद्वचनमेव स्पष्टमाह—तस्मादिति । हे महाब्रह्म तस्मात् भवदुक्तहेतोः दक्षिणामाशां गच्छामि ॥ २३ ॥

रा० टी०—तत्र गमनस्यावश्यकत्वमाह—मयेति । चतुरो लोकपालान् अहमवजेष्यामीति रणार्थिना मया प्रतिज्ञातम् ॥ २४ ॥

रा० टी०—तदिति । पितृराजपुरं प्रति प्रस्थितोऽहं प्राणिसंक्लेशकर्तारं यमं मृत्युना योजयिष्यामि ॥ २५ ॥

गो० टी०—तस्मादिति—यस्मान्मार्ग उपदिष्टः यतश्च मया चतुर्दिक्पालजयः प्रतिज्ञातस्तस्मादित्यर्थः ॥ २३-२८ ॥

२६-२७ ] ति० टी०—प्रययौ । नारदसमीपदेशात् । ततो दक्षिणामाशां प्रविष्टः ॥ २६ ॥ २७ ॥

रा० टी०—एवमिति । मन्त्रिभिस्सह प्रविष्टो दशग्रीवः दक्षिणामाशां प्रययौ ॥ २६ ॥

रा० टी०—नारद इति । ध्यानमास्थितो नारदः मुहूर्तं चिन्तयामास ॥ २७ ॥

२८ ] ति० टी०—आयुषि क्षीणे सति धर्मेण धर्ममार्गेण त्रयो लोका येन क्लिश्यन्ते दण्ड्यन्ते स कालः कथमनेन जेष्यते ॥ २८ ॥

रा० टी०—तदाकारमाह—येनेति । आयुषि क्षीणे सति येन त्रयो लोकाः क्लिश्यन्ते क्लेश्यन्ते स कालो यमः कथं जेष्यते ॥ २८ ॥

२९-३० ] ति० टी०—यश्च कालः प्राणिनां स्वदत्तं च स्वकृतं च स्वदत्तकृते तयोः साक्षी । दत्तं दानम् । इदं विहितयागादेरप्युपलक्षणम् । कृतशब्देन कायक्लेशरूपं तपः । स कथं जेष्यत इति संबन्धः । यस्य लब्धसंज्ञा यतो लब्धसंज्ञा विचेष्टन्ते । व्यवहरन्तीत्यर्थः । यद्वा यस्य महात्मनः । अनुग्रहादिति शेषः ॥ २९ ॥ ३० ॥

रा० टी०—स्वदत्तेति । स्वदत्तस्य दानस्य कृतस्य कायक्लेशादिकर्मणश्च यस्साक्षी यस्य प्रभावादिति शेषः लब्धसंज्ञा लोका विचेष्टन्ते यस्य भयार्दिताः लोकाः विद्रवन्ति तं यमं राक्षसेन्द्रः स्वयमेव कथं गमिष्यति अर्धचतुष्टयमेकान्वयि ॥ ३० ॥

रा० टी०—य इति । यस्सुकृतं दुष्कृतं च विधाता कारयिता धाता तत्फलप्रापक इत्यर्थः येन च त्रैलोक्यं विजितं तं कथं विजयिष्यते विजेष्यते ॥ ३१ ॥

गो० टी०—स्वदत्तं स्वकृतं च । स्वदत्तस्वकृतशब्देन कायक्लेशरूपं तपः महात्मनः अनुग्रहादिति शेषः ॥ २९-३० ॥

३१ ] ति० टी०—यो लोकस्य धाता विधाता सामान्यतो विशेषतश्च कर्ता । यः सुकृतं दुष्कृतम् । तत्फलद इत्यर्थः । येन कालेन विजयिष्यते विजेष्यते । अपरं किं त्विति काल

---

१ अहं महाब्रह्मिति गो. पाठः । २ विजेष्यन्ते इति गो. पाठः । ३ कृत्वायामिति गो. कृत्वैवामिति. च रा. पाठः ।

कौतूहलं समुत्पन्नो यास्यामि यमसादनम् । विमर्दं द्रष्टुमनयोर्यमराक्षसयोः स्वयम् ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे विंशः सर्गः ॥ २० ॥

## एकविंशः सर्गः ।

देवर्षिर्नारदो रावणागमनवृत्तं यावत्प्रस्तौति तावदेव स निशाचर आगत्य दुष्कृतकारिणो बद्धाञ्जीवान् मुक्तवान्सहसा । तच्छ्रवणकुपितकृतान्तप्रेषितभटैः सह पौलस्त्यस्य श्रोतृकुतूहलजनकं महद्युद्धमभवत् ।

एवं संचिन्त्य विप्रेन्द्रो जगाम लघुविक्रमः । आख्यातुं तद्यथावृत्तं यमस्य सदनं प्रति ॥ १ ॥
अपश्यत्स यमं तत्र देवमग्निपुरस्कृतम् । विधानमनुतिष्ठन्तं प्राणिनो यस्य यादृशम् ॥ २ ॥
स तु दृष्ट्वा यमः प्राप्तं महर्षिं तत्र नारदम् । अब्रवीत्सुखमासीनमर्घ्यमावेद्य धर्मतः ॥ ३ ॥
कच्चित्क्षेमं नु देवर्षे कच्चिद्धर्मो न नश्यति । किमागमनकृत्यं ते देवगन्धर्वसेवित ॥ ४ ॥
अब्रवीत्तु तदा वाक्यं नारदो भगवानृषिः । श्रूयतामभिधास्यामि विधानं च विधीयताम् ॥ ५ ॥
एष नाम्ना दशग्रीवः पितृराज निशाचरः । उपयाति वशं नेतुं विक्रमैस्त्वां सुदुर्जयम् ॥ ६ ॥
एतेन कारणेनाहं त्वरितो ह्यागतः प्रभो । दण्डप्रहरणस्याद्य तव किं नु भविष्यति ॥ ७ ॥

एव सर्वसाधनम्, अयं तु कालातिरिक्तमपरं किं नु विधानं कालव्यतिरिक्तसाधनसंपादनं कृत्वा कालजयं संविधास्यति३१

रा० टी०-अपरमिति । एवं विधानं यमेन सह युद्धं कृत्वा अपरं किं संविधास्यति अहं पृथक् ॥ ३२ ॥

गो० टी०-धाता विधाता सामान्यतो विशेषतश्च कर्ता ॥

गो० टी०-अपरमिति-काल एव सर्वसाधनम् । अयं तु कालातिरिक्तमपरं किं विधानं साधनसंपादनं कृत्वा कालजयं संविधास्यतीत्येवं कौतूहलसमुत्पन्नोऽहं यमस्य सदनं द्रष्टुं यास्यामि ॥ ३२--३३ ॥

इति श्रीगो० मणिमु० उत्तरश्री० विंशः सर्गः॥ २० ॥

३२ ] ति० टी०-इत्येवं कौतूहलं समुत्पन्नोऽहं यमसादनं द्रष्टुं यास्यामि ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे विंशः सर्गः ॥ २० ॥

रा० टी०--कौतूहलेति । कौतूहलसमुत्पन्नोहं यमराक्षसयोर्विमर्दं संग्रामं द्रष्टुं यास्यामि ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे विंशः सर्गः ॥ २० ॥

---

१ ] ति० टी०-एवमिति ॥ १ ॥

रा०टी०-नारदकर्तृकयमसदनगमनं वर्णयन्नाह-एवमिति। विप्रेन्द्रो नारदः यथावृत्तमाख्यातुं यमस्य सदनं प्रतिजगाम॥१॥

२-३ ] ति० टी०-अग्निः पुरस्कृतः सर्वसाक्षितया येन तम् यस्य प्राणिनो यादृशं विधानं पुण्यपापरूपं कर्म तादृशमनुतिष्ठन्तं तत्तदनुगुणफलं प्रयच्छन्तम् । यद्वा यस्य यादृशं विधानं निग्रहानुग्रहरूपं कृत्यमनुतिष्ठन्तमित्यर्थः ॥ २ ॥ ३ ॥

रा० टी०-अपश्यदिति । अग्निः पुरस्कृतः साक्षितया अग्रे स्थापितो येन तं प्राणिनो यस्य यादृशं विधानं कर्म तादृशमनुतिष्ठन्तं तदनुसारेण फलं प्रयच्छन्तमित्यर्थः यमं देवमपश्यत् ॥ २ ॥

रा०टी०-स इति । यमः महर्षिं प्राप्तं दृष्ट्वा धर्मतोऽर्घ्यमावेद्य अब्रवीत् ॥ ३ ॥

गो० टी०-अपश्यदिति । अग्निः पुरस्कृतः साक्षितया येनासौ अग्निपुरस्कृतः तम् । प्राणिनो विधानं निग्रहानुग्रहकृत्यमुपतिष्ठन्तमनुतिष्ठन्तम् ॥ २-४ ॥

४ ] ति० टी०-कच्चित्क्षेममित्यादि । लोके इति शेषः४

रा० टी०-तदाकारमाह—कच्चिदिति । आगमनस्य कृत्यं प्रयोजनं किम् ॥ ४ ॥

५-६ ] ति० टी०-विधानं च । मत्तः श्रुताया आपदः प्रतिक्रियां चेत्यर्थः ॥ ५ ॥ ६ ॥

रा० टी०--अब्रवीदिति । नारदोऽब्रवीत् तदाकारमाह-अहं अभिधास्यामि कथयिष्यामि त्वया श्रूयताम् ॥ ५ ॥

रा० टी०-अभिधानप्रकारमाह—एष इति द्वाभ्याम् । नाम्ना दशग्रीवः विक्रमैस्त्वां वशं नेतुमुपयाति दण्डः कालदण्डः प्रहरणं यस्य तस्य तव किन्नु जयः पराजयो वा भविष्यति एतेन कारणेनाहमागतः श्लोकद्वयमेकान्वयि ॥ ६ ॥ ७ ॥

गो० टी०-अब्रवीदिति । विधानं मत्तः श्रुतापदः प्रतिक्रियामित्यर्थः ॥ ५ ॥ ६ ॥

७ ] ति० टी०-दण्डः कालदण्डः प्रहरणं यस्य तव किंनु भविष्यति । जयः पराजयो वेत्यर्थः ॥ ७ ॥

गो० टी०-एतेनेति । दण्डः कालदण्डः प्रहरणमायुधं यस्य तस्य तव किन्नु भविष्यतीति । जयोऽपजयो वेत्यर्थः ॥७-११॥

---

१ कौतुहलसमुत्पन्न इति गो. रा. पाठः । २ उपेति गो. पाठः ।

एतस्मिन्नन्तरे दूरादंशुमन्तमिवोदितम् । ददृशुर्दीप्तमायान्तं विमानं तस्य रक्षसः ॥ ८ ॥
तं देशं प्रभया तस्य पुष्पकस्य महाबलः । कृत्वा वितिमिरं सर्वं समीपमभ्यवर्तत[1] ॥ ९ ॥
सोऽपश्यत्स महाबाहुर्दशग्रीवस्ततस्ततः । प्राणिनः सुकृतं चैवं भुञ्जानांश्चैव दुष्कृतम् ॥ १० ॥
अपश्यत्सैनिकांश्चास्य यमस्यानुचरैः सह । यमस्य पुरुषैरुग्रैर्घोररूपैर्भयानकैः ॥ ११ ॥
ददर्श वध्यमानांश्च क्लिश्यमानांश्च देहिनः । क्रोशतश्च महानादं तीव्रनिष्टनतत्परान् ॥ १२ ॥
कृमिभिर्भक्ष्यमाणांश्च सारमेयैश्च दारुणैः । श्रोत्रायासकरा वाचो वदतश्च भयावहाः ॥ १३ ॥
संतार्यमाणान्वैतरणीं बहुशः शोणितोदकाम् । वालुकासु च तप्तासु तप्यमानान्मुहुर्मुहुः ॥ १४ ॥
असिपत्रवने चैव भिद्यमानानधार्मिकान् । रौरवे क्षारनद्यां च क्षुरधारासु चैव हि ॥ १५ ॥
पानीयं याचमानांश्च तृषितान्क्षुधितानपि । शवभूतान्कृशान्दीनान्विवर्णान्मुक्तमूर्धजान् ॥ १६ ॥
मलपङ्कधरान्दीनान्रूक्षांश्च परिधावतः । ददर्श रावणो मार्गे शतशोऽथ सहस्रशः ॥ १७ ॥
कांश्चिच्च गृहमुख्येषु गीतवादित्रनिःस्वनैः । प्रमोदमानानद्राक्षीद्रावणः सुकृतैः स्वकैः ॥ १८ ॥
गोरसं गोप्रदातारो अन्नं[2] चैवान्नदायिनः । गृहांश्च गृहदातारः स्वकर्मफलमश्नतः ॥ १९ ॥
सुवर्णमणिमुक्ताभिः प्रमदाभिरलंकृतान् । धार्मिकानपरांस्तत्र दीप्यमानान्स्वतेजसा ॥ २० ॥
ददर्श स[3] महाबाहू रावणो राक्षसाधिपः । ततस्तान्भिद्यमानांश्च कर्मभिर्दुष्कृतैः स्वकैः[4] ॥ २१ ॥
रावणो मोचयामास विक्रमेण बलाद्बली । प्राणिनो मोक्षितास्तेन[5] दशग्रीवेण रक्षसा ॥ २२ ॥
सुखमापुर्मुहूर्तं ते ह्यतर्कितमचिन्तितम् । प्रेतेषु मुच्यमानेषु राक्षसेन महीयसा ॥ २३ ॥

८-११ ] ति० टी०—विमानशब्दः पुल्लिङ्गोऽपि ॥८-११॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये उदितमंशुमन्तमिव दीप्तमायान्तं तस्य रावणस्य विमानं ददृशुः॥८

रा० टी०—तमिति । पुष्पकस्य प्रभया तं देशं वितिमिरं कृत्वा समीपमभ्यवर्तत ॥ ९ ॥

रा० टी०—स इति । दशग्रीवः सुकृतं दुष्कृतं च भुंजानान् प्राणिनोऽपश्यत् ॥ १० ॥

रा० टी०—अपश्यदिति । अनुचरैस्सह यमस्य सैनिकान् अपश्यत् अर्द्धं पृथक् यमस्येति यमस्य पुरुषैर्वध्यमानान् देहिनोऽपश्यत् ॥ ११ ॥

१२-१३ ] ति० टी०—तीव्रनिष्टनो दुःखितशब्दस्तत्परान् ॥ १२ ॥ १३ ॥

१४-१८ ] ति० टी०—संतार्यमाणान्वैतरणीमित्यक्षराधिक्यमार्षम् ॥ १४-१८ ॥

रा० टी०—क्रोशत इति । कृमिभिः सारमेयैः श्वभिश्च भक्ष्यमाणान् अत एव महानादं यथा भवति तथा क्रोशतः अत एव तीव्रो यो निष्टनः देव यमराज रक्षेत्यादिशब्दः तत्परान् अत एव श्रोत्रायासकराः श्रवणदुःखोत्पादिकाः वाचो वदतः शोणितोदकां वैतरणीं सन्तार्यमाणाश्च तप्तासु वालुकासु तप्यमानांश्च असिपत्रवने भिद्यमानांश्च रौरवादौ पानीयं याचमानांश्च तृषितान् क्षुधितांश्च अत एव परिधावतः शतशः सहस्रशोऽधार्मिकान् रावणो मार्गे ददर्श सार्द्धश्लोकपञ्चकमेकान्वयि ॥ १२-१७ ॥

रा० टी०—कांश्चिदिति । स्वकैस्सुकृतैर्हेतुभिः गीतादिभिः प्रमोदमानान् कांश्चिद्रावणोऽद्राक्षीत् ॥ १८ ॥

गो० टी०—ददर्शेति । तीव्रो निष्टनः कृपशब्दः ॥१२-१३॥

गो० टी०—श्रोत्रेति । संतार्यमाणान् वैतरणीमिति संज्ञापदवशात् पादाक्षराधिक्यम् ॥ १४-१६ ॥

१९-२० ] ति० टी०—गृहदातारो गृहदातृन् । अश्नत उपभुञ्जानान् ॥ १९-२० ॥

रा० टी०—गोरसमिति । गोरसादिस्वकर्मफलमश्नतो गोप्रदात्रादीन् सुवर्णादिभिरलंकृतांश्च अपरान् धार्मिकान् रावणो ददर्श सार्द्धश्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

२१-२२ ] ति० टी०—भिद्यमानान्पीड्यमानान् । 'वध्यमानान्' इति पाठान्तरम् ॥ २१ ॥ २२ ॥

रा० टी०—तत इति । रावणो दुष्कृतैः कर्मभिर्भिद्यमानान् नानायातनाः प्राप्नुवतोऽधार्मिकान् विक्रमेण शीघ्रगमनेन बलात् मोचयामास ॥ २१ ॥

रा० टी०—प्राणिन इति । दशग्रीवेण मोक्षिताः प्राणिनः अतर्कितं सुखं मुहूर्तमापुः ॥ २२ ॥

२३ ] ति० टी०—अचिन्तितमित्यतर्कितमित्यस्यैव विवरणम् ॥ २३ ॥

रा० टी०—प्रेतेष्विति । प्रेतेषु मुच्यमानेषु सत्सु प्रेतगोपाः राक्षसेन्द्रमभिद्रवन् ॥ २३ ॥

१ सोऽभ्यवर्ततेति गो. पाठः । २ कर्मेति गो. पाठः । ३ सन्नमिति गो. पाठः । ४ स्विति गो. पाठः । ५ मोचिता इति गो. पाठः ।

प्रेतगोपाः सुसंक्रुद्धा राक्षसेन्द्रमभिद्रवन् । ततो हलहलाशब्दः सर्वदिग्भ्यः समुत्थितः ॥
धर्मराजस्य योधानां शूराणां संप्रधावताम् ॥ ॥ २४ ॥
ते प्रासैः परिघैः शूलैर्मुसलैः शक्तितोमरैः । पुष्पकं समवर्षन्त शूराः शतसहस्रशः ॥ २५ ॥
तस्यासनानि प्रासादान्वेदिकास्तोरणानि च । पुष्पकस्य बभञ्जुस्ते शीघ्रं मधुकरा इव ॥ २६ ॥
देवनिष्ठानभूतं तद्विमानं पुष्पकं मृधे । भज्यमानं तथैवासीदक्षयं ब्रह्मतेजसा ॥ २७ ॥
असंख्या सुमहत्यासीत्तस्य सेना महात्मनः । शूराणामग्रयातॄणां सहस्राणि शतानि च ॥ २८ ॥
ततो वृक्षैश्च शैलैश्च प्रासादानां शतैस्तथा । ततस्ते सचिवास्तस्य यथाकामं यथाबलम् ॥ २९ ॥
अयुध्यन्त महावीराः स च राजा दशाननः । ते तु शोणितदिग्धाङ्गाः सर्वशस्त्रसमाहताः ॥ ३० ॥
अमात्या राक्षसेन्द्रस्य चक्रुरायोधनं महत् । अन्योन्यं ते महाभागा जघ्नुः प्रहरणैर्भृशम् ॥ ३१ ॥
यमस्य च महाबाहो रावणस्य च मन्त्रिणः । अमात्यांस्तांस्तु संत्यज्य यमयोधा महाबलाः ॥ ३२ ॥
तमेव चाभ्यधावन्त शूलवर्षैर्दशाननम् । ततः शोणितदिग्धाङ्गः प्रहारैर्जर्जरीकृतः ॥
फुल्लाशोक इवाभाति पुष्पके राक्षसाधिपः । ॥ ३३ ॥
स तु शूलगदाप्रासाञ्छक्तितोमरसायकान् । मुमोच च शिलावृक्षान्मुमोचास्त्रबलाद्बली ॥ ३४ ॥
तरूणां च शिलानां च शस्त्राणां चातिदारुणम् । यमसैन्येषु तद्वर्षं पपात धरणीतले ॥ ३५ ॥
तांस्तु सर्वान्विनिर्भिद्य तदस्त्रमपहत्य च । जघ्नुस्ते राक्षसं घोरमेकं शतसहस्रशः ॥ ३६ ॥

२४-२६ ] ति० टी०-प्रेतगोपाः प्रेतरक्षकाः ॥२४-२६

रा० टी०-तत इति । धर्मराजस्य योधानां सम्प्रधावतां सतां हलहलाशब्दः सर्वदिग्भ्यस्समुत्थितः ॥ २४ ॥

रा० टी०-ते इति । शतसहस्रशः ते यमदूताः पुष्पकं समवर्षन्त ॥ २५ ॥

रा० टी०-तस्येति । पुष्पकस्य आसनादीन् ते यमदूता बभञ्जुः ॥ २६ ॥

२७ ] ति० टी०-देवनिष्ठानभूतं देवाधिष्ठानभूतं भज्यमानमपि तथैवासीदभग्नमासीत् ॥ २७ ॥

रा० टी०-देवेति । देवनिष्ठानभूतं देवादीनामधिष्ठानत्वं प्राप्तं ब्रह्म विभु तेजसोपलक्षितमक्षयमपि पुष्पकं भज्यमानमासीत् ॥ २७ ॥

२८-३० ] ति० टी०-तस्य यमस्य ॥ २८-३० ॥

रा० टी०-असंख्येति । यस्य अग्रयातॄणां शूराणां शतानि सहस्राणि अभवन्निति शेषः तस्य यमस्य सेना सुमहती अत एव असंख्या संख्यातुमशक्या आसीत् ॥ २८ ॥

रा० टी०-तत इति । तस्य दशाननस्य ततो युद्धविस्तारकर्त्तारः सचिवाः दशाननश्च वृक्षादिभिः यथाबलमयुध्यन्त सार्धश्लोक एकान्वयी ॥ २९ ॥

रा० टी०-ते इति । सर्वशस्त्रैस्समाहताः अत एव शोणितदिग्धाङ्गा अपि राक्षसेन्द्रस्यामात्याः महदायोधनं चक्रुः॥३०॥

३१-३३ ] ति० टी०-आयोधनं युद्धम् ॥ ३१-३३ ॥

रा० टी०-अन्योन्यमिति । यमस्य रावणस्य च मन्त्रिणोऽन्योन्यं जघ्नुः ॥ ३१ ॥

रा० टी०-अमात्यानिति । यमयोधाः अमात्यान् संत्यज्य दशाननमेवाभ्यधावन्त ॥ ३२ ॥

रा० टी०-तत इति । शोणितदिग्धाङ्गो राक्षसाधिपः फुल्लाशोक इवाभाति ॥ ३३ ॥

३४ ] ति० टी०-स रावणोऽस्त्रबलादस्त्रसामर्थ्याच्छूलादीन्मुमोच ॥ ३४ ॥

रा० टी०-स इति । स रावणः शूलादीन् मुमोच शिलावृक्षांश्च मुमोच ॥ ३४ ॥

३५ ] ति० टी०-तद्वर्षं रावणविसृष्टशस्त्रवर्षं यमसैन्येषु पतित्वा धरणीतले पपात ॥ ३५ ॥

रा० टी०-तरूणामिति । तरुप्रभृतीनां तद्वर्षं धरणीतले विद्यमानेषु यमसैन्येषु पपात ॥ ३५ ॥

३६ ] ति० टी०-ताञ्शूलगदाप्रासादीन्निर्भिद्य भङ्क्त्वा । तदस्त्रं रावणप्रयुक्तं शस्त्रवर्षकरमस्त्रमपहत्य निरस्य ॥ ३६ ॥

रा० टी०-तानिति । शतसहस्रशस्ते यमदूताः तान् यमसैन्यवर्तिनो विनिर्भिद्य तदस्त्रमपहत्य संछिद्य एकं राक्षसं रावणं जघ्नुः ॥ ३६ ॥

गो० टी०-तानिति । तदस्त्रं रावणप्रयुक्तं प्रागुक्तशस्त्रवर्षसाधकमपहत्य निरस्य ॥ ३७-४३ ॥

१ समवर्षन्तेति गो. पाठः । २ मुसलानीति गो. पा. ।

परिवार्य च तं सर्वे शैलं मेघोत्करा इव । भिन्दिपालैश्च शूलैश्च निरुच्छ्वासमपोथयन् ॥ ३७ ॥
विमुक्तकवचः क्रुद्धः सिक्तैः[1] शोणितविस्रवैः । ततः स पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत ॥ ३८ ॥
ततः स कार्मुकी बाणी समरे चाभिवर्धत । लब्धसंज्ञो मुहूर्तेन क्रुद्धस्तस्थौ यथान्तकः ॥ ३९ ॥
ततः पाशुपतं दिव्यमस्त्रं संधाय कार्मुके । तिष्ठ तिष्ठेति तानुक्त्वा तच्चापं व्यपकर्षत ॥ ४० ॥
आकर्णात्स विकृष्याथ चापमिन्द्रारिराहवे[2] । मुमोच तं शरं क्रुद्धस्त्रिपुरे शंकरो यथा ॥ ४१ ॥
तस्य रूपं शरस्यासीत्सधूमज्वालमण्डलम् । वनं दहिष्यतो घर्मे दावाग्नेरिव मूर्च्छतः ॥ ४२ ॥
ज्वालामाली स तु शरः क्रव्यादानुगतो रणे[3] । मुक्तो गुल्मान्द्रुमांश्चापि भस्म कृत्वा प्रधावति ॥ ४३ ॥
ते तस्य तेजसा दग्धाः सैन्या वैवस्वतस्य तु । वैले तस्मिन्निपतिता माहेन्द्रा इव केतवः ॥ ४४ ॥
ततस्तु सचिवैः सार्धं राक्षसो भीमविक्रमः । ननाद सुमहानादं कम्पयन्निव मेदिनीम् ॥ ४५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

## द्वाविंशः सर्गः ।

ततो यमरावणयोर्यदा चिरं युद्धं प्रवृत्तमपि स यमस्याजय्यो दृष्टस्तदा तं जिघांसुः शमनो बद्धपरिकरः प्रजापतिना मत्तोऽयं लब्धवरो देवादिभिरबाध्य इत्यतो न हन्तव्य इति निवारितः सद्योऽन्तर्हितो नारदश्च हृष्टो दिवं गतः ।

स तस्य तु महानादं श्रुत्वा वैवस्वतः प्रभुः । शत्रुं विजयिनं मेने स्वबलस्य च संक्षयम् ॥ १ ॥
स हि योधान्हतान्मत्वा क्रोधसंरक्तलोचनः । अब्रवीत्त्वरितः सूतं रथो मे उपनीयताम् ॥ २ ॥
तस्य सूतस्तदा दिव्यमुपस्थाप्य महारथम् । स्थितः स च महातेजा अध्यारोहत[4] तं रथम् ॥ ३ ॥

---

३७-४५ ] ति० टी०—निरुच्छ्वासं यथा भवति तथा रावणं शस्त्रैरपोथयन् ॥ ३७-४५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

रा० टी०—परिवार्येति । तं रावणं सर्वे यमदूताः भिण्डिपालादिभिः निरुच्छ्वासं यथा भवति तथा अपोथयन् ३७

रा० टी०—विमुक्तेति । विमुक्तकवचः छिन्नवर्मा अत एव क्रुद्धो रावणः पुष्पकं त्यक्त्वा पृथिव्यामवतिष्ठत अवातिष्ठत ३८

रा० टी०—तत इति । मुहूर्तेन लब्धसञ्ज्ञो रावणः कार्मुकादिविशिष्टस्सन् अभिवर्धत उत्साहवानभवदित्यर्थः अत एव तस्थौ ॥ ३९ ॥

रा० टी०—तत इति । पाशुपतमस्त्रं कार्मुके सन्धाय तिष्ठ तिष्ठेति तान् यमदूतानुक्त्वा चापं व्यपकर्षत ॥ ४० ॥

रा० टी०—आकर्णादिति । आकर्णात् कर्णपर्यन्तं चापं विकृष्य शरं मुमोच ॥ ४१ ॥

रा० टी०—तस्येति । घर्मे वनं दहिष्यतः मूर्छतो दावाग्नेस्सधूमज्वालमण्डलमिव शरस्य रूपमासीत् ॥ ४२ ॥

रा० टी०—ज्वालेति । क्रव्यादैरनुगतः ज्वालामाली ज्वालासमूहवान् मुक्तश्शरो गुल्मादीन् भस्म कृत्वा प्रधावति ४३

रा० टी०—ते इति । तस्य रावणशरस्य तेजसा दग्धाः वैवस्वतस्य सैन्याः माहेन्द्राः केतव इव बले निपतिताः ॥४४॥

रा० टी०—तत इति । राक्षसः मेदिनीं कम्पयन्निव सुमहानादं यथा भवति तथा ननाद ॥ ४५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकविंशः सर्गः ॥ २१ ॥

गो० टी०—ज्वालामालीति । क्रव्यादैः स्वसृष्टैरनुगतस्तथा ॥ ४४-४६ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकविंशः सर्गः ॥ २१ ॥

१ ] ति० टी०—स तस्येति ॥ १ ॥

रा० टी०—रावणकृतनादानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । वैवस्वतः तस्य रावणस्य नादं श्रुत्वा शत्रुं विजयिनं स्वबलस्य संक्षयं च मेने ॥ १ ॥

गो० टी०—स तस्य त्वित्यादि ॥ १ ॥

२-३ ] ति० टी०—उपनीयतामित्यब्रवीदित्यन्वयः ॥२॥३

रा० टी०—स इति । स यमः योधान् हतान् मत्वा मे रथः उपनीयतामिति सूतमब्रवीत् ॥ २ ॥

रा० टी०—तस्येति । तस्य सूतः महारथमुपस्थाप्य स्थितोऽभवदिति शेषः स यमस्तु रथमध्यारोहत ॥ ३ ॥

गो० टी०—स हीति । उपनीयतामित्यब्रवीदित्यन्वयः ॥ २ ॥ ३ ॥

---

१ सिक्त इति गो. रा. पा. । २ विचकर्ष स इति गो. पा. । ३ रणे इति गो. पा. । ४ ह्यध्यारोहतेति गो. पा. ।

प्रासमुद्गरहस्तश्च मृत्युस्तस्याग्रतः स्थितः । येन संक्षिप्यते सर्वं त्रैलोक्यमिदमव्ययम् ॥ ४ ॥
कालदण्डस्तु पार्श्वस्थो मूर्तिमानस्य चाभवत् । यमप्रहरणं दिव्यं तेजसा ज्वलदग्निवत् ॥ ५ ॥
(तस्य पार्श्वेषु निच्छिद्राः कालपाशाः प्रतिष्ठिताः । पावकस्पर्शसंकाशः स्थितो मूर्तश्च मुद्गरः ) ॥
ततो लोकत्रयं क्षुब्धमकम्पन्त दिवौकसः । कालं दृष्ट्वा तथा क्रुद्धं सर्वलोकभयावहम् ॥ ६ ॥
ततस्त्वचोदयत्सूतस्तानश्वान्रुचिरप्रभान् । प्रययौ भीमसंनादो यत्र रक्षःपतिः स्थितः ॥ ७ ॥
मुहूर्तेन यमं ते तु हया हरिहयोपमाः । प्रापयन्मनसस्तुल्या यत्र तत्प्रस्तुतं रणम् ॥ ८ ॥
दृष्ट्वा तथैव विकृतं रथं मृत्युसमन्वितम् । सचिवा राक्षसेन्द्रस्य सहसा विप्रदुद्रुवुः ॥ ९ ॥
लघुसत्त्वतया ते हि नष्टसंज्ञा भयार्दिताः । नेह युद्धं समर्थाः स्म इत्युक्त्वा प्रययुर्दिशः ॥ १० ॥
स तु तं तादृशं दृष्ट्वा रथं लोकभयावहम् । नाक्षुभ्यत दशग्रीवो न चापि भयमाविशत् ॥ ११ ॥
स तु रावणमासाद्य व्यसृजच्छक्तितोमरान् । यमो मर्माणि संक्रुद्धो रावणस्य न्यकृन्तत ॥ १२ ॥
रावणस्तु ततः स्वस्थः शरवर्षं मुमोच ह । तस्मिन्वैवस्वतरथे तोयवर्षमिवाम्बुदः ॥ १३ ॥
ततो महाशक्तिशतैः पात्यमानैर्महोरसि । नाशक्नोत्प्रतिकर्तुं स राक्षसः स्वल्पपीडितः ॥ १४ ॥
एवं नानाप्रहरणैर्यमेनामित्रकर्षिणा । सप्तरात्रं कृतः संख्ये विसंज्ञो विमुखो रिपुः ॥ १५ ॥
तदासीत्तुमुलं युद्धं यमराक्षसयोर्द्वयोः । जयमाकाङ्क्षतोर्वीर समरेष्वनिवर्तिनोः ॥ १६ ॥

४–७ ] ति० टी०–तस्य यमस्य । येन मृत्युना युगान्ते सर्वं जगत्संक्षिप्यते । संह्रियत इत्यर्थः । अव्ययं प्रवाहनित्यम् ॥ ४–७ ॥

रा० टी०–प्रासेति । येन त्रैलोक्यं संक्षिप्यते विनाश्यते स मृत्युः प्रासादिहस्तस्सन् तस्य यमस्याग्रतः स्थितो बभूवेति शेषः एतेन मृत्योर्यमानुचरत्वं सूचितम् ॥ ४ ॥

गो० टी०–येनेति । येन मृत्युना । युगान्ते सर्वं सकृदेव संह्रियत इत्यर्थः । अव्ययं प्रवाहनित्यम् ॥ ४ ॥

रा० टी०–कालेति । यमप्रहरणं कालदण्डो मूर्तिमान्सन् पार्श्वस्थोऽभवत् ॥ ५ ॥

रा० टी०–तत इति । कालं क्रुद्धं दृष्ट्वा लोकत्रयं क्षुब्धमत एव दिवौकसः अकम्पन्त ॥ ६ ॥

गो० टी०–तस्येति । निश्छिद्राः निरन्तराः ॥ ६–७ ॥

रा० टी०–तत इति । सूतोऽश्वानचोदयत् अत एव यत्र रक्षःपतिः रावणः स्थितः तत्र प्रययौ ॥ ७ ॥

गो० टी०–तत इति । ततः प्रचोदयन् सूतस्तान् हयान्रुधिरप्रभानित्यत्र चो इति गायत्री ॥ ८ ॥

८ ] ति० टी०–मनसस्तुल्या मनःसमानवेगाः । प्रस्तुतं प्रारब्धम् ॥ ८ ॥

रा० टी०–मुहूर्तेनेति । यत्र रणं प्रस्तुतं प्रवृत्तं तत्र मुहूर्तेन हयाः प्रापयन् ॥ ८ ॥

गो०टी०–मुहूर्तेनेति । मनस्तुल्याः मनस्तुल्यवेगा इत्यर्थः ९

९ ] ति० टी०–विकृतं घोरं विकृतसंनाहं च ॥ ९ ॥

रा० टी०–दृष्ट्वेति । मृत्युना समन्वितमत एव विकृतं घोरं रथं दृष्ट्वा राक्षसेन्द्रस्य सचिवाः विप्रदुद्रुवुः ॥ ९ ॥

गो०टी०–दृष्ट्वेति । विकृतं घोरसन्नाहरूपविकारवन्तम् १०

१०–१४ ] ति० टी०–लघुसत्त्वतयाल्पबलतया १०–१४

रा० टी०–तदेव सहेतुकमाह—लघुसत्वेति । लघुसत्वतया मृत्यूपेक्षयानुमितस्वाल्पबलेन हेतुना भयार्दिताः अत एव नष्टसंज्ञाः रावणस्य सचिवाः वयं न योद्धुं समर्थाः स्म इत्युक्त्वा प्रययुः ॥ १० ॥

रा० टी०–स इति । दशग्रीवः तादृशं मृत्युसहितमतः सर्वलोकभयावहं तं यमं दृष्ट्वा नाक्षुभ्यत् भयं नाविशत् प्राप्नोच्च ११

रा० टी०–स इति । यमः रावणमासाद्य शक्तितोमरान् व्यसृजत् अत एव रावणस्य मर्माणि न्यकृन्तत ॥ १२ ॥

रा० टी०–रावण इति । रावणः वैवस्वते रथे शरवर्षं मुमोच ॥ १३ ॥

रा० टी०–तत इति । शल्यपीडितो राक्षसः महोरसि पात्यमानैः महाशक्तिशतैः प्रतिकर्तुं नाशक्नोत् ॥ १४ ॥

गो०टी०–लघ्विति । लघुसत्त्वतया अल्पवीर्यतया ११-२५

१५–१६ ] ति० टी०–सप्तरात्रम् । युद्धं कृत्वेति शेषः ॥ १५ ॥ १६ ॥

रा० टी०–एवमिति । अमित्रकर्शिना यमेन रिपुः रावणः सप्तरात्रं विसंज्ञो विमुखश्चाभवत् ॥ १५ ॥

१ मदिति गो. पा. । २ पद्यमिदमधिकं गो. पु. । ३ प्रेति गो. पाठः । ४ योद्धुमिति गो. पा. । ५ उपेति गो. पा. । ६ शौरिरिति गो. पा. । ७ शल्येति गो. रा. पा. ।

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः । प्रजापतिं पुरस्कृत्य समेतास्तद्रणाजिरे[1] ॥ १७ ॥
संवर्त इव लोकानां युध्यतोरभवत्तदा । राक्षसानां च मुख्यस्य प्रेतानामीश्वरस्य च ॥ १८ ॥
राक्षसेन्द्रोऽपि विस्फार्य चापमिन्द्राशनिप्रभम् । निरन्तरमिवाकाशं कुर्वन्बाणांस्ततोऽसृजत् ॥ १९ ॥
मृत्युं चतुर्भिर्विशिखैः सूतं सप्तभिरार्दयत् । यमं शतसहस्रेण शीघ्रं मर्मस्वताडयत् ॥ २० ॥
ततः क्रुद्धस्य वदनाद्यमस्य समजायत । ज्वालामाली सनिःश्वासः सधूमः कोपपावकः ॥२१॥
तदाश्चर्यमथो दृष्ट्वा देवदानवसंनिधौ । प्रहर्षितौ सुसंरब्धौ मृत्युकालौ बभूवतुः ॥ २२ ॥
ततो मृत्युः क्रुद्धतरो वैवस्वतमभाषत । मुञ्च मां समरे यावद्धन्मीमं पापराक्षसम् ॥ २३ ॥
नैषा रक्षो भवेदद्य मर्यादा हि निसर्गतः । हिरण्यकशिपुः श्रीमान्नमुचिः शम्बरस्तथा ॥ २४ ॥
निसैन्दिर्धूमकेतुश्च बलिर्वैरोचनोऽपि च । शंभुर्दैत्यो महाराजो वृत्रो बाणस्तथैव च ॥ २५ ॥
राजर्षयः शास्त्रविदो गन्धर्वाः समहोरगाः । ऋषयः पन्नगा दैत्या यक्षाश्च ह्यप्सरोगणाः ॥ २६ ॥
युगान्तपरिवर्ते च पृथिवी समहार्णवा । क्षयं नीता महाराज सपर्वतसरिद्द्रुमा ॥ २७ ॥
एते चान्ये च बहवो बलवन्तो दुरासदाः । विनिपन्ना मया दृष्टाः किमुतायं निशाचरः ॥ २८ ॥
मुञ्च मां साधु धर्मज्ञ यावदेनं निहन्म्यहम् । नहि कश्चिन्मया दृष्टो बलवानपि जीवति ॥ २९ ॥
बलं मम न खल्वेतन्मर्यादैषा निसर्गतः । स दृष्टो न मया काल मुहूर्तमपि जीवति ॥ ३० ॥

रा० टी०–तदेति । तदा सञ्ज्ञाप्राप्तिकाले यमराक्षसयोस्तुमुलं युद्धमासीत् ॥ १६ ॥

१७–२० ] ति० टी०–समेताः प्राप्ताः ॥ १७–२० ॥

रा० टी०–तत इति । गंधर्वादयः प्रजापतिं पुरस्कृत्य रणाजिरं समेता बभूवुरिति शेषः ॥ १७ ॥

रा० टी०–संवर्त इति । राक्षसानां मुख्यस्य रावणस्य प्रेतानामीश्वरस्य यमस्य च युध्यतोः सतोः लोकानां संवर्तः प्रलयकाल इवाभवत् ॥ १८ ॥

रा० टी०–राक्षसेन्द्र इति । राक्षसेन्द्रोपि चापं विस्फार्य आकाशं निरन्तरं कुर्वन्निव बाणानसृजत् ॥ १९ ॥

रा० टी०–मृत्युमिति । चतुर्भिर्विशिखैः मृत्युं सप्तभिस्सूतं चार्दयत् शतसहस्रेण यममताडयत् ॥ २० ॥

२१ ] ति० टी०–ततः क्रुद्धस्येत्यनेनैतावत्पर्यंतं भगवान्यमो ब्रह्मवरदानं स्मृत्वा मारणबुद्धिं विहाय युद्धमात्रं कृतवानिति सूचितम् ॥ २१ ॥

रा० टी०–तत इति । धूमो ज्वालामाली निःश्वासः कोपपावकः यमस्य वदनात्समजायत ॥ २१ ॥

२२ ] ति० टी०–प्रहर्षितौ । युद्धायेति शेषः । सुसंरब्धावतिक्रुद्धौ ॥ २२ ॥

रा० टी०–तदिति । तन्मुखात्पावकनिस्सरणरूपमाश्चर्यं दृष्ट्वा मृत्युकालौ प्रहर्षितौ बभूवतुः ॥ २२ ॥

२३ ] ति० टी०–मुञ्च । आज्ञापयेत्यर्थः ॥ २३ ॥

रा० टी०–तत इति । मृत्युः वैवस्वतमभाषत तदाकारमाह यावत्पापराक्षसं हन्मि तावन्मां समरे मुञ्च ॥ २३ ॥

२४ ] ति० टी०–निसर्गतः स्वभावसिद्धा ह्येषा दृष्टा मयैतद्रक्षो न भवेन्न जीवेदित्येवंरूपा मर्यादा ममेत्यर्थः । तदेवाह—हिरण्येति ॥ २४ ॥

२५–२७ ] ति० टी०–शंभुः कुशध्वजब्रह्मर्षिहन्ता दैत्यः ॥ २५–२७ ॥

रा० टी०–नेति । रक्षो न भवेत् विनङ्क्ष्यतीत्यर्थः निसर्गतः स्वभावतः एषा मर्यादा मत्कृतनियमः अर्थं पृथक् ननु रावणस्यातिप्रबलत्वे कथं तद्विघातो भविष्यतीत्यत आह—हिरण्येति । हिरण्यकशिपुप्रभृतयः पृथिवी च युगानामन्तपरिवर्तौ यस्मात् तस्मिन्मयि सति क्षयं नीताः सार्धश्लोकत्रयमेकान्वयि ॥ २४–२७ ॥

गो० टी०–हिरण्यकशिपुरित्यादि । दम्भुर्नाम कश्चिदसुरः । विनिपन्नाः विनाशं प्राप्ताः । दृष्टाः दृष्टमात्राः ॥२५–२९॥

२८ ] ति० टी०–विनिपन्नाः विनिपातं विनाशं प्राप्ताः । दृष्टाः दृष्टमात्रा एव ॥ २८ ॥

रा० टी०–एत इति । एते अन्ये च विनिपन्ना मृताः मया दृष्टाः अयं निशाचरः किमुत ॥ २८ ॥

२९ ] ति० टी०–यावन्निहन्मि । हनिष्यामीत्यर्थः ॥२९॥

रा० टी०–मुञ्चेति । बलवानपि जीवति नित्यं प्राणधारणं करोतीति कश्चिन्मया न दृष्टः अतो मां मुञ्च ॥ २९ ॥

गो० टी०–मुञ्चेति । यावन्निहन्मि निहनिष्यामीत्यर्थः । यावद्योगे भविष्यदर्थे लट् ॥ ३० ॥

३० ] ति० टी०–एतन्मया दृष्टो मुहूर्तमपि न जीवतीति मम वचनं बलं बलप्रकाशनमात्रपरं न खलु । यतो निसर्गतोऽनादिसृष्टिस्वभावेनैषा मम दृष्टिरेव प्राणिनां जीवितस्य मर्यादा । यदेवमतः—स दृष्ट इति । संहारचक्षुषा दृष्ट इत्यर्थः ३०

१ अजिरमिति गो. रा. पा. । २ क्रुध्यतोरिति गो.पा. । ३ विसंधिरिति गो. पा. । ४ दम्भुरिति गो. पा. । ५ अपीनि गो. पा. ।

तस्यैवं वचनं श्रुत्वा धर्मराजः प्रतापवान् । अब्रवीत्तत्र तं मृत्युं त्वं तिष्ठैनं निहन्म्यहम् ॥ ३१ ॥
ततः संरक्तनयनः क्रुद्धो वैवस्वतः प्रभुः । कालदण्डममोघं तु तोलयामास पाणिना ॥ ३२ ॥
यस्य पार्श्वेषु निहिताः कालपाशाः प्रतिष्ठिताः । पावकाशनिसंकाशो मुद्गरो मूर्तिमान्स्थितः ॥ ३३ ॥
दर्शनादेव यः प्राणान्प्राणिनामपि कर्षति । किं पुनः स्पृशमानस्य पात्यमानस्य वा पुनः ॥ ३४ ॥
स ज्वालापरिवारस्तु निर्दहन्निव राक्षसम् । तेन स्पृष्टो बलवता महाप्रहरणोऽस्फुरत् ॥ ३५ ॥
ततो विदुद्रुवुः सर्वे तस्मात्त्रस्ता रणाजिरे । सुराश्च क्षुभिताः सर्वे दृष्ट्वा दण्डोद्यतं यमम् ॥ ३६ ॥
तस्मिन्प्रहर्तुकामे तु यमे दण्डेन रावणम् । यमं पितामहः साक्षाद्दर्शयित्वेदमब्रवीत् ॥ ३७ ॥
वैवस्वत महाबाहो न खल्वमितविक्रम । न हन्तव्यस्त्वयैतेन दण्डेनैष निशाचरः ॥ ३८ ॥
वरः खलु मयैतस्मै दत्तस्त्रिदशपुंगव । स त्वया नानृतः कार्यो यन्मया व्याहृतं वचः ॥ ३९ ॥
यो हि मामनृतं कुर्याद्देवो वा मानुषोऽपि वा । त्रैलोक्यमनृतं तेन कृतं स्यान्नात्र संशयः ॥ ४० ॥
क्रुद्धेन विप्रमुक्तोऽयं निर्विशेषं प्रियाप्रिये । प्रजाः संहरते रौद्रो लोकत्रयभयावहः ॥ ४१ ॥

रा० टी०—बलमिति । एतद्विनशनं मम बलमेव न किन्तु एषा जन्ममरणरूपामर्यादा निसर्गतः स्वभावतः अतो यो मुहूर्तमपि जीवति मद्व्यापारे सतीति शेषः स मया न दृष्टः॥३०॥

गो० टी०—बलमिति । मया दृष्टो मुहूर्तमपि न जीवतीत्येतत् मद्वचनं बलं न खलु बलप्रकाशनं न भवति । किन्तु निसर्गतः स्वभावतः सिद्धा मर्यादा एषा । अनादिसृष्टिरेवंविधेत्यर्थः। उक्तमर्थमुपसंहरति स दृष्ट इति ॥ ३१ ॥

३१-३२ ] ति० टी०—तं मृत्युम् । एनमयमहं निहन्मीत्यन्वयः ॥ ३१ ॥ ३२ ॥

३३-३५ ] ति० टी०—मूर्तिमान्स्थितः । यस्य पार्श्वे इत्यद्धषट्कः ॥ ३३-३५ ॥

रा० टी०—तस्येति । त्वं तिष्ठ अहमेव निहन्मि इति वचनं धर्मराजो मृत्युमब्रवीत् ॥ ३१ ॥

रा० टी०—तत इति । वैवस्वताः यस्य पार्श्वे कालपाशाः सनिहिता मुद्गरश्च स्थितः यो दर्शनादेव प्राणिनां प्राणानपकर्षति स्पृश्यमानस्य पात्यमानस्य वापकर्षतीति किं वक्तव्यं तं कालदंडं पाणिना तोलयामास उत्थाप्य जग्राहेत्यर्थः श्लोकत्रयमेकान्वयि ॥ ३२-३४ ॥

रा० टी०—स इति । ज्वालैव परिवारो यस्य सः तेन यमेन स्पृष्टः महाप्रहरणः स कालदण्डो राक्षसं निर्दहन्निवास्फुरत् ॥ ३५ ॥

गो० टी०—तस्येति । अयमेनं निहन्म्यहम् अहमेनमयं निहन्मि । अविलम्बेन हन्मीत्यर्थः ॥ ३२-४० ॥

३६ ] ति० टी०—तस्मात्कालदण्डात्त्रस्तास्तत्र रणाजिरे वर्तमानाः सर्वे प्राणिनो विदुद्रुवुः । दण्डोद्यतमुद्यतदण्डम्॥३६॥

रा० टी०—तत इति । ततः तस्माद्दण्डात् त्रस्ताः सर्वे राक्षसा विदुद्रुवुः सुरा अपि दण्डोद्यतं यमं दृष्ट्वा क्षुभिताः३६

३७ ] ति० टी०—पितामहो यमं साक्षाद्दर्शयित्वा स्वदिव्यमूर्त्या प्रत्यक्षो भूत्वा ॥ ३७ ॥

रा० टी०—तस्मिन्निति । दण्डेन यमे रावणं प्रहर्तुकामे सति पितामहो यमं दर्शयित्वा आत्मानमिति शेषः इदमब्रवीत् ॥ ३७ ॥

३८ ] ति० टी०—नञ्द्वयेन न हन्तव्यो न हन्तव्य इत्यावृत्तिः ॥ ३८ ॥

रा० टी०—तदाकारमाह—वैवस्वतेति । हे न पापिबन्धक नः पुमान्सुगते बन्धे इति मेदिनी किंच हे अन सर्वशुद्धिकर्तृत्वेन सर्वरक्षक हे वैवस्वत एतेन दण्डेन एष निशाचरः त्वया न हन्तव्यः ॥ ३८ ॥

३९ ] ति० टी०—वरो देवगणावध्यत्वरूपः ॥ ३९ ॥

रा० टी०—तत्र हेतुमाह—वर इति । अस्मै मया वरो देवादीनामवध्यत्वं दत्तः स वरः त्वया अनृतो न कार्यः अत एव यत् सुप्रयत्नं वचो मया व्याहृतम् ॥ ३९ ॥

४० ] ति० टी०—अनृतमनृतवचनं कुर्यात् । मदाज्ञामुल्लङ्घ्येति शेषः । त्रैलोक्यमिति । सर्वसमष्टित्वान्ममेति भावः ॥ ४० ॥

रा० टी०—अनृतकरणे दोषमाह—य इति । यो मामनृतं कुर्यात् तेन त्रैलोक्यमनृतं स्यात् ॥ ४० ॥

गो० टी०—यो हीति । अनृतमसत्यवादिनं कुर्यात् । मृत्युपुरस्कृतः मृत्युना पुरस्कृतः । बहुव्रीहिश्च ॥ ४१-४४ ॥

४१ ] ति० टी०—ननु त्वद्दत्तवरतया तव प्रियो यदि रावणस्तर्हि मुक्तोऽपि कालदण्डः किं कुर्यात्तत्राह—क्रुद्धेनेति। प्रियाप्रिये । समाहारद्वन्द्वः । मत्प्रियाप्रियप्राणिविषये क्रुद्धेन त्वयायं विप्रमुक्तः स्वविषयभूतास्ताः सर्वाः प्रजा निर्विशेषं यथा भवति तथा संहरत एव ॥ ४१ ॥

रा० टी०—ननु भवद्वरप्रदानप्रभावादेवायं रावणं न प्रहरिष्यतीत्यत आह—क्रुद्धेनेति । क्रुद्धेन त्वया विप्रमुक्तोयं दण्डः प्रियाप्रिये निर्विशेषं यथा भवति तथा प्रजाः संहरते संहरिष्यति ॥ ४१ ॥

१ सुनिहिता इति रा. निखिला इति गो. पा. । २ अयेनि गो. रा. पा. । ३ स्पृश्येति गो. रा. पा. । ४ त्वया नैनेति गो. पा. ।

अमोघो ह्येष सर्वेषां प्राणिनाममितप्रभः । कालदण्डो मया सृष्टः सर्वे मृत्युपुरस्कृतः ॥ ४२ ॥
तन्न खल्वेष ते सौम्य पात्यो रावणमूर्धनि । नह्यस्मिन्पतिते कश्चिन्मुहूर्तमपि जीवति ॥ ४३ ॥
यदि ह्यस्मिन्निपतिते न म्रियेतैष राक्षसः । म्रियते वा दशग्रीवस्तदाप्युभयतोऽनृतम् ॥ ४४ ॥
तन्निवर्तय लङ्केशाद्दण्डमेतं समुद्यतम् । सत्यं च मां कुरुष्वाद्य लोकांस्त्वं यद्यवेक्षसे॥४५॥
एवमुक्तस्तु धर्मात्मा प्रत्युवाच यमस्तदा । एष व्यावर्तितो दण्डः प्रभविष्णुर्हि नो भवान्॥ ४६ ॥
किं त्विदानीं मया शक्यं कर्तुं रणगतेन हि । न मया यद्ययं शक्यो हन्तुं वरपुरस्कृतः ॥ ४७ ॥
एष तस्मात्प्रणश्यामि दर्शनादस्य रक्षसः । इत्युक्त्वा सरथः साश्वस्तत्रैवान्तरधीयत ॥ ४८ ॥
दशग्रीवस्तु तं जित्वा नाम विश्राव्य चात्मनः । आरुह्य पुष्पकं भूयो निष्क्रान्तो यमसादनात्॥४९॥
स तु वैवस्वतो देवैः सह ब्रह्मपुरोगमैः । जगाम त्रिदिवं हृष्टो नारदश्च महामुनिः ॥ ५० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

---

४२-४३ ] ति० टी०—सर्वेषां प्राणिनां ब्रह्मसृष्टप्राणिमात्रस्य विनिपातन इत्यर्थः । सर्वमृत्युपुरस्कृतः । तत्पुरुषो बहुव्रीहिश्च ॥ ४२ ॥ ४३ ॥

रा० टी०—अमोघ इति । यतस्सर्वमृत्युपुरस्कृतः सर्वेषां मृत्युकारीत्यर्थः कालदण्डो मया सृष्टः अत एव दण्डः सर्वेषां प्राणिनाममोघः मिथ्याफलको न स सर्वलक्ष्यान्हनिष्यतीत्यर्थः ॥ ४२ ॥

रा० टी०—तदिति । तदुक्तहेतोः एष दण्डः रावणमूर्द्धनि न पात्यः हि यतस्तस्मिन् दण्डे पतिते सति मुहूर्तमपि न जीवति ॥ ४३ ॥

गो० टी०—यदीति । उभयतोऽनृतं मया कालदण्डस्य मोघत्वसंपादने दण्डस्यानृतत्वं रक्षोमरणोपेक्षणे वरवचनस्यानृतत्वमिति ॥ ४५ ॥ ४६ ॥

४४-४५ ] ति० टी०—उभयत इति । दण्डपातेऽपि रावणजीवने दण्डस्यानृतत्वं रक्षोमरणे मदुक्तवरवचनस्यानृतत्वमित्यर्थः ॥ ४४ ॥ ४५ ॥

रा० टी०—यदीति । अस्मिन्दण्डे निपतिते सति राक्षसो दशग्रीवः न म्रियेत म्रियते वा उभयतोपि अनृतं मरणे वरस्यानृतत्वममरणे दंडप्रभावस्यानृतत्वमिति तात्पर्यम् ॥४४॥

रा० टी०—तदिति । यदि लोकान् अवेक्षसे तदा समुद्यतमेतं दण्डं लंकेशान्निवर्त्तय अत एव मां सत्यं कुरुष्व ॥४५॥

४६ ] ति० टी०—प्रभविष्णुः स्वामी ॥ ४६ ॥

रा० टी०—एवमिति । एवमुक्तः धर्मात्मा यमः प्रत्युवाच तदाकारमाह यतो भवान्नोस्माकं प्रभविष्णुः अत एव नो दण्डो भवता व्यावर्त्ति ॥ ४६ ॥

गो० टी०—एवमिति । प्रभविष्णुः स्वामी ॥ ४७ ॥

४७ ] ति० टी०—यतो मया हन्तुं न शक्यस्तस्मादिदानीं मया किं तु कर्तुं शक्यं योग्यम् । इति संचिन्त्येति शेषः॥४७॥

रा० टी०—निवर्तने हेतुमाह—किमिति । यदि वरपुरस्कृतोयं रावणः मया हन्तुं न शक्यः तर्हि रणगतेन मया किं कर्तुं शक्यम् न किमपीत्यर्थः ॥ ४७ ॥

गो० टी०—किन्त्विति । यद्यस्मान्मया न हन्तव्यस्तस्मादिदानीं मया किंनु शक्यं कर्तुमिति । संचिन्त्येति शेषः ॥४८॥

४८ ] ति० टी०—अस्य रक्षसो दर्शनाच्चक्षुष्पथात्प्रणश्यामि अन्तर्हितो भविष्यामीत्युक्त्वा । ब्रह्माणमिति शेषः ॥ ४८ ॥

रा० टी०—एष इति । तस्माद्दण्डप्रक्षेपाभावाद्धेतोः रक्षसो दर्शनादर्शनं परित्यज्य एषोहं प्रणश्यामि अदृश्यो भवामि इत्युक्त्वा रथादिसहितो यमः तत्रैवान्तरधीयत ॥ ४८ ॥

गो० टी०—अस्य रक्षसो दर्शनाद्दर्शनपथात् । एष इति । प्रणश्यामि "णश, अदर्शने" अन्तर्हितो भविष्यामीत्यर्थः । इत्युक्त्वेति ब्रह्माणमिति शेषः ॥ ४९ ॥ ५० ॥

४९ ] ति० टी०—तं जित्वा । भगवत्कृपयेति शेषः॥४९॥

रा० टी०—दशग्रीव इति । दशग्रीवः तं यमं जित्वा आत्मनो नाम विश्राव्य च पुष्पकमारुह्य यमसदनान्निष्क्रान्तोऽभवदिति शेषः ॥ ४९ ॥

५० ] ति० टी०—हृष्टः । ब्रह्मणः सत्यपरिपालनं संवृत्तमिति यमादीनां हर्षः ॥ ५० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

रा० टी०—स इति । ब्रह्मा पुरोगमो येषां तैर्देवैस्सह वैवस्वतो नारदश्च त्रिदिवं जगाम ॥ ५० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्वाविंशः सर्गः ॥ २२ ॥

गो० टी०—स त्विति । वैवस्वतः ब्रह्मपुरोगमैर्देवैः हृष्टः अभूदिति शेषः ॥ ५१ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वाविंशः सर्गः ॥ २२ ॥

---

१ पूर्वमिति गो. पा. । २ लङ्केशमिति गो. पा. । ३ न्विति गो. पा. ।

अब्रवीत्किमिदं भद्रे वक्तुकामासि मां द्रुतम् । सा बाष्पपरिरुद्धाक्षी रक्ताक्षी वाक्यमब्रवीत् ॥२६॥
कृतास्मि विधवा राजंस्त्वया बलवता बलात् । एते राजंस्त्वया वी[1]र्याद्दैत्या विनिहता रणे ॥ २७ ॥
कालकेया इति ख्याताः सहस्राणि चतुर्दश । प्राणेभ्योऽपि गरीयान्मे तत्र भर्ता महाबलः ॥ २८ ॥
सोऽपि त्वया हतस्तात रिपुणा भ्रातृ[2]गन्धिना । त्वयास्मि निहता राजन्स्वयमेव हि बन्धुना ॥ २९ ॥
राजन्वैधव्यशब्दं च भोक्ष्यामि त्वत्कृ[3]तं ह्यहम् । ननु नाम त्वया रक्ष्यो जामाता समरेष्वपि ॥ ३० ॥
स त्वया निहतो युद्धे स्वयमेव न लज्जसे । एवमुक्तो दशग्रीवो भगिन्या क्रोशमानया ॥ ३१ ॥
अब्रवीत्सान्त्वयित्वा तां सामपूर्वमिदं वचः । अलं वत्से रुदित्वा ते न भेतव्यं च सर्वशः ॥ ३२ ॥
दानमानप्रसादैस्त्वां तोषयिष्यामि यत्नतः । युद्धप्रमत्तो व्याक्षिप्तो जयाकाङ्क्षी क्षिपञ्शरान् ॥३३॥
नाहमज्ञासिषं युध्यन्स्वान्परान्वापि संयुगे । जामातरं न जाने स्म प्रहरन्युद्धदुर्मदः ॥ ३४ ॥
तेनासौ निहतः संख्ये मया भर्ता तव स्वसः । अस्मिन्काले तु यत्प्राप्तं तत्करिष्यामि ते हितम् ३५

रा० टी०–यस्मादिति । यस्मात् एष रावणः परक्यासु परकीयासु स्त्रीषु रमते तस्मात् स्त्रीकृतेन स्त्रीप्रयत्नेनैव दुर्मतिः रावणः वधं प्राप्स्यति ॥ २० ॥

रा० टी०–सतीभिरिति । सतीभिर्नारीभिः एवं वाक्ये अभ्युदीरिते सति दुन्दुभयो नेदुः पुष्पवृष्टिः पपात च २१

रा० टी०–शप्त इति । साध्वीभिः साधुरीर्गतिर्यासां ताभिः स्त्रीभिः शप्तोऽत एव हतौजा इव अत एव निष्प्रभो रावणः विमना एव बभूव एक इव एवार्थे ॥ २२ ॥

रा० टी०–एवमिति । राक्षसपुंगवः एवं तासां विलपितं शृण्वन्सन् लङ्कां प्रविवेश ॥ २३ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये रावणस्य भगिनी सा शूर्पणखा भूमौ रावणसमीपदेशे पतिता॥२४॥

रा० टी०–तामिति । रावणः परिसान्त्वयन्सन्स्वसारं समुत्थाप्य मां किं वक्तुकामासि इदं वचोऽब्रवीत् ॥२५ ॥

गो० टी०–इदमिति । परक्यासु परकीयासु॥ २०--२८॥

२६–२८ ] ति०टी०–भद्रे मे मत्तः किं द्रुतं वक्तुकामासि। एवं वदता विद्युज्जिह्ववधोऽपि विशिष्य न ज्ञायत इति सूच्यते ॥ २६–२८ ॥

रा० टी०–सेति। सा शूर्पनखा वाक्यमब्रवीत् अर्थं पृथक् २६

रा० टी०–तदाकारमाह—कृतेत्यादिभिः । हे राजन् चतुर्दश सहस्राणि कालकेया इति ख्याता एते दैत्याः त्वया निहताः तत्र दैत्येषु प्राणेभ्योपि गरीयान्मे भर्ता भ्रातृगंधिना रिपुणा त्वया हतः अत एव त्वयाहं विधवा कृता अत एव त्वत्कृतं वैधव्यशब्दं भोक्ष्यामि अत एव अहमपि त्वया निहतास्मि सार्द्धश्लोकत्रयमेकान्वयि ॥ २७–२९ ॥

२९ ] ति० टी०–यतो मे भर्ता हतः, अतोऽहं बन्धुना त्वया स्वयमेव हतास्मि ॥ २९ ॥

गो० टी०–सोपीति । यतो मे भर्ता हतः अत एव साहं स्वयं स्वबन्धुनैव त्वया निहतास्मि ॥ २९ ॥

३०–३१ ] ति० टी०–नन्विति पृथक्पदे । जामाता नाम समरेष्वपि रक्ष्यो नु न । काकुः । रक्ष्य एवेत्यर्थः ३०-३१

रा० टी०–नन्विति । यो जामाता समरेष्वपि त्वया रक्ष्यः स जामाता युद्धे त्वया स्वयं निहतः अतोपि त्वं न लज्जसे ॥ ३० ॥

रा० टी०–एवमिति । भगिन्या एवमुक्तो दशग्रीवः तां भगिनीं सान्त्वयित्वा इदमब्रवीत् अर्द्धं पृथक् ॥ ३१ ॥

गो० टी०–राजन्नित्यादि सार्धम् । नन्विति पृथक् पदम् । जामाता नाम समरेष्वपि रक्ष्यो न नु नेति काकुः । रक्ष्य एव किलेत्यर्थः ॥ ३०- ३४ ॥

३२–३४ ] ति० टी०–न भेतव्यं च सर्वशः । बान्धवादिभ्योऽपि मा भैषीः । स्वैरं चरेत्यर्थ इति तीर्थः ॥३२–३४ ॥

रा० टी०–तदाकारमाह—अलमित्यादिभिः । दानादिभिः त्वां तोषयिष्यामि अतः ते त्वया न भेतव्यमत एव रुदित्वा अलं रोदनं न कुर्वित्यर्थः ॥ ३२ ॥

रा० टी०–युद्धेति । युद्धप्रमत्तोहं शरान् क्षिपन्सन् स्वान् परान् नाज्ञासिषम् ॥ ३३ ॥

रा० टी०–अत एव युद्धदुर्मदोहं जामातरं न जाने स्म तेन हेतुना तव भर्ता मया निहतः ॥ ३४ ॥

३५ ] ति० टी०–अस्मिन्काले तु यत्प्राप्तम् । कर्तव्यत्वेनेति शेषः ॥ ३५ ॥

रा० टी०–अस्मिन्निति । अस्मिन्काले यत्प्राप्तं योग्यमित्यर्थः तत् हितं करिष्यामि हितमेवाह भ्रातुः खरस्य पार्श्वतः पार्श्वे वस ॥ ३५ ॥

गो० टी०–अस्मिन्निति । अस्मिन् काले तु यत्प्राप्तं मत्कर्तव्यत्वेनेति शेषः । मातृष्वसेयस्य खरस्य भ्रातृत्वात् भ्रातुरित्युच्यते । पार्श्वतो वनसमीपे वसेत्यर्थः । मम तु राज्यपरवशस्य न त्वत्संमानने अवकाश इति भावः ॥ ३५ ॥

१ मे इति गो. पा. । २ रा इति गो.पा. । ३ गृध्नुनेति गो.पा.। ४ कृते इति गो.पा.। ५ नावगच्छामि युद्धेषु स्वान्परान्वाप्यहं शुभे इति गो.पा.।

भ्रातुरैश्वर्ययुक्तस्य खरस्य वस पार्श्वतः । चतुर्दशानां भ्राता ते सहस्राणां भविष्यति ॥३६॥
प्रभुः प्रयाणे दाने च राक्षसानां महाबलः । तत्र मातृष्वसेयस्ते भ्रातायं वै खरः प्रभुः ॥ ३७ ॥
भविष्यति तवादेशं सदा कुर्वन्निशाचरः । शीघ्रं गच्छत्वयं वीरो दण्डकान्परिरक्षितुम् ॥ ३८ ॥
दूषणोऽस्य बलाध्यक्षो भविष्यति महाबलः । तत्र ते वचनं शूरः करिष्यति तदा खरः ॥ ३९ ॥
रक्षसां कामरूपाणां प्रभुरेष भविष्यति । एवमुक्त्वा दशग्रीवः सैन्यमस्यादिदेश ह ॥ ४० ॥
चतुर्दश सहस्राणि रक्षसां वीर्यशालिनाम् । स तैः परिवृतः सर्वैं राक्षसैर्घोरदर्शनैः ॥ ४१ ॥
आगच्छत खरः शीघ्रं दण्डकानकुतोभयः । स तत्र कारयामास राज्यं निहतकण्टकम् ॥
सा च शूर्पणखा तत्र न्यवसद्दण्डके वने ॥ ॥ ४२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

## पञ्चविंशः सर्गः ।

रावणो निकुम्भिलां गत्वा निर्वर्तितयागेन शक्रजिता साकं मन्दिरं प्रविष्टस्तत्र विभीषणमुखान्मातृष्वसुः सुतां मधुना हृतां निशम्य रोषेण तं जिघांसुः ससैन्यस्तत्र गत्वा तया कुम्भीनस्या मे भर्ता मधुर्न वध्य इति प्रार्थितस्तथास्त्विति तदङ्गीकृत्य तेन मधुना सहैव त्रिलोकीं जेतुं निष्क्रान्तः ।

स तु दत्त्वा दशग्रीवो बलं[1] घोरं खरस्य तत् । भगिनीं च समाश्वास्य हृष्टः स्वस्थतरोऽभवत्॥ १ ॥
ततो निकुम्भिला नाम लङ्कोपवनमुत्तमम् । तद्राक्षसेन्द्रो बलवान्प्रविवेश सहानुगः ॥ २ ॥

३६ ] ति० टी०—भ्रातुर्मातृष्वसेयस्य खरस्य समीपे पार्श्वतो वस । तत्समीपे वसेत्यर्थः । मम राज्यपारवश्येन त्वत्संमाननेऽवकाशाभाव इति भावः ॥ ३६ ॥

रा० टी०—ननु तत्र वासेन किमित्यत आह—चतुर्दशानामिति । चतुर्दशानां सहस्राणां रक्षसां प्रयाणे दाने च प्रभुर्भविष्यति ॥ ३६ ॥

गो० टी०—चतुर्दशानामिति । चतुर्दशानां सहस्राणां प्रयाणे प्रेषणे दाने अन्नपानवस्त्रादिदाने प्रभुस्ते भ्रातेत्यन्वयः । भविष्यतीति । तवादेशं त्वद्वचः सदा कुर्वन्भविष्यति ॥३६-४२॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्विंशः सर्गः ॥ २४ ॥

३७ ] ति० टी०—प्रयाणे प्रेषणे दानेऽन्नवस्त्रादिदाने प्रभुस्ते भ्रातेत्यन्वयः ॥ ३७ ॥

रा० टी०—ननु तेन मम किमित्यत आह—तत्रेति । तत्र प्राप्तप्रभुत्वे ते मातृष्वसेयो भ्रातायं खरः तवादेशं कुर्वन्सन्नेव प्रभुर्भविष्यति एतेन तवाज्ञाभङ्गकरणे तत्प्रभुत्वं विनाशयिष्यामीति सूचितम् ॥ ३७ ॥

३८-४२ ] ति० टी०—तवादेशं सदा कुर्वन्भविष्यति ॥ ३८-४२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

रा० टी०—शीघ्रमिति । अयं खरः दण्डकान्परिरक्षितुं शीघ्रं गच्छतु अस्य खरस्य बलाध्यक्षस्तु दूषणो भविष्यति ॥ ३८ ॥

रा० टी०—तत्रेति । खरः यदा ते वचनं करिष्यति तदा रक्षसां प्रभुरेव भविष्यति तत्प्रभुत्वं न कदापि नङ्क्ष्यतीत्यर्थः ॥ ३९ ॥

रा० टी०—एवमिति । दशग्रीवः एवमुक्त्वा रक्षसां चतुर्दश सहस्राणि अस्य खरस्य सैन्यं भवितुमिति शेषः आदिदेश ॥ ४० ॥

रा० टी०—स इति । राक्षसैः परिवृतः खरः दण्डकानागच्छत ॥ ४१ ॥

रा० टी०—स इति । स खरः तत्र दण्डकारण्ये निहतकंटकं राज्यं कारयामास शूर्पणखा तु दण्डके वने न्यवसत् ॥४२॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुर्विंशः सर्गः ॥ २४ ॥

१ ] ति० टी०—स त्विति ॥ १ ॥

रा० टी०—खरप्रेषणानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । बलं खरस्य दत्वा भगिनीं समाश्वास्य च हृष्टो दशग्रीवस्स्वस्थतरोऽभवत् ॥ १ ॥

गो० टी०—स तु दत्त्वेत्यादि ॥ १ ॥

२ ] ति० टी०—निकुम्भिला लङ्कापश्चिमद्वारदेशवर्ति कर्मसिद्धिहेतुभूतं काननम् ॥ २ ॥

१ सदेति गो. पा. । २ दण्डकावन इति गो. पा. । ३ वनमिति गो. पा. ।

ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम् । ददर्श विष्ठितं यज्ञं श्रिया संप्रज्वलन्निव ॥ ३ ॥
ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम् । ददर्श स्वसुतं तत्र मेघनादं भयावहम् ॥ ४ ॥
तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः । अब्रवीत्किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः ॥ ५ ॥
उशना त्वब्रवीत्तत्र यज्ञसंपत्समृद्धये । रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥
अहमाख्यामि ते राजञ्श्रूयतां सर्वमेव तत् । यज्ञास्ते सप्त पुत्रेण प्राप्तास्ते[1] बहुविस्तराः ॥ ७ ॥
अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः । राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ ८ ॥
माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे । वरांस्ते लब्धवान्पुत्रः साक्षात्पशुपतेरिह ॥ ९ ॥
कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् । मायां च तामसीं नाम यया संपद्यते तमः ॥ १० ॥
एतया किल सङ्ग्रामे मायया राक्षसेश्वर । प्रयुक्तया गतिः शक्या नहि ज्ञातुं सुरासुरैः ॥ ११ ॥
अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम् । अस्त्रं च बलवद्राजञ्छत्रुविध्वंसनं रणे ॥ १२ ॥
एतान्सर्वान्वरांल्लब्ध्वा पुत्रस्तेऽयं दशानन । अद्य यज्ञसमाप्तौ च त्वां दिदृक्षन्स्थितो ह्यहम्[2] ॥ १३ ॥
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम् । पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥ १४ ॥

---

रा० टी०—तत इति । राक्षसेन्द्रः निकुम्भिलानाम लङ्कोपवनं लङ्कापश्चिमद्वारवर्तिकर्मसिद्धिकारणीभूतोपवनविशेषं प्रविवेश ॥ २ ॥

गो० टी०—तत इति । निकुम्भिला नाम लङ्कायाः पश्चिमद्वारवर्ति काननम् ॥ २ ॥

३ ] ति० टी०—चैत्यं देवायतनम् । विष्ठितं प्रवृत्तम् ॥३॥

रा० टी०—तत इति । यूपशतैराकीर्णं चैत्येन देवायतनेन शोभितं विष्ठितं संस्थितं यज्ञं यागशालां श्रिया प्रज्वलन्निव रावणो ददर्श ॥ ३ ॥

गो० टी०—तत इति । चैत्यं देवायतनम् । विष्ठितं प्रवृत्तम् । कमण्डलुः शिखा दण्डो ध्वजश्च यस्य स तथा । अनेन ब्रह्मचर्यं सूचितम् न तु ब्रह्मचर्याश्रमः । अग्निष्टोमादियाजित्वं ध्यात्वोपदेशात् ॥ ३–५ ॥

४–५ ] ति० टी०—कमण्डलुः शिखा ध्वजो दण्डश्च यस्य तम् । अर्शआद्यजन्तम् । दण्डकमण्डलुयुक्तमित्यर्थः । अनेन ब्रह्मचर्यं सूचितम्, न तु ब्रह्मचर्याश्रमः । अग्निष्टोमयाजित्वस्यानुपदमेव वक्ष्यमाणत्वात् ॥ ४ ॥ ५ ॥

रा० टी०—तत इति । कमण्डलुना सह शिखा ध्वजो दण्डो यस्य तं मेघनादं ददर्श ॥ ४ ॥

रा० टी०—तमिति । लङ्केशः तं मेघनादं समासाद्य परिष्वज्य च इदमाचरणं किं किमर्थं वर्तसे करोषि इति त्वं तत्त्वतो ब्रूहि इत्यब्रवीत् ॥ ५ ॥

६ ] ति० टी०—उशना त्वब्रवीदिति । पुत्रस्य यजमानत्वेन मौनित्वात्सोऽवददिति भावः । यज्ञसंपत्समृद्धये यजमानस्य मौनात्यागेन तत्समृद्धिर्भवति ॥ ६ ॥

रा० टी०—उशना इति । तत्र तस्मिन्समये यज्ञसंपत्समृद्धये आगतः इति शेषः उशना शुक्रोऽब्रवीत् एतेन पुत्रस्य मौनव्रतित्वं ध्वनितम् ॥ ६ ॥

गो० टी०—उशना इति ॥ उशना शुक्रः शुक्राचार्यः । प्रवर्तकत्वात् स्वयमब्रवीदिति भावः ॥ ६ ॥

७ ] ति० टी०—ते प्रसिद्धास्ते सप्त यज्ञाः ॥ ७ ॥

रा० टी०—तदाकारमाह—अहमित्यादिभिः । हे राजन् एतद्वृत्तान्तं सर्वमहमाख्यामि त्वया श्रूयताम् आख्यानमेवाह बहुविस्तराः सप्त यज्ञाः प्राप्ताः कृताः ॥ ७ ॥

गो० टी०—अहमिति । यज्ञाः प्रसिद्धाः ॥ ७–१७ ॥

८ ] ति० टी०—तदेवाह—अग्निष्टोम इति ॥ ८ ॥

९–१२ ] ति० टी०—पशुपतेः रुद्रात् ॥ ९–१२ ॥

रा० टी०—यज्ञानां नामानि निर्दिशन्नाह—अग्निष्टोम इति । अग्निष्टोमादयो यज्ञाः कृताः माहेश्वरे यज्ञे प्रवृत्ते तु ते पुत्रः पशुपतेर्वरान् लब्धवान् श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०—वराकारमाह—कामगमित्यादिभिः । स्यन्दनादि यया तमः रिपूणामज्ञानं संपद्यते तां मायां च लब्धवानिति शेषः ॥ १० ॥

रा० टी०—अज्ञानाकारमाह—एतयेति । प्रयुक्तया कृतया एतया लब्धया मायया गतिः मायाकर्तॄणां गमनं सुरासुरैर्ज्ञातुं न शक्या ॥ ११ ॥

रा० टी०—अक्षयाविति । बाणैस्सह अक्षयाविषुधी तूणीरौ शत्रुविध्वंसनमस्त्रं च लब्धवानिति शेषः ॥ १२ ॥

१३ ] ति० टी०—पुत्रोऽहं च त्वां दिदृक्षन्स्थितः ॥१३॥

रा० टी०—एतानिति । हे दशानन एतान्वरान् लब्ध्वा ते पुत्रः अहं च त्वां दिदृक्षुः सन्स्थितः ॥ १३ ॥

१४ ] ति० टी०—न शोभनं कृतमित्यत्र हेतुः—पूजिता

---

१ स्यिति गो. पा. । २ दिदृक्षुरिति गो. पा. ।

एहीदानीं कृतं यद्धि सुकृतं तन्न संशयः । आगच्छ सौम्य गच्छामः स्वमेव भवनं प्रति॥ १५ ॥
ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः । स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः॥ १६ ॥
लक्षिण्यो रत्नभूताश्च देवदानवरक्षसाम् । तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत्॥१७॥
ईदृशैस्त्वं समाचारैर्यशोर्थकुलनाशनैः । धर्षणं प्राणिनां ज्ञात्वा स्वमतेन विचेष्टसे॥ १८ ॥
ज्ञातींस्तान्धर्षयित्वेमास्त्वयानीता वराङ्गनाः । त्वामतिक्रम्य मधुना राजन्कुम्भीनसी हृता॥ १९ ॥
रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किं त्विदम् । कोऽयं यस्तु त्वयाख्यातो मधुरित्येव नामतः ॥२०॥
विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत् । श्रूयतामस्य पापस्य कर्मणः फलमागतम् ॥ २१ ॥
मातामहस्य योऽस्माकं ज्येष्ठो भ्राता सुमालिनः । माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः॥२२॥
पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत् । तस्य कुम्भीनसी नाम दुहितुर्दुहिताभवत् ॥ २३ ॥
मातृष्वसुरथास्माकं सा च कन्यानलोद्भवा । भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा ॥ २४ ॥

इति । तपसैव ब्रह्मादयो देवास्तोषणीयाः, न त्विन्द्रादिप्रीणनोपेतयागेनेति भावः ॥ १४ ॥

रा० टी०—तत इति । दशग्रीवोऽब्रवीत् तदाकारमाह यस्मात् शत्रवः पूजिताः तस्मादिदं शोभनं न कृतम् ॥ १४ ॥

१५-१६ ] ति० टी०—यत्कृतं तत्कृतमेव । अकर्तुमशक्यत्वादतः परं मा कुर्विति भावः ॥ १५ ॥ १६ ॥

रा० टी०—स्वासन्तोषजन्यतद्भीतिनिवारणायाह—एहीति । यत्कृतं तत् सुकृतमेव अतस्संशयो न कार्य इति शेषः अत आगच्छ वयमपि गच्छामः ॥ १५ ॥

रा० टी०—तत इति । दशग्रीवो गत्वा स्वभवनमिति शेषः वाष्पगद्गदा लक्षिण्यः सुलक्षणयुक्ता देवदानवरक्षसां स्त्रियः अवतारयामास सार्द्धश्लोक एकान्वयी ॥ १६ ॥

१७ ] ति० टी०—लक्षिण्यः सुलक्षणयुक्ताः । रत्नभूता उत्तमवस्तुभूताः ॥ १७ ॥

रा० टी०—तस्येति । धर्मात्मा विभीषणः तस्य रावणस्य तासु स्त्रीषु मतिं दुष्टाभिप्रायं ज्ञात्वा अब्रवीदर्द्धं पृथक् १७

१८ ] ति० टी०—ज्ञात्वा तेषां पापजनकत्वं ज्ञात्वापि स्वमतेनोल्लङ्घितधर्मन्यायमर्यादया । स्वेच्छयेत्यर्थः ॥ १८ ॥

रा० टी०—तदाकारमाह—ईदृशैरित्यादिभिः । ज्ञात्वा इष्टानिष्टं बुद्ध्वापि स्वमतेन स्वेच्छयैव यशोर्थकुलनाशनैः ईदृशैः समाचारैः समाचरणैः प्राणिनां धर्षणं पीडामित्यर्थः विचेष्टसे करोषि ॥ १८ ॥

गो० टी०—ईदृशैरिति । स्वमतेन स्वेच्छया । उल्लङ्घितशास्त्रमर्यादयेत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—ताञ्ज्ञातीनानीतस्त्रीबन्धून् ॥ १९ ॥

रा० टी०—अधर्मणः फलं झटिति भवतीति बोधयन्नाह—ज्ञातीनिति । ज्ञातीन् प्रशस्तजातिमतः यतो धर्षयित्वा वराङ्गना आनीताः अत एव कुम्भीनसी तदभिधा भगिनी मधुना हृता ॥ १९ ॥

गो० टी०—ज्ञातीनिति । ज्ञातीन् आनीतस्त्रीबन्धून् । अस्य कर्मणः परदारापहरणरूपपापस्य । फलमागतं स्वीयस्वसुर्बलान्मधुना हरणम् ॥ १९ ॥ २२ ॥

२० ] ति० टी०—नावगच्छामि नेमं वृत्तान्तं जानामि । किं त्विदं कथं संपन्नम् ॥ २० ॥

रा० टी०—रावण इति । इदमपहरणं किं किंकारणकं यस्तु नामतो त्वया मधुरिति ख्यातः सोयं क इति . नावगच्छामि जानामि इति वाक्यं रावणोऽब्रवीत् ॥ २० ॥

२१-२२ ] ति० टी०—अस्य पापस्य कर्मणः परदारग्रहणरूपस्य फलं स्वीयस्वसुर्मधुसुरेण बलाद्धरणरूपम् २१-२२

रा० टी०—विभीषण इति । विभीषणोऽब्रवीत्तदाकारमाह अस्य दारापहणादेः पापस्य कर्मणः फलमागतम् ॥२१॥

रा० टी०—फलाकारमाह—मातेत्यादिभिः । नोस्माकं मातामहस्य सुमालिनः माल्यवानिति विख्यातो यो ज्येष्ठो भ्राता अत एव अस्माकं जनन्या ज्येष्ठः पिता ज्येष्ठपितृव्य इत्यर्थः अत एव आर्यकः श्रेष्ठः अभवत् तस्य दुहितुः पुष्पोत्कराभिधा या दुहिता कुम्भीनसी नामाभवत् श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—आर्यको मातामहः ॥ २३ ॥

गो० टी०—पितेति । अस्माकं जनन्याः सुमालिसुतायाः कैकस्याः ज्येष्ठा भगिनी काचिदस्ति । सा तु नाम्ना पुष्पोत्कचा । अपरा कुम्भीनसीति पूर्वमुक्ता । अस्माकं त्वार्यको माल्यवान् अस्माकं ज्येष्ठमातामहः । अस्माकं जनन्याश्च ज्येष्ठः पिता । तस्य माल्यवतः कुम्भीनसी नाम दुहितास्ति । अनलोद्भवा अनला माल्यवतः सुता तस्याः कन्या कुम्भीनसीत्यर्थः । अस्मन्मातामहस्य सुमालिनः द्वे पुत्र्यौ प्रसिद्धे पुष्पोत्कचा कैकसी चेति तयोर्ज्येष्ठः पिता माल्यवान् तस्य पुत्री अनला तस्याः कन्या कुम्भीनसी सा अस्माकं स्वसा । ज्येष्ठमातामहपुत्र्याः पुत्रीत्वादत एव धर्मतः स्वसेत्युक्ता ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—अत्रेदं बोध्यम्—अस्मन्मातामहस्य

१ विद्धीति गो. पा. । २ स्वामिति गो. पा. । ३ ज्ञातिनामिति गो. पा. । ४ भ्रातेति गो. पा. ।

ततो यूपशताकीर्णं सौम्यचैत्योपशोभितम् । ददर्श विष्ठितं यज्ञं श्रिया संप्रज्वलन्निव ॥ ३ ॥
ततः कृष्णाजिनधरं कमण्डलुशिखाध्वजम् । ददर्श स्वसुतं तत्र मेघनादं भयावहम् ॥ ४ ॥
तं समासाद्य लङ्केशः परिष्वज्याथ बाहुभिः । अब्रवीत्किमिदं वत्स वर्तसे ब्रूहि तत्त्वतः ॥ ५ ॥
उशना त्वब्रवीत्तत्र यज्ञसंपत्समृद्धये । रावणं राक्षसश्रेष्ठं द्विजश्रेष्ठो महातपाः ॥ ६ ॥
अहमाख्यामि ते राजञ्श्रूयतां सर्वमेव तत् । यज्ञास्ते सप्त पुत्रेण प्राप्तास्ते[1] बहुविस्तराः ॥ ७ ॥
अग्निष्टोमोऽश्वमेधश्च यज्ञो बहुसुवर्णकः । राजसूयस्तथा यज्ञो गोमेधो वैष्णवस्तथा ॥ ८ ॥
माहेश्वरे प्रवृत्ते तु यज्ञे पुंभिः सुदुर्लभे । वरांस्ते लब्धवान्पुत्रः साक्षात्पशुपतेरिह ॥ ९ ॥
कामगं स्यन्दनं दिव्यमन्तरिक्षचरं ध्रुवम् । मायां च तामसीं नाम यया संपद्यते तमः ॥ १० ॥
एतया किल सङ्ग्रामे मायया राक्षसेश्वर । प्रयुक्तया गतिः शक्या नहि ज्ञातुं सुरासुरैः॥ ११ ॥
अक्षयाविषुधी बाणैश्चापं चापि सुदुर्जयम् । अस्त्रं च बलवद्राजञ्छत्रुविध्वंसनं रणे ॥ १२ ॥
एतान्सर्वान्वरांल्लब्ध्वा पुत्रस्तेऽयं दशानन । अद्य यज्ञसमाप्तौ च त्वां दिदृक्षन्स्थितो ह्यहम्[2]॥ १३ ॥
ततोऽब्रवीद्दशग्रीवो न शोभनमिदं कृतम् । पूजिताः शत्रवो यस्माद्द्रव्यैरिन्द्रपुरोगमाः ॥ १४ ॥

रा० टी०–तत इति । राक्षसेन्द्रः निकुम्भिलानाम लङ्कोपवनं लङ्कापश्चिमद्वारवर्तिकर्मसिद्धिकारणीभूतोपवनविशेषं प्रविवेश ॥ २ ॥

गो० टी०–तत इति । निकुम्भिला नाम लङ्कायाः पश्चिमद्वारवर्ति काननम् ॥ २ ॥

३ ] ति० टी०–चैत्यं देवायतनम् । विष्ठितं प्रवृत्तम् ॥३॥

रा० टी०–तत इति । यूपशतैराकीर्णं चैत्येन देवायतनेन शोभितं विष्ठितं संस्थितं यज्ञं यागशालां श्रिया प्रज्वलन्निव रावणो ददर्श ॥ ३ ॥

गो० टी०–तत इति । चैत्यं देवायतनम् । विष्ठितं प्रवृत्तम् । कमण्डलुः शिखा दण्डो ध्वजश्च यस्य स तथा । अनेन ब्रह्मचर्यं सूचितम् न तु ब्रह्मचर्याश्रमः । अग्निष्टोमादियाजित्वं ध्यात्वोपदेशात् ॥ ३–९ ॥

४–५ ] ति० टी०–कमण्डलुः शिखा ध्वजो दण्डश्च यस्य तम् । अर्शआद्यजन्तम् । दण्डकमण्डलुयुक्तमित्यर्थः । अनेन ब्रह्मचर्यं सूचितम्, न तु ब्रह्मचर्याश्रमः । अग्निष्टोमयाजित्वस्यानुपदमेव वक्ष्यमाणत्वात् ॥ ४ ॥ ५ ॥

रा० टी०–तत इति । कमण्डलुना सह शिखा ध्वजो दण्डो यस्य तं मेघनादं ददर्श ॥ ४ ॥

रा० टी०–तमिति । लङ्केशः तं मेघनादं समासाद्य परिष्वज्य च इदमाचरणं किं किमर्थं वर्तसे करोषि इति त्वं तत्वतो ब्रूहि इत्यब्रवीत् ॥ ५ ॥

६ ] ति० टी०–उशना त्वब्रवीदिति । पुत्रस्य यजमानत्वेन मौनित्वात्सोऽवददिति भावः । यज्ञसंपत्समृद्धये यजमानस्य मौनात्यागेन तत्समृद्धिर्भवति ॥ ६ ॥

रा० टी०–उशना इति । तत्र तस्मिन्समये यज्ञसंपत्समृद्धये आगतः इति शेषः उशना शुक्रोऽब्रवीत् एतेन पुत्रस्य मौनव्रतित्वं ध्वनितम् ॥ ६ ॥

गो० टी०–उशना इति ॥ उशना गुरुः शुक्राचार्यः । प्रवर्तकत्वात् स्वयमब्रवीदिति भावः ॥ ६ ॥

७ ] ति० टी०–ते प्रसिद्धास्ते सप्त यज्ञाः ॥ ७ ॥

रा० टी०–तदाकारमाह–अहमित्यादिभिः । हे राजन् एतद्भवत्पृष्टं सर्वमहमाख्यामि त्वया श्रूयताम् आख्यानमेवाह बहुविस्तराः सप्त यज्ञाः प्राप्ताः कृताः ॥ ७ ॥

गो० टी०–अहमिति । यज्ञाः प्रसिद्धाः ॥ ७–१७ ॥

८ ] ति० टी०–तदेवाह—अग्निष्टोम इति ॥ ८ ॥

९–१२ ] ति० टी०–पशुपते रुद्रात् ॥ ९–१२ ॥

रा० टी०–यज्ञानां नामानि निर्दिशन्नाह–अग्निष्टोम इति । अग्निष्टोमादयो यज्ञाः कृताः माहेश्वरे यज्ञे प्रवृत्ते तु ते पुत्रः पशुपतेर्वरान् लब्धवान् श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

रा० टी०–वराकारमाह—कामगमित्यादिभिः । स्यन्दनादि यया तमः रिपूणामज्ञानं संपद्यते तां मायां च लब्धवानिति शेषः ॥ १० ॥

रा० टी०–अज्ञानाकारमाह—एतयेति । प्रयुक्तया कृतया एतया लब्धया मायया गतिः मायाकर्तॄणां गमनं सुरासुरैर्ज्ञातुं न शक्या ॥ ११ ॥

रा० टी०–अक्षयाविति । बाणैस्सह अक्षयाविषुधी तूणीरौ शत्रुविध्वंसनमस्त्रं च लब्धवानिति शेषः ॥ १२ ॥

१३ ] ति० टी०–पुत्रोऽहं च त्वां दिदृक्षन्स्थितः ॥१३॥

रा० टी०–एतानिति । हे दशानन एतान्वरान् लब्ध्वा ते पुत्रः अहं च त्वां दिदृक्षुः सन्स्थितः ॥ १३ ॥

१४ ] ति० टी०–न शोभनं कृतमित्यत्र हेतुः—पूजिता

1 स्यिति गो. पा. । 2 दिदृक्षुरिति गो. पा. ।

एहीदानीं कृतं यद्धि सुकृतं तन्न संशयः । आगच्छ सौम्य गच्छामः स्वमेव भवनं प्रति॥ १५ ॥
ततो गत्वा दशग्रीवः सपुत्रः सविभीषणः । स्त्रियोऽवतारयामास सर्वास्ता बाष्पगद्गदाः॥ १६ ॥
लक्षिण्यो रत्नभूताश्च देवदानवरक्षसाम् । तस्य तासु मतिं ज्ञात्वा धर्मात्मा वाक्यमब्रवीत्॥१७॥
ईदृशैस्त्वं समाचारैर्यशोर्थकुलनाशनैः । धर्षणं प्राणिनां ज्ञात्वा स्वमतेन विचेष्टसे॥ १८ ॥
ज्ञातींस्तान्धर्षयित्वेमास्त्वयानीता वराङ्गनाः । त्वामतिक्रम्य मधुना राजन्कुम्भीनसी हृता॥ १९ ॥
रावणस्त्वब्रवीद्वाक्यं नावगच्छामि किं त्विदम् । कोऽयं यस्तु त्वयाख्यातो मधुरित्येव नामतः ॥२०॥
विभीषणस्तु संक्रुद्धो भ्रातरं वाक्यमब्रवीत् । श्रूयतामस्य पापस्य कर्मणः फलमागतम् ॥ २१ ॥
मातामहस्य योऽस्माकं ज्येष्ठो भ्राता सुमालिनः । माल्यवानिति विख्यातो वृद्धः प्राज्ञो निशाचरः२२॥
पिता ज्येष्ठो जनन्या नो ह्यस्माकं चार्यकोऽभवत् । तस्य कुम्भीनसी नाम दुहितुर्दुहिताभवत् ॥ २३ ॥
मातृष्वसुरथास्माकं सा च कन्यानलोद्भवा । भवत्यस्माकमेवैषा भ्रातॄणां धर्मतः स्वसा ॥ २४ ॥

इति । तपसैव ब्रह्मादयो देवास्तोषणीयाः, न त्विन्द्रादिप्रीणनोपेतयागेनेति भावः ॥ १४ ॥

रा० टी०—तत इति । दशग्रीवोऽब्रवीत् तदाकारमाह यस्मात् शत्रवः पूजिताः तस्मादिदं शोभनं न कृतम् ॥ १४ ॥

१५-१६ ] ति० टी०—यत्कृतं तत्कृतमेव । अकर्तुमशक्यत्वादतः परं मा कुर्विति भावः ॥ १५ ॥ १६ ॥

रा० टी०—स्वासन्तोषजन्यतद्भीतिनिवारणायाह—एहीति । यत्कृतं तत् सुकृतमेव अतस्संशयो न कार्य इति शेषः अत आगच्छ वयमपि गच्छामः ॥ १५ ॥

रा० टी०—तत इति । दशग्रीवो गत्वा स्वभवनमिति शेषः वाष्पगद्गदा लक्षिण्यः सुलक्षणयुक्ता देवदानवरक्षसां स्त्रियः अवतारयामास सार्द्धश्लोक एकान्वयी ॥ १६ ॥

१७ ] ति० टी०—लक्षिण्यः सुलक्षणयुक्ताः । रत्नभूता उत्तमवस्तुभूताः ॥ १७ ॥

रा० टी०—तस्येति । धर्मात्मा विभीषणः तस्य रावणस्य तासु स्त्रीषु मतिं दुष्टाभिप्रायं ज्ञात्वा अब्रवीदर्द्धं पृथक् १७

१८ ] ति० टी०—ज्ञात्वा तेषां पापजनकत्वं ज्ञात्वापि स्वमतेनोल्लङ्घितधर्मन्यायमर्यादया । स्वेच्छयेत्यर्थः ॥ १८ ॥

रा० टी०—तदाकारमाह—ईदृशैरित्यादिभिः । ज्ञात्वा इष्टानिष्टं बुद्ध्वापि स्वमतेन स्वेच्छयैव यशोर्थकुलनाशनैः ईदृशैः समाचारैः समाचरणैः प्राणिनां धर्षणं पीडामित्यर्थः विचेष्टसे करोषि ॥ १८ ॥

गो० टी०—ईदृशैरिति । स्वमतेन स्वेच्छया । उल्लङ्घितशास्त्रमर्यादयेत्यर्थः ॥ १८ ॥

१९ ] ति० टी०—तान्ज्ञातीनानीतस्त्रीबन्धून् ॥ १९ ॥

रा० टी०—अधर्मणः फलं झटिति भवतीति बोधयन्नाह—ज्ञातीनिति । ज्ञातीन् प्रशस्तजातिमतः यतो धर्षयित्वा वराङ्गना आनीताः अत एव कुम्भीनसी तदभिधा भगिनी मधुना हृता ॥ १९ ॥

गो० टी०—ज्ञातीनिति । ज्ञातीन् आनीतस्त्रीबन्धून् । अस्य कर्मणः परदारापहरणरूपपापस्य । फलमागतं स्वीयस्वसुर्बलान्मधुना हरणम् ॥ १९ ॥ २२ ॥

२० ] ति० टी०—नावगच्छामि नेमं वृत्तान्तं जानामि । किं त्विदं कथं संपन्नम् ॥ २० ॥

रा० टी०—रावण इति । इदमपहरणं किं किंकारणकं यस्तु नामतो त्वया मधुरिति ख्यातः सोयं क इति . नावगच्छामि जानामि इति वाक्यं रावणोऽब्रवीत् ॥ २० ॥

२१-२२ ] ति० टी०—अस्य पापस्य कर्मणः परदारग्रहणरूपस्य फलं स्वीयस्वसुर्मधुस्वरेण बलाद्धरणरूपम् २१--२२

रा० टी०—विभीषण इति । विभीषणोऽब्रवीत्तदाकारमाह अस्य दारापहरणादेः पापस्य कर्मणः फलमागतम् ॥२१॥

रा० टी०—फलाकारमाह—मातेत्यादिभिः । नोस्माकं मातामहस्य सुमालिनः माल्यवानिति विख्यातो यो ज्येष्ठो भ्राता अत एव अस्माकं जनन्या ज्येष्ठः पिता ज्येष्ठपितृव्य इत्यर्थः अत एव आर्यकः श्रेष्ठः अभवत् तस्य दुहितुः पुष्पोत्कराभिधा या दुहिता कुम्भीनसी नामाभवत् श्लोकद्वयमेकान्वयि ॥ २२ ॥ २३ ॥

२३ ] ति० टी०—आर्यको मातामहः ॥ २३ ॥

गो० टी०—पितेति । अस्माकं जनन्याः सुमालिसुतायाः कैकस्याः ज्येष्ठा भगिनी काचिदस्ति । सा तु नाम्ना पुष्पोत्कचा । अपरा कुम्भीनसीति पूर्वमुक्ता । अस्माकं त्वार्यको माल्यवान् अस्माकं ज्येष्ठमातामहः । अस्माकं जनन्याश्च ज्येष्ठः पिता । तस्य माल्यवतः कुम्भीनसी नाम दुहितास्ति । अनलोद्भवा अनला माल्यवतः सुता तस्याः कन्या कुम्भीनसीत्यर्थः । अस्मन्मातामहस्य सुमालिनः द्वे पुत्र्यौ प्रसिद्धे पुष्पोत्कचा कैकसी चेति तयोर्ज्येष्ठः पिता माल्यवान् तस्य पुत्री अनला तस्याः कन्या कुम्भीनसी सा अस्माकं स्वसा । ज्येष्ठमातामहपुत्र्याः पुत्रीत्वादत एव धर्मतः स्वसेत्युक्ता ॥ २३ ॥ २४ ॥

२४ ] ति० टी०—अत्रेदं बोध्यम्—अस्मन्मातामहस्य

१ विद्धीति गो. पा. । २ त्वमिति गो. पा. । ३ ज्ञातिनामिति गो. पा. । ४ भ्रातेति गो. पा. ।

सा हृता मधुना राजन्राक्षसेन बलीयसा । यज्ञप्रवृत्ते पुत्रे तु मयि चान्तर्जलोषिते ॥ २५ ॥
कुम्भकर्णो महाराज निद्रामनुभवत्यथ । निहत्य राक्षसश्रेष्ठानमात्यानिह संमतान् ॥ २६ ॥
धर्षयित्वा हृता राजन्गुप्ताप्यन्तःपुरे तव । श्रुत्वापि तन्महाराज क्षान्तमेव हतो न सः॥ २७ ॥
यस्मादवश्यं दातव्या कन्या भर्त्रे हि भ्रातृभिः । तदेतत्कर्मणो ह्यस्य फलं पापस्य दुर्मतेः ॥ २८ ॥
अस्मिन्नेवाभिसंप्राप्तं लोके विदितमस्तु ते । विभीषणवचः श्रुत्वा राक्षसेन्द्रः स रावणः॥ २९ ॥
दौरात्म्येनात्मनोद्धूतस्तप्ताम्भा इव सागरः । ततोऽब्रवीद्दशग्रीवः क्रुद्धः संरक्तलोचनः ॥ ३० ॥
कल्प्यतां मे रथः शीघ्रं शूराः सज्जीभवन्तु नः । भ्राता मे कुम्भकर्णश्च ये च मुख्या निशाचराः॥३१॥
वाहनान्यधिरोहन्तु नानाप्रहरणायुधाः । अद्य तं समरे हत्वा मधुं रावणनिर्भयम् ॥ ३२ ॥
सुरलोकं गमिष्यामि युद्धाकाङ्क्षी सुहृद्वृतः । अक्षोहिणीसहस्राणि चत्वार्यग्र्याणि रक्षसाम् ३३

सुता कैकसी, तज्ज्येष्ठाभगिनी पुष्पोत्कटा, कनिष्ठा कुम्भीनसीति पूर्वमुक्तम् । सुमालिभ्राता माल्यवानस्मन्मातुर्ज्येष्ठः पितेत्यस्माकमार्यकः सः । तस्य कन्यानला तत्कन्या कुम्भीनसी सुमाल्यपत्यभूतकुम्भीनस्या अन्या इति । सा च कुम्भीनस्यस्माकं मातृष्वसुः कन्या भवति । अनलाया अस्मत्कनिष्ठमातृत्वात्, अत एषा शूर्पणखावदनलाकन्या कुम्भीनसी धर्मतो न्यायतः स्वसा भवति ॥ २४ ॥

रा० टी०–मातृष्वसुरिति । अस्माकं मातृष्वसुस्तु अनला तदभिधा कन्या उद्भवा जाता एषा अनला अस्माकं भ्रातृणां धर्मतः स्वसा भवति ॥ २४ ॥

२५ ] ति० टी०–यज्ञप्रवृत्ते तेन दीक्षावत्त्वाद्युद्धप्रवृत्तिनिवारणम् । 'यज्ञप्रमत्ते' इति पाठे यज्ञेन प्रमत्ते स्वगृहकृत्यविस्मृतिमति । अन्तर्जलोषिते । तपोर्थमिति शेषः ॥ २५ ॥

रा० टी०–सेति । पुत्रे मेघनादे यज्ञप्रवृत्ते सति मयि च अन्तर्जलोषिते सति तपोर्थमिति शेषः यः कुम्भकर्णः तस्मिन्निद्रामनुभवति सति राक्षसश्रेष्ठान्निहत्य मधुना राक्षसेन सानला हृता श्लोकद्वयमेकान्वयि ॥ २५ ॥ २६ ॥

गो० टी०–सेति । यज्ञप्रमत्तः यज्ञेन प्रमत्तः । विस्मृतस्वगृहकृत्य इत्यर्थः । अन्तर्जलोषित इति तपोर्थमिति शेषः ॥ २५ ॥

२६ ] ति० टी०–इह संमतान् । प्रसिद्धान्स्थितांश्चेत्यर्थः ॥ २६ ॥

गो० टी०–कुम्भकर्ण इति । इह गृहे । वर्तमानानिति शेषः । सम्मतान् सिद्धान् ॥ २६ ॥

२७ ] ति० टी०–मधोः स्वसृहरणं श्रुत्वाप्यस्माभिः क्षान्तमेव, न तु स हतः ॥ २७ ॥

रा० टी०–धर्षयित्वेति । अन्तःपुरे गुप्तापि धर्षयित्वा हृतेति श्रुत्वापि यस्मात्कन्या भर्त्रे दातव्या तस्मादस्माभिः क्षान्तमेव स मधुर्न हतः सार्द्धश्लोक एकान्वयी ॥ २७ ॥

गो० टी०–धर्षयित्वेति । श्रुत्वा चैवं मधुना स्वसृहरणं मत्वा अस्माकं क्षान्तमेव न तु मधुर्हतः ॥ २७ ॥

२८ ] ति०टी०–कुतस्तत्राह–यस्मादिति । भ्रातृभिरिति गुरुपरम् । तदेतद्ब्राह्मादिन्यायविधिं विना बलात्कन्याहरणरूपम् । अस्य कर्मणः परदारहरणरूपस्य पापस्य ॥ २८ ॥

रा० टी०–तदिति । अस्य दारापहरणरूपस्य कर्मणः एतत्स्वभगिनीहरणजनितोपहासरूपं फलमस्मिन्नेव लोके त्वयाभिसंप्राप्तमिति ते विदितमस्तु ॥ २८ ॥

गो० टी०–यस्मादिति । भ्रातृभिरस्माभिरित्यर्थः । तदिति । आहूय कल्याणपूर्वकं कन्यादानं विना बलात् कन्याग्रहणम् अस्य पापस्य कर्मणः फलम् ॥ २८ ॥

२९ ] ति० टी०–अस्मिन्नेवास्मिन्क्षण एव । अभिसंप्राप्तं फलत्वेन प्राप्तं ते इदं कर्म तत्कालं तत्फलप्राप्तिश्च लोके विदितमस्तु । परदारहरणस्य झटिति फलदतेति ज्ञात्वा लोकस्ततो निवर्त्स्यत इति भावः ॥ २९ ॥

रा० टी०–विभीषणेति । रावणो विभीषणवचः श्रुत्वा तप्ताम्भास्सागर इव आत्मना कृतेन दौरात्म्येन उद्धूतः ॥२९॥

गो० टी०–अस्मिन्निति । अस्मिन्नेव दृष्टान्ते अभिसंप्राप्तम् अतः परमन्यत्रापि लोके विदितमस्तु ॥ २९–३१ ॥

३०–३१ ] ति० टी०–आत्मना कृतेन दौरात्म्येनोद्धतः पीडितस्तप्ताम्भाः सागर इव जात. । अतितप्तो जात इत्यर्थः ॥ ३० ॥ ३१ ॥

रा० टी०–तत इति । दशग्रीवोऽब्रवीत् तदाकारमाह मे रथः कल्प्यताम् ॥ ३० ॥

रा० टी०–भ्रातेति । कुम्भकर्णादयः वाहनान्यधिरोहन्तु ॥ ३१ ॥

३२ ] ति० टी०–रावणनिर्भयं रावणान्निर्भयम् ॥ ३२ ॥

रा० टी०–अद्येति । रावणान्निर्गतं भयं यस्य तं मधुं हत्वा युद्धकांक्षी अहं सुरलोकं गमिष्यामि ॥ ३२ ॥

गो० टी०–अद्येति । रावणान्निर्भयो रावणनिर्भयः ३२-४०

३३ ] ति० टी०–अग्र्याणि मुख्यानि ॥ ३३ ॥

रा० टी०–अक्षौहिणीति । अग्र्याणि मुख्यानि चत्वारि अक्षौहिणीसहस्राणि निर्ययुः ॥ ३३ ॥

१ कर्णे इति गो. पा. । २ सात्विति गो. पा. । ३ तप्ताम्भ इति गो. पा. ।

नानाप्रहरणान्याशु निर्ययुर्युद्धकाङ्क्षिणाम् । इन्द्रजित्त्वग्रतः सैन्यात्सैनिकान्परिगृह्य च ॥ ३४ ॥
जगाम रावणो मध्ये कुम्भकर्णश्च पृष्ठतः । विभीषणश्च धर्मात्मा लङ्कायां धर्ममाचरन्[1] ॥ ३५ ॥
शेषाः सर्वे महाभागा ययुर्मधुपुरं प्रति । खरैरुष्ट्रैर्हयैर्दीप्तैः शिंशुमारैर्[2]महोरगैः ॥ ३६ ॥
राक्षसाः प्रययुः सर्वे कृत्वाकाशं निरन्तरम् । दैत्याश्च शतशस्तत्र कृतवैराश्च दैवतैः ॥ ३७ ॥
रावणं प्रेक्ष्य गच्छन्तमन्वगच्छन्हि पृष्ठतः । स तु गत्वा मधुपुरं प्रविश्य च दशाननः ॥ ३८ ॥
न ददर्श मधुं तत्र भगिनीं तत्र दृष्टवान् । सा च प्रह्वाञ्जलिर्भूत्वा शिरसा चरणौ गता ॥ ३९ ॥
तस्य राक्षसराजस्य त्रस्ता कुम्भीनसी तदा । तां समुत्थापयामास न भेतव्यमिति ब्रुवन् ॥ ४० ॥
रावणो राक्षसश्रेष्ठः किं चापि करवाणि ते । साब्रवीद्यदि मे राजन्प्रसन्नस्त्वं महाभुज ॥ ४१ ॥
भर्तारं न ममेहाद्य हन्तुमर्हसि मानद । नहीदृशं भयं किंचित्कुलस्त्रीणामिहोच्यते ॥ ४२ ॥
भयानामपि सर्वेषां वैधव्यं व्यसनं महत् । सत्यवाग्भव राजेन्द्र मामवेक्षस्व याचतीम् ॥ ४३ ॥
त्वयाप्युक्तं महाराज न भेतव्यमिति स्वयम् । रावणस्त्वब्रवीद्धृष्टः स्वसारं तत्र संस्थिताम् ॥ ४४ ॥
क्व चासौ तव भर्ता वै मम शीघ्रं निवेद्यताम् । सह तेन गमिष्यामि सुरलोकं जयाय[3] हि ॥ ४५ ॥
तव कारुण्यसौहार्दान्निवृत्तोऽस्मि मधोर्वधात् । इत्युक्ता सा समुत्थाप्य प्रसुप्तं तं निशाचरम् ॥ ४६ ॥
अब्रवीत्संप्रहृष्टेव राक्षसी सा पतिं वचः । एष प्राप्तो दशग्रीवो मम भ्राता महाबलः ॥ ४७ ॥
सुरलोकजयाकाङ्क्षी साहाय्ये त्वां वृणोति च । तदस्य त्वं सहायार्थं सबन्धुर्गच्छ राक्षस ॥ ४८ ॥

---

३४ ] ति० टी०—सैन्यादग्रतः सर्वसैन्यस्य पुरस्तात्सेनासमवेताः सैनिकास्तान्परिगृह्य ययौ ॥ ३४ ॥

रा० टी०—इन्द्रजिदिति । इन्द्रजित्सैनिकान् परिगृह्य सैन्यादग्रतो जगाम रावणो मध्ये जगाम कुम्भकर्णस्तु पृष्ठतो जगाम ॥ ३४ ॥

३५–३८ ] ति० टी०—कुम्भकर्णस्तद्दिने दैवाल्लब्धजागरो युद्धाय निर्गत इति बोध्यम् । लङ्कायां धर्ममाचरन् । तत्रैव स्थि इत्यर्थः ॥ ३५–३८ ॥

.[illegible]० टी०—विभीषण इति । विभीषणस्तु लङ्कायां धर्ममाचरत् शेषाः मधुपुरं प्रति ययुः ॥ ३५ ॥

रा० टी०—खरैरिति । राक्षसाः खरादिभिराकाशं निरन्तरं कृत्वा प्रययुः ॥ ३६ ॥

रा० टी०—दैत्या इति । दैत्याः गच्छन्तं रावणमन्वगच्छन् ॥ ३७ ॥

रा० टी०—स इति । दशाननो मधुपुरं प्रविश्य भगिनीं दृष्टवान् मधुं तु न ददर्श ॥ ३८ ॥

३९ ] ति० टी०—प्रह्वाञ्जलिः कृतनम्रत्वचिह्नाञ्जलिः ॥ ३९ ॥

रा० टी०—सेति । कुम्भीनसी प्रह्वांजलिर्भूत्वा शिरसा राक्षसराजस्य चरणौ गताभवदिति शेषः ॥ ३९ ॥

४० ] ति० टी०—तां पादपतितां स्वसारं कुम्भीनसीमुत्थापयामास ॥ ४० ॥

रा० टी०—तामिति । न भेतव्यमिति ते किं करवाणीति च ब्रुवन् रावणस्तां कुम्भीनसीमुत्थापयामास ॥ ४० ॥

४१ ] ति० टी०—किं चापीति । अन्यदपि प्रियमित्यर्थः ॥ ४१ ॥

रा० टी०—सेति । सा कुम्भीनसी अब्रवीत् तदाकारमाह यदि त्वं प्रसन्नः तर्हि मम भर्तारं हन्तुं नार्हसि ॥ ४१ ॥

गो० टी०—रावण इति । अन्यदपि तव प्रियमित्यर्थः ॥ ४१

४२–४८ ] ति० टी०—ईदृशं भयं भर्तृवधसमानम् ॥ ४२-४८

रा० टी०—हननाभावे हेतुमाह—नेति । सर्वेषां भयानां तद्धेतूनां मध्ये वैधव्यं महद्व्यसनं भयहेतुः अतः ईदृशं पतिहननसदृशं भयं कुलस्त्रीणां किञ्चिन्नोच्यते ॥ ४२ ॥

गो० टी०—न हीति । ईदृशं भयं भर्तृवधसंभवं भयमित्यर्थः ॥ ४२ ॥

रा० टी०—सत्यवागिति । यतो न भेतव्यमिति त्वयोक्तमतस्सत्यवाग्भव अत एव याचतीं याचन्तीं मामवेक्षस्व मत्प्रार्थितं देहीत्यर्थः ॥ ४३ ॥

रा० टी०—रावण इति । रावणस्त्वसारमब्रवीत् तदाकारमाह तव भर्ता क्वास्तीति मम शीघ्रं निवेद्यताम् ॥ ४४ ॥

रा० टी०—वधशंकामपाकुर्वन् तत्प्रयोजनमाह—सहेति । तव कारुण्यसौहार्दहेतोर्मधोर्वधान्निवृत्तो योहं सोहं तेन मधुना सह जयाय सुरलोकं गमिष्यामि ॥ ४५ ॥

रा० टी०—इतीति । सा कुम्भीनसी प्रसुप्तं निशाचरं पतिं समुत्थाप्य अब्रवीत् ॥ ४६ ॥

रा० टी०—तदाकारमाह—एष इति । सुरलोकजयाकांक्षी प्राप्तो दशग्रीवस्साहाय्ये त्वां वृणोति ॥ ४७ ॥

---

१ आचरदिति गो. रा. पा. । २ शिंशिति गो. पा. । ३ जयावहे इति गो. पा. ।

स्निग्धस्य भजमानस्य युक्तमर्थाय कल्पितुम् । तस्यास्तद्वचनं श्रुत्वा तथेत्याह मधुर्वचः ॥ ४९ ॥
ददर्श राक्षसश्रेष्ठं यथान्यायमुपेत्य सः । पूजयामास धर्मेण रावणं राक्षसाधिपम् ॥ ५० ॥
प्राप्य पूजां दशग्रीवो मधुवेश्मनि वीर्यवान् । तत्र चैकां निशामुष्य गमनायोपचक्रमे ॥ ५१ ॥
ततः कैलासमासाद्य शैलं वैश्रवणालयम् । राक्षसेन्द्रो महेन्द्राभः सेनामुपनिवेशयत् ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

---

## षड्विंशः सर्गः ।

रावणेनाकामापि रम्भा धर्षणं प्राप्ता मनसा वृतं नलकूबरं पतिं गत्वा तमुदन्तं न्यवेदयत तच्छ्रुत्वा नलकूबरोऽपि इतः प्रभृति स यद्यकामां धर्षयेत्तर्हि तस्य मूर्धा सप्तधा शकलीभवेदिति जलं गृहीत्वा शशाप तम् तद्दशग्रीवः श्रुत्वा ततः प्रभृति नाकामामभ्यरोचयत्तेनापहृतानामितरस्त्रीणां महान्मोदः प्राप्तः ।

स तु तत्र दशग्रीवः सह सैन्येन वीर्यवान् । अस्तं प्राप्ते दिनकरे निवासं समरोचयत् ॥ १ ॥
उदिते विमले चन्द्रे तुल्यपर्वतवर्चसि । प्रसुप्तं सुमहत्सैन्यं नानाप्रहरणायुधम् ॥ २ ॥
रावणस्तु महावीर्यो निषण्णः शैलमूर्धनि । स ददर्श गुणांस्तत्र चन्द्रपादपशोभितान् ॥ ३ ॥
कर्णिकारवनैर्दीप्तैः कदम्बबकुलैस्तथा । पद्मिनीभिश्च फुल्लाभिर्मन्दाकिन्या जलैरपि ॥ ४ ॥
चम्पकाशोकपुंनागमन्दारतरुभिस्तथा । चूतपाटललोध्रैश्च प्रियङ्ग्वर्जुनकेतकैः ॥ ५ ॥

---

रा० टी०–तदिति । स्निग्धस्य स्नेहविशिष्टस्य अत एव भजमानस्य अर्थाय अर्थं कल्पयितुं युक्तं तत्तस्माद्धेतोः अस्य रावणस्य सहायार्थं सबन्धुस्त्वं गच्छ ॥ ४८ ॥

गो०टी०–सत्यवाग् भवेति । न भेतव्यमिति वचनं सत्यं कुर्वित्यर्थः ॥ ४३–४९ ॥

४९ ] ति० टी०–अर्थाय प्रयोजनाय कल्पयितुं साहाय्यं संपादयितुं युक्तम् । स्निग्धस्य मत्प्रेक्षया त्वयि स्निग्धस्य । भजमानस्य त्वयि जामातृभावं भजतः ॥ ४९ ॥

रा० टी०–तस्या इति । मधुः तथेति वच आह अर्द्धं पृथक् ॥ ४९ ॥

५०–५२ ] ति० टी०–यथान्यायमुपचारपूर्वम् ५०–५२

इतिश्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

रा० टी०–ददर्शेति । स मधुः यथान्यायमुपेत्य ददर्श पूजयामास च अर्धद्वयमेकान्वयि ॥ ५० ॥

रा० टी०–प्राप्येति । दशग्रीवः मधुवेश्मनि पूजां प्राप्य तत्रैकां निशामुष्य गमनायोपचक्रमे ॥ ५१ ॥

रा० टी०–तत इति । राक्षसेन्द्रः वैश्रवणालयं कैलासं शैलमासाद्य सेनामुपनिवेशयत् उपन्यवेशयत् ॥ ५२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चविंशः सर्गः ॥ २५ ॥

गो० टी०–ददर्शेति । यथान्याय्यमिति अर्घ्याद्युपचारमित्यर्थः ॥ ५०–५२ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चविंशः सर्गः ॥ २५ ॥

---

१ ] ति० टी०–अथ रावणस्य नलकूबरशापप्राप्तिः—स तु तत्रेति ॥ १ ॥

रा० टी०–सेनोपनिवेशानन्तरकालिकं वृत्तान्तमाह—स इत्यादिभिः । दशग्रीवो दिनकरे अस्तं प्राप्ते सति निवासमरोचयत् ॥ १ ॥

२ ] ति० टी०–तुल्यपर्वतवर्चसि स्वनिविष्टकैलासपर्वततुल्यप्रभे ॥ २ ॥

रा० टी०–उदित इति । अतुल्यः रावणेन तोलयितुमशक्यो यः कैलासः तद्वद्वर्चो यस्य तस्मिन् चन्द्रे उदिते सति सैन्यं प्रसुप्तम् ॥ २ ॥

गो० टी०–उदित इति । तुल्यपर्वतवर्चसि स्वनिविष्टकैलासवत्तुल्याभे ॥ २ ॥

३ ] ति० टी०–गुणान्कैलासपर्वतीयसकलकामभोगार्हधर्मान् ॥ ३ ॥

रा० टी०–रावण इति । शैलमूर्धनि निषण्णो रावणः चन्द्रैः पादपैश्च शोभितान् गुणान् कैलासावयवान् ददर्श ॥ ३ ॥

गो० टी०–रावण इति । गुणान् भोगार्हधर्मान् ॥ ३ ॥

४–५ ] ति० टी०–पद्मिन्यः सरांसि तासां फुल्लत्वं तत्कालोचितविकासवत्कह्लारादिभिर्बोध्यम् ॥ ४ ॥ ५ ॥

तगरैर्नारिकेरैश्च प्रियालपनसैस्तथा । ( औरग्वधैस्तमालैश्च प्रियालवकुलैरपि ) ॥
एतैरन्यैश्च तरुभिरुद्भासितवनान्तरे ॥ ॥ ६ ॥
किंनरा मदनेनार्ता रक्ता मधुरकण्ठिनः । समं संप्रजगुर्यत्र मनस्तुष्टिविवर्धनम् ॥ ७ ॥
विद्याधरा मदक्षीबा मदरक्तान्तलोचनाः । योषिद्भिः सह संक्रान्ताश्चिक्रीडुर्जहृषुश्च वै ॥ ८ ॥
घण्टानामिव संनादः शुश्रुवे मधुरस्वनः । अप्सरोगणसङ्घानां गायतां धनदालये ॥ ९ ॥
पुष्पवर्षाणि मुञ्चन्तो नगाः पवनताडिताः । शैलं तं वासयन्तीव मधुमाधवगन्धिनः ॥ १० ॥
मधुपुष्परजःपृक्तं गन्धमादाय पुष्कलम् । प्रववौ वर्धयन्कामं रावणस्य सुखोऽनिलः ॥ ११ ॥
गेयात्पुष्पसमृद्ध्या च शैत्याद्वायोर्गिरेर्गुणात् । प्रवृत्तायां रजन्यां च चन्द्रस्योदयनेन च ॥ १२ ॥
रावणः स महावीर्यः कामस्य वशमागतः । विनिःश्वस्य विनिःश्वस्य शशिनं समवैक्षत ॥ १३ ॥
एतस्मिन्नन्तरे तत्र दिव्याभरणभूषिता । सर्वाप्सरोवरा रम्भा पूर्णचन्द्रनिभानना ॥ १४ ॥
दिव्यचन्दनलिप्ताङ्गी मन्दारकृतमूर्धजा । दिव्योत्सवकृतारम्भा दिव्यपुष्पविभूषिता ॥ १५ ॥
चक्षुर्मनोहरं पीनं मेखलादामभूषितम् । समुद्वहन्ती जघनं रतिप्राभृतमुत्तमम् ॥ १६ ॥
कृतैर्विशेषकैरार्द्रैः षडर्तुकुसुमोद्भवैः । बभावन्यतमेव श्रीः कान्तिश्रीद्युतिकीर्तिभिः ॥ १७ ॥

रा० टी०—कर्णिकारेति । कर्णिकारवनादिभिः उद्भासितं प्रकाशितं वनान्तरं यस्य तस्मिन्शैले मदनेनार्ताः किंनराः समं संप्रजगुः यत्र यस्मिन्गाने मनस्तुष्टिविवर्धनं भवतीति शेषः श्लोकचतुष्टयमेकान्वयि ॥ ४–७ ॥

गो० टी०—कर्णिकारेति । कदम्बगहनैः कदम्बवनैः॥४-६

६ ] ति० टी०—ईदृशे वनान्तरे प्रजगुरित्यन्वयः ॥ ६ ॥

गो० टी०—एतैरिति । रक्ता रागयुक्ताः । मधुरकण्ठिनः मधुरकण्ठध्वनयः । समं स्त्रीभिरिति शेषः ॥ ६–९ ॥

७–९ ] ति० टी०—रक्ता रागयुक्ताः । मधुरकण्ठिनो मधुरकण्ठध्वनयः समम् स्त्रीभिरिति शेषः । यत्र कैलासे ॥७–९॥

रा० टी०—विद्येति । मदेन क्षीबाः मत्ताः योषिद्भिस्सह संक्रान्ताः मिलिताः विद्याधराः चिक्रीडुर्जहृषुश्च ॥ ८ ॥

रा० टी०—घण्टानामिति । धनदालये गायतामप्सरोगणसंघानां घण्टानां सन्नाद इव मधुरस्वनः शुश्रुवे ॥ ९ ॥

१० ] ति० टी०—वासयन्त्यधिवासयन्ति सुगन्धं कुर्वन्ति । मधुमाधवगन्धिनो वसन्तीयसर्वपुष्पसुगन्धयः ॥ १० ॥

रा० टी०—पुष्पेति । पवनेन ताडिताः प्रकम्पिताः अत एव पुष्पवर्षाणि मुञ्चन्तः अत एव मधुना अनेकपुष्परसेन युक्तो यो माधवो वसन्तः तस्मिन्निव गन्धो येषां ते नगाः वृक्षाः तं शैलं वासयन्तीव ॥ १० ॥

गो० टी०—पुष्पवर्षाणीति । वासयन्ति अधिवासयुक्तं कुर्वन्ति । मधुमाधवगन्धिनः नित्यमेव मधुमाधवाभ्यां चैत्रवैशाखाभ्यां वसन्तमासाभ्यां गन्धिनः तत्कृतपुष्पगन्धा इत्यर्थः॥१०

११–१४ ] ति० टी०—मधुना मकरन्देन पुष्परजसा पृक्तं मिलितम् ॥ ११–१४ ॥

रा० टी०—मध्विति । अनिलः मधुपुष्परजोभ्यां पृक्तं संयुक्तं गंधमादाय रावणस्य कामं वर्द्धयन् सन् प्रववौ ॥११॥

रा० टी०—गेयादिति । रजन्यां प्रवृत्तायां सत्यां गेयात् गानात् पुष्पसमृद्ध्यादिभ्यश्च चन्द्रस्योदयनेन च कामस्य वशमागतो रावणो विनिःश्वस्य विनिःश्वस्य शशिनं समवैक्षत श्लोकद्वयमेकान्वयि ॥ १२–१३ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे सर्वाप्सरोभ्यो वरा मन्दारैः कल्पतरुकुसुमैः कृता अलंकृता मूर्द्धजाः यस्याः दिव्योत्सवाय कृतः आरम्भो यया रतिप्राभृतं रतेः उपायनभूतं मनोहरं चक्षुः पीनं जघनं च समुद्वहन्ती रम्भा कृतै रचितैः विशेषकैः हरिचन्दनादिकृतकपोलादिचित्रविशेषैः षडृतुकुसुमोद्भवैरार्द्रैर्हारैश्च कान्त्यादिभिश्च अन्यतमा अन्या श्रीरिव बभौ तत्र कान्तिः शरीरशोभा श्रीराभरणसंपत्तिः द्युतिः प्रकाशविशेषः षडर्त्वित्यत्र गुण आर्षः श्लोकचतुष्टयमेकान्वयि ॥ १४–१७ ॥

गो० टी०—मध्विति । मधुपुष्परजःपृक्तं मधुना मकरन्देन पुष्परजसा च संपृक्तम् ॥ ११–१४ ॥

१५ ] ति० टी०—मन्दारैरिति । मन्दारैः कल्पवृक्षकुसुमैः कृतालंकारा मूर्धजाः कचा यस्याः सा । दिव्योत्सवाय दिव्यरतये कृत आरम्भो गमनरूपो यया ॥ १५ ॥

१६ ] ति० टी०—रतिप्राभृतं रत्युपायनभूतम् ॥ १६ ॥

गो० टी०—दिव्येति । मन्दारकृतमूर्धजा मन्दारपुष्पकृतालंकारकेशीत्यर्थः । रतिप्राभृतं रत्युपदाभूतं रतिवर्धकमित्यर्थः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—विशेषकैर्हरिचन्दनादिकल्पितैः कपो-

१ कैकेरिति गो. रा. पा. । २ इदमर्धमधिकं गो. पुस्त. । ३ स्विति गो. पा. । ४ दिव्यपुष्पविभूषितेति गो. पा. । ५ पूर्णचन्द्रनिभाननेति गो. पा. । ६ श्रीकान्तीति समस्तो गो. पु. ।

नीलं सतोयमेघाभं वस्त्रं समवगुण्ठिता । यस्या वक्त्रं शशिनिभं भ्रुवौ चापनिभे शुभे ॥ १८ ॥
ऊरू करिकराकारौ करौ पल्लवकोमलौ । सैन्यमध्येन गच्छन्ती रावणेनोपलक्षिता ॥ १९ ॥
तां समुत्थाय गच्छन्तीं कामबाणवशं गतः । करे गृहीत्वा लज्जन्तीं स्मयमानोऽभ्यभाषत ॥ २० ॥
क्व गच्छसि वरारोहे कां सिद्धिं भजसे स्वयम् । कस्याभ्युदयकालोऽयं यस्त्वां समुपभोक्ष्यते ॥२१॥
त्वदाननरसस्याद्य पद्मोत्पलसुगन्धिनः । सुधामृतरसस्येव कोऽद्य तृप्तिं गमिष्यति ॥ २२ ॥
स्वर्णकुम्भनिभौ पीनौ शुभौ भीरु निरन्तरौ । कस्योरस्थलसंस्पर्शं दास्यतस्ते कुचाविमौ ॥ २३ ॥
सुवर्णचक्रप्रतिमं स्वर्णदामचितं पृथु । अध्यारोक्ष्यति कस्तेऽद्य जघनं स्वर्गरूपिणम् ॥२४॥
मद्विशिष्टः पुमान्कोऽद्य शक्रो विष्णुरथाश्विनौ । मामतीत्य हि यच्च त्वं यासि भीरु न शोभनम् ॥२५॥
विश्रम त्वं पृथुश्रोणि शिलातलमिदं शुभम् । त्रैलोक्ये यः प्रभुश्चैव मदन्यो नैव विद्यते ॥ २६ ॥
तदेवं प्राञ्जलिः प्रह्वो याचते त्वां दशाननः । भर्तुर्भर्ता विधाता च त्रैलोक्यस्य भजस्व माम् ॥२७॥
एवमुक्ताब्रवीद्रम्भा वेपमाना कृताञ्जलिः । प्रसीद नार्हसे वक्तुमीदृशं त्वं हि मे गुरुः ॥ २८ ॥

लादिषु चित्रकैः षडर्तुकुसुमोद्भवैः गुण आर्षः । षड्ऋतुकुसुमकल्पितैरलंकारैः कान्त्या प्रत्यवयवशोभारूपसौन्दर्येण श्रियाभरणसंपदा द्युत्या लावण्येन कीर्त्या च । अन्यतमा स्वार्थे तमैः । अन्या श्रीरिव लक्ष्मीरिव बभावित्यर्थः ॥ १७ ॥

गो०टी०—कृतैरिति । षडर्तुकुसुमोद्भवैः षड्ऋतुकुसुमोद्भवैरित्यर्थः । ऋकारस्य गुणश्छान्दसः । विशेषकैरलंकारैरित्यर्थः १७

१८-१९ ] ति० टी०—समवगुण्ठिता प्राप्ततवती ॥ १८ ॥ १९ ॥

रा० टी०—नीलमिति । यस्या वक्त्रं शशिनिभं करौ पल्लववत्कोमलौ सा सतोयमेघाभं नीलं वस्त्रं समवगुंठिता धृतवती सैन्यमध्येन गच्छन्ती रंभा रावणेनोपलक्षिताभवदिति शेषः श्लोकद्वयमेकान्वयि ॥ १८ ॥ १९ ॥

गो० टी०—बभाविति । श्रीकान्तिद्युतिमती ह्रिया देवस्त्रीविशेषाणामन्यतमेव स्थिता । अभिसारत्वेन नीलवस्त्रमादाय समवकुण्ठिता प्राप्तवती ॥ १८—२० ॥

२० ] ति० टी०—गच्छन्तीं तां समुत्थाय करे गृहीत्वाभ्यभाषतेत्यन्वयः ॥ २० ॥

रा० टी०—तामिति । कामबाणवशं गतो रावणः समुत्थाय गच्छन्तीं तां रम्भां करे गृहीत्वा स्मयमानस्सन् अभ्यभाषत ॥ २० ॥

२१ ] ति० टी०—कां सिद्धिं कस्य संभोगसिद्धिम् ॥ २१ ॥

रा० टी०—तदाकारमाह—क्वेत्यादिभिः । कां किंसंबंधिनीं सिद्धिं भोगसंपत्तिं भजसे पूरयसि यस्त्वां भोक्ष्यते तस्य कस्यायमभ्युदयकालः अन्तर्भावितणिजर्थो भजिः॥२१॥

गो० टी०—क्वेति । कां सिद्धिं कस्य भोगसिद्धिमित्यर्थः । सुधामृतरसस्येव अमृतादमृतरसस्येवेत्यर्थः । तृप्तियोगे षष्ठी ॥ २१—२३ ॥

२२-२३ ] ति० टी०—आननरसस्य । अधरामृतेनेत्यर्थः ॥ २२ ॥ २३ ॥

रा० टी०—त्वदिति । त्वदाननरसस्य त्वदाननरसैः कस्तृप्तिं गमिष्यति किञ्च सुधामृतरसस्येव त्वदाननरसस्य उपभोक्ता कः तृप्तिं गमिष्यति न कोपीत्यर्थः ॥ २२ ॥

रा० टी०—स्वर्णेति । निरन्तरौ संश्लिष्टावित्यर्थः इमौ ते कुचौ कस्य जनस्य उरःस्थलसंस्पर्शं यथा भवति तथा दास्यतः ॥ २३ ॥

२४ ] ति० टी०—स्वर्गरूपिणं स्वर्गो निरतिशयसुखं तस्य रूपं यस्यास्ति । निरतिशयसुखहेतुभूतमित्यर्थः ॥ २४ ॥

रा० टी०—सुवर्णेति । सुवर्णचक्रप्रतिमं सुवर्णचक्रेण सदृशं स्वर्णदाम्नेव चितं रचितम् स्वर्गरूपिणमतिशयसुखस्वरूपं ते जघनं कोऽध्यारोक्ष्यति ॥ २४ ॥

२५ ] ति० टी०—यत्त्वं यासि तन्न शोभनमित्यन्वयः ॥ २५ ॥

रा० टी०—मदिति । मद्विशिष्टः शक्राद्यन्यतमः कः न कोपीर्थः । अतः मामतीत्य यत्त्वं यासि तन्न शोभनम् ॥ २५ ॥

२६ ] ति० टी०—त्रैलोक्ये यः प्रभुः स्यात्स मदन्यो नैवेत्यर्थः । तेन त्रैलोक्यप्रभोर्ममान्यार्थमुपेक्षा न युक्तेति भावः २६

रा० टी०—विश्रमेति । त्रैलोक्ये यः प्रभुः स मदन्यो न विद्यते अहमेव प्रभुरित्यर्थः अतः यदिदं शिलातलं तत्र त्वं विश्रम ॥ २६ ॥

२७-२८ ] ति० टी०—त्रैलोक्यस्य भर्तुरपि भर्ता विधाता च । तं मां भजस्वेत्यर्थः ॥ २७ ॥ २८ ॥

रा० टी०—तदिति । त्रैलोक्यस्य भर्तुः स्वामिनोपि भर्ता स्वामी अत एव विधाता पालयिता दशाननः त्वां याचते अतो मां भजस्व ॥ २७ ॥

रा० टी०—एवमिति । रम्भा अब्रवीत् तदाकारमाह

—१ वीक्षितेति गो. पा. । २ आरोहतीति गो. पा. । ३ इदं चिन्त्यं " यदन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावद्विबहुविषये निर्धारणे वर्तेते इति सिद्धान्तकौमुदी । ४ कर्मत्वेनैवान्वयोपपत्तौ व्याख्यातृविवक्षितक्रियाविशेषणत्वं मृग्यफलं क्लिष्टकल्पनप्रस्तमित्यपि भाति ।

अन्येभ्योऽपि[1] त्वया रक्ष्या प्राप्नुयां धर्षणं यदि । तद्धर्मतः स्नुषा तेऽहं तत्त्वमेतद्ब्रवीमि ते ॥ २९ ॥
अथाब्रवीद्दशग्रीवश्चरणाधोमुखीं स्थिताम् । रोमहर्षमनुप्राप्तां दृष्टमात्रेण तां तदा ॥ ३० ॥
सुतस्य यदि मे भार्या ततस्त्वं हि स्नुषा भवेः । बाढमित्येव सा रम्भा प्राह रावणमुत्तरम् ॥ ३१ ॥
धर्मतस्ते सुतस्याहं भार्या राक्षसपुंगव । पुत्रः प्रियतरः प्राणैर्भ्रातुर्वैश्रवणस्य ते ॥ ३२ ॥
विख्यातस्त्रिषु लोकेषु नलकूबर इत्ययम् । धर्मतो यो भवेद्विप्रः क्षत्रियो वीर्यतो भवेत् ॥ ३३ ॥
क्रोधाद्यश्च भवेदग्निः क्षान्त्या च वसुधासमः । तस्यास्मि कृतसंकेता लोकपालसुतस्य वै ॥ ३४ ॥
तमुद्दिश्य तु मे सर्वं विभूषणमिदं कृतम् । यथा तस्य हि नान्यस्य भावो मां प्रति तिष्ठति ३५
तेन सत्येन मां राजन्मोक्तुमर्हस्यरिंदम । स हि तिष्ठति धर्मात्मा मां प्रतीक्ष्य समुत्सुकः॥३६॥
तत्र विघ्नं तु[3] तस्येह कर्तुं नार्हसि मुञ्च माम् । सद्भिराचरितं मार्गं गच्छ राक्षसपुंगव ॥ ३७ ॥
माननीयो मम त्वं हि पालनीया तथास्मि ते । एवमुक्तो दशग्रीवः प्रत्युवाच विनीतवत् ॥ ३८ ॥
स्नुषास्मि यदवोचस्त्वमेकपत्नीष्वयं क्रमः । देवलोकस्थितिरियं सुराणां शाश्वती मता ॥ ३९ ॥
पतिरप्सरसां नास्ति न चैकस्त्रीपरिग्रहः । एवमुक्त्वा स तां रक्षो निवेश्य च शिलातले॥ ४० ॥

गुरू राजा त्वमीदृशं वक्तुं नार्हसे अतः त्वं प्रसीद एवं न वदेत्यर्थः ॥ २८ ॥

२९ ] ति० टी०—अन्येभ्योऽपि यदि धर्षणं प्राप्नुयां तदापि त्वया रक्ष्या, अत एवं वक्तुं नार्हसि ॥ २९ ॥

रा० टी०—अन्येभ्यं इति । यस्मात् तेऽहं धर्मतः स्नुषा इति सत्यं ब्रवीमि तस्माद्यदि अन्येभ्योपि धर्षणं प्राप्नुयाम् तदापि त्वया रक्ष्या ॥ २९ ॥

३० ] ति० टी०—चरणाधोमुखीं चरणावलोकनेनाधोमुखतया स्थिताम् ॥ ३० ॥

रा० टी०—अथेति । दशग्रीवः चरणाधोमुखीं चरणयोरध एव मुखं यस्यास्ताम् स्वचरणाग्रमात्रावलोकनकर्त्रीमित्यर्थः दृष्टमात्रेण रोमहर्षं भयहेतुकरोमोद्गममनुप्राप्तां रम्भामब्रवीत् ३०

३१ ] ति० टी०—सुतस्य । इन्द्रजित इत्यर्थः ॥ ३१ ॥

रा० टी०—तदाकारमाह—सुतस्येति । यदि मे सुतस्य भार्या त्वं भवेः ततस्तदा त्वं मे स्नुषा अतो बाढं त्वद्वचनमङ्गीकृतं तदा रम्भा रावणमुत्तरमाह ॥ ३१ ॥

३२ ] ति० टी०—धर्मतः संकेतधर्मतः ॥ ३२ ॥

रा० टी०—तदाकारमाह—धर्मत इति । ते सुतस्याहं भार्यास्मीति शेषः अहं पृथक् नतु कथं त्वं मत्पुत्रभार्येत्यत आह—पुत्र इत्यादिभिः । नलकूबरः इत्ययं यो विख्यातः ॥ ३२ ॥ ३३ ॥

३३ ] ति० टी०—धर्मतो धर्मानुष्ठानविषये ॥ ३३ ॥

रा० टी०—यः धर्मतो विप्रो भवेत् वीर्यतः क्षत्रियो भवेत् क्रोधाद्योग्निः क्षान्त्या यो वसुधासमः ते भ्रातुर्वैश्रवणस्य प्राणैः प्रियतरः पुत्रः तस्य लोकपालसुतस्य नलकूबरस्य कृतसंकेता रत्यर्थं संकेतवत्यस्मि अत एव तमुद्दिश्यैव कृतं रचितमिदं मे विभूषणमत एव यथा तस्य नलकूबरस्य भावः प्रेम मां प्रति तिष्ठति तथान्यस्य न श्लोकचतुष्टयमेकान्वयि ॥३४॥३५।

गो० टी०—धर्मत इति । धर्मतः धर्मानुष्ठानविषये ॥३४॥

३४ ] ति० टी०—कृतसंकेता कृतरतिसंकेता ॥ ३४ ॥

गो० टी०—तस्येति । कृतसंकेता । कृतरतिसंकेता यथा तस्य भावो मां प्रति नान्यस्य तथा ममापि भावस्तं प्रति तिष्ठतीत्यर्थः । स्नुषास्मि यदवोचः स्नुषास्मीति यदवोच इत्यर्थः ॥ ३५–४२ ॥

३५–३८ ] ति० टी०—यथा तस्य भावो मां प्रति तिष्ठति तथा ममापि भावस्तं प्रति तिष्ठतीति शेषः । नान्यस्य नान्यं प्रतीत्यर्थः ॥ ३५ ॥ ३८ ॥

३९ ] ति० टी०—स्नुषास्मि यदिति । स्नुषास्मीति यदवोच इत्यर्थः । देवलोकस्थितिर्देवलोकमर्यादा ॥ ३९ ॥

रा० टी०—तेनेति । धर्मात्मा नलकूबरः मां प्रतीक्ष्य तिष्ठति तेन नलकूबरकृतेन सत्येन मत्प्रतीक्षणेन मां मोक्तुमर्हसि तस्य सुतस्य विघ्नं कर्तुं नार्हसि अतो मां मुञ्च सार्द्धश्लोकद्वयमेकान्वयि ॥ ३६ ॥ ३७ ॥

रा० टी०—सद्भिरिति । सद्भिराचरितं मार्गं त्वं गच्छ त्वं तु मे माननीयोसि अहं तु ते पालनीयास्मि ॥ ३८ ॥

रा० टी०—एवमिति । दशग्रीवः प्रत्युवाच अर्धं पृथक् तदाकारमाह—स्नुषेति । यत्त्वं स्नुषास्मीत्यवोचः अयं क्रमः एकपत्नीषु एकपतिनिरूपितपत्नीत्वविशिष्टासु एव देवलोकस्थितिर्वृत्तन्तु अप्सरसां पतिर्नास्ति सुराणां च एकस्त्रीपरिग्रहो नास्ति इयं शाश्वती निरन्तरा मता सार्द्धश्लोक एकान्वयी ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—इयमितीदं शब्दार्थः—पतिरिति ।

१ हीति गो. पा. । २ पवेति गो. रा. पा. । ३ सुतस्येति गो. रा. पा. ।

कामभोगाभिसंरक्तो मैथुनायोपचक्रमे । सा विमुक्ता ततो रम्भा भ्रष्टमाल्यविभूषणा॥ ४१ ॥
गजेन्द्राक्रीडमथिता नदीवाकुलतां गता । लुलिताकुलकेशान्ता करवेपितपल्लवा ॥ ४२ ॥
पवनेनावधूतेव लता कुसुमशालिनी । सा वेपमाना लज्जन्ती भीता करकृताञ्जलिः॥ ४३ ॥
नलकूबरमासाद्य पादयोर्निपपात ह । तदवस्थां च तां दृष्ट्वा महात्मा नलकूबरः ॥ ४४ ॥
अब्रवीत्किमिदं भद्रे पादयोः पतितासि मे । सा वै निःश्वसमाना तु वेपमाना कृताञ्जलिः॥ ४५ ॥
तस्मै सर्वं यथातत्त्वमाख्यातुमुपचक्रमे । एष देव दशग्रीवः प्राप्तो गन्तुं त्रिविष्टपम् ॥ ४६ ॥
तेन सैन्यसहायेन निशेयं परिणामिता । आयान्ती तेन दृष्टास्मि त्वत्सकाशमरिंदम ॥ ४७ ॥
गृहीता तेन पृष्टास्मि कस्य त्वमिति रक्षसा । मया तु सर्वं यत्सत्यं तस्मै सर्वं निवेदितम् ॥ ४८ ॥
काममोहाभिभूतात्मा नाश्रौषीत्तद्वचो मम । याच्यमानो मया देव स्नुषा तेऽहमिति प्रभो॥ ४९ ॥
तत्सर्वं पृष्ठतः कृत्वा बलात्तेनास्मि धर्षिता । एवं त्वमपराधं मे क्षन्तुमर्हसि सुव्रत ॥ ५० ॥
नहि तुल्यं बलं सौम्य स्त्रियाश्च पुरुषस्य हि । एतच्छ्रुत्वा तु संक्रुद्धस्तदा वैश्रवणात्मजः ॥ ५१ ॥
धर्षणां तां परां श्रुत्वा ध्यानं संप्रविवेश ह । तस्य तत्कर्म विज्ञाय तदा वैश्रवणात्मजः ॥ ५२ ॥

---

अप्सरसां नियतः पतिर्नास्ति । सुराणामप्येकाप्सरःपरिग्रहो भार्यात्वेन नास्तीत्यर्थः ॥ ४० ॥

रा० टी०–एवमिति । रक्षो रावणः एवमुक्त्वा तां रम्भां शिलातले निवेश्य मैथुनायोपचक्रमे ॥ ४१ ॥

४१ ] ति० टी०–विमुक्ता । संभोगानन्तरमिति शेषः॥४१॥

रा० टी०–सेति । गजेन्द्राक्रीडेन मथिता नदीव आकुलतां गता लुलितेन प्रकम्पेन आकुला व्याप्ताः केशान्ता यस्याः करे वेपितः पल्लवः कमलं यस्याः अत एव भ्रष्टे प्रच्युते माल्यविभूषणे यस्याः सा रम्भा ततो रत्यनन्तरं विमुक्ताभवदिति शेषः सार्द्धश्लोक एकान्वयी ॥ ४२ ॥

गो० टी०–सा विमुक्तेति । संभोगानन्तरमिति शेषः। गजेन्द्राक्रीडमथिता गजेन्द्राक्रीडेन मथिता । करवेपितपल्लवा वेपितकरपल्लवा ॥ ४३--४७ ॥

४२–४६ ] ति० टी०–करवेपितपल्लवा वेपितकरपल्लवा ॥ ४२ ॥ ४६ ॥

रा० टी०–पवनेनेति । भीता अत एव पवनेनावधूता कुसुमशालिनी बहुकुसुमविशिष्टा लतेव वेपमाना लज्जन्ती करकृताञ्जलिस्सा रम्भा नलकूवरमासाद्य पादयोर्निपपात सार्द्धश्लोक एकान्वयी ॥ ४३ ॥ ४४ ॥

रा० टी०–तदिति । सा वर्णितावस्था यस्याः तां रम्भां दृष्ट्वा नलकूवरो मे पादयोः पतितासि इदं किमित्यब्रवीत् ॥ ४५ ॥

रा० टी०–सेति । निःश्वसमाना सा रम्भा तस्मै नलकूवराय यथातत्वमाख्यातुमुपचक्रमे ॥ ४६ ॥

रा० टी०–तदाकारमाह—एष इति । दशग्रीवः त्रिविष्टपं गन्तुं प्राप्तः सैन्यसहायेन तेन दशग्रीवेण इयं निशा परिणामिता यापिता मया सहेति शेषः ॥ ४७ ॥

गो० टी०–एष इति । परिणामिता यापितेत्यर्थः । इहेति शेषः ॥ ४८--५२ ॥

४७ ] ति० टी०–परिणामिता यापिता इहेति शेषः ॥ ४७ ॥

रा० टी०–तदाकारमाह—आयान्तीति । त्वत्सकाशमायान्ती अहं तेन रावणेन दृष्टास्मि अत एव तेन रक्षसा गृहीताहं कस्य त्वमिति पृष्टास्मि ॥ ४८ ॥

४८–५१ ] ति० टी०–अत्र सर्वपदस्य द्विरुपादानं भयवशान्न दोषाय ॥ ४८ ॥ ५१ ॥

रा० टी०–मयेति । यत्सत्यं तत् सर्वं मया तस्मै रावणाय निवेदितं काममोहाभिभूतात्मा रावणस्तु सर्वं तन्मम वचो नाश्रौषीत् ॥ ४९ ॥

रा० टी०–याच्यमान इति । तेऽहं स्नुषा इति मया याच्यमानो यो रावणस्तेन तत् मयार्चितं पृष्ठतः कृत्वा अनादृत्येत्यर्थः अभिधर्षितास्मि ॥ ५० ॥

रा० टी०–एवमिति । हि यतः स्त्रियाः पुरुषस्य बलं तुल्यं न तस्मादेवमुक्तप्रकारेण जातं मेऽपराधं क्षन्तुमर्हसि ॥५१॥

रा० टी०–एतदिति । वैश्रवणात्मजः एतच्छ्रुत्वा क्रुद्धोऽभवदिति शेषः अत एव धर्षणां श्रुत्वैव ध्यानं संप्रविवेश तत्सत्यत्वनिश्चयायेति शेषः ॥ ५२ ॥

गो० टी०–एतदिति । ध्यानं संप्रविवेशेति , एतदुक्तः सत्यो वाऽसत्यो वेति ज्ञातुमिति शेषः ॥ ५३ ॥ ५४ ॥

५२ ] ति० टी०–ध्यानं संप्रविवेश । एतदुक्तार्थः सत्योऽसत्यो वेति जिज्ञासार्थमिति भावः ॥ ५२ ॥

रा० टी०–तस्येति । वैश्रवणात्मजो मुहूर्तात् मुहूर्तमात्रध्यानात् तस्य रावणस्य तत्कर्म विज्ञाय निश्चित्य क्रोधताम्राक्षः सन् पाणिना तोयं जग्राह ॥ ५३ ॥

मुहूर्तात्क्रोधताम्राक्षस्तोयं जग्राह पाणिना । गृहीत्वा सलिलं सर्वमुपस्पृश्य यथाविधि॥ ५३ ॥ ॥
उत्ससर्ज तदा शापं राक्षसेन्द्राय दारुणम् । अकामा तेन यस्मात्त्वं बलाद्भद्रे प्रधर्षिता ॥ ५४ ॥
तस्मात्स युवतीमन्यां नाकामामुपयास्यति । यदा ह्यकामां कामार्तो धर्षयिष्यति योषितम्॥५५॥
मूर्धा तु सप्तधा तस्य शकलीभविता तदा । तस्मिन्नुदाहृते शापे ज्वलिताग्निसमप्रभे ॥ ५६ ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिश्च खाच्च्युता । पितामहमुखाश्चैव सर्वे देवाः प्रहर्षिताः ॥ ५७ ॥
ज्ञात्वा लोकगतिं सर्वां तस्य मृत्युं च रक्षसः । [ ऋषयः पितरश्चैव प्रीतिमापुरनुत्तमाम् ] ॥
श्रुत्वा तु स दशग्रीवस्तं शापं रोमहर्षणम् ॥ ॥ ५८ ॥
नारीषु मैथुनीभावं नाकामास्वभ्यरोचयत् । तेन नीताः स्त्रियः प्रीतिमापुः सर्वाः पतिव्रताः ॥
नलनूबरनिर्मुक्तं शापं श्रुत्वा मनःप्रियम् ॥ ॥ ५९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

## सप्तविंशः सर्गः ।

रावणमायान्तं वीक्ष्य भीतः शक्रस्तं जेतुं विष्णुं प्रार्थयत । स तु वरगर्वितस्यास्य न हननकालोऽयं प्राप्ते समये हनिष्याम्यतस्त्वमेव युध्यस्वेति प्रोवाच ततस्तयोः समरे घोरे वसुना सावित्राख्येन सुमाली राक्षसो हतः अन्येऽसुराश्च त्रस्ताः पलायन्त ।

कैलासं लङ्घयित्वा तु ससैन्यबलवाहनः । आससाद महातेजा इन्द्रलोकं दशाननः ॥ १ ॥
तस्य राक्षससैन्यस्य समन्तादुपयास्यतः । देवलोके बभौ शब्दो भिद्यमानार्णवोपमः॥ २ ॥
श्रुत्वा तु रावणं प्राप्तमिन्द्रश्चलित आसनात् । देवानथाब्रवीत्तत्र सर्वानेव समागतान् ॥ ३ ॥
आदित्यांश्च वसून्रुद्रान्साध्यांश्च समरुद्गणान् । सज्जा भवत युद्धार्थं रावणस्य दुरात्मनः ॥ ४ ॥
एवमुक्तास्तु शक्रेण देवाः शक्रसमा युधि । संनह्य सुमहासत्त्वा युद्धश्रद्धासमन्विताः ॥ ५ ॥

५३-५५ ] ति० टी०-सर्वमुपस्पृश्य । चक्षुरादीन्द्रियगणं सर्वमित्यर्थः ॥ ५३ ॥ ५५ ॥

रा० टी०-गृहीत्वेति । सलिलं गृहीत्वा यथाविध्युपस्पृश्य शापमुत्ससर्ज ॥ शापाकारमाह-अकामेति । यस्मात् अकामा त्वं तेन रावणेन प्रधर्षिता तस्मादन्यामकामां युवतीं स रावणो नोपयास्यति ॥ ५४ ॥ ५५ ॥

गो० टी०-गृहीत्वेति । उपस्पृश्य चक्षुरादीन्द्रियमिति शेषः ॥ ५५ ॥ ५६ ॥

रा० टी०-तत्र हेतुमाह—यदेति । कामार्तो रावणो यदा अकामां योषितं धर्षयिष्यति तदा तस्य रावणस्य मूर्द्धा सप्तधा शकलीभविता ॥ ५६ ॥

गो०टी०-यदेति। सप्तधा सप्तप्रकारेण शकलीभविता५७-५८

५६ ] ति० टी०-सप्तधा तस्येति । सप्तधातुवशात्सप्तप्रकारेण । विशकलीभविता· लुट् ॥ ५६ ॥

रा० टी०-तस्मिन्निति । शापे उदाहृते सति देवदुंदुभयो नेदुः ॥ ५७ ॥

५७ ] ति० टी०-दुन्दुभिवाद्यादयः संतोषात् ॥ ५७ ॥

रा० टी०-पितामहेति । सर्वे देवाः लोकगतिं रक्षसो मृत्युं च ज्ञात्वा प्रहर्षिता बभूवुरिति शेषः ॥ ५८ ॥

५८ ] ति० टी०-तमेव संतोषहेतुमाह—ज्ञात्वेति । लोकगतिं लोकस्य तत्कृतपीडामूलदुर्दशां तस्य रक्षसो मृत्युं च ज्ञात्वेत्यर्थः ॥ ५८ ॥

गो० टी०-ज्ञात्वेति । लोकगतिं लोकस्य तत्पीडामूलदुर्दशाम् । इदं च वचनं सीतादेव्या अक्षतत्वस्य सम्यग्रामबोधनार्थम् ॥ ५९-६१ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तर-
श्रीरामायणव्याख्याने षड्विंशः सर्गः ॥ २६ ॥

५९ ] ति० टी०-नाकामास्वभ्यरोचयत् । इदं वचनं सीतादेव्या अक्षतत्वस्य सम्यग्रामं प्रति बोधनार्थम् । तेन रावणेन नीताः प्राक्स्वान्तःपुरं नीताः पतिव्रताः स्त्रियश्च तं स्वेष्टं शापं श्रुत्वा प्रीतिमापुः ॥ ५९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय
आदिकाव्य उत्तरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

रा० टी०-श्रुत्वेति । दशग्रीवः शापं श्रुत्वा अकामासु नारीषु मैथुनीभावं नाभ्यरोचयत् ॥ ५८ ॥

रा० टी०-तेनेति । तेन रावणेन नीताः पतिव्रताः स्त्रियः मनःप्रियं शापं श्रुत्वा प्रीतिमापुः ॥ ६० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ
उत्तरकाण्डे षड्विंशः सर्गः ॥ २६ ॥

१-५ ] ति० टी०-अथ युद्धे सुमालिवधः—कैलास-

१ यथेति गो. पा. । २ इदमर्धमधिकं गो. पु. । ३ अथेति गो. पा. । ४ निशाचर इति गो. पा. । ५ लोकं ययौ शब्दो मथ्यमानेति गो. पा. । सवसूनिति गो. पा. । ७ विश्वान्साध्यानिति गो. पा. । ८ सज्जीभवतेति गो. रा. पा. ।

स तु दीनः परित्रस्तो महेन्द्रो रावणं प्रति । विष्णोः समीपमागत्य वाक्यमेतदुवाच ह ॥ ६ ॥
विष्णो कथं करिष्यामि रावणं राक्षसं प्रति । अहोऽतिबलवद्रक्षो युद्धार्थमभिवर्तते ॥ ७ ॥
वरप्रदानाद्बलवान्न खल्वन्येन हेतुना । तत्तु सत्यं वचः कार्यं यदुक्तं पद्मयोनिना ॥ ८ ॥
तद्यथा नमुचिर्वृत्रो बलिर्नरकशम्बरौ । त्वद्बलं समवष्टभ्य मया दग्धास्तथा कुरु ॥ ९ ॥
नह्यन्यो देवदेवेश त्वदृते मधुसूदन । गतिः परायणं चापि त्रैलोक्ये सचराचरे ॥ १० ॥
त्वं हि नारायणः श्रीमान्पद्मनाभः सनातनः । त्वयेमे स्थापिता लोकाः शक्रश्चाहं सुरेश्वरः ॥ ११ ॥
त्वया सृष्टमिदं सर्वं त्रैलोक्यं सचराचरम् । त्वामेव भगवन्सर्वे प्रविशन्ति युगक्षये ॥ १२ ॥
तदाचक्ष्व यथा तत्त्वं देवदेव मम स्वयम् । असिचक्रसहायस्त्वं योत्स्यसे रावणं प्रति ॥ १३ ॥
एवमुक्तः स शक्रेण देवो नारायणः प्रभुः । अब्रवीन्न परित्रासः कर्तव्यः श्रूयतां च मे ॥ १४ ॥
न तावदेष दुष्टात्मा शक्यो जेतुं सुरासुरैः । हन्तुं चापि समासाद्य वरदानेन दुर्जयः ॥ १५ ॥
सर्वथा तु महत्कर्म करिष्यति बलोत्कटः । राक्षसः पुत्रसहितो दृष्टमेतन्निसर्गतः ॥ १६ ॥

---

मिति । कैलासं लङ्घयित्वेन्द्रलोकमाससाद । तस्य मेरूपरि प्रतिष्ठितत्वात् ॥ १ ॥ ५ ॥

रा० टी०–कैलासनिवासानन्तरकालिकं वृतान्तमाह—**कैलासमित्यादिभिः** । दशाननः कैलासं लङ्घयित्वा इन्द्रलोकमाससाद ॥ १ ॥

रा० टी०–तस्येति । समन्तादुपयास्यतः राक्षससैन्यस्य शब्दः भिद्यमानार्णवोपमस्सन् बभौ ॥ २ ॥

रा० टी०–श्रुत्वेति । रावणं प्राप्तं श्रुत्वा आसनाच्चलित इन्द्रः आदित्यादीन् देवान् रावणस्य युद्धार्थं सज्जीभवत इत्यब्रवीत् श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०–एवमिति । एवमुक्ताः महासत्त्वा देवाः सन्नद्धा युद्धश्रद्धासमन्विताः बभूवुरिति शेषः ॥ ५ ॥

गो० टी०–कैलासमित्यादि ॥ १–८ ॥

६–७ ] ति० टी०–रावणं प्रति परित्रस्तः । भगवद्वचनस्य परिपालनीयत्वादिति भावः ॥ ६ ॥ ७ ॥

रा० टी०–स इति । रावणं प्रति परित्रस्तः अत एव दीनो महेन्द्रः विष्णोस्समीपमागत्य एतदुवाच ॥ ६ ॥

रा० टी०–तदाकारमाह—**विष्णो इति** । अतिबलवद्रक्षो रावणः युद्धार्थमभिवर्तते अतः रावणं प्रति कथं करिष्यामि ७

८ ] ति० टी०–बलवत्त्वे हेतुमाह—**वरप्रदानादिति** ॥ ८ ॥

रा० टी०–वरेति । रावणो वरप्रदानाद्बलवान् अन्येन हेतुना न तत्र हेतुः पद्मयोनिना यद्देवाद्यवध्यत्वं वच उक्तं तत्सत्यं कार्यम् सर्वैरिति शेषः ॥ ८ ॥

९ ] ति० टी०–तद्बलमपरिमितं त्वदीयं बलमाश्रित्य यथा दग्धास्तथा रावणस्यापि वधोपाययत्नं कुरु मे आख्याहि ॥ ९ ॥

रा० टी०–तदिति । तद्वरदानहेतुकातिबलवत्त्वाद्धेतोः यथा तद्बलं समवष्टभ्य नमुचिप्रभृतयो मया दग्धाः तथा कुरु केनचिदुपायेन अयमपि विदग्धो भवत्वित्यर्थः ॥ ९ ॥

गो० टी०–तद्यथेति । त्वद्बलमाहृत्य यथा नमुच्यादयो हतास्तथा अस्यापि हननोपायं कुर्वित्यर्थः ॥ ९ ॥

१०–१२ ] ति० टी०–देवेति देवेशेति च विष्णुसंबोधनम् । गती रक्षकः । परायणमाश्रयः ॥ १० ॥ १२ ॥

रा० टी०–नहीति । त्रैलोक्ये गतिः रक्षकः परायणं परमाश्रयश्च त्वदृते त्वां विना अन्यो न ॥ १० ॥

रा० टी०–त्वमिति । नारायणस्त्वं सनातनो नित्यः अत एव त्वयैव लोकाः शक्रश्च स्थापिताः ॥ ११ ॥

रा० टी०–त्वयेति । इदं त्वयैव सृष्टं युगक्षये त्वामेव प्रविशन्ति भूतानीति शेषः ॥ १२ ॥

गो० टी०–नेति । देवेति संबुद्धिः ॥ १०–१२ ॥

१३ ] ति० टी०–तत्तस्मान्मम यथा जयः स्यात्तथा तत्त्वमुपायमाचक्ष्व । स्वयमेव वा योत्स्यसे तद्ब्रूहीति शेषः ॥ १३ ॥

रा० टी०–तदिति । असिचक्रसहायस्त्वं रावणं प्रति यथा योत्स्यसे तथा ममाचक्ष्व ॥ १३ ॥

गो० टी०–तदेति । तत्तस्मात्कारणात् । यथा मे जयः स्यात् तथा तत्त्वमुपायतत्त्वम् आचक्ष्व । स्वयमेव युद्ध्यस्वेति वा । ब्रूहीति शेषः ॥ १३–१५ ॥

१४ ] ति० टी०–मे । वचनमिति शेषः ॥ १४ ॥

रा० टी०–एवमिति । नारायणो मे वचः श्रूयतामित्यब्रवीत् तदाकारमाह परित्रासो न कर्तव्यः ॥ १४ ॥

१५ ] ति० टी०–वरदानेन दुर्जय एष युधि समासाद्य सुरासुरैर्जेतुं हन्तुं च न शक्यः ॥ १५ ॥

रा० टी०–ननु तर्हि रावणं जहीत्यत आह—**नेति** । वरदानेन दुर्जयः एष रावणो जेतुं हन्तुं चापि न शक्यः ॥ १५ ॥

१६ ] ति० टी०–महत्कर्म युद्धम् । निसर्गतः सहजज्ञानशक्त्या दृष्टमवगतम् ॥ १६ ॥

---

१ महावीर्यपराक्रमः । असौ हीति गो. पा. । २ नास्तीति गो. पा. । ३ अपीति गो. पा. ।

यत्तु मां त्वमभाषिष्ठा युद्धयस्वेति सुरेश्वर । नाहं तं प्रतियोत्स्यामि रावणं राक्षसं युधि ॥ १७ ॥
नाहत्वा समरे शत्रुं विष्णुः प्रतिनिवर्तते । दुर्लभश्चैव कामोऽद्य वरगुप्ताद्धि रावणात् ॥ १८ ॥
प्रतिजाने च देवेन्द्र त्वत्समीपे शतक्रतो । भवितास्मि यथास्याहं रक्षसो मृत्युकारणम् ॥ १९ ॥
अहमेव निहन्तास्मि रावणं सपुरःसरम् । देवता नन्दयिष्यामि ज्ञात्वा कालमुपागतम् ॥ २० ॥
एतत्ते कथितं तत्त्वं देवराज शचीपते । युद्धयस्व विगतत्रासः सुरैः सार्धं महाबल ॥ २१ ॥
ततो रुद्राः सहादित्या वसवो मरुतोऽश्विनौ । संनद्धा निर्ययुस्तूर्णं राक्षसानभितः पुरात् ॥ २२ ॥
एतस्मिन्नन्तरे नादः शुश्राव रजनीक्षये । तस्य रावणसैन्यस्य प्रयुद्धस्य समन्ततः ॥ २३ ॥
ते प्रबुद्धा महावीर्या अन्योन्यमभिवीक्ष्य वै । सङ्ग्राममेवाभिमुखा अभ्यवर्तन्त हृष्टवत् ॥ २४ ॥
ततो दैवतसैन्यानां संक्षोभः समजायत । तदक्षयं महासैन्यं दृष्ट्वा समरमूर्धनि ॥ २५ ॥
ततो युद्धं समभवद्देवदानवरक्षसाम् । घोरं तुमुलनिर्ह्रादं नानाप्रहरणोद्यतम् ॥ २६ ॥
एतस्मिन्नन्तरे शूरा राक्षसा घोरदर्शनाः । युद्धार्थं समवर्तन्त सचिवा रावणस्य ते ॥ २७ ॥
मारीचश्च प्रहस्तश्च महापार्श्वमहोदरौ । अकम्पनो निकुम्भश्च शुकः सारण एव च ॥ २८ ॥
संह्रादो धूमकेतुश्च महादंष्ट्रो घटोदरः । जम्बुमाली महाह्रादो विरूपाक्षश्च राक्षसः ॥ २९ ॥
सुप्तघ्नो यज्ञकोपश्च दुर्मुखो दूषणः खरः । त्रिशिराः करवीराक्षः सूर्यशत्रुश्च राक्षसः ॥ ३० ॥
महाकायोऽतिकायश्च देवान्तकनरान्तकौ । एतैः सर्वैः परिवृतो महावीर्यैर्महाबलः ॥ ३१ ॥
रावणस्यार्यकः सैन्यं सुमाली प्रविवेश ह । स दैवतगणान्सर्वान्नानाप्रहरणैः शितैः ॥ ३२ ॥
व्यध्वंसयत्समं क्रुद्धो वायुर्जलधरानिव । तद्दैवतबलं राम हन्यमानं निशाचरैः ॥ ३३ ॥
प्रणुन्नं सर्वतो दिग्भ्यः सिंहनुन्ना मृगा इव । एतस्मिन्नन्तरे शूरो वसूनामष्टमो वसुः ॥
सावित्र इति विख्यातः प्रविवेश रणाजिरम् ॥ ॥ ३४ ॥
[7]सैन्यैः परिवृतो हृष्टैर्नानाप्रहरणोद्यतैः । त्रासयञ्शत्रुसैन्यानि प्रविवेश रणाजिरम् ॥ ३५ ॥
तथादित्यौ महावीर्यौ त्वष्टा पूषा च [9]तौ समम् । निर्भयौ सह सैन्येन तदा प्राविशतां रणे ॥ ३६ ॥

रा० टी०—सर्वथेति । पुत्रसहितो राक्षसः निसर्गतः राक्षसस्वभावाद् महद्दुग्रं कर्म करिष्यति इति दृष्टं मया ज्ञातम् १६

गो० टी०—सर्वेति । मे महत्कर्म युद्धकर्म करिष्यतीत्येतत्सहजज्ञानशक्त्या दृष्टमवगतम् ॥ १६ ॥

१७–१८ ] ति० टी०—प्रतियोत्स्यामि । इदानीमिति शेषः ॥ १७ ॥ १८ ॥

रा० टी०—यत्त्विति । युध्यस्वेति यन्मां त्वमभाषिष्ठाः तत्रेदमुत्तरमिति शेषः रावणमहं न प्रतियोत्स्यामि ॥ १७ ॥

रा० टी०—तत्र हेतुमाह—नेति । विष्णुः युद्धान्न प्रतिनिवर्तते वरगुप्ताद्रावणात्तु कामो विजयप्राप्तीच्छा दुर्लभः ॥ १८ ॥

गो० टी०—यत्त्विति । नाहं प्रतियोत्स्यामि इदानीमिति शेषः ॥ १७–२२ ॥

१९–२१ ] ति० टी०—यथा भवितास्मि तथा प्रतिजाने इत्यर्थः ॥ १९ ॥ २१ ॥

रा० टी०—ननु तर्हि कथमस्माकं स्थितिरित्यत आह—प्रतिजान इति । अस्य रक्षसो मृत्युकारणमहं यथा यथावद्भवितास्मि इति त्वत्समीपे प्रतिजाने कारणं भवितास्मीत्यनेन स्वस्य साक्षाद्धननकर्तृत्वाभावस्सूचितः ॥ १९ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—अहमिति । रावणमहमेव निहन्तास्मि घातयितास्मि अत एव देवताः नन्दयिष्यामि ॥ २० ॥

रा० टी०—एतदिति । एतत्तत्त्वं ते कथितमतः सुरैस्सार्द्धं विगतत्रासस्त्वं युध्यस्व राक्षसैरिति शेषः ॥ २१ ॥

२२ ] ति० टी०—अभितः संमुखे ॥ २२ ॥

रा० टी०—तत इति । सन्नद्धा रुद्रादयः पुरात्स्वर्गाद्राक्षसानभितो निर्ययुः ॥ २२ ॥

२३–३६ ] ति०टी०—प्रयुद्धस्य प्रकृष्टं युद्धं यस्य । करवीराक्षः करवीरपुष्पसदृशनेत्रः ॥ २३ ॥ ३६ ॥

रा० टी०—एतस्मिन्निति । रजनीक्षये प्रयुद्धस्य प्रकृष्टयुद्धकर्तुः रावणसैन्यस्य नादः समन्ततश्शुश्राव ॥ २३ ॥

१ सर्वैरिति गो. पा. । २ शुश्रुवे इति गो. पा. । ३ प्रबुद्धा इति गो. पा. । ४ ह्यन्योन्यमिति गो. पा. । ५ वीर्यं इति गो. पा. । ६ सुसमिति गो. रा. पा. । ७ इदं पद्यं रा. पु. न दृश्यते । ८ हृष्ट इति गो. पा. । ९ दंशिताविति गो. पा. ।

ततो युद्धं समभवत्सुराणां सह राक्षसैः। क्रुद्धानां रक्षसां कीर्तिं समरेष्वनिवर्तिनाम् ॥ ३७ ॥
ततस्ते राक्षसाः सर्वे विबुधान्समरे स्थितान्। नानाप्रहरणैर्घोरैर्जघ्नुः शतसहस्रशः ॥ ३८ ॥
देवाश्च राक्षसान्घोरान्महाबलपराक्रमान्। समरे विमलैः शस्त्रैरुपनिन्युर्यमक्षयम् ॥ ३९ ॥
एतस्मिन्नन्तरे राम सुमाली नाम राक्षसः। नानाप्रहरणैः क्रुद्धस्तत्सैन्यं सोऽभ्यवर्तत ॥ ४० ॥
स दैवतबलं सर्वं नानाप्रहरणैः शितैः। व्यध्वंसयत संक्रुद्धो वायुर्जलधरं यथा ॥ ४१ ॥
ते महाबाणवर्षैश्च शूलप्रासैः सुदारुणैः। हन्यमानाः सुराः सर्वे न व्यतिष्ठन्त संहताः॥ ४२ ॥
ततो विद्राव्यमाणेषु दैवतेषु सुमालिना। वसूनामष्टमः क्रुद्धः सावित्रो वै व्यवस्थितः ॥ ४३ ॥
संवृतः स्वैरथानीकैः प्रहरन्तं निशाचरम्। विक्रमेण महातेजा वारयामास संयुगे ॥ ४४ ॥
ततस्तयोर्महद्युद्धमभवल्लोमहर्षणम् । सुमालिनो वसोश्चैव समरेष्वनिवर्तिनोः ॥ ४५ ॥
ततस्तस्य महाबाणैर्वसुना सुमहात्मना। निहतः पन्नगरथः क्षणेन विनिपातितः ॥ ४६ ॥
हत्वा तु संयुगे तस्य रथं बाणशतैश्चितम्। गदां तस्य वधार्थाय वसुर्जग्राह पाणिना ॥ ४७ ॥
ततः प्रगृह्य दीप्ताग्रां कालदण्डोपमां गदाम्। तां मूर्ध्नि पातयामास सावित्रो वै सुमालिनः॥ ४८ ॥
सा तस्योपरि चोल्काभा पतन्ती [1]विबभौ गदा। इन्द्रप्रमुक्ता गर्जन्ती गिराविव महाशनिः ॥ ४९ ॥
तस्य नैवास्थि न शिरो न मांसं ददृशे तदा। गदया भस्मतां नीतं निहतस्य रणाजिरे ॥ ५० ॥
तं दृष्ट्वा निहतं संख्ये राक्षसास्ते समन्ततः। व्यद्रवन्सहिताः सर्वे क्रोशमानाः परस्परम् ॥
विद्राव्यमाणा वसुना राक्षसा नावतस्थिरे ॥ ॥ ५१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०—एतस्मिन्निति । प्रकृष्टं युद्धं यस्य तत्प्रयुद्धम् ॥ २३ ॥

रा० टी०—ते इति। प्रबुद्धास्ते राक्षसाः अन्योन्यमभिवीक्ष्य संग्राममेवाभिमुखास्सन्तोऽभ्यवर्त्तन्त ॥ तत इति। तत् राक्षसीय महासैन्यं दृष्ट्वा दैवतसैन्यानां संक्षोभस्समजायत॥ तत इति। नानाप्रहरणानि उद्यतानि यस्मिन् अत एव तुमुलनिर्ह्रादं तुमुलशब्दवत् अत एव घोरं युद्धं समभवत् ॥ एतस्मिन्निति। रावणस्य सचिवाः युद्धार्थं समवर्त्तन्त ॥ मारीच इति । एतैर्मारीचादिभिः परिवृतो रावणस्यार्यको मातामहस्सुमाली सैन्यं देवसेनां प्रविवेश सार्द्धश्लोकचतुष्टयमेकान्वयि । २४–३१ ॥

गो० टी०—त इति। हृष्टवत् हृष्टाः सन्तः ॥ २४–२९ ॥

गो० टी०—सुताम्र इति । करवीरपुष्पवत् अक्षिणी यस्य सः करवीराक्षः ॥ ३०–३६ ॥

रा० टी०—स इति। स सुमाली दैवतगणान् व्यध्वंसयत्॥ तदिति । सिंहनुन्नाः मृगा इव हन्यमानं दैवतबलं सर्वतो दिग्भ्यः प्रणुन्नम् पलायितम् । एतस्मिन्निति । सावित्र इति विख्यातोऽष्टमो वसुः रणाजिरे प्रविवेश ॥ तथेति। निर्भयौ त्वष्टा पूषा चादित्यौ सैन्येन सह प्राविशताम् ॥ ३२–३६ ॥

३७–४५ ] ति० टी०—समरेष्वनिवर्तिनां रक्षसां कीर्तिं प्रति क्रुद्धानां सुराणां राक्षसैः सह युद्धं समभवदिति योजना ॥ ३७ ॥ ४५ ॥

रा० टी०—तत इति। समरेष्वनिवर्त्तिनां रक्षसां कीर्तिं प्रति क्रुद्धानां सुराणां राक्षसैस्सह युद्धं समभवत्॥ तत इति। राक्षसाश्शतशस्सहस्रशो विबुधान् जघ्नुः ॥ देवा इति। देवाः राक्षसान् यमक्षयमुपनिन्युः॥ एतस्मिन्निति । सुमाली नाम राक्षसः तद्देवसम्बन्धि सैन्यमभ्यवर्त्तत । स इति। स सुमाली दैवतबलं व्यध्वंसयत ॥ ते इति। संहताः सम्यक्कृतं हननं येषां तेपि सुराः महाबाणवर्षादिभिर्हन्यमानाः सन्तः न व्यतिष्ठन्त ॥ तत इति। सुमालिना दैवतेषु विद्राव्यमाणेषु सत्सु सावित्रोऽष्टमो वसुर्व्यवस्थितः । संवृत इति । स्वैरनीकैस्संवृतः सावित्रः प्रहरन्तं निशाचरं सुमालिनं वारयामास॥ तत इति। सुमालिनो वसोश्च महद्युद्धमभवत् ॥ ३६—४४ ॥

गो० टी०—तत इति । समरेष्वनिवर्तिनां रक्षसां कीर्तिं क्रुद्धानां सुराणां राक्षसैः सह युद्धमभवदिति योजना ३६–४४

४६–५१ ] ति० टी०—तस्य सुमालिनः ॥ ४६ ॥ ५१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

रा० टी०—तत इति । वसुना महाबाणैस्तस्य सुमालिनः पन्नगरथो निहतः अतः क्षणेन विनिपातितः ॥ ४५ ॥

[1] इवेति गो.-रा. पा.। २ एतदग्रे प्रति किंवान्यदुपयुक्तं पदमावश्यकम् ।

# अष्टाविंशः सर्गः ।

ततो जयन्तमेघनादयोर्विस्मयकरे रणे पुलोमा जयन्तं गृहीत्वा सागरं प्रविष्टः देवास्तु जयन्तं प्रनष्टं विज्ञाय व्यथितास्ततः क्रुद्धस्य शक्रस्य रावणस्य च भयानको विग्रहः प्रवृत्तः ।

सुमालिनं हतं दृष्ट्वा वसुना भस्मसात्कृतम् । स्वसैन्यं विद्रुतं चापि लक्षयित्वार्दितं सुरैः ॥ १ ॥
ततः स बलवान्क्रुद्धो रावणस्य सुतस्तदा । निवर्त्य राक्षसान्सर्वान्मेघनादो व्यवस्थितः ॥ २ ॥
स रथेन महार्हेण[1] कामगेन महारथः । अभिदुद्राव सेनां तां वनान्यग्निरिव ज्वलन् ॥ ३ ॥
ततः प्रविशतस्तस्य विविधायुधधारिणः । विदुद्रुवुर्दिशः सर्वा दर्शनादेव देवताः ॥ ४ ॥
न बभूव तदा कश्चिद्युयुत्सोरस्य संमुखे । सर्वानाविद्ध्य वित्रस्तांस्ततः शक्रोऽब्रवीत्सुरान् ॥५॥
न भेतव्यं न गन्तव्यं निवर्तध्वं रणे सुराः । एष गच्छति पुत्रो मे युद्धार्थमपराजितः ॥ ६ ॥
ततः शक्रसुतो देवो जयन्त इति विश्रुतः । रथेनाद्भुतकल्पेन सङ्ग्रामे सोऽभ्यवर्तत ॥ ७ ॥
ततस्ते त्रिदशाः सर्वे परिवार्य शचीसुतम् । रावणस्य सुतं युद्धे समासाद्य प्रजघ्निरे ॥ ८ ॥
तेषां युद्धं समभवत्सदृशं देवरक्षसाम् । महेन्द्रस्य च पुत्रस्य राक्षसेन्द्रसुतस्य च ॥ ९ ॥
ततो मातलिपुत्रेस्य[2] गोमुखस्य स रावणिः । सारथेः पातयामास शरान्कनकभूषणान् ॥ १० ॥
शचीसुतश्चापि तथा जयन्तस्तस्य सारथिम् । तं चापि रावणिः क्रुद्धः समन्तात्प्रत्यविध्यत ॥ ११ ॥
स हि क्रोधसमाविष्टो बली विस्फारितेक्षणः । रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥
ततो नानाप्रहरणाञ्छितधारान्सहस्रशः । पातयामास संक्रुद्धः सुरसैन्येषु रावणिः ॥ १३ ॥
शतघ्नीमुसलप्रासगदाखड्गपरश्वधान् । महान्ति गिरिशृङ्गाणि पातयामास रावणिः ॥ १४ ॥

रा० टी०—हत्वेति । बाणशतैः चितं तस्य सुमालिनो रथं हत्वा तस्य सुमालिनो वधार्थाय गदां जग्राह ॥ ४६ ॥

रा० टी०—तत इति । सावित्रः गदां प्रगृह्य सुमालिनो मूर्ध्नि पातयामास ॥ ४७ ॥

रा० टी०—सेति । गिरौ इन्द्रप्रयुक्ता महाशनिरिव तस्य सुमालिन एव उपरि पतन्ती गदा बभौ ॥ ४८ ॥

रा० टी०—तस्येति । निहतस्य तस्य सुमालिनोऽस्थिप्रभृति गदया भस्मतां नीतमत एव न ददृशे ॥ ४९ ॥

रा० टी०—तमिति । राक्षसाः तं सुमालिनं निहतं दृष्ट्वा परस्परं क्रोशमानास्सन्तः व्यद्रवन् ॥ ५० ॥

रा० टी०—विद्राव्यमाणा इति । वसुना विद्राव्यमाणाः राक्षसाः नावतस्थिरे अद्धं पृथक् ॥ ५१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तविंशः सर्गः ॥ २७ ॥

गो० टी०—सुमालिन इति । तस्य सुमालिनः ४५-५०

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तविंशः सर्गः ॥ २७ ॥

१-२ ] ति० टी०—सुमालिनमिति ॥ १ ॥ २ ॥

रा० टी०—सुमालिविघातानन्तरकालिकं वृत्तमाह—सुमालिनमित्यादिभिः । वसुना भस्मसात्कृतमत एव हतं सुमालिनं दृष्ट्वा अत एव स्वसैन्यं सुरैरर्दितमत एव विद्रुतं लक्षयित्वा क्रुद्धो मेघनादः राक्षसान् निवर्त्य व्यवस्थितो बभूवेति शेषः श्लोकद्वयमेकान्वयि ॥ १ ॥ २ ॥

गो० टी०—सुमालिनमित्यादि ॥ १ ॥ २ ॥

३-४ ] ति० टी०—तां सेनां देवसेनाम् ॥ ३ ॥ ४ ॥

रा० टी०—स इति । महारथो मेघनादः ज्वलन् अग्निर्वनानीव तां देवसंबन्धिनीं सेनामभिदुद्राव ॥ ३ ॥

रा० टी०—तत इति । विप्रविशतः तस्य मेघनादस्य दर्शनादेव देवताः दिशो विदुद्रुवुः ॥ ४ ॥

गो० टी०—सुरथेनेति । तां सेनां देवसेनाम् ॥ ३ ॥४॥

५-१४ ] ति० टी०—आविद्ध्य वेधं प्राप्य वित्रस्तान् ॥ तेषां देवरक्षसां सदृशं बलवीर्यानुरूपं युद्धमभवत् ॥९ ॥ १४॥

रा० टी०—नेति । युयुत्सोः मेघनादस्य सम्मुखे कश्चिन्न बभूव वित्रस्तान्सुरान् आविध्य पलायमानोचितदुरुक्त्या संताड्य शक्रोऽब्रवीत् ॥ ५ ॥

रा० टी०—तदाकारमाह—नेति । अपराजितः एष मे पुत्रः युद्धार्थं गच्छति अतो न भेतव्यं न गन्तव्यमपसर्तव्यं निवर्तध्वमपसरणादिति शेषः ॥ ६ ॥

१ अग्निवर्णेनेति गो. पाठः । २ पुत्रे तु गोमुखे राक्षसात्मजः । सारथौ इति गो. पाठः ।

ततः प्रव्यथिता लोकाः संजज्ञे च तमस्ततः । तस्य रावणपुत्रस्य शत्रुसैन्यानि निघ्नतः ॥ १५ ॥
ततस्तद्दैवतबलं समन्तात्तं शचीसुतम् । बहुप्रकारमस्वस्थमभवच्छरपीडितम् ॥ १६ ॥
नाभ्यजानन्त चान्योन्यं रक्षो वा देवताथवा । तत्र तत्र विपर्यस्तं समन्तात्परिधावत ॥ १७ ॥
देवा देवान्निजघ्नुस्ते राक्षसान्राक्षसास्तथा । संमूढास्तमसा छन्ना व्यद्रवन्नपरे तथा ॥ १८ ॥
एतस्मिन्नन्तरे वीरः पुलोमा नाम वीर्यवान् । दैत्येन्द्रस्तेन संगृह्य शचीपुत्रोऽपवाहितः ॥ १९ ॥
संगृह्य तं तु दौहित्रं प्रविष्टः सागरं तदा । आर्यकः स हि तस्यासीत्पुलोमा येन सा शची ॥२०॥
ज्ञात्वा प्रणाशं तु तदा जयन्तस्याथ देवताः । अप्रहृष्टास्ततः सर्वा व्यथिताः संप्रदुद्रुवुः ॥ २१ ॥
रावणिस्त्वथ संक्रुद्धो बलैः परिवृतः स्वकैः । अभ्यधावत देवांस्तान्मुमोच च महास्वनम् ॥ २२ ॥

रा० टी०—तत इति । अद्भुतः कल्पः कल्पना यस्य तेन रथेन जयन्त इति विश्रुतः शक्रसुतस्सङ्ग्रामे अभ्यवर्तत ॥ ७ ॥

रा० टी०—तत इति । त्रिदशाः शचीसुतं परिवार्य रावणस्य सुतं प्रजघ्निरे ॥ ८ ॥

गो० टी०—न बभूवेति । आविध्य आवेधं प्राप्य वित्रस्तान् ॥ ५–८ ॥

रा० टी०—तेषामिति । देवरक्षसां सदृशं योग्यं महेन्द्रस्य पुत्रस्य राक्षसेन्द्रसुतस्य च युद्धं समभवत् ॥ ९ ॥

गो० टी०—तेषामिति । तेषां सदृशम् बलवीर्यानुरूपमित्यर्थः ॥ ९ ॥

रा० टी०—तत इति । मातलिपुत्रस्य सारथेः गोमुखस्य तदभिधस्योपरि रावणिः शरान्पातयामास ॥ १० ॥

रा० टी०—शचीसुत इति । शचीसुतो जयन्तः तस्य रावणेः सारथिं प्रत्यविध्यत क्रुद्धो रावणिस्तु तं जयन्तं प्रत्यविध्यत ॥ ११ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—स इति । रावणिः शक्रतनयं शरवर्षैरवाकिरत् ॥ १२ ॥

रा० टी०—तत इति । रावणिः सुरसैन्येषु नानाविधान्सहस्रशः प्रहरणान्पातयामास ॥ १३ ॥

रा० टी०—प्रहरणानां नाम निर्दिशन्नाह—शतघ्नीति । रावणिः शतघ्नीप्रभृतीन्पातयामास ॥ १४ ॥

गो० टी०—तत इति । गोमुख इति मातलिसुतनाम १०–१४

१५ ] ति० टी०—प्रव्यथिता लोका भूरादयस्तत्प्रजाश्च । तमः संजज्ञे । रावणपुत्रमाययेति शेषः ॥ १५ ॥

रा० टी०—तत इति । शत्रुसैन्यानि निघ्नतो रावणपुत्रस्य माययेति शेषः तमोऽन्धकारः संजज्ञे ततोऽन्धकारात् लोकाः प्रव्यथिताः ॥ १५ ॥

गो० टी०—तत इति । तमः संजज्ञे रावणपुत्रस्य माययेति शेषः ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—तं शचीसुतं हित्वेति शेषः ॥ १६ ॥

रा० टी०—तत इति । शचीसुतं समन्तात् शचीसुतस्य चतुर्दिक्षु शरपीडितं दैवतबलं बहुप्रकारमस्वस्थमभवत् ॥ १६ ॥

१७–१८ ] ति० टी०—विपर्यस्तं विशीर्णम् । परिधावत पर्यधावत ॥ १७ ॥ १८ ॥

रा० टी०—नेति । रक्षो देवता वा अन्योन्यं नाभ्यजानन्त अभ्यजानात् अत एव विपर्यस्तं विपरीतं यथा भवति तथा परिधावत पर्यधावत् ॥ १७ ॥

रा० टी०—विपर्ययफलमाह—देवा इति । तमसा छन्ना अत एव सम्मूढा देवाः देवान्निजघ्नुःतादृशाः राक्षसा अपि राक्षसान्निजघ्नुः अपरे बहवो व्यद्रवन् ॥ १८ ॥

गो० टी०—नाभ्यजानन्तेति । विपर्यस्तं विशीर्णम् १७।१८

१९ ] ति० टी०—तेन जयन्तमातामहेन पुलोम्ना ॥१९॥

रा० टी०—एतस्मिन्निति । पुलोमा नाम यो दैत्येन्द्रस्तेन शचीपुत्रस्संगृह्यापवाहितः ॥ १९ ॥

गो० टी०—एतस्मिन्निति । पुलोमा नामास्तीति शेषः । तेन पुलोम्ना । येन सा शची उत्पादितेति शेषः । तस्मात् शची पौलोमीति नामवती जातेत्यर्थः ॥ १९ ॥ २० ॥

२० ] ति० टी०—येन सा शची । उत्पादितेति शेषः ॥ २० ॥

रा० टी०—संगृह्येति । येन शची उत्पादितेति शेषः स पुलोमा तस्य जयन्तस्य आर्यको मातामह आसीत् अत एव दौहित्रं जयन्तं प्रगृह्य सागरं प्रविष्टः ॥ २० ॥

२१–२२ ] ति० टी०—प्रणाशमदर्शनम् । व्यथिताः, अत एवाप्रहृष्टाः खिन्नाः ॥ २१ ॥ २२ ॥

रा० टी०—ज्ञात्वेति । जयन्तस्य प्रणाशमदर्शनं ज्ञात्वा व्यथिता अत एव अप्रहृष्टाः देवताः संप्रदुद्रुवुः ॥ २१ ॥

रा० टी०—रावणिरिति । स्वकैर्बलैः परिवृतो रावणिः देवानभ्यधावत महास्वनं मुमोच च ॥ २२ ॥

गो० टी०—ज्ञात्वेति । प्रणाशमदर्शनम् । व्यथिताः अत एवाप्रहृष्टाः ॥ २१–२४ ॥

१ महदिति गो. पाठः । २ जीवितामिति गो. पाठः ।

दृष्ट्वा प्रणाशं पुत्रस्य दैवतेषु च विद्रुतम् । मातलिं चाह देवेशो रथः समुपनीयताम् ॥ २३ ॥
स तु दिव्यो महाभीमः सज्ज एव महारथः । उपस्थितो मातलिना वाह्यमानो महाजवः ॥ २४ ॥
ततो मेघा रथे तस्मिंस्तडिद्वन्तो महाबलाः । अग्रतो वायुचपला नेदुः परमनिःस्वनाः ॥ २५ ॥
नानावाद्यानि वाद्यन्त गन्धर्वाश्च समाहिताः । ननृतुश्चाप्सरःसङ्घा निर्याते त्रिदशेश्वरे ॥ २६ ॥
रुद्रैर्वसुभिरादित्यैरश्विभ्यां समरुद्गणैः । वृतो नानाप्रहरणैर्निर्ययौ त्रिदशाधिपः ॥ २७ ॥
निर्गच्छतस्तु शक्रस्य परुषः पवनो ववौ । भास्करो निष्प्रभश्चैव महोल्काश्च प्रपेदिरे ॥ २८ ॥
एतस्मिन्नन्तरे शूरो दशग्रीवः प्रतापवान् । आरुरोह रथं दिव्यं निर्मितं विश्वकर्मणा ॥ २९ ॥
पन्नगैः सुमहाकायैर्वेष्टितं लोमहर्षणैः । येषां निःश्वासवातेन प्रदीप्तमिव संयुगे ॥ ३० ॥
दैत्यैर्निशाचरैश्चैव स रथः परिवारितः । समराभिमुखो दिव्यो महेन्द्रं सोऽभ्यवर्तत ॥ ३१ ॥
पुत्रं तं वारयित्वा तु स्वयमेव व्यवस्थितः । सोऽपि युद्धाद्विनिष्क्रम्य रावणिः समुपाविशत् ३२॥
ततो युद्धं प्रवृत्तं तु सुराणां राक्षसैः सह । शस्त्राणि वर्षतां तेषां मेघानामिव संयुगे ॥ ३३ ॥
कुम्भकर्णस्तु दुष्टात्मा नानाप्रहरणोद्यतः । नाज्ञायत तदा राजन्युद्धं केनाभ्यपद्यत ॥ ३४ ॥
दन्तैः पादैर्भुजैर्हस्तैः शक्तितोमरमुद्गरैः । येन तेनैव संक्रुद्धस्ताडयामास देवताः ॥ ३५ ॥

---

२३-२४ ] ति० टी०-विद्रुतं पलायनम् ॥ २३ ॥ २४ ॥
रा० टी०-दृष्ट्वेति । देवेशपुत्रस्य प्रणाशं दैवतेषु विद्रुतं पलायनं च दृष्ट्वा रथः समुपनीयतामिति मातलिमाह ॥ २३ ॥
रा० टी०-स इति । मातलिना वाह्यमानो महारथः उपस्थितो बभूवेति शेषः ॥ २४ ॥
२५ ] ति० टी०-तत इन्द्रस्य तद्रथारोहणानन्तरम् । वायुचपला वायुप्रवर्तिताः ॥ २५ ॥
रा० टी०-तत इति । ततः इन्द्रकर्तृकरथारोहणानन्तरं रथे अग्रतोऽग्रभागे स्थिता इति शेषः वारिचपलाः मेघाः नेदुः २५
गो० टी०-तत इति । वायुचपलाः वायुचलिताः २५-३३
२६-३१ ] ति० टी०-वाद्यन्तावाद्यन्त । समाहिता गगने प्रवृत्ताः ॥ २६ ॥ ३१ ॥
रा० टी०-नानेति । त्रिदशेश्वरे निर्याते सति गन्धर्वाः वाद्यानि वाद्यन्त अवाद्यन्त अप्सरस्संघास्तु ननृतुः ॥ २६ ॥
रा०टी०-रुद्रैरिति । रुद्रादिभिर्वृतस्त्रिदशाधिपो निर्ययौ २७
रा० टी०-निर्गच्छत इति । शक्रस्य निर्गच्छतः सतः पवनः परुषस्सन्ववौ महोल्काः प्रपेदिरे ददृशिरे इत्यर्थः ॥ २८ ॥
रा० टी०-एतस्मिन्निति । दशग्रीवः सुमहाकायैः पन्नगैर्वेष्टितमेषां पन्नगानां निश्वासवातेन प्रदीप्तमिव दिव्यं रथमारुरोह श्लोकद्वयमेकान्वयि ॥ २९ ॥ ३० ॥
रा० टी०-दैत्यैरिति । स रथः दैत्यैर्निशाचरैश्च परिवारितोभवदिति शेषः अत एव समराभिमुखस्स रथः महेन्द्रमभ्यवर्तत ॥ ३१ ॥
३२-३३ ] ति० टी०-युद्धाद्युद्धस्थानात् । समुपाविशत्तूष्णीमास्त ॥ ३२ ॥ ३३ ॥

रा० टी०-पुत्रमिति । पुत्रं वारयित्वा स्वयं रावणो व्यवस्थितोभवदिति शेषः रावणिस्तु युद्धाद्विनिष्क्रम्य समुपाविशत् तूष्णीमतिष्ठत् ॥ ३२ ॥
रा० टी०-तत इति । मेघानामिव शस्त्राणि वर्षतां सुराणां राक्षसैस्सह युद्धं प्रवृत्तम् ॥ ३३ ॥
३४ ] ति० टी०-कुम्भकर्णस्त्विति । अस्य जागरितस्य युद्धादिप्रसङ्गेऽनेकदिनमपि जागरणमित्यतो ज्ञायते । नानाप्रहरणोद्यत उद्यतनानाप्रहरणः केनाभ्यपद्यत केन युद्धं कृतवानिति नाज्ञायत । अपि तु प्रायेन सर्वेणाप्ययुध्यतेत्यर्थः ॥ ३४ ॥
रा० टी०-कुम्भकर्ण इति । तदा तस्मिन् जागरणदिन एव नानाप्रहरणोद्यतो यः कुम्भकर्णः तेन केन सह युद्धमभ्यपद्यत इति नाज्ञायत स्वकीयैः परकीयैश्च सहायुध्यत इत्यर्थः एतेन तस्य मत्ततातिशयः सूचितः ॥ ३४ ॥
गो० टी०-कुम्भकर्णस्त्विति । नानाप्रहरणोद्यतः उद्यतनानाप्रहरणः । नाज्ञायत अयं मया योद्धव्य इत्येको लक्ष्यत्वेन न ज्ञायते । अपि तु नहि केनापि अयुध्यत । येन केनापि प्रायेन सर्वेणाप्ययुद्ध्यतेत्यर्थः ॥ ३४ ॥
३५ ] ति० टी०-अपि च प्रहरणनियमोऽपि नास्तीत्याह—दन्तैरिति ॥ ३५ ॥
रा० टी०-मत्ततावशादेव तस्य प्रहरणनियमोपि नास्तीति बोधयन्नाह—दन्तैरिति । दन्तादिभिरुपलक्षितः कुम्भकर्णः येन तेन दन्ताद्यन्यतमेन अन्येन च देवतास्ताडयामास ॥ ३५ ॥
गो० टी०-दन्तैरिति । प्रयुद्धः प्रकृष्टयुद्धः ॥ ३५-३९ ॥

---

१ साध्यैश्चेति गो पाठः । २ परुषमिति गो. पाठः । ३ आसीदिति गो. पाठः । ४ दैत्य इति गो. पाठः । ५ घोरमिति गो. पाठः । ६ युद्धे सह केनाप्ययुध्यतेति गो. पाठः । ७ भुजाभ्यां पद्भ्यां च शक्तितोमरसायकैरिति गो. पाठः । ८ केनैव संरब्ध इति गो. पाठः ।

स तु रुद्रैर्महाघोरैः संगम्याथ निशाचरः । प्रयुद्धस्तैश्च संग्रामे क्षतः शस्त्रैर्निरन्तरम् ॥ ३६ ॥
[ बभौ शस्त्राचिततनुः कुम्भकर्णः क्षरन्नसृक् । विद्युत्स्तनितनिर्घोषो धारावानिव तोयदः ]
ततस्तद्राक्षसं सैन्यं प्रयुद्धं समरुद्गणैः । रणे विद्रावितं सर्वं नानाप्रहरणैस्तदा ॥ ३७ ॥
केचिद्विनिहताः कृत्ताश्चेष्टन्ति स्म महीतले । वाहनेष्ववसक्ताश्च स्थिता एवापरे रणे ॥ ३८ ॥
रथान्नागान्खरानुष्ट्रान्पन्नगांस्तुरगांस्तथा । शिंशुमारान्वराहांश्च पिशाचवदनानपि ॥ ३९ ॥
तान्समालिङ्ग्य बाहुभ्यां विष्टब्धाः केचिदुत्थिताः । देवैस्तु शस्त्रसंभिन्ना मम्रिरे च निशाचराः ॥ ४० ॥
चित्रकर्म इवाभाति सर्वेषां रणसंप्लवः । निहतानां प्रसुप्तानां राक्षसानां महीतले ॥ ४१ ॥
शोणितोदकनिष्पन्दा काकगृध्रसमाकुला । प्रवृत्ता संयुगमुखे शस्त्रग्राहवती नदी ॥ ४२ ॥
एतस्मिन्नन्तरे क्रुद्धो दशग्रीवः प्रतापवान् । निरीक्ष्य तु बलं सर्वं दैवतैर्विनिपातितम् ॥ ४३ ॥
स तं प्रतिविगाह्याशु प्रवृद्धं सैन्यसागरम् । त्रिदशान्समरे निघ्नञ्शक्रमेवाभ्यवर्तत ॥ ४४ ॥
ततः शक्रो महच्चापं विस्फार्य सुमहास्वनम् । यस्य विस्फारनिर्घोषैः स्तनन्ति स्म दिशो दश ४५
तद्विकृष्य महच्चापमिन्द्रो रावणमूर्धनि । पातयामास स शरान्पावकादित्यवर्चसः ॥ ४६ ॥
तथैव च महाबाहुर्दशग्रीवो निशाचरः । शक्रं कार्मुकविभ्रष्टैः शरवर्षैरवाकिरत् ॥ ४७ ॥

---

३६ ] ति० टी०—प्रयुद्धः कृतप्रकृष्टयुद्धः ॥ ३६ ॥

रा० टी०—स इति । रुद्रैर्निशाचरैस्सह संगम्य प्रयुद्धः स कुम्भकर्णः शस्त्रैर्निरन्तरं क्षतोऽभवदिति शेषः ॥ ३६ ॥

३७ ] ति० टी०—समरुद्गणैः । देवैरिति शेषः ॥ ३७ ॥

रा० टी०—तत इति । नानाप्रहरणैस्समरुद्गणैर्मरुद्गणसहितैर्देवैरिति शेषः प्रयुद्धं राक्षसं सैन्यं रणविद्रावितमभवदिति शेषः ॥ ३७ ॥

३८ ] ति० टी०—कृत्ताश्छिन्नाः । केचिन्मोहाद्वाहनेभ्यो निपतितदेहा अपि वाहनेष्ववसक्ता एव स्थिता इत्यर्थः ॥ ३८ ॥

रा० टी०—केचिदिति । कृत्ताः छिन्नाः अत एव विनिहताः केचिन्महीतले चेष्टन्ति स्म अपरे वाहनेषु रथादिषु अवसक्ता दृढं ग्रहणवन्तः स्थिताः मरणेऽपीति शेषः ॥ ३८ ॥

३९ ] ति० टी०—तदेवाह—रथानिति ॥ ३९ ॥

४० ] ति० टी०—रथादीन्बाहुभ्यां समालिङ्ग्य विष्टब्धाः केचिदुत्थिता मूर्च्छिताः कालेन गतमूर्च्छा उत्थिताः । मम्रिरे मृताः ॥ ४० ॥

रा० टी०—रथानिति । केचित् रथादीन् बाहुभ्यां समालिङ्ग्य विष्टब्धाः चेष्टाराहित्येन स्थिता उत्थिताः केचित्तु देवैश्शस्त्रसम्भिन्नास्सन्तः मम्रिरे श्लोकद्वयमेकान्वयि॥३९-४०॥

गो० टी०—रथानित्यादि श्लोकद्वयमेकं वाक्यम् । विष्टब्धाः अवलम्ब्य स्थिताः । केचिदुच्छ्रिताश्च केवलं स्थिताश्च ॥ ४० ॥ ४१ ॥

४१-४७ ] ति० टी०—चित्रकर्म इवेत्यसंधिरार्षः । यथा सिद्धमायानिर्मितं चित्रकर्माश्चर्यकरं तथैव तेषां परसंप्लवो रणसंमर्द आभाति स्म ॥ ४१-४७ ॥

रा० टी०—चित्रेति । महीतले विशेषणविशिष्टानां रणसंप्लवः चित्रकर्मेवाभाति असन्धिरार्षः ॥ ४१ ॥

रा० टी०—शोणितेति । शोणितरूपोदकस्य निष्यन्दः प्रसवो यस्यां काकगृध्रैस्समाकुला शस्त्राण्येव ग्राहाः तद्वती नदी संयुगमुखे संग्राममूर्धनि प्रवृत्ता ॥ ४२ ॥

रा० टी०—एतस्मिन्निति । दैवतैर्विनिपातितं बलं स्वसैन्यं निरीक्ष्य क्रुद्धो दशग्रीवः प्रवृद्धं सैन्यसागरं प्रविगाह्य प्रविश्येत्यर्थः त्रिदशान्निघ्नन्सन् शक्रमेवाभ्यवर्तत श्लोकद्वयमेकान्वयि ॥ ४३ ॥ ४४ ॥

रा० टी०—तत इति । विस्फार्य प्रवर्तितो यस्य निर्घोषः दश दिशः स्तनतिस्म तत्सुमहास्वनं सुमहच्चापं शक्रो विस्फार्य रणमूर्द्धनि अतिष्ठदिति शेषः ॥ ४५ ॥

रा० टी०—तदिति । इन्द्रः चापं विकृष्य रावणमूर्द्धनि पावकादित्यवर्चसः शरान्पातयामास ॥ ४६ ॥

रा० टी०—अथेति । दशग्रीवः शरवर्षैः शक्रमवाकिरत् ४७

गो० टी०—चित्रेति । चित्रकर्म इवेति वाक्ये सन्धिरनित्यः । रणसंघर्षः रणसंमर्दः । चित्रकर्मेवाश्चर्यकर आभातीत्यर्थः ॥ ४२-४८ ॥

---

१ तत इति गो. पाठः । २ इदं पद्यमधिकं गो. पु. । ३ स्तैरिति गो. पाठः । ४ रण इति गो. पाठः । ५ शिंशिति गो. पाठः । ६ तथेति गो. पाठः । ७ स तेषामिति गो. पाठः । ८ मत्तानामिति गो. पाठः । ९ निष्पन्दकर्दमेति गो. पाठः । १० भागादिति गो. पाठः । ११ घोषेणेति गो. पाठः । १२ निपातयामासेति गो. पाठः । १३ व्यवस्थित इति गो.पाठः ।

प्रयुध्यतोरथ तयोर्बाणवर्षैः समन्ततः । नाज्ञायत तदा किंचित्सर्वं हि तमसा वृतम् ॥ ४८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

## एकोनत्रिंशः सर्गः ।

शक्ररावणयो रणे वृत्रघ्ना ग्रस्तं स्वपितरं निशम्येन्द्रजिन्मायायुद्धेन बिडौजसं बद्ध्वा पित्राभिनन्दितो लङ्कां निनाय ।

ततस्तमसि संजाते सर्वे ते देवराक्षसाः । आयुद्ध्यन्त[1] बलोन्मत्ताः सूदयन्तः परस्परम् ॥ १ ॥
[ ततस्तु[2] देवसैन्येन राक्षसानां बृहद्बलम् । दशांशं स्थापितं युद्धे शेषं नीतं यमक्षयम् ॥
तस्मिंस्तु तामसे युद्धे सर्वे ते देवराक्षसाः । अन्योन्यं नाभ्यजानन्त युध्यमानाः परस्परम् ]
इन्द्रश्च रावणश्चैव रावणिश्च महाबलः । तस्मिंस्तमोजालवृते मोहमीयुर्न ते त्रयः ॥ २ ॥
स तु दृष्ट्वा बलं सर्वं रावणो निहतं क्षणात् । क्रोधमभ्यगमत्तीव्रं महानादं च मुक्तवान् ॥ ३ ॥
क्रोधात्सूतं च दुर्धर्षः स्यन्दनस्थमुवाच ह । परसैन्यस्य मध्येन यावदन्तो नयस्व माम् ॥ ४ ॥
अद्यैवैतान्[3] त्रिदशान्सर्वान्विक्रमैः समरे स्वयम् । नानाशस्त्रमहासारैर्नयामि यमसादनम् ॥ ५ ॥
अहमिन्द्रं वधिष्यामि धनदं वरुणं यमम् । त्रिदशान्विनिहत्याशु[4] स्वयं स्थास्याम्यथोपरि ॥६॥
विषादो नैवं[5] कर्तव्यः शीघ्रं वाहय मे रथम् । द्विः खलु त्वां ब्रवीम्यद्य यावदन्तं[6] नयस्व माम् ॥७॥

४८ ] ति० टी०—सर्वं हि तमसा वृतम् । उभयशरवर्षकृतसर्वदिक्छादनेनेति भावः ॥ ४८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टाविंशः सर्गः ॥ २८ ॥

रा० टी०—प्रयुध्यतोरिति । तयोः शक्रदशग्रीवयोः प्रयुध्यतोस्सतोः सर्वं जगत्तमसा वृतमभवत् अत एव किञ्चिन्नाज्ञायत ॥ ४८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टाविंशः सर्गः ॥ २८ ॥

गो० टी०—प्रयुध्यतोरिति । तमसावृतम् उभयशरवर्षसर्वदिक्छादनकृतेनेति शेषः ॥ ४९ ॥

इति श्रीगो०श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टाविंशः सर्गः ॥ २८ ॥

१-३ ] ति० टी०—देवाश्च राक्षसाश्च देवराक्षसाः॥१-३॥

रा० टी०—तमआवरणानन्तरकालिकं वृत्तमाह—तत इत्यादिभिः । तमसि संजाते सति देवराक्षसाः अयुध्यन्त॥१॥

रा० टी०—इन्द्र इति । तमोजालेन वृते सति इन्द्रादयस्त्रय एव मोहं नेयुः ॥ २ ॥

रा० टी०—स इति । रावणः बलं निहतं दृष्ट्वा तीव्रं क्रोधमभ्यागमत् अत एव महानादं मुक्तवान् ॥ ३ ॥

४-५ ] ति० टी०—परसैन्यस्यान्तो यावत्तावन्मां मध्येन परसेनामध्यमार्गेण नयस्व ॥ ४ ॥ ५ ॥

रा० टी०—क्रोधादिति । दुर्धर्षो रावणः स्यन्दनस्थं सूतमुवाच तदाकारमाह यावत्पर्यन्तं परसैन्यस्यान्तः तावत्पर्यंतं परसैन्यस्य मध्येन मां नयस्व ॥ ४ ॥

रा० टी०—अद्येति । शस्त्राण्येव महासाराणि तैस्सर्वान् त्रिदशान्यमसादनं नयामि ॥ ५ ॥

गो० टी०—क्रोधादिति । यावदन्त इति । परसैन्यस्यान्तो यावत् तावन्मध्येन मां नयस्व ॥ ६ ॥ ७ ॥

६ ] ति० टी०—अथोपरि । सर्वेषामुपरिष्टादित्यर्थः ॥६॥

रा०टी०—अहमिति । इन्द्रादीन्वधिष्यामि ब्राह्मणवशिष्ठन्यायेन न पूर्वेण पौनरुक्त्यं त्रिदशान्विनिहत्य उपरि स्वर्गे स्वयं स्थास्यामि ॥ ६ ॥

गो० टी०—अहमिति । अथोपरि सर्वेषामुपरिष्टादित्यर्थः ॥ ८ ॥

७ ] ति० टी०—अथ देवसेनामध्यप्रवेशे कथं भविष्यतीति विषण्णं सारथिं पुनरप्याह—द्विः खल्विति । द्विर्द्विवारं ब्रवीमि । तत्कथं न नयसीति शेषः ॥ ७ ॥

रा० टी०—विषाद इति । यावदन्तं रिपुसेनान्तपर्यन्तं मां नयस्वेति त्वां द्विर्ब्रवीमि ॥ ७ ॥

गो० टी०—देवसेनामध्ये प्रवेशे किं भविष्यतीति विषण्णं सारथिं पुनश्चाह—द्विः खल्वित्यादि । यावदन्तो नयस्व मामिति द्विः द्विवारम् त्वां ब्रवीमि खलु । तत्कथं न नयसीत्यर्थः ॥ ९ ॥

१ अयुध्यन्तेति गो. पाठः । २ पद्यद्वयमिदमधिकं गो. पु. । ३ एतानिति गो. पाठः । ४ अथेति गो. पाठः । ५ चेति गो. पाठः । ६ अन्त इति गो. पाठः ।

अयं स नन्दनोद्देशो यत्र वर्तामहे वयम् । नय मामद्य तत्र त्वमुदयो यत्र पर्वतः ॥ ८ ॥
तस्य तद्वचनं श्रुत्वा तुरगान्स मनोजवान् । आदिदेशाथ शत्रूणां मध्येनैव च सारथिः ॥ ९ ॥
तस्य तं निश्चयं ज्ञात्वा शक्रो देवेश्वरस्तदा । रथस्थः समरस्थस्तान्देवान्वाक्यमथाब्रवीत् ॥ १० ॥
सुराः शृणुत मद्वाक्यं यत्तावन्मम रोचते । जीवन्नेव दशग्रीवः साधु रक्षो निगृह्यताम् ॥ ११ ॥
एष ह्यतिबलः सैन्ये रथेन पवनौजसा । गमिष्यति प्रवृद्धोर्मिः समुद्र इव पर्वणि ॥ १२ ॥
नह्येष हन्तुं शक्योऽद्य वरदानात्सुनिर्भयः । तद्ग्रहीष्यामहे रक्षो यत्ता भवत संयुगे ॥ १३ ॥
यथा बलौ निरुद्धे च त्रैलोक्यं भुज्यते मया । एवमेतस्य पापस्य निरोधो मम रोचते ॥ १४ ॥
ततोऽन्यं देशमास्थाय शक्रः संत्यज्य रावणम् । अयुध्यत महाराज राक्षसांस्त्रासयन्रणे ॥ १५ ॥
उत्तरेण दशग्रीवः प्रविवेशानिवर्तकः । दक्षिणेन तु पार्श्वेन प्रविवेश शतक्रतुः ॥ १६ ॥
ततः स योजनशतं प्रविष्टो राक्षसाधिपः । देवतानां बलं सर्वं शरवर्षैरवाकिरत् ॥ १७ ॥
ततः शक्रो निरीक्ष्याथ प्रनष्टं तु स्वकं बलम् । न्यवर्तयदसंभ्रान्तः समावृत्य दशाननम् ॥ १८ ॥
एतस्मिन्नन्तरे नादो मुक्तो दानवराक्षसैः । हा हताः स्म इति ग्रस्तं दृष्ट्वा शक्रेण रावणम् ॥ १९ ॥

---

८-१३ ] ति० टी०–अपरिमितदेवसेनाया अन्तस्य दुर्ज्ञेयत्वादाह—अयमिति । नन्दनमारभ्योदयपर्वतान्तं सेना तिष्ठतीति भावः ॥ ८-१३ ॥

रा० टी०–सेनायाः आद्यन्तौ बोधयन्नाह—अयमिति । यत्र वयं वर्तामहे सोऽयं नन्दनोद्देशः सेनाया आदिरित्यर्थः यत्रोदयः पर्वतः तत्र मां नय स एव सेनान्त इत्यर्थः ॥ ८ ॥

रा० टी०–तस्येति । सारथिः शत्रूणां मध्येन मार्गेणैव तुरगान् आदिदेश चालयामासेत्यर्थः ॥ ९ ॥

रा० टी०–तस्येति । शक्रः तस्य रावणस्य निश्चयं ज्ञात्वा समरस्थः सन्देवान्वाक्यमब्रवीत् ॥ १० ॥

रा० टी०–तदाकारमाह—सुरा इत्यादिभिः । हे सुराः यद्वाक्यं मम रोचते तद्यूयं शृणुत तदाकारमाह दशग्रीवः जीवन्नेव निगृह्यताम् ॥ ११ ॥

रा० टी०–निग्रहणयोग्यतां बोधयन्नाह-एष इति । एष रावणः पवनौजसा रथेन पर्वणि प्रवृद्धोर्मिः समुद्र इव गमिष्यति १२

रा० टी०–ननु वध्यतामेव किमर्थं निगृह्यते इत्यत आह—नहीति । वरदानान्निर्भयस्स एष रावणः हन्तुं न शक्यः तत्तस्माद्धेतोः रक्षो रावणं ग्रहीष्यामहे अतः यूयं यत्ता उद्युक्ता भवत ॥ १३ ॥

गो० टी०–अपरिमितदेवसेनायाः क आदिः कोन्त इत्यत्राह—अयमिति । वयं यत्र वर्तामहे स नन्दनोद्देशः एष आदिः । एनमारभ्य उदयपर्वतो यत्र तत्र मामद्य नय सोन्तो देवसेनायाः ॥ १०-१९ ॥

१४ ] ति० टी०–यथा बलौ बलिदैत्ये निरुद्धे कृतनिरोधे सति मया त्रैलोक्यं भुज्यते, एवमस्य पापस्य निरोधस्त्रैलोक्यरक्षार्थं मम कर्तव्यत्वेन रोचते इत्यब्रवीदिति पूर्वेण संबन्धः ॥ १४ ॥

रा० टी०–यथेति । बलौ निरुद्धे सति त्रैलोक्यं मया यथा यथावद्भुज्यते एवमत एव एतस्य रावणस्य निरोधो मम रोचते ॥ १४ ॥

गो० टी०–यथेति । बलौ महाबलौ । निरुद्धे अहत्वैव कृतविरोधे सति । एवमेतस्य निरोधोपीत्यब्रवीदिति पूर्वेणान्वयः ॥ १६ ॥

१५ ] ति० टी०–ततोऽन्यं देशं रावणावस्थितदेशादन्यं देशम् । रावणं संत्यज्येति । वज्रपातादिना प्रहर्तुमशक्यत्वात्पुरःस्थितिर्निष्प्रयोजनेत्याशयेन तं त्यक्त्वा ॥ १५ ॥

रा० टी०–तत इति । ततः स्वोक्त्यनन्तरं शक्रः रावणं संत्यज्य अन्यं देशमास्थाय राक्षसान् त्रासयन्सन् अयुध्यत १५

गो० टी०–ततोन्यमिति । रावणावस्थितदेशादित्यर्थः । रावणं संत्यज्येति । वज्रादिना प्रहर्तुमशक्यत्वात् पुरस्थितिनिष्प्रयोजनेति मत्वेति शेषः ॥ १७ ॥

१६-१७ ] ति० टी०–उत्तरेण प्रविवेश । देवसेनामिति शेषः । अनिवर्तकोऽनिवर्तितुम् ॥ १६ ॥ १७ ॥

रा० टी०—उत्तरेणेति । दशग्रीवः उत्तरेण मार्गेण प्रविवेश तदा शतक्रतुस्तु दक्षिणेन पार्श्वेन प्रविवेश ॥ १६ ॥

रा० टी०–तत इति । योजनशतं देवतानां बलं प्रविष्टो रावणः शरवर्षैर्बलमवाकिरत् ॥ १७ ॥

गो० टी०–उत्तरेणेति । देवसेनामिति शेषः १८॥१९॥

१८-१९ ] ति० टी०–दशाननं न्यवर्तयदित्यत्र हेतुः—असंभ्रान्तः समावृत्येति ॥ १८ ॥ १९ ॥

रा० टी०–तत इति । शक्रः स्वकं बलं प्रनष्टं निरीक्ष्य दशाननं समावृत्य बलं न्यवर्तयत् ॥ १८ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नन्तरे समये शक्रेण रावणं ग्रस्तं दृष्ट्वा दानवराक्षसैः हा हता स्म इति नादो मुक्तः १९

ततो रथं समास्थाय रावणिः क्रोधमूर्च्छितः । तत्सैन्यमतिसंक्रुद्धः प्रविवेश सुदारुणम् ॥ २० ॥
तां प्रविश्य महामायां प्राप्तां पशुपतेः पुरा । प्रविवेश सुसंरब्धस्तत्सैन्यं समभिद्रवत् ॥ २१ ॥
स सर्वा देवतास्त्यक्त्वा शक्रमेवाभ्यधावत । महेन्द्रश्च महातेजा नापश्यच्च सुतं रिपोः ॥ २२ ॥
विमुक्तकवचस्तत्र वध्यमानोऽपि रावणिः । त्रिदशैः सुमहावीर्यैर्न चकार च किंचन ॥ २३ ॥
स मातलिं समायान्तं ताडयित्वा शरोत्तमैः । महेन्द्रं बाणवर्षेण भूय एवाभ्यवाकिरत् ॥ २४ ॥
ततस्त्यक्त्वा रथं शक्रो विससर्ज च सारथिम् । ऐरावतं समारुह्य मृगयामास रावणिम् ॥ २५ ॥
स तत्र मायाबलवानदृश्योऽथान्तरिक्षगः । इन्द्रं मायापरिक्षिप्तं कृत्वा स प्राद्रवच्छरैः ॥ २६ ॥
स तं यदा परिश्रान्तमिन्द्रं जज्ञेऽथ रावणिः । तदैनं मायया बद्ध्वा स्वसैन्यमभितोऽनयत् ॥ २७ ॥
तं तु दृष्ट्वा बलात्तेन नीयमानं महारणात् । महेन्द्रममराः सर्वे किं नु स्यादित्यचिन्तयन् ॥ २८ ॥
दृश्यते न स मायावी शक्रजित्समितिंजयः । विद्यावानपि येनेन्द्रो माययापहृतो बलात् ॥ २९ ॥
एतस्मिन्नन्तरे क्रुद्धाः सर्वे सुरगणास्तदा । रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३० ॥
रावणस्तु समासाद्य आदित्यांश्च वसूंस्तदा । न शशाक स सङ्ग्रामे योद्धुं शत्रुभिरर्दितः ॥ ३१ ॥
स तं दृष्ट्वा परिम्लानं प्रहारैर्जर्जरीकृतम् । रावणिः पितरं युद्धे दर्शनस्थोऽब्रवीदिदम् ॥ ३२ ॥

---

गो० टी०—तत इति । न्यवर्तयत स्वसेनया दशाननं समावृत्य न्यवर्तयत् ॥ २० ॥ २१ ॥

२० ] ति० टी०—तत्सैन्यम् ॥ २० ॥

रा० टी०—तत इति । ततः नादश्रवणानन्तरमतिसंक्रुद्धमत एव क्रोधेन मूर्छितो रावणिस्तत् देवसंबन्धि सैन्यं प्रविवेश ॥२०॥

गो० टी०—तत इति । तत्सैन्यं देवसैन्यम् ॥ २२ ॥

२१-२२ ] ति० टी०—पुरःस्थितया देवसेनाजयस्याशक्यत्वान्मायां श्रयते—तामिति । समभिद्रवत् । समभ्यद्रावयदित्यर्थः ॥ २१ ॥ २२ ॥

रा०टी०—तामिति। पुरा पशुपतेः प्राप्तां महामायां प्रविश्य तत् देवसंबन्धि सैन्यं प्रविवेश समभिद्रवत् समभ्यद्रावयत्॥२१॥

रा० टी०—स इति । स रावणिः शक्रमेवाभ्यधावत महेन्द्रस्तु रिपोस्सुतं नापश्यत् ॥ २२ ॥

गो टी०—तामिति । गोपतिना[1] रुद्रेण ॥ २३-२८ ॥

२३-२६] ति०टी०—किंचन । किमपि भयमित्यर्थः२३।२६

रा० टी०—विमुक्तेति । त्रिदशैर्वध्यमानः अत एव विमुक्तकवचोऽपि रावणिः किञ्चिन्न चकार भयमिति शेषः॥२३॥

रा० टी०—स इति । रावणिः समायान्तं मातलिमिन्द्रसारथिं ताडयित्वा बाणवर्षेण महेन्द्रं भूयोऽप्यभ्यवाकिरत् २४

रा० टी०—तत इति । शक्रः ऐरावतं समारुह्य रावणिं मृगयामास ॥ २५ ॥

रा० टी०—स इति । मायाबलवान् अत एव अदृश्यः अन्तरिक्षगः स रावणिः इन्द्रं मायया परिक्षिप्तं व्याकुलं कृत्वा आस इतस्ततो जगाम शरैरिन्द्रं प्राद्रवच ॥ २६ ॥

२७ ] ति० टी०—स्वसैन्यमभितोऽनयत् । स्वसैन्यपार्श्वमनयदित्यर्थः ॥ २७ ॥

रा० टी०—स इति । रावणिः इन्द्रं यदा परिश्रान्तं जज्ञे बुबुधे तदा एनमिन्द्रं मायया बध्वा स्वसैन्यमभितोऽनयत् ॥२७॥

गो० टी०—स इति । स्वसैन्यमभितः स्वसेनायाः पार्श्वम् ॥ २९ ॥ ३० ॥

२८-३१ ] ति० टी०—महेन्द्रं तेन बलान्नीयमानं दृष्ट्वा विद्यावानप्यसुरमायासंहारविद्यावानपीन्द्रो येन रावणिना मायया नीयते स न दृश्यते, एतत्किं न्विति चुक्रुशुः॥२८-३१॥

रा० टी०—तमिति । सर्वे अमराः बलात्सैन्यात्तेन रावणिना नीयमानं महेन्द्रं दृष्ट्वा किन्नु स्यात् अस्माभिः किंकर्तव्यमित्यर्थः इत्यचिन्तयन् ॥ २८ ॥

रा० टी०—दृश्यत इति । विद्यावान् आसुरमायाविघातकविद्यायुक्तोपीन्द्रो येन मायया बलात्सैन्यादपहृतः स मायावी न दृश्यते ॥ २९ ॥

रा० टी०—एतस्मिन्निति । सुरगणाः रावणं विमुखीकृत्य शरवर्षैरवाकिरन् ॥ ३० ॥

रा० टी०—रावण इति । शत्रुभिरर्दितो रावणः आदित्यान्वसूंश्च समासाद्य योद्धुं न शशाक ॥ ३१ ॥

गो० टी०—दृश्यत इति । विद्यावानपि असुरमायासंहार्यपि येनानेन रावणिना मायया नीयते[2] । एतत्किं न्विति चुक्रुशुः ॥ ३१-३३ ॥

३२] ति० टी०—युद्धे दर्शनस्थ इति अदर्शनस्थ इति छेदः अन्तर्हित एवाब्रवीदित्यर्थः । दर्शने महेन्द्रनाशभियेति भावः३२

रा० टी०—स इति । अदर्शनस्थो रावणिः प्रहारैर्जर्जरीकृतमत एव परिम्लानं पितरमिदमब्रवीत् ॥ ३२ ॥

गो० टी०—स तमिति । युद्धे अदर्शनस्थोऽब्रवीदिति । सति दर्शने महेन्द्र एव नाशयेदिति भावः ॥ ३४ ॥

---

१ गोपतिनेति गो. पाठः । २ नीयतें इति गो. पाठः ।

आगच्छ तात गच्छामो रणकर्म निवर्तताम् । जितं नो विदितं तेऽस्तु स्वस्थो भव गतज्वरः ॥३३॥
अयं हि सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः । स गृहीतो देवैबलाद्भग्नदर्पाः सुराः कृताः ॥ ३४ ॥
यथेष्टं भुङ्क्ष्व लोकांस्त्रीन्निगृह्यारातिमोजसा । वृथा किं ते श्रमेणेह युद्धमद्य तु निष्फलम् ॥ ३५ ॥
ततस्ते दैवतगणा निवृत्ता रणकर्मणः । तच्छ्रुत्वा रावणेर्वाक्यं शक्रहीनाः सुरा गताः॥३६॥
अथ स रणविगतमुत्तमौजास्त्रिदशरिपुः प्रथितो निशाचरेन्द्रः ।
स्वसुतवचनमादृतः प्रियं तत्समनुनिशम्य जगाद चैव सूनुम् ॥ ३७ ॥
अतिबलसदृशैः पराक्रमैस्त्वं मम कुलवंशविवर्धनः प्रभो ।
यदयमतुलबलस्त्वयाद्य वै त्रिदशपतिस्त्रिदशाश्च निर्जिताः ॥ ३८ ॥
नय रथमधिरोप्य वासवं नगरमितो व्रज सेनया वृतस्त्वम् ।
अहमपि तव पृष्ठतो द्रुतं सह सचिवैरनुयामि हृष्टवत् ॥ ३९ ॥
अथ स बलवृतः सवाहनस्त्रिदशपतिं परिगृह्य रावणिः ।
स्वभवनमधिगम्य वीर्यवान्कृतसमरान्विससर्ज राक्षसान् ॥ ४० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

---

३३ ] ति० टी०—हे तात ! आगच्छ गच्छामः । स्वपुरमिति शेषः । रणकर्म निवर्ततां निवृत्तमस्तु । समाप्तमस्त्वित्यर्थः । कुतो निवृत्तिस्तत्राह—नोऽस्माकं जितं जयः संवृत्तः भावे निष्ठा स जयस्ते विदितोऽस्तु ॥ ३३ ॥

रा० टी०—तदाकारमाह—आगच्छेति । नोऽस्माभिर्जितं देवजातमिति शेषः इति ते विदितमस्तु अतः विगतज्वरस्त्वस्थश्च भव अत एव आगच्छ अत एव रणकर्म निवर्ततां वयं गच्छामः ॥ ३३ ॥

गो० टी०—आगच्छेति । निवर्ततां निवृत्तमस्तु समाप्तमस्तु । कथं निवृत्तिरित्यत्राह—जितमिति । भावे निष्ठा॥३९॥

३४-३६ ] ति० टी०—कथं जयस्तत्राह—अयं हीति । देवबलाद्देवसेनायाः ॥ ३४-३६ ॥

रा० टी०—जये हेतुमाह—अयमिति । सुरसैन्यस्य त्रैलोक्यस्य च यः प्रभुः स मया देवबलात् देवसैन्यात् गृहीतः अत एव सुराः भग्नदर्पाः कृताः ॥ ३४ ॥

रा० टी०—यथेष्टमिति । अरातिमरिं निगृह्य यथेष्टं भुङ्क्ष्व अतः युद्धं निष्फलमत एव वृथा श्रमेण किं निवर्ततामित्यर्थः ॥ ३५ ॥

रा० टी०—तत इति । दैवतगणाः सुराः रावणेर्वाक्यं श्रुत्वा रणकर्मणो निवृत्ताः सन्तः गताः स्वं स्वं स्थानमिति शेषः ॥३६॥

गो० टी०—अयं हीति । दैवबलात् देवसेनायाः३६-३८

३७-३९ ] ति० टी०—रणविगतो विगतरणः॥३७-३९॥

रा० टी०—अथेति । प्रियं तत् स्वसुतवचनं समनुनिशम्य रणाद्विगतः प्रथितो विख्यातो निशाचरेन्द्रः सुतं सुतं जगाद३७

रा० टी०—अतिबलेति । यद्यस्मात्त्रिदशपतिः त्रिदशाश्च त्वया निर्जिताः तस्मात्सदृशैः अस्मत्कुलोचितैः पराक्रमैरुपलक्षितस्त्वं मम कुलवंशविवर्द्धनोसि ॥ ३८ ॥

गो० टी०—अथेति । रणविगतज्वरः विगतरणाज्वर इत्यर्थः ॥ ३९ ॥ ४० ॥

रा० टी०—नयेति । वासवं रथमधिरोप्य नगरं लंकां नय तत्प्रकारमाह सेनया वृतस्त्वमितो लोकान्व्रज अहमपि हृष्टवद्धर्षविशिष्टं यथा भवति तथा तव पृष्ठतोऽनुयामि ॥ ३९ ॥

गो० टी०—नयेति । त्वरितमुपनयस्वेति पाठे निर्जिता इति पूर्वेणान्वयः ॥ ४१ ॥

४० ] ति० टी०—राक्षसान्विससर्ज । स्वस्वभवनं प्रतीति शेषः ॥ ४० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

रा० टी०—अथेति । बलैर्वृतो रावणिः त्रिदशपतिं परिगृह्य स्वभवनमभिगम्य कृतसमरान् राक्षसान्विससर्ज तद्गृहगमनाय आज्ञापयत् ॥ ४० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनत्रिंशः सर्गः ॥ २९ ॥

गो० टी०—अथेति । राक्षसान्विससर्जेति स्वं स्वं निवेशं प्रतीति शेषः ॥ ४२ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनत्रिंशः सर्गः ॥ २९ ॥

---

१ दैवेति गो. पा. । २ स्वस्थचेता बभूव ह इति गो. पा. । ३ रणविगतज्वरः प्रभुर्विजयमवाप्य निशाचराधिपः । स्वभवनमभितो जगाम हृष्टः स्वसुतमवाप्य च वाक्यमब्रवीदिति गो. पा. । ४ तेऽद्य मम कुलमानविवर्धनं कृतमिति गो. पा. । ५ अतुल्येति गो. पा. । ६ गच्छत इति गो. पा. ।

## त्रिंशः सर्गः ।

इन्द्रमोचनाय देवैः प्रार्थितः प्रजापतिस्तत्रागत्येन्द्रजिते वरान्वितीर्य तेन मोचितं शक्रं विमनसं वीक्ष्य पुरा त्वत्कृताहल्याधर्षण कुपितगौतमेन शप्तोऽस्यतो वैरिबद्धस्त्वमिति तं समाश्वास्य त्रिदिवं प्रापयत् ।

जिते महेन्द्रेऽतिबले[1] रावणस्य सुतेन वै[2] । प्रजापतिं पुरस्कृत्य ययुर्लङ्कां सुरास्तदा ॥ १ ॥
तत्र रावणमासाद्य पुत्रभ्रातृभिरावृतम् । अब्रवीद्गगने तिष्ठन्सामपूर्वं प्रजापतिः ॥ २ ॥
वत्स रावण तुष्टोऽस्मि पुत्रस्य तव संयुगे । अहोऽस्य विक्रमौदार्यं तव तुल्योऽधिकोऽपि वा ॥३॥
जितं हि भवता सर्वं त्रैलोक्यं स्वेन तेजसा । कृता प्रतिज्ञा सफला प्रीतोऽस्मि ससुतस्य ते ॥ ४ ॥
अयं च पुत्रोऽतिबलस्तव रावण वीर्यवान् । जगतीन्द्रजिदित्येव परिख्यातो भविष्यति ॥ ५ ॥
बलवान्दुर्जयश्चैव भविष्यत्येव राक्षसः । यं समाश्रित्य ते राजन्स्थापितास्त्रिदशा वशे ॥ ६ ॥
तन्मुच्यतां महाबाहो महेन्द्रः पाकशासनः । किंचास्य मोक्षणार्थाय प्रयच्छन्तु दिवौकसः ॥ ७ ॥
अथाब्रवीन्महातेजा इन्द्रजित्समितिंजयः । अमरत्वमहं देव वृणे यद्येष मुच्यते ॥ ८ ॥
[ चतुष्पदां[3] खेचराणामन्येषां वा महौजसाम् । वृक्षगुल्मक्षुपलतातृणोपलमहीभृताम् ॥
सर्वेऽपि जन्तवोऽन्योन्यं भेतव्ये सति बिभ्यति । अतोऽत्र लोके सर्वेषां सर्वस्माच्च भवेद्भयम् ॥ ]
ततोऽब्रवीन्महातेजा मेघनादं प्रजापतिः । नास्ति सर्वामरत्वं हि कस्यचित्प्राणिनो भुवि ॥ ९ ॥
पक्षिणश्चतुष्पदो वा भूतानां वा महौजसाम् । श्रुत्वा पितामहेनोक्तमिन्द्रजित्प्रभुणाव्ययम् ॥ १० ॥

---

१-२ ] ति० टी०-अथ ब्रह्मणेन्द्रमोचनमिन्द्राश्वासनं च—जिते इति ॥ १ ॥ २ ॥

रा० टी०-रावणादिकर्तृकलङ्काप्रवेशानन्तरकालिकं वृत्तान्तमाह—जित इत्यादिभिः । रावणस्य सुतेन महेन्द्रातिबले जिते सति सुराः प्रजापतिं पुरस्कृत्य लङ्कां ययुः ॥१॥

रा० टी०-तत्रेति । प्रजापतिः रावणमासाद्य गगने तिष्ठन्सन्नब्रवीत् ॥ २ ॥

गो० टी०-जित इत्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०-अहोऽस्येति संधिरार्षः । तव तुल्यः । एव इति शेषः ॥ ३ ॥

रा० टी०-तदाकारमाह—वत्सेत्यादिभिः । तव पुत्रस्योपरि तुष्टोस्मि तत्र हेतुः अस्य तव पुत्रस्य विक्रमौदार्यमहो आश्चर्यमतोऽयं तव तुल्योऽधिको वा ॥ ३ ॥

गो० टी०-वत्सेति । अहोस्येति संधिरार्षः ॥ ३ ॥

४-६ ] ति० टी०-त्रींल्लोकाञ्जेष्यामीति या प्रतिज्ञा कृता सा सफला जाता ॥ ४-६ ॥

रा० टी०-जितमिति । भवता त्रैलोक्यं जितमत एव प्रतिज्ञा सफला कृता अत एव ससुतस्य ते प्रीतोस्मि ॥ ४ ॥

रा० टी०-अयमिति । अतिबलस्तवायं पुत्रः इन्द्रजिदित्येवं जगति परिख्यातो भविष्यति ॥ ५ ॥

रा० टी०-बलवानिति । यं पुत्रं समाश्रित्य त्रिदशाः वशे स्थापिताः स राक्षसः दुर्जयो भविष्यति भवति ॥ ६ ॥

गो० टी०-जितमिति । स्वसुतेन स्वसुतबलेन । त्वया कृता प्रतिज्ञा चतुरो दिक्पालान् जेष्यामीति कृता प्रतिज्ञा ४-१०

७-८ ] ति० टी०-तन्मुच्यतां त्रिदशानां वशे स्थापितत्वात्तावत एवार्थस्य त्वत्संपाद्यत्वादिति भावः । अस्य मोक्षणार्थाय । अन्यदप्यभीष्टं दिवौकसः किं प्रयच्छन्तु तद्वदेति शेषः ॥ ७ ॥ ८ ॥

रा० टी०-तदिति । तत् त्वत्प्रयोजनस्य सिद्धत्वाद्धेतोः महेन्द्रः परमैश्वर्यवान्पाकशासनः त्वया मुच्यतामस्य पाकशासनस्य मोक्षणार्थाय दिवौकसः किं प्रयच्छन्तु तद्वदेत्यर्थः॥७॥

रा० टी०-अथेति । इन्द्रजिदब्रवीत्तदाकारमाह हे देव यदि एष इन्द्रो मुच्यते मोच्यते तदा अमरत्वमहं वृणे ॥ ८ ॥

९ ] ति० टी०-सर्वामरत्वं सर्वतो निमित्तात्सर्वस्मिन्नपि मरणराहित्यं मत्सृष्टप्राणिनां नास्ति ॥ ९ ॥

रा० टी०-तत इति । प्रजापतिः मेघनादमब्रवीत्तदाकारमाह पक्षिणः पक्षिणां मध्ये चतुष्पदः चतुष्पदां मध्ये महौजसां भूतानां मनुष्याणां वा मध्ये कस्यचित्प्राणिनः सर्वामरत्वं नास्ति स्थलद्वये जात्यभिप्रायेणैकवचनं सार्धश्लोक एकान्वयी९

गो० टी०-तत इत्यादिसार्धमेकं वाक्यम् । सर्वामरत्वं सर्वस्मादपि निमित्तात्सर्वस्मिन्नपि काले मरणराहित्यं भुवि मत्सृष्टप्राणिनां नास्ति पक्ष्यादिभ्यो यन्मरणम् ॥ ११॥१२ ॥

१० ] ति० टी०-तान्प्राणिन आह—पक्षिण इति । महौजसो भूता द्विपादाः[4] ॥ १० ॥

---

१ महेन्द्रातिबल इति रा० पाठः । २ स्वसुतेन वै इति गो० पाठः । ३ पद्यद्वयमिदमधिकं गो० पुस्तके । ४ द्विपद इति योग्यं भाति ।

अथाब्रवीत्स तत्रस्थं मेघनादो महाबलः । श्रूयतां वा भवेत्सिद्धिः शतक्रतुविमोक्षणे ॥ ११ ॥
ममेष्टं नित्यशो हव्यैर्मन्त्रैः संपूज्य पावकम् । सङ्ग्राममवतर्तुं च शत्रुनिर्जयकाङ्क्षिणः ॥ १२ ॥
अश्वयुक्तो रथो मह्यमुत्तिष्ठेत्तु विभावसोः । तत्स्थस्यामरता स्यान्मे एष मे निश्चितो वरः ॥१३॥
तस्मिन्यद्यसमाप्ते च जप्यहोमे विभावसौ । युध्येयं देव सङ्ग्रामे तदा मे स्याद्विनाशनम्॥ १४ ॥
सर्वो हि तपसा देव वृणोत्यमरतां पुमान् । विक्रमेण मया त्वेतदमरत्वं प्रवर्तितम् ॥ १५ ॥
एवमस्त्विति तं चाह वाक्यं देवः पितामहः । मुक्तश्चेन्द्रजिता शक्रो गताश्च त्रिदिवं सुराः॥ १६ ॥
एतस्मिन्नन्तरे राम दीनो भ्रष्टामरद्युतिः । इन्द्रश्चिन्तापरीतात्मा ध्यानतत्परतां गतः ॥ १७ ॥
तं तु दृष्ट्वा तथाभूतं प्राह देवः पितामहः । शतक्रतो किमु पुरा करोति स्म सुदुष्कृतम् ॥ १८ ॥
अमरेन्द्र मया बुद्ध्या प्रजाः सृष्टास्तथा प्रभो । एकवर्णाः समाभाषा एकरूपाश्च सर्वशः ॥ १९ ॥

**रा० टी०–श्रुत्वेति** । प्रभुणा पितामहेनोक्तमिन्द्रजित् श्रुत्वा तत्रस्थं पितामहमब्रवीत् ॥ १० ॥

११ ] **ति० टी०–श्रूयतां वेति** । वाथवा सर्वामरत्वासंभवे शतक्रतुविमोक्षणे तद्रूपान्निमित्ताद्वा मे सिद्धिः काङ्क्षिता सा श्रूयताम् ॥ ११ ॥

**रा० टी०–तदाकारमाह—श्रूयतामिति** । शतक्रतुविमोक्षणे विमोक्षणार्थं या सिद्धिर्भवेत्सा श्रूयतामहं पृथक् ॥ ११ ॥

**गो० टी०–अथेति** । पूर्वोक्तविवरणमेतत् श्रूयतामिति । वा अथवेत्यर्थः । सर्वामरत्वाभावेपि शतक्रतुविमोक्षणे तन्निमित्तं मया सिद्धिः काङ्क्षिता सा श्रूयताम् ॥ १३ ॥

१२–१३ ] **ति० टी०–तदेवाह—ममेष्टमिति** । तदा मे स्याद्विनाशनं नान्यदेत्येवंरूपं ममेष्टमित्यग्रिमेण संबन्धः । नित्यशो नियमेन मन्त्रैस्तत्पूर्वकं हव्यैः पावकं संपूज्य शत्रुनिर्जयकाङ्क्षिणः सङ्ग्राममवतर्तुं प्रवेष्टुं वाञ्छतो ममाश्वयुक्तो रथो विभावसोस्तत्कालमुत्तिष्ठेत् तत्स्थस्य तद्रथे तिष्ठतो ममामरता च स्यादेव एष मे निश्चितो वरः ॥ १२ ॥ १३ ॥

**रा० टी०–तदाकारमाह—ममेत्यादिभिः** । संग्राममवतर्तुं शत्रुनिर्जयकाङ्क्षिणो ममेष्टं हव्यैर्मन्त्रैः पावकं संपूज्य विद्यमानस्यैव भवेदिति शेषः ॥ १२ ॥

**रा० टी०–इष्टमेवाह—अश्वेति** । विभावसोः हुतवन्हेः अश्वयुक्तो रथो मह्यमुपतिष्ठेत् तत्स्थस्य तादृशरथे स्थितस्य मे अमरता स्यात् एष वरो मे निश्चितः ॥ १३ ॥

**गो० टी०–ममेति** । नित्यशो नियमेन । हव्यैः पावकं संपूज्य शत्रुनिर्जयकाङ्क्षिणः संग्राममवतर्तुं प्रवेष्टुं वाञ्छतो ममाश्वयुक्तो रथो विभावसोरग्रेः तत्कालमुत्तिष्ठेत् तस्य मे संग्रामे अमरता स्यादेव एष मे निश्चयो वरः ॥ १४ ॥ १५ ॥

१४ ] **ति० टी०–तस्मिन्साङ्ग्रामिकयागेऽपेक्षितं यज्जप्यहोमम्** समाहारद्वन्द्वः । तस्मिन्नसमाप्ते यदि युद्धयेयं युद्धं कुर्यां तदा मे विनाशनं स्यादिति ममेष्टमित्यन्वयः ॥ १४ ॥

**रा० टी०–तस्मिन्निति** । विभावसौ वन्हौ जप्ये जपे होमे च असमाप्ते सति यद्यहं युध्येयं तदा मे विनाशनं स्यात्॥ १४

**गो० टी०–तस्मिन्निति** । तस्मिन् सांग्रामिकयागे अपेक्षिते विभावसौ जप्यहोमे चासमाप्ते तु विघ्नवशादसमाप्ते तु यदि युध्येयं तदैव संग्राम एव विनाशनं भवत्विति ममेष्टमिति संबन्धः । प्रकारान्तरेण विनाशो मा भूदित्यर्थः ॥ १६ ॥

१५–१६ ] **ति० टी०–लोकविलक्षणक्रिययायं मे वरलाभ इत्याह—सर्वो हीति** ॥ १५ ॥ १६ ॥

**रा० टी०–इदं याचितं त्वरितमेव देहीति बोधयन्नाह—सर्व इति** । सर्वो जनः तपसा अमरतां वृणोति मया तु विक्रमेण इन्द्रनिग्रहेणेत्यर्थः एतदमरत्वं प्रवर्तितं वृतमेतेन वरप्राप्तिमन्तरा इन्द्रमोक्षो न भवितेति ध्वनितम् ॥ १९ ॥

**रा० टी०–एवमिति** । पितामहः तमिन्द्रजितमेवमस्त्विति वाक्यमाह अत एव इन्द्रजिता शक्रो मुक्तः अत एव सुराः त्रिदिवं गताः ॥ १६ ॥

**गो० टी०–मयात्रैतद्वरं लोकविलक्षणं प्राप्यत इति विस्मयते—सर्व इत्यादि** । प्रवर्तितं प्रकीर्तितम् । दातव्यत्वेनेति शेषः ॥ १७ ॥ १८ ॥

१७] **ति० टी०–भ्रष्टा अमराणां द्युतिर्यस्य सः** ॥ १७ ॥

**रा० टी०–एतस्मिन्निति** । भ्रष्टा अमरद्युतिर्यस्य अतः चिन्तापरीतात्मा इन्द्रः ध्यानतत्परतां गतः निरन्तरं दध्यौ केन कर्मणैवं पराभूतिमहं प्राप्त इति विचारयामासेत्यर्थः १७

**गो० टी०–एतस्मिन्निति** । भ्रष्टामरद्युतिः भ्रष्टा अमराणां देवानां द्युतिर्यस्य स तथा ॥ १९ ॥

१८ ] **ति० टी०–हे शतक्रतो** ! एवमिदानीं शोचन्निति शेषः । तादृशो भवान्पुरा सुदुष्कृतं किमु करोति स्म कस्मात्कृतवानसि ॥ १८ ॥

**रा० टी०–तमिति** । तथाभूतं ध्यानतत्परं तमिन्द्रं पितामहो दृष्ट्वा प्राह तदाकारमाह—हे शतक्रतो ! पुरा पूर्वं सुदुष्कृतमेतत्पराभूतिकारणीभूतमहापापं किं भवान्करोति स्म एतेन ज्ञातं चेदुच्यतामिति सूचितम् ॥ १८ ॥

**गो०टी०–तमिति** । हे शतक्रतो! एवमिदानीं शोचन् भवान् पुरा सुदुष्करं किमु करोति स्म कस्मात्कृतवानसीत्यर्थः॥२०॥

१९ ] **ति० टी०–ननु किं मया कृतं तत्राह—अमरे-**

१ निश्चय इति गो. पाठः । २ बहून इति गो. पाठः ।

तासां नास्ति विशेषो हि दर्शने लक्षणेऽपि वा । ततोऽहमेकाग्रमनास्ताः प्रजाः समचिन्तयम् ॥ २० ॥
सोऽहं तासां विशेषार्थं स्त्रियमेकां विनिर्ममे । यद्यत्प्रजानां प्रत्यङ्गं विशिष्टं तत्तदुद्धृतम् ॥ २१ ॥
ततो मया रूपगुणैरहल्या स्त्री विनिर्मिता । हलं नामेह वैरूप्यं हल्यं तत्प्रभवं भवेत् ॥ २२ ॥
यस्य न विद्यते हल्यं तेनाहल्येति विश्रुता । अहल्येत्येव च मया तस्या नाम प्रकीर्तितम् ॥ २३ ॥
निर्मितायां च देवेन्द्र तस्यां नार्यां सुरर्षभ । भविष्यतीति कस्यैषा मम चिन्ता ततोऽभवत् ॥ २४ ॥
त्वं तु शक्र तदा नारीं जानीषे मनसा प्रभो । स्थानाधिकतया पत्नी ममैषेति पुरंदर ॥ २५ ॥
सा मया न्यासभूता तु गौतमस्य महात्मनः । न्यस्ता बहूनि वर्षाणि तेन निर्यातिता च ह ॥ २६ ॥
ततस्तस्य परिज्ञाय महास्थैर्यं महामुनेः । ज्ञात्वा तपसि सिद्धिं च पत्न्यर्थं स्पर्शिता तदा ॥ २७ ॥
स तया सह धर्मात्मा रमते स्म महामुनिः । आसन्निराशा देवास्तु गौतमे दत्तया तया ॥ २८ ॥
त्वं क्रुद्धस्त्विह कामात्मा गत्वा तस्याश्रमं मुनेः । दृष्टवांश्च तदा तां स्त्रीं दीप्तामग्निशिखामिव ॥ २९ ॥
सा त्वया धर्षिता शक्र कामार्तेन समन्युना । दृष्टस्त्वं स तदा तेन आश्रमे परमर्षिणा ॥ ३० ॥

न्द्रेति । वर्णो देहकान्तिः । एकविधदेहकान्तयः । समाभाषाः समवचनाः । एकरूपाः समानवयोवस्थाः ॥ १९ ॥

रा० टी०—नतु मया न ज्ञातमित्यत आह—**अमरेन्द्रेत्यादिभिः** । हे अमरेन्द्र एकवर्णाः समानवर्णविशिष्टाः समाभाषाः समानभाषायुक्ताः एकरूपाः एकविधशरीरावयवसंनिवेशाः प्रजाः मया बुद्ध्या सृष्टाः अत एव तासां प्रजानां दर्शने रूपे लक्षणे वर्णादौ च विशेषो नास्ति ततः तस्माद्धेतोः अहं प्रजाः समचिन्तयं विशेषप्रतिपत्त्यर्थं व्यचारयम् श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—एतादृशदुःखबीजं मया कृतमित्यत्राह—**अमरेन्द्रेत्यादि** । एकवर्णाः समाभाषाः एकरूपकान्तिस्वराः । एकरूपाः समानवयोवस्थाकालाः ॥ २१ ॥

२० ] ति० टी०—दर्शने रूपलक्षणे वर्णादौ ॥ २० ॥

गो० टी०—**तासामिति** । दर्शने सौन्दर्ये लक्षणे नयनाद्यवयवसौष्ठवे च तासां विशेषो नासीत् । ततोहमिति । एकाग्रमनाः सावधानः सन् ताः प्रजा उद्दिश्य पर्यचिन्तयम् । तासां विशेषकरणप्रकारमचिन्तयं वा ॥ २२ ॥

२१ ] ति० टी०—तासां विशेषार्थं किंचित्किंचिदङ्गवैकल्यप्रयुक्तपरस्परवैलक्षण्यसिद्ध्यर्थम् ॥ २१ ॥

रा० टी०—**स इति** । सः कृतविचारोहं तासां प्रजानां विशेषार्थमेकां स्त्रियं विनिर्ममे अत एव प्रजानां प्रत्यङ्गं यद्यद्विशिष्टं विशेषः तत्तदुद्धृतं प्रकटितम् ॥ २१ ॥

गो० टी०—**सोहमिति** । तासां विशेषार्थं किंचित्किंचिदङ्गवैकल्यप्रयुक्तपरस्परवैलक्षण्यसिद्ध्यर्थमेकां स्त्रियं विनिर्ममे निर्मितवानस्मि । यद्यदिति । प्रत्यङ्गं अङ्गमङ्गम् यद्यद्विशिष्टं सारभूतं सौन्दर्यं तत्तदुद्धृतम् ॥ २३ ॥

२२–२३ ] ति० टी०—तत्प्रभवं वैरूप्यप्रभवम् । हल्यं निन्द्यत्वम् ॥ २२ ॥ २३ ॥

रा० टी०—**तत इति** । ततोऽनन्तरं रूपगुणैरुपलक्षिता अहल्या स्त्री मया विनिर्मिता अहल्याशब्दस्य निर्वचनमाह हलं वैरूपं विरूपोभवेत् हल्यं तु तत्प्रभवं तद्धर्मो भवेत् ॥ २२ ॥

रा० टी०—**यस्या इति** । यस्याः येन हेतुना हल्यं वैरूप्यं न विद्यते तेन हेतुना सा अहल्येति विश्रुता अत एव मयापि तस्या नाम अहल्येति प्रकीर्तितम् ॥ २३ ॥

गो० टी०—**तत इति** । रूपगुणैः प्रत्यङ्गमुद्धृतैः सौन्दर्यगुणैः । अहल्या नामाङ्गना काचिद्विनिर्मिता ॥ २४ ॥ २५ ॥

२४ ] ति० टी०—कस्यैषा भविष्यति । भार्येति शेषः ॥ २४ ॥

रा० टी०—**निर्मितायामिति** । तस्यामहल्यायां निर्मितायां सत्यामेषा कस्य स्त्री भविष्यतीति मम चिन्ताऽभवत् ॥ २४

गो० टी०—**निर्मितायामिति** । भविष्यतीति कस्यैषा पत्नी भविष्यतीति चिन्ताभवत् । तत्तुल्यवराभावादिति भावः ॥ २६ ॥

२५ ] ति० टी०—स्थानाधिकतया देवाधिपतित्वरूपाधिकस्थानप्राप्त्या हेतुना विनापि मदनुमतिं ममैषा पत्नीति जानीषे ॥ २५ ॥

रा० टी०—**त्वमिति** । स्थानाधिकतया सर्वोपरि स्थानवत्वेन हेतुना एषा अजातकामा ममैव पत्नी इति नारीं मनसा त्वं जानीषे ॥ २५ ॥

गो० टी०—**त्वमिति** । स्थानाधिकतया त्रैलोक्याधिपतित्वेन हेतुनेत्यर्थः । ममैषा पत्नीति मनसा जानीषे । अस्मदनुमतिं विना तां प्रार्थितवानसीत्यर्थः ॥ २७ ॥

२६ ] ति० टी०—निर्यातिता पुनः प्रत्यर्पिता ॥ २६ ॥

रा० टी०—**सेति** । सा अहल्या न्यासभूता सती गौतमस्य समीपे बहूनि वर्षाणि न्यस्ता तेन गौतमेन निर्यातिता मह्यं पुनः समर्पिता च ॥ २६ ॥

गो० टी०—**सेति** । निर्यातिता पुनः प्रत्यर्पिता ॥ २८ ॥

२७–३० ] ति० टी०—स्थैर्यं जितेन्द्रियत्वं तपोविषयां सिद्धिं च ज्ञात्वा स्पर्शिता भार्यात्वेन दत्ता ॥ २७–३० ॥

१ परीति गो.पा.। २ वैरूपमिति गो.पा.। ३ वर्तितमिति गो.पा.। ४ संक्रुद्धस्त्वं हि धर्मात्मन्निति गो.पा.। ५ न्वेति गो.पा.। ६ ह्याश्रमे इति गो.पा.।

ततः क्रुद्धेन तेनासि शप्तः परमतेजसा । गतोऽसि येन देवेन्द्र दशाभागविपर्ययम् ॥ ३१ ॥
यस्मान्मे धर्षिता पत्नी त्वया वासव निर्भयात् । तस्मात्त्वं समरे शक्र शत्रुहस्तं गमिष्यसि ॥ ३२ ॥
अयं तु भावो दुर्बुद्धे यस्त्वयेह प्रवर्तितः । मानुषेष्वपि लोकेषु भविष्यति न संशयः ॥ ३३ ॥
तत्राधं तस्य यः कर्ता त्वय्यर्धं निपतिष्यति । न च ते स्थावरं स्थानं भविष्यति न संशयः ॥ ३४ ॥
यश्च यश्च सुरेन्द्रः स्याद्ध्रुवः स न भविष्यति । एष शापो मया मुक्त इत्यसौ त्वां तदाब्रवीत् ॥ ३५ ॥
तां तु भार्यां सुनिर्भर्त्स्य सोऽब्रवीत्सुमहातपाः । दुर्विनीते विनिध्वंस ममाश्रमसमीपतः ॥ ३६ ॥
रूपयौवनसंपन्ना यस्मात्त्वमनवस्थिता । तस्माद्रूपवती लोके न त्वमेका भविष्यति ॥ ३७ ॥

---

रा० टी०—तत इति । तस्य गौतमस्य महास्थैर्यं जितेन्द्रियत्वं तपसि सिद्धिं च ज्ञात्वा पत्न्यर्थं स्पर्शिता तस्मै मया दत्ता ॥ २७ ॥

रा० टी०—स इति । स गौतमः तया अहल्यया रमते स्म देवास्तु तया गौतमे दत्तया हेतुना निराशाः आसन् ॥ २८ ॥

रा० टी०—त्वमिति । कामात्मा त्वं तु क्रुद्धस्सन्मुनेराश्रमं गत्वा अग्निशिखामिव दीप्तां तामहल्यां दृष्टवानसि ॥ २९ ॥

रा० टी०—सेति । कामार्तेन त्वया सा अहल्या धर्षिता त्वं तु परमर्षिणा दृष्टः ॥ ३० ॥

गो० टी०—तत इति । स्थैर्यं जितेन्द्रियत्वम् । तपसि तपोविषये । स्पर्शिता दत्ता ॥ २९–३२ ॥

३१–३२ ] ति० टी०—दशाभागोऽवस्थाभेद ऐश्वर्यरूपस्तस्य विपर्ययं बन्धनरूपां विपरीतावस्थाम् ॥ ३१–३२ ॥

रा० टी०—तत इति । ततः तस्माद्धेतोः क्रुद्धेन तेन मुनिना शप्तोऽसि तेन शापेन दशाभागेन कालप्राप्त्या विपर्ययं पराभूतिं गतोसि ॥ ३१ ॥

रा० टी०—शापाकारमाह—यस्मादिति । यस्मान्मे पत्नी त्वया धर्षिता तस्मात्त्वं शत्रुहस्ते गमिष्यसि ॥ ३२ ॥

गो० टी०—तत इति । दशाभागविपर्ययं दशाभागोवस्थाविशेषः तस्य विपर्ययं सहजसात्त्विकावस्थाविपर्ययमित्यर्थः ३३

३३ ] ति० टी०—अयं तु भावः । जारभाव इत्यर्थः । मानुषेष्वपि शास्त्राधिकारिष्वपि भविष्यति । राज्ञस्तव दोषादित्यर्थः ॥ ३३ ॥

रा० टी०—शापांतरमाह—अयमिति । यः अयं परस्त्रीधर्षणरूपो भावः त्वयेह प्रवर्तितः स भावः मानुषेष्वपि लोकेषु भविष्यति ॥ ३३ ॥

गो० टी०—अयं त्विति । अयं भावः मानुषेष्वपि शास्त्राधिकारिष्वपि भविष्यति । राज्ञस्तव दोषादिति भावः ॥ ३४ ॥

३४ ] ति० टी०—तत्रार्धमिति । यो जारभावेन पापस्य कर्ता तत्र पुरुषे पापस्यार्धं निपतिष्यति । त्वय्यर्धम् स्थावरं स्थिरम् ॥ ३४ ॥

रा० टी०—ननु तेन मम किमित्यत आह—तत्रेति । तस्य पापस्य यः कर्ता तत्र तस्मिन्पुरुषे यत्पापं तस्यार्धं त्वयि निपतिष्यति तत्फलमाह ते स्थानं स्थावरं निश्चलं न भविष्यति सोपद्रुतमेव भविष्यतीत्यर्थः ॥ ३४ ॥

गो० टी०—तत्रेति । तत्र जारभावे यो धर्मः समुत्थास्यति तस्य यः कर्ता तत्र पुरुषे तस्याधर्मस्यार्धं निपतिष्यति त्वय्यर्धम् निपतिष्यतीत्यर्थः । "राजा राष्ट्रकृतं पापम्" इति न्यायात् । स्थावरम् स्थिरम् स्थानं पदम् ॥ ३५ ॥

३५ ] ति० टी०—न केवलं तवैवास्थिरत्वम्, अपि तु—यश्चेत्यादि । सोऽपि ध्रुवः स्थिरो न भविष्यति । मध्ये मध्ये भ्रंशःस्यादिति भावः ॥ ३५ ॥

रा० टी०—द्वितीयं फलमाह—य इति । यश्च यश्च सुरेन्द्रः स्यात् स ध्रुवः स्थिरो न भविष्यति उपद्रुत एव भविष्यतीत्यर्थः एष शापः मया मुक्तः दत्त इत्यर्थः असौ गौतम इत्यब्रवीत् ॥ ३५ ॥

गो० टी०—न केवलं तवैवास्थिरत्वमपि तु अन्यस्यापि जारस्येत्याह—यश्चेति । हे सुरेन्द्र ! य एवं जारः स्यात्सोऽपि ध्रुवो मा भविष्यतीत्यर्थः ॥ ३६ ॥ ३७ ॥

३६ ] ति० टी०—विनिध्वंस ध्वस्तसौरूप्या भव ॥ ३६ ॥

रा० टी०—तामिति । मुनिः तामहल्यां सुनिर्भर्त्स्य ममाश्रमसमीपत आश्रमसमीपे त्वं विनिध्वंस ध्वंसं प्राप्नुहि इत्यब्रवीत् ॥ ३६ ॥

३७ ] ति० टी०—यस्मात्त्वमनवस्थिता तस्मादेतावत्कालं त्वमेकैव रूपवतीति यत्स्थितं तन्न भविष्यति ॥ ३७ ॥

रा० टी०—तद्वचनान्तरमाह—रूपेत्यादिभिः । रूपादिसम्पन्ना त्वं यस्मादनवस्थितासि तस्मात्त्वमेवैका रूपवती न भविष्यसि बहवो रूपवत्यो भविष्यन्तीत्यर्थः ॥ ३७ ॥

गो० टी०—रूपेति । ममाश्रमसमीपतो यस्मात्त्वमनवस्थिता तस्मादेवैतत्पर्यन्तं त्वमेकैव रूपवतीति यत् स्थितं तन्न भविष्यति ॥ ३८ ॥

---

१ राजन्निति गो. पाठः । २ भविष्यसीति रा. पाठः ।

रूपं च ते प्रजाः सर्वा गमिष्यन्ति न संशयः । यत्तदेकं समाश्रित्य विभ्रमोऽयमुपस्थितः ॥ ३८ ॥
तदाप्रभृति भूयिष्ठं प्रजा रूपसमन्विता । सा तं प्रसादयामास महर्षिं गौतमं तदा ॥ ३९ ॥
अज्ञानाद्धर्षिता विप्र त्वद्रूपेण दिवौकसा । न कामकाराद्विप्रर्षे प्रसादं कर्तुमर्हसि ॥ ४० ॥
अहल्यया त्वेवमुक्तः प्रत्युवाच स गौतमः । उत्पत्स्यति महातेजा इक्ष्वाकूणां महारथः ॥ ४१ ॥
रामो नाम श्रुतो लोके वनं चाप्युपयास्यति । ब्राह्मणार्थे महाबाहुर्विष्णुर्मानुषविग्रहः ॥ ४२ ॥
तं द्रक्ष्यसि यदा भद्रे ततः पूता भविष्यसि । स हि पावयितुं शक्तस्त्वया यद्दुष्कृतं कृतम् ॥ ४३ ॥
तस्यातिथ्यं च कृत्वा वै मत्समीपं गमिष्यसि । वत्स्यसि त्वं मया सार्धं तदा हि वरवर्णिनि ॥ ४४ ॥
एवमुक्त्वा स विप्रर्षिराजगाम स्वमाश्रमम् । तपश्चचार सुमहत्सा पत्नी ब्रह्मवादिनः ॥ ४५ ॥
शापोत्सर्गाद्धि तस्येदं मुनेः सर्वमुपस्थितम् । तत्स्मर त्वं महाबाहो दुष्कृतं यत्त्वया कृतम् ॥ ४६ ॥
तेन त्वं ग्रहणं शत्रोर्यातो नान्येन वासव । शीघ्रं वै यज यज्ञं त्वं वैष्णवं सुसमाहितः ॥ ४७ ॥
पावितस्तेन यज्ञेन यास्यसे त्रिदिवं ततः । पुत्रश्च तव देवेन्द्र न विनष्टो महारणे ॥ ४८ ॥
नीतः संनिहितश्चैव आर्यकेण महोदधौ । एतच्छ्रुत्वा महेन्द्रस्तु यज्ञमिष्ट्वा च वैष्णवम् ॥ ४९ ॥
पुनस्त्रिदिवमाक्रामदन्वशासच्च देवराट् । एतदिन्द्रजितो नाम बलं यत्कीर्तितं मया ॥ ५० ॥
निर्जितस्तेन देवेन्द्रः प्राणिनोऽन्ये तु किं पुनः । आश्चर्यमिति रामश्च लक्ष्मणश्चाब्रवीत्तदा ॥ ५१ ॥
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तदा । विभीषणस्तु रामस्य पार्श्वस्थो वाक्यमब्रवीत् ॥ ५२ ॥

---

३८-४१ ] ति० टी०-किं तु तावकं सुन्दरं रूपं सर्वाः प्रजा गमिष्यन्ति । यद्यस्मादेकमेकरूपं तद्रूपमाश्रित्यायं विभ्रमः कामविकार उपस्थितः । प्रवृत्त इन्द्रस्येति शेषः ॥ ३८-४१ ॥

४२-४६ ] ति० टी०-ब्राह्मणार्थे विश्वामित्रार्थे॥४२-४६॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह—रूपमिति । यदेकं रूपं समाश्रित्य ते विभ्रम उपस्थितः तद्रूपं सर्वाः प्रजाः गमिष्यन्ति प्राप्स्यन्ति ॥ ३८ ॥

गो० टी०-रूपं चेति । तद्रूपं प्रसिद्धं तव सौन्दर्यं सर्वाः प्रजाः स्त्रियः गमिष्यन्तीति । विभ्रमः काममोहः ॥ ३९-४६ ॥

रा० टी०-तदेति । तदाप्रभृति शापकालादारभ्य प्रजा भूयिष्ठमधिकं यथा भवति तथा रूपसमन्विताऽभवत् इति शेषः सा अहल्या तु गौतमं प्रसादयामास ॥ ३९ ॥

रा० टी०-प्रसादनप्रकारमाह-अज्ञानादिति । त्वद्रूपेण त्वत्सदृशरूपवता दिवौकसा अज्ञानात् भ्रमादहं धर्षितास्मि कामकारात् स्वेच्छाप्रवृत्त्या न अतः प्रसादं कर्तुमर्हसि ॥ ४० ॥

रा० टी०-अहल्ययेति । गौतमः प्रत्युवाच तदाकारमाह इक्ष्वाकूणां महारथो विष्णुर्व्यापकव्यापकः मानुषविग्रहः नित्यं नराकृतिः रामो नाम उत्पत्स्यति वनमप्युपयास्यति श्लोकद्वयमेकान्वयि ॥ ४१-४२ ॥

रा० टी०-तमिति । तं रामं यदा द्रक्ष्यसि तदा पूता भविष्यसि तत्र हेतुमाह स इति स रामः यत्त्वया दुष्कृतं कृतं तत्पावयितुं निवर्तयितुं शक्तः ॥ ४३ ॥

रा० टी०-तस्येति । तस्य शक्तस्य रामस्य आतिथ्यं कृत्वा मत्समीपं गमिष्यसि तदा मत्समीपप्राप्तिसमये मया सार्धं वत्स्यसि ॥ ४४ ॥

रा० टी०-एवमिति । स गौतमः स्वमाश्रममाजगाम ब्रह्मवादिनः पत्नी तु सुमहत्तपः चचार ॥ ४५ ॥

रा० टी०-प्रकृतमाह—शापेति । मुनेश्शापोत्सर्गादिदं शत्रुग्रहणमुपस्थितं तत्तस्माद्धेतोः यद्दुष्कृतं त्वया कृतं तत्स्मर ४६

४७-४८ ] ति० टी०-नान्येन हेतुनेत्यर्थः ॥४७॥४८॥

रा० टी०-तेनेति । यतस्तेन स्वकृतदुष्कर्मणैव शत्रोः ग्रहणं यातः अन्येन हेतुना न तस्माद्वैष्णवं यज्ञं त्वं यज ॥४७॥

गो० टी०-तदिति । नान्येनेति । नतु हेत्वन्तरेणेत्यर्थः ॥ ४७ ॥ ४८ ॥

रा० टी०-यागफलमाह—पावित इति । यज्ञेन पावितस्त्वं त्रिदिवं यास्यसे तव पुत्रश्च विनष्टो मृतो न भविष्यतीति शेषः ॥ ४८ ॥

गो० टी०-पुत्रश्चेति । नीत इति । आर्यकेण मातामहेन । नीतः महोदधौ सन्निहितः सम्यङ् निहितः निक्षिप्तः४९-५१

४९-५२ ] ति० टी०-आर्यकेण पुलोम्ना । यज्ञमिष्ट्वेति । देवानां न यज्ञेष्वधिकार इति जैमिन्युक्तं तु प्रमादादिति निरूपितं प्राक् ॥ ४९-५२ ॥

रा०टी०-ननु पुत्रः क्वास्तीत्यत आह-नीत इति । आर्यकेण मातामहेन महोदधौ नीतः निहितः स्थापितश्च अर्द्धं पृथक् । एतदिति । महेन्द्रः वैष्णवं यज्ञमिष्ट्वा त्रिदिवमाक्रामत् अन्वशासच्च गणकार्यस्यानित्यत्वात् न शपो लुक् ॥ ४९ ॥

रा० टी०-एतदिति । तेनेन्द्रजिता यदीन्द्रो निर्जितः तदा अन्ये किम् यदिन्द्रजितो बलं तदेतत्कीर्तितम् ॥ ५० ॥

आश्चर्यं स्मारितोऽस्म्यद्य यत्तदृष्टं पुरातनम् । अगस्त्यं त्वब्रवीद्रामः सत्यमेतच्छ्रुतं च मे ॥ ५३ ॥
एवं राम समुद्भूतो रावणो लोककण्टकः । सपुत्रो येन सङ्ग्रामे जितः शक्रः सुरेश्वरः ॥ ५४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

## एकत्रिंशः सर्गः ।

पुना रामेण पृष्टोऽगस्त्यो रावणस्य माहिष्मतीपुरगमनं नर्मदास्नानं लिङ्गार्चनादिकं चाकथयत् ।

ततो रामो महातेजा विस्मयात्पुनरेव हि । उवाच प्रणतो वाक्यमगस्त्यमृषिसत्तमम् ॥ १ ॥
भगवन्राक्षसः क्रूरो यदाप्रभृति मेदिनीम् । पर्यटत्किं तदा लोकाः शून्या आसन्द्विजोत्तम ॥२॥
राजा वा राजमात्रो वा किं तदा नात्र कश्चन । धर्षणं यत्र न प्राप्तो रावणो राक्षसेश्वरः ॥ ३ ॥
उताहो हतवीर्यास्ते बभूवुः पृथिवीक्षितः । बहिष्कृता वरास्त्रैश्च बहवो निर्जिता नृपाः ॥ ४ ॥

रा० टी०—आश्चर्यमिति । अगस्त्यवचनं श्रुत्वा रामो लक्ष्मणश्च आश्चर्यमित्यब्रवीत् वानरा राक्षसाश्च आश्चर्यमित्यनुवन्वचनपरिणामेन अत्राप्यन्वयः ॥ ५१ ॥

गो० टी०—आश्चर्यमिति । रामः अगस्त्यवचः श्रुत्वा आश्चर्यमित्यब्रवीत् । तथा लक्ष्मणः तथा वानरा राक्षसाश्चाब्रुवन्नित्यनुषङ्गः ॥ ५२ ॥

रा० टी०—विभीषण इति । विभीषणोऽब्रवीदहं पृथक् ५२

गो० टी०—बिभीषणस्त्वित्यादि । हे राम अगस्त्यस्तु आश्चर्यं यद्दृष्टं पुरातनमब्रवीत्तत्सर्वं मया दृष्टमिदानीम् । अहं स्मारितोस्मि । बिभीषणसंवादेन सर्वस्यागस्त्योक्तस्य सत्यत्वं दर्शितम् ॥ ५३—५५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिंशः सर्गः ॥ ३० ॥

५३–५४ ] ति० टी०—आश्चर्यं स्मारितोऽस्मीति । यद्यदगस्त्येनोक्तं तत्सर्वं मया दृष्टमिति सत्यमेवागस्त्येनोक्तमिति रामं प्रति विभीषणेनोक्तम् । श्रुतं च मे । विभीषणमुखादिति शेषः ॥ ५३ ॥ ५४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

रा० टी०—तदाकारमाह–आश्चर्यमिति । यत्पुरातनं दृष्टं तदाश्चर्यं स्मारितोस्मि एतन्मे मया श्रुतं सत्यमिति रामोऽगस्त्यमब्रवीत् ॥ ५३ ॥

रा० टी०—एवमिति । येन संग्रामे शक्रो जितः स रावणः एवं समुद्भूतः ॥ ५४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिंशः सर्गः ॥ ३० ॥

१ ] ति० टी०—अथ रावणपराजयकथनम्—तत इति । विस्मयाद्भगवत्प्रसादवैभवश्रवणजविस्मयादिव ॥ १ ॥

रा० टी०—अगस्त्यं प्रति रामस्य प्रश्नान्तरमाह—तत इत्यादिभिः । रामोगस्त्यं पुनरुवाच ॥ १ ॥

गो० टी०—ततो राम इत्यादि ॥ १ ॥ २ ॥

२] ति० टी०—लोका मनुष्यलोकप्राणिनः । शून्याः शूरत्वगुणशून्याः ॥ २ ॥

रा० टी०—तदाकारमाह–भगवन्नित्यादिभिः । राक्षसो रावणो यदाप्रभृति लोकाः पृथिवीजनाः शून्या रावणसदृशशूरवीररहिता आसन् किम् ॥ २ ॥

३ ] ति० टी०—तदेवाह—राजेति । राजा क्षत्रियः । राजमात्रोऽक्षत्रियः केवलप्रभुः ॥ ३ ॥

रा० टी०—राजेति । यत्र यदा रावणो धर्षणं न प्राप्तः तदा राजा राजपुत्रो वा कश्चन न किमुताहो पृथिवीक्षितः पृथिवीं प्राप्ता नृपाश्शस्त्रैर्निर्जिताः अत एव हतवीर्या अत एव बहिष्कृता बभूवुः किम् श्लोकद्वयमेकान्वयि ॥ ३–४ ॥

गो० टी०—राजेति । येन कारणेन रावणो धर्षणं न प्राप्तः तस्मात्तदा तत्काले राजा वा राजमात्रो वा अक्षत्रियोऽपि प्रभुर्वा कश्चन नासीत् ॥ ३ ॥

४ ] ति० टी०—उताहोऽथवा विद्यमाना एव हतवीर्या वीर्यरहिता वीर्यवत्त्वेऽपि वरास्त्रैर्दिव्यास्त्रैर्बहिष्कृताः । यद्बहवो नृपा निर्जिता इति वदसीति शेषः ॥ ४ ॥

गो० टी०-उताहो इति पक्षान्तरे वर्तते । अथवा विद्यमाना एव पृथिवीक्षितः हतवीर्याः वीर्यरहिता आसन् अथवा वीर्यवत्त्वेपि वरास्त्रैर्दिव्यास्त्रैर्बहिष्कृताः सन्तः निर्जिता इत्युत्तरार्धेति पूर्वेणान्वयः ॥ ४ ॥

राघवस्य वचः श्रुत्वा अगस्त्यो भगवानृषिः । उवाच रामं प्रहसन्पितामह इवेश्वरम् ॥ ५ ॥
इत्येवं बाधमानस्तु पार्थिवान्पार्थिवर्षभ । चचार रावणो राम पृथिवीं पृथिवीपते ॥ ६ ॥
ततो माहिष्मतीं नाम पुरीं स्वर्गपुरीप्रभाम् । संप्राप्तो यत्र सांनिध्यं सदासीद्वसुरेतसः ॥ ७ ॥
तुल्य आसीन्नृपस्तस्य प्रभावाद्वसुरेतसः । अर्जुनो नाम यत्राग्निः शरकुण्डेशयः सदा ॥ ८ ॥
तमेव दिवसं सोऽथ हैहयाधिपतिर्बली । अर्जुनो नर्मदां रन्तुं गतः स्त्रीभिः सहेश्वरः ॥ ९ ॥
तमेव दिवसं सोऽथ रावणस्तत्र आगतः । रावणो राक्षसेन्द्रस्तु तस्यामात्यानपृच्छत ॥ १० ॥
क्वार्जुनो नृपतिः शीघ्रं सम्यगाख्यातुमर्हथ । रावणोऽहमनुप्राप्तो युद्धेप्सुर्नृवरेण ह ॥ ११ ॥
ममागमनमप्यग्रे युष्माभिः संनिवेद्यताम् । इत्येवं रावणेनोक्तास्तेऽमात्याः सुविपश्चितः ॥१२॥
अब्रुवन्राक्षसपतिमसांनिध्यं महीपतेः । श्रुत्वा विश्रवसः पुत्रः पौराणामर्जुनं गतम् ॥ १३ ॥
अपसृत्यागतो विन्ध्यं हिमवत्संनिभं गिरिम् । स तमभ्रमिवाविष्टमुद्भ्रान्तमिव मेदिनीम् ॥ १४ ॥
अपश्यद्रावणो विन्ध्यमालिखन्तमिवाम्बरम् । सहस्रशिखरोपेतं सिंहाध्युषितकंदरम् ॥ १५ ॥

५-६ ] ति० टी०-प्रहसन् । केनापि क्षत्रियेण दुरात्मनः कथं पराभवो न जात इति भगवतो रामस्यामर्षं दृष्ट्वागस्त्यहासः । पितामहश्चतुर्मुखो ब्रह्मा ईश्वरमग्निप्रधानं शौर्यादिक्षत्रगुणं रुद्रम् ॥ ५ ॥ ६ ॥

रा० टी०-राघवस्येति । पितामहः ईश्वरं शंभुमिव अगस्त्यो राममुवाच ॥ ५ ॥

रा०टी०-तदाकारमाह-इत्येवमिति । इत्येवमुक्तप्रकारेण पार्थिवान् बाधमानो रावणः पृथिवीं चचार ॥ ६ ॥

गो० टी०-रावणापजयस्मरणप्रीत्या प्रहसन्नित्युक्तम् । रामस्यामर्षो वर्तत इति मुनेर्मन्दहासो वा । ईश्वरम् अग्निप्रधानशौर्यादिक्षत्रगुणं रुद्रम् ॥ ५ ॥ ६ ॥

७ ] ति० टी०-स्वर्गपुर्यमरावती । वसुरेतसः सदा सांनिध्यमग्नेर्नित्यसंनिधानमित्यर्थः ॥ ७ ॥

रा० टी०-तत इति । यत्र वसुरेतसो वन्हेस्सदा सांनिध्यं संस्थितिः तां माहिष्मतीं नाम पुरीं संप्राप्तः रावण इति शेषः ॥ ७ ॥

गो० टी०-तत इति । वसुरेतसः अग्नेः सान्निध्यं प्राकाररूपेण नित्यसान्निध्यमस्तीत्यर्थः ॥ ७ ॥

८ ] ति० टी०-तस्याग्नेः प्रभावात्प्रसादाद्वसुरेतसोऽग्नेस्तुल्य आसीत् । यत्रार्जुनराज्यवेलायामग्निः शरकुण्डेशयः शरास्तृतकुण्डे वसति । शत्रूणामभिचारार्थं शरपरिस्तृतकुण्डे नित्यं संनिहितो वर्तत इत्यर्थः ॥ ८ ॥

रा० टी०-तुल्य इति । यत्र माहिष्मत्यां शरकुण्डेशयः शरास्तृतकुण्डेवासी अग्निः तत्र वसुरेतसो वन्हेः प्रभावात् तस्य वन्हेस्तुल्यः अर्जुनो नाम नृप आसीत् ॥ ८ ॥

गो० टी०-तुल्य इति । शरकुण्डेशयः शरास्तरणवत् कुण्डमग्निकुण्डं तत्र शेत इति तथा । पचाद्यच् । "शयवासवासिषु०" इत्यलुक् ॥ ८ ॥

९-१२] ति० टी०-तमेव दिवसं यस्मिन्दिने रावणो गतस्तस्मिन्नेव दिवसे नर्मदां रन्तुं नर्मदायां क्रीडितुम् ईश्वरो राजा ९-१२

रा० टी०-तमिति । तमेव दिवसं तस्मिन्नेव दिने रावणप्राप्तिदिवसे इत्यर्थः हैहयाधिपतिः अर्जुनः स्त्रीभिस्सह रन्तुं नर्मदां गतः तमेव दिवसं तस्मिन्नेव दिवसे तु आगतो रावणः लोकरोदनकारयिता रावणः तस्यार्जुनस्य अमात्यानपृच्छत् श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

रा० टी०-तदाकारमाह-क्वेति । अर्जुनः क्वास्ति इति शीघ्रमाख्यातुमर्हथ युद्धेप्सुः रावणोहमनुप्राप्तः अतः ममागमनमपि युष्माभिस्स रावणो निवेद्यतां बोध्यताम् सार्धश्लोक एकान्वयी ॥ ११ ॥

गो० टी०-तमेव दिवसमिति । यस्मिन्दिवसे रावणो गतस्तस्मिन्नेव दिवसे इत्यर्थः । स्त्रीभीरन्तुं नर्मदां गत इत्यन्वयः । ईश्वरः राजा ॥ ९-११ ॥

रा० टी०-इतीति । इत्येवं रावणेनोक्ता अमात्याः महीपतेरर्जुनस्य असान्निध्यं तत्राविद्यमानत्वं राक्षसपतिमब्रुवन् १२

गो० टी०-इतीति । अब्रुवन् ब्रुवते रूः ॥ १२ ॥

१३ ] ति० टी०-राक्षसपतिं प्रति महीपतेरसांनिध्यमब्रुवन् । पौराणां मुखादिति शेषः ॥ १३ ॥

रा० टी०-श्रुत्वेति । विश्रवसः पुत्रो रावणः पौराणां पौरेभ्यः अर्जुनं गतं श्रुत्वा अपसृत्य तत्पुरान्निर्वर्त्य विंध्यं गिरिं गतः ॥ १३ ॥

गो० टी०-श्रुत्वेति । विश्रवसः पुत्रो रावणः । पौराणां मुखादिति शेषः । अपसृत्य पुरान्निष्क्रम्य ॥ १३ ॥

१४ ] ति० टी०-अपसृत्य । पुरादिति शेषः । अभ्रं महामेघमिवाविष्टमाकाशसंबद्धं तेनात्युच्चत्वम् । मेदिनीमुद्भ्रान्तमिवोद्भियोद्गतमिव ॥ १४ ॥

१५ ] ति० टी०-सहस्रशिखरोपेतमनेकशृङ्गयुतम् ॥१५॥

१ ह्यगस्त्य इति गो० पाठः । २ निवृत्त्येति युक्तं भाति ।

प्रपातपतितैः शीतैः साट्टहासमिवाम्बुभिः । देवदानवगन्धर्वैः साप्सरोभिः सकिंनरैः ॥ १६ ॥
स्वस्त्रीभिः क्रीडमानैश्च स्वर्गभूतं महोच्छ्रयम् । नदीभिः स्यन्दमानाभिः स्फटिकप्रतिमं जलम् १७॥
फणाभिश्चलजिह्वाभिरनन्तमिव विष्ठितम् । उत्क्रामन्तं दरीवन्तं हिमवत्संनिभं गिरिम् ॥१८॥
पश्यमानस्ततो विन्ध्यं रावणो नर्मदां ययौ । चलोपलजलां पुण्यां पश्चिमोदधिगामिनीम् ॥१९॥
महिषैः सृमरैः सिंहैः शार्दूलर्क्षगजोत्तमैः । उष्णाभितप्तैस्तृषितैः संक्षोभितजलाशयाम् ॥२०॥
चक्रवाकैः सकारण्डैः सहंसजलकुक्कुटैः । सारसैश्च सदा मत्तैः कूजद्भिः सुसमावृताम् ॥२१॥
फुल्लद्रुमकृतोत्तंसां चक्रवाकयुगस्तनीम् । विस्तीर्णपुलिनश्रोणीं हंसावलिसुमेखलाम् ॥२२॥
पुष्परेण्वनुलिप्ताङ्गीं जलफेनामलांशुकाम् । जलावगाहसंस्पर्शां फुल्लोत्पलशुभेक्षणाम् ॥ २३ ॥
पुष्पकादवरुह्याशु नर्मदां सरितां वराम् । इष्टामिव वरां नारीमवगाह्य दशाननः ॥ २४ ॥
स तस्याः पुलिने रम्ये नानामुनिनिषेविते । उपोपविष्टः सचिवैः सार्धं राक्षसपुंगवः ॥ २५ ॥
प्रख्याय नर्मदां सोऽथ गङ्गेयमिति रावणः । नर्मदादर्शने हर्षमाप्तवान्स दशाननः ॥ २६ ॥
उवाच सचिवांस्तत्र सलीलं शुकसारणौ । एष रश्मिसहस्रेण जगत्कृत्वेव काञ्चनम् ॥ २७ ॥

रा० टी०—स इति । मेदिनीमुद्भ्रान्तं भित्त्वोद्गतमिव आविष्टमाकाशे सन्निबद्धं महामेघमिव अत एव अम्बरं लिखन्तमिव सिंहैरध्युषिताः कन्दरा यस्य तं विंध्यं रावणोपश्यत् सार्द्धश्लोक एकान्वयी ॥ १४ ॥ १५ ॥

गो० टी०—स इत्यादिसार्धपञ्चकम् । अभ्रमिव महामेघमिवाविष्टम् । मेदिनीमुद्भ्रान्तमिव उद्भियोद्गतमिव । सहस्रशिखरोपेतम् । प्रपातपतितैः तटात्पतितैः । " प्रपातस्तु तट " इत्यमरः। स्फटिकप्रतिमं जलं स्यन्दमानाभिर्नदीभिर्हेतुभिर्जिह्वाभिरुपलक्षितमनन्तमिव विष्ठितम् उत्क्रामन्तमूर्ध्वं व्याप्नुवानम् । उत्कावन्तमिति पाठान्तरम् । चलोपलजलाम् उपलेषु चलानि जलानि यस्यास्तां चलोपलामलामिति पाठे जलवेगेन चलोपलतया निर्मलाम् ॥ १४—२१ ॥

१६ ] ति० टी०—' प्रपातस्त्वतटो भृगुः ' । ततः पतितैरुदकैः साट्टहासमिव ॥ १६ ॥

१७-१८ ] ति० टी०—स्फटिकप्रतिमं जलं स्यन्दमानाभिर्नदीभिः कृत्वा चलजिह्वाभिः फणाभिरुपलक्षितमनन्तमिव विष्ठितम् । उत्क्रामन्तमूर्ध्वं व्याप्नुवानम् ॥ १७ ॥ १८ ॥

१९-२१ ] ति० टी०—चलान्युपलेषु जलानि यस्यास्ताम् ॥ १९—२१ ॥

रा० टी०—प्रपातेति । प्रपातात् उन्नततटात्पतितैः शीतैरम्बुभिस्साट्टहासमट्टहाससहितमिव यथा भवति तथा क्रीडमानैर्देवादिभिस्स्वर्गभूतं महोच्छ्रयमत्युन्नतं स्फटिकप्रतिमं जलं स्यन्दमानाभिर्नदीभिः चला जिह्वा यासां ताभिः फणाभिः विष्ठितमनन्तमिव उत्क्रामन्तमत्युन्नतत्वेन ऊर्ध्वं गच्छन्तमिव गिरिं विंध्यं पश्यमानः पश्यन् रावणः चलानि उपलसहितानि जलानि यस्यां तां पश्चिमोदधिगामिनीं नर्मदां ययौ श्लोकचतुष्टयमेकान्वयि ॥ १६-१९ ॥

रा० टी०—महिषैरिति । उष्णेनाभितप्तैः अत एव तृषितैः महिषादिभिस्संक्षोभिता जलाशया यस्याः तां चक्रवाकादिभिः सुसमावृतां फुल्लद्रुमैः कृतानि उत्तंसानि भूषणानि यया चक्रवाकावेव युगस्तनौ यस्या विस्तीर्णपुलिनमेव श्रोणी यस्याः समासान्तविधेरनित्यत्वात्कबभावः हंसावलिरेव सुमेखला यस्याः पुष्परेणुभिः अनुलिप्तानि अंगानि यस्याः जलफेनान्येव अमलानि अंशुकानि यस्याः जलावगाह एव सुस्पर्शो यस्याः फुल्लोत्पलमेव शुभेक्षणं यस्याः तामिष्टां पूजितां वरां नारीमिव नर्मदां दशाननः पुष्पकादवरुह्य अवगाह्य तस्याः नर्मदायाः पुलिने सचिवैस्सार्द्धमुपोपविष्टः श्लोकषट्कमेकान्वयि ॥ २०—२५ ॥

२२ ] ति० टी०—अथ नर्मदां स्त्रीत्वेन वर्णयति—फुल्लेति ॥ २२ ॥

२३—२५ ] ति० टी०—जनानां जलावगाहे सुखस्पर्शरूपगुणो यस्यास्ताम् ॥ २३ ॥ २५ ॥

गो० टी०—अथ नर्मदायाः स्त्रीसाम्यमाह—फुल्लद्रुमेत्यादिना ॥ नर्मदां गङ्गेयमिति प्रख्याय प्रशस्य । सलीलं सविलासम् ॥ २२—२६ ॥

२६ ] ति० टी०—नर्मदां गङ्गेयमिति प्रख्याय प्रशस्य । अनेन नर्मदायास्तद्वत्पापनाशकत्वं तत्तटकृतशिवपूजादेर्महाफलत्वं गङ्गायाः सर्वोत्कृष्टत्वं च सूचितम् ॥ २६ ॥

रा० टी०—प्रख्यायेति । रावणः नर्मदां गंगेयमिति प्रख्याय बोधयित्वा नर्मदादर्शने हर्षमाप्तवान् ॥ २६ ॥

२७ ] ति० टी०—सलीलं सविलासम् । काञ्चनं तन्मयम् ॥ २७ ॥

१ तोयैः साट्टहासमिवाम्बुभिमिति गो. पाठः । २ गणेति गो. पाठः । ३ सुकूजद्भिः समावृतामिति गो. पाठः । ४ समिति गो. पाठः ।

तीक्ष्णतापकरः सूर्यो नभसो मध्यमास्थितः । मामासीनं विदित्वैव चन्द्रायति दिवाकरः ॥ २८ ॥
नर्मदाजलशीतश्च सुगन्धिः श्रमनाशनः । मद्भयादनिलो ह्येष वात्यसौ सुसमाहितः ॥ २९ ॥
इयं वापि सरिच्छ्रेष्ठा नर्मदा शर्मवर्धिनी । नक्रमीनविहंगोर्मिः सभयेवाङ्गना स्थिता ॥ ३० ॥
तद्भवन्तः क्षताः शस्त्रैर्नृपैरिन्द्रसमैर्युधि । चन्दनस्य रसेनेव रुधिरेण समुक्षिताः ॥ ३१ ॥
ते यूयमवगाहध्वं नर्मदां शर्मदां शुभाम् । सार्वभौममुखा मत्ता गङ्गामिव महागजाः ॥ ३२ ॥
अस्यां स्नात्वा महानद्यां पाप्मनो विप्रमोक्ष्यथ । अहमप्यद्य पुलिने शरदिन्दुसमप्रभे ॥ ३३ ॥
पुष्पोपहारं शनकैः करिष्यामि कपर्दिनः । रावणेनैवमुक्तास्तु प्रहस्तशुकसारणाः ॥ ३४ ॥
समहोदरधूम्राक्षा नर्मदां विजगाहिरे । राक्षसेन्द्रगजैस्तैस्तु क्षोभिता नर्मदा नदी ॥ ३५ ॥
वामनाञ्जनपद्माद्यैर्गङ्गा इव महागजैः । ततस्ते राक्षसाः स्नात्वा नर्मदायां महाबलाः॥३६॥
उत्तीर्य पुष्पाण्याजह्रुर्बल्यर्थं रावणस्य तु । नर्मदापुलिने हृद्ये शुभ्राभ्रसदृशप्रभे ॥ ३७ ॥
राक्षसैस्तु मुहूर्तेन कृतः पुष्पमयो गिरिः । पुष्पेषूपहृतेष्वेवं रावणो राक्षसेश्वरः ॥ ३८ ॥
अवतीर्णो नदीं स्नातुं गङ्गामिव महागजः । तत्र स्नात्वा च विधिवज्जप्त्वा जप्यमनुत्तमम् ॥३९॥
नर्मदासलिलात्तस्मादुत्ततार स रावणः । ततः क्लिन्नाम्बरं त्यक्त्वा शुक्लवस्त्रसमावृतः ॥४०॥

---

२८-२९ ] ति० टी०—चन्द्रायति चन्द्र इवाचरति आर्षं परस्मैपदम् ॥ २८ ॥ २९ ॥

रा० टी०—उवाचेति । रावणस्सचिवान् शुकसारणौ च सलीलमुवाच अर्द्धं पृथक् तदाकारमाह—एष इत्यादिभिः । नभसो मध्यमास्थितः अत एव तीक्ष्णतापकरः दिवाकरो दिनहेतुः सूर्यः रश्मिसहस्रेण कांचनं कांचनमयमिव जगत्कृत्वा मामासीनं विदित्वा चन्द्रायति चन्द्र इव शीतं करोति सार्द्ध-श्लोकद्वयमेकान्वयि ॥ २७ ॥ २८ ॥

रा० टी०—नर्मदेति । नर्मदाजलेन शीतः शोभनो गंधो यस्मिन् अत एव श्रमनाशनः एषोऽनिलः मद्भयात् सुसमाहितः मन्दः सन्नित्यर्थः वाति ॥ २९ ॥

गो० टी०—एष इत्यादिसार्धम् । काञ्चनं कृत्वा सुवर्णं कृत्वेत्यर्थः । चन्द्रायति चन्द्रवदाचरति नर्मवर्धिनी प्रीतिवर्धिनी-त्यर्थः ॥ २७—३१ ॥

३०-३१ ] ति० टी०—नक्रादियुता ऊर्मयो यस्याः सा ॥ ३० ॥ ३१ ॥

३२-३४ ] ति० टी०—अवगाहध्वं स्नानं कुरुत । सार्व-भौममुखाः सार्वभौमनामकदिग्गजादयः । 'महापद्मः' इति पाठान्तरम् । महापद्मो दिग्गजः ॥ ३२ ॥ ३४ ॥

रा० टी०—इयमिति । नक्रादियुक्ता ऊर्मयो यस्याः सा शर्मणः सुखस्य वर्द्धिनीयं नर्मदापि सभयाङ्गनेव स्थिता एतेन स्वप्रतापातिशयस्सूचितः ॥ ३० ॥

रा० टी०—तदिति । तन्नर्मदाजलस्य शर्मकारित्वाद्धेतोः शस्त्रैः क्षताः अत एव चन्दनस्य रसेनेव रुधिरेण समुक्षिताः भव-न्तः नर्मदामवगाहध्वम् तत्र दृष्टान्तः सार्वभौममुखाः सार्वभौमा-भिधप्रभृतयः महागजाः गङ्गामिव श्लोकद्वयमेकान्वयि ३१॥३२

गो० टी०—त इति । अवगाहध्वं स्नानं कुरुत शर्मदां सुखदां महापद्मः पुण्डरीकाख्यः दिग्गजस्तन्मुखाः महागजा इव ॥३२॥

रा० टी०—स्नानफलमाह—अस्यामिति । अस्यां नर्मदायां स्नात्वा पाप्मनः पापात् यूयं विप्रमोक्ष्यथ अर्द्धं पृथक् अहमिति अहमपि शरदिन्दुसमप्रभे पुलिने कपर्दिनोर्थे पुष्पोपहारं करिष्यामि ॥ ३३ ॥

रा० टी०—रावणेनेति । प्रहस्तादयः नर्मदां विज-गाहिरे ॥ ३४ ॥

गो० टी०—अहमिति । पुष्पोपहारं पुष्पबलिम् ॥ ३३-३९

३५ ] ति० टी०—राक्षसेन्द्रा एव गजास्तैः ॥ ३५ ॥

रा० टी०—राक्षसेति । वामनादिकैर्महागजैर्गंगेव राक्ष-सेन्द्रगजैर्नर्मदा क्षोभिता ॥ ३५ ॥

३६ ] ति० टी०—वामनाद्या दिग्गजाः । गङ्गा इव महा-गजैरित्यसंधिरार्षः ॥ ३६ ॥

रा० टी०—तत इति । राक्षसा नर्मदायां स्नात्वा उत्तीर्य च रावणस्य बल्यर्थं रावणकर्तृकपूजार्थम् पुष्पाण्याजह्रुः ॥३६॥

३७-४० ] ति० टी०—रावणस्य बल्यर्थं रावणकर्तृक-शिवपूजार्थम् ॥ ३७—४० ॥

रा० टी०—नर्मदेति । शुभाभ्रसदृशी प्रभा यस्य तस्मि-न्नर्मदापुलिने राक्षसैः पुष्पमयो गिरिः कृतः ॥ ३७ ॥

रा० टी०—पुष्पेष्विति । रावणः गंगां महागज इव नदीं स्नातुमवतीर्णः ॥ ३८ ॥

रा० टी०—तत्रेति । रावणः स्नात्वा नर्मदासलिलात् उत्ततार ॥ ३९ ॥

रा० टी०—तत इति । क्लिन्नांबरं त्यक्त्वा शुक्लवस्त्रसमा-वृतोऽभवदिति शेषः अर्द्धं पृथक् ॥ ४० ॥

---

१ नर्मेति गो. पाठः । २ महापद्मेति गो. पाठः । ३ पाप्मानमिति गो. पाठः ।

रावणं प्राञ्जलिं यान्तमन्वयुः सर्वराक्षसाः । तद्गतीवशमापन्ना मूर्तिमन्त इवाचलाः ॥ ४१ ॥
यत्र यत्र च याति स्म रावणो राक्षसेश्वरः । जाम्बूनदमयं लिङ्गं तत्र तत्र स्म नीयते ॥ ४२ ॥
वालुकावेदिमध्ये तु तल्लिङ्गं स्थाप्य रावणः । अर्चयामास गन्धैश्च पुष्पैश्चामृतगन्धिभिः ॥ ४३ ॥
ततः सतामार्तिहरं परं वरं वरप्रदं चन्द्रमयूखभूषणम् ।
समर्चयित्वा स निशाचरो जगौ प्रसार्य हस्तान्प्रणनर्त चाग्रतः ॥ ४४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

## द्वात्रिंशः सर्गः ।

नर्मदाम्भसि क्रीडन्कार्तवीर्यो युद्धे रावणकृतं स्वबलनाशं शृण्वन्सहसागत्य रावणेन भृशं युद्ध्वा तं बद्ध्वा तदमात्येष्वाक्रोशत्स्वपि स्वपुरं निनाय ।

नर्मदापुलिने यत्र राक्षसेन्द्रः स दारुणः । पुष्पोपहारं कुरुते तस्माद्देशाददूरतः ॥ १ ॥
अर्जुनो जयतां श्रेष्ठो माहिष्मत्याः पतिः प्रभुः । क्रीडते सह नारीभिर्नर्मदातोयमाश्रितः ॥ २ ॥
तासां मध्यगतो राजा रराज च तदार्जुनः । करेणूनां सहस्रस्य मध्यस्थ इव कुञ्जरः ॥ ३ ॥
जिज्ञासुः स तु बाहूनां सहस्रस्योत्तमं बलम् । रुरोध नर्मदावेगं बाहुभिर्बहुभिर्वृतः ॥ ४ ॥
कार्तवीर्यभुजासक्तं तज्जलं प्राप्य निर्मलम् । कूलोपहारं कुर्वाणं प्रतिस्रोतः प्रधावति ॥ ५ ॥

---

गो० टी०—तत्रेति । तत्र नर्मदापुलिने प्राञ्जलिं रुद्रं प्रति कृताञ्जलिम् ॥ ४० ॥

४१ ] ति० टी०—रावणं प्राञ्जलिं नियमेनेश्वरं प्रति कृताञ्जलिम् । तद्गतीवशमित्यार्षो दीर्घः । मूर्तिमन्तः प्राण्याकारवन्तोऽचला इव राक्षसाः ॥ ४१ ॥

रा० टी०—रावणमिति । प्रांजलिं देवोद्देशेन कृतांजलिं यान्तं रावणं तद्गतीवशं तद्गमनाधीनत्वमापन्नाः प्राप्ता मूर्तिमन्तोऽचला इव सर्वराक्षसाः अन्वयुः तद्गतीत्यत्र दीर्घ आर्षः ॥४१॥

गो० टी०—तदिति सार्धम् । तद्गतीवशमितिच्छान्दसो दीर्घः । मूर्तिमन्तः प्राण्याकाराः अचला इव स्थिताः राक्षसाः तत्र-तत्र नीयत इति प्रतिदिवसं देवपूजार्थं तैः राक्षसैरिति शेषः। यदा कैलासे रावणः पीडितो विमुक्तः तदाप्रभृति तत्प्रीत्यर्थं रावणो लिङ्गपूजां करोति स्मेति ज्ञेयम् ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०—तत्र तत्र स्म नीयते । प्रतिदिवसं पूजार्थं राक्षसैरिति शेषः ॥ ४२ ॥

रा० टी०—यत्रेति । रावणो यत्र यत्र याति स्म तत्र तत्र जाम्बूनदमयं लिंगं नीयते स्म राक्षसैरिति शेषः ॥ ४२ ॥

४३ ] ति० टी०—तल्लिङ्गं जाम्बूनदमयं नित्यपूजालिङ्गम् । ऐश्वर्यकामनया हि तल्लिङ्गपूजा रावणस्य । ऐश्वर्यकामस्य सौवर्णलिङ्गपूजायास्तन्त्रेषूक्तेः ॥ ४३ ॥

रा० टी०—वालुकेति । रावणः वालुकावेदिमध्ये लिङ्गं स्थाप्य स्थापयित्वा गंधैश्चन्दनादिभिः पुष्पैश्चार्चयामास ॥४३॥

४४ ] ति० टी०—जगौ । सामानीति शेषः ॥ ४४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकत्रिंशः सर्गः ॥ ३१ ॥

रा० टी०—तत इति । सतामार्तिहरं चन्द्रमयूखा भूषणानि यस्य तं शिवं समर्चयित्वा समर्च्य निशाचरो जगौ हस्तान् प्रसार्य ननर्त च ॥ ४४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकत्रिंशः सर्गः ॥ ३१ ॥

गो० टी०—तत इति । जगाविति । सामगानं कृतवानित्यर्थः । साम्नां सहस्रशाखापारगो रावण इति प्रसिद्धिः ॥४३॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकत्रिंशः सर्गः ॥ ३१ ॥

---

१–४ ] ति० टी०—नर्मदेति ॥ १–४ ॥

रा० टी०—रावणकर्तृकशिवार्चनकालिकं वृत्तान्तमाह नर्मदेत्यादिभिः । राक्षसेन्द्रः यत्र पुष्पोपहारं कुरुते अकरोत् तस्माद्देशाददूरतो निकटे जयतां श्रेष्ठोऽर्जुनः नर्मदातोयमाश्रितस्सन्नारीभिस्सह क्रीडते श्लोकद्वयमेकान्वयि ॥ १–२ ॥

रा० टी०—तासामिति । तासां नारीणां मध्यगतोऽर्जुनः करेणूनां सहस्रस्य मध्यस्थः कुंजर इव रराज ॥ ३ ॥

रा० टी०—जिज्ञासुरिति । बहुभिर्बाहुभिर्वृतोऽर्जुनः बाहूनां सहस्रस्य बलं जिज्ञासुस्सन्नर्मदावेगं बाहुभी रुरोध—बाहुभिरिति । उभयान्वयि ॥ ४ ॥

५ ] ति० टी०—निर्मलं तज्जलं कार्तवीर्यभुजैरासक्तमासक्तं

---

१ स्विति गो. रा. पाठः ।

समीननक्रमकरः सपुष्पकुशसंस्तरः । स नर्मदाम्भसो वेगः प्रावृट्काल इवाबभौ ॥ ६ ॥
स वेगः कार्तवीर्येण संप्रेषित इवाम्भसः । पुष्पोपहारं सकलं रावणस्य जहार ह ॥ ७ ॥
रावणोऽर्धसमाप्तं तमुत्सृज्य नियमं तदा । नर्मदां पश्यते कान्तां प्रतिकूलां यथा प्रियाम् ॥ ८ ॥
पश्चिमेन तु तं दृष्ट्वा सागरोद्गारसंनिभम् । वर्धन्तमम्भसो वेगं पूर्वामाशां प्रविश्य तु ॥ ९ ॥
ततोऽनुद्भ्रान्तशकुनां स्वभावे परमे स्थिताम् । निर्विकाराङ्गनाभासामपश्यद्रावणो नदीम् ॥ १० ॥
सव्येतरकराङ्गुल्या [1]सशब्दास्यो दशाननः । वेगप्रभावमन्वेष्टुं सोऽदिशच्छुकसारणौ ॥ ११ ॥
तौ तु रावणसंदिष्टौ भ्रातरौ शुकसारणौ । व्योमान्तरगतौ वीरौ प्रस्थितौ पश्चिमामुखौ ॥ १२ ॥
अर्धयोजनमात्रं तु गत्वा तौ रजनीचरौ । पश्येतां पुरुषं तोये क्रीडन्तं सहयोषितम् ॥ १३ ॥
बृहत्सालप्रतीकाशं तोयव्याकुलमूर्धजम् । मदरक्तान्तनयनं मदव्याकुलचेतसम् ॥ १४ ॥
नदीं बाहुसहस्रेण रुन्धन्तमरिमर्दनम् । गिरिं पादसहस्रेण रुन्धन्तमिव मेदिनीम् ॥ १५ ॥
बालानां वरनारीणां सहस्रेण समावृतम् । समदानां करेणूनां सहस्रेणेव कुञ्जरम् ॥ १६ ॥
[2]तमद्भुततरं दृष्ट्वा राक्षसौ शुकसारणौ । संनिवृत्तावुपागम्य [3]रावणं तमथोचतुः ॥ १७ ॥

---

ननर्मदां प्राप्य प्रतिस्रोतः प्रतिप्रवाहम् । प्रतिकूलमिति यावत् । प्रधावति ॥ ६ ॥

स० टी०—कार्तवीर्येति । कार्तवीर्यस्य भुजैरासक्तं तन्नर्मदासंबंधि निर्मलं जलं कूलोपहारं कूलदेशे पूजां कुर्वाणं रावणं प्राप्य प्रतिश्रोतः प्रतिप्रवाहं कूलपर्यन्तमित्यर्थः प्रधावति ॥६॥

गो० टी०—कार्तवीर्येति । प्रतिस्रोतः प्रतिप्रवाहम् ॥ ९ ॥

६ ] ति० टी०—कुशसंस्तरः कुशास्तरणम् । स तु तत्पुलिने कर्मनिमित्तं ऋषिगणकृतः ॥ ६ ॥

रा० टी०—सेति । मीनादिसहितः पुष्पादिसहितः नर्मदांभसः स वेगः प्रावृट्काले इव आबभौ ॥ ६ ॥

गो० टी—समीनेति । कुशसंस्तरः कुशास्तरणम् ॥६॥७॥

७ ] ति० टी०—संप्रेषित इव रावणं प्रतीति शेषः ॥ ७ ॥

रा० टी०—स इति । कार्तवीर्येण संप्रेषित इवाम्भसो वेगः रावणस्य पुष्पोपहारं जहार ॥ ७ ॥

८ ] ति० टी०—पश्यते पश्यति स्म ॥ ८ ॥

रा० टी०—रावण इति । रावणः अर्द्धसमाप्तं नियममुत्सृज्य प्रतिकूलां प्रियामिव नर्मदां पश्यते पश्यति ॥ ८ ॥

गो० टी०—रावण इत्यादिश्लोकद्वयम् । सागरोद्गारसंनिभं समुद्रपरीवाहसन्निभम् । पूर्वामाशां प्रविश्य स्थिति पूर्वामाशां प्रविश्य पश्यत इत्यन्वयः । रावण इति शेषः ॥ ८ ॥ ९ ॥

९ ] ति० टी०—सागरोद्गारश्चन्द्रोदयकालिकसमुद्रपरिवृद्धिः । तेन हि समुद्रगा नद्यस्तत्समीपदेशे विपरीतप्रवाहाः क्रियन्त इति प्रसिद्धम् । पश्चिमेन मार्गेण पूर्वामाशां प्रविश्य वर्धन्तमम्भसो वेगं दृष्ट्वा प्रतिकूलां कान्तां प्रियामिव नर्मदां पश्यति स्मेत्यन्वयः । 'पूर्वामाशां प्रविश्यति' इति पाठे रावण इति शेषः । तस्य कियद्दूरे वृद्धिरिति निर्णयार्थमिति भावः । 'तस्मात्प्रविश्य तु' इत्येव पाठो युक्तः कतकसंमतश्च ॥ ९ ॥

रा० टी०—पश्चिमेनेति । पश्चिमेन मार्गेण पूर्वामाशां दिशं प्रविश्य सागरोद्गारेण चन्द्रोदयकालिकसागरवृद्ध्या सन्निभं सदृशं वर्द्धन्तमम्भसो वेगं दृष्ट्वा निर्विकारां प्रावृट्कालाभावेन विकारसमयरहितामत एव परमे सर्वकालिके इत्यर्थः स्वभावे स्थिताम् अत एव न उद्भ्रान्ताः शकुनाः पक्षिणो यस्याः तामङ्गनाभासां नदीं रावणोऽपश्यत् अजानात् एतेन अन्येन केन चिदयमुपद्रवः कृत इति रावणेन निश्चितमिति सूचितम् श्लोकद्वयमेकान्वयि ॥ ९-१० ॥

१० ] ति० टी०—ततः पूर्वदिशि ॥ १० ॥

गो० टी०—तत इति । स्वभावस्य नदीस्वभावस्योपरमेऽसंभावे स्थितां नदीमपश्यत् । तथा एव स्वभावो निमित्तान्तरेण वेति जिज्ञासयेति शेषः ॥ १० ॥

११ ] ति० टी०—सव्येतरकराङ्गुल्या दक्षिणहस्ताङ्गुल्या शीघ्रान्वेषणद्योतकाभिनयं कृत्वान्वेष्टुमादिशत् ॥ ११ ॥

रा० टी०—सव्येति । न शब्दः आस्ये मुखे यस्य नियमेन मौनीभूत इत्यर्थः दशाननः वेगप्रभवं वेगोत्पत्तिकारणमन्वेष्टुं ज्ञातुं सव्येतरस्य दक्षिणस्य करस्य अंगुल्या शुकसारणौ आदिशत् आज्ञापयत् ॥ ११ ॥

गो० टी०—सव्येति । सव्येतरकराङ्गुल्या सशब्दं शीघ्रान्वेषणद्योतिहुंकारसंहितं यथा तथा ॥ ११ ॥ १२ ॥

१२ ] ति० टी०—व्योमान्तरगतावाकाशमार्गगौ ॥ १२ ॥

रा० टी०—ताविति । रावणेन संदिष्टौ शुकसारणौ पश्चिमाभिमुखौ सन्तौ प्रस्थितौ बभूवतुरिति शेषः ॥ १२ ॥

१३-१४ ] ति० टी०—पश्येतामपश्यताम् ॥ १३ ॥ १४ ॥

रा०टी०—अर्धेति । अर्द्धयोजनमात्रं गत्वा तोये क्रीडन्तं पुरुषं पश्येतामपश्यताम् ॥ १३ ॥

१५-१७ ] ति० टी०—मेदिनीं पादसहस्रेण रुन्धन्तं गिरिमिव संस्थितम् ॥ १५—१७ ॥

---

१ सशब्दं चेति गो. पा. । २ तममिति गो. रा. पा. । ३ रावणं तमिति गो. रा. पा. ।

बृहत्सालप्रतीकाशः कोऽप्यसौ राक्षसेश्वर । नर्मदां रोधवद्रुद्ध्वा क्रीडापयति योषितः ॥ १८ ॥
तेन बाहुसहस्रेण संनिरुद्धजला नदी । सागरोद्गारसंकाशानुद्गारान्सृजते मुहुः ॥ १९ ॥
इत्येवं भाषमाणौ तौ निशम्य[1] शुकसारणौ । रावणोऽर्जुन इत्युक्त्वा स ययौ युद्धलालसः ॥ २० ॥
अर्जुनाभिमुखे तस्मिन्रावणे राक्षसाधिपे । चण्डः प्रवाति[2] पवनः सनादः स[3]रजस्तथा ॥ २१ ॥
सकृदेव कृतो रावः स[4]रक्तपृषतो घनैः । महोदरमहापार्श्वधूम्राक्षशुकसारणैः ॥ २२ ॥
संवृतो राक्षसेन्द्रस्तु तत्रागाद्यत्र चार्जुनः । अदीर्घेणैव कालेन स तदा राक्षसो बली ॥ २३ ॥
तं नर्मदाह्रदं भीममाजगामाञ्जनप्रभः । स तत्र स्त्रीपरिवृतं वासिताभिरिव द्विपम् ॥ २४ ॥
नरेन्द्रं पश्यते राजा राक्षसानां तदार्जुनम् । स रोषाद्रक्तनयनो राक्षसेन्द्रो बलोद्धतः ॥ २५ ॥
इत्येवमर्जुनामात्यानाह गम्भीरया गिरा । अमात्याः क्षिप्रमाख्यात हैहयस्य नृपस्य वै ॥ २६ ॥
युद्धार्थं[5] समनुप्राप्तो रावणो नाम नामतः । रावणस्य वचः श्रुत्वा मन्त्रिणोऽथार्जुनस्य ते ॥ २७ ॥
उत्तस्थुः सा[6]युधास्तं च रावणं वाक्यमब्रुवन् । युद्धस्य कालो विज्ञातः साधु भो साधु रावण ॥ २८ ॥
यः क्षीबं स्त्रीगतं चैव योद्धुमुत्सहसे नृपम् । स्त्रीसमक्षगतं यत्त्वं योद्धुमुत्सहसे नृपम् ॥ २९ ॥

रा० टी०–बृहदिति । बृहत्सालप्रतीकाशं महासालसदृशं तोयेषु व्याकुलाः प्रक्षिप्ता मूर्द्धजा यस्य तोयेन व्याकुला व्याप्ता मूर्द्धजा यस्येति वा मदेन रक्तान्तं नयनं यस्य रक्तमन्तनयनं नयनान्तभागो यस्येति वा पादसहस्रेण मेदिनीं रुन्धन्तं गिरिमिव बाहुसहस्रेण नदीं रुन्धन्तं करेणूनां सहस्रेण समावृतं कुंजरमिव नारीणां सहस्रेण समावृतमद्भुततमं तमर्जुनं शुकसारणौ दृष्ट्वा सन्निवृत्तौ सन्तौ रावणमुपागम्य ऊचतुः श्लोकचतुष्टयमेकान्वयि ॥ १४–१७ ॥

गो० टी०–अर्धयोजनेति । पश्येतामपश्यतामित्यर्थः ॥ १३—१७ ॥

१८–१९] ति० टी०–रोधवद्रुध्यतेऽनेनेति रोधः सेतुस्तद्वदित्यर्थः । क्रीडापयति क्रीडयति पुंगार्षः ॥ १८ ॥ १९ ॥

रा० टी०–तदाकारमाह–बृहदिति द्वाभ्याम् । बृहत्सालप्रतीकाशः कोपि पुरुषः रोधवत् सेतुवन्नर्मदां रुद्ध्वा योषितः क्रीडापयति क्रीडयति ॥ तेनेति । बाहुसहस्रेण सन्निरुद्धजला नदी नर्मदा सागरोद्गारसंकाशान् चन्द्रोदयकालिकसागरवृद्धिसदृशानुद्गारान् वृद्धीः मुहुस्सृजते करोति ॥ १८ ॥ १९ ॥

गो० टी०–बृहत्सालेति । रोधवत्तटवत् । अकारान्तत्वमार्षम् । क्रीडापयतीति पुगार्षः । क्रीडयतीत्यर्थः ॥ १८ ॥ १९ ॥

२०—२१ ] ति० टी०–निशम्य दृष्ट्वार्जुन इत्युक्त्वान्यस्यैवंविधसामर्थ्यासंभवयुक्त्या ॥ २० ॥ २१ ॥

रा० टी०–इतीति । इत्येवं भाषमाणौ शुकसारणौ निशम्य तद्भाषणं श्रुत्वा युद्धलालसो रावणः अर्जुनस्स इत्युक्त्वा ययौ ॥ अर्जुनेति । रावणे अर्जुनाभिमुखे सति पवनः चण्डस्सन् सनादस्सस्वनः श्वसन् सरजाः रजसा सहितश्च सन्प्रवाति ॥ २० ॥ २१ ॥

गो० टी०–इत्येवमिति । निशाम्य दृष्ट्वा । अर्जुन इत्युक्त्वे अन्यस्यैवं सामर्थ्यं न संभवतीति युक्त्येति शेषः २० ॥ २१

२२–२४ ] ति० टी०–सरक्तपृषतो रक्तबिन्दुसहितो रावः शब्दः सकृदेव रावणप्रस्थानेन सहैवैकवारं च घनैः कृतः । रक्तवर्षुकमेघानां सकृद्रावोऽप्युत्पात इति कतकः ॥ २२—२४ ॥

रा० टी०–सकृदिति । सरक्तपृषतः रक्तबिन्दुसहितः रावः स्वनः सकृदेव घनैः कृतः अयमप्युत्पात इति तात्पर्यम् अर्द्धं पृथक् । महोदरेति । महोदरादिभिस्सम्वृतो राक्षसेन्द्रः यत्रार्जुनस्तत्रागात् ॥ अदीर्घेणेति । राक्षसो रावणः अदीर्घेणैव कालेन नर्मदाह्रदमाजगाम ॥ २२ ॥ २३ ॥

गो० टी०–रावणस्योत्पातमाह–सकृदिति । सरक्तः रक्तवर्षसहितः रावः शब्दः सकृदेकवारमेव घनैः प्रेषितः कृतः । वर्षुकमेघानां सकृद्राव उत्पात इति भावः ॥ २२ ॥ २३ ॥

रा० टी०–स इति । वासिताभिः करेणुभिर्द्विपमिव स्त्रीभिः परिवृतमर्जुनं राक्षसानां राजा पश्यते पश्यति ॥ २४ ॥

गो० टी०–स तत्रेति । वाशिताभिः करेणुभिः । वाशिता स्त्री करेण्वां चेत्यमरः । पश्यते पश्यति ॥ २४ ॥ २५ ॥

२५ ] ति० टी०–पश्यते पश्यति स्म ॥ २५ ॥

रा० टी०–स इति । राक्षसेन्द्रः अर्जुनामात्यान् गंभीरया गिरा इत्येवमाह ॥ २५ ॥

२६-२७] ति० टी०–इत्येवं वक्ष्यमाणप्रकारेण ॥ २६ ॥ २७ ॥

रा० टी०–तदाकारमाह–अमात्या इति । हे अमात्याः नामतो रावणः युद्धार्थं नाम प्रसिद्धम् समनुप्राप्तः इति वचः हैहयस्य नृपस्य समीपे शीघ्रमाख्यात ॥ २६ ॥

रा० टी०–रावणस्येति । अर्जुनस्य मन्त्रिणः रावणस्य वचः श्रुत्वा सायुधाः सन्तः उत्तस्थुः रावणमब्रुवंश्च ॥ २७ ॥

गो० टी०–इतीति । इत्येवं वक्ष्यमाणप्रकारेण ॥ २६ ॥ २७ ॥

२८–२९] ति० टी०–अर्जुनमन्त्रिणो व्यङ्ग्योक्त्या रावणं

१ निशाम्येति गो. पाठः । २ प्रेति गो. पाठः । ३ सरजा इति गो.रा.पा. । ४ रक्तः प्रेषित इति गो.पा. । ५ अर्थीति गो.पा. । ६ सायुधास्ताश्चेति

वीसितामध्यगं मत्तं शार्दूल इव कुञ्जरम् ।
क्षमस्वाद्य दशग्रीव उष्यतां रजनी त्वया । युद्धे श्रद्धा तु यद्यस्ति श्वस्तात समरेऽर्जुनम् ॥३०॥
यदि वाऽपि त्वरा तुभ्यं युद्धतृष्णासमावृत । निपात्यास्मान्रणे युद्धमर्जुनेनोपयास्यसि ॥ ३१ ॥
ततस्ते रावणामात्यैरमात्यास्ते नृपस्य तु । सूदिताश्चापि ते युद्धे भक्षिताश्च बुभुक्षितैः ॥ ३२ ॥
ततो हलहलाशब्दो नर्मदातीरगो बभौ । अर्जुनस्यानुयात्राणां रावणस्य च मन्त्रिणाम्॥३३॥
इषुभिस्तोमरैः प्रासैस्त्रिशूलैर्वज्रकर्षणैः । सरावणानर्दयन्तः समन्तात्समभिद्रुताः ॥ ३४ ॥
हैहयाधिपयोधानां वेग आसीत्सुदारुणः । सनक्रमीनमकरसमुद्रस्येव निःस्वनः ॥ ३५ ॥
रावणस्य तु तेऽमात्याः प्रहस्तशुकसारणाः । कार्तवीर्यबलं क्रुद्धा निर्दहन्ति स्म स्वतेजसा ॥ ३६ ॥
अर्जुनाय तु तत्कर्म रावणस्य समन्त्रिणः । क्रीडमानाय कथितं पुरुषैर्भयविह्वलैः ॥ ३७ ॥
श्रुत्वा न भेतव्यमिति स्त्रीजनं स तदाऽर्जुनः । उत्ततार जलात्तस्माद्गङ्गातोयादिवाञ्जनः ॥ ३८ ॥
क्रोधदूषितनेत्रस्तु स तदाऽर्जुनपावकः । प्रजज्वाल महाघोरो युगान्त इव पावकः ॥ ३९ ॥

---

निन्दन्ति—युद्धस्येत्यादि । हे रावण ! त्वया साधु सम्यग्युद्धस्य कालो विज्ञातः । यस्त्वं क्षीबं मदपानमत्तं स्त्रीगतं स्त्रीगोष्ठीगतं साधु सम्यग्योद्धुमुत्सहसे । उक्तमेव स्पष्टं पुनराह—स्त्रीसमक्षगतमिति यत्तत्सम्यक्कालो विज्ञातः ॥ २८–२९ ॥

रा० टी०—तदाकारमाह—युद्धस्येत्यादिभिः । भो रावण यस्त्वं क्षीबं मदपाने मत्तं स्त्रीगतं स्त्रीभिस्सहितं नृपमर्जुनं योद्धुं साधु उत्सहसे तेन त्वया युद्धस्य कालः विज्ञातः न विज्ञात इत्यर्थः अविज्ञात इति छेदो वा ॥ २८ ॥

गो० टी०—युद्धस्येत्यादि । व्यङ्ग्योक्तिः ॥ २८ ॥

रा० टी०—स्त्रीति । स्त्रीसमक्षं गतं नृपं योद्धुं यत् यस्त्वमुत्सहसे स त्वमद्य क्षमस्व अत एव रजनी इयं रात्रिः त्वया उष्यताम् ॥ २९ ॥

गो० टी०—य इत्यादिसार्धद्वयम् क्षीबं मत्तम् । उष्यताम् इहेति शेषः ॥ २९—३३ ॥

३० ] ति० टी०—स्वभावेनाहुः—क्षमस्वेति । अद्य दिवसे युद्धविलम्बं क्षमस्व सहस्व उष्यताम् । इहेति शेषः । युध्येति पदम् । समरे श्रद्धा यद्यस्ति तदा श्वोऽर्जुनं युध्य युध्यस्व ॥ ३० ॥

रा०टी०—युद्धेति । यदि ते युद्धश्रद्धास्ति तर्हि समरे समर्थस्त्वं श्वः प्रातःकाले अर्जुनं प्राप्नुहीति शेषः अर्हे प्रथक् ॥३०॥

३१–३२ ] ति० टी०—हे युद्धतृष्णासमावृत, यदि वा अथवा ते त्वरा यदि युद्धे तदास्मान्युद्धे निपात्यार्जुनेन युद्धं प्राप्स्यसि ॥ ३१ ॥ ३२ ॥

रा० टी०—यदीति । हे युद्धतृष्णासमावृत यदि वा अथवा तुभ्यं त्वरा प्राप्नोतीति शेषः तदा त्वं रणेस्मान् निपात्य अर्जुनेन युद्धमुपयास्यसि ॥ ३१ ॥

रा० टी०—तत इति । बुभुक्षितैरावणामात्यैः नृपस्यार्जुनस्यामात्या निषूदिता हिंसिता भक्षिताश्च ॥ ३२ ॥

३३ ] ति० टी०—हलहलेति शब्दानुकारः । अनुयात्रा अनुचराः मन्त्रिण इत्यर्थः ॥ ३३ ॥

रा० टी०—तत इति । अर्जुनस्यानुयात्राणामनुयायिनां रावणस्य मन्त्रिणां च नर्मदातीरगो हलहलाशब्दो बभौ ॥३३॥

३४ ] ति० टी०—कर्षणमायुधविशेषः । सरावणान्रावणसहितान्मन्त्रिणोऽर्दयन्तोऽर्जुनमन्त्रिणो बभूवुरिति शेषः॥३४॥

रा० टी०—इषुभिरिति । समन्तात्समभिद्रुता इतस्ततश्चलन्तोऽर्जुनयोधाः सरावणान् रावणसहितान् राक्षसान् अर्दयन्तो बभूवुरिति शेषः ॥ ३४ ॥

गो० टी०—इषुभिरिति । कर्षणमायुधविशेषः ॥ ३४ ॥

३५–३६ ] ति० टी०—नक्रादिसहितसमुद्रस्येव स्वन आसीत् ॥ ३५ ॥ ३६ ॥

रा० टी०—हैहयेति । हैहयाधिपयोधानां वेगः नक्रादिसहितसमुद्रस्य निःस्वन इव सुदारुण आसीत् ॥ ३५ ॥

रा० टी०—रावणस्येति । प्रहस्तादयः कार्तवीर्यबलं स्वतेजसा निघ्नन्ति स्म ॥ ३६ ॥

गो० टी०—हैहयेति । वेगो युद्धवेगः ॥ ३५—३८ ॥

३७ ] ति० टी०—समन्त्रिणो मन्त्रिसहितस्य रावणस्य ३७

रा०टी०—अर्जुनायेति । पुरुषैरर्जुनानुचरैः समन्त्रिणो रावणस्य कर्म अर्जुनाय कथितम् ॥ ३७ ॥

३८ ] ति० टी०—स्त्रीजनम् । न भेतव्यमित्युक्त्वेति शेषः । अञ्जनो दिग्गजः ॥ ३८ ॥

रा० टी०—श्रुत्वेति । अर्जुनः श्रुत्वा न भेतव्यमित्युक्त्वेति शेषः तस्मान्नर्मदाजाद्गङ्गातोयादञ्जनो महागज इव स्त्रीजनमुत्ततार ॥ ३८ ॥

३९ ] ति० टी०—अर्जुनरूपः पावक इति रूपकम् । युगान्ते प्रलयकाले ॥ ३९ ॥

रा० टी०—क्रोधेति । युगान्ते पावक इव महाघोरोऽर्जुनपावकः प्रजज्वाल ॥ ३९ ॥

---

१ इदमर्धमधिकं गो. पुस्त. । २ युद्धे इति गो. युद्धश्रद्धेति रा.पा. । ३ अथास्ति मतिर्योद्धुं युद्धतृष्णासमावृतेति गो. पा. । ४ निहत्येति गो.पा. । ५ यातूणामिति गो. पा. । ६ निर्दहन्ति स्म तेजसेति गो. पा. । ७ द्वारराक्षिभिरिति गो. पा. । ८ तं तत इति गो. पा. । ९ तत इति गो. पा. ।

स तूर्णतरमादाय वरहेमाङ्गदो गदाम् । अभिदुद्राव रक्षांसि तमांसीव दिवाकरः ॥ ४० ॥
बाहुविक्षेपकरणां समुद्यम्य महागदाम् । गारुडं वेगमास्थाय आपपातैव सोऽर्जुनः ॥ ४१ ॥
तस्य मार्गं समारुध्य विन्ध्योऽर्कस्येव पर्वतः । स्थितो विन्ध्य इवाकम्प्यः प्रहस्तो मुसलायुधः ॥ ४२ ॥
ततोऽस्य मुसलं घोरं लोहबद्धं मदोद्धतः । प्रहस्तः प्रेषयन्क्रुद्धो ररास च यथान्तकः ॥ ४३ ॥
तस्याग्रे मुसलस्याग्निरशोकापीडसंनिभः । प्रहस्तकरमुक्तस्य बभूव प्रदहन्निव ॥ ४४ ॥
आधावमानं मुसलं कार्तवीर्यस्तदार्जुनः । निपुणं वञ्चयामास सगदो गतविक्लवः ॥ ४५ ॥
ततस्तमभिदुद्राव सगदो हैहयाधिपः । भ्रामयाणो गदां गुर्वीं पञ्चबाहुशतोच्छ्रयाम् ॥ ४६ ॥
ततो हतोऽतिवेगेन प्रहस्तो गदया तदा । निपपात स्थितः शैलो वज्रिवज्रहतो यथा ॥ ४७ ॥
प्रहस्तं पतितं दृष्ट्वा मारीचशुकसारणाः । समहोदरधूम्राक्षा अपसृष्टा रणाजिरात् ॥ ४८ ॥
अपक्रान्तेष्वमात्येषु प्रहस्ते च निपातिते । रावणोऽभ्यद्रवत्तूर्णमर्जुनं नृपसत्तमम् ॥ ४९ ॥
सहस्रबाहोस्तद्युद्धं विंशद्बाहोश्च दारुणम् । नृपराक्षसयोस्तत्र आरब्धं रोमहर्षणम् ॥ ५० ॥
सागराविव संक्षुब्धौ चलमूलाविवाचलौ । तेजोयुक्ताविवादित्यौ प्रदहन्ताविवानलौ ॥ ५१ ॥
बलोद्धतौ यथा नागौ वासितार्थे यथा वृषौ । मेघाविव विनर्दन्तौ सिंहाविव बलोत्कटौ ॥ ५२ ॥
रुद्रकालाविव क्रुद्धौ तौ तदा राक्षसार्जुनौ । परस्परं गदां गृह्य ताडयामासतुर्भृशम् ॥ ५३ ॥
वज्रप्रहारानचला यथा घोरान्विषेहिरे । गदाप्रहारांस्तौ तत्र सेहाते नरराक्षसौ ॥ ५४ ॥

---

गो० टी०—क्रोधेति । युगान्ते युगान्तकाले उत्थितो घोरः पावक इव ॥ ३९ ॥ ४० ॥

४० ] ति० टी०—अभिदुद्राव द्रावयामास ॥ ४० ॥

रा० टी०—स इति । वरो हेमांगदो यस्य सोर्जुनः तूर्णतरमतिशीघ्रं गदामादाय रक्षांसि अभिदुद्राव ॥ ४० ॥

४१ ] ति० टी०—बाहुविक्षेपकरणां बाहुभिर्विक्षेपकरणं भ्रमसंपादनं यस्यास्ताम् । गारुडं वेगं गरुडसदृशवेगम् । आपपातैव, न तु विलम्बितवानित्यर्थः ॥ ४१ ॥

रा० टी०—बाह्विति अर्जुनो गारुडं गरुडसदृशवेगां गदां समुद्यम्यापपातैव मनागपि विलम्बं न चकारेत्यर्थः ॥ ४१ ॥

गो० टी०—बाहुभिर्विक्षेपकरणं भ्रमणं यस्यास्ताम् । वेगः शैघ्यम् । आपपातैव न तु विलम्बितवान् ॥ ४१ ॥ ४२ ॥

४२ ] ति० टी०—विन्ध्यपर्वतोऽर्कमार्गं रुद्ध्वा स्थित इति पौराणिकी कथा ॥ ४२ ॥

रा०टी०-तस्येति। विंध्योर्कस्य मार्गमिव तस्यार्जुनस्य मार्गं समारुध्य विंध्य इवाकम्प्यः प्रहस्तः स्थितोऽभवदिति शेषः॥४२॥

४३ ] ति० टी०—अस्य प्रेषयन्नस्य संहारार्थं क्षिपन् ४३

रा० टी०—तत इति । महोद्धतः प्रहस्तः अस्य अर्जुनस्य अर्जुनाय घोरं मुसलं प्रेषयन्प्रक्षिपन् सन्नन्तकः काल इव ररास ४३

गो० टी०—तत इति । अस्य प्रेषयन् अर्जुनस्य संहारार्थं क्षिपन् ॥ ४३ ॥

४४]ति०टी०-अशोकापीडमशोकपुष्पशिखा तत्संनिभः ४४

रा० टी०—तस्येति । अशोकापीडेन अशोकपुष्पशिखया सन्निभस्सदृशोऽग्निः प्रहस्तकरमुक्तस्य मुसलस्याग्रे प्रदहन्निव बभूव ॥ ४४ ॥

गो० टी०—तस्येति । अशोकपुष्पकृतः आपीडः अशोकापीडः ॥ ४४ ॥

४५ ] ति० टी०—गतविक्लवो गतभयः ॥ ४५ ॥

रा० टी०—आधावमानमिति । गदयोपलक्षितोर्जुनः निपुणं नैपुण्येन प्रयुक्तमत एव आधावमानं मुसलं वंचयामास निपुणमिति वञ्चनक्रियाविशेषणं वा ॥ ४५ ॥

गो० टी०—अथेति । वञ्चयामास प्रतिहतवानित्यर्थः । सगदः गदासहितः । अगदः अरोगः अप्रतिबन्ध इति यावत् विक्रमो यस्येति विग्रहः ॥ ४५ ॥

४६ ] ति० टी०—पञ्चबाहुशतैरुच्छ्रय उत्क्षेपो यस्यास्ताम् ॥ ४६ ॥

रा० टी०—तत इति । सगदो गदासहितो हैहयाधिपः पञ्चबाहुशतैः उच्छ्रय उच्छ्रेधो यस्याः तां गदां भ्रामयाणो भ्रामयमाणस्सन् तं प्रहस्तमभिदुद्राव ॥ ४६ ॥

गो०टी०—तत इति । पञ्चबाहुशतैः उच्छ्रय उत्क्षेपो यस्याः सा ॥ ४६ ॥

४७–५१ ] ति० टी०—शैल इव स्थितो निपपात ४७–५१

५२–५४ ] ति० टी०—वासितार्थं । करिणीरूपप्रयोजनाय युयुधाते इति शेषः ॥ ५२ ॥ ५४ ॥

---

१ महोद्धत इति गो. पा. । २ अम्बुद इति गो. पा. । ३ सगदो गदविक्रमः इति गो. पा. । ४ प्रहस्तमिति गो. पा. । ५ तथेति गो. पा. । ६ द्वीति गो. पा. ।

यथाशनिरवेभ्यस्तु जायतेऽथ प्रतिश्रुतिः । तथा तयोर्गदापोथैर्दिशः सर्वाः प्रतिश्रुताः॥ ५५ ॥
अर्जुनस्य गदा सा तु पात्यमानाहितोरसि । काञ्चनाभं नभश्चक्रे विद्युत्सौदामनी यथा ॥ ५६ ॥
तथैव रावणेनापि पात्यमाना मुहुर्मुहुः । अर्जुनोरसि निर्भाति गदोल्केव महागिरौ ॥ ५७ ॥
नार्जुनः खेदमायाति न राक्षसगणेश्वरः । सममासीत्तयोर्युद्धं यथा पूर्वं बलीन्द्रयोः ॥ ५८ ॥
शृङ्गैरिव वृषायुध्यन्दन्ताग्रैरिव कुञ्जरौ । परस्परं विनिघ्नन्तौ नरराक्षससत्तमौ ॥ ५९ ॥
ततोऽर्जुनेन क्रुद्धेन सर्वप्राणेन सा गदा । स्तनयोरन्तरे मुक्ता रावणस्य महोरसि ॥ ६० ॥
वरदानकृतत्राणे सा गदा रावणोरसि । दुर्बलेव यथावेगं द्विधाभूतापतत्क्षितौ ॥ ६१ ॥
स त्वर्जुनप्रयुक्तेन गदाघातेन रावणः । अपासर्पद्धनुर्मात्रं निषसाद च निष्टनन् ॥ ६२ ॥
स विह्वलं तदालक्ष्य दशग्रीवं ततोऽर्जुनः । सहसोत्पत्य जग्राह गरुत्मानिव पन्नगम् ॥ ६३ ॥
स तु बाहुसहस्रेण बलाद्गृह्य दशाननम् । बबन्ध बलवान्राजा बलिं नारायणो यथा ॥ ६४ ॥

---

रा० टी०—तत इति । गदया अतिवेगेन हतः स्थितः स्थिरबुद्धिः प्रहस्तः वज्रिवज्रहतशैल इव निपपात ॥ ४७ ॥

रा० टी०—प्रहस्तमिति । मारीचादयः रणाजिराद् पलायिताः निवृत्ता बभूवुरिति शेषः ॥ ४८ ॥

रा० टी०—अपक्रान्तेष्विति । रावणः अर्जुनमभ्यद्रवत् ४९

रा० टी०—सहस्रेति । नृपराक्षसयो रोमहर्षणं युद्धमारब्धम् ॥ ५० ॥

गो० टी०—तथेति । तथा शैल इव स्थितः निपपात ४७—५०

रा० टी०—युद्धमेव वर्णयति सागराविति—संक्षुब्धौ संक्षोभं प्राप्तौ सागराविव बलेनोद्धतौ नागौ महागजाविव वासितार्थे गवार्थे वृषाविव विनर्दन्तौ मेघाविव बलोत्कटौ उत्कटबलौ सिंहाविव क्रुद्धौ रुद्रकालाविव राक्षसार्जुनौ गदां गृह्य गृहीत्वा परस्परं ताडयामासतुः श्लोकत्रयमेकान्वयि ॥५१—५३॥

रा० टी०—वज्रेति । अचला गिरयः वज्रप्रहारान् यथा विषेहिरे तथा नरराक्षसौ गदाप्रहारान् सेहाते ॥ ५४ ॥

गो० टी०—सागरावित्यादिश्लोकत्रयम् वाशितार्थे करेण्वर्थे । युध्यन्ताविति शेषः ॥ ५१—५४ ॥

५५ ] ति० टी०—अशनिरवेभ्योऽशनिपातध्वनिभ्यः प्रतिश्रुतिः प्रतिध्वनिः । गदापोथैर्गदापातैः प्रतिश्रुताः प्रतिध्वनिमत्यः ॥ ५५ ॥

रा० टी०—यथेति । अशनिरवेभ्यः प्रतिश्रुतिः प्रतिध्वनिविशिष्टा यथा जायते तथा तयोः राक्षसार्जुनयोः गदापोथैः गदायाः पातैः सर्वाः दिशः प्रतिश्रुताः बभूवुरिति शेषः ॥५५॥

गो० टी०—तथेति । प्रतिश्रुताः प्रतिश्रुतवन्त इत्यर्थः । मत्वर्थीयाजन्तः । गदापोथैः गदापातैः ॥ ५५ ॥

५६—५७ ] ति० टी०—अहितोरसि रावणोरसि सौदामनी विद्युद्विशेषेण द्योतमाना नभ इव रावणोरो गदा काञ्चनाभं काञ्चनवर्णं चक्रे । प्रकाशितं चक्रे इति यावत् ॥ ५६ ॥ ५७ ॥

रा० टी०—अर्जुनस्येति । अहितस्य रावणस्योरसि पात्यमानार्जुनस्य गदा विद्युत्सौदामनीव नभः काञ्चनाभञ्चक्रे ॥५६॥

रा० टी०—तथेति । अर्जुनोरसि रावणेन तथैव पात्यमाना गदा महागिरावुल्का इव निर्भाति ॥ ५७ ॥

गो० टी०—अर्जुनस्येति । विद्युद्विशेषेण द्योतमाना सौदामनी नभ इव राक्षसोरः काञ्चनाभं स्वर्णवर्णं चकार॥५६—६०॥

५८ ] ति० टी०—न राक्षसगणेश्वरः खेदमायाति ॥ ५८ ॥

रा० टी०—नेति । अर्जुनः खेदं नायाति प्राप्नोति अत एव बलीन्द्रयोरिव तयोर्युद्धं सममासीत् ॥ ५८ ॥

५९—६० ] ति० टी०—वृषायुध्यन् । वृषायुध्यन्निरयर्थः ॥ ५९ ॥ ६० ॥

रा० टी०—शृंगैरिति । शृंगैर्वृषाद्वृषाविव परस्परं विनिघ्नन्तौ नरराक्षससत्तमौ अयुध्यन् अयुध्यतां छुपां सुलुगिति डादेशः ॥ ५९ ॥

रा० टी—तत इति । अर्जुनेन रावणस्य महोरसि स्तनयोरन्तरे मध्ये सर्वप्राणेन सर्वप्रयत्नेन गदा मुक्ता ॥ ६० ॥

६१ ] ति० टी०—दुर्बलेव बलरहितेव । यथावेगं स्ववेगोचितं प्रहर्तुमसमर्था स्वयमेव द्विधाभूता क्षितावपतत् । तत्र हेतुः—वरदानकृतत्राणे इति ॥ ६१ ॥

रा० टी०—वरेति । वरदानेन कृतं त्राणं यस्य तस्मिन् रावणोरसि पातितेति शेषः सा गदा दुर्बला अवेगमिव यथा भवति तथा द्विधाभूता सती क्षितौ अपतत् ॥ ६१ ॥

गो० टी०—वरदानेति । दुर्बलेव बलरहितेव । यथावेगं स्ववेगोचितम् । प्रहर्तुं स्वयं द्विधा भूत्वा क्षितावपतत् । तत्र हेतुः—वरदानकृतत्राण इति ॥ ६१ ॥

६२—६४ ] ति० टी०—अपासर्पदपराङ्मुख एव पृष्ठतोऽगच्छत् । निष्टनन् रुदन् ॥ ६२—६४ ॥

रा० टी०—स इति । रावणः अर्जुनप्रयुक्तेन गदाघातेन धनुर्मात्रमपासर्पन् निष्टनम् रुदन्सन् निषसाद च ॥ ६२ ॥

रा० टी०—स इति । अर्जुनः दशग्रीवं विह्वलमालक्ष्य सहसोत्पत्य गरुत्मान् पन्नगमिव जग्राह ॥ ६३ ॥

---

१ इदमिति गो. पा. । २ मुक्तेनेति गो. पा. ।

बध्यमाने दशग्रीवे सिद्धचारणदेवताः । साध्वीतिवादिनः पुष्पैः किरन्त्यर्जुनमूर्धनि ॥ ६५ ॥
व्याघ्रो मृगमिवादाय मृगराडिव कुञ्जरम् । ररास हैहयो राजा हर्षादम्बुदवन्मुहुः ॥ ६६ ॥
प्रहस्तस्तु समाश्वस्तो दृष्ट्वा बद्धं दशाननम् । सहसा राक्षसः क्रुद्ध अभिदुद्राव हैहयम् ॥ ६७ ॥
नक्तंचराणां वेगस्तु तेषामापततां बभौ । उद्धूत आतपापाये पयोदानामिवाम्बुधौ ॥ ६८ ॥
मुञ्च मुञ्चेति भाषन्तस्तिष्ठतिष्ठेति चासकृत् । मुसलानि च शूलानि सोत्ससर्ज तदा रणे ॥ ६९ ॥
अप्राप्तान्येव तान्याशु असंभ्रान्तस्तदार्जुनः । आयुधान्यमरारीणां जग्राहारिनिषूदनः ॥ ७० ॥
ततस्तान्येव रक्षांसि दुर्धरैः प्रवरायुधैः । भित्त्वा विद्रावयामास वायुरम्बुधरानिव ॥ ७१ ॥
राक्षसांस्त्रासयामास कार्तवीर्यार्जुनस्तदा । रावणं गृह्य नगरं प्रविवेश सुहृद्वृतः ॥ ७२ ॥
स कीर्यमाणः कुसुमाक्षतोत्करैर्द्विजैः सपौरैः पुरुहूतसंनिभः ।
ततोऽर्जुनः स्वां प्रविवेश तां पुरीं बलिं निगृह्येव सहस्रलोचनः ॥ ७३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

## त्रयस्त्रिंशः सर्गः ।

पुलस्त्यस्तच्छ्रुत्वा माहिष्मतीमुपागम्य कृतवीर्यतनयगृहीतसपर्यातिथ्यो रावणं मोचयित्वा तेन च सहस्रभुजमैत्रीं विरचय्य ब्रह्मलोकं गतः रावणस्तु निर्जितः कथंचिल्लज्जितो गतः ।

रावणग्रहणं तत्तु वायुग्रहणसंनिभम् । ततः पुलस्त्यः शुश्राव कथितं दिवि दैवतैः ॥ १ ॥

रा० टी०–स इति । सोऽर्जुनः दशाननं गृह्य गृहीत्वा बबन्ध ॥ ६४ ॥

गो० टी०–स त्विति । निघ्नन् रटन् ॥ ६२—६४ ॥

६५-६७ ] ति० टी०–साध्वीति वादिन इति दीर्घ आर्षः ॥ ६५—६७ ॥

रा० टी०–वध्यमान इति । दशग्रीवे वध्यमाने सति साध्वीतिवादिनः सिद्धादयः पुष्पैरर्जुनमूर्द्धनि किरन्ति साध्वीतीत्यत्र दीर्घ आर्ष इति भट्टाः साध्वीत्यस्याध्याहृतबन्धनप्राप्तिविशेषणत्वे तु नार्षकल्पनेति दिक् ॥ ६५ ॥

रा० टी०–व्याघ्र इति । मृगमादाय व्याघ्र इव हैहयो राजा अम्बुदवन्मुहुः ररास आनन्दस्वनं चकार ॥ ६६ ॥

रा० टी०–प्रहस्त इति । समाश्वस्तः प्रहस्तः दशाननं बद्धं दृष्ट्वा हैहयमभिदुद्राव ॥ ६७ ॥

गो० टी०–बध्यमान इति । साध्वीतिवादिनः इयं क्रिया साध्विति वदन्तः ॥ ६५—७३ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्वात्रिंशः सर्गः ॥ ३२ ॥

६८ ] ति० टी०–आतपापाये वर्षाकाले ॥ ६८ ॥

रा० टी०–नक्तमिति । आपततां नक्तंचराणां रक्षसामुद्धूतो वेगः आतपापाये ग्रीष्मापगमे अम्बुधौ पयोदानां वेग इव बभौ ॥ ६८ ॥

६९ ] ति० टी०–सोत्ससर्जेत्यार्षम् । सहैव त्यक्तवन्त इत्यर्थः ॥ ६९ ॥

रा० टी०–मुञ्चेति । मुञ्च मुञ्चेति तिष्ठ तिष्ठेति भाषन्तो राक्षसाः प्रापुरिति शेषः स प्रहस्तस्तु मुसलानि शूलानि च उत्ससर्ज संधिरार्षः ॥ ६९ ॥

७०-७३ ] ति० टी०–अप्राप्तान्येव स्वसमीपमनागतान्येवान्तरिक्षस्थान्येवामरारीणां तान्यायुधानि रावणग्राहिकरव्यतिरिक्तकरैराशु जग्राह ॥ ७०—७३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

रा० टी०–अप्राप्तानीति । असंभ्रान्तोऽर्जुनः अप्राप्तान्येव अमरारीणामायुधानि जग्राह ॥ तत इति । अर्जुनः तैर्गृहीतैरेव प्रवरायुधैः रक्षांसि भित्वा वायुरम्बुधरानिव विद्रावयामास ॥ राक्षसानिति । कार्तवीर्यार्जुनः रावणं गृह्य गृहीत्वा नगरं प्रविवेश ॥ तदेव भंग्यन्तरेणाह—स इति । द्विजैः कुसुमाक्षतोत्करैः कुसुमाक्षतानां समूहैः कीर्यमाणोऽर्जुनः बलिं निगृह्य सहस्रलोचन इव स्वां पुरीं प्रविवेश ॥ ७०—७३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्वात्रिंशः सर्गः ॥ ३२ ॥

१ ] ति० टी०–अथ पुलस्त्येन रावणमोचनम्—रावणेति ॥ १ ॥

१ त राक्षसैः क्रुद्धश्चाभीति गो. पा. । २ उद्भूत इति रा. पा. । ३ सशूला नीति गो. पा. । ४ अर्जुन इति गो. पा. । ५ तैरेवेति गो. रा. पा. । ६ त्रासयित्वा स्थिति गो. पा. । ७ तदेति गो. पा. ।

ततः पुत्रकृतस्नेहात्कम्प्यमानो[1] महाधृतिः । माहिष्मतीपतिं द्रष्टुमाजगाम महानृषिः ॥ २ ॥
स वायुमार्गमास्थाय वायुतुल्यगतिर्द्विजः । पुरीं माहिष्मतीं प्राप्तो मनःसंपातविक्रमः ॥ ३ ॥
सोऽमरावतिसंकाशां हृष्टपुष्टजनावृताम्[2] । प्रविवेश पुरीं ब्रह्मा इन्द्रस्येवामरावतीम् ॥ ४ ॥
पादचारमिवादित्यं निष्पतन्तं सुदुर्दृशम्[3] । ततस्ते प्रत्यभिज्ञाय अर्जुनाय न्यवेदयन् ॥ ५ ॥
पुलस्त्य इति विज्ञाय वचनाद्धैहयाधिपः । शिरस्यञ्जलिमाधाय प्रत्युद्गच्छत्तपस्विनम् ॥ ६ ॥
पुरोहितोऽस्य गृह्यार्घ्यं मधुपर्कं तथैव च । पुरस्तात्प्रययौ राज्ञः शक्रस्येव बृहस्पतिः ॥ ७ ॥
ततस्तमृषिमायान्तमुद्यन्तमिव भास्करम् । अर्जुनो दृश्य संभ्रान्तो ववन्देन्द्र इवेश्वरम् ॥ ८ ॥
स तस्य मधुपर्कं गां पाद्यमर्घ्यं निवेद्य च । पुलस्त्यमाह राजेन्द्रो हर्षगद्गदया गिरा ॥ ९ ॥
अद्यैवममरावत्या तुल्या माहिष्मती कृता । अद्याहं तु द्विजेन्द्र त्वां यस्मात्पश्यामि दुर्दृशम् ॥ १० ॥
अद्य मे कुशलं देव अद्य मे कुशलं व्रतम् । अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ ११ ॥
यत्ते देवगणैर्वन्द्यौ वन्देऽहं चरणौ तव । इदं राज्यमिमे पुत्रा इमे दारा इमे वयम् ॥
ब्रह्मन्किं कुर्मः[4] किं कार्यमाज्ञापयतु नो भवान् । ॥ १२ ॥
तं धर्मेऽग्निषु पुत्रेषु शिवं पृष्ट्वा च पार्थिवम् । पुलस्त्योवाच राजानं हैहयानां तथार्जुनम् ॥ १३ ॥
नरेन्द्राम्बुजपत्राक्ष पूर्णचन्द्रनिभानन । अतुलं ते बलं येन दशग्रीवस्त्वया जितः ॥ १४ ॥

रा० टी०– अर्जुनस्य स्वपुरप्रवेशानन्तरकालिकं वृत्तान्तमाह—रावणेत्यादिभिः । दैवतैः कथितं वायुग्रहणसन्निभं रावणग्रहणं रावणकर्मकगृहीति पुलस्त्यः शुश्राव ॥ १ ॥

२ ] ति० टी०–कम्प्यमानोऽनुकम्पया युज्यमानः ॥ २ ॥

रा० टी०–तत इति । पुत्रकृतस्नेहात्कम्पमानः महानृषिः पुलस्त्यः माहिष्मतीपतिं द्रष्टुमाजगाम ॥ २ ॥

गो० टी०–तत इति । कम्प्यमानः अनुकम्पायुक्ततया संपेष्यमानः । यद्वा पौत्रस्नेहात्कम्पित इत्यर्थः । महाधृतेरपि कम्पितं हृदयमित्यर्थः ॥ २ ॥

३ ] ति० टी०–मनःसंपातविक्रमो मनस्तुल्यगतिः ॥ ३ ॥

रा० टी०–स इति । मनसस्सम्पातवद्विक्रमो गतिर्यस्य सः वायुतुल्यगतिः स पुलस्त्यः वायुमार्गमास्थाय माहिष्मतीं पुरीं प्राप्तः ॥ ३ ॥

गो० टी०–स इति । मनःसंपातविक्रमः मनोगतिः । वायुतुल्यगतिः वायुसमानवेगः ॥ ३ ॥

४ ] ति० टी०–अमरावतिसंकाशाम् आर्षो ह्रस्वः ॥ ४ ॥

रा० टी०–स इति । स पुलस्त्यः अमरावतिसंकाशां हृष्टपुष्टजनैः आवृतां पुरीं माहिष्मतीम् ब्रह्मा इन्द्रस्यामरावतीमिव प्रविवेश ॥ ४ ॥

गो० टी०–स इति । अमरावतिसंकाशामित्यत्र "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः ॥ ४ ॥

५ ] ति० टी०–सुदुर्दृशम् । सुदुर्दर्शमित्यर्थः । प्रत्यभिज्ञाय द्वाःस्था मन्त्रिणो वा ॥ ५ ॥

रा० टी०–पादेति । पादचारमादित्यमिव निष्पतन्तं प्रत्यभिज्ञाय ते अर्जुनानुचराः अर्जुनाय न्यवेदयन् ॥ ५ ॥

गो० टी०–पादचारमिति । सुदुर्दृशं दुर्दर्शमिति यावत् प्रत्युद्गच्छत् । ईश्वरं ब्रह्माणम् ॥ ५—११ ॥

६–७ ] ति० टी०–प्रत्युद्गच्छत्प्रत्युदगच्छत् ॥ ६ ॥ ७ ॥

रा० टी०–पुलस्त्य इति । वचनात् अनुचराणामुक्त्या पुलस्त्य इति विज्ञाय हैहयाधिपः शिरस्यंजलिमाधाय तपस्विनं पुलस्त्यं प्रत्युद्गच्छत् आगमशास्त्रस्यानित्यत्वात् अड्विरहः ॥ ६ ॥

रा० टी०–पुरोहित इति । अस्य अर्जुनस्य पुरोहितः अस्य ऋषेः अर्घ्यं मधुपर्कं च गृह्य गृहीत्वा राज्ञः पुरस्तात् प्रययौ ॥ ७ ॥

८–१२ ] ति० टी०–ईश्वरं ब्रह्माणम् ॥

रा० टी०–तत इति । आयान्तमृषिमर्जुनो दृश्य दृष्ट्वा ववन्दे गुणोत एव निर्देशात् ॥ ८ ॥

रा० टी०–स इति । राजेन्द्रः तस्य तस्मै ऋषये मधुपर्कादि निवेद्य पुलस्त्यमाह ॥ ९ ॥

रा० टी०–तदाकारमाह–अद्येति । यस्मात्त्वामद्य पश्यामि तस्मादद्यैवमद्यैव अमरावत्या तुल्या माहिष्मती कृता ॥ १० ॥

रा० टी०–अद्येति । यतस्तौ चरणौ अहं वन्दे अतः अद्य मे कुशलादीनि सार्द्धश्लोक एकान्वयी ॥ ११ ॥

रा० टी०–इदमिति । इदं राज्यादि तवैवेति शेषः अतो वयं किं कार्यं कुर्मः तद्भवानस्मभ्यमाज्ञापयतु ॥ १२ ॥

गो० टी०–इदमिति । किं कुर्मि किं करवाणि किं वा कार्यं मया ॥ १२ ॥

१३–१४ ] ति० टी०–शिवं कुशलम् । पुलस्त्योवाचेति संधिरार्षः ॥ १३ ॥ १४ ॥

१ कम्पमान इति रा० पा. २ आकुलामिति गो. पा. । ३ दुर्दर्शमिति गो. पा. । ४ कुर्मीति गो. पा. ।

भयाद्यस्योपतिष्ठेतां निष्पन्दौ सागरानिलौ । सोऽयं मृधे त्वया बद्धः पौत्रो मे रणदुर्जयः॥ १५ ॥
पुत्रकस्य यशः पीतं नाम विश्रावितं त्वया । मद्वाक्याद्याच्यमानोऽद्य मुञ्च वत्सदशाननम्॥ १६ ॥
पुलस्त्याज्ञां प्रगृह्यार्थे न किंचन वचोऽर्जुनः । मुमोचैवं पार्थिवेन्द्रो राक्षसेन्द्रं प्रहृष्टवत् ॥ १७ ॥
स तं प्रमुच्य त्रिदशारिमर्जुनः प्रपूज्य दिव्याभरणस्रगम्बरैः ।
अहिंसकं सख्यमुपेत्य साग्निकं प्रणम्य तं ब्रह्मसुतं गृहं ययौ ॥ १८ ॥
पुलस्त्येनापि संत्यक्तो राक्षसेन्द्रः प्रतापवान् । परिष्वक्तः कृतातिथ्यो लज्जमानो विनिर्जितः॥१९॥
पितामहसुतश्चापि पुलस्त्यो मुनिपुंगवः । मोचयित्वा दशग्रीवं ब्रह्मलोकं जगाम ह ॥ २० ॥
एवं स रावणः प्राप्तः कार्तवीर्यात्प्रधर्षणम् । पुलस्त्यवचनाच्चापि पुनर्मुक्तो महाबलः ॥ २१ ॥
एवं बलिभ्यो बलिनः सन्ति राघवनन्दन । नावज्ञा हि परे कार्या य इच्छेच्छ्रेय आत्मनः॥ २२ ॥
ततः स राजा पिशिताशनानां सहस्रबाहोरुपलभ्य मैत्रीम् ।
पुनर्नृपाणां कदनं चकार चचार सर्वां पृथिवीं च दर्पात् ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

---

रा० टी०–तमिति । पुलस्त्यः धर्मादिषु शिवं पृष्ट्वा राजानमर्जुनमुवाच गुणस्तद्गुरुत एव निर्देशात् ॥ १३ ॥

रा० टी०–तदाकारमाह—नरेन्द्रेति । येन त्वया दशग्रीवो जितः तस्य ते बलमतुलम् ॥ १४ ॥

गो० टी०–तमिति । शिवं कुशलम् । पुलस्त्योवाचेति सन्धिरार्षः ॥ १३—१९ ॥

१५ ] ति० टी०–यस्य रावणस्य ॥ १९ ॥

रा० टी०–तत्र हेतुमाह–भयादिति । यस्य भयात्सागरानिलौ निस्पन्दौ सन्तौ उपतिष्ठेतां सोयं मे पौत्रः त्वया बद्धः१९

१६] ति० टी०–पुत्रकस्य मदीयबालस्य रावणस्य यशः पीतं नाशितम्, स्वीयं नाम च रावणजिदित्येवं त्रैलोक्ये विश्रावितम्१६

रा० टी०–पुत्रकस्येति। त्वया पुत्रकस्य अनुकम्पनीयपुत्रस्य यशः पीतमत एव नाम विश्रावितं प्रख्यापितमतः मद्वाक्याद्याच्यमानस्त्वं दशाननं मुञ्च ॥ १६ ॥

गो० टी०–पुत्रकस्येति । पुत्रकस्य मदीयबालकस्य नाम विश्रावितं रावणजिदिति नाम त्वया त्रैलोक्ये विश्रावितम् । वत्सं बालम् ॥ १६ ॥

१७ ] ति० टी०–न किंचिद्वच ऊचे, किं तु 'क्रियाकेवलमुत्तरम्' इति मुमोचैव । प्रहृष्टवद्ब्रह्मपुत्रो मां प्रार्थितवानिति संतोषयुक्तः सन् ॥ १७ ॥

रा० टी०–पुलस्त्येति । अर्जुनः पुलस्त्याज्ञां प्रगृह्य किञ्चन वचः नोवाचेति शेषः राक्षसेन्द्रं तु प्रहृष्टवत् प्रहर्षविशिष्टं यथा भवति तथा मुमोचैव ॥ १७ ॥

गो० टी०–पुलस्त्येति । किंचिद्वचोपि नोवाच किंचन अविद्यमानं किंचिद्वचनं न किंचिदप्यवददित्यर्थः । अपि तु क्रिया केवलमुत्तरमिति मुमोचेत्यर्थः । प्रहृष्टवत् ब्रह्मणा प्रार्थनीयोस्मीति संतोषयुक्तः सन् ॥ १७ ॥

१८ ] ति० टी०–अहिंसकं सख्यं परस्परहिंसाप्रवृत्तिनिवारणसाधनम् । साग्निकमग्निसाक्षित्वसहितम् ॥ १८ ॥

रा०टी०–स इति । अर्जुनः त्रिदशारिं प्रमुच्य दिव्याभरणस्रगंबरैः प्रपूज्य च अहिंसकं कस्यचिद्धिंसायां साहाय्यरहितमनिवर्त्यं वा साग्निकं सख्यमुपेत्य ब्रह्मसुतं प्रणम्य गृहं ययौ१८

गो० टी०–स इति । परस्परहिंसाप्रवृत्तिनिवारणसाधनभूतं साग्निकमग्निसाक्षिपूर्वम् ॥ १८ ॥

१९–२१ ] ति० टी०–पुलस्त्येनापि संत्यक्तो गच्छ लङ्कामित्यनुज्ञातः । अपिनार्जुनेनापि त्यक्तो बन्धनान्मुक्तः । कृतातिथ्यः । अर्जुनेनेति शेषः ॥ १९–२१ ॥

रा० टी०–पुलस्त्येनेति । पुलस्त्येन कृतातिथ्यः परिष्वक्तः संत्याजितः मोचित इत्यर्थः विनिर्जितो राक्षसेन्द्रः लज्जमानस्तन्ययाविति शेषः ॥ १९ ॥

रा० टी०–पितामहेति । पुलस्त्यः ब्रह्मलोकं जगाम॥२०॥

रा० टी०–एवमिति । रावणः कार्तवीर्यादेवं प्रधर्षणं प्राप्तः पुलस्त्यवचनात्पुनर्मुक्तश्च ॥ २१ ॥

गो० टी०–पुलस्त्येनेति । अपिना अर्जुनेनापीति समुच्चीयते कृतातिथ्य इति अर्जुनेनेति शेषः ॥ १९–२३ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

२२–२३ ] ति० टी०–बलिभ्योऽपि बलिनः सन्ति । ईश्वरसृष्टेर्विचित्रत्वादित्याशयः । यः श्रेय इच्छेत्तेन परे परस्मिन्नवज्ञा न कार्या ॥ २२ ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रयस्त्रिंशः सर्गः ॥ ३३ ॥

रा० टी०–एवमिति। हे राघवनन्दन ! बलिभ्यो बलिनो-

---

१ वत्समिति गो. पा. । २ ऊचे इति गो. पा. । ३ मुमोच वै इति गो. पा. ।

# चतुस्त्रिंशः सर्गः ।

अथ वाली योद्धुमागतं रावणं कक्षावलम्बितं धृत्वा चतुर्ष्वपि सागरेषु स्नात्वा सन्ध्यामुपास्य च किष्किन्धामागत्योत्सृज्य पतितं तं को भवानिति पप्रच्छ रावणस्तु स्वमनोरथं निवेद्य तद्बलं बहु प्रशस्य तेनाग्निसाक्षिकं सख्यं विधाय तत्र मासमुषित्वामात्यैर्नीतः ।

अर्जुनेन विमुक्तस्तु रावणो राक्षसाधिपः । चचार पृथिवीं सर्वामनिर्विण्णस्तथा कृतः ॥ १ ॥
राक्षसं वा मनुष्यं वा शृणुतेऽयं बलाधिकम् । रावणस्तं समासाद्य युद्धे ह्वयति दर्पितः ॥ २ ॥
ततः कदाचित्किष्किन्धां नगरीं वालिपालिताम् । गत्वाह्वयति युद्धाय वालिनं हेममालिनम् ॥ ३ ॥
ततस्तु वानरामात्यैस्तारस्तारापिता प्रभुः । उवाच वानरो वाक्यं युद्धप्रेप्सुमुपागतम् ॥ ४ ॥
राक्षसेन्द्र गतो वाली यस्ते प्रतिबलो भवेत् । कोऽन्यः प्रमुखतः स्थातुं तव शक्तः प्लवंगमः ॥ ५ ॥
चतुर्भ्योऽपि समुद्रेभ्यः संध्यामन्वास्य रावण । इदंमुहूर्तमायाति वाली तिष्ठ मुहूर्तकम् ॥ ६ ॥
एतानस्थिचयान्पश्य य एते शङ्खपाण्डुराः । युद्धार्थिनामिमे राजन्वानराधिपतेजसा ॥ ७ ॥
यद्वामृतरसः पीतस्त्वया रावण राक्षस । तदा वालिनमासाद्य तदन्तं तव जीवितम् ॥ ८ ॥

---

धिकबलवन्तस्सन्ति अतः य आत्मनः श्रेय इच्छेत्तेन परे रिपौ अवज्ञा न कार्या ॥ २२ ॥

रा० टी०–तत इति । पिशिताशनानां राजा रावणः सहस्रबाहोर्मैत्रीमुपलभ्य नृपाणां कदनं पुनश्चकार अत एव सर्वां पृथिवीं चचार ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रयस्त्रिंशस्सर्गः ॥ ३३ ॥

१ ] ति० टी०–अथ रावणस्य वालिदर्शनम्—अर्जुनेनेति । अनिर्विण्णः कृतः । पुलस्त्येन विमोच्यार्जुनसख्यं प्रापय्य तेन पूजयित्वा विसर्जितत्वात्पराभवजनितनिर्वेदरहितः कृत इत्यर्थः ॥ १ ॥

रा० टी०–रावणकर्तृकपृथिवीपर्यटनकालोद्भवं वृत्तान्तमाह—अर्जुनेनेत्यादिभिः । अर्जुनेन विमुक्तः अत एव अनिर्विण्णः युद्धाद्वैराग्यरहितः कृतो यो राक्षसाधिपः स सर्वां पृथिवीं चचार ॥ १ ॥

२–३ ] ति० टी०–युद्धे ह्वयति । युद्धनिमित्तमाह्वयतीत्यर्थः ॥ २ ॥ ३ ॥

रा० टी०–राक्षसमिति । रावणः यं बलाधिकं शृणुते तं युद्धे ह्वयति ॥ २ ॥

रा० टी०–तत इति । कदाचित्किष्किंधां गत्वा युद्धाय वालिनमाह्वयति आह्वयत् ॥ ३ ॥

गो० टी०–राक्षसमिति । युद्धे युद्धनिमित्तम् ह्वयति आह्वयति स्म ॥ २ ॥ ३ ॥

४ ] ति० टी०–वानरामात्या वालिमन्त्रिणस्तानाह—तार एकः । तारापिता सुषेणः प्रभुर्युवराजः सुग्रीवश्चोवाच ॥ ४ ॥

रा० टी०–तत इति । उपागतं युद्धप्रेप्सुं रावणं वानरामात्या वानरस्य अमात्याः तारः तदभिधो वानरः तारापिता सुषेणः प्रभुरंगदश्च वानरः सुग्रीवश्च उवाच तारतारापित्रोरेव सर्वविशेषणं वा ॥ ४ ॥

गो० टी०–तत इति । वानरामात्यः वालिनोमात्यः[1] मन्त्री तार उवाच । तथा तारापिता सुषेणश्चोवाच । प्रभुः युवराजः सुग्रीवश्चोवाच ॥ ४ ॥

५ ] ति० टी०–किमूचुस्तदाह—राक्षसेन्द्रेति । ते तुभ्यं प्रतिबलाः । युद्धं दातुमिति शेषः ॥ ५ ॥

रा० टी०–तदाकारमाह—राक्षसेन्द्रेत्यादिभिः । यस्ते प्रतिबलो भवेत्स वाली गतः समुद्रसमीप इति शेषः अतः तवप्रमुखतः स्थातुमन्यः प्लवंगमः कः शक्तः न कोपीत्यर्थः॥५॥

गो० टी०–राक्षसेन्द्रेति । ते तुभ्यम् । प्रतिबल इति । युद्धं दातुमिति शेषः ॥ ५ ॥ ६ ॥

६ ] ति० टी०–चतुर्भ्यः समुद्रेभ्यश्चतुर्षु समुद्रेषु । संध्यां सम्यग्ध्येयदेवतां ब्रह्मरूपामन्वास्य ध्यात्वेदं मुहूर्तमस्मिन्मुहूर्ते आयाति ॥ ६ ॥

रा० टी०–ननु कदागमिष्यतीत्यत आह—चतुर्भ्य इति । चतुर्भ्यः समुद्रेभ्यः चतुर्षु समुद्रेषु संध्यामन्वास्य कृत्वा इदमेव मुहूर्तं वाली आयाति अतः मुहूर्तकं तिष्ठ ॥ ६ ॥

७ ] ति० टी०–तेन ते युद्धमयोग्यमित्याह—एतानिति ॥ ७ ॥

रा० टी०–वस्तुतस्तु वालिना युद्धयोग्यता तव नास्तीति बोधयन्नाह—एतानित्यादिभिः । वानराधिपस्य वालिनः तेजसा युद्धार्थिनामेते प्राप्ते मति शंखपाण्डुराः इमे येऽस्थिचयास्तानिमान् अस्थिचयान् पश्य ॥ ७ ॥

गो० टी०–एतानिति । युद्धार्थिनामिति वानराधिपतेजसा मृतानां युद्धार्थिनामिमे । एवं त्वमपि भविष्यसीति भावः ॥ ७ ॥

८ ] ति० टी०–यद्वेति यद्यप्यर्थे । यद्यप्यमृतरसः पीतो

---

१ अमात्य इति गो. पा. ।

पश्येदानीं जगच्चित्रमिमं विश्रवसः सुत। इदंमुहूर्तं तिष्ठस्व दुर्लभं ते भविष्यति ॥ ९ ॥
अथवा त्वरसे मर्तुं गच्छ दक्षिणसागरम्। वालिनं द्रक्ष्यसे तत्र भूमिष्ठमिव पावकम् ॥ १० ॥
स तु तारं विनिर्भर्त्स्य रावणो लोकरावणः। पुष्पकं तत्समारुह्य प्रययौ दक्षिणार्णवम् ॥ ११ ॥
तत्र हेमगिरिप्रख्यं तरुणार्कनिभाननम्। रावणो वालिनं दृष्ट्वा संध्योपासनतत्परम् ॥ १२ ॥
पुष्पकादवरुह्याथ रावणोऽञ्जनसंनिभः। ग्रहीतुं वालिनं तूर्णं निःशब्दपदमव्रजत् ॥ १३ ॥
यदृच्छया तदा दृष्टो वालिनापि स रावणः। पापाभिप्रायकं दृष्ट्वा चकार न तु संभ्रमम् ॥१४॥
शशमालक्ष्य सिंहो वा पन्नगं गरुडो यथा। न चिन्तयति तं वाली रावणं पापनिश्चयम् ॥ १५ ॥
जिघृक्षमाणमायान्तं रावणं पापचेतसम्। कक्षावलम्बिनं कृत्वा गमिष्ये त्रीन्महार्णवान् ॥१६॥
द्रक्ष्यन्त्यरिं ममाङ्कस्थं स्रंसदूरुकराम्बरम्। लम्बमानं दशग्रीवं गरुडस्येव पन्नगम् ॥ १७ ॥
इत्येवं मतिमास्थाय वाली मौनमुपास्थितः। जपन्वै नैगमान्मन्त्रांस्तस्थौ पर्वतराडिव ॥ १८ ॥

---

भवति तदा तथापि वालिनमासाद्य तव जीवितं तदन्तं तत्समीपगमनपर्यन्तम् ॥ ८ ॥

रा० टी०–यद्वेति। यद्वा यद्यपि त्वयामृतरसः पीतः तदा तथापि वालिनमासाद्य प्राप्य विद्यमानस्य तव जीवितं तदन्तं तद्वालियुद्धमेव अन्तोवसानं यस्य तदेव ॥ ८ ॥

गो० टी०–यद्वेति। तदा तथापि वालिनमासाद्य तव जीवितं तदन्तं तत्समीपप्राप्तिपर्यन्तमित्यर्थः ॥ ८ ॥

९-१० ] ति० टी०–जगच्चित्रं सर्वाश्चर्यभूतम्। इमं वालिनं पश्य। दुर्लभं ते भविष्यति। जीवितमिति शेषः ९॥१०

रा० टी०–पश्येति। इमं मुहूर्तं तिष्ठस्व इदानीमेव चित्रं जगत्पश्य अनन्तरं दुर्लभं भविष्यति मरिष्यमाणत्वादित्यर्थः ९

रा० टी०–अथवेति। अथवा दक्षिणसागरं गच्छ तत्र पावकमिव भूमिष्ठं वालिनं द्रक्ष्यसे ॥ १० ॥

गो० टी०–पश्येति। जगच्चित्रं जगतः सर्वस्याप्याश्चर्यभूतं व्यापारमिदानीं पश्य। दुर्लभं जीवितमिति शेषः ॥ ९ ॥ १० ॥

११ ] ति० टी०–तारम्। तारादीनित्यर्थः ॥ ११ ॥

रा० टी०–स इति। स रावणः तारं विनिर्भर्त्स्य पुष्पकमारुह्य दक्षिणार्णवं प्रययौ ॥ ११ ॥

गो० टी०–स त्विति। तारं तारादीन्। यद्वा पूर्वं तार एवोक्तवान् तस्य तारापितृत्वं सम्बन्धविशेषात् ॥ ११ ॥ १२ ॥

१२ ] ति० टी०–संध्योपासनतत्परं सम्यग्ध्येयब्रह्मध्यानतत्परम् ॥ १२ ॥

रा० टी०–तत्रेति। रावणः संध्योपासनतत्परं वालिनं दृष्ट्वा अतिष्ठत् इति शेषः ॥ १२ ॥

१३ ] ति० टी०–निःशब्दपदं निःशब्दः पदविक्षेपो यस्यां क्रियायां तथा ॥ १३ ॥

रा० टी०–पुष्पकादिति। रावणः वालिनं ग्रहीतुं निःशब्दपदं शब्दरहितचरणप्रक्षेपविशिष्टं यथा भवति तथा अव्रजत् १३

गो० टी०–पुष्पकादिति। निःशब्दं निःशब्दचरणविन्यासम् ॥ १३ ॥

१४ ] ति० टी०–पापाभिप्रायकं पापाभिप्रायवन्तम् १४

रा० टी०–यदृच्छयेति। रावणः वालिना यदृच्छया दृष्टः पापाभिप्रायकं रावणं दृष्ट्वापि संभ्रमं न चकार वाली इति शेषः ॥ १४ ॥

गो० टी०–यदृच्छयेति। पापाभिप्रायवान् बन्धनाभिप्रायवान् ॥ १४ ॥

१५ ] ति० टी०–सिंहो वा सिंह इव ॥ १५ ॥

रा० टी०–शशमिति। शशमालक्ष्य सिंहो वा इव पन्नगमालक्ष्य गरुड इव वाली पापनिश्चयं रावणं न चिन्तयति अचिन्तयत् अगणयत् ॥ १५ ॥

गो० टी०–शशमिति। सिंहो वा सिंह इव ॥ १५ ॥

१६ ] ति० टी०–जिघृक्षमाणमित्यादिरित्येवमित्यन्तो वालिनो विचारः ॥ १६ ॥

रा० टी०–वालिनो विचारमाह—जिघृक्षमाणमिति। जिघृक्षमाणमायान्तं रावणं कक्षावलम्बिनं कृत्वा त्रीन्महार्णवान् गमिष्ये ॥ १६ ॥

गो० टी०–जिघृक्षमाणमित्यारभ्य इत्येवमित्यन्तं वालिविचारः ॥ १६ ॥

१७ ] ति० टी०–द्रक्ष्यन्ति। देवादय इति शेषः। ममाङ्कस्थम्। कक्षस्थमित्यर्थः स्रंसत्स्रंसमानान्यूरुकराम्बराणि यस्य तम्। गरुडस्येति। अङ्कस्थमित्यनुकर्षः ॥ १७ ॥

रा० टी०–द्रक्ष्यन्तीति। स्रंसन्ति ऊरुकराम्बराणि यस्य गरुडस्याङ्के लम्बमानं पन्नगमिव ममाङ्कस्थं दशग्रीवं द्रक्ष्यन्ति लोका इति शेषः ॥ १७ ॥

गो० टी०–द्रक्ष्यन्तीति। द्रक्ष्यन्ति देवादय इति शेषः। ममाङ्कस्थं कक्षस्थमिति यावत्। गरुडस्येति। अङ्कस्थमित्यनुकर्षः ॥ १७ ॥

१८ ] ति० टी०–नैगमान्वैदिकान्। वाल्यादयो हि स्वयं प्रतिभातसकलवेदाः। जपंस्तदर्थं ध्यायन् ॥ १८ ॥

---

१ भूमिस्थामिति गो. पा.। २ कर्णमिति गो. पा.।

तावन्योन्यं जिघृक्षन्तौ हरिराक्षसपार्थिवौ । प्रयत्नवन्तौ तत्कर्म ईहतुर्बलदर्पितौ ॥ १९ ॥
हस्तग्राहं तु तं मत्वा पादशब्देन रावणम् । पराङ्मुखोऽपि जग्राह वाली सर्पमिवाण्डजः ॥२०॥
ग्रहीतुकामं तं गृह्य रक्षसामीश्वरं हरिः । खमुत्पपात वेगेन कृत्वा कक्षावलम्बिनम् ॥ २१ ॥
तं च पीडयमानं तु वितुदन्तं नखैर्मुहुः । जहार रावणं वाली पवनस्तोयदं यथा ॥ २२ ॥
अथ ते राक्षसामात्या ह्रियमाणे दशानने । मुमोक्षयिषवो वालिं रवमाणा अभिद्रुताः ॥ २३ ॥
अन्वीयमानस्तैर्वाली भ्राजतेऽम्बरमध्यगः । अन्वीयमानो मेघौघैरम्बरस्थ इवांशुमान् ॥ २४ ॥
तेऽशक्नुवन्तः संप्राप्तुं वालिनं राक्षसोत्तमाः । तस्य बाहूरुवेगेन परिश्रान्ता व्यवस्थिताः ॥ २५ ॥
वालिमार्गादपाक्रामन्पर्वतेन्द्रोऽपि गच्छतः । किं पुनर्जीवनप्रेप्सुर्बिभ्रद्वै मांसशोणितम् ॥ २६ ॥
अपक्षिगणसंपातान्वानरेन्द्रो महाजवः । क्रमशः सागरान्सर्वान्संध्याकालमवन्दत ॥ २७ ॥
संपूज्यमानो यातस्तु खचरैः खचरोत्तमः । पश्चिमं सागरं वाली आजगाम सरावणः ॥ २८ ॥

---

रा० टी०—इतीति । मौनमुपास्थितो वाली इत्येवं मतिमास्थाय नैगमान् मंत्रान् जपन्सन् पर्वतराडिव तस्थौ ॥ १८ ॥

गो० टी०—इतीति । कर्णमुपाश्रितः पादशब्दश्रवणार्थं कर्णमुपाश्रितमनाः । नैगमान् वैदिकान् । देवकुमारत्वान्मन्त्रवत्त्वम् ॥ १८ ॥ १९ ॥

१९ ] ति० टी०—तत्कर्म ग्रहणकर्म ॥ १९ ॥

रा० टी०—ताविति । हरिराक्षसपार्थिवौ अन्योन्यं जिघृक्षन्तौ अत एव प्रयत्नवन्तौ सन्तौ तद्ग्रहणकारकं कर्म ईहतुः चक्रतुः ॥ १९ ॥

२०–२२ ] ति० टी०—हस्तग्राहं हस्तैर्ग्रहणाभिप्रायवन्तं पादशब्देन मत्वा सूक्ष्मेण पादशब्देन पश्चादायान्तं ज्ञात्वा पराङ्मुखोऽपि तद्दिगवलोकनरहितोऽपि 'हस्तग्राह्यम्' इति पाठे रावणपादशब्देन तादृशं मत्वेत्यर्थः । अण्डजो गरुडः ॥२०–२२॥

रा० टी०—हस्तेति । पादशब्देन रावणं हस्तग्राहं मत्वा पराङ्मुखोपि वाली अण्डजो गरुडः सर्पमिव जग्राह ॥ २० ॥

रा० टी०—ग्रहीतुमिति । हरिर्वाली ग्रहीतुकामं रक्षसामीश्वरं गृह्य गृहीत्वा कक्षावलम्बिनं कृत्वा च खमुत्पपात॥२१॥

गो० टी०—हस्तेति । हस्तग्राहं हस्तैर्ग्रहणाभिप्रायवन्तम् । पादशब्देन सूक्ष्मपादशब्देन ॥ २०–२१ ॥

रा० टी०—तमिति । नखैर्वितुदन्तमत एव पीड्यमानं रावणं वाली पवनस्तोयदमिव जहार ॥ २२ ॥

गो० टी०—तं चेति । आपीडयमानम् "णिचश्च" इत्यात्मनेपदम् ॥ २२–२४ ॥

२३–२४ ] ति० टी०—मुमोक्षयिषव इति । मोक्षशब्दात्तत्करोतीतिण्यन्तात्सन् । रवमाणाः क्रोशन्तः ॥ २३॥२४॥

रा०टी०—अथेति । राक्षसामात्या दशानने ह्रियमाणे सति मुमोक्षयिषवः रावणं मोचयितुमिच्छवः अत एव रवमाणाश्च सन्तः वालिमभिद्रुता बभूवुरिति शेषः ॥ २३ ॥

रा० टी०—अन्वीयमान इति । मेघौघैरन्वीयमानोऽम्बरस्थोंऽशुमानिव तैराक्षसामात्यैरन्वीयमानोऽम्बरमध्यगो वाली भ्राजते ॥ २४ ॥

२५ ] ति० टी०—अशक्नुवन्त इति पदम् ॥ २५ ॥

रा० टी०—ते इति । वालिनं संप्राप्तुमशक्नुवन्तो राक्षसोत्तमाः तस्य वालिनो बाहूरुवेगेन परिश्रान्तास्सन्तः व्यवस्थिता बभूवुरिति शेषः ॥ २५ ॥

गो०टी०-तेऽशक्नुवन्त इति। अशक्नुवन्त इति पदम्२५

२६ ] ति० टी०—यतः पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् । मांसशोणितं बिभ्रज्जीवनप्रेप्सुः प्राणी तस्य मार्गादपक्रामतीति किं वक्तव्यम् ॥ २६ ॥

रा० टी०—वालीति । गच्छतो गच्छन्तः पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् अपासरन् तर्हि मांसशोणितं बिभ्रत् जीवितं प्रेप्सुः अपक्रामति चेत्किम् पर्वतेन्द्रापीत्यत्र सन्धिरत एव निर्देशात् ॥ २६ ॥

गो० टी०—वालीति । हि यस्मात्पर्वतेन्द्रा अपि वालिमार्गादपाक्रामन् । मांसादिमान् जीवितप्रेप्सुः प्राणी गच्छतस्तस्य मार्गादपाक्रामतीति किं पुनः । पर्वतेन्द्रा हीति च पाठः ॥२६॥

२७ ] ति० टी०—अपक्षिगणसंपातान्यावता कालेन वाली गच्छति तावता कालेन पक्षिगणैरप्यप्राप्यान्सागरान्क्रमशोऽगच्छन्निति शेषः । संध्याकालं प्रातःसंध्याकालध्येयदेवतारूपं ब्रह्मावन्दत ध्यातवान् ॥ २७ ॥

रा० टी०—अपक्षीति । सन्ध्याकालं प्राप्येति शेषः न पक्षिगणानां संपातः गमनं येषु तान् सर्वान् सागरान् क्रमशः वानरेन्द्रोऽवन्दत ॥ २७ ॥

गो० टी०—अपक्षिगणेति । अपक्षिगणसंपातान् पक्षिगणैरप्यशक्यसंपातान् सागरान् क्रमशोऽगच्छन्निति शेषः संध्याकालं प्रातःसंध्याकालदेवतारूपमवन्दत ॥ २७ ॥

२८ ] ति० टी०—सरावणः कक्षस्थरावणसहितः ॥ २८ ॥

रा० टी०—क्रमं बोधयन्नाह—सम्पूज्यमान इति । यातः

---

१ ह्रियमाणं दशाननमिति गो. पा. । २ हीति गो. पा. । ३ सभाज्यमानो भूतैस्तु खेचरैः खेचरोत्तम इति गो. पा. ।

तस्मिन्संध्यामुपासित्वा स्नात्वा जप्त्वा च वानरः । उत्तरं सागरं प्रायाद्वहमानो दशाननम् ॥ २९ ॥
बहुयोजनसाहस्रं वहमानो महाहरिः । वायुवच्च मनोवच्च जगाम सह शत्रुणा ॥ ३० ॥
उत्तरे सागरे संध्यामुपासित्वा दशाननम् । वहमानोऽगमद्वाली पूर्वं वै स महोदधिम् ॥ ३१ ॥
तत्रापि संध्यामन्वास्य वासविः सहरीश्वरः । किष्किन्धामभितो गृह्य रावणं पुनरागमत् ॥ ३२ ॥
चतुर्ष्वपि समुद्रेषु संध्यामन्वास्य वानरः । रावणोद्वहनश्रान्तः किष्किन्धोपवनेऽपतत् ॥ ३३ ॥
रावणं तु मुमोचाथ स्वकक्षात्कपिसत्तमः । कुतस्त्वमिति चोवाच प्रहसन्रावणं मुहुः ॥ ३४ ॥
विस्मयं तु महद्गत्वा श्रमलोलनिरीक्षणः । राक्षसेन्द्रो हरीन्द्रं तमिदं वचनमब्रवीत् ॥ ३५ ॥
वानरेन्द्र महेन्द्राभ राक्षसेन्द्रोऽस्मि रावणः । युद्धेप्सुरिह संप्राप्तः स चाद्यासादितस्त्वया ॥ ३६ ॥
अहो बलमहो वीर्यमहो गाम्भीर्यमेव च । येनाहं पशुवद्गृह्य भ्रामितश्चतुरोऽर्णवान्[1] ॥ ३७ ॥
एवमश्रान्तवद्वीर शीघ्रमेव च वानर । मां चैवोद्वहमानस्तु कोऽन्यो वीरो[2] भविष्यति ॥ ३८ ॥
त्रयाणामेव भूतानां गतिरेषा प्लवंगम । मनोनिलसुपर्णानां तव चात्र न संशयः ॥ ३९ ॥

---

प्रचलितः खचरैः देवादिभिः सम्पूज्यमानः खचरोत्तमः सरावणो वाली पश्चिमं सागरमाजगाम ॥ २८ ॥

गो० टी०—सभाज्यमान इति । सभाज्यमानः पूज्यमानः पश्चिममित्यादि दक्षिणे संध्याङ्गशौचम् । पश्चिमे मन्त्रपूर्वकसंध्याङ्गस्नानम् । उत्तरे प्रोक्षणादिकम् । पूर्वेऽर्घ्यप्रदानादिकमिति अन्यथा संध्याचतुष्टयाभावात् तदङ्गस्यापि तत्त्वेन व्यपदेशात् ॥ २८–३१ ॥

२९-३१] ति०टी०—तस्मिन्संध्यामुपासित्वा स्नात्वेत्यादि । दक्षिणसमुद्रतटेऽपि। 'जपन्वै नैगमान्मन्त्रान्' इत्युक्ते समुद्रचतुष्टयेऽपि प्रातःसंध्याकालस्योदयात्पूर्वं परतश्च मिलित्वा त्रिमुहूर्तात्मकस्य मध्ये चतुःसमुद्रतटावच्छेदेन किंचित्किंचित्कालं ध्येयब्रह्मणो ध्याननियमस्तत्प्रतिपादकमन्त्रस्मरणनियमश्च वालिन इति गम्यते । ईदृशं व्रतं च महेन्द्रो रावणस्य समूलनाशाय पुत्रद्वारान्वतिष्ठतीति बोध्यम् । यत्तु तस्य दक्षिणसमुद्रे शौचम्, पश्चिमे स्नानम्, उत्तरे आपोहिष्ठादिमन्त्रैर्मार्जनम्, पूर्वसमुद्रेऽर्घ्यादीत्येवं संध्यावन्दनशेषानुष्ठानत्वाच्चतुर्षु समुद्रेषु संध्यामन्वास्येत्युक्तिरिति कतकतीर्थादयः, तन्न 'जपन्वै नैगमान्मन्त्रान्' इति दक्षिणसमुद्रस्नानकालोक्त्या विरुध्यते । मदुक्तरीत्या सामञ्जस्याच्च । संध्याकाले गायत्र्यर्थं ब्रह्मणो ध्यानमेव प्रधानं स एव संध्यापदार्थ इति स्पष्टं श्रुतिस्मृतिविदाम् ॥ २९—३१ ॥

रा० टी०—तस्मिन्निति । दशाननं वहमानो वानरो वाली तस्मिन्पश्चिमसागरे संध्यामुपासित्वा उपास्य उत्तरं प्रायात् २९

रा० टी०—बह्विति । बहुयोजनसाहस्रं वहमानो महाहरिर्वाली वायुवत् मनोवच्च शत्रुणा सह जगाम ॥ ३० ॥

रा० टी०—उत्तर इति । वाली पूर्वं महोदधिमगमत् ३१

३२-३३ ] ति० टी०—वासवापत्यं वासविः ॥३२॥३३॥

रा० टी०—तत्रेति । वासविः वासवापत्यं वाली रावणं गृह्य गृहीत्वा किष्किंधामभितः पुनरागमत् ॥ ३२ ॥

रा० टी०—चतुर्ष्विति । रावणोद्वहनः अत एव श्रान्तो वानरो वाली किष्किंधोपवने अपतत् प्राप्नोत् ॥ ३३ ॥

गो० टी०—तत्रेति । वासवस्यापत्यं वासविः ॥३२॥३३॥

३४-३५ ] ति० टी०—प्रहसन्निति । मां जिघृक्षुर्दुरात्मा स्वयमेव ग्रहणं प्राप्त इति तोषात्प्रहासः ॥ ३४–३५ ॥

रा० टी०—रावणमिति । कपिसत्तमो वाली कक्षाद्रावणं मुमोच कुतस्त्वमागत इति प्रहसन्सन्नुवाच च ॥ ३४ ॥

रा० टी०—विस्मयमिति । श्रमेण लोलानि चञ्चलानि निरीक्षणानि नयनानि यस्य स राक्षसेन्द्रः हरीन्द्रमब्रवीत् ॥३५॥

गो० टी०—रावणमिति । प्रहसन्निति । मां जिघृक्षुः स्वयमेव दुरात्मा निगृहीत इति प्रहसन् ॥ ३४ ॥ ३५ ॥

३६–३७ ] ति० टी०—आसादितः कक्षनिक्षेपं प्रापितः ॥ ३६–३७ ॥

रा० टी०—तदाकारमाह—वानरेन्द्रेति । युद्धेप्सुरिह सम्प्राप्तः रावणो राक्षसेन्द्रोऽहमस्मि स चाहं त्वया आसादितः पीडितः ॥ ३६ ॥

रा० टी०—अहो इति । येन त्वया पशुवद्गृह्य गृहीत्वा चतुरोर्णवानहं भ्रामितः तस्य तव बलादि अहो आश्चर्यम् ॥३७॥

गो० टी०—वानरेन्द्रेति । अश्रान्तवत् त्वयासादित इति कक्षनिक्षेपं प्रापित इत्यर्थः ॥ ३६ ॥ ३७ ॥

३८–३९ ] ति० टी०—अश्रान्तवदश्रान्तः सन् । मां पर्वतसमानभारम् ॥ ३८–३९ ॥

रा० टी०—एवमिति । अश्रान्तवदेवं शीघ्रं मामुद्वहमानः अन्यः को भविष्यति न कोपीत्यर्थः ॥ ३८ ॥

रा० टी०—त्रयाणामिति । एषा एतादृशी गतिः मनआदीनां त्रयाणां तव एव ॥ ३९ ॥

---

१ महार्णवानिति गो. पा. । २ वीरः क्रमिष्यतीति गो. पा. ।

सोऽहं दृष्टबलस्तुभ्यमिच्छामि हरिपुंगव । त्वया सह चिरं सख्यं सुस्निग्धं पावकाग्रतः ॥ ४० ॥
दाराः पुत्राः पुरं राष्ट्रं भोगाच्छादनभोजनम् । सर्वमेवाविभक्तं नौ भविष्यति हरीश्वर ॥ ४१ ॥
ततः प्रज्वालयित्वाग्निं तावुभौ हरीराक्षसौ । भ्रातृत्वमुपसंपन्नौ परिष्वज्य परस्परम् ॥ ४२ ॥
अन्योन्यं लम्बितकरौ ततस्तौ हरिराक्षसौ । किष्किन्धां विशतुर्हृष्टौ सिंहौ गिरिगुहामिव ॥४३॥
स तत्र मासमुषितः सुग्रीव इव रावणः । अमात्यैरागतैर्नीतस्त्रैलोक्योत्सादनार्थिभिः ॥ ४४ ॥
एवमेतत्पुरावृत्तं वालिना रावणः प्रभो । धर्षितश्च कृतश्चापि भ्राता पावकसंनिधौ ॥ ४५ ॥
बलमप्रतिमं राम वालिनोऽभवदुत्तमम् । सोऽपि त्वया विनिर्दग्धः शलभो वह्निना यथा॥४६॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

## पञ्चत्रिंशः सर्गः ।

रामेण पृष्टः कुम्भयोनिर्हनुमज्जन्मपराक्रमादिचरितं सप्रकारं तं शंसति ।

अपृच्छत तदा रामो दक्षिणाशाश्रयं मुनिम् । प्राञ्जलिर्विनयोपेत इदमाह वचोऽर्थवत् ॥ १ ॥
अतुलं बलमेतद्वै वालिनो रावणस्य च । न त्वेताभ्यां हनुमता समं त्विति मतिर्मम ॥ २ ॥
शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम् । विक्रमश्च प्रभावश्च हनूमति कृतालयाः ॥ ३ ॥

गो० टी०—एवमिति । अभ्रान्तः सन् । मां चैव महाद्रिसमानभारमित्यर्थः ॥ ३८ ॥ ३९ ॥

४० ] ति० टी०—तुभ्यं तव ॥ ४० ॥

रा० टी०—स इति । तुभ्यं तव दृष्टबलं येन सोहं त्वया सह पावकाग्रतः सुस्निग्धं चिरं सख्यमिच्छामि ॥ ४० ॥

गो० टी०—सोहमिति । तुभ्यं तवेत्यर्थः ॥ ४०–४३ ॥

४१–४३ ] ति० टी०—भावाबयोः ॥ ४१–४३ ॥

रा० टी०—सख्याकारमाह—दारा इति । नौ आवयोः इतःप्रभृति सर्वमविभक्तं भविष्यति ॥ ४१ ॥

रा० टी०—तत इति । हरिराक्षसौ अग्निं प्रज्वालयित्वा प्रज्वाल्य परस्परं परिष्वज्य अन्योन्यं लम्बितकरौ सन्तौ भ्रातृत्वमुपसम्पन्नौ प्राप्तौ बभूवतुरिति शेषः ततोनन्तरं हरिराक्षसौ सिंहौ गिरिगुहामिव किष्किन्धां विशतुः विविशतुः॥४२॥

४४ ] ति० टी०—आगतैः । सहेति शेषः ॥ ४४ ॥

रा० टी०—स इति । स रावणः सुग्रीव इव तत्र किष्किधायां मासमुषितः अनन्तरममात्यैर्नीतश्च ॥ ४३ ॥

गो० टी०—स इति । सुग्रीव इवेति भ्रातृभावेनेत्यर्थः । आगतैरिति सहेति शेषः ॥ ४४ ॥

४५–४६ ] ति० टी०—धर्षितो वालिना रावणः पश्चात्पावकनिकटे भ्राता कृतः सोदरभावतया स्नेहः कृतः ॥ ४५–४६॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

रा० टी०—उपसंहरन्नाह—एवमिति । वालिना रावणः धर्षितः भ्राता च कृतः एवमेतत्पुरावृत्तं कथितमिति शेषः॥४४॥

रा० टी०—बलमिति । यस्य वालिनः अप्रतिमं बलमभवत् सोपि वाली वह्निना शलभ इव त्वया निर्दग्धः ॥ ४५॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुस्त्रिंशः सर्गः ॥ ३४ ॥

गो० टी०—एवमिति । भ्राता कृतः सोदरभावतया स्नेहीकृतः ॥ ४५ ॥ ४६ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुस्त्रिंशः सर्गः ॥ ३४ ॥

१ ] ति० टी०—अथ रावणवाल्यपेक्षयापि हनुमतो बलवत्त्वं मन्यमानेन रामेण महाबलो हनुमान्सुग्रीवार्थे वालिनं किं न हतवानिति प्रश्ने उत्तरमाह—अपृच्छतेति । दक्षिणाशा दक्षिणदिक् । अपृच्छतेत्यस्य विवरणमिदमाहेति ॥ १ ॥

रा० टी०—अगस्त्यं प्रति रामस्य प्रश्नान्तरमाह—अपृच्छतेत्यादिभिः । दक्षिणाशाश्रयं दक्षिणदिग्निवासिनं मुनिमगस्त्यं रामोऽपृच्छत् प्रष्टुमैच्छत अत एव इदं वच आह ॥१॥

गो० टी०—अपृच्छतेत्यादि । अपृच्छतेत्यस्य विवरणम् इदं वचनमिति ॥ १ ॥

२] ति० टी०—अतुलमनुपमम् । एताभ्यामेतयोः । षष्ठयर्थे चतुर्थ्यार्षी । एतयोर्बलं हनुमता तद्बलेन न सममित्यर्थः॥ २ ॥

रा० टी०—तदाकारमाह—अतुलमित्यादिभिः । वालिनो रावणस्य च बलं यद्यप्यतुलं तथापि एताभ्यामेतयोर्वालिरावणयोः हनुमता समं साम्यं नैव इति मम मतिर्निश्चयः ॥ २ ॥

गो० टी०—अतुलमिति । एताभ्यामिति एतयोरित्यर्थः । षष्ठयर्थे बहुलं छन्दसीति वक्तव्यम् । षष्ठयर्थे चतुर्थी ॥ २ ॥

३ ] ति० टी०—न केवलं बलमेवाधिकं किंत्वन्यदपी-

दृष्ट्वैव सागरं वीक्ष्य सीदन्तीं कपिवाहिनीम् । समाश्वास्य महाबाहुर्योजनानां शतं प्लुतः ॥ ४ ॥
धर्षयित्वा पुरीं लङ्कां रावणान्तःपुरं तदा । दृष्टा संभाषिता चापि सीता ह्याश्वासिता तथा ॥ ५ ॥
सेनाग्रगा मन्त्रिसुताः किंकरा रावणात्मजः । एते हनुमता तत्र एकेन विनिपातिताः ॥ ६ ॥
भूयो बन्धाद्विमुक्तेन भाषयित्वा दशाननम् । लङ्का भस्मीकृता येन पावकेनेव मेदिनी ॥ ७ ॥
न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च । कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥ ८ ॥
एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः । प्राप्ता मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥ ९ ॥
हनूमान्यदि मे न स्याद्वानराधिपतेः सखा । प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान्भवेत् ॥ १० ॥
किमर्थं वाली चैतेन सुग्रीवप्रियकाम्यया । तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥ ११ ॥
नहि वेदितवान्मन्ये हनूमानात्मनो बलम् । यद्दृष्टवाञ्जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ १२ ॥
एतन्मे भगवन्सर्वं हनूमति महामुने । विस्तरेण यथातत्त्वं कथयामरपूजित ॥ १३ ॥
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्ततः । हनूमतः समक्षं तमिदं वचनमब्रवीत् ॥ १४ ॥

---

त्याह—शौर्यमिति । दाक्ष्यं क्षिप्रकारित्वं बलं शारीरम् । धैर्यं केनाप्यप्रकम्प्यता । प्राज्ञता शीघ्रं कार्याकार्यनिर्णेतृता नयसाधनं राजनीतिकृत्यसंपादनम् ॥ ३ ॥

रा० टी०—तत्र हेतुमाह—शौर्यमित्यादिभिः । हनूमति शौर्यादयः कृतालयाः सन्तीति शेषः एवं सर्वे गुणाः तयोर्न सन्ति इति तात्पर्यम् ॥ ३ ॥

गो० टी०—शौर्यमिति । नयसाधनं नीतिकृत्यसंपादनम् । नेति । कालस्य यमस्य ॥ ३—८ ॥

४–६ ] ति० टी०—तानेव गुणानाह—दृष्ट्वैवेति । सागरं वीक्ष्य सीदन्तीं कपिवाहिनीं दृष्ट्वा तां समाश्वास्य योजनशतं प्लुतः ॥ ४–६ ॥

रा० टी०—अनुभूतान् हनूमतो गुणान्वर्णयति—दृष्ट्वेत्यादिभिः । सागरं वीक्ष्य सीदन्तीं कपिवाहिनीं दृष्ट्वा महाबाहुर्हनूमान्योजनानां शतं प्लुतः ॥ ४ ॥

रा० टी०—धर्षयित्वेति । सीता आश्वासिता च ॥ ५ ॥

रा० टी०—सेनेति । एते मन्त्रिसुतादयः एकेन हनुमता विनिपातिताः ॥ ६ ॥

७ ] ति० टी०—बन्धाद्ब्रह्मास्त्रबन्धात् ॥ ७ ॥

८ ] ति० टी०—यानि कर्माणि हनूमतो दृष्टानि तानि कालस्य यमस्येन्द्रादेश्च न श्रूयन्ते ॥ ८ ॥

रा० टी०—भूय इति । भूयोबन्धात् अधिकरज्जुबन्धनं प्राप्य विमुक्तेन ब्रह्मास्त्रबन्धनरहितेन येन हनुमता दशाननं भाषयित्वा पावकेन मेदिनीव लंका भस्मीकृता तस्य हनुमतः यानि कर्माणि श्रूयन्ते तानि कर्माणि कालस्य यमस्य न शक्रस्य च न वित्तपस्य विदा ज्ञानेनैव तपः आलोचनं दर्शनं यस्य तस्य विष्णोश्च न उपलक्षणमेतत् ब्रह्मशिवयोरपि अत एव न पतत्प्रकर्षदोषः श्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

९ ] ति० टी०—लङ्का प्राप्ता । विभीषणाय देयत्वेन प्रतिज्ञातेत्यर्थः । लक्ष्मणप्राप्तिरौषधपर्वतानयनेन ॥ ९ ॥

रा० टी०—एतस्येति । एतस्य हनूमतो बाहुवीर्येणैव मया लंकादयः प्राप्ताः ॥ ९ ॥

गो० टी०—एतस्येति । लङ्का प्राप्ता विभीषणाय देयत्वेन प्राप्तेत्यर्थः । लक्ष्मणः प्राप्त इति । ओषध्यानयनेनेति शेषः ॥ ९ ॥

१० ] ति० टी०—न स्यात् । सहाय इति शेषः ॥ १० ॥

रा० टी०—हनूमानिति । मे हनूमान्यदि न स्यात्तर्हि जानक्याः प्रवृत्तिमपि वेत्तुं कः शक्तिमान् भवेत् ॥ १० ॥

गो० टी०—हनुमानिति । हनुमान्यदि नो न स्यात्सहायत्वेनेति शेषः ॥ १० ॥

११ ] ति० टी०—वीरुध इत्यकारान्तो वृक्षवाची । 'किमर्थं वालिघातेन' इति पाठे सुग्रीवप्रियकाम्यया वालिघाते किमर्थं न प्रवृत्त इत्यर्थः । पदच्छेदशेषपूरणाभ्यां गूढत्वात्तस्यैव विवरणम्—तदा वैर इत्यादि ॥ ११ ॥

रा० टी०—ननु किमेतत्तद्बलवर्णनेनेत्यत आह—किमर्थमिति । एतेन हनूमता वैरे समुत्पन्ने सति सुग्रीवप्रियकाम्यया वाली वीरुध इव किमर्थं न दग्धः ॥ ११ ॥

गो० टी०—किमर्थमिति । वीरुध इत्यकारान्तो वृक्षवाची ॥ ११ ॥

१२ ] ति० टी०—वाल्यहनने हेतुं स्वयमेव राम ऊहति—नहीति । जीवितेष्टं जीवितादपि प्रियम् ॥ १२ ॥

रा० टी०—ननु भवतैव तर्केण निश्चीयतामित्यत आह—नहीति यद्यस्माज्जीवितेष्टं जीवनमिव प्रियं क्लिश्यन्तं वानराधिपं दृष्टवानेव वालिवधं न कृतवानित्यर्थः तस्माद्धनूमान् आत्मनो बलं नैव विदितवानित्यहं मन्ये ॥ १२ ॥

गो० टी०—वाल्यवधहेतुं स्वयं रामः ऊहति—न हीत्यादि ॥ १२ ॥

१३–१४ ] ति० टी०—हनूमति तद्विषये पृष्टमेतत्सर्वं कथयेत्यन्वयः ॥ १३–१४ ॥

---

१ दृष्ट्वेति गो. पा. । २ नः इति गो. पा. । ३ अनेनैवेति गो. पा. । ४ मत्ताविति गो. पा. । ५ तदेति गो. पा. ।

सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमति । न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ १५ ॥
अमोघशापैः शापस्तु दत्तोऽस्य मुनिभिः पुरा । न वेत्ता हि बलं सर्वं बली सन्नरिमर्दनः ॥ १६ ॥
बाल्येऽप्येतेन यत्कर्म कृतं राम महाबल । तन्न वर्णयितुं शक्यमिति बाल्यतयास्य ते ॥ १७ ॥
यदि वास्ति त्वभिप्रायः संश्रोतुं तव राघव । समाधाय मतिं राम निशामय वदाम्यहम् ॥ १८ ॥
सूर्यदत्तवरस्वर्णः सुमेरुर्नाम पर्वतः । यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९ ॥
तस्य भार्या बभूवेष्टा ह्यञ्जनेति परिश्रुता । जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २० ॥
शालिशूकनिभाभासं प्रासूतेमं[६] तदाञ्जना । फलान्याहर्तुकामा वै निष्क्रान्ता गहने वरा ॥ २१ ॥
एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः । रुरोद शिशुरत्यर्थं शिशुः शरवणे यथा ॥ २२ ॥
नदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् । ददर्श फललोभाच्च ह्युत्पपात रविं प्रति ॥ २३ ॥
बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् । ग्रहीतुकामो बालार्कं प्लवतेऽम्बरमध्यगः ॥ २४ ॥

रा० टी०–एतदिति । हनूमति हनूमद्विषये एतन्मया पृष्टं सर्वं यथातत्त्वं विस्तरेण कथय ॥ १३ ॥

रा० टी०–राघवस्येति । ऋषिरगस्त्यः हनूमतः समक्षं इदमब्रवीत् ॥ १४ ॥

गो० टी०–एतदिति । हनूमत्येतदिति हनुमद्विषये पृष्टमित्यर्थः ॥ १३ ॥ १४ ॥

१५ ] ति० टी०–यद्ब्रवीषीति । आत्मनोबलं न जानातीत्येतत्र बल इति च ॥ १५ ॥

रा० टी०–तदाकारमाह—सत्यमित्यादिभिः । यस्माद्बलादौ परो हनूमद्भिन्नः तुल्यः तत्सदृशो न विद्यते तस्माद्धनूमति तद्विषये सत्यं ब्रवीषि ॥ १५ ॥

गो० टी०–सत्यमिति । यद्ब्रवीषि हे रघुश्रेष्ठ तदेतत्सत्यम् । स आत्मनो बलं न हि वेदेत्यर्थः ॥ १५ ॥

१६ ] ति० टी०–तदेवाह—अमोघेति ॥ १६ ॥

रा० टी०–ननु तादृशबलवत्त्वे कुतोनेन वाली न पराभूत इत्यत आह—अमोघेति । पुरा पूर्वमस्यास्मै हनूमते बली सन्नपि भवान् सर्वं बलमात्मनो वीर्यं न वेत्ता इति शापः अमोघशापैर्मुनिभिर्दत्तः ॥ १६ ॥

गो० टी०–तदेव दर्शयति–अमोघेत्यादि ॥ १६ ॥

१७ ] ति० टी०–बाल्यतया बाल्यभावेन । अजानतेवेत्यर्थः । अनेनास्यते ॥ १७ ॥

रा० टी०–बाल्य इति । बाल्येपि बाल्यतया एतेन हनूमता यत्कर्म कृतं तदस्य कर्म ते तुभ्यं वर्णयितुं न शक्यम् ॥ १७ ॥

गो० टी०–बाल्य इति । बालतया आस्यत इति बालतया बालभावेन अजानतैवेत्यर्थः ॥ १७ ॥

१८ ] ति० टी०–निशामय शृणु ॥ १८ ॥

रा० टी०–यदिति । संश्रोतुं तवाभिप्रायो यद्यस्ति तदा मतिं समाधाय स्थिरीकृत्य अहं वदामि त्वं निशामय शृणु ॥ १८ ॥

गो० टी०–यदीति । निशामय शृणु ॥ १८ ॥

१९ ] ति० टी०–सूर्यदत्तवरेण स्वर्णः स्वर्णरूपः सुमेरुः । सावर्णमेरुः ॥ १९ ॥

रा० टी०–वचनाकारमाह–सूर्येति । केशरी नामास्य हनुमतः पिता यत्र राज्यं प्रशास्ति सः सूर्यदत्तवरः अत एवं स्वर्णः सुवर्णमयः मेरुर्नाम पर्वतोस्तीति शेषः ॥ १९ ॥

गो० टी०–सूर्येति । सूर्यदत्तवरस्वर्णः सूर्यदत्तवरेण स्वर्णरूपः । सुमेरुः सुवर्णमेरुः ॥ १९ ॥

२० ] ति० टी०–परिश्रुता प्रसिद्धा ॥ २० ॥

रा० टी०–तस्येति । अञ्जनेति परिश्रुता तस्य केशरिणो भार्या बभूव तस्यामञ्जनायां वायुः आत्मजं जनयामास ॥ २० ॥

गो० टी०–तस्येति । परिश्रुता प्रसिद्धा ॥ २० ॥

२१ ] ति० टी०–शालिशूकनिभाभासं शाल्यग्रसमानवर्णम् । प्रासूत प्रसूतवती ॥ २१ ॥

रा० टी०–शालीति । शालिनः शूकस्य अग्रभागस्य निभा आभा दीप्तिर्यस्य तमिमं हनूमन्तमञ्जना यदा प्रासूत तदा फलान्याहर्तुकामा सती गहने वने निष्क्रान्ता ॥ २१ ॥

गो० टी०–शालिशूकेति । शालिशूकसमाभासं शाल्यग्रवत्पिङ्गलाभासम् । काञ्चनाद्रिकमनीयविग्रहमित्युक्तेः । प्रासूत प्रसूतवती ॥ २१ ॥

२२–२४ ] ति० टी०–शरवणे शिशुः । कुमारस्वामीत्यर्थः ॥ २२–२४ ॥

रा० टी०–एष इति । मातुर्वियोगात् क्षुधया च भृशार्दितः शिशुरेष हनूमान् शरवणे शिशुः कुमारस्वामीव रुरोद ॥ २२ ॥

रा० टी०–तदेति । तदा उद्यन्तं विवस्वन्तं ददर्श फललोभादिदं फलं प्राप्नुयामीत्याकाङ्क्षतः रविं प्रति उत्पपात च ॥ २३ ॥

रा० टी०–बालेति । मूर्तिमान् बालार्क इव बालो बालार्कं ग्रहीतुकामो बालार्काभिमुखो हनूमान् अम्बरमध्यगस्सन्बालार्कं प्लवते ॥ २४ ॥

गो० टी०–एष इति । शरवणे शिशुः स्कन्दः ॥ २२–२४ ॥

१ हनूमत इति गो. पा. । २ शप्त इति गो. पा. । ३ येनेति गो. पा. । ४ मर्दन इति गो. मर्दनमिति रा. पा. । ५ एषेति गो. पा. । ६ अमुमिति गो. पा. ।

एतस्मिन्प्लवमाने तु शिशुभावे हनूमति । देवदानवयक्षाणां विस्मयः सुमहानभूत् ॥ २५ ॥
नाप्येवं वेगवान्वायुर्गरुडो न मनस्तथा । यथायं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ॥ २६ ॥
यदि तावच्छिशोरस्य ईदृशो गतिविक्रमः । यौवनं बलमासाद्य कथं वेगो भविष्यति ॥ २७ ॥
तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः । सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८ ॥
बहुयोजनसाहस्रं क्रामत्येव गतोम्बरम् । पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः॥ २९ ॥
शिशुरेष त्वदोषज्ञ इति मत्वा दिवाकरः । कार्यं चास्मिन्समायत्तमित्येवं न ददाह सः ॥ ३० ॥
यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः । तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् ॥ ३१ ॥
अनेन च परामृष्टो राहुः सूर्यरथोपरि । अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥ ३२ ॥
इन्द्रस्य भवनं गत्वा सरोषः सिंहिकासुतः । अब्रवीद्भ्रुकुटिं कृत्वा देवं देवगणैर्वृतम् ॥ ३३ ॥
बुभुक्षापनयं दत्त्वा चन्द्रार्कौ मम वासव । किमिदं तत्त्वया दत्तमन्यस्य बलवृत्रहन् ॥ ३४ ॥
अद्याहं पर्वकाले तु जिघृक्षुः सूर्यमागतः । अथान्यो राहुरासाद्य जग्राह सहसा रविम् ॥ ३५ ॥
स राहोर्वचनं श्रुत्वा वासवः संभ्रमान्वितः । उत्पपातासनं हित्वा उद्वहन्काञ्चनीं स्रजम् ॥ ३६ ॥
ततः कैलासकूटाभं चतुर्दन्तं मदस्रवम् । शृङ्गारधारिणं प्रांशुं स्वर्णघण्टाट्टहासिनम् ॥ ३७ ॥
इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरःसरम् । प्रायाद्यत्राभवत्सूर्यः सहानेन हनूमता ॥ ३८ ॥

२५-२९ ] ति० टी०—शिशुभावे बाल्यावस्थायां हनूमति प्लवमाने सति ॥ २५-२९ ॥

रा० टी०—एतस्मिन्निति । शिशूनां भावो धर्मोऽस्मिन् तस्मिन्नेतस्मिन् हनूमति प्लवमाने सति देवादीनां सुमहान् विस्मयोऽभूत् ॥ २५ ॥

रा० टी०—नेति । अयं वायुपुत्रः यथाम्बरं क्रमते एवं तथा वायुप्रभृतिर्न ॥ २६ ॥

रा० टी०—यदिति । शिशोरस्य यदीदृशो बलविक्रमः तर्हि यौवनं बलमासाद्य अस्य वेगः कथं कीदृशो भविष्यति इति विचार्येति शेषः सूर्यदाहभयाद्रक्षन् तुषारचयशीतलो वायुः प्लवन्तमात्मनः पुत्रमनुप्लवते श्लोकद्वयमेकान्वयि ॥२७॥२८॥

रा० टी०—बह्विति । बहुयोजनसाहस्रमम्बरं क्रामन्नेव हनूमान्पितुर्बलात् बाल्यात् बालभावाच्च हेतोर्भास्करस्याभ्यासं समीपमागतः ॥ २९ ॥

३०-३१ ] ति० टी०—दोषज्ञो विद्वान्स न भवतीत्यदोषज्ञः तत्र हेतुः—शिशुरिति ॥ ३०-३१ ॥

रा० टी०—शिशुरिति । एषः शिशुः अत एव अदोषज्ञः दाहादिदोषस्य अज्ञाता अस्मिन्कार्यं रामकृत्यं च समायत्तमधीनतया स्थितमित्येवं विचार्य दिवाकरो न ददाह ॥ ३० ॥

रा० टी०—यमिति । यमेव दिवसं यस्मिन्नेव दिने एष हनूमान् भास्करं ग्रहीतुं प्लुतः तमेव दिवसं राहुर्दिवाकरं जिघृक्षति ॥ ३१ ॥

गो० टी०—शिशुरिति । दोषज्ञः विद्वान् स न भवतीत्यदोषज्ञः दोषज्ञौ वैद्यविद्वांसावित्यमरः ॥ ३०-३१ ॥

३२-३३ ] ति० टी०—सूर्यरथोपरि तदुपरितनप्रदेशे । अनेन हनुमता परामृष्टः स्पृष्टो राहुस्ततो मण्डलात्त्रस्तः सन्नपक्रान्तः ॥ ३२ ॥ ३३ ॥

रा० टी०—अनेनेति । अनेन हनुमता सूर्यरथोपरि तत्समीपे परामृष्टो राहुः त्रस्तस्संस्ततः तस्माद्देशादपक्रान्तः ॥३२॥

रा० टी०—इन्द्रस्येति । सिंहिकासुतो राहुस्सरोषस्सन् भ्रुकुटीं भ्रुवः कौटिल्यं कृत्वा देवमिन्द्रमब्रवीत् ॥ ३३ ॥

गो० टी०—अनेनेति । स राहुः परामृष्टः ॥ ३२-३९ ॥

३४-३६ ] ति० टी०—हे वासव ! चन्द्रार्कौ मम यथाकालं बुभुक्षापनयं बुभुक्षापनीयतेऽनेनेति व्युत्पत्त्यार्थं दत्त्वा तदन्नम् ॥ ३४-३६ ॥

रा० टी०—तदाकारमाह—बुभुक्षेति द्वाभ्याम् । हे वासव ! मम बुभुक्षाया अपनयं दूरीकर्तारं चन्द्रार्कौ दत्वा तत् भक्ष्यं त्वया अन्यस्य अन्यस्मै दत्तमिदं किमोचितमित्यर्थः ॥ ३४ ॥

रा० टी०—ननु अन्यस्मै दत्तमिति त्वया कथं ज्ञायते इत्यत आह—अद्येति । पर्वकाले सूर्यं जिघृक्षुरहमागतः अथ अनन्तरमन्यो राहुरासाद्य रविं जग्राह ॥ ३५ ॥

रा० टी०—स इति । वासवः राहोर्वचनं श्रुत्वा आसनं हित्वोत्पपात ॥ ३६ ॥

३७ ] ति० टी०—शृङ्गारधारिणं नानाशृङ्गारधारिणम् । स्वर्णघण्टाशब्दरूपाट्टहासवन्तम् ॥ ३७ ॥

३८ ] ति० टी०—करीन्द्रमैरावतम् । अनेन हनुमता सह यत्र देशे सूर्यस्तं प्रायात् ॥ ३८ ॥

रा० टी०—तत इति । मदस्रवं प्रांशुमत्युन्नतं स्वर्णघण्टा

१ वेति गो. पा. । २ क्रमत्येव इति गो. पा. । ३ स इन्द्रभवनमिति गो. पा. ।

अथातिरभसेनागाद्राहुरुत्सृज्य वासवम् । अनेन च स वै दृष्टः प्रधावञ्शैलकूटवत् ॥ ३९ ॥
ततः सूर्यं समुत्सृज्य राहुं फलमवेक्ष्य च । उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४० ॥
उत्सृज्यार्कमिमं राम प्रधावन्तं प्लवंगमम् । अवेक्ष्यैवं परावृत्तो मुखशेषः पराङ्मुखः ॥ ४१ ॥
इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः । इन्द्र इन्द्रेति संत्रासान्मुहुर्मुहुरभाषत ॥ ४२ ॥
राहोर्विक्रोशमानस्य प्रागेवालक्षितं स्वरम् । श्रुत्वेन्द्रोवाच मा भैषीरहमेनं निषूदये ॥ ४३ ॥
ऐरावतं ततो दृष्ट्वा महत्तदिदमित्यपि । फलं तं हस्तिराजानमभिदुद्राव मारुतिः ॥ ४४ ॥
तथास्य धावतो रूपमैरावतजिघृक्षया । मुहूर्तमभवद्घोरमिन्द्राग्न्युपरि भास्वरम् ॥ ४५ ॥
एवमाधावमानं तु नातिक्रुद्धः शचीपतिः । हस्तान्तादतिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६ ॥
ततो गिरौ पपातैष इन्द्रवज्राभिताडितः । पतमानस्य चैतस्य वामा हनुरभज्यत ॥ ४७ ॥
तस्मिंस्तु पतिते चापि वज्रताडनविह्वले । चुक्रोधेन्द्राय पवनः प्रजानामहिताय सः ॥ ४८ ॥
प्रचारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः । गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥
विण्मूत्राशयमावृत्य प्रजानां परमार्तिकृत् । रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥
वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः । संधिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥

---

तत्स्वन एव अट्टहासः तद्धन्तं करीन्द्रमिन्द्र आरुह्य राहुं पुरस्सरं कृत्वा सूर्यो यत्र हनूमता सहाभवत् तत्र प्रायात् श्लोकद्वयमेकान्वयि ॥ ३७ ॥ ३८ ॥

३९–४०] ति० टी०—अतिरभसेनातिवेगेनागात् । वासवादपि पूर्वमिति शेषः । अनेन हनूमता । स राहुः ॥३९–४०॥

रा० टी०—अथेति । राहुः वासवमुत्सृज्य अतिरभसेनागात् इन्द्रप्राप्तेः पूर्वमेव हनूमत्समीपं प्रापेत्यर्थः अनेन हनुमता तु शैलकूटवत्प्रधावन् स राहुः दृष्टः ॥ ३९ ॥

रा० टी०—तत इति । राहुं फलमवेक्ष्य सूर्यं समुत्सृज्य च सिंहिकासुतं ग्रहीतुं व्योम पुनरुत्पपात हनूमानिति शेषः॥४०॥

गो० टी०—तत इति । महाशैलकूटवत् बृहत्तरफलमवेक्ष्येत्यर्थः ॥ ४० ॥

४१–४२ ] ति० टी०—एवमवेक्ष्य महाशैलकूटवद्बृहत्तरमवेक्ष्य । मुखशेष इति राहोः स्वरूपकथनम् ॥ ४१–४२ ॥

रा० टी०—उत्सृज्येति । मुखमेव शेषः राहुरित्यर्थः एवं प्रधावन्तं प्लवंगममवेक्ष्य परावृत्तो बभूवेति शेषः पराङ्मुखः सिंहिकासुतः त्रातारमिन्द्रमाशंसमानं त्राणार्थं कथयमानस्सन् इन्द्र इन्द्रेति मुहुर्मुहुरभाषत श्लोकद्वयमेकान्वयि ॥४१॥४२॥

गो० टी०—उत्सृज्येति । मुखशेष इति राहुस्वरूपकथनम् ॥ ४१–४६ ॥

४३] ति० टी०—प्रागेवालक्षितं स्वरं राहुदर्शनात्पूर्वमेवायं राहोः स्वर इति निश्चितम् ॥ ४३ ॥

रा० टी०—राहोरिति । प्राक् राहुदर्शनात्पूर्वमेव आलक्षितं विज्ञातं विक्रोशमानस्य राहोः स्वरं श्रुत्वैव अहमेनं निषूदये अतस्त्वं माभैषीः इतीन्द्र उवाच ॥ ४३ ॥

४४–४५ ] ति० टी०—इदमपि महत्फलमिति मत्वा । हस्तिराजानमैरावतम् ॥ ४४–४५ ॥

रा०टी०—ऐरावतमिति । मारुतिः ऐरावतं दृष्ट्वा इदमपि महत्फलं तत्तस्माद्धेतोर्हस्तिराजानं हस्तिराजमभिदुद्राव ॥४४॥

रा० टी०—तथेति । ऐरावतजिघृक्षया धावतोऽस्य हनूमतो रूपमिन्द्राग्न्युपरि भास्वरं प्रकाशमानं सत् मुहूर्तं घोरमभवत्४५॥

४६ ] ति० टी०—हस्तान्ताद्धस्ताग्रात् ॥ ४६ ॥

रा० टी०—एवमिति । नातिक्रुद्धः हनुमद्बाल्येन हेतुना अतिक्रोधरहितश्शचीपतिः हस्तान्तात् हस्ताग्रभागात् अतिमुक्तेन कुलिशेन एवमाधावमानं हनूमन्तमभ्यताडयत् ॥ ४६ ॥

गो० टी०—एवमिति । हस्तान्तात् हस्ताग्रात् । हस्तान्त इति समीप इत्यर्थः ॥ ४६–४८ ॥

४७–४८] ति० टी०—वामा हनुः । हनुशब्दः स्त्रियाम् । 'तत्परा हनुः' दति कोशात् ॥ ४७–४८ ॥

रा० टी०—तत इति । इन्द्रवज्राभिताडितः एष हनूमान् गिरौ पपात पतमानस्य तस्य वामा हनु ज्यत ॥ ४७ ॥

रा० टी०—तस्मिन्निति । तस्मिन्हनूमति वज्रताडनविह्वले अत एव पतिते सति प्रजानां स्वपुत्रस्य अहिताय इन्द्राय पवनश्चुक्रोध आदराद्बहुवचनं किञ्च प्रजानामहिताय हनुमत्प्रहारद्वारा प्रजानामहितकर्त्रे इत्यर्थः ॥ ४८ ॥

४९ ] ति० टी०—प्रचारं देहिमात्रहितभूतं स्वप्रचारं संगृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तरगतः । प्रभुः सर्वजगत्प्रवृत्तिनिवृत्तिकर्ता ॥ ४९ ॥

रा० टी०—प्रचारमिति । प्रजास्वंतर्गतः प्रभुः प्रवृत्तिनिवृत्त्योः समर्थो मारुतः रं स्वव्याप्तिं संगृह्य निवर्त्य शिशुमल्पवयस्कं स्वसुतमादाय गुहां प्रविष्टोभवदिति शेषः॥४९॥

गो० टी०—प्रचारमिति । प्रचारं स्वीयं देहियात्राहेतुभूतम् । गृह्य संक्षिप्य । अन्तर्गतः सर्वदेहान्तर्गतः ॥ ४९ ॥

५०–५१] ति० टी०—रुरोध निरुद्धस्वगतिप्रचारमकरोत्

---

१ परावृत्येति गो. पा. । २ फलं मत्वा हस्तिराजमिति गो. पा. । ३ इन्द्राग्न्योरिवेति गो. पा. । ४ वाम इति गो.पा. । ५ वाके इति गो.पा. ।

निःस्वाध्यायवषट्कारं निष्क्रियं धर्मवर्जितम् । वायुप्रकोपात्त्रैलोक्यं निरयस्थमिवाभवत् ॥ ५२ ॥
ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः । प्रजापतिं समाधावन्दुःखिताश्च सुखेच्छया ॥ ५३ ॥
ऊचुः प्राञ्जलयो देवा महोदरनिभोदराः । त्वया तु भगवन्सृष्टाः प्रजानाथ चतुर्विधाः ॥ ५४ ॥
त्वया दत्तोऽयमस्माकमायुषः पवनः पतिः । सोऽस्मान्प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम॥५५॥
रुरोध दुःखं जनयन्नन्तःपुर इव स्त्रियः । तस्मात्त्वां शरणं प्राप्ता वायुनोपहता वयम् ॥ ५६ ॥
वायुसंरोधजं दुःखमिदं नो नुद दुःखहन् । एतत्प्रजानां श्रुत्वा तु प्रजानाथः प्रजापतिः ॥ ५७ ॥
कारणादिति चोक्त्वासौ प्रजाः पुनरभाषत । यस्मिंश्च कारणे वायुश्चुक्रोध च रुरोध च ॥ ५८ ॥
प्रजाः शृणुध्वं तत्सर्वं श्रोतव्यं चात्मनः क्षमम् । पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः ॥ ५९ ॥
राहोर्वचनमास्थाय ततः स कुपितोऽनिलः । अशरीरः शरीरेषु वायुश्चरति पालयन् ॥ ६० ॥
शरीरं हि विना वायुं समतां याति दारुभिः । वायुः प्राणः सुखं वायुर्वायुः सर्वमिदं जगत्॥ ६१ ॥
वायुना संपरित्यक्तं न सुखं विन्दते जगत् । अद्यैव च परित्यक्तं वायुना जगदायुषा ॥ ६२ ॥

---

एवंविधार्थस्य देवशक्यत्वे दृष्टान्तः—यथेति । वासवो यथा वर्षाण्याहृत्य रुन्धे ॥ ५०–५१ ॥

रा० टी०–विण्मूत्रेति । प्रजानां विण्मूत्राशयम् आहृत्य अवरुध्य विद्यमानः अत एव परमार्तिकृन्मारुतः सर्वभूतानि रुरोध व्यापाररहितानि चकारेत्यर्थः तत्र दृष्टान्तः वासवो वर्षाणि वृष्टीर्यथा ॥ ५० ॥

रा० टी०–वाग्विति । वायुप्रकोपात् निरुच्छ्वासानि अत एव भिद्यमानैस्संधिभिः काष्ठभूतानि भूतानि जज्ञिरे बभूवुः॥५१॥

गो० टी०–विण्मूत्रेति । रुरोधेति । निरुद्धस्वगतिप्रचारमकरोत् । एवंविधार्थस्य देवानां शक्यत्वे दृष्टान्तः यथा वर्षाणीति ॥ ५०–५३ ॥

५२–५३ ] ति० टी०–स्वाध्यायो वेदाध्ययनम् । वषट्कारो यागः निष्क्रियं संसारशून्यम् । निरयस्थमिव । अतिशयितदुःखवदित्यर्थः ॥ ५२–५३ ॥

रा० टी०–निस्स्वाध्यायेति । वायुप्रकोपात् निस्स्वाध्यायवषट्कारं स्वाध्यायो वेदाध्ययनं वषट्कारो यागः ताभ्यां रहितं निष्क्रियं स्नानादिक्रियारहितमत एव धर्मवर्जितं त्रैलोक्यं निरयस्थमिवाभवत् ॥ ५२ ॥

रा० टी०–तत इति । गंधर्वादयः सुखेच्छया प्रजापतिं समाधावन् प्राप्नुवन् ॥ ५३ ॥

५४–५७ ] ति० टी०–महोदरेति । महोदररोगग्रस्तोदरवदुदरं येषां ते ॥ ५४–५७ ॥

रा० टी०–ऊचुरिति । महोदरनिभानि महोदराभिधरोगविशिष्टोदरसदृशानि उदराणि येषां ते देवा ऊचुः तदाकारमाह हे प्रजानाथ चतुर्विधा अण्डजादिभेदेन चतुष्प्रकाराः प्रजाः त्वयैव सृष्टाः ॥ ५४ ॥

रा० टी०–त्वयेति । त्वयास्माकमायुषः पतिरयं पवनो दत्तः प्राणेश्वरो भूत्वा स पवनः अन्तःपुरस्त्रिय इव अस्मान्दुःखं जनयन्सन् कस्माद्रुरोध तस्माद्रोधोद्धतोवायु नोपहता वयं शरणं त्वां प्राप्ताः श्लोकद्वयमेकान्वयि ॥ ५५ ॥ ५६ ॥

गो० टी०–ऊचुरिति । महोदरनिभोदराः वायुःस्तमात् महोदरव्याधिग्रस्तोदरवदुदरं येषान्ते तथा ॥ ५४–५६ ॥

रा० टी०–वाग्विति । हे दुःखहन् वायुसंरोधजमिदं नो दुःखं त्वं नुद निवर्तय अर्द्ध पृथक् एतदिति प्रजानां नाथः आशिषां प्रापकः प्रजापतिः प्रजानामेतद्वचनं श्रुत्वा कारणात्कस्माद्विद्धेतोः इति इदं जातमित्युक्त्वा प्रजाः पुनरभाषत५७

गो० टी०–एतदिति । कारणादिति । चोक्त्वा किंचित्कारणमत्रास्तीत्युक्त्वा ॥ ५७–६२ ॥

५८–६० ] ति० टी०–कारणादित्युक्त्वा किंचित्कारणमत्रास्तीत्युक्त्वा यस्मिन्कारणे वायुश्चुक्रोध तत्कारणं पुनरभाषत ॥ ५८–६० ॥

रा० टी०–तदाकारमाह—यस्मिन्निति । यस्मिन्कारणे सति वायुः चुक्रोध रुरोध च तत् आत्मनः श्रोतव्यं क्षमं क्षन्तव्यं कारणं यूयं शृणुध्वम् ॥ ५८ ॥

रा० टी०–कारणमेवाह–पुत्र इति । तस्यानिलस्य पुत्रः राहोर्वचनमास्थाय इन्द्रेण निपातितः ततः तस्माद्धेतोः अनिलः संकुपितोभवदिति शेषः ॥ ५९ ॥

रा० टी०–अशरीर इति । अशरीरो वायुः पालयन्सन्शरीरेषु चरति अत एव वायुं विना शरीरं दारुभिस्समतां याति स्थातुं न शक्तमित्यर्थः ॥ ६० ॥

६१–६२ ] ति० टी०–दारुभिः समतां याति । क्षणमपि न चलतीत्यर्थः ॥ ६१–६२ ॥

रा० टी०–वायुरिति । वायुना संपरित्यक्तं जगत् सुखं न विन्दते ॥ ६१ ॥

रा० टी०–अद्येति । वायुना जगत् अद्यैव परित्यक्तम् अत एव काष्ठकुड्योपमाः स्थिता लोका इति शेषः ॥ ६२ ॥

---

१ न्विति गो. पा. ।

अत्रैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः। तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि नः ॥
मा विनाशं गमिष्याम अप्रसाद्यादितेः सुतम्। ॥ ६३ ॥
ततः प्रजाभिः सहितः प्रजापतिः सदेवगन्धर्वभुजंगगुह्यकैः।
जगाम यत्रास्यति तत्र मारुतः सुतं सुरेन्द्राभिहतं प्रगृह्य सः ॥ ६४ ॥
ततोऽर्कवैश्वानरकाञ्चनप्रभं सुतं तदोत्सङ्गगतं सदागतेः।
चतुर्मुखो वीक्ष्य कृपामथाकरोत्सदेवगन्धर्वऋषियक्षराक्षसैः ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पंचत्रिंशः सर्गः ॥ ३५ ॥

---

## षट्त्रिंशः सर्गः।

अत्रापि मारुतेश्चरितमेव कथयित्वा मैत्रावरुणिः स्वाश्रमं जिगमिषुरभूत्तदा रामः अचिरादेवाहं यागमारप्स्ये तदा भवानागमनेनानुगृह्णातु मामिति प्रार्थ्य गृहीततदनुमतिश्च तं सादरं प्राहिणोत्।

ततः पितामहं दृष्ट्वा वायुः पुत्रवधार्दितः। शिशुकं तं समादाय उत्तस्थौ धातुरग्रतः ॥ १ ॥
चलकुण्डलमौलिस्रक्तपनीयविभूषणः। पादयोर्न्यपतद्वायुस्त्रिरुपस्थाय वेधसे ॥ २ ॥
तं तु वेदविदा तेन लम्बाभरणशोभिना। वायुमुत्थाप्य हस्तेन शिशुं तं परिमृष्टवान् ॥ ३ ॥
स्पृष्टमात्रस्ततः सोऽथ सलीलं पद्मजन्मना। जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ४ ॥

---

६३ ] ति० टी०—रुक्प्रदः शूलादिरोगप्रदः। गमिष्याम अप्रसाद्येत्यसंधिरार्षः ॥ ६३ ॥

रा० टी०—तदिति। तत्तस्माद्धेतोः नोऽस्माकं रुक्प्रदः रुजां प्रदाता मारुतो यत्रास्ते तत्र यामः अदितेस्सुतं पवनमप्रसाद्य विनाशं मा न गमिष्यामः ॥ ६३ ॥

गो० टी०—तदिति। रुक्प्रदः शूलरोगप्रदः। गमिष्याम अप्रसाद्येति संधिरार्षः ॥ ६३ ॥

६४ ] ति० टी०—आस्यत्यास्ते ॥ ६४ ॥

रा० टी०—तत इति। मारुतः सुरेन्द्राभिहतं सुतं प्रगृह्य यत्रास्यति आस्ते तत्र प्रजापतिर्जगाम ॥ ६४ ॥

गो० टी०—तत इति। तत्रास्यतीति। यत्र अस्यति तिष्ठतीति यावत् ॥ ६४ ॥

६५ ] ति० टी०—सदागतेर्वायोः। गन्धर्वऋषियक्षेति गुरुलघुभेद आर्षः ॥ ६५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

रा० टी०—तत इति। चतुर्मुखः सदागतेः पवनस्य उत्संगगतं सुतं वीक्ष्य कृपामकरोत् चरमपादेऽक्षराधिक्यं छन्दसां वैलक्षण्यद्योतनाय ॥ ६५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चत्रिंशस्सर्गः ॥ ३५ ॥

गो० टी०—तत इति। सदागतेर्वायोः। गन्धर्वर्षियक्षेति गुरुलघुभेद आर्षः ॥ ६५ ॥

इति श्रीगोविन्द० मणिमुकुटाख्याने उत्तरश्रीरामायण० पञ्चत्रिंशः सर्गः ॥ ३५ ॥

१ ] ति० टी०—तत इति ॥ १ ॥

रा० टी०—ब्रह्मकर्तृकपवनसुतदर्शनानन्तरकालिकं वृत्तान्तमाह—तत इत्यादिभिः। पुत्रवधार्दितो वायुः पितामहं दृष्ट्वा शिशुकमनुकम्पितसुतं समादाय धातुरग्रत उत्तस्थौ ॥ १ ॥

गो० टी०—ततः पितामहमित्यादि ॥ १ ॥

२ ] ति० टी०—स्रक्तपनीयेति। तपनीयस्रगित्यर्थः। त्रिरुपस्थाय न्यपतत्। उपस्थानपूर्वकं त्रिः साष्टाङ्गं प्रणतवानित्यर्थः ॥ २ ॥

रा० टी०—चलदिति। चलती कुण्डले यस्य मौलिरतिश्रेष्ठा स्रक् यस्य स एव स इति कर्मधारयः तपनीयानि स्वर्णमयानि विभूषणानि यस्य स वायुः वेधसे त्रिरुपस्थाय उपस्थानपूर्वकं प्रणम्य पादयोर्न्यपतत् ॥ २ ॥

गो० टी०—चलदित्यादि। तिस्रोपस्थाय त्र्युपस्थाय। अलुगत्यार्षः। त्रिरुपस्थाय चेति पाठः न्यपतदिति। उपस्थानपूर्वकं त्रिःसाष्टाङ्गमनमदित्यर्थः ॥ २ ॥

३-४ ] ति० टी०—वेदविदानादितोऽशेषवेदार्थविदा लम्बाभरणशोभिना हस्तेन वायुमुत्थाप्य। परिमर्शः स्पर्शः ॥ ३ ॥ ४ ॥

रा० टी०—तमिति। वेदविद् ब्रह्मा आतेन विस्तृतेन

---

१ सुता इति गो. पा.। २ तत्रास्यति यत्रेति गो. पा.।

प्राणवन्तमिमं दृष्ट्वा प्राणो गन्धवहो मुदा । चचार सर्वभूतेषु संनिरुद्धं यथापुरा ॥ ५ ॥
मरुद्रोधाद्विनिर्मुक्तास्ताः प्रजा मुदिताभवन् । शीतवातविनिर्मुक्ताः पद्मिन्य इव साम्बुजाः ॥ ६ ॥
ततस्त्रियुग्मस्त्रिककुत्त्रिधामा त्रिदशार्चितः । उवाच देवता ब्रह्मा मारुतप्रियकाम्यया ॥ ७ ॥
भो महेन्द्राग्निवरुणा महेश्वरधनेश्वराः । जानतामपि वः सर्वं वक्ष्यामि श्रूयतां हितम् ॥ ८ ॥
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति । तद्दध्वं वरान्सर्वे मारुतस्यास्य तुष्टये ॥ ९ ॥
ततः सहस्रनयनः प्रीतियुक्तः शुभाननः । कुशेशयमयीं मालामुत्क्षिप्येदं वचोऽब्रवीत् ॥ १० ॥
मत्करोत्सृष्टवज्रेण हनुरस्य यथा हतः । नाम्ना वै कपिशार्दूलो भविता हनुमानिति ॥ ११ ॥
अहमस्य प्रदास्यामि परमं वरमद्भुतम् । इतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १२ ॥
मार्तण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः । तेजसोऽस्य मदीयस्य ददामि शतिकां कलाम् ॥ १३ ॥

---

लम्बाभरणशोभिना हस्तेन वायुमुत्थाप्य तं हनूमन्तं परिमृष्टवान् वेदविदेति छेदे तु हस्तस्यैवेदमपि विशेषणं वेदस्थापनकर्त्रेति तदर्थः ॥ ३ ॥

रा० टी०—स्पृष्टमात्र इति । पद्मजन्मना स्पृष्टमात्रो हनूमान् जलसिक्तं सस्यमिव जीवितं पुनरवाप्तवान् ॥ ४ ॥

गो० टी०—ततः इति । हनुमज्जीवनार्थम् अङ्गुल्यग्रविन्यस्तवेदपदेन वेदविदा विदितनिखिलवेदवेदान्तेन ब्रह्मणा लम्बाभरणशोभिना हस्तेन तं शिशुं च परिमृष्टवान् ॥ ३–४ ॥

५–६ ] ति० टी०—सर्वभूतेषु संनिरुद्धं संत्यक्तनिरोधं यथा भवति तथा । यथापुरा यथापूर्वं प्राणापानात्मना चचार ५–६

रा० टी०—प्राणवन्तमिति । प्राणो जीवनकर्ता गंधवहो वायुः इमं हनूमन्तं प्राणवन्तं दृष्ट्वा सर्वभूतेषु संनिरुद्धं प्राणादिजातम् यथा पुरा पूर्ववच्चचार चालयामास यदि तु सामान्ये नपुंसकत्वकल्पनया सन्निरुद्धमित्यपि वायुविशेषणं तदा नान्तर्भावितणिजर्थकल्पना ॥ ५ ॥

गो० टी०—प्राणवन्तमिति । सर्वभूतेषु सन्निरुद्धम् अन्तःप्रतिष्ठितं यथा भवति तथा प्राणः प्राणभृतश्चचार ॥ ५ ॥

रा० टी०—मरुदिति । मरुतो रोधात् विनिर्मुक्ताः प्रजाः साम्बुजा अम्बुजसहिताः पद्मिन्यः कुमुदाख्सरस्यो वा इव मुदिताभवन् अभवन् ॥ ६ ॥

गो० टी०—मरुदिति । शीतदाहो हिमेन दाहः । शीतवातविनिर्मुक्ता इति च पाठः ॥ ६ ॥

७] ति० टी०—त्रियुग्मश्त्रीणि युग्मानि यस्य सः । तानि यशोवीर्ये ऐश्वर्यश्रियौ ज्ञानवैराग्ये च त्रिककुत्त्रिमूर्तिप्रधानः । त्रिधामा त्रिलोकस्थानः ॥ ७ ॥

रा० टी०—तत इति । त्रीणि यशोवीर्ये ऐश्वर्यश्रियौ ज्ञानवैराग्ये च युग्मानि यस्य त्रिककुत्त्रिमूर्तिश्रेष्ठः त्रयो लोका धाम स्थानं यस्य त्रिदशैरर्चितो ब्रह्मा मारुतप्रियकाम्यया देवताः उवाच ॥ ७ ॥

गो० टी०—तत इति । त्रीणि युग्मानि यस्यासौ त्रियुग्मः । तानि तु ऐश्वर्यं वीर्यं यशः श्रीः ज्ञानं वैराग्यम् । त्रिककुत् त्रिमूर्तिप्रधानः । त्रिधामा त्रिलोकगृहः । त्रिदशार्चितः देवार्चितः ॥ ७ ॥

८–९ ] ति० टी०—वक्ष्यामि श्रूयतामिति गुरुवैषम्यमार्षम् ॥ ८–९ ॥

रा० टी०—तदाकारमाह–भो महेन्द्रेति द्वाभ्याम् । भो महेन्द्रादयः सर्वे जानतामपि वो युष्माकं हितं वक्ष्यामि अतः श्रूयताम् ॥ ८ ॥

रा० टी०—तद्वचनमेवाह—अनेनेति । शिशुना अनेन हनूमता कर्तव्यं वः कार्यं भविष्यति तत्तस्माद्धेतोः मारुतस्य तुष्टये सर्वे यूयं वरान् ददध्वम् ॥ ९ ॥

गो० टी०—भो इति । ईश इत्यनेन रुद्रः इत्युच्यते प्रजेश्वरः यमः । वक्ष्यामि श्रूयतामिति गुरुवैषम्यमार्षम् ॥ ८ ॥ ९ ॥

१०–११ ] ति० टी०—कुशेशयमयीं काञ्चनपद्ममयीम् ॥ १०–११ ॥

रा० टी०—तत इति । ततो ब्रह्मवचनश्रवणानन्तरं सहस्रनयनः कुशेशयमयीं कांचनपद्मनिर्मितां मालाम् उत्क्षिप्य उत्क्षेपणपूर्वकं प्रदाय अब्रवीत् ॥ १० ॥

रा० टी०—तदाकारमाह–मदिति । द्वाभ्याम् । यथा यतः मत्करोत्सृष्टवज्रेण अस्य हनुर्हता अतः कपिशार्दूलः नाम्ना हनुमान् इति भविता ॥ ११ ॥

गो० टी०—तत इति । कुशेशयमयीं काञ्चनपद्ममयीमित्यर्थः ॥ १०–१२ ॥

१२ ] ति० टी०—अहं मालापूर्वं वरं दास्यामि ॥ १२ ॥

रा० टी०—अहमिति । इतः प्रभृति मम वज्रस्य अवध्यो भविष्यति इति वरमहमस्य प्रदास्यामि प्रददामि ॥ १२ ॥

१३ ] ति० टी०—शतिकां कलां शततममंशम् ॥ १३ ॥

रा० टी०—मार्तण्ड इति । मार्तण्डस्सूर्योऽब्रवीत्तदाकारमाह मदीयस्य तेजसः शतिकां कलां शततममंशमस्य अस्मै ददामि ॥ १३ ॥

गो० टी०—मार्तण्ड इति । शतिकां शतैकांशभूताम् ॥ १३ ॥

---

१ ईशवरुणमहेश्वरधनेश्वराः इति गो. पा. ।

यदा च शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति । तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ १४ ॥
[ नैचास्य भविता कश्चित्सदृशः शास्त्रदर्शने । ]
वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति । वर्षायुतशतेनापि मत्पाशादुदकादपि ॥ १५ ॥
यमो दण्डादवध्यत्वमरोगत्वं च दत्तवान् । वरं ददामि संतुष्ट अविषादं च संयुगे ॥ १६ ॥
गदेयं मामिका नैनं संयुगेषु वधिष्यति । इत्येवं धनदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १७ ॥
मत्तो मदायुधानां च अवध्योऽयं भविष्यति । इत्येवं शंकरेणापि दत्तोऽस्य परमो वरः ॥ १८ ॥
विश्वकर्मा च दृष्ट्वेमं बालं प्रति महारथः । [शिल्पिनां प्रवरः प्रादाद्वरमस्य महामतिः ॥]
मत्कृतानि च शस्त्राणि यानि दिव्यानि तानि च । तैरवध्यत्वमापन्नश्चिरजीवी भविष्यति ॥ १९ ॥
दीर्घायुश्च महात्मा च ब्रह्मा तं प्राब्रवीद्वचः । सर्वेषां ब्रह्मदण्डानामवध्यत्वं भविष्यति ॥ २० ॥
ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलंकृतम् । चतुर्मुखस्तुष्टमना वायुमाह जगद्गुरुः ॥ २१ ॥
अमित्राणां भयकरो मित्राणामभयंकरः । अजेयो भविता पुत्रस्तव मारुत मारुतिः ॥ २२ ॥
कामरूपः कामचारी कामगः प्लवतां वरः । भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति ॥ २३ ॥
रावणोत्सादनार्थानि रामप्रीतिकराणि च । रोमहर्षकराण्येव कर्ता कर्माणि संयुगे ॥ २४ ॥

१४–१५ ] ति० टी०–शास्त्रं शास्त्राध्ययनं तदर्थज्ञानं च ॥ १४–१५ ॥

रा० टी०–यदेति । यदा शास्त्राणि अध्येतुमस्य शक्तिर्भविष्यति तदा अस्य अस्मै शास्त्रं दास्यामि अध्यापयिष्यामि ॥ १४ ॥

गो० टी०–यदा त्विति । शास्त्रं शास्त्रार्थज्ञानम् । ऐन्द्रव्याकरणमित्यर्थः ॥ १४ ॥

रा० टी०–वरुण इति । वर्षायुतशतेनापि बहुभिरपि वर्षैर्मत्पाशादुदकाच्चास्य मृत्युर्न भविष्यति इति वरं वरुणः प्रादात् ॥ १५ ॥

गो० टी०–न चेति । शास्त्रदर्शने शास्त्रज्ञाने वरुणोक्तवरस्तु स्वशुद्धनिमित्तमरणाभावमात्रम् ॥ १५–१७ ॥

१६–१७ ] ति० टी०–तुष्ट अविषादमित्यार्षोऽसंधिः ॥ १६–१७ ॥

रा० टी०–यम इति । दण्डादवध्यत्वमरोगत्वं च यमो दत्तवान् अहं पृथक् वरमिति संयुगे अविषादम् मामिका गदा एनं न वधिष्यति इति च वरं संतुष्टोहं ददामि इत्येकाक्षिपिंगलो धनदः प्राह सार्द्धश्लोक एकान्वयी ॥ १६ ॥ १७ ॥

१८–१९ ] ति० टी०–मदायुधानां शूलादिपाशुपतास्त्रान्तानाम् ॥ १८–१९ ॥

रा० टी०–मत्त इति । मत्तो मदायुधानां च अवध्योयं भविष्यति इत्येवं वरः शंकरेण दत्तः ॥ १८ ॥

गो० टी०–मत्त इति । परमो वरः शूलपाशुपतास्त्राद्यवध्यत्वमित्यर्थः ॥ १८ ॥

रा० टी०–विश्वकर्मेति । मत्कृतानि यानि तानि मद्बुद्धिविषयीभूतानि यानि च दिव्यानि शस्त्राणि तैरवध्यत्वमापन्नः प्राप्तोयं चिरजीवी भविष्यति इति वरं विश्वकर्मा ददाविति शेषः सार्द्धश्लोक एकान्वयी ॥ १९ ॥

गो० टी०–विश्वकर्मेति । यद्यप्यायुधानामपि विश्वकर्मनिर्मितत्वेपि तदतिरिक्तायुधपरमिदम् ॥२०–२६ ॥

२०–२४] ति० टी०–महात्मा महानात्मा यस्य सः । ब्रह्म इति यावत् । सर्वेषां ब्रह्मास्त्रान्तानाम् । ब्रह्मदण्डो ब्रह्मर्षिक्रियमाणः संहारोद्देश्यकः शापो न भविष्यति । अस्येति शेषः ॥ २०–२४ ॥

रा० टी०–दीर्घेति । दीर्घायुर्महात्मा अतिप्रयत्नवान् भविष्यति ब्रह्मदण्डानामवध्यत्वं च भविष्यति प्राप्स्यति इति वरं ब्रह्मा तं प्राब्रवीत् भविष्यतीतिशब्दावृत्त्या उभयान्वयी दीर्घायुर्महात्मनोर्ब्रह्मविशेषणत्वे तु नेयं कल्पना ॥ २० ॥

गो० टी०–सर्वेषामिति । सर्वेषां ब्रह्मास्त्रान्तानामित्यर्थः । ब्रह्मदण्डानां ब्रह्मशापानां ब्रह्मायुधानां वा । दीर्घायुश्चेति ॥१९॥

रा० टी०–तत इति । सुराणां वरैरलंकृतमेनं हनूमन्तं दृष्ट्वा चतुर्मुखो ब्रह्मा वायुमाह ॥ २१ ॥

रा० टी०–तदाकारमाह—अमित्राणामिति । मारुतिः तव पुत्रः अजेयो भविता ॥ २२ ॥

रा० टी०–कामरूप इति । प्लवतां वरो हनूमान् कामगत्वादिविशिष्टो भवति भविष्यति ॥ २३ ॥

रा० टी०–रावण इति । रामप्रीतिकराणि कर्माणि अयं कर्ता ॥ २४ ॥

१ त्विति गो.पा.। २ इदमर्धमधिकं गो.पा.। ३ निरयश इति गो.पा.। ४ एनं बालसूर्योपमं शिशुमिति गो.पा.। ५ इदमर्धमधिकं गो.पुस्त.। ६ संयुगे इति गो. पा.। ७ इदंपद्य " इत्येवं शङ्करेणापीत्यष्टादशपद्योत्तरार्धात्परतो गो. पुस्तके तत्रापि पूर्वोत्तरपादयोर्व्यत्यासोऽपि दृश्यते। ८ अयमिति गो.पाठः।

ऊचुः प्राञ्जलयः सर्वे राघवं गमनोत्सुकाः । पूजितास्ते च रामेण जग्मुर्देशान्स्वकान्स्वकान् ३२॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

## एकोनचत्वारिंशः सर्गः ।

भरतलक्ष्मणशत्रुघ्नपालिता राजानः स्वकं पुरं गत्वा भरतद्वीनिवर्त्य तद्द्वारासंख्येयानुपहारान् रामाय प्राहिण्वन् रामस्तु सुग्रीव विभीषणादिकपिराक्षसेभ्यस्तदुपकृतिस्मरणपूर्वकं रत्नानि महार्हाण्याभरणानि च प्रतिपाद्य तैः सह मासद्वयं सुखं नीतवान् ।

ते प्रयाता महात्मानः पार्थिवास्ते प्रहृष्टवत् । गजवाजिसहस्रौघैः कम्पयन्तो वसुंधराम् ॥ १ ॥
अक्षौहिण्यो हि तत्रासन्राघवार्थे समुद्यताः । भरतस्याज्ञयानेकाः प्रहृष्टबलवाहनाः ॥ २ ॥
ऊचुस्ते च महीपाला बलदर्पसमन्विताः । न रामरावणं युद्धे पश्यामः पुरतः स्थितम् ॥ ३ ॥
भरतेन वयं पश्चात्समानीता निरर्थकम् । हता हि राक्षसाः क्षिप्रं पार्थिवैः स्युर्न संशयः ॥ ४ ॥
रामस्य बाहुवीर्येण रक्षिता लक्ष्मणस्य च । सुखं पारे समुद्रस्य युध्येम विगतज्वराः ॥ ५ ॥
एताश्चान्याश्च राजानः कथास्तत्र सहस्रशः । कथयन्तः स्वराज्यानि जग्मुर्हर्षसमन्विताः ॥ ६ ॥

वर्तामहे तथास्माद्य ते प्रीतिश्च भवेद्ध्रुयात् । द्वेषेण हृदयस्थता मा भूदित्येतदुक्तिः—बाढमित्येवेति । रामेणोक्ता इति शेषः ॥ ३० ॥ ३१ ॥

३२ ] ति० टी०—गमिष्यामः इत्यूचुरिति पूर्वेणान्वयः । पूजितास्ते चेत्यादिना वृत्तक्रियानुवादः ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टात्रिंशः सर्गः ॥ ३८ ॥

रा० टी०—आपृच्छाम इति । वयं गमिष्यामः अत एव आपृच्छामः आज्ञां गृह्णीमः अत्र त्वत्सन्निधौ महता महत्या प्रीत्यावृता वयं वर्तामहे अतो भवान्नो हृदिस्थः सदा भवत्विति शेषः सामान्ये नपुंसकम् ॥ ३० ॥

रा० टी०—हृदिस्थत्वप्रकारमाह—भवेदिति । ते प्रीतिरस्मासु नित्यदा भवेत् परमुत्कृष्टं यथा भवति तथा हर्षेणान्विताः गमनोत्सुकाः राजानः बाढं भवदुक्तमङ्गीकृतमित्यूचुः अत एव रामेण पूजिताः सत्कृतास्ते स्वकान्स्वकान्देशान् जग्मुः श्लोकद्वयमेकान्वयि ॥ ३१ ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टात्रिंशः सर्गः ॥ ३८ ॥

गो० टी०—बाढमित्येवेति । रामेणोक्ता इति शेषः । गमिष्याम इत्यूचुरिति पूर्वेणान्वयः ॥ ३२–३३ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टात्रिंशः सर्गः ॥ ३८ ॥

---

१ ] ति० टी०—अथ विसृज्य राजभिः स्वदेशस्थैः प्रेषितोपहारप्रहः—प्रयाता इति । प्रहृष्टवत्प्रहृष्टाः ॥ १ ॥

रा० टी०—राज्ञां वृत्तमाह—ते इत्यादिभिः । ते रामेणाज्ञापिताः ते प्रसिद्धाः पार्थिवा गजवाजिसहस्रौघैः वसुंधरां कंपयन्तस्सन्तः प्रहृष्टवत् प्रहर्षविशिष्टं यथा भवति तथा प्रयाताः ॥ १ ॥

गो० टी०—त इत्यादि । प्रहृष्टवत् प्रहृष्टाः सन्तः ॥ १ ॥

२ ] ति० टी०—राघवार्थे राघवस्य रणसहायार्थे ॥ २ ॥

रा० टी०—अक्षौहिण्य इति । राघवार्थे राघवसाहाय्यार्थं तत्र राघवसमीपे प्रहृष्टानि बलवाहनानि यासु ता अनेका अक्षौहिण्यः भरतस्याज्ञया आसन् ॥ २ ॥

गो० टी०—अक्षौहिण्य इति । राघवार्थ इति । रामसहायार्थमित्यर्थः ॥ २ ॥

३ ] ति० टी०—रामरावणमिति । रामशत्रुं रावणमित्यर्थः मध्यमपदलोपी समासः ॥ ३ ॥

रा० टी०—ऊचुरिति । ते मार्गे स्थिता महीपाला ऊचुः तदाकारमाह रामरावणम् रामस्य शत्रुं रावणं युद्धे पुरतः स्थितं वयं न पश्यामः अपश्याम अतः भरतेन पश्चाद्युद्धातीतकाले वयं निरर्थकं समानीताः पूर्वमेव वयमानेतव्या इति तात्पर्यम् सार्द्धश्लोक एकान्वयी ॥ ३ ॥

गो० टी०—ऊचुरिति । रामरावणं रामस्य रावणम् । वध्यघातुकसंबन्धः षष्ठ्यर्थः । रामं रावणमिति पाठे युद्धे रामं रावणं च युद्ध्यमानौ रामरावणावित्यर्थः ॥ ३ ॥

४–६ ] ति० टी०—पश्चाद्रावणवधानन्तरम् । पार्थिवैर्हताः स्युः । यदि पूर्वं समानीताः स्युरिति शेषः ॥ ४–६ ॥

रा० टी०—हता इति । बाहुवीर्येण रक्षिताः वयं समुद्रस्य पारे सुखं युध्येम अत एव पार्थिवैरस्माभिः सर्वे राक्षसाः हताः स्युः सार्द्धश्लोक एकान्वयी ॥ ४ ॥

रा० टी०—एता इति । सहस्रशः कथाः कथयन्तो राजानः स्वराज्यानि जग्मुः ॥ ६ ॥

---

१ चैवेति गो. पाठः ।

स्वानि राज्यानि मुख्यानि ऋद्धानि मुदितानि च । समृद्धधनधान्यानि पूर्णानि वसुमन्ति च ॥ ७ ॥
यथापुराणि ते गत्वा रत्नानि विविधान्यथ । रामस्य प्रियकामार्थमुपहारं नृपा ददुः ॥ ८ ॥
अश्वान्यानानि रत्नानि हस्तिनश्च मदोत्कटान् । चन्दनानि च मुख्यानि दिव्यान्याभरणानि च ॥९॥
मणिमुक्ताप्रवालांस्तु दास्यो रूपसमन्विताः । अजाविकं च विविधं रथांस्तु विविधान्बहून्॥ १० ॥
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः । आदाय तानि रत्नानि स्वां पुरीं पुनरागताः॥ ११ ॥
आगम्य च पुरीं रम्यामयोध्यां पुरुषर्षभाः । तानि रत्नानि चित्राणि रामाय समुपानयन्॥ १२ ॥
प्रतिगृह्य च तत्सर्वं रामः प्रीतिसमन्वितः । सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे ॥ १३ ॥
बिभीषणाय च ददौ तथान्येभ्योऽपि राघवः । राक्षसेभ्यः कपिभ्यश्च यैर्वृतो जयमाप्तवान्॥ १४ ॥
ते सर्वे रामदत्तानि रत्नानि कपिराक्षसाः । शिरोभिर्धारयामासुर्भुजेषु च महाबलाः ॥ १५ ॥
हनूमन्तं च नृपतिरिक्ष्वाकूणां महारथः । अङ्गदं च महाबाहुमङ्कमारोप्य वीर्यवान् ॥ १६ ॥
रामः कमलपत्राक्षः सुग्रीवमिदमब्रवीत् । अङ्गदस्ते सुपुत्रोऽयं मन्त्री चाप्यनिलात्मजः॥१७॥
सुग्रीवमन्त्रिते युक्तौ मम चापि हिते रतौ । अर्हतो विविधां पूजां त्वत्कृते वै हरीश्वर ॥ १८॥
इत्युक्त्वा व्यपमुच्याङ्गाद्भूषणानि महायशाः । स बबन्ध महार्हाणि तदाङ्गदहनूमतोः ॥ १९ ॥
आमाष्य च महावीर्यान्राघवो यूथपर्षभान् । नीलं नलं केसरिणं कुमुदं गन्धमादनम् ॥ २० ॥
सुषेणं पनसं वीरं मैन्दं द्विविदमेव च । जाम्बवन्तं गवाक्षं च विनतं धूम्रमेव च ॥ २१ ॥
बलीमुखं प्रजङ्घं च संनादं च महाबलम् । दरीमुखं दधिमुखमिन्द्रजानुं च यूथपम् ॥ २२ ॥
मधुरं श्लक्ष्णया वाचा नेत्राभ्यामापिबन्निव । सुहृदो मे भवन्तश्च शरीरं भ्रातरस्तथा ॥ २३ ॥
युष्माभिरुद्धृतश्चाहं व्यसनात्काननौकसः । धन्यो राजा च सुग्रीवो भवद्भिः सुहृदां वरैः॥२४॥
एवमुक्त्वा ददौ तेभ्यो भूषणानि यथार्हतः । वज्राणि च महार्हाणि सस्वजे च नरर्षभः ॥ २५ ॥

---

गो० टी०—भरतेनेति । पश्चाद्रावणवधानन्तरम्॥४—६॥

७ ] ति० टी०—उक्तानि स्वराज्यान्यनूद्य विशिनष्टि— स्वानीत्यादि । मुख्यानि प्रसिद्धानि । धनं जीवाजीवरूपम्। वसुमन्ति महानिधिमन्ति ॥ ७ ॥

रा० टी०—स्वानिति । ते नृपाः स्वानि राज्यानि स्वानि पुराणि च यथा यथावद्गत्वा रामस्य प्रियकामार्थं विविधानि रत्नादीन्युपहारान्ददुः तत्राजाविकमजाश्च अविका अवयश्च एतेषां समाहारः इति श्लोकचतुष्टयमेकान्वयि ७—१०

गो० टी०—स्वानीति । मुख्यानीति । प्रसिद्धानीत्यर्थः। धनं जीविकाजीवरूपम् । वसुमन्ति महानिधिमन्ति ॥ ७ ॥

८—९ ] ति० टी०—यथापुराणि यथापूर्वमक्षतशरीरतया पुराणि गत्वा प्रियकामार्थमिष्टकामार्थं ददुः। आनुयात्रिकेभ्यः। भरतलक्ष्मणशत्रुघ्नेभ्य इति शेषः ॥ ८ ॥ ९ ॥

गो० टी०—यथेति । यथापुराणि यथाप्राप्तस्वस्वपुराणि। उपहारान् प्रत्युपहारान् ॥ ८ ॥ ९ ॥

१०—१४] ति० टी०—अजाविकं विशिष्टचर्मवत् १०—१४

गो० टी०—मणीति। अजाविकान् चर्ममयान् । तल्पविशेषानित्यर्थः।अजाविकं च विविधमिति वा पाठः॥१०—१४॥

रा० टी०—भरत इति । भरतादयः रत्नानि तदुपलक्षितराजसमर्पितवस्तुजातानि आदाय पुरीमयोध्यां पुनरागताः ११

रा० टी०—आगम्येति । पुरुषर्षभाः भरतादयः आगम्य रत्नानि रामाय समुपानयन् ॥ १२ ॥

रा० टी०—प्रतिगृह्येति । रामः प्रतिगृह्य तत्सर्वं यैर्वृतो जयमाप्तवान् तेभ्यः सुग्रीवादिभ्यः ददौ श्लोकद्वयमेकान्वयि ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—शिरोभिः किरीटकुण्डलादीनां धारणम्। अङ्गदादीनां भुजेषु धारणम् ॥ १५ ॥

रा० टी०—ते इति । कपिराक्षसाः रत्नानि शिरोभिः शिरःसु भुजेषु च धारयामासुः ॥ १५ ॥

गो० टी०—त इति । शिरोभिरिति । मुकुटकुण्डलादीनीति भावः । बाहुभिरिति । अङ्गदादीनीत्यर्थः । भुजेषु चेति पाठः ॥ १५—२६ ॥

१६—१७ ] ति० टी०—अङ्कमारोप्य । बालाविवेति शेषः । अनेन भगवता स्वस्य निरतिशयबलवत्त्वेनेश्वरत्वं सूचितम् ॥ १६ ॥ १७ ॥

१८—२५] ति० टी०—मन्त्रिते मन्त्रे ॥ १८—२५ ॥

---

१ उपहारानिति गो. पाठः । २ अजाविकांस्तु विविधान् रथांस्तु विविधान्ददुरिति गो. पाठः । ३ महाबला इति गो. पाठः । ४ आददिमिति गो. पाठः । ५ बाहुभिरिति गो. पाठः । ६ व्यवेति गो. पाठः ।

ते पिबन्तः सुगन्धीनि मधूनि मधुपिङ्गलाः । मांसानि च सुमृष्टानि मूलानि च फलानि च॥२६॥
एवं तेषां निवसतां मासः साग्रो ययौ तदा । मुहूर्तमिव ते सर्वे रामभक्त्या च मेनिरे ॥ २७ ॥
रामोऽपि रेमे तैः सार्धं वानरैः कामरूपिभिः । राक्षसैश्च महावीर्यैर्ऋक्षैश्चैव महाबलैः ॥ २८ ॥
एवं तेषां ययौ मासो द्वितीयः शिशिरः सुखम् । वानराणां प्रहृष्टानां राक्षसानां च सर्वशः॥ २९ ॥
इक्ष्वाकुनगरे रम्ये परां प्रीतिमुपासताम् । रामस्य प्रीतिकरणैः कालस्तेषां सुखं ययौ ॥ ३० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

## चत्वारिंशः सर्गः ।

राघवः सुग्रीवादिवानरान् विभीषणादिनिशाचरांश्च स्वं स्वं स्थानं समधुरभाषणं संपूज्य प्राहिणोत् ।

तथा स्म तेषां वसतामृक्षवानररक्षसाम् । राघवस्तु महातेजाः सुग्रीवमिदमब्रवीत् ॥ १ ॥

रा० टी०—हनूमन्तमिति । रामः हनूमन्तमङ्गदं च अङ्कमारोप्य सुग्रीवमब्रवीत् सार्द्धश्लोक एकान्वयी ॥ १६ ॥

रा० टी०—तदाकारमाह—अंगद इति । हे हरीश्वर हे सुग्रीव त्वत्कृते मन्त्रिते मन्त्रे युक्तौ मम हिते रतौ ते पुत्रोंगदः ते मन्त्री अनिलात्मजश्च विविधां पूजामर्हतः इत्युक्त्वा अंगाद्भूषणानि व्यवमुच्य अंगदहनूमतोर्बबन्ध सार्द्धश्लोकद्वयमेकान्वयि ॥ १७–१९ ॥

रा० टी०—आभाष्येति । राघवः यूथपर्षभान् नीलादीन् आभाष्य सम्बोध्य भवन्तो ये सुहृदादयः यतो युष्माभिः व्यसनादहमुद्धृतः भवद्भिः सह सुग्रीवो धन्यः एवं मधुरं यथा भवति तथा श्लक्ष्णया वाचोक्त्वा तेभ्यः यथार्हतः यथायोग्यं भूषणादीनि ददौ सस्वजे च श्लोकषट्कमेकान्वयि ॥२०–२५॥

२६ ] ति० टी०—मांसानि चेत्यस्य भुञ्जत इति शेषः २६

रा० टी०—ते इति । ते मधुपिंगलाः मधूनि पुष्परसान्पिबन्तः मांसानि राज्यभोग्यवस्तूनि मूलानि च खादन्तश्चातिष्ठन्निति शेषः मांसं स्याद्भोग्यवस्तुनीति कोशः ॥ २६ ॥

२७–३० ] ति० टी०—एवं तेषामिति । वसन्तेऽभिषिक्तेन रामेण मासानन्तरं विशेषसत्कारप्राप्तौ शिशिरः शिशिरर्तुसंबन्धी द्वितीयो मासः सुखं गत इत्युक्त्या संवत्सरपर्यन्तं तेषां रामसमीपे वास उक्त इति तीर्थादयः । वस्तुतोऽधिकमासगणनयामान्तमानेनाश्विनकृष्णपक्षेऽयोध्याप्रवेशेन तत्रैव तदुत्तरशुक्लपक्षे वाभिषेकः । साग्रो मास इत्यनेन कार्तिकान्ता स्थितिरुक्ता । ततः शिशिरो द्वितीयो मासः फाल्गुनो गत इति हेमन्तशिशिरावर्धशरच्च तत्र वास इति पञ्चमासपर्यन्तं तत्र वास इति लभ्यते इति मम भाति । पूर्वकाण्डान्तसंक्षेपेणोक्तस्यैवार्थस्यात्र काण्डे विस्तरेणोक्तिरिति बोध्यम् । एवं तेषामिति भरतायानीतरत्नविशेषैर्विशेषसत्कारप्राप्तिपर्यन्तं निवसतां तेषां साग्रः पञ्चषद्दिनाधिका मासा गताः प्रीतिकरणैः संमानैः ॥२७–३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

रा० टी०—एवमिति । एवं निवसतां तेषां सुग्रीवादीनां साग्रः किंचिदधिको मासो ययौ तैः रामभक्त्योपलक्षिताः सुग्रीवादयः मुहूर्तमिव मेनिरे साग्रमासमित्यर्थतो लभ्यम्॥२७॥

रा० टी०—राम इति । रामः वानरादिभिः सह रेमे॥२८॥

गो० टी०—एवं तेषां निवसतामिति । आभरणादिभिः सत्कृतानां निवसतां तेषां साग्रः पञ्च षड्दिनाधिकः मासो गतः ॥ २७ ॥ २८ ॥

रा० टी०—एवमिति । एवं मुहूर्तत्वेन रूपेण द्वितीयः शिशिरः मासो माघः ययौ एतेन सम्वत्सरो व्यतीत इति सूचितम् ॥ २९ ॥

गो० टी०—एवं तेषामिति । वसन्तेऽभिषिक्तेन रामेण मासानन्तरमपि अविशेषसत्कारं प्राप्तानां तेषां द्वितीयः शैशिरो मासः फाल्गुनमासः सुखं गतः । अभिषेकानन्तरं संवत्सरं सुखमुषितास्त इत्यर्थः ॥ २९ ॥

रा० टी०—इक्ष्वाकिति । रामस्य प्रीतिकरणैः अतिसत्कारैः परां प्रीतिमुपासतां तेषां सुग्रीवादीनां कालः संवत्सरात्मकसमयस्सुखं ययौ ॥ ३० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनचत्वारिंशः सर्गः ॥३९॥

गो० टी०—इक्ष्वाकुनगर इति । प्रीतिकरणैः संमानैः॥३०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

१ ] ति० टी०—अथ तेषां विसर्जनम् । वसतां तेषामिति निर्धारणे षष्ठी ॥ १ ॥

रा० टी०—सुग्रीवादीन्प्रति रामोक्तिमाह—तथेत्यादिभिः । राघवः सुग्रीवमब्रवीत् ॥ १ ॥

गम्यतां सौम्य किष्किन्धां दुराधर्षां सुरासुरैः । पालयस्व सहामात्यै राज्यं निहतकण्टकम् ॥ २ ॥
अङ्गदं च महाबाहो प्रीत्या परमया युतः । पश्य त्वं हनुमन्तं च नलं च सुमहाबलम् ॥ ३ ॥
सुषेणं श्वशुरं वीरं तारं च बलिनां वरम् । कुमुदं चैव दुर्धर्षं नीलं चैव महाबलम् ॥ ४ ॥
वीरं शतबलिं चैव मैन्दं द्विविदमेव च । गजं गवाक्षं गवयं शरभं च महाबलम् ॥ ५ ॥
ऋक्षराजं च दुर्धर्षं जाम्बवन्तं महाबलम्[1] । पश्य प्रीतिसमायुक्तो गन्धमादनमेव च ॥ ६ ॥
ऋषभं च सुविक्रान्तं प्लवंगं च सुपाटलम् । केसरिं[2] शरभं शुम्भं शङ्खचूडं महाबलम्[3] ॥ ७ ॥
ये ये[4] मे सुमहात्मानो मदर्थे त्यक्तजीविताः । पश्य त्वं प्रीतिसंयुक्तो मा चैषां विप्रियं कृथाः ॥ ८ ॥
एवमुक्त्वा च सुग्रीवमाश्लिष्य च पुनः पुनः । विभीषणमुवाचाथ रामो मधुरया गिरा ॥ ९ ॥
लङ्कां प्रशाधि धर्मेण धर्मज्ञस्त्वं मतो मम । पुरस्य राक्षसानां च भ्रातुर्वैश्रवणस्य[5] च ॥ १० ॥
मा च बुद्धिमधर्मे त्वं कुर्या राजन्कथंचन । बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीम् ॥ ११ ॥
अहं च नित्यशो राजन्सुग्रीवसहितस्त्वया । स्मर्तव्यः परया प्रीत्या गच्छ त्वं विगतज्वरः ॥ १२ ॥
रामस्य भाषितं श्रुत्वा ऋक्षवानरराक्षसाः । साधुसाध्विति काकुत्स्थं प्रशशंसुः पुनःपुनः ॥ १३ ॥
तव बुद्धिर्महाबाहो वीर्यमद्भुतमेव च । माधुर्यं परमं राम स्वयंभोरिव नित्यदा ॥ १४ ॥
तेषामेवं ब्रुवाणानां वानराणां च रक्षसाम् । हनूमान्प्रणतो[6] भूत्वा राघवं वाक्यमब्रवीत् ॥ १५ ॥
स्नेहो मे परमो राजंस्त्वयि तिष्ठतु नित्यदा । भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु ॥ १६ ॥

गो० टी०–तथास्मेत्यादि । तेषामिति भावलक्षणे षष्ठी तेषु वसत्स्विति यावत् ॥ १ ॥

२–९ ] ति० टी०–किष्किन्धां प्रतीति शेषः ॥ २–९ ॥

रा० टी०–तदाकारमाह–गम्यतामित्यादिभिः । महामात्यैर्युक्तस्त्वं राज्यं पालयस्व अत एव किष्किन्धां प्रति गम्यताम् प्रतीत्यध्याहृतम् यदि तु किष्किन्धां राज्यं च पालयस्व अत एव गम्यतामित्यन्वयस्तदा नाध्याहृतिकल्पना ॥ २ ॥

रा० टी०–अंगदमिति । प्रीत्या युक्तस्त्वमंगदं हनुमन्तं च पश्य ॥ ३ ॥

रा० टी०–सुषेणमिति । प्रीतिसमायुक्तस्त्वं सुषेणादीन्पश्य श्लोकचतुष्टयमेकान्वयि ॥ ४–७ ॥

रा० टी०–ये इति । मदर्थे त्यक्तजीविता ये अन्ये च तान्पश्य एषां दर्शनकर्मीभूतानां विप्रियं मा कृथाश्च ॥ ८ ॥

रा० टी०–एवमिति । सुग्रीवमुक्त्वाश्लिष्य च रामो विभीषणमुवाच ॥ ९ ॥

गो० टी०–गम्यतामिति । किष्किन्धां प्रतीति शेषः २–८

१० ] ति० टी०–पुरस्य पुरवर्तिप्राणिनां राक्षसानाम् । वैश्रवणस्य । संमतोऽसीति शेषः ॥ १० ॥

रा० टी०–तदाकारमाह–लङ्कामित्यादिभिः । मम पुरस्य लंकायाश्च राक्षसानां च वैश्रवणस्य च मतोभिमतस्त्वं लंकां धर्मेण प्रशाधि पालयेत्यर्थः ॥ १० ॥

गो० टी०–लङ्कामिति । पुरस्य पुरवर्तिप्राणिनां राक्षसादीनाम् स्वभ्रातुर्वैश्रवणस्य च संमतो ह्यसि परमाप्तोसि । भ्रातुर्वैश्रवणस्य चेति पाठे संमतोसीति शेषः ॥ ९ ॥

११ ] ति० टी०–ध्रुवं चिरकालम् ॥ ११ ॥

रा० टी०–मा चेति । अधर्मे बुद्धिं कथंचन मा कुर्याः हि यतो बुद्धिमन्तः धर्मविषयकबुद्धियुक्ताः राजानः मेदिनीं ध्रुवमश्नन्ति ॥ ११ ॥

गो० टी०–मा चेति । ध्रुवं शाश्वतम् ॥ १०–१२ ॥

१२–१३ ] ति० टी०–अहं चेति । अनेन रावणवत्क्रूरबुद्धिः कदापि न कार्या । तथा सति सुग्रीवादयो रावणमिव त्वामपि नाशयिष्यन्तीति व्यङ्ग्यम् ॥ १२ ॥ १३ ॥

रा० टी०–अहमिति । सुग्रीवसहितोहं त्वया नित्यशः प्रीत्या स्मर्तव्यः विगतज्वरस्त्वं गच्छ लङ्कामिति शेषः ॥ १२ ॥

रा० टी०–रामस्येति । ऋक्षादयः काकुत्स्थं साधुसाध्विति प्रशशंसुः ॥ १३ ॥

१४–१५ ] ति० टी०–अद्भुतं जगदाश्चर्यभूतम् । स्वयंभोरिवानन्तकल्याणगुणस्य भगवतो ब्रह्मण इव ॥ १४ ॥ १५ ॥

रा० टी०–तवेति । हे राम तव बुद्धिप्रभृति स्वयम्भोरिव नित्यदा नित्यमस्तीति शेषः ॥ १४ ॥

रा० टी०–तेषामिति । हनुमान् राघवमब्रवीत् ॥ १५ ॥

गो० टी०–तवेति । अद्भुतं वीर्यं जगदद्भुतकरं शौर्यम् ॥ १३ ॥ १४ ॥

१६ ] ति० टी०–नित्यदा सर्वकाले । स्नेहो नाम प्रियायां

१ इदमर्धं गो. पुस्त. नास्ति । २ जाम्बवन्तं महाबलमिति गो. पाठः । ३ इदमर्धं गो. पुस्त. न दृश्यते । ४ च मे इति गो. रा. पाठः । ५ स्वभ्रातुः संमतो ह्यसाविति गो. पाठः । ६ प्रवण इति गो. पाठः ।

यावद्रामकथा वीर चरिष्यति महीतले। तावच्छरीरे वर्त्स्यन्तु प्राणा मम न संशयः॥ १७॥
यच्चैतच्चरितं दिव्यं कथा ते रघुनन्दन। तन्मयाप्सरसो राम श्रावयेयुर्नरर्षभ॥ १८॥
तच्छ्रुत्वाहं ततो वीर तव चर्यामृतं प्रभो। उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः॥ १९॥
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात्। उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह॥ २०॥
एवमेतत्कपिश्रेष्ठ भविता नात्र संशयः। चरिष्यति कथा यावदेषा लोके च मामिका॥ २१॥
तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा। लोका हि यावत्स्थास्यन्ति तावत्स्थास्यन्ति मे कथाः२२
एकैकस्योपकारस्य प्राणान्दास्यामि ते कपे। शेषस्येहोपकाराणां भवाम ऋणिनो वयम्॥ २३॥
मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे। नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम्॥ २४॥
ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात्स राघवः। वैदूर्यतरलं कण्ठे बबन्ध च हनूमतः॥ २५॥

प्रियस्येव सदा स्मृतिहेतुः। भक्तिर्नाम परलोकगतित्वेनोपास्यत्वबुद्धिः। नित्यदेत्यनेन जलं विना मत्स्यस्येव क्षणमपि तं विना जीवितुमशक्यत्वं सूचितम्। अन्यत्र भावो मा गच्छतु विषयान्तरे इत्यर्थः॥ १६॥

रा० टी०—तदाकारमाह स्नेह इत्यादिभिः मे परमः स्नेहः त्वयि नित्यदा नित्यं तिष्ठतु विषतया अस्तु अत एव मे परमः भावः प्रेम अन्यत्र त्वदतिरिक्ते न गच्छतु अत एव मे भक्तिस्त्वत्कर्मकसेवा नियतास्तु॥ १६॥

गो० टी०—स्नेह इति। स्नेहः सुहृदि प्रीतिः। भक्तिः उत्कृष्टे प्रीतिः॥ १९॥

१७ ] ति० टी०—तावद्वत्स्यन्ति। त्वत्कथाश्रवणपरमामृतास्वादनबलादिति भावः। न तु तदुत्तरमित्याशयः। 'वत्स्यन्तु' इति पाठे वसन्त्वित्यर्थः। आर्षः स्यः। एतेन मुक्तिमप्यनादृत्य त्वत्कथामृतपानमेवाकाङ्क्षितमिति दर्शितम्॥१७॥

रा० टी०—यावदिति। यावन्महीतले तव कथा चरिष्यति तावदेव मम प्राणाः शरीरे वत्स्यन्तु वसन्तु॥ १७॥

गो० टी०—यावदिति। तावच्छरीरे वत्स्यन्ति त्वत्कथामृतरसास्वादबलादिति भावः॥ १६–२०॥

१८ ] ति० टी०—ते तव कथारूपं यदेतद्दिव्यचरितं तदित्यन्वयः॥ १८॥

रा० टी०—यदिति। ते कथारूपं यद्दिव्यं चरितं तत् अप्सरसः मम मह्यं श्रावयेयुः॥ १८॥

१९–२० ] ति० टी०—उत्कण्ठां त्वद्दर्शनविषयाम्१९॥२०

रा० टी०—कथाश्रवणे प्रयोजनमाह—तदिति। तत् अद्भुतं तव चर्यामृतमाचरणरूपपीयूषं श्रुत्वा तां दुस्त्यजामुत्कण्ठां भवद्वियोगजनितदुःखमनिलो मेघलेखामिव हरिष्यामि॥ १९॥

रा० टी०—एवमिति। रामः हनुमन्तं सस्वजे एतदुवाच च॥ २०॥

२१ ] ति० टी०—एवमेतदित्येवंशब्दार्थः—चरिष्यति कथेत्यादि॥ २१॥

२२ ] ति० टी०—एवं च हनुमते भगवताकारनित्यत्वं कल्पस्थायित्वरूपं दत्तमित्याभाति॥ २२॥

रा० टी०—तदाकारमाह—एवमिति। यावल्लोकास्स्थास्यन्ति तावन्मे कथाः स्थास्यन्ति यावन्मामिका कथा लोके चरिष्यति तावत्ते शरीरे असवः स्थास्यन्ति तावत्ते कीर्तिश्च भविता सार्द्धश्लोक एकान्वयि॥ २१॥ २२॥

गो० टी०—एवं शब्दार्थं विवृणोति—लोका हीति२१॥२२

२३ ] ति० टी०—उपकाराणां मध्ये शेषस्येत्यर्थः॥२३॥

रा० टी०—एकैकस्येति। एकैकस्योपकारस्यार्थे प्राणान्दैवादिनिखिलप्रपञ्चहृदयस्थत्वादिभेदेन भिन्नवायून् तत्कृत्यानि देवादिनिखिलप्रपञ्चेन्द्रियकृत्यानि वा एकशेषेणोभयकृत्यानि वा ते दास्यामि त्वदधीनतां प्रापयिष्यामीत्यर्थः एतेन तत्कालादारभ्य देवादिनिखिलप्रपञ्चकृत्यं हनुमदनुमत्यैव भवतीति सूचितम् निखिलप्राणलाभस्तु सामान्योक्तेर्विनिगमनाविरहेण लब्धः रामप्राणानां तु न तेन ग्रहणम् वक्ष्यमाणकार्याणां रामस्य स्वातन्त्र्येण कर्तृत्वानुपपत्तेः उक्तप्रकाराणां मध्ये शेषस्य उर्वरितस्य उपकारस्य ऋणिनो वयं भवामः॥२३॥

२४ ] ति० टी०—प्रत्युपकाराणां पात्रतां नर आपत्स्वायातीत्यनेन प्रत्युपकारार्थिन उपकृतावापत्प्रार्थना भवति सा मे कदापि मा भूदिति व्यङ्ग्यम्॥ २४॥

रा० टी०—मदिति। हे कपे! यत्त्वयोपकृतमकृतप्रत्युपकृतिकोपकरणम् तन्मदङ्गे मद्धृदये एव जीर्णतां यातु सदैव तिष्ठत्वित्यर्थः नतु समर्थत्वादिदानीमेव शोधोपि प्रत्युपकारः कथं न क्रियते इत्यत आह नरः आपत्स्वेव प्रत्युपकाराणां पात्रतां याति एतेन हनुमतः सर्वदैव आपदभावस्सूचितः॥२४॥

२५ ] ति० टी०—कण्ठान्मुच्य। स्वीयाद्विसृज्येत्यर्थः। तरलो हारमध्यमणिः॥ २५॥

रा० टी०—तत इति। राघवः वैदूर्यं तरलं मध्यमणिः यस्य तं हारं कंठान्मुच्य मुक्त्वा हनुमतः कण्ठे बबन्ध॥२५॥

गो० टी०—तत इति। तरलो हारमध्यगो मणिः॥२३॥

१ वत्स्यन्तीति गो. पाठः। २ नामेति गो. पाठ.। ३ स्थास्यति मे कथेति गो. पाठः। ४ इदमर्धमेतदग्रिमार्धं च गो. पुस्तके नावलोक्यते।

तेनोरसि निबद्धेन हारेण महता कपिः । रराज हेमशैलेन्द्रश्चन्द्रेणाक्रान्तमस्तकः ।। २६ ।।
श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः । प्रणम्य शिरसा पादौ निर्जग्मुस्ते महाबलाः ।। २७ ।।
सुग्रीवः स च रामेण निरन्तरमुरोगतः । विभीषणश्च धर्मात्मा सर्वे ते बाष्पविक्लवाः ।। २८ ।।
सर्वे च ते बाष्पकलाः साश्रुनेत्रा विचेतसः । संमूढा इव दुःखेन त्यजन्तो राघवं तदा ।। २९ ।।
कृतप्रसादास्तेनैवं राघवेण महात्मना । जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ।। ३० ।।
ततस्तु ते राक्षसऋक्षवानराः प्रणम्य रामं रघुवंशवर्धनम् ।
वियोगजाश्रुप्रतिपूर्णलोचनाः प्रतिप्रयातास्तु यथा निवासिनः ।। ३१ ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चत्वारिंशः सर्गः ।। ४० ।।

---

## एकचत्वारिंशः सर्गः ।

गतेषु सर्वेषु कुबेरानुज्ञया पुनरागतं पुष्पकं गन्धपुष्पादिभिश्चार्चयित्वा प्राप्तेऽवसरे चिन्तितं त्वमायाहीत्यादिश्य यथेच्छं गच्छेति तत्प्रेष्य भ्रातृभिः सह सुखमालपन्नुवास कंचित्कालं राघवः ।

विसृज्य च महाबाहुर्ऋक्षवानरराक्षसान् । भ्रातृभिः सहितो रामः प्रमुमोद सुखं सुखी ।। १ ।।

---

२६ ] ति० टी०–हेमशैलेन्द्रो मेरुश्चन्द्रेणाक्रान्तमस्तकस्तादृशः पर्वतो यथा आमूलशिखरं तत्किरणैर्व्याप्तो भवति तथा हनुमांस्तद्रत्नकिरणव्याप्तो जात इत्यर्थः ॥ २६ ॥

रा० टी०–तेनेति । उरसि बद्धेन हारेण महाकपिः रराज तत्र दृष्टान्तः चन्द्रेणाक्रान्तं युक्तं मस्तकं यस्य स हेमशैलेन्द्रः सुमेरुरिव हेमशैलेन्द्रशब्दः आचारक्विबन्तप्रकृतिककर्तृक्विबन्तः सामर्थ्यादेकदेशेऽन्वयः पुरोहितोयं राजेत्यादाविव विना वर्ति वत्यर्थं गमयतीति न्यायस्वीकारे तु न क्विबन्तकल्पना २६

गो० टी०–तेनेति । हेमशैलेन्द्रः मेरुः । चन्द्रेण चन्द्रकिरणैः आक्रान्तमस्तकः आक्रान्तकर्णप्रदेश इत्यर्थः॥२४॥२५॥

२७ ] ति० टी०–श्रुत्वेति । हनुमदुद्देश्यकमेकैकस्येत्यादि वाक्यम् ॥ २७ ॥

रा० टी०–श्रुत्वेति । वानरा राघवस्य पादौ प्रणम्य निर्जग्मुः ॥ २७ ॥

२८ ] ति० टी०–निरन्तरमुरोगतो गाढं परिष्वक्तः॥२८॥

रा० टी०–सुग्रीव इति । सुग्रीवः विभीषणश्च रामेण रामस्य निरन्तरमुरोगतोऽभवदिति शेषः अत एव सर्वे वानराः बाष्पविक्लवाः बभूवुरिति शेषः ॥ २८ ॥

गो० टी०–सुग्रीव इति । निरन्तरम् उरोगत इति गाढपरिष्वक्त इत्यर्थः ॥ २६ ॥

२९ ] ति० टी०–बाष्पकलाः कण्ठस्थ बाष्परुद्धत्वेनाव्यक्तभाषिणः, तत एव दुःखातिशयेन साश्रुनेत्राः । विचेतसः शून्यमनसः, अतः संमूढा इव मूर्छिता इव बभूवुरिति शेषः २९

रा० टी०–सर्व इति । राघवं त्यजन्तः अत एव बाष्पाणां कला येषामत एव साश्रुनेत्राः सर्वे वानराः दुःखेन वियोगजनितखेदेन सम्मूढा इव विचेतसो बभूवुरिति शेषः ॥ २९ ॥

गो० टी०–सर्व इति । विचेतसः वियोगखिन्नचेतसः२७

३०–३१ ] ति० टी०–देहं त्यजन्देहीव रामवियोगखिन्नाः अभूवन्निति शेषः । शरीरात्माभिमानिनां देहत्यागेनेव तेषां रामविश्लेषेण खेदोऽभूदित्यर्थः ॥ ३१ ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

रा० टी०–कृतेति । देहं त्यजन्देहीव सर्वे सुग्रीवादयः स्वं स्वं गृहं जग्मुः ॥ ३० ॥

रा० टी०–उपसंहरन्नाह–तत इति । यथा यथावन्निवासिनः रामसमीपे निवसनशीला अपि राक्षसादयः वियोगजाश्रुप्रतिपूर्णलोचनास्सन्तः रामं प्रणम्य प्रतिप्रयाताः स्वं स्वं पुरमिति शेषः ॥ ३१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

गो० टी०–कृतेति । देहं त्यजन् देहीव रामवियोगखिन्ना इत्यर्थः । युद्धकाण्डान्ते वानरादीनां विसर्जनोक्तिः काण्डसमापनायात्रैव विसर्जनं तत्रोक्तमिति मन्तव्यम् ॥ २८ ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चत्वारिंशः सर्गः ॥ ४० ॥

---

१ ] ति० टी०–अथ धनदप्रेषितपुष्पकस्य संपूज्य पुनरिच्छोपस्थापनतया विसर्जनम्—विसृज्येति ॥ १ ॥

रा० टी०–वानरविसर्जनानन्तरकालिकं वृत्तमाह–विसृज्येत्यादिभिः । सुखी नित्यसुखविशिष्टो रामः ऋक्षादीन्विसृज्य प्रमुमोद ऋक्षादयः स्वस्वगृहे स्वस्वदारादयवाप्त्या सुखं मोक्ष्यन्ते इति बुद्ध्या प्रमोदं प्रापेत्यर्थः एतेन रामस्य भक्तसुखदर्शित्वं व्यक्तम् ॥ १ ॥

अथापराह्णसमये भ्रातृभिः सह राघवः। शुश्राव मधुरां वाणीमन्तरिक्षान्महाप्रभुः॥ २ ॥
सौम्य राम निरीक्षस्व सौम्येन वदनेन माम्। कुबेरभवनात्प्राप्तं विद्धि मां पुष्पकं प्रभो॥ ३ ॥
तव शासनमाज्ञाय गतोऽस्मि भवनं प्रति। उपस्थातुं नरश्रेष्ठ स च मां प्रत्यभाषत॥ ४ ॥
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना। निहत्य युधि दुर्धर्षं रावणं राक्षसेश्वरम्॥ ५ ॥
ममापि परमा प्रीतिर्हते तस्मिन्दुरात्मनि। रावणे सगणे चैव सपुत्रे सहबान्धवे॥ ६ ॥
स त्वं रामेण लङ्कायां निर्जितः परमात्मना। वह सौम्य त्वमेव त्वमहमाज्ञापयामि ते॥ ७ ॥
परमो ह्येष मे कामो यत्त्वं राघवनन्दनम्। वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः॥ ८ ॥
सोऽहं शासनमाज्ञाय धनदस्य महात्मनः। त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीच्छ मामू॥ ९ ॥
अधृष्यः सर्वभूतानां सर्वेषां धनदाज्ञया। चराम्यहं प्रभावेण तवाज्ञां परिपालयन्॥ १० ॥
एवमुक्तस्तदा रामः पुष्पकेण महाबलः। उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतम्॥ ११ ॥
यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक। आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत्॥ १२ ॥
लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः। पूजयित्वा महाबाहू राघवः पुष्पकं तदा॥ १३ ॥

गो० टी० विसृज्येत्यादि । प्रमुमोद सुखं सुखी। स्वतः सुखी रामः आश्रितदुःखनिवृत्त्या सुखं प्रमुमोद । अविच्छिन्नप्रमोदमगमदित्यर्थः। अत्र प्रमुमोदेति दकारो गायत्र्यक्षरम् ॥ १ ॥

२ ] ति० टी०-अन्तरिक्षात् । अन्तरिक्षचराभिःसृतामित्यर्थः ॥ २ ॥

रा० टी०-अथेति । राघवः अपराह्णसमये अन्तरिक्षादुदीरितां वाणीं शुश्राव ॥ २ ॥

गो० टी०-अथेति । अन्तरिक्षात्प्रभाषिताम् अन्तरिक्षगतेनोक्ताम् । पुष्पकाभिमानिदेवतयोक्तामित्यर्थः । अन्तरिक्षाद्धिनिस्सृतामिति च पाठः ॥ २-७ ॥

३-४] ति० टी०-पुष्पकं विद्धि । पुष्पकाधिष्ठातृदेवतायाः अयं वादः ॥ ३ ॥ ४ ॥

रा० टी०-वाण्याकारमाह-सौम्येत्यादिभिः । कुबेरभवनात्प्राप्तं पुष्पकं मां विद्धि अतः सौम्येन वदनेन उपलक्षितस्त्वं मां निरीक्षस्व ॥ ३ ॥

रा० टी०-तवेति । तव शासनमाज्ञामाज्ञाय ज्ञात्वा भवनं प्रत्यहं गतोस्मि स धनदस्तु उपस्थातुं त्वत्समीपे निवसितुं मां प्रत्यभाषत ॥ ४ ॥

५-७] ति०टी०-निर्जितः। अतस्त्वमेव वहेति शेषः ५-७

रा० टी०-तद्भाषणाकारमाह-निर्जित इत्यादिभिः। राघवेण रावणं निहत्य त्वं निर्जितोसि ॥ ५ ॥

रा० टी०-ममेति । रावणे हते सति ममापि परमा प्रीतिरभवदिति शेषः ॥ ६ ॥

रा० टी०-स इति । स रामेण निर्जितस्त्वं तं राममेव वह इत्यहमाज्ञापयामि ॥ ७ ॥

८-११ ] ति० टी०-किं च मद्वहनादपि सर्वलोकप्रियरामवहनं मम परमप्रियमित्याह—परम इति । लोकस्य भूरायशेषाभिमतलोकप्रापणस्य । संयानं समीचीनयानभूतस्त्वं राघवनन्दनं वहेरिति यदेष मे परमः कामः, अतस्त्वं गच्छेति संबन्धः ॥ ८-११ ॥

रा० टी०-परम इति । लोकस्य संयानं सकलभुवनाश्रयं राघवनन्दनं यत्त्वं वहेः एष मे मम परमः काम इच्छा अतः त्वं गच्छस्व ॥ ८ ॥

रा० टी०-स इति । धनदस्य शासनमाज्ञाय अहं त्वत्सकाशमनुप्राप्तः अतः निर्विशंकस्त्वं मां प्रतीच्छ ॥ ९ ॥

रा० टी०-अधृष्य इति । प्रभावेण स्वतेजसा सर्वभूतानामधृष्योहं धनदाज्ञया तवाज्ञां परिपालयन्सन्सर्वेषां लोकानां मध्ये चरामि चरिष्यामि ॥ १० ॥

रा० टी०-एवमिति । रामः पुष्पकमुवाच ॥ ११ ॥

गो० टी०-परम इति । लोकस्य संयानमिति । लोकसंचरणमित्यर्थः ॥ ८-१३ ॥

१२-१३ ] ति० टी०-वृत्तदोषः सद्व्यवहारातिक्रमदोषः ॥ १२ ॥ १३ ॥

रा० टी०-तदाकारमाह-यदीति । यद्येवं धनदाज्ञा तर्हि ते स्वागतमस्तु तत्र हेतुः धनेशस्यानुकूल्याद्धेतोः नोस्माकं वृत्तदोषः सद्व्यवहारातिक्रमरूपोऽधर्मो न भवेत् ॥ १२ ॥

रा० टी०-लाजैरिति । राघवः लाजादिभिः पुष्पकं पूजयित्वा यदाहं स्मरे स्वामिति शेषः तदा त्वमागच्छ अतस्त्वया गम्यताम् यथेच्छं विचर्यतामित्युवाच सार्धश्लोक एकान्वयी ॥ १३ ॥

१ प्रभाषितामिति गो. पाठः । २ प्रतीच्छेति गो. पाठः ।

गम्यतामिति चोवाच आगच्छ त्वं स्मरे यदा । सिद्धानां च गतौ सौम्य मा विषादेन योजय ॥ १४ ॥
प्रतिघातश्च ते मा भूद्यथेष्टं गच्छतो दिशः । एवमस्त्विति रामेण पूजयित्वा विसर्जितम् ॥ १५ ॥
अभिप्रेतां दिशं तस्मात्प्रायात्तत्पुष्पकं तदा । एवमन्तर्हिते तस्मिन्पुष्पके सुकृतात्मनि ॥ १६ ॥
भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनम् । विबुधात्मनि दृश्यन्ते त्वयि वीर प्रशासति ॥ १७ ॥
अमानुषाणि सत्त्वानि व्याहृतानि मुहुर्मुहुः । अनामयश्च मर्त्यानां साग्रो मासो गतो ह्ययम् ॥ १८ ॥
जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव । अरोगप्रसवा नार्यो वपुष्मन्तो हि मानवाः ॥ १९ ॥
हर्षश्चाभ्यधिको राजञ्जनस्य पुरवासिनः । काले वर्षति पर्जन्यः पातयन्नमृतं पयः ॥ २० ॥
वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः । ईदृशो नश्चिरं राजा भवेदिति नरेश्वरः ॥ २१ ॥
कथयन्ति पुरे राजन्पौरजानपदास्तथा । एता वाचः सुमधुरा भरतेन समीरिताः ॥
श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तमः । ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१४-१५ ] ति० टी०—स्मरे स्मरामि । हे सौम्य, सिद्धानां गतौ व्योममार्गे । विषादेनास्मद्वियोगदुःखेन मा योजय आत्मानमिति शेषः । सुखमास्वेति तात्पर्यम् ॥ १४-१५ ॥

रा० टी०—सिद्धानामिति । गतौ स्वगमने सिद्धानां गगनस्थसिद्धान् विषादेन मा योजय स्वगमनेन सिद्धान् न पीडयेत्यर्थः । अत एव यथेष्टं दिशो गच्छतस्ते प्रतिघातः शापेन विघातो माभूत् ॥ १४ ॥

रा० टी०—एवमिति । रामेण पूजयित्वा विसर्जितं पुष्पकमस्त्वित्युक्त्वा तस्माद्रामसमीपादभिप्रेतां दिशं प्रायात्१५

गो० टी०—गम्यतामिति । स्मरे स्मरामि । सिद्धानां च गतौ आकाशमार्गे । आत्मानं विषादेन अस्मद्वियोगदुःखेन मा योजय । विशृङ्खलतया गतदुःखः सुप्रतिष्ठितः सुखमास्स्वेत्यर्थः सिद्धानां गतौ मा माम् अविषादेन अश्रमेण योजय प्रापयेति वार्थः ॥ १४-१६ ॥

१६ ] ति० टी०—पुष्पकं पुष्पमिव लघ्विति पुष्पकम् । संज्ञायां कन् ॥ १६ ॥

रा० टी०—एवमिति । सुकृतः अतिप्रयत्नेन निर्मितः आत्मा शरीरं यस्य किंच सुकृतैः अतिपुण्यवद्भिरेव युक्तः आत्मा यस्य तस्मिन्पुष्पके अन्तर्हिते सति भरतो रघुनन्दनमुवाच ॥ १६ ॥

१७ ] ति० टी०—विबुधात्मनि देवमूर्तौ ॥ १७ ॥

रा० टी०—तदाकारमाह—विबुधेत्यादिभिः । विबुधानां देवानामपि आत्मनि नियन्तरि त्वयि प्रशासति सति अमानुषाण्यपि सत्त्वानि मुहुर्मुहुर्व्याहृतानि मनुष्यवदाभाषमाणानि दृश्यन्ते एतेन रामप्रभावस्य अघटितघटनापटीयस्त्वं सूचितम् ॥ १७ ॥

गो० टी०—विविधेति । विविधात्मनि नानारूपे । चित्र इत्यर्थः । अमानुषाणां सत्त्वानां पुष्पकादीनामित्यर्थः ॥ १७ ॥

१८ ] ति० टी०—कानि दृश्यन्ते तदाह—अमानुषाणीति । सत्त्वानि पुष्पकादीनि । व्याहृतानि । मत्वर्थीयाजन्तम् । व्याहारवन्ति । साग्रो मास इति जातावेकवचनम् । मासा इत्यर्थः ॥ १८ ॥

रा० टी०—अनामय इति । साग्रः किंचिदधिकः योयं मासः भवदभिषेकादारभ्य मासपरिमितकालो गतः तस्मिन्काले जीर्णानामपि मर्त्यानां मरणधर्माणामनामयः रोगराहित्यमस्तीति शेषः मृत्युश्च नायाति इयं भरतोक्तिः वानरस्थितिकाले एव बोध्या अत एव साग्रो मासो गत इति न विरुध्यते ॥ १८ ॥

गो० टी०—अनामय इति । साग्रो मासो गत इति । अभिषेकानन्तरं साग्रो मासो गतः । तावन्मात्रेणानामयादिगुणप्रादुर्भाव इत्याश्चर्यमित्यर्थः । अनेन पुष्पकागमं मासाभ्यन्तर एव तत्कालवृत्तान्तः भरतेन निदर्शित इत्यवगम्यते । पुनः फाल्गुनमासप्राप्तेः पूर्वमुक्तत्वात् ॥ १८ ॥

१९-२२ ] ति० टी०—तावन्मात्रेणैव मर्त्यानामनामयादिगुणप्रादुर्भाव इत्याह—जीर्णानामिति । वपुष्मन्तो हृष्टपुष्टवपुर्युक्ताः ॥ १९-२२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

रा० टी०—अरोगेति । नार्यः अरोगप्रसवाः सन्ति मानवाः वपुष्मन्तः प्रशस्तशरीरवन्तस्सन्ति अत एव हर्षोऽधिकोस्ति१९

रा० टी०—काल इति । पर्जन्यः काले एव वर्षति॥२०॥

रा० टी०—ईदृश इति । ईदृशो नो राजा चिरं भवेत् इति पौरादयः कथयन्ति ॥ २१ ॥

रा० टी०—एता इति । रामो मुदा युक्तो बभूव ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

१ विविधेति गो. पाठः । २ वध्यन्तं गो. पु. । ३ सत्वानामिति गो. पाठः । ४ मनश्चर इति गो. पाठः ।

## द्विचत्वारिंशः सर्गः ।

रामोऽयोध्यानिकटवर्त्यशोकवनिकां प्रविश्य सीतया विहरन् शिशिरं नीत्वा जानक्या गर्भचिन्हानि च वीक्ष्य तां प्रशस्य देवो किमिष्टं तवापत्यकालोयमतः पूरणीयं हि मया यद्यदपेक्षसे इत्यवोचत् सा तु नास्ति किमपि प्रार्थनीयमथापि मूलफलाशिनां मुनीनामाश्रमे रात्रिमेकामपि वस्तुमिच्छामीत्यब्रवीत् दाशरथिस्तु श्व एव तत्करिष्यामीत्यभाषत ।

स विसृज्य ततो रामः पुष्पकं हेमभूषितम् । प्रविवेश महाबाहुरशोकवनिकां तदा ॥ १ ॥
चन्दनागुरुचूतैश्च तुङ्गकालेयकैरपि । देवदारुवनैश्चापि समन्तादुपशोभिताम् ॥ २ ॥
चम्पकागुरुपुंनागमधूकपनसासनैः । शोभितां पारिजातैश्च विधूमज्वलनप्रभैः ॥ ३ ॥
लोध्रनीपार्जुनैर्नागैः सप्तपर्णातिमुक्तकैः । मन्दारकदलीगुल्मलताजालसमावृताम् ॥ ४ ॥
प्रियङ्गुभिः कदम्बैश्च तथा च बकुलैरपि । जम्बूभिर्दाडिमैश्चैव कोविदारैश्च शोभिताम् ॥ ५ ॥
सर्वदा कुसुमै रम्यैः फलवद्भिर्मनोरमैः । दिव्यगन्धरसोपेतैस्तरुणाङ्कुरपल्लवैः ॥ ६ ॥
तथैव तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः । चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसंकुलैः ॥ ७ ॥
कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः । शोभितां शतशश्चित्रां चूतवृक्षावतंसकैः ॥ ८ ॥
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः । नीलाञ्जननिभाश्चान्ये भान्ति तत्र[2] स्म पादपाः ॥ ९ ॥
सुरभीणि च पुष्पाणि माल्यानि विविधानि च । दीर्घिका विविधाकाराः पूर्णाः परमवारिणा ॥१०॥

गो० टी०—अरोगेति । वपुष्मन्तः हृष्टपुष्टवपुर्युक्ताः । सुखी सुखमिति वक्ष्यमाणसर्गकथानुवादसंग्रहः ॥ १९–२२ ॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकचत्वारिंशः सर्गः ॥ ४१ ॥

१ ] ति० टी०—स इति । अशोकवनिका नाम महाप्रभूणामन्तःपुरैः सह विहारयोग्यमुपवनम् ॥ १ ॥

रा० टी०—पुष्पकविसर्जनानन्तरकालिकं रामवृत्तान्तमाह—स इत्यादिभिः । रामः चन्दनादिभिरुपशोभितां चंपकादिभिश्च शोभितां मंदारादिजालैः समावृतां प्रियङ्गुप्रभृतिभिः शोभितां सर्वदा नित्यं कुसुमानि येषु तैर्दिव्यैस्तरुभिः शिल्पिभिः परिकल्पितैश्च तरुभिः कोकिलादिपक्षिभिश्च शोभितां शतशः चूतवृक्षावतंसकैश्चित्रामशोकवनिकां रामः प्रविवेश श्लोकाष्टकमेकान्वयि ॥ १–८ ॥

गो० टी०—स विसृज्येति । अशोकवनिकामन्तःपुरगतं लीलोद्यानम् ॥ १ ॥

२ ] ति० टी०—तुङ्गः पुंनागविशेषः । कालेयकं रक्तचन्दनम् ॥ २ ॥

३ ] ति० टी०—असनः सर्जः ॥ ३ ॥

४ ] ति० टी०—नीपः कदम्बः । अर्जुनः ककुभः । नागो नागकेसरः ॥ ४ ॥

५ ] ति० टी०—कदम्बो धूलीकदम्बः ॥ ५ ॥

६ ] ति० टी०—सर्वदा कुसुमैर्नित्यं कुसुमयुक्तैः । दिव्यगन्धरसोपेतैर्दिव्यगन्धरसपुष्पफलयुतैः ॥ ६ ॥

गो० टी०—चन्दनेति । तुङ्गः पुन्नागविशेषः कालेयो रक्तचन्दनवृक्षः ॥ २–६ ॥

७ ] ति० टी०—दिव्यैः शिल्पिभिर्वृक्षारोपणादिशिल्पवद्भिः ॥ ७ ॥

गो० टी०—तथैवेति । दिव्यैः शिल्पिभिरिति । ऋतुभिरित्यर्थः । दोहलकादिभिर्वा ॥ ७ ॥

८–९ ] ति० टी०—चूतवृक्षपुष्परजोऽवतंसभूतं येषां तैः पक्षिभिः ॥ ८ ॥ ९ ॥

गो० टी०—कोकिलैरिति । चूतवृक्षावतंसकैः चूतवृक्षाग्रस्थैरित्यर्थः ॥ ८–१० ॥

रा० टी०—शातकुम्भेति । केचित्पादपाः शातकुम्भनिभाः सुवर्णसदृशाः तत्र अशोकवनिकायां भान्ति स्म ॥ ९ ॥

१० ] ति० टी०—माल्यानि पुष्पगुच्छाः ॥ १० ॥

रा० टी०—सुरभीणीति । माल्यानि मालाभ्यो हितानि पुष्पाणि सन्तीति शेषः अर्द्धं पृथक्—दीर्घिका इति । माणिक्यैः कृतानि सोपानानि यासां स्फटिकाः स्फटिकमयाः अन्तरकुट्टिमाः मध्यनिबद्धभूमयो यासां फुल्लानि पद्मोत्पलवनानि यासां दात्यूहशुकैः संघुष्टाः पुष्पशबलैः तीरजैस्तरुभिरुपशोभिताः विविधाकारैः प्राकारैः शिलातैलश्च शोभिताः विविधाकाराः परमवारिणा पूर्णाः दीर्घिका वाप्यः सन्तीति शेषः अर्द्धपट्कमेकान्वयि ॥ १०–१२ ॥

रा० टी०—तत्रेति । तत्र वापीनां समीपे वनोद्देशे वनैकदेशे वैदूर्यमणिसन्निभैः शाद्वलैः हरिततृणैः परमोपेतां पुष्पि-

१ अशोकेति गो. पाठः । २ तत्रयेति गो. पाठः ।

माणिक्यकृतसोपानाः स्फाटिकान्तरकुट्टिमाः । फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ ११ ॥
दात्यूहशुकसंघुष्टा हंससारसनादिताः । तरुभिः पुष्पशबलैस्तीरजैरुपशोभिताः ॥ १२ ॥
प्राकारैर्विविधाकारैः शोभिताश्च शिलातलैः । तत्रैव च वनोद्देशे वैदूर्यमणिसंनिभैः ॥ १३ ॥
शाद्वलैः परमोपेतां पुष्पितद्रुमकाननाम् । तत्र संघर्षजातानां वृक्षाणां पुष्पशालिनाम् ॥ १४ ॥
प्रस्तराः पुष्पशबला नभस्तारागणैरिव । नन्दनं हि यथेन्द्रस्य ब्राह्मं चैत्ररथं यथा ॥ १५ ॥
तथाभूतं हि रामस्य काननं संनिवेशनम् । बह्वासनगृहोपेतां लतासनैसमावृताम् ॥ १६ ॥
अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः । आसने च शुभाकारे पुष्पप्रकरभूषिते ॥ १७ ॥
कुशास्तरणसंस्तीर्णे रामः संनिषसाद ह । सीतामादाय हस्तेन मधुमैरेयकं शुचि ॥ १८ ॥
पाययामास काकुत्स्थः शचीमिव पुरंदरः । मांसानि च सुमृष्टानि फलानि विविधानि च ॥ १९ ॥
रामस्याभ्यवहारार्थं किंकरास्तूर्णमाहरन् । उपानृत्यंश्च राजानं नृत्यगीतविशारदाः ॥ २० ॥

---

तद्रुमाणि काननानि अवान्तरवनानि यस्याः तामशोकवनिकां ददर्शेति शेषः ॥ १३ ॥

११-१३ ] ति० टी०-स्फाटिकेति । स्फटिकरत्ननिबद्धान्तरे मध्ये कुट्टिमा बद्धभूमिर्येषु ताः ॥ ११-१३ ॥

गो० टी०-माणिक्येति । स्फाटिकान्तरकुट्टिमाः स्फटिकमयसोपानप्रान्तस्नानार्हाः निबद्धभूमयः । अन्यथा सर्वत्रान्तरे स्फटिककुट्टिमत्वे पद्माद्युत्पत्तिविरोधात् ॥ ११-१३ ॥

१४ ] ति० टी०-परमोपेतामत्यन्तसंयुक्ताम् । संघर्षात्स्पर्धया जातानां जातपुष्पाणाम् ॥ १४ ॥

रा० टी०-तत्रेति । तत्र तस्मिन्प्रदेशे संघर्षः परस्परं संश्लेषो जातो येषां तेषाम् पुष्पशालिनां वृक्षाणां पुष्पैः शबलाः प्रस्तराः तारागणैर्नभ इव बभूवुरिति शेषः अर्द्धद्वयमेकान्वयि ॥ १४ ॥

गो० टी०-शाद्वलैरिति । परमोपेताम् अत्यन्तसंयुक्ताम् । संघर्षजातानां स्पर्धयैव जातानाम् । जातपुष्पाणामित्यर्थः ॥ १४ ॥

१५ ] ति० टी०-प्रस्तराः पाषाणाः । पुष्पैर्नानावर्णैर्वृक्षेभ्यः पतितैः । शबलाः शबलवर्णाः प्रस्तरास्तारागणैर्नभ इव रेजुः । ब्राह्मं ब्रह्मनिर्मितम् । चैत्ररथं कुबेरस्य ॥ १५ ॥

रा० टी०-नन्दनमिति । समीचीनानि निवेशनानि वेश्मानि यस्मिंस्तत् । रामस्य काननं नन्दनादि यथा तथाभूतमस्तीति शेषः ॥ १६ ॥

गो० टी०-प्रस्तरा इति । प्रस्तराः वृक्षमूलेषु शयनार्थं स्थापिताः श्लक्ष्णशिलाः । ब्राह्मं ब्रह्मनिर्मितम् । सन्निवेशनं समीचीनसंस्थानोपेतम् ॥ १५ ॥

१६-१७ ] ति० टी०-संनिवेशनं समीचीनसंस्थानोपेतम् । बह्वासनग्रहोपेतां बहूनामवस्थानोचितगृहयुतां लतासनसमावृतां लतानामासनं परिक्षेपो येषु तैर्लतासनैर्लतागृहैः समावृतामुपेताम् ॥ १६ ॥ १७ ॥

रा० टी०-बह्विति । बहूनि आसनानि येषु तैर्गृहैरुपेतां युक्ताम् लतानामासनैः विस्तारैस्समावृतामशोकवनिकां रामः प्रविश्य पुष्पाणां प्रकरैस्समूहैः भूषिते कुशरूपास्तरणेन संस्तीर्णे शुभाकारे आसने रामस्सन्निषसाद अर्द्धचतुष्टयमेकान्वयि १६।१७

गो० टी०-बह्विति । बह्वासनगृहोपेताम् । अनेकावस्थानयोग्यगृहोपेतामित्यर्थः । लतागृहसमावृतां लतामयगृहसमावृताम् ॥ १६ ॥

गो० टी०-आसन इति । कुशास्तरणसंवीते उपर्यास्तरणावृते ॥ १७ ॥

१८-१९ ] ति० टी०-कुशास्तरणं नामोपर्यास्तरणम् । मैरेयकं मधु मैरेयकसंज्ञकं मधु मद्यम् । मैरेयमाधवो धात्रीधातकीगुडवारिभिः इति वैजयन्ती ॥ १८ ॥ १९ ॥

रा० टी०-सीतामिति । काकुत्स्थो रामो मैरेयकं मद्यमिव मादकं मधु पुष्परसं हस्तेनादाय सीतां पाययामास ॥ १८ ॥

रा० टी०-मांसानीति । किंकराः मांसानि राज्यभोग्यवस्तूनि शाल्योदनादीनि फलानि च रामस्याभ्यवहारार्थमाहरन् ॥ १९ ॥

गो० टी०-सीतामिति । मैरेयकं धातकीगुडमिश्रवारिभिः कृतं मद्यम् । मैरेयमासवे धात्रीधातकीगुडवारिभिरिति वैजयन्ती ॥ १८ ॥ १९ ॥

२० ] ति० टी०-राजानमुपानृत्यन्राजसमीपेऽनृत्यन् २०

रा० टी०-उपेति । किन्नराभिः परिवारिता अप्सरोगणसंघाः राजानं राममुपानृत्यन्त ॥ २० ॥

गो० टी०-उपानृत्यन्निति । उपनृत्यन्तीति वा पाठः । राजानमिति । राजानमुप राज्ञः समीपे । पानवशं पानजमदवशम् ॥ २०-२३ ॥

---

१ स्फटिकेति गो. रा. पाठः । २ बह्विश्चेति गो. पाठः । ३ गृहैति गो. पाठः ।

अप्सरोरगसङ्घाश्च[1] किंनरीपरिवारिताः । दक्षिणा[2] रूपवत्यश्च स्त्रियः पानवशं गताः ॥ २१ ॥
उपानृत्यन्त[3] काकुत्स्थं नृत्यगीतविशारदाः । मनोभिरामा रामास्ता रामो रमयतां वरः ॥ २२ ॥
रमयामास धर्मात्मा नित्यं परमभूषिताः[4] । स तया सीतया सार्धमासीनो विरराज ह ॥ २३ ॥
अरुन्धत्या इवासीनो[5] वसिष्ठ इव तेजसा । एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम् ॥ २४ ॥
रमयामास वैदेहीमहन्यहनि देववत् । तथा तयोर्विहरतोः सीताराघवयोश्चिरम् ॥ २५ ॥
अत्यक्रामच्छुभः कालः शैशिरो भोगदः सदा । [ दशवर्षसहस्राणि[6] गतानि सुमहात्मनोः ॥ ]
प्राप्तयोर्विविधान्भोगानतीतः शिशिरागमः । ॥ २६ ॥
पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित् । शेषं दिवसभागार्धमन्तःपुरगतोऽभवत् ॥ २७ ॥
सीतापि देवकार्याणि कृत्वा पौर्वाह्णिकानि वै । श्वश्रूणामकरोत्पूजां सर्वासामविशेषतः ॥ २८ ॥
अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा । त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची ॥ २९ ॥
दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् । प्रहर्षमतुलं लेभे साधुसाध्विति चाब्रवीत् ॥ ३० ॥

---

२१-२२ ] ति० टी०-दक्षिणाः कुशलाः । पानवशं गताः पानजमदवशं गताः ॥ २१ ॥ २२ ॥

२३-२५ ] ति० टी०-रमयामास तोषयामास २३-२५

रा० टी०-दक्षिणा इति । नृत्यगीतविशारदाः पानस्य मादकपुष्परसस्य वशं गताः दक्षिणाः दक्षिणदेशोद्भवाः स्त्रियः उपानृत्यन्त ॥ २१ ॥

रा० टी०-मन इति । सीतायाः सार्धमासीनो रामः ताः नृत्यकर्त्रीः अप्सरःप्रभृतीः रमयामास परस्परं विहर्तुं प्रेरयामास अरुंधत्या सहासीनो वशिष्ठ इव विरराज च अर्धचतुष्टयमेकान्वयि ॥ २२ ॥ २३ ॥

रा० टी०-एवमिति । मुदा युक्तो रामः एवमनेन प्रकारेण अहन्यहनि सीतां रमयामास ॥ २४ ॥

रा० टी०-तथेति । सीताराघवयोर्विहरतोस्सतोः सदा सर्वकालं भोगप्रदः शैशिरः कालः अत्यक्रामत् ॥ २५ ॥

गो० टी०-तथेति । शिशिरः शुभोत्यक्रामदिति । पुनश्च संवत्सरोतीत इत्यर्थः । वानरादिसुहृत्संलापादिना क्रीडावसराभावात्तैः सह एकसंवत्सरो गतः । तद्विसर्जनानन्तरं क्रीडया पुनरेकः संवत्सरो गतः । तथा चाभिषेकानन्तरं वर्षद्वयं जातम् ॥ २४ ॥ २५ ॥

२७-३० ] ति० टी०-'सीताराघवयोश्चिरम्' इत्यनन्तरम् 'अत्यक्रामच्छुभः कालः शैशिरो भोगदः सदा' इत्येव श्लोकः । वानराणां गमनोत्तरं पुनश्च संवत्सरोऽतीत इति कतकव्याख्यानात् । 'दशवर्षसहस्राणि गतानि सुमहात्मनोः' इति प्रक्षिप्तमिति गम्यते । 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इति वाल्मीकिशापाच्च । सीतात्यागोत्तरमश्वमेधप्रवृत्त्या तदन्ते 'दशवर्षसहस्राणि वाजिमेधानथाकरोत्' इति वाल्मीकयुक्तेश्च । यद्वा वर्षशब्दो दिनपरः । विवाहोत्तरं तावन्ति गतानि द्वादशादधिकमयोध्यायां चतुर्दश वने एकं पुनरयोध्यायामित्येवं किंचिदधिकसप्तविंशतिर्गतानीति बोध्यम् । पूर्वाह्णे द्विधाभागेनेदम् । तदाह-शेषं दिवसभागार्धमिति । अवशिष्टमर्धमित्यर्थः ॥ २७-३० ॥

रा० टी०-दशेति । शिशिरे आगमः अत्यन्तप्राप्तिर्यस्य स भोगः यदा अतीतः तदा विविधान् भोगान् प्राप्तयोः सीतारामयोर्दश वर्षसहस्राणि त्रिशङ्कुर्षसहस्राणीत्यर्थः गतानि एतेन सहस्रत्रयवर्षाणि यज्ञार्थमवशिष्टानीति फलितम् । त्रयोदशाब्दसाहस्रमिति भागवतेन तु न विरोधः तत्र त्रयोदशपरमितवर्षाणि अब्दसाहस्रं चेत्यर्थः न्यूनतादोषस्तु न तत्र दीक्षाग्रहणावधिकयागसमाप्तिकालपरिमाणबोधनस्यैव विवक्षितत्वात् अत्र तु सामग्रीसम्पादनादिकालपरिमाणबोधकत्वमिति दिक् ॥ २६ ॥

रा० टी०-भोगकालानन्तरदिवसवृत्तं बोधयन्नाह-पूर्वाह्ण इति । पूर्वाह्णधर्मकार्याणि कृत्वा शेषमवशिष्टं दिवसभागार्धमालोक्येति शेषः अन्तःपुरगतोऽभवत् ॥ २७ ॥

रा० टी०-सीतेति । सीतापि पौर्वाह्णिकानि देवकार्याणि कृत्वा श्वश्रूणां पूजामकरोत् पूर्वाह्ण एवेति शेषः ॥ २८ ॥

रा० टी०-अभ्यगच्छदिति । ततः पूर्वाह्णकालानन्तरं विचित्राभरणाम्बरा सीता राममभ्यगच्छत् तत्र दृष्टान्तः त्रिविष्टपे उपविष्टं सहस्राक्षं शची यथा ॥ २९ ॥

रा० टी०-दृष्ट्वेति । कल्याणेन कल्याणजनकगर्भेणेत्यर्थः समन्वितां पत्नीं राघवो दृष्ट्वा अतुलं प्रहर्षं लेभे साधु साध्वित्यब्रवीच्च ॥ ३० ॥

गो० टी०-पूर्वाह्ण इति । शेषं दिवसभागार्धम् अपराह्ण इत्यर्थः ॥ २६-२९ ॥

---

१ इदमर्धं गो. पुस्त. नास्ति । २ बालाश्चेति गो. पाठः । ३ इदमर्धं गो. पुस्त. नास्ति अप्रत्यविंशतितमपद्योत्तरार्धेन गतार्थं च । ४ भूषित इति गो. पाठः । ५ सहेति गो. पाठः । ६ इदमर्धमधिकं गो. रा. पु. ।

अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् । अपत्यलाभो वैदेहि त्वय्ययं समुपस्थितः ॥ ३१ ॥
किमिच्छसि वरारोहे कामः किं क्रियतां तव । स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् ॥ ३२ ॥
तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव । गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् ॥ ३३ ॥
फलमूलाशिनां देव पादमूलेषु वर्तितुम् । एष मे परमः कामो यन्मूलफलभोजिनाम् ॥ ३४ ॥
अप्येकरात्रिं काकुत्स्थ निवसेयं तपोवने । तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा ॥
विश्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् । ॥ ३५ ॥
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् । मध्यकक्षान्तरं रामो निर्जगाम सुहृद्वृतः ॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

## त्रिचत्वारिंशः सर्गः ।

रामं सभां प्रविश्य चारान्स्वविषये प्रजानामनुरागादिकं पृच्छन्तं कोऽपि राजन् भवदीयं सर्वं मनोहारीति शंसन्ति पौराः जानपदाश्च परं केवलं जानकीं परगृहवासदूषितामपि तत्रभवान्भवान्कथमन्वमन्यतेति शङ्कातङ्कपङ्काकुलचेतस इत्याचष्ट ।

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः । कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १ ॥
विजयो मधुमत्तश्च काश्यपो मङ्गलः कुलैः । सुराजिः कालियो भद्रो दन्तवक्त्रः सुमागधः ॥ २ ॥
एते कथा बहुविधाः परिहाससमन्विताः । कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३ ॥

३१ ] ति० टी०—ममापत्यलाभस्त्वयि समुपस्थितः । गर्भलक्षणं तव स्पष्टं वर्तत इत्यर्थः ॥ ३१ ॥

रा० टी०—अब्रवीदिति । सीतामब्रवीत् राम इति शेषः तदाकारमाह अपत्यस्य लाभो यस्मिन्सोयं कालः समुपस्थितः अतस्त्वं किं किमपि इच्छसि अतस्तव किं कः कामोभिलाषो मया क्रियताम् तदाज्ञापयेति तात्पर्यम् सार्द्धश्लोक एकान्वयी ॥ ३१ ॥

गो० टी०—अब्रवीदिति । अपत्येति । ममायमपत्यलाभस्त्वयि समुपस्थितः । तव गर्भलक्षणं दृश्यत इत्यर्थः ३०–३४

३२–३४ ] ति० टी०—किंकामः किंविषयो मनोरथः । स्मितं कृत्वा । स्वावतारकृत्यं पूर्णमिति ब्राह्मणशापस्य सत्यत्वकरणौचित्यं च हासेन सूचितम् ॥ ३२–३४ ॥

रा० टी०—स्मितमिति । वैदेही राममब्रवीत् अर्द्धं पृथक् ॥ ३२ ॥

रा० टी०—तदाकारमाह–तप इति । फलमूलाशिनामृषीणां पादमूलेषु वर्तितुं तानि सेवितुमित्यर्थः तपोवनानि द्रष्टुमिच्छामि सार्धश्लोक एकान्वयी ॥ ३३ ॥

रा० टी०—एष इति । यतो जितसर्वकरणा ये मूलफलभोजिनः तेषां तपोवने एकरात्रिमपि निवसेयम् एष मे परमः कामोभिलाषः ॥ ३४ ॥

३५ ] ति० टी०—अप्येकरात्रिमित्यनेन चिरकालवासमनोरथो ध्वनितः ॥ ३५ ॥

रा० टी०—तथेति । अक्लिष्टमबाध्यं कर्म यस्य तेन रामेण तु तथेति ज्ञातम् ॥ ३५ ॥

रा० टी०—विस्रब्धेति । श्वः असंशयं गमिष्यसि अतः विस्रब्धा विश्वस्ता भव अर्धं पृथक् ॥ ३६ ॥

गो० टी०—तथेति । विस्रब्धा भव । महाराजो महिर्षीं मां कथमाश्रमं प्रति नेष्यतीति शङ्कां मा कुर्वित्यर्थः ३५॥३६
इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विचत्वारिंशः सर्गः ॥ ४२ ॥

३६ ] ति० टी०—विस्रब्धा भव । महाराजो महिर्षीं मां कथमाश्रमं प्रेषयिष्यतीति शङ्कां मा कुर्वित्यर्थः ॥ ३६ ॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

रा० टी०—एवमिति । काकुत्स्थो रामः एवमुक्त्वा मध्यकक्षान्तरं निर्जगाम ॥ ३७ ॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

१–२ ] ति० टी०—अथ कथाप्रसङ्गात्सीताप्रसङ्गेन स्वदोषश्रवणं रामस्य–तत्रेति । बहुरूपाणां कथानां प्रकथनद्वारेण हास्यकारा उपासन्ते ॥ १ ॥ २ ॥

३ ] ति० टी०—कथा वार्ताः ॥ ३ ॥

रा० टी०—सीताप्रेषणप्रतिज्ञानन्तरकालिकं वृत्तान्तमाह–

१ त्वयि मे इति गो. पाठः । २ एकरात्रमिति गो. पाठः । ३ कुट इति गो. पाठः । ४ सुराज इति गो. पाठः ।

ततः कथायां कस्यांचिद्राघवः समभाषत । काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४ ॥
मामाश्रितानि कान्याहुः पौरजानपदा जनाः । किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणम्॥५॥
किं नु शत्रुघ्नमुद्दिश्य कैकेयीं किं नु मातरम् । वक्तव्यतां च राजानो वने राज्ये व्रजन्ति च॥६॥
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् । स्थिताः शुभाः कथा राजन्वर्तन्ते पुरवासिनाम्॥७॥
अयं तु विजयं सौम्य दशग्रीववधार्जितम् । भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ ॥ ८ ॥
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् । कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९ ॥
शुभाशुभानि वाक्यानि कान्याहुः पुरवासिनः । श्रुत्वेदानीं शुभं कुर्यां नकुर्यामशुभानि च ॥ १० ॥
कथयस्व च विस्रब्धो निर्भयं विगतज्वरः । कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११ ॥
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः । प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२ ॥
शृणु राजन्यथा पौराः कथयन्ति शुभाशुभम् । चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३ ॥

---

तत्रेत्यादिभिः । बहुरूपाणां कथानां हास्यकाराः हास्यपूर्वकं कथनशीलाः विचक्षणाः कथानिपुणाः तत्र तस्मिन्समये राजानं राममुपासन्ते ॥ १ ॥

रा० टी०–तेषां नामानि निर्दिशन्नाह–**विजय इति** । एते विजयादयः परिहाससमन्विताः बहुविधाः कथाः राघवस्य समीपे कथयन्ति स्म श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०–**तत्रेत्यादि** ॥ १–३ ॥

४ ] ति० टी०–विषयेषु देशेष्विति सामान्यतः प्रश्नः ॥४॥

रा० टी०–**तत इति** । राघवः समभाषत तदाकारमाह–हे भद्र नगरे! विषयेषु देशेषु च काः कथाः जनानां वचनानि वर्तन्ते ॥ ४ ॥

गो० टी०–**तत इति** । विषयेषु देशेषु ॥ ४ ॥ ५ ॥

५ ] ति० टी०–विशिष्य पृच्छति—मामाश्रितानि कानि वाक्यान्याहुः ॥ ५ ॥

रा० टी०–तत्र विशेषं पृच्छति–**मामिति द्वाभ्याम्** । पौरा जानपदाश्च मामाश्रितानि मद्विषयाणि कानि वचनान्याहुः सीतां समाश्रित्य संस्मृत्य च किमाहुः भरतादीनुद्दिश्य च किमाहुः सार्द्धश्लोक एकान्वयी ॥ ५ ॥

६ ] ति० टी०–दूतमुखेन स्वदेशवृत्तान्ताज्ञाने राजानः सर्वजननिन्दाद्वारा नरकं प्राप्नुवन्तीत्याशयेनाह—**वक्तव्यतां चेति** । वने तापसाश्रमे राज्ये च धर्मादिविचारहीना राजानो वक्तव्यतां सर्वजनकृतदुर्भाषणविषयतां व्रजन्ति ॥ ६ ॥

रा० टी०–ननु राजवृत्तकथने जनानां न शक्तिरित्यत आह–**वक्तव्यतामिति** । वने राज्ये च विद्यमानानां जनानां वक्तव्यतां वचनविषयत्वं राजानोपि व्रजन्ति किंच ननु किमनेन प्रश्नेनेत्यत आह–**वक्तव्यतामिति** । वने राज्ये च विद्यमानानां जनानां वक्तव्यतां वचनं राजानो व्रजन्ति जानन्तीत्यर्थः एतेनैवं ज्ञानस्य शिष्टाचरितत्वेन प्रामाण्यं सूचितम्॥६॥

गो० टी०–**किं न्विति** । वक्तव्यतां च राजानो नवे राज्ये व्रजन्ति हीति च पाठः । नवे राज्ये सति राजानो वक्तव्यतां सम्यगसम्यग्वा कीर्तनीयतां व्रजन्ति हि ॥ ६–१५ ॥

७ ] ति० टी०–सर्वज्ञोऽप्यज्ञ इव भृग्वाद्युक्तशापं भृग्वादिषु दयया सत्यं चिकीर्षुः सीतावियोगमिच्छन्नेव देशवृत्तान्तं पृच्छति । गृहीतमनुष्यरूपतया व्यवहारानुसारेण लोकनिन्द्यं सदपि कर्म त्याज्यमिति बोधनायेति बोध्यम् । पुरवासिनां संबन्धितया स्थिताः कथाः शुभा वर्तन्त इति संबन्धः ॥ ७ ॥

रा० टी०–**एवमिति** । भद्रोऽब्रवीत् तदाकारमाह पुरवासिनां स्थिताः कथाः वचनानि शुभा वर्त्तन्ते ॥ ७ ॥

८ ] ति० टी०–**विजयमिति** । उद्दिश्येति शेषः । कथ्यन्ते । वार्ता इति शेषः ॥ ८ ॥

रा० टी०–तद्वचनमेवाह–**अयमिति** । अयं त्वदीयः दशग्रीववधार्जितो विजयः भूयिष्ठमत्यन्तं कथ्यते ॥ ८ ॥

९ ] ति० टी०–निरवशेषतः । शुभाशुभविषयं सर्वं कथयेत्यर्थः ॥ ९ ॥

रा० टी०–**एवमिति** । राघवोऽब्रवीत् तदाकारमाह यथातत्वं याथार्थ्यमनतिक्रम्य निरवशेषं अवशेषरहितं सर्वं कथयस्व ९

१० ] ति० टी०–नन्वशुभश्रवणे किं प्रयोजनं तत्राह—**शुभेत्यादि** ॥ १० ॥

रा० टी०–तत्प्रयोजनमाह–**शुभेति** । पुरवासिनो वाक्यानि श्रुत्वा शुभं तत्संमतकार्यमित्यर्थः कुर्याम् अशुभानि न कुर्याम् ॥ १० ॥

११–१३ ] ति० टी०–ननु राजसमक्षमशुभवाक्यकथनमशक्यमित्यत आह—**कथयस्वेति** । निर्भयं विस्रब्धो मम किं रामो वदिष्यतीति भयशून्यं विश्वस्तो विगतज्वर एवमशुभं कथं वाच्यमिति मनःसंतापशून्यः । पापाः पापानि ॥११–१३॥

रा० टी०–**कथयस्वेति** । पौराः जनपदेषु विद्यमानाः पापा अपि जनाः यथा कथयन्ति तथा विस्रब्धो विश्वासवान् त्वं निर्भयं कथयस्व ॥ ११ ॥

---

१ अमुमिति गो. विजयः अर्जित इति च रा. पाठः । २ कथ्यत इति रा. पाठः ।

दुष्करं कृतवान्रामः समुद्रे सेतुबन्धनम् । अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४ ॥
रावणश्च दुराधर्षो हतः सबलवाहनः । वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५ ॥
हत्वा च रावणं संख्ये सीतामाहृत्य राघवः । अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६ ॥
कीदृशं हृदये तस्य सीतासंभोगजं सुखम् । अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७ ॥
लङ्कामपि पुरा नीतामशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्स्यति ॥ १८ ॥
अस्माकमपि दारेषु सहनीयं भविष्यति । यथा हि कुरुते राजा प्रजास्तमनुवर्तते ॥ १९ ॥
एवं बहुविधा वाचो वदन्ति पुरवासिनः । नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २० ॥
तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत् । उवाच सुहृदः सर्वान्कथमेतद्वदन्तु माम् ॥ २१ ॥

रा० टी०–राघवेणेति । भद्रः प्रत्युवाच ॥ १२ ॥

रा० टी०–तदाकारमाह–शृणु इत्यादिभिः । पौराः चत्वरादिषु शुभाशुभं केषांचित् शुभं केषांचिदशुभमित्यर्थः यथा कथयन्ति तथा शृणु ॥ १३ ॥

१४–१५ ] ति० टी०–पूर्वकै राजभिर्देवैरपि कृतमित्यश्रुतमश्रुतपूर्वम् ॥ १४ ॥ १५ ॥

रा० टी०–तत्कथनमेवाह–दुष्करमित्यादिभिः । पूर्वकैः कैश्चिदुष्करमत एव अश्रुतं समुद्रे सेतुबन्धनं रामः कृतवान् १४

रा० टी०–रावण इति । रावणो हतः ॥ १५ ॥

१६ ] ति० टी०–सीतामाहृत्य ततो जातं सीताविषयं रावणस्पर्शममर्षं क्रोधं पृष्ठतः कृत्वा । विस्मृत्येत्यर्थः ॥ १६ ॥

रा० टी०–हत्वेति । अमर्षमक्षमां पृष्ठतः कृत्वा क्षमां कृत्वेत्यर्थः अपहरणकाले एवेच्छामात्रेण रावणमहत्वेति तात्पर्यम् संख्ये रावणं हत्वा सीतां स्ववेश्म पुनरानयत् ॥ १६ ॥

गो० टी०–हत्वेत्यादि । सीतामाहृत्य तदनन्तरजातममर्षं रावणस्पर्शजं पृष्ठतः कृत्वा विसृज्येत्यर्थः ॥ १६ ॥

१७ ] ति० टी०–कीदृशं सुखम् । कुत्सितमेवेत्यर्थः । तत्र हेतुः—अङ्कमित्यादि ॥ १७ ॥

१८ ] ति० टी०–न कुत्स्यति । न जुगुप्सते इत्यर्थः १८

रा० टी०–कीदृशमिति । सीतासंभोगजं सीता च आत्मत्यादिद्वारा सर्वरक्षाकारको रामश्च तयोः सम्भोगाज्जातं यत्सुखं तस्या हृत् अयं रावणः कीदृशम् अतिक्रूरहृदय इत्यर्थः सामान्ये नपुंसकम् यदि तु अयमित्यस्य न याति रामशरणं प्राप्नोति तद्रक्षो रावण इत्यर्थः तदा न सामान्यनपुंसकत्वकल्पना अर्द्धं पृथक् प्रसङ्गतो रावणापकृतिं संवर्ण्य पुनरपि रामकीर्तिमाह अङ्किति पुरा पूर्वं बलादपि लङ्कामानीतां रावणेन प्रापितामत एव अशोकवनिकां गतामत एव रक्षसां वशमापन्नां पुरा स्वधर्मपूर्त्या उपलक्षितामपि सीतां बलात् के वन्हौ रोप्य आरोप्य शपथार्थं संस्थाप्य विश्रमानः अङ् सर्वसत्कारकर्ता रामः आवणेन इयं विशुद्धेत्यादिवह्निकृत्या कृतां देवैः स्वीकारितां सीताम् आर प्राप कथं थं पापमेव कं सुखं यस्य तं रावणं तु न कुत्स्यति कदापि न निन्दतीत्यर्थः अत एव एकस्य पुरेत्यस्य न वैयर्थ्यम् बलादिति विनिगमनाविरहादुभयान्वयि अत एव अस्माकमपि दारेषु रिपुषु स्त्रीषु च सहनीयं भविष्यति रिपुषु सहनीयत्वं च तदपराधस्मरणेपि तन्निन्दाया अकरणत्वम् स्त्रीषु सहनीयत्वं च तदपराधशङ्काहेतुकपरीक्षाकरणजनितदुःखेष्वनुद्विग्नत्वम् दारशब्देनोभयलाभस्त्वेकशेषेण मूलन्तु विनिगमनाविरहः प्रकरणं च तत्र हेतुः यथा येन प्रकारेण यं धर्मं राजा कुरुते तथा तं धर्मं प्रजाः अनुवर्तते अनुवर्तन्ते कुर्वन्ति मयूरेऽग्नौ पुंसि स्यात् सुखशीर्षजलेषु कमिति मेदिनी थं रक्षणे मङ्गले च साध्वसे च नपुंसकमित्यपि सैव सार्द्धश्लोकद्वयमेकान्वयि ॥ १७–१९ ॥

गो० टी०–कीदृशमिति । कीदृशं कुत्सितमेवेत्यर्थः । तत्र हेतुः अङ्कमित्यादि ॥ १७ ॥ १८ ॥

१९–२० ] ति० टी०–सहनीयं भविष्यति एवंविधं कश्मलमिति भावः । तत्र हेतुः—यथा हीति । प्रजास्तमनुवर्ततेऽनुवर्तन्ते ॥ १९ ॥ २० ॥

गो० टी०–अस्माकमिति । सहनीयमिति । एवं कश्मलमित्यर्थः ॥ १९ ॥ २० ॥

रा० टी०–एवमिति । पुरवासिनः एवं बहुविधा अनेकविधकीर्तिबाधिका वाचो वदन्ति ॥ २० ॥

२१ ] ति० टी०–परमार्तवत्परमदुःखीवाकारं कृत्वा । वस्तुतो भगवति हर्षदुःखयोरभावादेवमुक्तिः । सर्वान्सुहृदो भद्रव्यतिरिक्तानपि कथमेतद्भद्रोक्तमेतदयशोवाक्यं तत्त्वमतत्त्वं वेति भवन्तोऽपि वदन्त्वित्युवाच ॥ २१ ॥

रा० टी०–तस्येति । तस्य भद्रस्य एवं भाषितं श्रुत्वा परमार्तवत् परमार्तानपि वदते तदभीष्टसंपादनेन प्रकाशयति सत्कारवचनमुच्चारयति वा स रामः कथमेतत् सत्यमसत्यं वा भद्रः कथयतीत्यर्थः मां यूयं *ब्रवीथ इति सर्वान्सुहृद उवाच ॥ २१ ॥

गो० टी०–तस्येति । परमार्तवत् परमदुःखी भूत्वा । सर्वान् सुहृद इति । भद्रव्यतिरिक्तानित्यर्थः । कथमेतदिति । भद्रोक्तमेतत् अपयशोवचनं कथं तत्त्वमतत्त्वं वेति भवद्भिश्च निवेद्यतामित्यर्थः ॥ २१ ॥

१ हृदयमिति रा. पाठः । २ कुत्सत इति गो. पाठः । ३ प्रजेति गो. पाठः । *ब्रूथेति युक्तमिति भाति ।

सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च । प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२ ॥
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् । विसर्जयामास तदा वयस्याञ्छत्रुसूदनः ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

---

## चतुश्चत्वारिंशः सर्गः ।

राघवो द्वाःस्थेन लक्ष्मणभरतशत्रुघ्नानानाय्याश्रुभिराप्लुतवदनोऽब्रवीत् ।

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः । समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १ ॥
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् । भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २ ॥
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः । लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥ ३ ॥
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः । द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥४॥
बाढमित्येव सौमित्रिः कृत्वा राघवशासनम् । प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५ ॥
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् । उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६ ॥
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति । भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥ ७ ॥
उत्पपातासनात्तूर्णं पद्भ्यामेव महाबलः । दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८ ॥
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह । एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९ ॥
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः । श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १० ॥

---

२२-२३ ] ति० टी०-एतद्भद्रोक्तमेवं तत्त्वमेव॥२२॥२३॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिचत्वारिंशः सर्गः ॥४३॥

रा० टी०-सर्व इति । एतत् भद्रोक्तमेवमेव इति वचनं दीनमुचितवियोगस्मृत्या क्षीणचित्तं राघवं सर्वे प्रत्यूचुः ॥२२॥

रा० टी०-श्रुत्वेति । काकुत्स्थः वयस्यान्विसर्जयामास ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

गो० टी०-सर्व इति । एवमेतत् यथा भद्रेणोक्तम् एतत्तत्त्वमेव ॥ २२ ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिचत्वारिंशः सर्गः ॥ ४३ ॥

१-३ ] ति० टी०-अथ स्वचिकीर्षितकथनाय भ्रात्रानयनम्—विसृज्य त्विति । निश्चित्य कर्तव्यमिति शेषः॥१-३॥

रा० टी०-सुहृद्वर्गविसर्जनानन्तरकालिकं वृत्तान्तमाह—विसृज्येत्यादिभिः। राघवः बुद्ध्या सीताया गर्भवतीत्वेन नायं संभोगकालः स चैकत्र स्थितौ दुर्निवार इति सीतावनगमनप्रार्थनं समीचीनमेव मत्कर्तव्यान्तराभावे यागोऽप्यारब्धव्यस्तत्रापि संभोगस्यानौचित्यमेवेति तावत्पर्यन्तं सीतया वने एव स्थातव्यमिति विचारेण निश्चित्य यागपर्यन्तं सीतावनस्थितिविषयकनिश्चयं कृत्वा समीपे आसीनं द्वाःस्थमब्रवीत् ॥ १ ॥

रा० टी०-तदाकारमाह—शीघ्रमिति । लक्ष्मणप्रभृतीन् शीघ्रमानय ॥ २ ॥

रा० टी०-रामस्येति । द्वाःस्थः लक्ष्मणस्य गृहं गत्वा अनिवारितस्सन्प्रविवेश ॥ ३ ॥

गो० टी०-विसृज्येत्यादि । निश्चित्येति । कर्तव्यमिति शेषः ॥ १-३ ॥

४-५ ] ति० टी०-वर्धयित्वा । जयाशिषेति शेषः । मा चिरम् । विलम्बो न कार्य इत्यर्थः ॥ ४ ॥ ५ ॥

रा० टी०-उवाचेति । कृताञ्जलिर्द्वाःस्थः सुमहात्मानं लक्ष्मणं वर्धयित्वा द्वाःस्थोचितवर्द्धकशब्दमुच्चार्य राजा रामः त्वां द्रष्टुमिच्छति अतो गम्यतामिति वचनमुवाच ॥ ४ ॥

रा० टी०-बाढमिति । सौमित्रिः राघवस्य निवेशनं प्राद्रवत् ॥ ५ ॥

गो० टी०-उवाचेति । वर्धयित्वेति । जयाशिषेति शेषः । मा चिरं विलम्बो मा भूत् ॥ ४ ॥ ५ ॥

६-१० ] ति० टी०-भरतमन्तिकात् । भरतसमीपं प्राप्येत्यर्थः । कृताञ्जलिः । भरतायेति शेषः ॥ ६-१० ॥

रा० टी०-प्रयातमिति । द्वाःस्थः भरतमन्तिकात् भर-

---

१ श्रुत्वेति गो. रा. पाठः । २ ययौ बलीति गो. पाठः ।

शिरसा वन्द्य धरणीं प्रययौ यत्र राघवः । द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः॥११॥
निवेदयामास तथा भ्रातॄन्स्वान्समुपस्थितान् । कुमारानागताञ्छ्रुत्वा चिन्ताव्याकुलितेन्द्रियः १२॥
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् । प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ १३ ॥
एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम । आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्लवाससः॥ १४ ॥
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः । ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥ १५ ॥
संध्यागतमिवादित्यं प्रभया परिवर्जितम् । बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते । ॥ १६ ॥
ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः । तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् ॥१७॥
तान्परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः । आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह॥१८॥
भवन्तो मम सर्वस्वं भवन्तो जीवितं मम । भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥ १९ ॥
भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः । संभूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः ॥ २० ॥
तथा वदति काकुत्स्थे अवधानपरायणाः । उद्विग्नमनसः सर्वे किं नु राजाभिधास्यति॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

तस्य समीपं गत्वेति शेषः विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति इति वचनमुवाच सार्द्धश्लोक एकान्वयी ॥ ६ ॥

रा० टी०-भरत इति । रामसमीरितं वचः द्वाःस्थात् भरतः श्रुत्वा आसनात्तूर्णमेव उत्पपात पद्भ्यामेव जगामेति शेषः ॥ ७ ॥

गो० टी०-प्रयान्तमिति । भरतमन्तिकात् भरतस्यान्तिकमित्यर्थः । गत्वेति शेषः कृताञ्जलिः भरतायेति शेषः६।७

रा० टी०-दृष्ट्वेति । शत्रुघ्नभवनं गत्वोवाच द्वाःस्थ इति शेषः ॥ ८ ॥

रा० टी०-तदाकारमाह-एहीति । राजा त्वां द्रष्टुमिच्छति इत्येहि जानीहि अतः आगच्छ व्रज लक्ष्मणो भरतश्च पूर्वं गतः गत्यर्थानां ज्ञानार्थत्वं भाष्यादौ प्रसिद्धमेव ॥ ९ ॥

रा० टी०-श्रुत्वेति । श॒ुघ्नः शिरसा धरणीमावन्द्य यत्र राघवस्तत्र प्रययौ ॥ १० ॥

गो० टी०-उत्पपातेति । उत्पपात उत्थाय जगाम८-१०

११-१३ ] ति० टी०-शिरसा वन्द्य धरणीं शिरसा धरणीं प्राप्य । रामाय वन्दित्वेत्यर्थः ॥ ११-१३ ॥

रा० टी०-द्वाःस्थ इति । द्वाःस्थ आगम्य समुपस्थितान्स्वान्समीपान्भ्रातॄन्निवेदयामास ॥ ११ ॥

रा० टी०-कुमारानिति । चिन्तया भविष्यत्सीतावियोगस्मृत्या व्याकुलितानीन्द्रियाणि यस्य अत एव दीनमना अत एव अवाङ्मुखो रामः द्वाःस्थमब्रवीत् ॥ १२ ॥

गो० टी०-शिरसेति । शिरसा धरणीं प्राप्य रामाय वन्दित्वेत्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०-तदाकारमाह-प्रवेशयेति । एतेषु कुमारेष्वेव मह्यं मम जीवितमेतदधीनं मम जीवनमित्यर्थः अत एव एते मम प्राणप्रियाः अतः कुमारान्मत्समीपं प्रवेशय ॥ १३ ॥

गो० टी०-प्रवेशयेति । मह्यं ममेत्यर्थः ॥ १३ ॥ १४ ॥

१४] ति०टी०-मह्यं मम जीवितमेतेषु स्थितमिति शेषः१४

रा० टी०-आज्ञप्ता इति । प्रह्वा शिरसा प्रणताः कुमाराः प्रांजलयो भूत्वा विविशुः ॥ १४ ॥

१५-१८ ] ति० टी०-सग्रहं सोपरागम् ॥ १५-१८ ॥

रा० टी०-ते इति । सग्रहं राहुणा ग्रस्तं शशिनमिव संध्यागतमादित्यमिव तस्य रामस्य प्रभया कान्त्या परिवर्जितं भविष्यद्वियोगचिन्तया प्रभाहीनमिव मुखं दृष्ट्वा आसन्निति शेषः ॥ १५ ॥

रा० टी०-बाष्पेति । बाष्पपूर्णे रामस्य नयने दृष्ट्वा हतशोभं पद्ममिव मुखं च वीक्ष्य रामस्य पादावभिवाद्य समाहितास्सन्तस्तस्थुः रामस्तु अश्रूण्यवर्तयत् मुमोच अर्द्धचतुष्टयमेकान्वयि ॥ १६-१७ ॥

रा० टी०-तानिति । महाबलो रामः तान्भ्रातॄन्परिष्वज्य आसनेषु । आसत इत्युक्त्वा वाक्यं जगाद ॥ १८ ॥

गो० टी०-ते त्विति । सग्रहं सोपरागम् ॥ १५-१९ ॥

१९ ] ति० टी०-भवद्भिः कृतं संपादितम् ॥ १९ ॥

रा० टी०-तत्स्वरूपमाह-भवन्त इत्यादिभिः । भवद्भिः कृतं सम्पादितं राज्यं पालयामि ॥ १९ ॥

२०-२१ ] ति० टी०-कृतशास्त्रार्था अनुष्ठितशास्त्रार्थानुष्ठानाः मदर्थो वक्ष्यमाणः । अन्वेष्टव्योऽनुसरणीयः ॥२०-२१॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१ धरणीं प्राप्येति गो. पाठः । २ शक्रतेजस इति गो. पाठः ।

## पञ्चचत्वारिंशः सर्गः ।

स्वाश्रुदर्शनदूनमानसान्भ्रातॄनग्निप्रवेशपूताया अपि वैदेह्याः संबद्धं लोकापवादमाख्याय नाहमन्यतो बिभेमि यथाकीर्तेरतः सौमित्रे श्व एव रथमारोप्य गङ्गातीराश्रमेक्षणोत्सुकां तां भागीरथ्याः परपारे वाल्मीकेराश्रमे विसृज नाहमत्र केनापि प्रतिवक्तव्य इति तं समादिश्य संविवेश ।

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् । उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता॥ १ ॥
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा । पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च । वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३ ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् । सीतापि सत्कुले जाता जनकानां महात्मनाम्॥ ४ ॥
जानासि त्वं यथा सौम्य दण्डके विजने वने । रावणेन हृता सीता स च विध्वंसितो मया ॥ ५ ॥
तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति । अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६ ॥

---

रा० टी०–भवन्त इति । कृतः हृदये सन्निवेशितः शास्त्रार्थो यैः बुध्या परिनिष्ठिताः परिपक्वाः परिपक्वबुद्धिमन्त इत्यर्थः भवन्तस्सम्भूय एकचित्ततां प्राप्य अयमुपस्थितो मदर्थः अन्वेष्टव्यः स्वीकरणीयः ॥ २० ॥

रा० टी०–तथेति । अवधानपरायणाः स्वस्थचित्ता अपि सर्वे भरतादयः काकुत्स्थे तथा वदति सति राजा रामः किमभिधास्यति कथयिष्यतीति चिन्तया उद्विग्नमनसोऽभवन्निति शेषः ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

गो० टी०–भवन्त इति । कृतशास्त्रार्थाः अनुष्ठितशास्त्रार्थाः ॥ २० ॥ २१ ॥

इति श्रीगोविंदराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुश्चत्वारिंशः सर्गः ॥ ४४ ॥

---

१ ] ति० टी०–अथ हेतुकथनपूर्वं लक्ष्मणस्य सीताविसर्जने विनियोगः–तेषामिति ॥ १ ॥

रा० टी०–भरतादीन् प्रति रामोक्तिमाह–तेषामित्यादिभिः । दीनचेतसाम् रामदैन्यदर्शनजनितदैन्यविशिष्टचित्तवतां समुपविष्टानां तेषां भरतादीनां समीपे परिशुष्यता मुखेनोपलक्षितः काकुत्स्थ उवाच ॥ १ ॥

गो० टी०–तेषामित्यादि ॥ १ ॥

२ ] ति० टी०–अन्यथा मा कुरुध्वम् । मदभिप्रायाननुकूलभावं मा कुरुध्वमित्यर्थः तमेवाभिप्रायमाह–पौराणामिति । सीताविषये पौराणां यादृशी कथा वर्तते तां मत्तः शृणुतेति संबन्धः ॥ २ ॥

रा० टी०–तदाकारमाह–सर्व इत्यादिभिः । मम मद्विषये सीतायां सीताविषये च यादृशी कथा वर्तते तां कथां सर्वे यूयं शृणुत अन्यथा श्रवणविमुखं मनो मा कुरुध्वम् ॥ २ ॥

गो० टी०–सर्व इति । मा कुरुध्वं मनोन्यथा । मदभिप्रायाननुकूलम् मा कुरुध्वमित्यर्थः । तमेवाभिप्रायमाविष्करोति–पौराणामित्यादि । सीतायां विषये यादृशी कथा वर्तते तां कथां मत्सकाशात् शृणुतेत्यन्वयः ॥ २ ॥

३–५ ] ति० टी०–तां कथामाह–पौरापवाद इति । पौराणां मयि मद्विषये बीभत्सा कुत्सा वर्तते सा मे मम मर्माणि कृन्तति ॥ ३–५ ॥

रा० टी०–पौरेति । मे मते महान् पौरापवादः पौरकर्तृकनिन्दा जनपदस्यापवादश्चेति शेषः मर्माणि कृन्तति सा उभयकर्तृका बीभत्सा निन्दा अमयि मद्विरोधिनि वर्तते मम तु स्तुतिरेव वर्तते इति तात्पर्यम् एतेन स्वराज्यस्य धर्मादिसंपत्तिमत्त्वं सूचितम् तेन राज्यविषयकस्वकृत्यन्तराभावो ध्वनितः ॥ ३ ॥

रा० टी०–तत्र हेतुमाह–अहमिति । महात्मनाम् इक्ष्वाकूणां कुलेऽहं जातः सीतापि महात्मनाम् जनकानां सत्कुले जाता एतेनोभयोरधर्मसंसर्गसम्भावनाया असम्भवः सूचितः तेन निन्दाया अविषयत्वं ध्वनितम् ॥ ४ ॥

रा० टी०–शुद्धवंशोत्पन्नत्वेन स्वशुद्धिमुक्त्वा कर्मणापि स्वशुद्धिं बोधयितुमाह–जानासीति । दण्डके वने यथा सीता हृता रावणश्च मया विध्वंसितः तथा त्वं जानासि धर्मपूर्वकमेव सर्वं कृतमिति तात्पर्यम् ॥ ५ ॥

गो० टी०–का कथा वर्तत इत्यत्राह–पौरापवाद इत्यादि । मयि मद्विषये बीभत्सा कुत्सा वर्तते सा मम सर्वमर्माणि कृन्तति ॥ ३–१० ॥

६ ] ति० टी०–कथमानयेयं न कथमपि ॥ ६ ॥

रा० टी०–तत्रेति । अत्रोषितां सीतामहं कथमानयेयमिति मे बुद्धिरुत्पन्ना ॥ ६ ॥

प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा । प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ॥ ७ ॥
अपापां मैथिलीमाह वायुश्चाकाशगोचरः । चन्द्रादित्यौ च शंसेते सुराणां संनिधौ पुरा ॥ ८ ॥
ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् । एवं शुद्धसमाचारा देवगन्धर्वसंनिधौ ॥ ९ ॥
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेदिता । अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् १०
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः । अयं तु मे महान्वादः शोकश्च हृदि वर्तते ॥ ११ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च । अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ १२ ॥
पतत्येवाधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते । अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते ॥ १३ ॥
कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् । अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः ॥ १४ ॥
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् । तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ॥ १५ ॥
नहि पश्याम्यहं भूतं किंचिद्दुःखमतोऽधिकम् । श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ॥ १६ ॥
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज । गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ॥ १७ ॥

७-८ ] ति० टी०-सीताया अपापतां प्रख्यापयति भ्रातृभ्यः-प्रत्ययार्थमिति । देवानां संनिधाविति शेषः ७॥८

रा० टी०-प्रत्ययार्थमिति । प्रत्ययार्थम् स्वशुद्धिप्रतीत्युपपत्त्यर्थं सीता ज्वलनं विवेश ततस्तदा हव्यवाहनो वन्हिः वायुश्च मैथिलीमपापामाह चन्द्रादित्यौ च जनकात्मजामपापां शंसेते अशंसताम् सार्द्धश्लोकद्वयमेकान्वयि ॥ ७ ॥ ८ ॥

९ ] ति० टी०-ऋषीणां चेति । संनिधावित्यर्थः ॥ ९ ॥

रा० टी०-एवमिति । शुद्धसमाचारा जानकी महेन्द्रेण मम हस्ते निवेदिता ॥ ९ ॥

१० ] ति० टी०-लङ्काद्वीपे महेन्द्रेणेति । 'लङ्काद्वीपे तदाग्निना' इति पाठान्तरम् ॥ १० ॥

रा० टी०-अन्तरिति । मेऽन्तरात्मा सीतां शुद्धां वेत्ति ततः तस्माद्धेतोः वैदेहीं गृहीत्वा अयोध्यामहमागतः ॥ १० ॥

११ ] ति० टी०-अयं त्विति । प्राक्प्रतिपादितरीत्यां तत्त्वार्थेऽन्यस्मिन्स्थितेऽपीति शेषः । महान्वादो वर्तते निन्दा वर्तते । तच्छ्रवणाच्छोकश्च हृदि वर्तते ॥ ११ ॥

रा० टी०-इदानीं कुम्भकर्णभक्षणादिना मृतानां लोकनिन्दितराक्षसानां कथं गतिरिति शोचन्नाह-अयमिति । आदौ कुम्भकर्णभक्षणकर्मीभूतस्य राक्षसजातस्य सुमहान् एव पौरापवादः पौरकर्तृकनिन्दा जनपदस्य चापवाद इति शेषः मे हृदि महानेव शोकः शोकहेतुर्वर्तत एव एतेन तत्कल्याणार्थं यत्नः कर्तव्य इति सूचितम् वातुचा एवार्थाः ॥ ११ ॥

गो० टी०-अयं त्विति । महान्वाद इति । वर्तत इति शेषः । शोकश्चेति ॥ तच्छ्रवणादिति शेषः । कोयं वाद इत्यत्राह—पौरेत्यादि ॥ ११ ॥

१२ ] ति० टी०-कोऽसौ वादस्तत्राह—पौरेति । सीताविषया पौरनिन्दा भूतस्य प्राणिनः ॥ १२ ॥

रा० टी०-ननु युद्धे कथञ्चिदपि मृतानां कल्याणमेव भविष्यतीति किं लोकापवादेनेत्यत आह-अकीर्तिरिति । लोके यस्याकीर्तिर्गीयेत स जनः यावच्छब्दः अकीर्तिबोधकपदं प्रकीर्त्यते तावदधमाँल्लोकान्पतति ॥ १२ ॥

गो० टी०-अकीर्तिरिति । भूतस्य प्राणिनः । शब्दः अकीर्तिबोधकः ॥ १२-१४ ॥

१३-१४ ] ति० टी०-शब्दोऽकीर्तिबोधकः । अधमाँल्लोकान्निरयान् ॥ १३ ॥ १४ ॥

रा० टी०-अकीर्तिरिति । देवैः अकीर्तिर्निन्द्यते कीर्तिश्च पूज्यते अत एव सुमहात्मनां कीर्त्यर्थं समारम्भः उद्योगः॥१३॥

रा० टी०-अपीति । अपवादभयाद्भीतोहमपि अपवादभयात् युष्मान् जह्याम् त्याजयेयम् अपवादभीतिर्न प्राप्नोत्विति सदैवेच्छामीत्यर्थः जनकात्मजां च जह्याम् त्याजयेयम् जीविनं स्वात्मानं जह्यामिति किम् ॥ १४ ॥

१५ ] ति० टी०-शोकसागरेऽकीर्तिजे ॥ १५ ॥

रा० टी०-तस्मादिति । तस्मात् लोकापवादस्यानर्थकरत्वात् हेतोः किञ्चिदपवादं भूतं प्राप्तं जनं शोकसागरपतितं पश्यन्तु हि यतः अतोऽपवादात् अधिकं दुःखं न पश्यामि॥१५॥

गो० टी०-तस्मादिति । भूतमुत्पन्नम् ॥ १५ ॥

१६ ] ति० टी०-भूतमुत्पन्नम्, अत एतदकीर्तिजात् । अतः श्वः प्रभाते त्वं रथमारुह्य विषयान्ते स्वदेशात्परतः सीतामुत्सृज ॥ १६ ॥

रा० टी०-इदानीं सीताप्रार्थितसिद्धये गर्भवतीसंगमो न कर्तव्य इति मर्यादापालनाय च स्वकीयप्रजापराधादिविध्वंसफलकशीसङ्गमाभावादिधर्मसाध्ययागकरणाय चाह—श्वरिति । श्वरागामिनि प्रभाते रथमारुह्य सीतामारोप्य आरोह्य च विषयान्ते सीतेप्सितदेशान्ते समुत्सृज संस्थापय १६

गो० टी०-श्व इति । विषयान्ते स्वदेशाद्बहिः ॥ १६ ॥

१७ ] ति० टी०-क विषयान्तरे तत्राह-गङ्गाया इति । परे पारे गङ्गोल्लङ्घनलभ्ये पारे ॥ १७ ॥

१ निवेशितेति गो. पाठः ।

आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः। तत्रैतां विजने देशे विसृज्य रघुनन्दन ॥ १८ ॥
शीघ्रमागच्छ सौमित्रे[2] कुरुष्व वचनं मम। न चास्मि प्रतिवक्तव्यः सीतां प्रति कथंचन॥ १९ ॥
तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा। अप्रीतिर्हि परा मह्यं त्वयैतत्प्रतिवारिते ॥ २० ॥
शापिता हि मया यूयं पादाभ्यां जीवितेन च। ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथंचन ॥
अहिता नाम ते नित्यं मदभीष्टविघातनात्। ॥ २१ ॥
मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः। इतोऽद्य नीयतां सीता कुरुष्व वचनं मम ॥ २२ ॥
पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान्। पश्येयमिति तस्याश्च कामः संवर्त्यतामयम्॥ २३ ॥
एवमुक्त्वा तु काकुत्स्थो बाष्पेण विहितेक्षणः। सं विवेश स धर्मात्मा भ्रातृभिः परिवारितः॥
शोकसंविग्नहृदयो निशश्वास यथा द्विपः। ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

---

१८ ] ति० टी०—तमसासंज्ञं नदीद्वयमयोध्यासमीपे गङ्गार्वाक्तत्परपारे च। दिव्यसंकाशो दिव्यदेशसदृशः ॥१८॥

रा० टी०—देशान्तमेव बोधयन्नाह—गङ्गाया इति। गङ्गायाः परे दक्षिणे पारे तीरे तमसायाः तदभिधनद्याः तीरमाश्रितः दिव्यसंकाशः सर्वसम्पत्तिमत्त्वेनायोध्यादिसदृशः वाल्मीकेराश्रमः अस्तीति शेषः तत्र आश्रमे विजने विगतः जनो जनकसदृशो वाल्मीकिर्यस्मात् वाल्मीकिरहितदेशे इत्यर्थः एनां सीतां विसृज्य संस्थाप्येत्यर्थः शीघ्रमागच्छ विजने इत्येतत्सन्निधिगमने त्वामपि स्थापयिष्यतीति सूचितम् जनकसदृशत्वं च दशरथसखत्वेन अयोध्यासमीपवर्तितमसातोन्येयं तमसा नदीति बोध्यम् श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—तं विशेषयति—गङ्गाया इत्यादि १७–१९

१९ ] ति० टी०—सीतां प्रति सीतापरित्यागमुद्दिश्य १९

रा० टी०—चेष्टादिना तत्र हेतुं प्रष्टुकामामाह—नेति। सीतां प्रति सीतासंस्थापने हेतुमित्यर्थः न प्रतिवक्तव्यः प्रष्टव्योस्मि तस्मात् अत्र प्रेषणविषये विचारणा न कार्या एतेन हेतुप्रश्ने गर्भसमये यागसमये चात्र स्थितौ अनुचितसंगमो दुर्निवारो भवितेति वक्तव्यं स्यात् तत्कथने च चिरकालकवियोगो ज्ञातो भविष्यतीति लक्ष्मणस्य शोकातिशयो भविष्यतीति हेतुर्ध्वनितः तेन शोकवल्लक्ष्मणदर्शनासहिष्णुत्वं रामस्य व्यक्तम्॥१९॥

२० ] ति० टी०—मह्यं ममैतत्प्रतिवारिते। एतस्य प्रतिवारणे इत्यर्थः ॥ २० ॥

रा० टी०—प्रेषणस्यावश्यकत्वं बोधयन्नाह—अप्रीतिरिति। त्वया एतत्परिवारिते एतस्य निवारणे सति मह्यं मम परा अप्रीतिः अत एव पादाभ्यां जीवितेन जीवनेन च मया यूयं शापिताः शपथं कारिताः ॥ २० ॥

गो० टी०—अप्रीतिरिति। मह्यं मम। भुजाभ्यामिति वीरवचनम् ॥ २० ॥

२१ ] ति० टी०—'भुजाभ्याम्' इति पाठेऽपि पादाभ्यामित्येवार्थः। ये वाक्यान्तरेऽस्मद्वाक्यमध्ये मामनुनेतुं ब्रूयुस्ते मदभीष्टविघातनान्नित्यं ममाहिता नाम अहिता इति प्रसिद्धम् ॥ २१ ॥

रा० टी०—ये इति। वाक्यान्तरे मद्वाक्याद्भिन्नवाक्ये अनुनेतुं प्रापयितुं ये मां ब्रूयुस्ते मदभीष्टविघातनाद्धेतोः अहिता रिपवः ॥ २१ ॥

गो० टी०—य इति। वाक्यान्तरे अस्मद्वाक्यमध्ये। अनुनेतुं ये ब्रूयुस्ते शापिता इति पूर्वेणान्वयः ॥ २१ ॥

२२ ] ति० टी०—किं तर्हि कर्तव्यं तत्राह—मानयन्त्विति ॥ २२ ॥

रा० टी०—मानयन्त्विति। भवन्तो यदि मच्छासने स्थिताः तर्हि मां मानयन्तु अत एव मम वचनं कुरुष्व अत एव इतः सीता नीयतामत्र क्वचिद्बहुत्वं तु लक्ष्मणे प्राधान्यमारोप्य ॥ २२ ॥

गो० टी०—फलितमाह—मानयन्त्विति ॥ २२ ॥

२३ ] ति० टी०—ननु सीते, विसर्जनाय वनं चलेति कथं वक्तुं शक्यं तत्राह—पूर्वमिति। संवर्त्यतामनुष्ठीयताम् ॥२३॥

रा० टी०—ननु गमनाय मया प्रार्थितापि सा यदि न गच्छेत् तर्हि किं कर्तव्यमित्यत आह—पूर्वमिति। अनया सीतया गंगातीरे आश्रमानहं पश्येयमिति पूर्वमहमुक्तः अतः तस्याः कामोभिलाषः संवर्त्यताम् संपाद्यताम् ॥ २३ ॥

गो० टी०—कथमिमं नृशंसत्वं सोढुं शक्यमित्यत्राह—पूर्वमित्यादि। संवर्त्यताम् अनुष्ठीयताम् ॥ २३ ॥

२४ ] ति० टी०—भ्रातृभिः परिवारितः प्रविवेश। तान्विसृज्य। स्ववेश्मेति शेषः ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

रा० टी०—एवमिति। बाष्पेण भविष्यत्सीतावियोग

---

१ एनामिति गो. रा. पा.। २ भद्रं ते इति गो. पा.। ३ परेति रा. पा.। ४ भुजाभ्यामिति गो. पा.। ५ पिहितानन इति गो. रा. पा. ६ प्रेति गो. पा.। ७ संक्लेति गो. पा.।

## षट्चत्वारिंशः सर्गः ।

देवि त्वदिष्टं गङ्गातीरवासं पूरयेत्यादिष्टोऽहमग्रजेनातः सज्जः स्यन्दन इति भाषमाणः सौमित्रिस्तां मुनिपत्नीवितरणकृते गृहीतमहार्घाभरणवाससं जानकीं दुरुत्पातखिन्नचेतसमपि वेगवता रथेन स्वयं रुदन्नेव गङ्गातीरमनयत् ।

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः । सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥ १ ॥
सारथे तुरगाञ्शीघ्रान्योजयस्व रथोत्तमे । स्वास्तीर्णं राजवचनात्सीतायाश्चासनं शुभम् ॥ २ ॥
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् । मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥ ३ ॥
सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः । रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥ ४ ॥
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् । रथोऽयं समनुप्राप्तो यत्कार्यं क्रियतां प्रभो ॥ ५ ॥
एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः । प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥ ६ ॥
त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः । नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥ ७ ॥
गङ्गातीरे मया देवि ऋषीणामाश्रमाञ्शुभान् । शीघ्रं गत्वा तु वैदेहि शासनात्पार्थिवस्य नः ॥ ८ ॥
अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि । एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ॥ ९ ॥
प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत् । वासांसि च महार्हाणि रत्नानि विविधानि च ॥१०॥
गृहीत्वा तानि वैदेही गमनायोपचक्रमे । इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम्॥११ ॥

स्मृतिजनिताश्रुणा पिहितमाननं यस्य स काकुत्स्थः एवमुक्त्वा संविवेश द्विपस्य इव निश्वास च ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चचत्वारिंशः सर्गः ॥ ४५ ॥

गो० टी०–एवमिति । भ्रातृभिः परिवारितः प्रविवेशेति। भ्रातॄन् विसृज्य स्ववेश्म प्रविवेशेत्यर्थः ॥ २४ ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पंचचत्वारिंशः सर्गः ॥ ४५ ॥

१ ] ति० टी०–अथ लक्ष्मणेन सीतानयनम्—तत इति ॥ १ ॥

रा० टी०–रामाज्ञापमानन्तरकालिकं वृत्तमाह—तत इत्यादिभिः । रजन्यां व्युष्टायां प्रभातत्वं प्राप्तायां लक्ष्मणस्सुमन्त्रमब्रवीत् ॥ १ ॥

गो० टी०–तत इत्यादि ॥ १ ॥

२ ] ति० टी०–सीतायाः शुभमासनं राजभवनादानीय स्वास्तीर्णं रथं कुरु ॥ २ ॥

रा० टी०–तदाकारमाह—सारथ इति । राजवचनाच्छीघ्राम् शीघ्रगामिनः तुरगान् रथोत्तमे योजयस्व सीतायाः आसनं स्वास्तीर्णं शोभनास्तरणसहितं कुर्विति शेषः ॥ २ ॥

गो० टी०–सारथ इति । स्वास्तीर्णमिति । सीतायाश्च शुभमासनं राजभवनादानीय स्वास्तीर्णं रथं कुरु ॥ २ ॥

३ ] ति० टी०–किमर्थं सीताया आसनं तत्राह—सीता हीति ॥ ३ ॥

रा० टी०–तत्प्रयोजनमाह—सीतेति । महर्षीणामाश्रमं मया सीता नेया अतः रथश्शीघ्रमानीयताम् ॥ ३ ॥

गो० टी०–कुत इत्यत्राह–सीता हीत्यादि ॥ ३ ॥

४–६ ] ति० टी०–सुरुचिरप्रख्यं सुन्दरशोभम् ॥ ४-६ ॥

रा०टी०–सुमन्त्र इति । सुमन्त्रस्तु सुखशय्यया स्वास्तीर्णं रथमानीय अयं रथः समनुप्राप्तः अतो यत्कार्यं तत्क्रियतामिति वचनं सौमित्रिमुवाच श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

रा० टी०–एवमिति । लक्ष्मणः राजवेश्मनि प्रविश्य सीतामासाद्य प्राप्य व्याजहार उवाच ॥ ६ ॥

गो० टी०–सुमन्त्र इति । सुरुचिरप्रख्यं सुन्दरशोभम् ॥ ४—१३ ॥

७ ] ति० टी०–एष नृपती रामः प्रतिज्ञातमङ्गीकृतम् । आश्रमं प्रति नयनमिति शेषः। आज्ञप्तः । आश्रमं नेतुमिति शेषः ॥ ७ ॥

रा० टी०–तदाकारमाह—त्वयेति । त्वया वरं याचितो यः प्रभुः एषः तेन नृपेण रामेण प्रतिज्ञातं त्वत्प्रार्थितं स्वीकृतमत एव आश्रमं प्रति प्रयाणायेति शेषः आज्ञप्तः अहमिति शेषः ॥ ७ ॥

८–११ ] ति० टी०–शीघ्रं गत्वा । गङ्गातीरमिति शेषः। मुनीनामाश्रमान्प्रत्यवनेयावरोप्य प्रापणीया ॥ ८–११ ॥

रा० टी०–गङ्गेति । नोस्माकं पार्थिवस्य रामस्य शासनाद्धेतोः ऋषीणामाश्रमान् गत्वा मुनिभिर्जुष्टे अरण्ये मया अवनेया प्रापणीया भविष्यसि सार्धश्लोक एकान्वयी ॥ ८ ॥

१ भवनादिति गो. पाठः । २ कुर्विति गो. पाठः । ३ अपेति गो. पाठः ।

वस्त्राणि च महार्हाणि धनानि विविधानि च । सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम् ॥१२॥
प्रययौ शीघ्रतुरगं रामस्याज्ञामनुस्मरन् । अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् ॥ १३ ॥
अशुभानि बहून्येव पश्यामि रघुनन्दन । नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥ १४ ॥
हृदयं चैव सौमित्रे अस्वस्थमिव लक्षये । औत्सुक्यं परमं चापि अधृतिश्च परा मम ॥ १५ ॥
शून्यामेव च पश्यामि पृथिवीं पृथुलोचन । अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ॥ १६ ॥
श्वश्रूणां चैव मे वीर सर्वासामविशेषतः । पुरे जनपदे चैव कुशलं प्राणिनामपि ॥ १७ ॥
इत्यञ्जलिकृता सीता देवता अभ्ययाचत । लक्ष्मणोऽर्थं ततः श्रुत्वा शिरसा वन्द्य मैथिलीम्॥१८॥
शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता । ततो वासमुपागम्य गोमतीतीर आश्रमे ॥ १९ ॥
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् । योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ॥ २० ॥
शिरसा धारयिष्यामि त्रियम्बक इवौजसा । सोऽश्वान्विचारयित्वा तु रथे युक्तान्मनोजवान् २१॥
आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत् । सा तु सूतस्य वचनादारुरोह रथोत्तमम् ॥ २२ ॥
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता । आससाद विशालाक्षी गङ्गां पापविनाशिनीम्॥२३॥

रा० टी०—एवमिति । वैदेही प्रहर्षं लेभे गमनमरोचयच्च ॥ ९ ॥

रा० टी०—वासांसीति । वैदेही गमनायोपचक्रमे ॥१०॥

रा० टी०—इमानीति । आभरणादीनि मुनिपत्नीनां दास्यामि इति लक्ष्मणमब्रवीदिति शेषः ॥ ११ ॥

१२-१३ ] ति० टी०-तथेत्युक्त्वा यथेष्टं प्रयच्छेत्युक्त्वा ॥ १२ ॥ १३ ॥

रा० टी०—सौमित्रिरिति । शीघ्रतुरगा यस्मिंस्तं रथं मैथिलीमारोप्य सौमित्रिः प्रययौ ॥ १२ ॥

रा० टी०—अब्रवीदिति । सीता लक्ष्मणमब्रवीत् तत्स्वरूपमाह बहून्यशुभानि चिरकालकपतिवियोगसूचकशकुनात् चकारेण शुभान्यपि अहम् पश्यामि अत एव चः सार्थः १३

१४ ] ति० टी०—नयनं दक्षिणम् ॥ १४ ॥

रा० टी०—तदाकारमाह-नयनमिति । मे नयनं स्फुरति दक्षिणमिति शेषः अत एव हृदयमस्वस्थमेव लक्षये ॥ १४ ॥

गो० टी०—नयनमिति । हृदयं मनः ॥ १४ ॥

१५ ] ति० टी०—हृदयं मनः । औत्सुक्यं नगरविषयं रामविषयं वा ॥ १५ ॥

रा० टी०—नन्वेवं सति तिष्ठेत्यत आह—औत्सुक्यमिति । परमौत्सुक्यं शुभसूचकमुनिदर्शनविषयकात्यौत्कण्ठ्यं च जायते इति शेषः अतः अधृतिः स्थितिविषयकधैर्याभावः जायते अत एव पृथिवीं शून्यामेव पश्यामि इदानीं मुनिदर्शनादन्यत्सुखप्रदं नावलोकयामीत्यर्थः ॥ १५ ॥

गो० टी०—औत्सुक्यमिति । औत्सुक्यं पुण्याश्रमदर्शनविषयजम् शून्यां सुखशून्याम् ॥ १५ ॥ १६ ॥

१६-१७ ] ति० टी०—शून्यां सुखशून्याम ॥१६॥१७॥

रा० टी०—इदानीं अशकुनदर्शनस्याकिञ्चित्करत्वं सम्पादयन्ती आह—अपीति । ते भ्रातुः मे श्वश्रूणां च अपि स्वस्ति भवेदिति शेषः पुरादौ प्राणिनां च कुशलं भवेदित्येवं प्रकारेण देवताः सीता अभ्ययाचत एतेन रामादीनां स्वस्तिमत्त्वे संगमो भवितैवेति किं विलम्बेनेति सीताभिप्रायः सूचितः अर्धचतुष्टयमेकान्वयि ॥ १६ ॥ १७ ॥

गो० टी०—पुर इति । अञ्जलिकृता कृताञ्जलिः ॥ १७ ॥

१८ ] ति० टी०—अञ्जलिकृता कृताञ्जलिः । अर्थं दुर्निमित्तवस्तु ॥ १८ ॥

रा० टी०—लक्ष्मण इति । विशुष्यता पूर्वं रामाज्ञप्ततदर्शनहेतुकविशेषं प्राप्नुवता हृदयेनोपलक्षितो हृष्टः पश्चात् सीताहर्षदर्शनहेतुकहर्षप्राप्तो लक्ष्मणः अर्थं सीतोक्तपदार्थं श्रुत्वा मैथिलीमावन्द्य शिवं मंगलमित्यब्रवीत् ॥ १८ ॥

गो० टी०—लक्ष्मण इति । तमर्थमिति । दुर्निमित्तरूपं वस्त्वित्यर्थः । हृष्टः हृष्टः इव ॥ १८ ॥ १९ ॥

१९-२०] ति० टी०—शिवमित्यब्रवीद्धृष्टो हृष्ट इव१९-२०

रा० टी०—तत इति । गोमतीतीरे विद्यमाने आश्रमे वासमुपागम्य प्रभाते सौमित्रिः सूतमब्रवीत् ॥ १९ ॥

रा० टी०—तदाकारमाह—योजयस्वेति । अद्य अस्मिन्दिने भागीरथीजलं त्रियम्बकः त्र्यंबकः शिव इव शिरसा धारयिष्यामि अतः रथं शीघ्रं योजयस्व पर्वतत्र्यम्बको यथेति पाठे रूपमाद्वयमिति भट्टाः ॥ २० ॥

गो० टी०—योजयस्वेति । शिरसा धारयिष्यामि त्र्यम्बकः पर्वते यथेति । दृष्टान्ते स्त्रोपि स्नानार्थमेव गङ्गां दधारेति गम्यते ॥ २०—२२ ॥

२१-२३ ] ति० टी०-'पर्वतत्र्यम्बको यथा' इति पाठे उपमाद्वयम् । त्र्यम्बक इव पर्वतो हिमवानिवेति वा । अश्वांश्चतुरः ॥ २१-२३ ॥

१ तुरगैरिति गो. पाठः । २ त्र्यंबकः पर्वते यथेति गो. पाठः । ३ रुवाश्च चतुरो रथे युक्त्वा मनोजवानिति गो. पाठः ।

अथार्धदिवसं गत्वा भागीरथ्या जलाशयम् । निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महास्वनः ॥ २४ ॥
सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम् । उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया ॥ २५ ॥
जाह्नवीतीरमासाद्य चिराभिलषितं मम । हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २६ ॥
नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ । कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥ २७ ॥
ममापि दयितो रामो जीवितादपि लक्ष्मण । न चाहमेवं शोचामि मैवं त्वं बालिशो भव ॥ २८ ॥
तारयस्व च मां गङ्गां दर्शयस्व च तापसान् । ततो मुनिभ्यो वासांसि दास्याम्याभरणानि च २९॥
ततः कृत्वा महर्षीणां यथार्हमभिवादनम् । तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥ ३० ॥
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम् । त्वरते हि मनो द्रष्टुं रामं रमयतां वरम् ॥ ३१ ॥
तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे । नाविकानाह्वयामास लक्ष्मणः परवीरहा ॥
इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन् । ॥ ३२ ॥
तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् । गङ्गां संतारयामास लक्ष्मणस्तां समाहितः ॥ ३३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

## सप्तचत्वारिंशः सर्गः ।

रामानुजः सीतां नौकया जाह्नव्याः पारं प्रापय्य विषण्णो निन्द्यकर्मकरणान्मृत्युमात्मन इच्छन् किमेवं करोषीति तया पृष्टः सन् राममनोगतं निशमय्य देवि मा शुचः पितुर्मम सखा वाल्मीकिस्तस्याश्रमे सुखं वसान्ते कल्याणं प्राप्स्यसीत्यब्रवीत् ।

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः । आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥ १ ॥

रा० टी०–स इति । रथे युक्तानश्वान् विचारयित्वा अतिचाञ्चल्यस्य किञ्चिन्निवृत्तये इतस्ततस्संचाल्य आरोहस्वेति वैदेहीमब्रवीत् ॥ २१ ॥

रा० टी०–सेति । सीता सौमित्रिणा सार्द्धं रथोत्तममारुरोह गंगामाससाद जगाम । सार्धश्लोक एकान्वयी २२॥२३

गो० टी०–आससादेति । जलाशयं जलप्रवाहम् २३-२६

२४-२५ ] ति० टी०–जलाशयं जलप्रवाहम् ॥२४-२५

रा० टी०–अथेति । अर्द्धदिवसे मध्याह्ने भागीरथ्या जलाशयं गत्वा निरीक्ष्य च दीनः आसन्नसीतावियोगबुद्ध्या दैन्यविशिष्टो महास्वनस्सन् लक्ष्मणः प्ररुरोद ॥ २४ ॥

रा० टी०–सीतेति । सीता लक्ष्मणमातुरं दृष्ट्वोवाच तदाकारमाह इदं त्वया किं किमर्थं रुद्यते ॥ २५ ॥

२६ ] ति० टी०–मम चिराभिलषितं जाह्नवीतीरमासाद्य किं रुद्यते इत्यन्वयः ॥ २६ ॥

रा० टी०–जान्हवीति । मम चिराभिलषितं जान्हवीतीरमासाद्य हर्षकाले मां किमर्थं विषादयसि ॥ २६ ॥

२७-३३ ] ति० टी०–द्विरात्रं तेन विना कृतः शोकमागतः कच्चित् ॥ २७-३३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

रा० टी०–स्वसंभावितमाह—नित्यमिति । रामपार्श्वेषु त्वं नित्यं वर्तसे अत एव द्विरात्रं तेन विनाकृतस्त्वं कच्चिच्छोकमागतः ॥ २७ ॥

रा० टी०–ममेति । एवं त्वत्सदृशमहं न शोचामि अतः एवं शोकेन त्वं बालिशो मा भव ॥ २८ ॥

रा० टी०–तारयस्वेति । मुनिभ्यः वासांसि आभरणानि च दास्यामि ॥ २९ ॥

रा० टी०–तत इति । तत्र महर्षीणामभिवादनं कृत्वा एकां निशामुष्य च तामयोध्यां यास्यामः ॥ ३० ॥

रा० टी०–ममेति । ममापि मनः रामं द्रष्टुं त्वरते॥३१॥

रा० टी०–तस्या इति । लक्ष्मणः नयने प्रमृज्य नाविकान् आह्वयामास ॥ ३२ ॥

रा० टी०–इयमिति । इयं नौस्सज्जा इति दाशाः नाविका अब्रुवन् अथं पृथक् तितीर्षुरिति लक्ष्मणः नावमुपारुहत् लक्ष्मणः तां सीतां गङ्गां संतारयामास ॥ ३३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षट्चत्वारिंशः सर्गः ॥ ४६ ॥

गो० टी०–नित्यमिति । पार्श्वेष्विति पूजायां बहुवचनम् । शोकमागतः कच्चिदित्यन्वयः ॥ २७—३४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्चत्वारिंशः सर्गः ॥ ४६ ॥

१ ] ति० टी०–नैषादीं निषादोपनीतां गुहाख्यनिषादसंबन्धिनीमिति वा समायुक्तां सज्जीकृताम् ॥ १ ॥

रा० टी०–तरणप्रकारं वर्णयन्नाह—अथेत्यादिभिः ।

सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः। उवाच शोकसंतप्तः प्रयाहीति च नाविकम् ॥ २ ॥
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः। उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंवृतः ॥ ३ ॥
हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता। अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥ ४ ॥
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत्। न चास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥५॥
प्रसीद च न मे पापं कर्तुमर्हसि शोभने। इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६ ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः। मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ७ ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण। पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥ ८ ॥
शापितोऽसि नरेन्द्रेण यत्त्वं संतापमागतः। तद्ब्रूयाः संनिधौ मह्यमहमाज्ञापयामि ते ॥ ९ ॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः। अवाङ्मुखो बाष्पगलो वाक्यमेतदुवाच ह ॥ १० ॥

---

राघवानुजः नैषादीं निषादेनानीतां नावं पूर्वं मैथिलीमारोप्य आरुरोह ॥ १ ॥

गो० टी०—अथेत्यादि । निषादस्य गुहस्येयं नैषादी ताम् समायुक्तां सज्जीकृताम् ॥ १ ॥

२ ] ति० टी०—स्थीयताम् । अर्वाचीनगङ्गातीरे एवेति शेषः । प्रयाहि परं तीरमिति शेषः ॥ २ ॥

रा० टी०—सुमन्त्रमिति । लक्ष्मणः स्थीयतामिति सुमन्त्रं प्रयाहीति नाविकं चोवाच ॥ २ ॥

गो० टी०—सुमन्त्रमिति । स्थीयतामिति । गङ्गातीर एवेति शेषः ॥ २ ॥

३ ] ति० टी०—तीरं परं तीरम् । उवाच । सीतामिति शेषः ॥ ३ ॥

रा० टी०—तत इति । लक्ष्मणः मैथिलीं वाक्यमुवाच ३

गो० टी०—तत इति । तीरं दक्षिणतीरमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—वैदेहि, अस्मिन्निमित्ते यस्माद्धीमताप्यार्येण लोकनिन्दाहेतुभूते क्रूरकार्ये यदहं नियुक्तस्तल्लोकस्य वचनीकृतः । यलोप आर्षः । वचनीयो निन्द्यः कृतः, अतो मे महच्छल्यं हृद्गतं हृदयं प्रविष्टम् ॥ ४ ॥

रा० टी०—तदाकारमाह—हृदिति । अस्मिन्निमित्ते त्वन्मात्रप्रेषणपूर्वकमुनिरहितदेशाधिकरणकसंस्थापनरूपकारणेनेत्यर्थः यस्मादहं लोकस्य निखिलधर्मद्रष्टुर्वाल्मीकेरित्यर्थः । वचनी निर्जनदेशे स्वस्वामिनीं सन्त्यज्य लक्ष्मणो गत इति अतिक्रूरः स इति दुर्वचनविषयः कृतः तस्मात्तच्छल्यं मे हृद् एतद्धृदये निविष्टमिव ॥ ४ ॥

गो० टी०—हृद्गतमित्यादि । हे. वैदेहि ! यस्मिन्निमित्ते यत्कृत्यानुष्ठानतः अहं लोकस्य वचनीकृतः वचनीयः कृतः । यलोप आर्षः । निन्द्यः संपादितो भवेयम् । अस्मिन्निमित्ते धीमता सर्वज्ञेन आर्येण यद्यस्मादहं नियुक्तः तेन हेतुना मे महच्छल्यं हृद्गतम् ॥ ४ ॥

५ ] ति० टी०—एवं महच्छल्यं प्राप्तवतो मे यन्मरणं तत्प्रागवस्था मूर्च्छा मृत्युर्मुख्यं मरणं वा यद्भवेत्तत्परं श्रेयो भवेत् । न च न त्वीदृशे लोकनिन्द्येऽस्मिन्वक्ष्यमाणे कार्येऽहं नियोज्यो नियोक्तुमर्हो भवामि । अथापि राजनियोगस्य सर्वथा कर्तव्यत्वान्नियोगं करोमीति शेषः ॥ ५ ॥

रा० टी०—श्रेय इति । अस्मिन्नुपस्थिते ईदृशे अतिक्रूरत्वेन प्रतीयमाने अत एव लोकनिन्दिते कार्ये अहं न नियोज्यः हि यस्मान्नियोजनान्मे मरणं श्रेयः यन्मृत्युः तस्मादपि परं यद्भवेत्तच्छ्रेयो वा ॥ ५ ॥

गो० टी०—श्रेय इति । एवं हृच्छल्यं प्राप्तवतो मे मृत्युः मरणं हि वा यद् यदि स्यात् । अद्य तदेव मे परं श्रेयो भवेत् । न चेत्यादि । ईदृशे लक्ष्मणो निर्घृण इति लोकनिन्द्ये अस्मिन् वक्ष्यमाणरूपे कार्ये न चाहं नियोज्योऽस्मि नियोक्तुमर्होऽस्मि । तथा विनियुक्तस्य कार्यस्य सर्वथैव कर्तव्यत्वादिति शेषः । अतः प्रसीदेत्यादि योज्यम् ॥ ५ ॥ ६ ॥

६ ] ति० टी०—यदेवमतः—प्रसीदेति । पापं कर्तुम् । दोषं ज्ञातुमित्यर्थः । अञ्जलिकृतः कृताञ्जलिः ॥ ६ ॥

रा० टी०—प्रसीदेति । मे मह्यं पापमयं पापीति बुद्धिं कर्तुं नार्हसि प्रसीद च इत्युक्त्वा भूमौ निपपात ॥ ६ ॥

७ ] ति० टी०—मृत्युं काङ्क्षन्तं परमहच्छल्यवशात् ॥७॥

रा० टी०—रुदन्तमिति । मैथिली लक्ष्मणमब्रवीत् ॥७॥

गो० टी०—रुदन्तमिति । मृत्युं काङ्क्षन्तम् । परमहच्छल्यवशादिति शेषः ॥ ७ ॥

८ ] ति० टी०—नावगच्छामि । रोदनादिहेतुमिति शेषः । महीपते रामस्य क्षेममपि सौख्यमपि न पश्यामि ॥ ८ ॥

रा० टी०—तदाकारमाह—किमित्यादिभिः । इदं भवदुक्तमहं नावगच्छामि जानामि अतः तत्त्वेन ब्रूहि त्वां स्वस्थं न पश्यामि अतो महीपतेः रामस्य क्षेमं स्वास्थ्येन स्थितिमपि न पश्यामि ॥ ८ ॥

गो० टी०—किमिदमिति । नावगच्छामि एवं रोदनादेर्हेतुमिति शेषः । महीपतेः रामस्य क्षेममपि सुखमपि न पश्यामि ॥ ८ ॥

९-१० ] ति० टी०—यस्मात्त्वमेवं संतापमागतस्तस्मा-

---

१ कल्कमिति गो. पाठः ।

श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् । पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥ ११ ॥
रामः संतप्तहृदयो मा निवेद्य गृहं गतः । न तानि वचनीयानि मया देवि तवाग्रतः ॥ १२ ॥
यानि राज्ञा हृदि न्यस्तान्यमर्षात्पृष्ठतः कृतः । सा त्वं त्यक्ता नृपतिना निर्दोषा मम संनिधौ॥१३॥
पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा । आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि॥ १४ ॥
राज्ञः शासनमादाय तथैव किल दौर्हृदम् । तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ॥ १५ ॥
पुण्यं च रमणीयं च मा विषादं कृथाः शुभे । राज्ञो दशरथस्यैवं पितुर्मे मुनिपुंगवः ॥ १६ ॥

त्वं नरेन्द्रेण प्रत्युत्तरतया शापपूर्वं क्रूरे कर्मण्याज्ञप्त इति मन्ये इति शेषः । मत्थं मम संनिधावाज्ञापयामि । ते त्वामित्यर्थः ॥ ९ ॥ १० ॥

रा० टी०-शापित इति । यत् यस्मै कार्याय नरेन्द्रेण शापितः अवश्यं करणाय शपथं कारितः अत एव सन्तापमागतोसि तत्त्वं मम सन्निधौ ब्रूयाः अहं ते आज्ञापयामि ॥ ९ ॥

रा० टी०-वैदेह्येति । वैदेह्या चोद्यमानो लक्ष्मणः एतद्वाक्यमुवाच ॥ १० ॥

गो० टी०-शापित इति । यस्मात्त्वमेवं संतापमागतः तस्मात्त्वं नरेन्द्रेणैव शापितोऽसि । मत्थं मम । आज्ञापयामि त इति । त्वामित्यर्थः ॥ ९ ॥ १० ॥

११ ] ति० टी०-त्वत्कृतेऽपवादं निन्दां श्रुत्वा संतप्तहृदयो गृहं गत इत्यन्वयः ॥ ११ ॥

रा० टी०-तदाकारमाह—श्रुत्वेति । त्वत्कृते त्वत्कर्तृकवनगमनप्रयत्ने सति सन्तप्तहृदयः निश्चितभविष्यत्त्वद्वियोगस्मृत्या खिन्नमानसो रामः पुरे जनपदे चोच्यमानां मां स्वविजयसम्पत्तिम् सुदारुणं परमदयालूनां हृदयप्रकम्पकम् अपवादं कुम्भकर्णभक्षितराक्षसकर्मकनिन्दां च परिषदो मध्ये श्रुत्वा निवेद्य अस्मान् आवयित्वा च गृहं गतः सार्द्धश्लोक एकान्वयी ॥ ११ ॥

गो० टी०-श्रुत्वेत्यादिश्लोकद्वयमेकान्वयम् । त्वत्कृते अपवादं श्रुत्वा सा त्वं त्यक्तेत्यन्वयः ॥ ११ ॥

१२ ] ति० टी०-कोऽसौ मन्त्रिमित्तः पौरापवादस्तत्राह—न तानीति । यानि वचनानि राज्ञामर्षाद्धृदि न्यस्तानि तानि हे देवि, मया तवाग्रतो न वचनीयानि न वक्तुं शक्यानि, अत एव तेषां वादो मया पृष्ठतः कृतः ॥ १२ ॥

रा० टी०-नेति । पृष्ठतः मृतस्यापीत्यर्थः कृतः शत्रोः किं च पृष्ठतः कृतः स्वानादरकर्तुरपि राक्षसस्येत्यर्थः अमर्षात् दुःखासहनात् हेतोः यानि कृत्यानि राज्ञा रामेण हृदि न्यस्तानि न कथितानीत्यर्थः तानि अग्रतः कस्यचित्समीपे मया न वचनीयानि वक्तव्यानि तव त्वया च न वचनीयानि एतेन रामाभिप्रायस्य ईश्वराणामपि दुर्ज्ञेयत्वं व्यक्तम् ॥ १२ ॥

गो० टी०-कोयमपवाद इत्यत्राह—न तानीति । यानि वचनानि राज्ञा अमर्षात् हृदि न्यस्तानि तानि तवाग्रतो मया न वचनीयानि वक्तुमशक्यानि । अत एवामर्षः मया पृष्ठतः कृतः । नोपन्यस्त इत्यर्थः ॥ १२ ॥

१३-१४ ] ति० टी०-ननु मदीयनिर्दोषत्वं राजा त्वं च न जानासि । किं तत्राह—निर्दोषेति । यद्यपि त्वं मम संनिधावग्न्यादिभिर्निर्दोषा ख्यापिता, तथापि पौरापवादभीतेन सा निर्दोषापि त्वं त्यक्ता । अन्यथा वास्तवदोषबुद्ध्येति ते त्वया न ग्राह्यम् । यदेवमत आश्रमान्तेष्वाश्रमसमीपेषु ॥१३॥१४॥

रा० टी०-सेति । निर्दोषा सर्वकालं दोषसंसर्गरहिता त्वं पौरापवादात् पौरः पूर्वं प्रार्थित इत्यर्थः य आपवः सर्वपावनकारकस्तन्निदर्शनमित्यर्थः तस्मात् हेतोः अभीतेन सर्वकालं भयरहितेन नृपतिना रामेण मम सन्निधौ त्यक्ता अतः अन्यथा अयं रामाभिप्रायं ज्ञात्वा न वदतीत्यादि न ग्राह्यम् ज्ञातव्यम् ॥ १३ ॥

गो० टी०-सा त्वमिति । तथापि ते तव विषये । पौरापवादभीतेन राज्ञा यदादिष्टं तन्मया च ग्राह्यम् । नान्यथा न तु त्वयि दोषबुद्ध्येत्यर्थः ॥ १३ ॥

रा० टी०-स्वकर्तव्यमाह—आश्रमे इति । दौर्हृदं दुर्ज्ञेयाभिप्रायं राज्ञः शासनमादायागतेन मया आश्रमान्तेषु वाल्मीकयाश्रमपरभागे त्वं त्यक्तव्या संस्थाप्या भविष्यसि १४

गो० टी०-ततः किमित्यत्राह-आश्रमान्तेष्विति । तदेवं किल दौर्हृदं गर्भः । गर्भिण्या अभिलषितमवश्यं कार्यम् । तस्मादप्याश्रमान्तेषु त्यक्तव्येत्यर्थः ॥ १४ ॥ १५ ॥

२५ ] ति० टी०-दौर्हृदं चाज्ञाय । गर्भिण्या अभिलषितमवश्यं कार्यमिति ज्ञात्वेत्यर्थः ॥ १५ ॥

रा० टी०-तदिति । तत् स्वप्रार्थितं पुण्यं रमणीयं ब्रह्मर्षीणां तपोवनमेतदेव अतो विषादं मा कृथाः ॥ १५ ॥

१६ ] ति० टी०-पुण्यं रमणीयं तपोवनं प्राप्य मा विषादं कृथाः ॥ १६ ॥

रा० टी०-ननु एकाकिन्या मम कथमिह स्थितिरित्यत आह—राज्ञ इति । वाल्मीकिः मे पितुः परमकः अत्युत्तमः सखा एतेन तत्र न साहाय्यान्तरापेक्षेति सूचितम् ॥ १६ ॥

गो० टी०-राज्ञ इति । परमकः परमानुकम्पावान् ॥ १६-१८ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

१ आज्ञायेति गो. पा. । २ दशरथस्येष्ट इति गो. पाठः ।

सखा परमको विप्रो वाल्मीकिः सुमहायशाः । पादच्छायामुपागम्य सुखमस्य महात्मनः ॥
उपवासपरैकाग्रा वस त्वं जनकात्मजे । ॥ १७ ॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि । श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्ये उत्तरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

## अष्टचत्वारिंशः सर्गः ।

देवरोक्तमाकर्ण्य मूर्छितयापि लब्धचेतनया वैदेह्या त्यागहेतुं पृष्टो बिडौजःसपत्नहन्ता कात्स्न्र्येन तत्कथयित्वा भृशदुःखितामपि तां तत्र निधाय तदादिष्टः पुरं ययौ ।

लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा । परं विषादमागम्य वैदेही निपपात ह ॥ १ ॥
सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा । लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २ ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण । धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥ ३ ॥
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः । याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ४ ॥
पुराहमाश्रमे वासं रामपादानुवर्तिनी । अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ ५ ॥
सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता । आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा॥ ६ ॥

---

१७–१८ ] ति० टी०–परमक इत्यनुकम्पायां कन् । अस्य पादच्छायां पादमूलमुपागम्य । एतत्पारतन्त्र्यं प्राप्येत्यर्थः ॥ १७ ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

**रा० टी०–पादेति** । अस्य वाल्मीकेः पादच्छायां चरणमूलमुपागम्य पतिव्रतात्वं पतिव्रताधर्ममास्थाय संस्थाप्य रामं सदा हृदि कृत्वा एकाग्रायतचित्ता उपवासपरा पतिव्रतोचितभोजनपरा त्वं सुखं वस तथा कृत्वा ते परमं श्रेयो भविष्यति श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तचत्वारिंशः सर्गः ॥ ४७ ॥

---

१ ] ति० टी०–अथ विसृष्टसीतासंदेशं गृहीत्वा लक्ष्मणपरावृत्तिः–**लक्ष्मणस्येति** ॥ १ ॥

**रा० टी०**–लक्ष्मणवचनश्रवणानन्तरकालिकं सीतावृत्तान्तमाह—**लक्ष्मणस्येत्यादिभिः** । वैदेही विषादं रामवियोगजदुःखमागम्य निपपात एतेन चिरं वियोगो भवितेति तया निश्चितमिति व्यक्तम् ॥ १ ॥

**गो० टी०–लक्ष्मणस्येति** ॥ १ ॥

२ ] **ति० टी०**–बाष्पपर्याकुलेक्षणा । संज्ञां प्राप्येति शेषः ॥

**रा० टी०–सेति** । सा सीता लक्ष्मणमुवाच ॥ २ ॥

**गो० टी०–सेति** । बाष्पपर्याकुलितेक्षणेत्यनेन पुनः संज्ञाप्राप्तिः सूचिता ॥ २ ॥

३ ] **ति० टी०**–दुःखमूर्तिः सकलदुःखसमूहः ॥ ३ ॥

**रा० टी०**–तदाकारमाह—**मामिकेत्यादिभिः** । यस्याः मे तनुः तथा तेन प्रकारेण दुःखमूर्तिः प्रदृश्यते सेयं प्रदृश्यमाना मामिका तनुः दुःखाय दुःखमेव भोक्तुं धात्रा ब्रह्मणा सृष्टा प्रार्थनया प्रकटिता ॥ ३ ॥

**गो० टी०–मामिकेति** । मामिकेयं तनुः धात्रा दुःखायैव सृष्टा । यस्मात्कारणात् यस्या मे दुःखमूर्तिः प्रदृश्यते॥३॥४॥

४ ] **ति० टी०**–सती पतिव्रता ॥ ४ ॥

**रा० टी०**–चिरकालकवियोगे हेतुमजानती आह—**किमिति** । शुद्धः समाचारः आचरणं यस्याः सती पतिव्रता याहं नृपतिना रामेण त्यक्ता तया मया पूर्वं किं नु कृतम् ॥४॥

५ ] **ति० टी०–हे सौमित्रे, पुरा पूर्वकाले रामपादानुवर्तिनी भूत्वा दुःखे वनवासदुःखे परिवर्तिनी वर्तमानाप्यनुरुध्य** तत्सोढ्रा । आश्रमे वासमरोचयमिति शेषः ॥ ५ ॥

**रा० टी०**–अपूर्वमेवेदं दुःखं प्रवृत्तमिति **बोधयन्ती** आह—**पुरेति** । पुरा पूर्वं रामपादानुवर्तिनी अहमाश्रमे मुनीनां निवासस्थाने वासमनुरुध्य कृत्वापि अदुःखे दुःखविरोधिनि सुखे इत्यर्थः पर परिवर्तिनी विद्यमाना अभवमिति शेषः एतेन रामसंयोगे प्रातिभासिकं दुःखमपि सुखमेवेति सूचितम् ॥ ५ ॥

**गो० टी०–पुरेति** । अनुरुध्यापि सोढ्वापि ॥ ५ ॥

६ ] **ति० टी०**–साहमिदानीं विजनीकृतेऽजनरहिता कृता कथमाश्रमे वत्स्यामि । कस्य च स्वीयं दुःखमहमाख्यास्यामि । विजनवनस्थेति शेषः ॥ ६ ॥

**रा० टी०–सेति** । विजनीकृता सुखसंपादकरामराहित्यं

किं नु वक्ष्यामि मुनिषु कर्म चासत्कृतं प्रभो । कस्मिन्वा कारणे त्यक्ता राघवेण महात्मना ॥ ७ ॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले । त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८ ॥
यथाज्ञं कुरु सौमित्रे त्यज मां दुःखभागिनीम् । निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ९ ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च । शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १० ॥
शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण । वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११ ॥
जानासि च यथा शुद्धा सीता तत्त्वेन राघव । भक्त्या च परया युक्ता हिता च तव नित्यशः ॥ १२ ॥
अहं त्यक्ता च ते वीर अयशोभीरुणा जने । यच्च ते वचनीयं स्यादपवादः समुत्थितः ॥ १३ ॥

प्रापिता अत एव दुःखपरायणा सा रामपादपरायणाहमाश्रमे मुनिनिवासस्थानेपि कथं वत्स्यामि दुःखं कस्य कस्मै आख्यास्यामि ॥ ६ ॥

गो० टी०–सेति । विजनीकृता इष्टजनविरहिता कृता ॥ ६ ॥ ७ ॥

७ ] ति० टी०–किं न्विति । महात्मना राघवेण केन कारणेन त्यक्ता, किं वा त्यागकारणमसत्कर्म त्वया कृतमिति प्रष्टृषु मुनिषु किं नु वक्ष्यामि । त्यागकारणपापस्य कस्याप्यकरणाद्वक्तव्यं प्रत्युत्तरं न किमपि पश्यामीत्याशयः॥७॥

रा० टी०–किमिति । राघवेण कस्मिन्कारणे त्वं त्यक्तेति पृच्छत्स्विति शेषः मुनिषु मुनिमध्ये किमसत्कृतं कर्म वक्ष्यामि असत्कर्मणः संभव एव नास्तीति तात्पर्यम् ॥ ७ ॥

८ ] ति० टी०–अपि च जीवितत्यागोऽप्यशक्य इत्याह–न खल्विति । तदत्यागहेतुमाह–राजवंश इति । राजसंतानः परिहास्यते । विच्छिद्यते इत्यर्थः । मयि गर्भस्य विद्यमानत्वादिति भावः ॥ ८ ॥

रा० टी०–प्राणत्यागमपि कर्तुं न शक्नोमीत्याह–नेति । जाह्नवीजले जीवितं न त्यजेयं तत्र हेतुः मे भर्तुः राजवंशः परिहास्यते कथमेतस्य पत्नी मृतेति इत्याद्युक्त्वा परिहासं करिष्यतीत्यर्थः ॥ ८ ॥

गो० टी०–न खल्विति । त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते इत्युत्तरार्धपाठः । अत्यागकारणमुच्यते । राजवंशः राजसन्तानः परिहास्यते विच्छिद्यते । मयि गर्भस्य विद्यमानत्वादिति शेषः । मया देहो धर्तव्य इति भावः । यद्वा । त्यजेयं राघवं वंशे भर्तुर्मा परिहास्यतीति पाठः । रामकृतकौर्यादद्यैव जाह्नवीजले जीवस्त्यक्तव्यः । तथापि तं न त्यजेयम् । कुतो भर्तुर्वंशे निष्कलङ्कः राघवमेकं मा परिहास्यति मा परिहसतु । व्यत्ययस्त्वार्षः । जीवितत्यागे स्त्रीहत्यामूलोपवादः रामस्य स्यादिति भावः । अद्यैवेत्यनेन प्रसवानन्तरन्तु त्याज्यमेवेत्यर्थः ॥ ८ ॥

९ ] ति० टी०–त्वं च राजशासनं कुर्वित्याह–यथाज्ञमिति । इदं वचो मत्संदेशरूपम् ॥ ९ ॥

रा० टी०–ननु मया किं कर्तव्यमित्यत आह–यथेति । राज्ञो रामस्य निदेशे आज्ञापने स्थीयताम् आज्ञापितं स्मर्यतामित्यर्थः अत एव आज्ञां रामाज्ञापितं यथा यथावत्कुरु अत एव मां त्यज ममेदं वचः शृणु च ॥ ९ ॥

गो० टी०–त्वं तु राजशासनं कुर्वित्याह–यथाज्ञमिति॥९॥

१०–१२ ] ति० टी०–प्रग्रहेण प्रकृष्टाञ्जलिग्रहणसमेतेन शिरसेत्यन्वयः । चरणौ वन्द्य । मत्प्रतिनिधितयेति भावः । पार्थिवं च वन्दयित्वा कुशलं ब्रूहि ॥ १०–१२ ॥

रा० टी०–तद्वचनाकारमाह–श्वश्रूणामित्यादिभिः । प्राञ्जलिप्रग्रहेण प्रणयसूचकबद्धयुगलकरकरणेन श्वश्रूणां चरणौ अविशेषेणावन्द्य पार्थिवं रामं कुशलं ब्रूहि ॥ १० ॥

रा० टी०–शिरसेति । शिरसाभिनत एव त्वं सर्वासां श्वश्रूभिन्नानामपि मध्ये ब्रूयाः कुशलमिति शेषः नृपतिः रामोपि वक्तव्यः ॥ ११ ॥

रा० टी०–रामोद्देश्यकवचनाकारमाह–जानासीत्यादिभिः । तव परया भक्त्या युक्ता अत एव नित्यशो हिताहिताचरणे युक्ता सीता यथा शुद्धा तथा त्वं तत्त्वेन जानासि १२

गो० टी०–श्वश्रूणामिति । चरणौ आवन्द्येति । मदर्थमिति शेषः ॥ १०–१२ ॥

१३ ] ति० टी०–जनेऽयशोभीरुणा जननिमित्तायशोभीरुणैव त्वया त्यक्ता । नान्यथेति जानामीति शेषः । वचनीयं निन्दा । अपवादोऽभिशापः ॥ १३ ॥

रा० टी०–इदानीं कथञ्चित्त्यागहेतुं विज्ञायाह–अहमिति । ते अपवादः अपापमदधररसपानाद्यभावाय वादो यत्नः समुत्थितः कर्तव्यत्वेन प्राप्तः अत एव अयशोभीरुणा अयशसः अकर्तव्यं कृतमिति दुष्कीर्तिभीरुणा त्वया अजने देशे अहं त्यक्ता अतः स्यात् तत्राभीष्टमिद्धिर्भवेत् तत्र हेतुः यत् ते अवचनीयम् सौशील्यादिना अवक्तव्याधरपानाद्यभावादि तन्मयापि परिहर्तव्यम् तत्र हेतुः त्वमेव मे परमा गतिः त्वदनुसारेणैव मया वर्तितव्यमित्यर्थः सार्धश्लोक एकान्वयी १३

गो० टी०–अहमिति । अयशोभीरुणैव त्वया त्यक्ता अनाथेवेत्यर्थः । वचनीयं जुगुप्सनम् । तन्मया परिहर्तव्यम् । त्वदाज्ञया वनस्थल इति शेषः ॥ १३–१७ ॥

१ वा सत्कृतं च किमिति गो.पाठः । २ त्विदति गो.पा. । ३ त्यजेति गो.रा.पाठः । ४ त्वचेति गो.पाठः । ५ अपवादसमुत्थितामिति गो. पाठः ।

मया च परिहर्तव्यं त्वं हि मे परमा गतिः। वक्तव्यश्चैव नृपतिर्धर्मेण सुसमाहितः ॥ १४ ॥
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा। परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ॥ १५ ॥
यत्तु पौरजने राजन्धर्मेण समवाप्नुयात्। अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥ १६ ॥
यथापवादः पौराणां तथैव रघुनन्दन। पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥ १७ ॥
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः। इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ १८ ॥
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीम्। एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ॥ १९ ॥
शिरसा वन्द्य धरणीं व्याहर्तुं न शशाक ह। प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ॥ २० ॥
ध्यात्वा मुहूर्तं तामाह किं मां वक्ष्यसि शोभने। दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे ॥ २१ ॥
कथमत्र हि पश्यामि रामेण रहितां वने। इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ॥ २२ ॥
आरुरोह पुनर्नावं नाविकं चाभ्यचोदयत्। स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ २३ ॥
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम्। मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ २४ ॥
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ। दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ॥
निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत्। ॥ २५ ॥

१४-१५ ] ति० टी०–अथ प्रजाविषये संदेशमाह—वक्तव्यश्चेति ॥ १४ ॥ १५ ॥

रा० टी०–संदेशान्तरमाह—वक्तव्य इति। यथा येन प्रकारेण भ्रातृषु वर्तेथास्तथा पौरेष्वपि ॥ १४ ॥

रा० टी०–तत्र हेतुं वदन्ती आह—परम इति। एष उक्तस्ते राज्ञः परमो धर्मः अत एव तस्मात् तदनुष्ठानात् अनुत्तमा परमोत्तमा कीर्तिः अतः यत् परमयत्नवान् भवान् धर्मेण साम्यवृत्त्या पौरजने समवाप्नुयात् वर्तेत इत्यर्थः ॥१५॥

१६ ] ति० टी०–एष धर्मः कस्तत्राह–यत्त्विति। धर्मेण धर्मकृतलक्षणेन यदवाप्नुयात्पुण्यमेव परमो धर्मः॥१६॥

रा० टी०–ननु तव शोके कथं मम कीर्तिरित्यत आह—अहमिति। पौराणामज्ञातहेतुकपुरवासिनामपवादमियं किञ्चिदपराधवती अत एव चिरं वियोजितेत्यादिवक्ष्यमाणदुरुक्ति च अहं नानुशोचामि ॥ १६ ॥

१७ ] ति० टी०–यथा पौराणामपवादं परिहृत्य स्थितिर्भवति तथैव रघुनन्दन, वर्तस्वेति शेषः ॥ १७ ॥

रा० टी०–शोकाभावे हेतुमाह—पतिरिति। हि यतः नार्याः पतिरेव देवतादिः तस्माद्भर्तुः प्रियं प्राणैरपि कार्यम् १७

१८ ] ति० टी०–मम संग्रहः। मया रामं प्रति वक्तव्यसंदेशस्य संग्रह इत्यर्थः ॥ १८ ॥

रा० टी०–इतीति। इति मम संग्रहः संग्रहकर्ता रामः इति उक्तमशेषं मद्वचनाद्वक्तव्यः ऋतुकालातिवर्तिनीं गर्भवर्तीमित्यर्थः मा मां निरीक्ष्य त्वं गच्छ ॥ १८ ॥

गो० टी०–प्राणैरिति। ऋतुकालातिवर्तिनीं गर्भलक्षणवतीम् ॥ १८–२६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१९-२० ] ति० टी०–ऋतुकालातिवर्तिनीं गर्भलक्षणवर्तीं मा मां निरीक्ष्य गच्छ। पुनः रामादिकृतापवादप्रसक्तिनिवृत्तये इति भावः ॥ १९ ॥ २० ॥

रा० टी०–एवमिति। लक्ष्मणः धरणीं सीताचरणसमीपभूमिमावन्द्य व्याहर्तुं किंचिदपि वक्तुं न शशाक ॥ १९ ॥

रा० टी०–प्रदक्षिणमिति। रुदन्नेव लक्ष्मणः मुहूर्तं ध्यात्वा तां सीतामाह तदाकारमाह हे शोभने मां किं वक्ष्यसि एतेन संभावितसीतादुरुक्तेर्भीतिस्सूचिता ॥ २० ॥

२१-२३ ] ति० टी०–किं मां वक्ष्यसि। निरीक्ष्य मां गच्छेति किं वदसीत्यर्थः। शोकवशात्कालान्तरे प्रयोगो न दोषाय। तथा निरीक्षणस्यायोग्यतोपपादकम्–दृष्टपूर्वमिति ॥ २१–२३ ॥

रा० टी०–दृष्टेति। ते रूपं मया दृष्टपूर्वं न पादौ तु दृष्टौ अतः अत्रास्मिन्समये रामेण रहितां त्वां कथं पश्यामि२१

रा० टी०–इतीति। इत्युक्त्वा तां पुनर्नमस्कृत्य नावमुपारुहत् नौकासमीपमगच्छत् सार्द्धमेकान्वयि ॥ २२ ॥

रा० टी०–आरुरोहेति। नावमारुरोह अर्द्धं पृथक्—स इति। लक्ष्मणः उत्तरं तीरं गत्वा रथमध्यारुहत् अध्यारोहत् ॥ २३ ॥

२४-२५ ] ति० टी०–अनाथवदनाथेव, न तु वस्तुतोऽनाथा। पूर्णचिद्घनस्वरूपत्वादिति भावः ॥ २४ ॥ २५ ॥

रा० टी०–मुहुरिति। अनाथवत् रक्षकरहितामिव चेष्टन्तीं सीतां मुहुर्मुहुः परावृत्य दृष्ट्वा लक्ष्मणः प्रययौ ॥२४॥

रा० टी०–दूरस्थमिति। दूरस्थं रथं लक्ष्मणं चालोक्य उद्विग्नां सीतां निरीक्ष्यमाणं च शोकः समाविशत् ॥ २५ ॥

१ इतीति गो. पाठः। २ वनः इति गो. पाठः। ३ यथापवादमिति गो. तथापवादमिति रा. पाठः। ४ आरुह्य चेति गो. पा.।

सा दुःखभारावनता यशस्विनी यशोधरा नाथमपश्यती सती ।
रुरोद सा बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

## एकोनपञ्चाशः सर्गः ।

मुनिबालकनिवेदितजानकीवृत्तो वाल्मीकिस्तत्रागत्य पतिव्रतां पूताचारां च भवतीं ज्ञानचक्षुषा वेद्मीति तां समाश्वास्य तदविदूरस्थतापसीसात्कृत्य च स्वाश्रमं ययौ ।

सीतां तु रुदतीं दृष्ट्वा ते तत्र मुनिदारकाः । प्राद्रवन्यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥ १ ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये । सर्वे निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २ ॥
अदृष्टपूर्वा भगवन्कस्याप्येषा महात्मनः । पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३ ॥
भगवन्साधु पश्येस्त्वं देवतामिव खाच्च्युताम् । नद्यास्तु तीरे भगवन्वरस्त्री कापि दुःखिता ॥ ४ ॥
दृष्टास्माभिः प्ररुदिता दृढं शोकपरायणा । अनर्हा दुःखशोकाभ्यामेका दीना अनाथवत् ॥ ५ ॥
[न ह्येनां मानुषीं विद्मः सत्क्रियास्याः प्रयुज्यताम् । आश्रमस्याविदूरे च त्वामियं शरणं गता ॥
त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि । तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥

२६ ] ति० टी०–दुःखभारावनता सेव । यशोधरा पातिव्रत्ययशोवती ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टचत्वारिंशः सर्गः ॥ ४८ ॥

रा०टी०–सेति । दुःखपरायणा अत एव दुःखभारावनता यशस्विनी प्रशस्तयशोविशिष्टा अत एव यशसा अधराः सकलनार्यो यस्याः सा सीता नाथमपश्यती सती महास्वनं रुरोद २६

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टचत्वारिंशः सर्गः ॥ ४८ ॥

१–२ ] ति० टी०–अथ वाल्मीकिना स्वाश्रमे सीतानयनम्–सीतां त्विति । मुनिदारका मुनिपुत्राः । उग्रधीरुग्रतपोविषयबुद्धिः ॥ १ ॥ २ ॥

रा० टी०–लक्ष्मणगमनानन्तरकालिकं वृत्तमाह—सीतामित्यादिभिः । यत्र वाल्मीकिरास्ते तत्र मुनिदारकाः प्राद्रवन् ॥ १ ॥

रा० टी०–अभिवाद्येति । मुनिपुत्राः तस्याः सीतायाः रुदितस्वनं निवेदयामासुः ॥ २ ॥

गो० टी०–सीतां त्वित्यादि ॥ १ ॥ २ ॥

३–४ ] ति० टी०–निवेदयामासुरित्यस्य विस्तरः–अदृष्टेति ॥ ३ ॥ ४ ॥

रा० टी०–निवेदनाकारमाह–अदृष्टेत्यादिभिः । अदृष्टपूर्वा दृष्टपूर्वभिन्ना कस्यापि महात्मनः श्रीरिव पत्नी सम्मोहाद्विकृतानना सती विरौति ॥ ३ ॥

रा०टी०–भगवन्निति । खाच्च्युतां देवतामिव स्त्रियमिति शेषः त्वं साधु पश्येः अर्द्धं पृथक् नद्या इति दुःखशोकाभ्यां दुःखशोकयोः अनर्हा अयोग्या अनाथवद्दीना अत एव दुःखिता अत एव शोकपरायणा या कापि अनिर्वचनीया वरस्त्री नद्यास्तीरे अस्माभिर्दृष्टा तामेनां मानुषीं प्राकृतमनुष्यजातिं न विद्मः अतः अस्याः सत्क्रिया सत्कारः प्रयुज्यतां क्रियतां सार्द्धश्लोक एकान्वयी ॥ ४ ॥ ५ ॥

रा० टी०–आश्रमस्येति । आश्रमस्य अविदूरे निकटे शरणं रक्षकं त्वां गता प्राप्ता इयं साध्वी त्रातारमिच्छते इच्छति अतस्त्रातुमर्हसि ॥ ६ ॥

रा० टी०–तेषामिति । तपसा तपोबलेन लब्धं चक्षुः सकलदर्शनसामर्थ्यं तद्वान् वाल्मीकिः बुद्ध्या तपोलब्धस्वज्ञानेन निश्चित्य तत्वेन ज्ञात्वा यत्र मैथिली तत्र प्राद्रवत् प्राद्रवदित्यनेन वाल्मीकेः सीतायां वात्सल्यातिशयो व्यञ्जितः ॥ ७ ॥

रा० टी०–तमिति । प्रयातं वाल्मीकिमभिप्रेत्य ज्ञात्वा शिष्याः एनं प्राद्रवन्निति शेषः अर्द्धं पृथक् तमिति । रुचिरमर्घ्यमादाय पद्भ्यामेव किंचिद्देशमभिद्रुत्य जान्हवीतीरमागमत् सीतां ददर्श च सार्द्धश्लोक एकान्वयी ॥ ९ ॥

गो० टी०–सर्वं निवेदयामासुरित्येतद्विवृणोति—अदृष्टेत्यादि ॥ ३ ॥ ४ ॥

५ ] ति० टी०–अनर्हा । दुःखस्येति शेषः । दुःखशोकाभ्यां दीना अनाथवद्वर्तते तामिमां साधु पश्येः, दृष्ट्वानुगृहाण च ॥५॥

गो० टी०–दृष्टेति । अनर्हेति । दुःखस्येति शेषः॥५–११॥

१ सर्वमिति गो. पाठः । २ पश्येति गो. पाठः । ३ एकां दीनां ह्यनाथवदिति गो. पाठः । ४ इदं सार्धं पद्यचतुष्टयमधिकं गो. रा. पु. ।

तपसा लब्धचक्षुष्मान् प्राद्रवद्यत्र मैथिली । तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् ॥
तं तु देशमभिप्रेत्य किंचित्पद्भ्यां महामतिः । अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥
ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ] ।
तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुंगवः । उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥ ६ ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया । जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥ ७ ॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना । कारणं चैव सर्वं मे हृदयेनोपलक्षितम् ॥ ८ ॥
तव चैव महाभागे विदितं मम तत्त्वतः । सर्वं च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते ॥ ९ ॥
अपापां वेद्मि सीते ते तपोलब्धेन चक्षुषा । विस्रब्धा भव वैदेहि सांप्रतं मयि वर्तसे ॥ १० ॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः । तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः॥११॥
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा । यथा स्वगृहमभ्येत्य विषादं चैव मा कृथाः ॥ १२ ॥
श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् । शिरसा वन्द्य चरणौ तथेत्याह कृताञ्जलिः ॥ १३ ॥

६-७ ] ति० टी०-एतदुत्तरम् । 'तां सीताम्' इति श्लोकः । मध्ये 'नहीनां मानुषीं विद्मः सत्क्रियास्याः प्रयुज्यताम् । आश्रमस्याविदूरे च स्वामियं शरणं गता ॥ त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि । तेषां तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित् ॥ तपसा लब्धचक्षुष्मान्प्राद्रवद्यत्र मैथिली । तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम् । तं तु देशमभिद्रुत्य किंचित्पद्भ्यां महामतिः । अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत् ॥ ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ॥' इति श्लोकचतुष्टयमर्धाधिकं प्रक्षिप्तमिति कतकः । तां सीतां मुनिपुत्रैर्दृष्टानुग्राह्यत्वेनोक्तां शोकग्रस्तां तां सीतां तत्समीपे गत्वा दृष्ट्वा वाल्मिकिरुवाचेति सोपस्कारः संबन्धः ॥ ६ ॥ ७ ॥

रा० टी०-तामिति । वाल्मीकिः सीतामुवाच ॥ १० ॥

रा० टी०-तदाकारमाह-स्नुषेत्यादिभिः । त्वं रामस्य प्रिया महिष्यसीति शेषः अतस्ते स्वागतम् ॥ ११ ॥

८ ] ति० टी०-धर्मसमाधिना योगजधर्मलब्धध्यानपरिपाकेन । कारणं चागमनकारणम् । हृदयेनोपलक्षितम् । ध्यानेनेति भावः ॥ ८ ॥

रा० टी०-तथा ज्ञाने हेतुं वदन्नाह-आयान्तीति । स्वधर्मे भवत्पादसेवारूपपरमकर्मणि समाधिः चित्तैकाग्र्यं यस्य तेन मया हृदयेन त्वद्ध्यानपूतमनसा आयान्ती त्वं विज्ञातासि अत एव कारणं तवागमने हेतुरपि उपलक्षितं ज्ञातम् ॥ १२ ॥

गो० टी०-आयान्तीति । कारणमिति । आगमनकारणमित्यर्थः ॥ १२ ॥

९ ] ति० टी०-तव चैवेति । तत्त्वतस्तत्त्वं तव तत्त्वं शुद्धभावत्वरूपं मम मया विदितम् । तदेवाह-सर्वं चेति । मह्यं मम ॥ ९ ॥

रा० टी०-तवेति । यतः त्रैलोक्ये यद्वर्तते तत्सर्वं मह्यं मम विदितमतः तवापि अभिप्रेतमिति शेषः मम विदितम् १३

गो० टी०-तव चैवेति । शुद्धभावत्वमिति शेषः । मम मया । मह्यं मम ॥ १३ ॥

१० ] ति० टी०-तदेव पुनराह-अपापामिति । ते त्वां मयि वर्तसे । मत्समीपे निवसिष्यसीत्यर्थः ॥ १० ॥

रा० टी०-अपापामिति । ते त्वामपापामवलोकनमात्रेण पापनिवर्तिकाम् वेद्मि मयि मत्समीपे ग्तस्त्वं वर्तसे अतः विस्रब्धा रामप्रीतिविषयकविश्वासयुक्ता भव ॥ १४ ॥

गो० टी०-अपापामिति । मयि वर्तस इति । मत्समीपे निवसिष्यसीत्यर्थः ॥ १४ ॥ १५ ॥

११ ] ति० टी०-आश्रमस्याविदूरे समीपे एकान्ते तपश्चरणार्थं तापस्योऽपि स्थिताः सन्ति । तासां निवासोऽस्तीत्यर्थः । यथा वत्सं पुत्रमिव ॥ ११ ॥

रा० टी०-आश्रमस्येति । मे आश्रमस्य अविदूरे तापस्यः तपसि त्वद्दर्शनहेतुकतपश्चरणे स्थिताः सन्तीति शेषः ताः तापस्यः हे वत्से त्वां यथा वत्सं पालयिष्यन्ति वत्से इत्युक्त्या जनकेन सहैतस्य महती मैत्रीति सूचिता तद्द्वारैव दशरथेन मैत्रीति पूर्वेण न विरोधः ॥ १५ ॥

१२-१३ ] ति० टी०-यथा स्वगृहमभ्येत्य तिष्ठसि तथैव तिष्ठेति शेषः ॥ १२ ॥ १३ ॥

रा० टी०-इदमिति । इदं मद्दत्तमर्घ्यं प्रतीक्ष गृहाण यथा स्वगृहमभ्येत्य विषादं न करोषीति शेषः तथा विषादं मा कृथाः १६

रा० टी०-श्रुत्वेति । सीता तथेत्याह ॥ १७ ॥

गो० टी०-इदमिति । यथा स्वगृहमभ्येत्येति । तथैवावतिष्ठस्वेति शेषः ॥ १६-१८ ॥

१ अभिद्रुत्येति रा० पा० । २ प्रतीक्षेति रा० पा० ।

तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात्। तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः॥
उपाजग्मुर्मुदा युक्ता वचनं चेदमब्रुवन्। ॥ १४ ॥
स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं च ते। अभिवादयामस्त्वां सर्वा उच्यतां किं च कुर्महे॥ १५ ॥
तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत्। सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः॥ १६ ॥
स्नुषा दशरथस्यैषा जनकस्य सुता सती। अपापा पतिना त्यक्ता परिपाल्या मया सदा॥ १७ ॥
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि। गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः॥ १८ ॥
मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः। स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनपञ्चाशः सर्गः॥ ४९॥

---

## पञ्चाशः सर्गः।

---

अयोध्यां प्रति निवर्तमानयोर्लक्ष्मणसुमन्त्रयोः परस्परसंभाषणे सौमित्रिं प्रति सुमन्त्रः पूर्वं श्रुतं रामस्य सीतावियोगे निदानं कथयति।

दृष्ट्वा तु मैथिलीं सीतामाश्रमे संप्रवेशिताम्। संतापमगमद्घोरं लक्ष्मणो दीनचेतनः॥ १ ॥
अब्रवीच्च महातेजाः सुमन्त्रं मन्त्रसारथिम्। सीतासंतापजं दुःखं पश्य रामस्य सारथे॥ २ ॥

---

१४ ] ति० टी०–वैदेह्या सहेति शेषः। मुनिपत्नयस्तापस्यो मुदा युक्ता अब्रुवन्वाल्मीकिम्॥ १४ ॥

रा० टी०–तमिति। सीता मुनिं पृष्ठतोन्वगादर्द्धं पृथक् तमिति। वैदेह्या सहायान्तं मुनिं मुनिपत्नयः सीतामननशीलाः स्त्रियः उपाजग्मुः इदमब्रुवन् च॥ १८ ॥

गो० टी०–तमिति। मुदा युक्ता इति। मुनिपत्नयः तापस्यः अब्रुवन्निति। वाल्मीकिमिति शेषः॥ १९ ॥

१५–१६ ] ति० टी०–चिरस्य तवागमनं दृष्ट्वा स्थिता वयमभिवादयामः। अभिवादयाम किं च कुर्महे॥ १९॥१६॥

रा० टी०–तद्वचनाकारमाह–स्वागतमिति। वयं किं कुर्महे उच्यताम्॥ १९ ॥

रा० टी०–तासामिति। वाल्मीकिरब्रवीत् अर्द्धं पृथक् तद्वचनाकारमाह–स्नुषेति। अपापा सेवकानां पापनिवर्तिका मया सदा परिपाल्या इयं सीता पतिना पत्या त्यक्ता इह प्रापिता सार्द्धश्लोक एकान्वयी॥ २० ॥

गो० टी०–स्वागतमिति। चिरस्यागमनमिति। प्रतीक्ष्य स्थिता वयम् अभिवादयामहे। एतेन सीतायाः समाश्वासादिना विलम्बो जात इत्यवगम्यते॥ २०—२३॥

१७–१८ ] ति० टी०–सदेति। पूर्वं पूर्वावतारेष्वप्येवमेव परिपालितेत्यर्थः॥ १७ ॥ १८ ॥

रा० टी०–इमामिति। गौरवात् अतिप्रशस्तवंशोत्पन्नत्वादिना गुरुत्वात् मम वाक्याच्च वो युष्माकं विशेषतः पूज्या अतः परमेण स्नेहेन भवन्त्यः इमां पश्यन्तु॥ २१ ॥

१९ ] ति० टी०–परिदाय तापसीनां हस्ते दत्त्वा॥१९॥
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनपञ्चाशः सर्गः॥ ४९॥

रा० टी०–मुहुरिति। शिष्यवृतवाल्मीकिः वैदेहीं मुहुर्मुहुः परिदाय पत्नीभ्यो ग्राहयित्वा स्वमाश्रमं पुनरायात्॥२२॥
इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनपञ्चाशः सर्गः॥४९॥

गो० टी०–मुहुरिति। प्रणिधाय[1] तापसीनां हस्ते दत्त्वा॥ २४ ॥
इति श्रीगो०श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनपञ्चाशः सर्गः॥ ४९॥

---

१ ] ति० टी०–अथ लक्ष्मणस्य सुमन्त्रेणाश्वासनम्—दृष्ट्वा त्विति। उदकूले स्थित्वा वाल्मीकिकर्तृकसीताप्रवेशदर्शनम्॥ १ ॥

रा० टी०–लक्ष्मणवृत्तमाह–दृष्ट्वेत्यादिभिः। आश्रमे संप्रवेशितां वाल्मीकिनेति शेषः मैथिलीं दृष्ट्वा दीनचेतनो लक्ष्मणः संतापमगमत् एतेन तावत्कालं लक्ष्मणो दूरतः पश्यन्नतिष्ठदिति सूचितम्॥ १ ॥

गो० टी०–दृष्ट्वा त्वित्यादि॥ १ ॥

२ ] ति० टी०–मन्त्रसारथिं मन्त्रसहायभूतं सारथिम्। सीतासंतापजं सीतावियोगजसंतापजम्॥ २ ॥

रा० टी०–अब्रवीदिति। मन्त्रसारथिं मन्त्रित्वसमानाधिकरणसारथित्वविशिष्टं सुमन्त्रं महातेजा लक्ष्मणोऽब्रवीत् तदा-

---

१ प्रणिधायेति गो० पाठः।

ततो दुःखतरं किं नु राघवस्य भविष्यति । पत्नीं शुद्धसमाचारां विसृज्य जनकात्मजाम् ॥ ३ ॥
व्यक्तं दैवादहं मन्ये राघवस्य विनाभवम् । वैदेह्या सारथे नित्यं दैवं हि दुरतिक्रमम् ॥ ४ ॥
यो हि देवान्सगन्धर्वानसुरान्सह राक्षसैः । निहन्याद्राघवः क्रुद्धः स दैवं पर्युपासते ॥ ५ ॥
पुरा रामः पितुर्वाक्याद्दण्डके विजने वने । उषित्वा नव वर्षाणि पञ्च चैव महावने ॥ ६ ॥
ततो दुःखतरं भूयः सीताया विप्रवासनम् । पौराणां वचनं श्रुत्वा नृशंसं प्रतिभाति मे ॥ ७ ॥
को नु धर्माश्रयः सूत कर्मण्यस्मिन्यशोहरे । मैथिलीं समनुप्राप्तः पौरैर्हीनार्थवादिभिः ॥ ८ ॥
एता वाचो बहुविधाः श्रुत्वा लक्ष्मणभाषिताः । सुमन्त्रः श्रद्धया प्राज्ञो वाक्यमेतदुवाच ह ॥ ९ ॥
न संतापस्त्वया कार्यः सौमित्रे मैथिलीं प्रति । दृष्टमेतत्पुरा विप्रैः पितुस्ते लक्ष्मणाग्रतः ॥ १० ॥

---

कारमाह सीतासंतापजं वियोगजनितसीतासंतापस्मृतिजनितं रामस्य दुःखं त्वं पश्य ॥ २ ॥

गो० टी०—अब्रवीदिति । मन्त्रसहायभूतः सारथिर्मन्त्रसारथिः । सीतासंतापजं सीताविरहसंतापजमित्यर्थः ॥२॥३॥

३ ] ति० टी०—पत्नीं विसृज्य यत्स्थितः । ततो विसृज्य स्थितेः ॥ ३ ॥

रा० टी०—तत इति । ततः संतापजनितदुःखाद्दुःखतरमधिकदुःखं पत्नीं विसृज्य विद्यमानस्य राघवस्य किंनु भविष्यति न किमपीत्यर्थः ॥ ३ ॥

४ ] ति० टी०—वैदेह्या विनाभवं वैदेहीवियोगेनावस्थानं दैवात्प्राचीनदुरदृष्टवशादहं मन्ये । यतो दैवं दुरतिक्रमम् ॥४॥

रा० टी०—व्यक्तमिति । दैवात् अदृष्टात् विनापि वैदेह्या सह रामस्य आभवं चिन्ताजनकं दुरतिक्रमं दैवं कस्यचिददृष्टमहं मन्ये कस्यचिददृष्टवशादेव एवं वियोगो जात इति तात्पर्यम् ॥ ४ ॥

गो० टी०—व्यक्तमिति । विनाभवं सीतावियोगेनावस्थानं वैदेह्या सार्धं विनाभवमित्यर्थः । दैवात्प्राग्भवाददृष्टादित्यर्थः ॥ ४ ॥

५ ] ति० टी०—दैवं पर्युपासते दैवमनुवर्तते । न तु तन्निरसितुं शक्नोतीत्यर्थः ॥ ५ ॥

रा० टी०—देवस्य दुरतिक्रमत्वे हेतुं वदन्नाह—य इत्यादिभिः । स राघवोपि दैवं पर्युपासते एतेन राघवस्य सर्वमर्यादापालकत्वं सूचितम् ॥ ५ ॥

गो० टी०—य इति । दैवमनुवर्तते न तु तन्निरसितुं शक्नोतीत्यर्थः ॥ ५ ॥ ६ ॥

६ ] ति० टी०—यत्पुरा दण्डके उषित्वा दुःखमन्वभूत्तत्पितृवाक्यगौरवादुचितमिति शेषः ॥ ६ ॥

रा० टी०—पुरेति । रामः नव पञ्च च वर्षाणि दुःखं प्राप्नोदिति शेषः ॥ ६ ॥

७ ] ति० टी०—इदं त्वपरिपाल्यवचस्तां पौराणां वचनं श्रुत्वा परिमितकालत्वाद्दुःखतरं सीताविप्रवासनं यत्कृतवांस्तन्नृशंसं क्रूरकल्पमिति भाति ॥ ७ ॥

रा० टी०—तत इति । सीतायाः वचनमुच्यमानं भूयो बहुकालकं सीताया विप्रवासनं ततः वनवासदुःखाद्भूयो दुःखतरमत एव नृशंसमतिक्रूरं मे प्रतिभाति ॥ ७ ॥

गो० टी०—तत इति । ततः सीतायाः विप्रवासनं नृशंसं क्रूरकृत्यमिति प्रतिभाति ॥ ७ ॥

८-९ ] ति० टी०—को न्विति । हीनार्थवादिभिर्न्यायहीनार्थवादिभिः । पौरैर्हेतुभिर्मैथिलीं प्रति यशोहरे साध्वीं वने विसृष्टवानित्ययशस्करेऽस्मिन्कर्मणि सीतापरित्यागकर्मण्यनुष्ठिते सति को नु धर्माश्रयो धर्मपरिग्रहः संप्राप्तो रामेण । धर्माणां सत्नीमूलत्वात् । तत्त्यागे सर्वोऽपि धर्मो नाशित एवेत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—क इति । हीनार्थवादिभिः यशोहरेस्मिन्मैथिलीत्यागरूपे कर्मणि विद्यमानः एतत्कर्मकर्तेत्यर्थः अत एव अर्थेन निखिलार्थसाधकसीतया हीनोयं लक्ष्मण इति वादिभिः पौरैस्समनुप्राप्तोहं मैथिलीं प्रति मैथिलीत्यागवृत्तान्तप्रश्ने इत्यर्थः को धर्माश्रयः किं वक्ष्यामीत्यर्थः ॥ ८ ॥

रा० टी०—एता इति । सुमन्त्रः एतद्वाक्यमुवाच ॥ ९ ॥

गो० टी०—को न्विति । हीनार्थवादिभिः पौरैर्हेतुभिः । मैथिलीं प्रति यशोहरे साध्वीं वने विसृष्टवानिति अपयशस्करेऽस्मिन् कर्मणि सीतापरित्यागरूपकर्मण्यनुष्ठिते सति कोनु धर्माश्रयः धर्मपरिग्रहः रामेण संप्राप्तः । प्रत्युत साध्वीत्यागादधर्म एव स्यादिति भावः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—दृष्टमिति । पुरा पूर्वस्मिन्काले । तव पितुरग्रत एतत्सीताविप्रवासनादि वक्ष्यमाणं विप्रैर्दृष्टमेव । दृष्टेत्यर्थः ॥ १० ॥

रा० टी०—तदाकारमाह—नेति । ते पितुरग्रतः अग्रे पुरा पूर्वमेतद्वनगमनादि विप्रैर्दृष्टं बोधितम् अतस्त्वया संतापो न कार्यः ॥ १० ॥

गो० टी०—नेति । दृष्टमिति । हे लक्ष्मण ! पुरा तव पितुरग्रतः अल्पभाग्यवान् रामः दुःखप्रायो भविष्यतीत्येतद्दृष्टं दृष्ट्वा मह्यमुक्तमित्यर्थः । फलितमाह—प्राप्स्यत इति ॥१०–१२॥

---

१ अनुवर्तत इति गो. पाठः । २ प्रतिसमिति गो. पाठः ।

भविष्यति दृढं रामो दुःखप्रायो विसौख्यभाक् । प्राप्स्यते च महाबाहुर्विप्रयोगं प्रियैर्द्रुतम् ॥ ११ ॥
त्वां चैव मैथिलीं चैव शत्रुघ्नभरतौ तथा । स त्यजिष्यति धर्मात्मा कालेन महता महान् ॥ १२ ॥
इदं त्वयि न वक्तव्यं सौमित्रे भरतेऽपि वा । राज्ञा वो व्याहृतं वाक्यं दुर्वासा यदुवाच ह ॥ १३ ॥
महाजनसमीपे च मम चैव नरर्षभ । ऋषिणा व्याहृतं वाक्यं वसिष्ठस्य च संनिधौ ॥ १४ ॥
ऋषेस्तु वचनं श्रुत्वा मामाह पुरुषर्षभः । सूत न क्वचिदेवं ते वक्तव्यं जनसंनिधौ ॥ १५ ॥
तस्याहं लोकपालस्य वाक्यं तत्सुसमाहितः । नैव जात्वनृतं कुर्यामिति मे सौम्य दर्शनम् ॥ १६ ॥
सर्वथैव न वक्तव्यं मया सौम्य तवाग्रतः । यदि ते श्रवणे श्रद्धा श्रूयतां रघुनन्दन ॥ १७ ॥
यद्यप्यहं नरेन्द्रेण रहस्यं श्रावितं पुरा । तथाप्युदाहरिष्यामि दैवं हि दुरतिक्रमम् ॥ १८ ॥
येनेदमीदृशं प्राप्तं दुःखं शोकसमन्वितम् । न त्वया भरतस्याग्रे शत्रुघ्नस्यापि संनिधौ ॥ १९ ॥

---

११ ] ति० टी०—तदेवाह—**भविष्यतीति** । दृढं ध्रुवं दुःखप्रायो दुःखबहुलः । अतो विसौख्यभाक्सौख्यवियोगभाक्च भविष्यतीति दृष्टमित्यन्वयः । यदेवमतः—प्राप्स्यते चेत्यादि ११

रा० टी०—विप्रवचनाकारमाह—**भविष्यतीति** । विसौख्यभाक् विशेषसुखभोक्तापि रामः प्रियैः विप्रयोगं प्राप्स्यते अत एव रामोपि दुःखप्रायः दुःखिसदृशः भविष्यति दृढं निश्चितमेतत् ॥ ११ ॥

१२ ] ति० टी०—प्रियैर्वियोगमित्येतदेव विवृणोति—**त्वां चेति** । दुर्वासःसंभाषणनिमित्तके निर्याणकाले लक्ष्मणत्यागः । शत्रुघ्नभरतयोस्तु मथुराराज्यगन्धर्वराज्ययोः करणाय प्रतिष्ठापनमेव त्यागः ॥ १२ ॥

रा० टी०—वियोगाकारमाह—**त्वामिति** । रामः त्वदादीन् त्यजिष्यति त्यक्ष्यति ॥ १२ ॥

१३ ] ति० टी०—राज्ञा दशरथेन वो युष्मान्प्रति व्याहृतमेषां कथमग्रे भावीत्येवं प्रश्नवाक्यं श्रुत्वा यद्दुर्वासा उवाच तदिदं त्वयि त्वया सौमित्रे शत्रुघ्ने भरते च न वाच्यम् ॥१३॥

रा० टी०—**इदमिति** । दुर्वासा यदुवाच राज्ञा दशरथेन च व्याहृतमस्माकमग्रे कथितं तदिदं मयोक्तं भरते भरतसन्निधौ त्वयि त्वया नैव वक्तव्यम् भरते न वक्तव्यमित्यनेन भरतोद्देश्यक एव वक्ष्यमाणः शाप इति सूचितं तेन तज्ज्ञाने भरतस्य दुःखाल्पत्वं भविष्यतीति सूचितं वश्चार्थे उशब्द एवार्थे ॥ १३॥

गो० टी०—**इदमिति** । इदं रहस्यं त्वयि भरते वा न वक्तव्यम् । इदं शब्दार्थमाह—**राज्ञेति** । राज्ञा दशरथेन । वः तदिदं त्वयि भरतेऽपि न वक्तव्यमित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—दुर्वासोवाक्यं त्वया कथमवगतं तत्राह—**महाजनेति** । महान्तो जना यस्य दशरथस्य तस्य मम च संनिधौ । राजसमीपस्थितं मामनुत्थाप्यैव वसिष्ठसंनिधौ च ऋषिणोक्तम् । एवं त्रयाणामग्र एतदुक्तमिति त्रय एतत्परिज्ञा इत्युक्तम् ॥ १४ ॥

रा० टी०—ननु कस्मिन्समये दुर्वाससोक्तमित्यत आह—**महाजनेति** । महाजनसमीपादौ ऋषिणा वाक्यं व्याहृतम् १४

गो० टी०—दुर्वाससो वचनं कथं त्वयावगतमित्यत्राह—**महाजनेति** । महाजनसमीपे दशरथसमीप इत्यर्थः । मम वसिष्ठस्य च सन्निधौ । ऋषिणा दुर्वाससा वाक्यं व्याहृतम् । त्रिभिरेवेदं वृत्तं ज्ञातमिति भावः ॥ १४ ॥

१५ ] ति० टी०—ऋषेर्दुर्वाससः पुरुषर्षभो दशरथः । एवं ते श्रुतमतिरहस्यं त्वया न क्वचिद्वक्तव्यमित्यर्थः ॥ १५ ॥

रा० टी०—**ऋषेरिति** । पुरुषर्षभो दशरथः एवमिदं वचनं जनसन्निधौ ते तव न वक्तव्यमिति मामाह ॥ १५ ॥

गो० टी०—**ऋषेरिति** । एवं ते त्वया श्रुतं रहस्यमित्यर्थः ॥ १५ ॥

१६ ] ति० टी०—तस्य लोकपालस्य दशरथस्य वाक्यं नानृतं कार्यमिति सुसमाहितः सावधानचित्तो भविष्यामीति मे दर्शनं संकल्पः ॥ १६ ॥

रा० टी०—**तस्येति** । लोकपालस्य तस्य दशरथस्य वाक्यमनृतं मिथ्या जातु कदाचिदपि न कुर्यां इति मे दर्शनं निश्चयः अत एव तवाग्रतोपि मया सर्वथा अविचारेणापीत्यर्थः न वक्तव्यं यदि श्रवणे ते श्रद्धा तदा श्रूयतामेतेन अतिश्रद्धालुसन्निधौ वक्तव्यमेवेति राजाज्ञा सूचिता ॥ १६ ॥ १७ ॥

गो० टी०—**तस्येति** । समाहितं सम्यग्गुप्तम् तस्य वाक्यं मया जातु अनृतं न कार्यमिति मम दर्शनं मतम् । तस्मात् त्वयि भरते च न वक्तव्यमिति भावः ॥ १६ ॥

१७ ] ति० टी०—यदेवमतः—**सर्वथेति** । तवाग्रे न वक्तव्यम् । रहस्यश्रवणेऽत्युत्कटश्रद्धारहितस्येत्यर्थः । श्रद्धायां तु वक्ष्यामीत्याह—**यदि ते इति** । लक्ष्मणस्य परमाप्तत्वाद्राजपुत्रत्वाच्च जनसंनिधावेव नरेन्द्रेण प्रतिषेधाच्च दुःखितदुःखनिवारणाय रहस्यप्रकटनेऽपि न दोष इति सुमन्त्राशयः ॥ १७ ॥

गो० टी०—**सर्वथैवेति** । न वक्तव्यमिति । राजरहस्यमिति शेषः । तवातिश्रद्धारहितस्य ॥ १७ ॥

१८-१९ ] ति० टी०—पुनस्तदेवाह—**यद्यपीति** । यद्यपि नरेन्द्रेण रहस्यमप्रकाश्यमित्युक्तं तथापि कथनयोग्ये काले

---

१ अपीति गो. पाठः । २ ध्रुवमिति गो. पाठः । ३ उभौ संत्यजिष्यतीति गो. पाठः । ४ कार्यमिति गो. पाठः । ५ श्रावितः इति गो. पाठः । ६ भरते वाच्यमिति गो. पाठः ।

तच्छ्रुत्वा भाषितं तस्य गम्भीरार्थपदं महत् । तथ्यं ब्रूहीति सौमित्रिः सूतं [1]तं वाक्यमब्रवीत्॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

## एकपञ्चाशः सर्गः ।

ऊर्मिलाजानिनानुयुक्तः सुमन्त्रो वसिष्ठाश्रमे दुर्वाससा कथितपूर्वं भृगोः शापमेव तवाग्रजस्य पत्नीवियोगहेतुं जानीहीति व्याजहार ।

तथा संचोदितः सूतो लक्ष्मणेन महात्मना । तद्वाक्यमृषिणा प्रोक्तं व्याहर्तुमुपचक्रमे ॥ १ ॥
पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः । वसिष्ठस्याश्रमे पुण्ये वार्षिक्यं समुवास ह ॥ २ ॥
तमाश्रमं महातेजाः पिता ते सुमहायशाः । पुरोहितं महात्मानं दिदृक्षुरगमत्स्वयम् ॥ ३ ॥
स दृष्ट्वा सूर्यसंकाशं ज्वलन्तमिव तेजसा । उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४ ॥
तौ मुनी तापसश्रेष्ठौ विनीतावभ्यवादयत् । स ताभ्यां पूजितो राजा स्वागतेनासनेन च ॥
पाद्येन फलमूलैश्च उवास मुनिभिः सह । ॥ ५ ॥

एकस्य निकटे उदाहरिष्यामि । एवं ज्ञात्वा दुःखं न कार्यमित्याह–दैवं हीति येन दैवेनेदृशं दुःखं प्राप्तं तद्दैवं दुरतिक्रममिति ज्ञात्वा शोकं त्यजेत्यर्थः । 'दैवं हि सुमहद्भूतम्', 'येनेदमीदृशं प्राप्यम्' इति च पाठे राज्ञाप्रकाश्यत्वोक्तौ हेतुः–दैवं हीत्यादि । येन दैवेन प्राचीनकर्मणा शोकसममीदृशं दुःखं त्वया प्राप्यं प्रापणीयं तद्दैवं हि यस्मात्सुमहद्भूतं केनापि दुःशकज्ञानम्, अतो राज्ञाप्रकाश्यमुक्तम् । यदि तु पूर्वं भवदादीनामग्रे उक्तं स्यात्तदास्यार्थस्यावश्यभावित्वज्ञानात्तवेदृशं दुःखं न स्यादिति कतकादयः । अतो न त्वया भरतादिसंनिधौ वाच्यमिति शेषः ॥ १८ ॥ १९ ॥

रा० टी०–यद्यपीति । यद्यपि नरेन्द्रेण अहं रहस्यं श्रावितं तथापि येन शोकसमन्वितमीदृशं दुःखं प्राप्तं तं दुरतिक्रमं दैवं परमात्मेच्छासुदाहरिष्यामि सार्द्धश्लोक एकान्वयी १८

गो० टी०–यद्यपीति । तथाप्यप्रकाश्यस्यापि प्रकाशने हेतुमाह—दैवं हि दुरतिक्रममिति । हि यस्माद्दैवं प्राचीनं कर्म दुरतिक्रमं तस्मादित्यर्थः ॥ १८ ॥

रा० टी०–नेति । भरतस्याग्रे शत्रुघ्नस्य सन्निधावपि त्वया न वक्तव्यमिति शेषः शत्रुघ्नस्यापि इत्यनेन तज्ज्ञाने भरतोवश्यं ज्ञास्यतीति सूचितं तेन तयोः परा मैत्री व्यञ्जिता अर्द्धं पृथक् ॥ १९ ॥

गो० टी०–दुरतिक्रमे हेतुः—येनेदमिति । एवं भवद्दुःखातिशयदर्शनात् श्रद्धालवे तुभ्यं मया वक्तव्यमिति भावः॥१९॥

२० ] ति० टी०–गम्भीरार्थपदं प्रागुक्तं सत्यं तथ्यं भाषितं श्रुत्वा सौमित्रिः शोकनिवृत्तये तद्ब्रूहि विस्तरेण ब्रूहीत्यब्रवीत् ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

रा० टी०–तदिति । गंभीरे व्यंग्यविशिष्टे अर्थपदे यस्मिंस्तत् तस्य सुमन्त्रस्य भाषितं श्रुत्वा सौमित्रिः तथ्यं ब्रूहीति सूतं वाक्यमब्रवीत् ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चाशः सर्गः ॥ ५० ॥

गो० टी०–तदिति । गम्भीरार्थपदमिति । पूर्वोक्तं भाषितम् ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चाशः सर्गः ॥ ५० ॥

१] ति० टी०–अथ तत्कथनम्–तथा संचोदित इति१

रा० टी०–सौमित्रिप्रभानन्तरकालिकं वृत्तमाह–तथेत्यादिभिः । सूतः ऋषिणा प्रोक्तं तद्वाक्यं व्याहर्तुं वक्तुमुपचक्रमे१

गो० टी०–तथेत्यादि ॥ १ ॥

२-३ ] ति० टी०–वार्षिक्यं वर्षासु भवं चातुर्मास्यनियमसुद्दिश्योवास । यतीनां वर्षाकाले भ्रमणनिषेधाद्वार्षिकमासचतुष्टयमेकत्रैव स्थितवानित्यर्थः ॥ २ ॥ ३ ॥

रा० टी०–तद्वचनाकारमाह–पुरेत्यादिभिः । दुर्वासा वशिष्ठस्याश्रमे वार्षिक्यं वर्षासंबन्धि चतुरो मासान्समुवास॥२॥

रा० टी०–तमिति । पुरोहितं वशिष्ठं दिदृक्षुस्ते पिता तं वशिष्ठस्वामिकमाश्रमं स्वयमगमत् ॥ ३ ॥

गो० टी०–पुरेति । पुरा वार्षिक्यं वर्षासु भवं चातुर्मास्यनियमसुद्दिश्योवास दुर्वासा हीति नाम्ना ॥ २–५ ॥

४-५ ] ति० टी०–महामुनिं दुर्वाससं दृष्ट्वा ॥ ४ ॥ ५ ॥

रा० टी०–स इति । स दशरथः वशिष्ठस्य सव्यपार्श्वे उपविष्टं महामुनिं दुर्वाससं दृष्ट्वा तौ वशिष्ठदुर्वाससौ मुनी अभ्यवादयत् सार्द्धश्लोक एकान्वयी ॥ ४ ॥

१ वाक्यमथेति गो. पाठः ।

तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः । बभूवुः परमर्षीणां मध्यादित्यगतेऽहनि ॥ ६ ॥
ततः कथायां कस्यांचित्प्राञ्जलिः प्रग्रहो नृपः । उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् ॥ ७ ॥
भगवन्किंप्रमाणेन मम वंशो भविष्यति । किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः ॥ ८ ॥
रामस्य च सुता ये स्युस्तेषामायुः कियद्भवेत् । काम्यया भगवन्ब्रूहि वंशस्यास्य गतिं मम । ९ ॥
तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य तु । दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे ॥ १० ॥
शृणु राजन्पुरावृत्तं तदा देवासुरे युधि । दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः ।
तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा । ॥ ११ ॥
तया परिगृहीतांस्तान्दृष्ट्वा क्रुद्धः सुरेश्वरः । चक्रेण शितधारेण भृगुपत्न्याः शिरोऽहरत् ॥ १२ ॥
ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १३ ॥
यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः । तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥ १४ ॥
तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् । शापाभिहतचेतास्तु स्वात्मना भावितोऽभवत् ॥ १५ ॥

रा० टी०–स इति । ताभ्यां मुनिभ्यां पूजितस्स राजा मुनिभिस्सह उवास ॥ ५ ॥

६ ] ति० टी०–मध्यादित्यगते मध्यगतादित्ये ॥ ६ ॥

रा० टी०–तेषामिति । मध्ये समत्वेन प्रतीयमानाकाशे आदित्यो यस्मिन् तदेव गतं प्राप्तं तस्मिन्नहनि अहोमध्यभागे मध्याह्ने इत्यर्थः परमऋषीणां तास्ताः प्रसिद्धाः सुमधुराः कथाः बभूवुः ॥ ६ ॥

गो० टी०–तेषामिति । मध्यादित्यगते मध्यगतादित्ययुक्त इत्यर्थः । मध्याह्न इति फलितार्थः ॥ ६ ॥

७ ] ति० टी०–प्रग्रह ऊर्ध्वबाहुः ॥ ७ ॥

रा० टी०–तत इति । प्रकृष्टः ग्रहो ज्ञानं यस्य स नृपो दशरथः प्रांजलिस्सन् कस्यां चित्कथायां सत्यां तं दुर्वाससमुवाच ॥ ७ ॥

गो० टी०–तत इति । प्रग्रहः सविनय इत्यर्थः ॥ ७ ॥

८–१० ] ति० टी०–किंप्रमाणेन मत्पुत्रपर्यन्तं ततोऽप्यधिकं वा ॥ ८–१० ॥

रा० टी०–तदाकारमाह–भगवन्निति द्वाभ्याम् । किंप्रमाणेन कियत्कालपर्यन्तमित्यर्थः मम वंशो भविष्यति ॥ ८ ॥

रा० टी०–रामस्येति । मम काम्यया इच्छया मम वंशस्य गतिं ब्रूहि ॥ ९ ॥

रा० टी०–तदिति । दुर्वासा व्याहर्तुं वक्तुमुपचक्रमे ॥ १० ॥

गो० टी०–भगवन्निति । किंप्रमाणेन उत ततोऽप्यधिकप्रमाणेनेत्यर्थः । किमायुश्च मे राम इति ॥ ८–१० ॥

११–१३ ] ति० टी०–एवं रामस्य शापवशादुःखोपेतं चिरायुष्ट्वं वक्तुं पीठिकामाह–शृणु राजन्निति । पुरा पूर्वस्मिन्काले । भृगुपत्नीं स्वपुरोहितमातरम् ॥ ११–१३ ॥

रा० टी०–तद्वचनाकारमाह–शृण्वित्यादिभिः । पुरावृत्तं पौर्वकालिकवृत्तांतं शृणु वृत्तान्तमेवाह तदा तात्कालिके देवासुरे युधि सुरैर्भर्त्स्यमाना दैत्याः भृगुपत्नीं समाश्रिता बभूवुरिति शेषः अत एव तया भृगुपत्न्या दत्तमभयं येभ्यः अत एव अभया दैत्याः तत्र भृगुपत्नीसन्निधौ न्यवसन् सार्धश्लोक एकान्वयी ॥ ११ ॥ १२ ॥

रा० टी०–तयेति । तया भृगुपत्न्या परिगृहीतांस्तान् दैत्यान्दृष्ट्वा क्रुद्धः सुरेश्वरो विष्णुः भृगुपत्न्याः शिरः चक्रेणाहरत् ॥ १३ ॥

रा० टी०–तत इति । भृगुकुलोद्वहः भृगुरित्यर्थः विष्णुं शशाप ॥ १४ ॥

गो० टी०–एवं पृष्टश्चिरायुष्ट्वं दुःखोपेतं शापवशादिति वक्तुं पीठिकामाह–शृणु राजन्नित्यादि ॥ ११–१४ ॥

१४ ] ति० टी०–अवध्यां स्त्रीत्वाद्दषिपत्नीत्वाच्च वधानर्हाम् ॥ १४ ॥

रा० टी०–शापाकारमाह–यस्मादिति । मानुषे लोके जनिष्यसि ॥ १५ ॥

गो० टी०–यस्मादिति । अवध्यां स्त्रीत्वादृषिपत्नीत्वाच्चेति भावः ॥ १५ ॥

१५ ] ति० टी०–शापाभिहतचेता धर्मपक्षाश्रयदेवानुग्रहाय प्रवृत्त ईश्वरः स्वोपास्यो मया क्रयभिमानेन शप्तः । ईश्वरत्वाद्यदि तं निरस्येत्तदा मिथ्यावचनत्वेन नरकप्राप्तिः स्यादिति पश्चात्तापपरीतचित्तः । स्वात्मनान्तर्यामिणा भावितः स्वशापस्वीकारार्थमीश्वरं प्रति तपश्चरणार्थं प्रेरित इत्यर्थः ॥ १५ ॥

रा० टी०–जनने दोषमाह–तत्रेति । पत्नी पत्नीमान् पत्नीसहित इत्यर्थः त्वं बहुवार्षिकं वियोगं प्रियवियुक्तिं भवान् प्राप्स्यते पत्नीत्यत्र भीष्मादित्वादिनिः किं च ग्रहणरूपधात्वर्थविहितणिच्प्रकृतिकघञन्तप्रकृतिकतद्धितान्तप्रकृतिकप्रथमान्तः पत्नीति अत एव प्रियैर्हृतमिति पूर्वेण न विरोधः तु अनन्तरम्

१ चेति गो. पाठः । २ स इति गो. पाठः ।

अर्चयामास तं देवं भृगुः शापेन पीडितः । तपसाराधितो देवो ह्यब्रवीद्भक्तवत्सलः ॥ १६ ॥
लोकानां संप्रियार्थं तु तं शापं गृह्यमुक्तवान् । इति शप्तो महातेजा भृगुणा पूर्वजन्मनि ॥ १७ ॥
इहागतो हि पुत्रत्वं तव पार्थिवसत्तम । राम इत्यभिविख्यातस्त्रिषु लोकेषु मानद ॥ १८ ॥
तत्फलं प्राप्स्यते चापि भृगुशापकृतं महत् । अयोध्यायाः पती रामो दीर्घकालं भविष्यति॥१९॥
सुखिनश्च समृद्धाश्च भविष्यन्त्यस्य येऽनुगाः । दशवर्षसहस्राणि दशवर्षशतानि च ॥ २० ॥
रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति । समृद्धैश्चाश्वमेधैश्च इष्ट्वा परमदुर्जयः ॥ २१ ॥
राजवंशांश्च बहुशो बहूंस्संस्थापयिष्यति । द्वौ पुत्रौ तु भविष्येते सीतायां राघवस्य तु ॥ २२ ॥
स सर्वमखिलं राज्ञो वंशस्याह गतागतम् । आख्याय सुमहातेजास्तूष्णीमासीन्महामुनिः॥२३॥
तूष्णींभूते तदा तस्मिन्राजा दशरथो मुनौ । अभिवाद्य महात्मानौ पुनरायात्पुरोत्तमम् ॥ २४ ॥

---

शापेन शापदानहेतुकतपश्च्युत्या अभिहतं चेतो यस्य स मुनिं स्वात्मना स्वमनसा भावितः चिन्तान्वितः अभवत्॥१६॥

**गो० टी०–तत्रेति** । बहुवार्षिकं कालमित्यर्थः ॥ १६ ॥

१६ ] **ति० टी०**–शापेन शापस्य मोघत्वभयेन पीडितो भृगुस्तं देवमर्चयामास ॥ १६ ॥

**रा० टी०–अर्चयामासेति** । शापेन तद्दानेन पीडितो भृगुः देवं विष्णुमर्चयामास देवस्तु अब्रवीत् ॥ १७ ॥

**गो० टी०–शापेति** । शापाभिहतचेताः पश्चात्तापपरीतचित्त इत्यर्थः । स्वात्मना भावितो भगवच्छापनिस्तरणार्थं स्वस्वरूपमचिन्तयदित्यर्थः । पुनः शापेन शापमोघभयेन पीडितः सन् भृगुस्तं देवमर्चयामास ॥ १७ ॥ १८ ॥

१७ ] **ति० टी०**–किमब्रवीत्तदाह–**लोकानामिति** । लोकानां भूरादीनाम् । संप्रियार्थं सम्यग्रावणवधादिरूपप्रियसंपादनार्थम् । तं शापं मनुष्यत्वादिप्रापकं गृह्यमङ्गीकार्यमेव स्वस्योक्तवान् । इति शप्त उक्तप्रकारेण शप्तः पूर्वजन्मनि कश्यपपुत्ररूपोपेन्द्रावतारे । अत्र पूर्वजन्मनि भृगुणा शप्त इत्युक्त्वा तद्वंश्यर्षिशापो भावी, अत्रापि शरीरे भगवतः सूचितः । स पाद्मे दर्शितः—' आहूय लक्ष्मणं प्राह रामो राजीवलोचनः । शृणु मे वचनं गुह्यं सीतासंत्यागकारणम् ॥ वाल्मीकिनाथ भृगुणा शप्तोऽस्मि किल लक्ष्मण । तस्मादेनां त्यजाम्यद्य जनो नैवात्र कारणम् ॥' इति । वाल्मीकेरपि प्राचेतसत्वाद्भृगुवंश्यत्वेन भृगुत्वमस्तीति वदन्ति । एतच्च निरूपितं बालकाण्डे विस्तरेणास्माभिर्ग्रन्थोपक्रमे ' मा निषाद' इति श्लोके ॥१७॥

१८ ] **ति० टी०**–तच्छापवशादेव स्वेच्छया तव पुत्रत्वमागतः ॥ १८ ॥

१९-२० ] **ति० टी०**–तत्फलं पत्नीवियोगेन चिरवासलक्षणं प्राप्स्यते ॥ १९ ॥ २० ॥

**रा० टी०–तद्वचनाकारमाह–लोकानामिति** । लोकानां रावणादिभ्यो भीतजनानां संप्रियार्थं तं भवदुक्तशापं गृह्यं मया ग्राह्यमेवावेहीति शेषः इति वचनं पूर्वजन्मनि जन्मनः पूर्वसमये भृगुणा शप्तो विष्णुरुक्तवान् इति हेतोः त्रिषु लोकेषु अभिविख्यातो विष्णुः भरत इत्यर्थः रामे रामजन्मसन्निधौ तव पुत्रत्वमिहायोध्यायां गतः प्राप्तः तत्र प्रमाणं वैकुंठेशस्तु भरतः क्षीराब्धीशस्तु लक्ष्मणः शत्रुघ्नस्तु स्वयं भूमा रामसेवार्थमागता इत्यादि अत एव भृगुशापकृतं महत्फलं प्राप्स्यते रामस्तु दीर्घकालं बहुकालपर्यंतमयोध्याधिपतिः प्रकटाऽयोध्यापालको भविष्यति एतेन भरतोद्देश्यकभृगुशापहेतुकभरतदुःखभोगार्थमपि रामस्य दण्डकारण्यविवासनं सीतात्यागश्चेति सूचितं श्लोकत्रयमेकान्वयि ॥ १८–२० ॥

**गो० टी०–तपसेति** । तं शापं मनुष्यजन्मादिप्रापकं लोकानां संहितार्थं सम्यग्रावणवधरूपहितसंपादनार्थम् । ग्राह्यं[1] परिग्राह्यमेवेत्युक्तवान् ॥ १९ ॥

**गो० टी०–इतीति** । पूर्वजन्मनि काश्यपात् विष्णुसंज्ञकोपेन्द्रावतारे ॥ २० ॥

**रा० टी०–सुखिन इति** । अस्य रामस्य येऽनुगास्ते सुखिनो भविष्यन्ति अर्द्ध पृथक् दशेति ब्रह्मलोकं साकेतं गमिष्यति ॥ २१ ॥

**गो० टी०–राम इति** । तत्फलं पत्नीवियोगेन । तत्कालवासरूपम् ॥ २१–२५ ॥

२१ ] **ति० टी०**–ब्रह्मलोकं हिरण्यगर्भस्य लोकं वैकुण्ठम् । तस्यापि हिरण्यगर्भलोकैकदेशत्वमिति भावः ॥ २१ ॥

२२ ] **ति० टी०**–बहून्राजवंशान् । लक्ष्मणादिपुत्रद्वारेति भावः । एतेन रामपुत्राणामपि चिरजीवित्वमुक्तप्रायमेव॥२२॥

**रा० टी०–समृद्धैरिति** । परमदुर्जयो रामः अश्वमेधैरिष्ट्वा बहून्राजवंशान्स्थापयिष्यति राघवस्य तु सीतायां द्वौ पुत्रौ भविष्येते सार्द्धश्लोक एकान्वयी ॥ २२–२३ ॥

२३-२४ ] **ति० टी०**–स दुर्वासाः ॥ २३ ॥ २४ ॥

**रा० टी०–स इति** । स दुर्वासा सर्वं कृत्स्नं राज्ञो वंशस्य गतागतमखिलं च्युतिरहितं यथा भवति तथा आह आख्याय तूष्णीमासीच्च ॥ २४ ॥

**रा० टी०–तूष्णीमिति** । तस्मिन् दुर्वाससि तूष्णींभूते सति पुरोत्तममयोध्यां पुनरायात् ॥ २५ ॥

---

१ ग्राह्यमिति गो. पाठः ।

एतद्वचो मया तत्र मुनिना व्याहृतं पुरा । श्रुतं हृदि च निक्षिप्तं नान्यथा तद्भविष्यति ॥ २५ ॥
सीतायाश्च ततः पुत्रावभिषेक्ष्यति राघवः । अन्यत्र न त्वयोध्यायां मुनेस्तु वचनं यथा ॥ २६ ॥
एवं गते न संतापं कर्तुमर्हसि राघव । सीतार्थे राघवार्थे वा दृढो भव नरोत्तम ॥ २७ ॥
श्रुत्वा तु व्याहृतं वाक्यं सूतस्य परमाद्भुतम् । प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २८ ॥
ततः संवदतोरेवं सूतलक्ष्मणयोः पथि । अस्तमर्के गते वासं केशिन्यां तावथोषतुः ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

## द्विपञ्चाशः सर्गः ।

इन्द्रजिदरिस्तु प्रविश्यायोध्यां प्रणम्याग्रजं भो देवानुष्ठित आर्यादिशो दैवस्य दुरतिक्रमत्वाच्छोके माकृथाश्चेत इत्याद्युपादिशत्तेन खरहन्ता परां निर्वृतिमलभत ।

तत्र तां रजनीमुष्य केशिन्यां रघुनन्दनः । प्रभाते पुनरुत्थाय लक्ष्मणः प्रययौ तदा ॥ १ ॥
ततोऽर्धदिवसे प्राप्ते प्रविवेश महारथः । अयोध्यां रत्नसंपूर्णां हृष्टपुष्टजनावृताम् ॥ २ ॥
सौमित्रिस्तु परं दैन्यं जगाम सुमहामतिः । रामपादौ समासाद्य वक्ष्यामि किमहं गतः ॥ ३ ॥
तस्यैवं चिन्तयानस्य भवनं शशिसंनिभम् । रामस्य परमोदारं पुरस्तात्समदृश्यत ॥ ४ ॥
राज्ञस्तु भवनद्वारि सोऽवतीर्य नरोत्तमः । अवाङ्मुखो दीनमनाः प्रविवेशानिवारितः ॥ ५ ॥
स दृष्ट्वा राघवं दीनमासीनं परमासने । नेत्राभ्यामश्रुपूर्णाभ्यां ददर्शाग्रजमग्रतः ॥ ६ ॥
जग्राह चरणौ तस्य लक्ष्मणो दीनचेतनः । उवाच दीनया वाचा प्राञ्जलिः सुसमाहितः ॥ ७ ॥
आर्यस्याज्ञां पुरस्कृत्य विसृज्य जनकात्मजाम् । गङ्गातीरे यथोद्दिष्टे वाल्मीकेराश्रमे शुभे ॥ ८ ॥

---

२५–२९ ] ति० टी०–नान्यथा भविष्यति । सत्यमेव भविष्यतीत्यर्थः ॥ २५–२९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

रा० टी०–एतदिति । मया श्रुतं मुनिना व्याहृतमेतद्वचः मया हृदि निक्षिप्तं तन्मुनिवचोऽन्यथा न भविष्यति॥२६॥

रा० टी०–सीताया इति । राघवः यथा मुनिवचनं तथैव पुत्रावन्यत्राभिषेक्ष्यति न त्वयोध्यायाम् ॥ २७ ॥

रा० टी०–एवमिति । राघव हे लक्ष्मण ! एवं गते ज्ञाते सति संतापं कर्तुं नार्हसि अतो दृढो भव ॥ २८ ॥

रा० टी०–श्रुत्वेति । अतुलं प्रहर्षं लेभे लक्ष्मण इति शेषः प्रहर्षं लेभे इत्यनेन सीतारामयोः सर्वज्ञत्वात् एतत्ज्ञानस्याप्यावश्यकत्वेन तयोर्वास्तवः शोको नास्तीति सूचितम् तेन लक्ष्मणस्य तत्सुखसुखित्वं व्यञ्जितम् ॥ २९ ॥

रा० टी०–तत इति । तौ सूतलक्ष्मणौ केशिन्यां तदभिधनदीतीरे गोमतीसमीपे इत्यर्थः ऊषतुः ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकपञ्चाशः सर्गः ॥ ५१ ॥

गो० टी०–सीताया इति । स सर्वमिति स दुर्वासा इत्यर्थः ॥ २६–३२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकपञ्चाशः सर्गः ॥ ५१ ॥

१ ] ति० टी०–अथागतेन लक्ष्मणेन रामाश्वासनम्–तत्रेति । केशिनी काचिन्नदीति कतकः ॥ १ ॥

रा० टी०–शयनोत्थानान्तरकालिकं वृत्तान्तमाह तत्रेत्यादिभिः । लक्ष्मणः प्रभाते उत्थाय पुनः प्रययौ ॥ १ ॥

गो० टी०–तत्रेत्यादि । तत्र पथीत्यर्थः ॥ १—५ ॥

२–५ ] ति० टी०–दिवसस्यार्धमर्धदिवसम् ॥ २–५ ॥

रा० टी०–तत इति । महारथो लक्ष्मणः अयोध्यां प्रविवेश ॥ सौमित्रिरिति । गतः अयोध्यां प्राप्तः सौमित्रिः रामपादौ समासाद्य अहं किं वक्ष्यामीति परं दैन्यं जगाम ॥ तस्येति । तस्य लक्ष्मणस्य पुरस्तात् परमोदारम् अतिबृहत् रामस्य भवनम् समदृश्यत ॥ राज्ञ इति । नरोत्तमो लक्ष्मणः राज्ञो भवनद्वारि अवतीर्य प्रविवेश ॥ २–५ ॥

६–८ ] ति० टी०–अश्रुपूर्णाभ्यां नेत्राभ्यामुपलक्षितम् ॥ ६–८ ॥

---

१ इदं पद्यं "द्वौ पुत्रौ तु भविष्येते" इति द्वात्रिंशपद्योत्तरार्धात्परतो गो. पुस्तके तत्रापि पूर्वोत्तरार्धयोर्व्यत्यासेन पाठश्च । २ ध्योत्सर्गार्हान गो. पाठः । ३ शुचाविति गो. पाठः ।

तत्र तां च शुभाचारामाश्रमान्ते यशस्विनीम् । पुनरप्यागतो वीरपादमूलमुपासितुम् ॥ ९ ॥
मा शुचः पुरुषव्याघ्र कालस्य गतिरीदृशी । त्वद्विधा नहि शोचन्ति बुद्धिमन्तो मनस्विनः ॥ १० ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ११ ॥
तस्मात्पुत्रेषु दारेषु मित्रेषु च धनेषु च । नातिप्रसङ्गः कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १२ ॥
शक्तस्त्वमात्मनात्मानं विनेतुं मनसा मनः । लोकान्सर्वांश्च काकुत्स्थ किं पुनः शोकमात्मनः॥१३॥
नेदृशेषु विमुह्यन्ति त्वद्विधाः पुरुषर्षभाः । अपवादः स किल ते पुनरेष्यति राघव ॥ १४ ॥
यदर्थं मैथिली त्यक्ता अपवादभयान्नृप । सोऽपवादः पुरे राजन्भविष्यति न संशयः ॥ १५ ॥

रा० टी०–स इति । स लक्ष्मणः दृष्ट्वा किं वक्ष्यामीति संचिन्त्य दीनम् वियोगजनितदुःखहेतुकदैन्यविशिष्टम् अत एव अश्रुपूर्णाभ्यां नेत्राभ्यामुपलक्षितम् राघवम् अग्रतो ददर्श ॥६॥

रा० टी०–जग्राहेति । लक्ष्मणः तस्य रामस्य चरणौ जग्राह उवाच च ॥ ७ ॥

रा० टी०–तदाकारमाह—आर्यस्येति । आर्यस्य तव आज्ञां पुरस्कृत्य गृहीत्वा वाल्मीकेराश्रमे जनकात्मजां विसृज्य पादमूलम् तव चरणमुपासितुम् पुनरप्यागतोस्मीति शेषः । शुभाचाराम् ताम् सीताम् आश्रमान्ते आश्रममध्ये ते मुनयो निन्युरिति शेषः अदन्तोप्यन्तशब्दः मध्यवाचित्वेन प्रसिद्धः श्लोकद्वयमेकान्वयि ॥ ८–९ ॥

गो० टी०–स इति । नेत्राभ्यामश्रुपूर्णाभ्यामुपलक्षितमग्रजम् ॥ ६—८ ॥

९ ] ति० टी०–उपासितुम् । तवेति शेषः ॥ ९ ॥

गो० टी०–तत्रेति । पादमूलं तवेति शेषः ॥९—११ ॥

१० ] ति० टी०–मा शुचः । सीतावियोगेनेति शेषः १०

रा० टी०–मेति । कालस्य तन्नियन्तुः गतिरिच्छा ईदृशी अघटितस्यापि प्रापिका अतः त्वद्विधा भवत्सदृशा बुद्धिमन्तो जनाः न शोचन्ति एतेन तव शोकः न सम्भवतीति व्यञ्जितम् अतः हे पुरुषव्याघ्र त्वं माशुचः ॥ १० ॥

११ ] ति० टी०–यया बुद्ध्या मनस्विनो न शोचन्ति तां बुद्धिमाह–सर्वे इति । निचया रावणादेरिव महत्तरैश्वर्याणि । अवश्यं क्षयान्तान्येव नाशान्तान्येव, समुच्छ्रया इन्द्रजिदादेरिव शौर्यवीर्यादिजनितौन्नत्यानि पतनान्तान्येव । संयोगा युवयोरिव विप्रयोगान्ताः, सर्वस्य जनिमतो जीवितं मरणान्तमेव ॥ ११ ॥

रा० टी०–परमात्मेच्छायाः कार्यमाह–सर्व इति । सर्वे निचयाः प्रकृतैश्वर्याणि क्षयान्ताः क्षयपर्यवसानकाः समुच्छ्रयाः वृद्धयः पतनान्ताः संयोगाः विप्रयोगान्ताः वियोगपर्यवसानका जीवितमुत्पत्तिः मरणान्तम् ॥ ११ ॥

१२ ] ति० टी०–यत एवं तस्मादेष्वतिप्रसङ्गोऽत्यासक्तिः१२

रा० टी०–तस्मादिति । पुत्रादिषु अतिप्रसंगः बहुस्नेहः न कर्तव्यः हि यतः तैः पुत्रादिभिः विप्रयोगः वियोगः ध्रुवम् सामान्ये नपुंसकम् ध्रुव इति पाठो वा एतेन अनेनैव विचारेण शोकाभावो भवतीति व्यञ्जितम् ॥ १२ ॥

गो० टी०–तस्मादिति । अतिप्रसङ्गः अत्यासक्तिः॥१२॥

१३ ] ति० टी०–निजस्वरूपपर्यालोचनयापि शोको न कार्य इत्याह–शक्त इति । विनेतुं शिक्षितुम् । निग्रहीतुम् । सांसारिकदुःखाद्वारयितुमित्यर्थः । आत्मनेत्यत्रान्तःकरणोपाधिर्जीवो भोक्तात्मा । आत्मानमन्तःकरणम् । मनसान्तःकरणेन । मनस्तद्वृत्तिविशेषरूपम् । अत्र मनःशब्दो भोगोपकरणेन्द्रियोपलक्षणम् । हे काकुत्स्थ ! सर्वलोकांश्च विनेतुमन्तर्यामिरूपेण शिक्षितुं समर्थस्त्वमात्मनः शोकं निवारयितुं समर्थ इति किं वक्तव्यमित्यर्थः ॥ १३ ॥

रा० टी०–शक्त इति । आत्मना बुद्ध्या मनसा च सहितमात्मानमीश्वरम् विनेतुं नियन्तुं त्वं शक्तः अत एव सर्वांल्लोकान् जनान् विनेतुं शक्तः अतः आत्मनः शोकम् विनेतुं दूरीकर्तुम् शक्तश्चेत्किंवक्तव्यम् अत एव त्वद्विधा भवत्सेवावन्तः ईदृशेषु वियोगादिषु न विमुह्यन्ति सार्द्धश्लोक एकान्वयी॥१३॥

गो० टी०–शक्तस्त्वमात्मनात्मानं विनेतुं मनसैव हीति । आत्मना स्वयमेव मनसैव करणेनात्मानं स्वात्मानं लोकांश्च विनेतुं शिक्षितुं शक्तः । सांसारिकदुःखाद्वारयितुमित्यर्थः॥१३॥

१४ ] ति० टी०–तदेवाह–नेदृशेष्विति । किंचैवं शोके क्रियमाणेऽज्ञप्रजानिबन्धनोऽनर्थ उभयतः पाशरज्जुरिव दुर्मोच इत्याह–अपवाद इति ॥ १४ ॥

रा० टी०–शोके दोषमाह—अपवाद इति । सः अयं न नित्यज्ञानवान् इत्यादिरपवादः ते तुभ्यम् पुनरेष्यति अर्द्धं पृथक् ॥ १४ ॥

गो० टी०–नेदृशेष्विति । अपवादः पुनरेष्यति प्रकारान्तरेणेति शेषः ॥ १४ ॥

१५ ] ति० टी०–हे नृप ! अपवादभयाद्भीतेन त्वया यदर्थं यदपवादनिवृत्त्यर्थं सीता त्यक्ता सोऽपवादः हे राजन् ! परगृहोषितां स्त्रियं त्यक्त्वा सर्वदा तामेवानुशोचतीति प्रकारान्तरेण स भविष्यति नात्र संशयः । यत्तु कतकेनाग्न्यादिना शुद्धत्वेनोक्तां स्वयं दृष्टशुद्धिं गर्भिणीमपि रामः प्राकृतवद्विसृष्ट-

१ एव हीति गो. पाठः ।

स त्वं पुरुषशार्दूल धैर्येण सुसमाहितः। त्यजेमां दुर्बलां बुद्धिं संतापं मा कुरुष्व ह ॥ १६ ॥
एवमुक्तः स काकुत्स्थो लक्ष्मणेन महात्मना। उवाच परया प्रीत्या सौमित्रिं मित्रवत्सलः ॥ १७ ॥
एवमेतन्नरश्रेष्ठ यथा वदसि लक्ष्मण। परितोषश्च मे वीर मम कार्यानुशासने ॥ १८ ॥
निवृत्तिश्चागता सौम्य संतापश्च निराकृतः। भवद्वाक्यैः सुरुचिरैरनुनीतोऽस्मि लक्ष्मण ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

## त्रिपञ्चाशः सर्गः।

भो लक्ष्मण नितरां शोकसंविग्नोऽपि मधुराक्षरेणार्तिहारिणा तव सुवचसा पुनर्नवीकृतोऽस्म्यद्य चतुर्षु घस्रेषु न प्रेक्षितं राजकार्यमनुतिष्ठामि यत आलस्यपराहतो नृगनृपः कृकलासतां गतो ब्रह्मशापेनेति जानकीजानिरनुजं बभाण।

लक्ष्मणस्य तु तद्वाक्यं निशम्य परमाद्भुतम्। सुप्रीतश्चाभवद्रामो वाक्यमेतदुवाच ह ॥ १ ॥
दुर्लभस्त्वीदृशो बन्धुरस्मिन्काले विशेषतः। यादृशस्त्वं महाबुद्धिर्मम सौम्य मनोऽनुगः ॥ २ ॥
यच्च मे हृदये किंचिद्वर्तते शुभलक्षण। तन्निशामय च श्रुत्वा कुरुष्व वचनं मम ॥ ३ ॥

---

वानिति पुरे देवादिपुरेऽपवादो भविष्यतीति व्याख्यातम्, तत्तु शोकत्यागानुपपादकतयोपेक्षितम् ॥ १९ ॥

रा० टी०—यदर्थमिति। अपवादाद् दुरुक्तेर्भयमतति तत्संबोधनम् * * यदर्थम् यत्प्रयोजनमुद्दिश्य मैथिली त्यक्ता स पुरोग्रे अपवादः अस्थिरो भविष्यति एतेन शोकस्य सर्वकार्यविध्वंसकत्वं ध्वनितम् ॥ १९ ॥

गो० टी०—तदेवोपपादयति—यदर्थमिति। हे नृप! परीवादभयाद्भीतेन त्वया यदर्थं यदपवादपरिहारार्थम् मैथिली त्यक्ता सोपवादः पुनः प्रकारान्तरेण भविष्यति। सीतामपवादात्यक्त्वा पुनः शोचति तस्मात्तस्यामतिमात्रोऽयं कामुकस्य रामस्यानुराग इति पुनरप्यपवादो भविष्यतीत्यर्थः ॥१९-१७॥

१६-१७ ] ति० टी०—यदेत्रमत इमां बुद्धिं शोकबुद्धिं त्यज ॥ १६ ॥ १७ ॥

रा० टी०—स इति। धैर्येण सुसमाहितस्त्वम् दुर्बलां बुद्धिं त्यज अत एव सन्तापं मा कुरुष्व ॥ १६ ॥

रा० टी०—एवमिति। काकुत्स्थो रामः सौमित्रिमुवाच तदाकारमाह—एवमिति द्वाभ्याम्। एतद्भवदुक्तम् एवमेव अतः त्वम् यथा यथावद्वदसि अत एव मम कार्यानुशासने मे परितोषः ॥ १७ ॥

१८-१९ ] ति० टी०—प्रजापालनाय मामेवं बोधयतीति लक्ष्मणाशयं ज्ञात्वा तदङ्गीकृत्योत्तरमाह—एवमेतदिति श्लोकद्वयेन। हे लक्ष्मण! वीर सौम्य लक्ष्मणेत्यादरेण बहुशः संबोधनम्। राज्यपरिपालनं त्यक्त्वैवं शोकोऽपवाद इत्युक्तं त्वया। एतदेवमेव, सत्यमेव अतस्त्वद्वाक्यैरनुनीतोऽस्मि। अतो मम दुःखनिवृत्तिरागता जाता, संतापश्च मया निराकृतः। अत एव मम कार्यानुशासने प्रजारक्षणकार्यस्यानुष्ठाने मे मया परितोषः प्राप्त इति शेषः ॥ १८ ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विपञ्चाशः सर्गः ॥ ५२ ॥

रा० टी०—निवृत्तिरिति। भवद्वाक्यैरनुनीतः शिक्षितोस्मि अत एव निवृत्तिरागता अत एव सन्तापो निराकृतः ॥ १८ ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विपञ्चाशत्तमः सर्गः ॥ ५२ ॥

गो० टी०—एवमिति। कार्यानुशासने गङ्गातीरत्यागरूपे त्वत्कृते ॥ १८ ॥

गो० टी०—निर्वृतिरिति। निर्वृतिः सुखम् ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विपञ्चाशः सर्गः ॥ ५२ ॥

---

१-३ ] ति० टी०—अथ रामेण लक्ष्मणोक्तस्यौचित्यप्रदर्शनाय प्रजारक्षणस्यावश्यकत्वबोधनं प्रजाकृत्यावेक्षणफलकप्रजाह्वानाय लक्ष्मणप्रेषणं च—लक्ष्मणस्य त्विति। परमाद्भुतं सर्वे क्षयान्ता इत्यादिवाक्यम् ॥ १-३ ॥

रा० टी०—लक्ष्मणं प्रति रामस्य वचनान्तरमाह—लक्ष्मणस्येत्यादिभिः। रामः सुप्रीतोऽभवत् एतद्वाक्यमुवाच च ॥१॥

रा० टी०—तद्वचनाकारमाह—दुर्लभ इत्यादिभिः। अस्मिन् विपर्यासभासम्पादके काले मम मनोनुगः यादृशस्त्वम् ईदृशः स्नेहवान् बन्धुः विशेषतो दुर्लभः ॥ २ ॥

रा० टी०—यदीति। यन्मम हृदये वर्त्तते तन्निशामय शृणु मम वचनं कुरुष्व च ॥ ३ ॥

---

१ धनामिति गो. पाठः। २ बुद्धे इति गो. पाठः।

चत्वारो दिवसाः सौम्य कार्यं पौरजनस्य च । अकुर्वाणस्य सौमित्रे तन्मे मर्माणि कृन्तति ॥ ४ ॥
आहूयन्तां प्रकृतयः पुरोधा मन्त्रिणस्तथा । कार्यार्थिनश्च पुरुषाः स्त्रियो वा पुरुषर्षभ ॥ ५ ॥
पौरकार्याणि यो राजा न करोति दिने दिने । संवृते नरके घोरे पतितो नात्र संशयः ॥ ६ ॥
श्रूयते हि पुरा राजा नृगो नाम महायशाः । बभूव पृथिवीपालो ब्रह्मण्यः सत्यवाक्शुचिः ॥ ७ ॥
स कदाचिद्गवां कोटीः सवत्साः स्वर्णभूषिताः । नृदेवो भूमिदेवेभ्यः पुष्करेषु ददौ नृपः ॥ ८ ॥
ततः सङ्गाद्गता धेनुः सवत्सा स्पर्शितानघ । ब्राह्मणस्याहिताग्नेस्तु दरिद्रस्योञ्छवर्तिनः ॥ ९ ॥
स नष्टां गां क्षुधार्तो वै अन्विषंस्तत्र तत्र हि । नापश्यत्सर्वराष्ट्रेषु संवत्सरगणान्बहून् ॥ १० ॥
ततः कनखलं गत्वा जीर्णवत्सां निरामयाम् । ददर्श तां स्विकां धेनुं ब्राह्मणस्य निवेशने ॥ ११ ॥
अथ तां नामधेयेन स्वकेनोवाच ब्राह्मणः । आगच्छ शबलेत्येवं सा तु शुश्राव गौः स्वरम् ॥ १२ ॥
तस्य तं स्वरमाज्ञाय क्षुधार्तस्य द्विजस्य वै । अन्वगात्पृष्ठतः सा गौर्गच्छन्तं पावकोपमम् ॥ १३ ॥
योऽपि पालयते विप्रः सोऽपि गामन्वगाद्द्रुतम् । गत्वा च तमृषिं चष्टे मम गौरिति सत्वरम् ॥ १४ ॥
स्पर्शिता राजसिंहेन मम दत्ता नृगेण ह । तयोर्ब्राह्मणयोर्वादो महानासीद्विपश्चितोः ॥ १५ ॥

गो० टी०—लक्ष्मणस्येत्यादि ॥ १—४ ॥

४ ] ति० टी०—चत्वारो दिवसाः । गता इति शेषः । तत्प्रजाननुशासनम् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—चत्वार इति । पौरजनस्य कार्यम् अकुर्वाणस्य मम चत्वारो दिवसा गता इति शेषः अतः तत् प्रजापालनाकरणं मे मर्माणि कृन्तति अतः प्रकृतिप्रभृतयः आहूयन्ताम् एतेन तत्तद्विज्ञापितं करिष्यामीति सूचितम् श्लोकद्वयमेकान्वयि ॥ ४–५ ॥

५ ति० टी०—स्त्रियो वा । कार्यार्थिन्य इति शेषः ॥ ५ ॥

गो० टी०—आहूयन्तामिति । स्त्रियश्चेति । कार्यार्थिन्य इत्यनुषज्यते ॥ ५ ॥

६ ] ति० टी०—संवृते वायुस्पर्शहीने । पतितः । भवेदिति शेषः ॥ ६ ॥

रा० टी०—प्रजापालनाकरणे दोषमाह—पौरेत्यादिभिः । स राजा संवृते सर्वतः पिहिते घोरे नरके पतितो भवतीति शेषः ॥ ६ ॥

गो० टी०—पौरेति । पतितः स्वकर्मणेति शेषः । स मृतो नरके घोरे पात्यते नात्र संशय इति च पाठः ॥ ६—८ ॥

७ ] ति० टी०—ब्रह्मण्यो ब्राह्मणभक्तः ॥ ७ ॥

रा० टी०—तत्र दृष्टान्तमाह—श्रूयते इत्यादिभिः । श्रूयते प्रजापालनाकर्तुः दुःखमिति शेषः श्रवणाकारमाह पुरा नाम ब्रह्मण्यो राजा बभूव ॥ ७ ॥

८ ] ति० टी०—पुष्करेषु पुष्करतीर्थेषु ॥ ८ ॥

रा० टी०—स इति । नृदेवो नृगः गवां कोटीर्भूमिदेवेभ्यः कदाचिद्ददौ ॥ ८ ॥

९ ] ति० टी०—सङ्गाद्राजदानार्थं नीयमानबहुगोसङ्गात् । स्पर्शिता ब्राह्मणाय दत्ता । 'बहुदोहिनी' इति पाठान्तरम् । आहिताग्नेर्दरिद्रस्येत्यनेनाग्निहोत्रहविरर्थमपि धेन्वन्तराभाव उक्तः उञ्छः क्षेत्रपतितान्नस्य कणश आदानम् ॥ ९ ॥

रा० टी०—तत इति । ततस्तदासंगात् स्प्रक्ष्यमाणगवान्तरसंसर्गात् गता प्राप्ता आहिताग्नेर्ब्राह्मणस्य सवत्सा धेनुः स्पर्शिता ब्राह्मणान्तरोद्देश्येन नृगेण संकल्पिता ॥ ९ ॥

गो० टी०—तत इति । सङ्गात् राज्ञा दत्तबहुगोसङ्गात् ॥ ९ ॥ १० ॥

१० ] ति० टी०—स नष्टगुः ॥ १० ॥

रा० टी०—स इति । बहून् संवत्सरगणान्नष्टां गां तत्र तत्रान्विष्यन् स ब्राह्मणः नापश्यत् ॥ १० ॥

११ ] ति० टी०—जीर्णवत्साम् । संवत्सरगणान्बहूनित्युक्तेः ॥ ११ ॥

रा० टी०—तत इति । ततः कनखलं हरिद्वारांतर्गतक्षेत्रं गत्वा ब्राह्मणस्य निवेशने स्वकां धेनुं ददृशे ददर्श ॥ ११ ॥

गो० टी०—तत इति । कनखलं कनखलाख्यग्रामम् ॥ ११—१४ ॥

१२-१३ ] ति० टी०—स्वकेन स्वकृतेन ॥ १२—१३ ॥

रा० टी०—अथेति । ब्राह्मणः आगच्छ सबलेत्येवम् स्वकेन स्वकृतेन नामधेयेन तां धेनुमुवाच अथ अनंतरं सा गौः स्वरमाहिताग्नेराव्हानं शुश्राव ॥ १२ ॥

रा० टी०—तस्येति । क्षुधार्तस्य तस्याहिताग्नेः तं स्वनमाज्ञाय गौः पावकोपमम् गच्छन्तमाहिताग्निं पृष्ठतोऽन्वगात् १३

१४-१५ ] ति० टी०—योऽपि नृगतो लब्धदानस्तमृषिं गवानुगम्यमानमृषिम् । कतककतीर्थौ तु—तमृषिं यस्य गेहे स्थिता तं त्वरन्सः कृतगवाभिधो द्विजो नृगेण स्पर्शिता दत्तेत्याचष्टे इत्यनुकर्ष इति व्याचख्यतुः । मम तु भाति—गवानुगमनादन्वेष्टृब्राह्मणीयत्वं सिद्धम् । नृगतो मया लब्धेति

१ वं इति गो. पाठः । २ चेति गो. पाठः । ३ राज्येष्विति गो. पाठः ।

विवदन्तौ ततोऽन्योन्यं दातारमभिजग्मतुः । तौ राजभवनद्वारि न प्राप्तौ नृगशासनम् ॥ १६ ॥
अहोरात्राण्यनेकानि वसन्तौ क्रोधमीयतुः । ऊचतुश्च महात्मानौ तावुभौ द्विजसत्तमौ ॥
क्रुद्धौ परमसंप्राप्तौ वाक्यं घोराभिसंहतम् । ॥ १७ ॥
अर्थिनां कार्यसिद्ध्यर्थं यस्मात्त्वं नैषि दर्शनम् । अदृश्यः सर्वभूतानां कृकलासो भविष्यसि ॥ १८ ॥
बहुवर्षसहस्राणि बहुवर्षशतानि च । श्वभ्रे त्वं कृकलीभूतो दीर्घकालं निवत्स्यसि ॥ १९ ॥
उत्पत्स्यते हि लोकेऽस्मिन्यदूनां कीर्तिवर्धनः । वासुदेव इति ख्यातो विष्णुः पुरुषविग्रहः ॥ २० ॥
स ते मोक्षयिता शापाद्राजंस्तस्माद्भविष्यसि । कृता च तेन कालेन निष्कृतिस्ते भविष्यति ॥ २१ ॥
भारावतरणार्थं हि नरनारायणावुभौ । उत्पत्स्येते महावीर्यौ कलौ युग उपस्थिते ॥ २२ ॥
एवं तौ शापमुत्सृज्य ब्राह्मणौ विगतज्वरौ । तां गां हि दुर्बलां वृद्धां ददतुर्ब्राह्मणाय वै ॥ २३ ॥
एवं स राजा तं शापमुपभुङ्क्ते सुदारुणम् । कार्यार्थिनां विमर्दो हि राज्ञां दोषाय कल्पते ॥ २४ ॥

---

परेण सोऽभियुक्तोऽन्वगादित्यत्र कर्तुरेव गत्वेत्यत्र कर्तृत्वप्रतीते-रक्षरस्वारस्यसिद्धत्वं चेति ॥ १४–१५ ॥

रा० टी०–य इति । यः पालयते सोऽपि विप्रः गामन्वगात् गत्वा च मम गौरिति सत्वरम् चष्टे अकथयत् ॥१४॥

रा० टी०–ननु कथं तवेत्यत आह—**स्पर्शितेति** । नृगेण स्पर्शिता संकल्पिता मम मह्यं दत्ता च इति ब्राह्मणयोर्महान् वाद आसीत् ॥ १५ ॥

गो० टी०–**स्पर्शितेति** । स्पर्शिता दत्ता ॥ १५–१७ ॥

१६–१८ ] ति० टी०–नृगशासनं राजसविधे प्रवेशनियोगे ॥ १६–१८ ॥

रा० टी०–**विवदन्ताविति** । अन्योऽन्यं विवदन्तौ दातारं नृगमभिजग्मतुः राजभवनद्वारि स्थितौ तौ ब्राह्मणौ नृगस्य शासनं प्रवेशाय आज्ञां न प्राप्तौ ॥ १६ ॥

रा० टी०–**अह इति** । अनेकानि अहोरात्राणि निवसन्तौ द्विजसत्तमौ क्रोधमीयतुः क्रुद्धौ उभौ घोराभिसंहितं कठिनत्वेन मिश्रितं वाक्यमूचतुश्च ॥ १७ ॥

रा० टी०–तद्वाक्याकारमाह—**अर्थिनामिति** । यस्मात् दर्शनम् नैषि प्राप्नोषि तस्मात् सर्वभूतानामदृश्यः कृकलासः त्वं भविष्यसि ॥ १८ ॥

गो० टी०–**अर्थिनामिति** । कृकलासः सरटः॥१८–२०॥

१९ ] ति० टी०–कृकलीभूतः कृकलासीभूतः ॥ १९ ॥

रा० टी०–तदवधिं बोधयन्नाह—**बह्वित्यादिभिश्चतुर्भिः** । कृकली कृकलासीभूतस्त्वं बहुवर्षसहस्राणि श्वभ्रे महागर्ते दीर्घकालं महादुपदेशो यथा भवति तथा निवत्स्यसि १९

२० ] ति० टी०–एवं शापं दत्त्वा समनुतप्तचित्तौ स्वयमेव शापावसानं चक्रतुरित्याह—**उत्पत्स्यत इति** । वासुदेवो वसुदेवापत्यम् । यद्वा सर्वभूतेषु वासाद्वासुः स चासौ देवः । पुरुषविग्रहः पुरुषशरीरसदृशशरीरः ॥ २० ॥

रा० टी०–शापमुक्त्वा तदनुग्रहमाह—**उत्पत्स्यते इति** । अस्मिन् लोके यदूनां कीर्तिवर्द्धनो विष्णुः उत्पत्स्यते ॥ २० ॥

२१ ] ति० टी०–स ते त्वां शापान्मोक्षयिता । हे राजन् ! तस्माच्च त्वं भविष्यसि । कृकलास इति शेषः । तेन कालेन कृष्णावतारावधिकालेन । नाल्पेनेत्यर्थः निष्कृतिः शापमोक्षः२१

रा० टी०–**स इति** । स वासुदेवः ते त्वां शापात् मोक्षयिता तस्माद्धेतोः त्वं भविष्यसि प्राप्स्यसि दिव्यरूपमिति शेषः ननु पापिनः कथं दिव्यरूपत्वमित्यत आह कृता पापभोगं कारयित्वा तेन कृष्णावतारावधिकेन कालेन ते निष्कृतिः प्रायश्चित्तं भविष्यति ॥ २१ ॥

गो० टी०–**स इति** । निष्कृतिः शापमोक्षः ॥ २१ ॥२२॥

२२ ] ति० टी०–तं कालमाह—**भारेति** । कलौ यत्किंचिच्चतुर्युगीस्थे कलावित्यर्थः ॥ २२ ॥

रा० टी०–कृष्णावतारप्रयोजनं बोधयन्नाह—**भारेति** । कलौ युगे उपस्थिते समीपं प्राप्ते सति नरनारायणौ उत्पत्स्येते ॥ २२ ॥

२३ ] ति० टी०–ब्राह्मणाय । अन्यस्मा इति शेषः ॥२३॥

रा० टी०–**एवमिति** । शापमुत्सृज्य विगतज्वरौ निवृत्तक्रोधवेगौ ब्राह्मणौ गां ब्राह्मणाय ददतुः ॥ २३ ॥

गो० टी०–**एवमिति** । ब्राह्मणाय कस्मैचित् अन्यस्मा इत्यर्थः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०–नृगवच्छीघ्रं प्रजागुणदोषाविचारे राज्ञां दोष इत्याह—**कार्यार्थिनामिति** । विमर्दः कलहो राज्ञां प्रजानां न्यायान्यायविचारमकुर्वताम् ॥ २४ ॥

रा० टी०–**एवमिति** । एवमुक्तप्रकारेण नृगः तं शापमुपभुङ्क्ते प्राप्नोति हि यतः कार्यार्थिनां विमर्दः कलहः राज्ञां दोषाय कल्पते ॥ २४ ॥

गो० टी०–**कार्यार्थिनामिति** । विमर्दः कलहः । अभिवर्तन्तामागच्छन्तु । कार्यिणः कार्यार्थिनः । अभिवर्तन्तु काङ्क्षिण इति पाठः ॥ २५ ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिपञ्चाशः सर्गः ॥ ५३ ॥

---

१ संहितामिति गो. रा. पाठः । २ अस्मिन्कृकलासो वै इति गो. पाठः ।

तच्छीघ्रं दर्शनं मह्यमभिवर्त्तन्तु कार्यिणः। सुकृतस्य हि कार्यस्य फलं नावैति पार्थिवः ॥
तस्माद्गच्छ प्रतीक्षस्व सौमित्रे कार्यवाञ्जनः। ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

## चतुःपञ्चाशः सर्गः।

स राजा मन्त्रिण आहूय स्वस्थित्यै शिल्पिभिः शीतवातातपादिवारकाणि श्वभ्राणि रचयित्वा समाश्वसिहि पुत्रक यल्लब्धव्यं तदेव लभ्यते नान्यथेत्याद्युपदिश्य स्वमात्मजं स्वाधिकारे विनियुज्य च कृकलासरूपभृत्सन् गर्तमविशदिति नृगचरितश्रवणोत्सुकं रामोऽकथयदनुजम्।

रामस्य भाषितं श्रुत्वा लक्ष्मणः परमार्थवित्। उवाच प्राञ्जलिर्वाक्यं राघवं दीप्ततेजसम् ॥ १ ॥
अल्पापराधे काकुत्स्थ द्विजाभ्यां शाप ईदृशः। महान्नृगस्य राजर्षेर्यमदण्ड इवापरः ॥ २ ॥
श्रुत्वा तु पापसंयुक्तमात्मानं पुरुषर्षभ। किमुवाच नृगो राजा द्विजौ क्रोधसमन्वितौ ॥ ३ ॥
लक्ष्मणेनैवमुक्तस्तु राघवः पुनरब्रवीत्। शृणु सौम्य यथा पूर्वं स राजा शापविक्षतः ॥ ४ ॥
अथाध्वनि गतौ विप्रौ विज्ञाय स नृपस्तदा। आहूय मन्त्रिणः सर्वान्नैगमान्सपुरोधसः ॥ ५ ॥
तानुवाच नृगो राजा सर्वाश्च प्रकृतीस्तथा। दुःखेन सुसमाविष्टः श्रूयतां मे समाहिताः ॥ ६ ॥

२५ ] ति० टी०–अभिवर्तन्त्वभिवर्तयन्तु। मह्यं मम कार्यिणः प्रजा अधिकारिणश्च। ननु नृगस्याप्येवमवस्था चेदलं सुकृतकर्मणेति शङ्कावन्तं लक्ष्मणं लक्षयित्वाह—सुकृतस्येति। कार्यस्य कर्तव्यस्य सुकृतस्य प्रजापालनधर्मस्य फलं पार्थिवो नावैति। काकुः। प्राप्नोत्येवेत्यर्थः। कार्यवाञ्जनः। क आयाति तत्प्रतीक्षस्व द्वारि स्थित्वेति शेषः ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

रा० टी०–तदिति। तदुक्तहेतोः कार्यिणो जनाः मह्यं मम दर्शनम् शीघ्रमभिवर्त्तन्तु प्राप्नुवन्तु ननु परमधर्मवतो नृगस्य यद्यनिष्टप्राप्तिः तर्हि किं धर्मेणेत्यत आह सुकृतस्य विचारेण निष्पादितस्य कार्यस्य फलमिष्टप्राप्तिं पार्थिवो नावैति प्राप्नोति काक्वा प्राप्नोत्येवेत्यर्थः तस्मात् कार्यवान् जनः त्वं प्रतीक्षस्व किञ्च यः कार्यवान् जनः तं प्रतीक्षस्वेत्यन्वयः सार्द्धश्लोक एकान्वयी ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिपञ्चाशः सर्गः ॥ ५३ ॥

१ ] ति० टी०–अथ लक्ष्मणेन विशिष्य नृगवृत्तान्तप्रश्ने तदुत्तरम्—रामस्येति ॥ १ ॥

रा० टी०–रामवचनश्रवणानन्तरकालिकं वृत्तमाह—रामस्येत्यादिभिः। लक्ष्मणः वाक्यमुवाच ॥ १ ॥

गो० टी०–रामस्येत्यादि ॥ १ ॥

२ ] ति० टी०–ईदृशः शापः। दत्त इति शेषः ॥ २ ॥

रा० टी०–तदाकारमाह–अल्पेत्यादिभिः। अपरो यमदण्ड इव महान् शापो दत्त इति शेषः ॥ २ ॥

गो० टी०–अल्पेति। अल्पेऽप्यपराधे परीक्षार्थमागतत्वात् गोदानद्वारा द्विजाभ्यां नारदपर्वताभ्यां यमदण्ड इव महान् शापो दत्तः ॥ २ ॥ ३ ॥

३ ] ति० टी०–पापसंयुक्तं शापरूपपापसंयुक्तम् ॥ ३ ॥

रा० टी०–श्रुत्वेति। पुरुषर्षभो नृगः आत्मानं पापेन पापहेतुकशापेन संयुक्तं श्रुत्वा द्विजौ किमुवाच ॥ ३ ॥

४ ] ति० टी०–शापविक्षतः स राजा यथा पूर्वमुवाच तद्वक्ष्यामि शृण्विति संबन्धः ॥ ४ ॥

रा० टी०–लक्ष्मणेनेति। राघवोऽब्रवीत् तदाकारमाह शापेन विक्षतो राजा यथोवाच तथा शृण्विति शेषः ॥ ४ ॥

गो० टी०–लक्ष्मणेनेति। हे सौम्य! शापविक्षतः सन् स राजा यथा पूर्वमुवाच तच्छृण्विति योजना ॥ ४ ॥

५ ] ति० टी०–द्विजौ प्रति किमुवाचेति शङ्कायां तयोरदर्शनमेवाभूदित्याह—अथेति। अध्वनि व्योमाध्वनि गतौ तौ विज्ञाय। ध्यानेनाज्ञकाविति ज्ञात्वेत्यर्थः। नैगमाः पौराः ॥५॥

रा० टी०–अथेति। नृपो नृगः सपुरोधसो मन्त्रिणः नैगमान् पौरांश्च सुसमाहितः प्रकृतीः प्रजाश्च आहूय युष्माभिः श्रूयतामिति तानुवाच श्लोकद्वयमेकान्वयि ॥ ५–६ ॥

गो० टी०–अथेति। अध्वनि व्योमाध्वनि गतौ ध्यानेन अज्ञकाविति विज्ञायेत्यर्थः। नैगमान् पौरान् ॥ ५ ॥

६ ] ति० टी०–श्रूयताम्। मे वचनमिति शेषः ॥ ६ ॥

गो० टी०–तानिति। श्रूयतामिति। वचनमिति शेषः॥६॥

१ समाहितैरिति गो० पाठः।

नारदः पर्वतश्चैव मम दत्त्वा महद्भयम् । गतौ त्रिभुवनं भद्रौ वायुभूतावनिन्दितौ ॥ ७ ॥
कुमारोऽयं वसुर्नाम स चेहाद्याभिषिच्यताम् । श्वभ्रं च यत्सुखस्पर्शं क्रियतां शिल्पिभिर्मम ॥ ८ ॥
यत्राहं संक्षयिष्यामि शापं ब्राह्मणनिःसृतम् । वर्षघ्नमेकं श्वभ्रं तु हिमघ्नमपरं तथा ॥ ९ ॥
ग्रीष्मघ्नं तु सुखस्पर्शमेकं कुर्वन्तु शिल्पिनः । फलवन्तश्च ये वृक्षाः पुष्पवत्यश्च या लताः ॥ १० ॥
विरोप्यन्तां बहुविधाश्छायावन्तश्च गुल्मिनः । क्रियतां रमणीयं च श्वभ्राणां सर्वतोदिशम् ॥ ११ ॥
सुखमत्र वसिष्यामि यावत्कालस्य पर्ययः । पुष्पाणि च सुगन्धीनि क्रियंतां तेषु नित्यशः॥ १२ ॥
परिवार्य यथा मे स्युरध्यर्धं योजनं तथा । एवं कृत्वा विधानं स संनिवेश्य वसुं तदा ॥ १३ ॥
धर्मनित्यः प्रजाः पुत्र क्षत्रधर्मेण पालय । प्रत्यक्षं ते यथा शापो द्विजाभ्यां मयि पातितः॥१४॥
नरश्रेष्ठ सरोषाभ्यामपराधेऽपि तादृशे । मा कृथास्त्वनुसंतापं मत्कृते हि नरर्षभ ॥ १५ ॥
कृतान्तः कुशलः पुत्र येनास्मि व्यसनीकृतः । प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति॥ १६ ॥
लब्धव्यान्येव लभते दुःखानि च सुखानि च । पूर्वे जात्यन्तरे वत्स मा विषादं कुरुष्व ह ॥ १७ ॥

---

७ ] ति० टी०—नारदपर्वतौ मुनी यदृच्छया समागत्य द्विजेन्द्रप्रयुक्तस्य शापस्य निवेदनेन मम महद्भयं दत्त्वोक्त्वा त्रिभुवनं तृतीयं भुवनं ब्रह्मलोकं गतौ वायुभूतौ वायुवदतिवेगौ। यद्वा तौ ब्राह्मणावेतौ तत्संज्ञौ । तत्प्रयुक्तशापज्ञानं च राज्ञो ध्यानेनेति बोध्यम् ॥ ७ ॥

रा० टी०—तद्वचनाकारमाह—**नारद इत्यादिभिः**। नारदः पर्वतश्च ऋषी मम मह्यम् महत् भयम् ब्राह्मणाभ्यां दत्तं शापमित्यर्थः दत्वा श्रावयित्वा त्रिभुवनं त्रयाणां ब्रह्मादीनां भुवनं लोकं वायुभूतौ सन्तौ गतौ ॥ ७ ॥

गो० टी०—**नारद इति**। त्रिभुवनं ब्रह्मलोकमित्यर्थः ॥७॥

८–१० ] ति० टी०—श्वभ्रं गर्तः ॥ ८–१० ॥

रा० टी०—ननु तर्हि किं कर्त्तव्यमित्यत आह—**कुमार इति** । योयं वसुर्नाम मम कुमारः सोद्याभिषिच्यताम् यत्राहं ब्राह्मणनिस्सृतं शापं संक्षयिष्यामि तत्र यत्सुखस्पर्शं स्वभ्रं गर्तं तत् शिल्पिभिः क्रियताम् कार्यताम् सार्धश्लोक एकान्वयी ॥ ८ ॥

रा० टी०—श्वभ्रप्रकारमाह वर्षहननकर्त्रादि श्वभ्रं शिल्पिनः कुर्वन्तु ॥ ९ ॥

गो० टी०—**कुमार इति**। श्वभ्रं गर्तः ॥ ८ ॥ ९ ॥

रा० टी०—**फलवन्त इति** । छायावन्तः निबिडच्छायाविशिष्टा गुल्मिनः वृक्षा लताश्च विरोप्यन्ताम् ॥ १० ॥

गो० टी०—**फलवन्त इति** । गुल्मिनः कक्षवृक्षाः १०-११

११ ] ति० टी०—गुल्मिनः कक्षवृक्षाः ॥ ११ ॥

रा० टी०—विरोपणदेशवत्तां बोधयितुमाह—**क्रियतामिति**। श्वभ्राणां सर्वतो दिशं परिवार्य अध्यर्द्धं योजनं रमणीयं यथा स्यात्तथा क्रियताम् ॥ ११ ॥

१२–१३ ] ति० टी०—अध्यर्धं योजनं परिवार्य यथा पुष्पाणि स्युस्तथा क्रियंतामित्यन्वयः॥ १२–१३॥

रा० टी०—**एवमिति** । हे पुत्र ! एवं मदुक्तप्रकारेण विधानं कृत्वा वसुमग्निं सन्निवेश्य स मदुपदिष्टः अत एव धर्मनित्यः नित्यं धर्मविशिष्टस्त्वं प्रजाः क्षत्रधर्मेण पालय ॥ १२ ॥

गो० टी०—**पुष्पाणीति** । पुष्पाणि यथा अध्यर्धं योजनं परिवार्य स्युः तथा क्रियन्तामित्यर्थः ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—हे पुत्र! धर्मनित्यो भूत्वा प्रजाः क्षत्रधर्मेण पालयेत्यादेरेवमुक्त्वेत्यनेनाष्टादशश्लोकस्थप्रथमपादेन संबन्धः ॥ १४ ॥

रा० टी०—नन्विदानीमेव कथमेवं ब्रूषे इत्यत आह—**प्रत्यक्षमिति** । तादृशे अपराधे सत्येव द्विजाभ्यां यथा पापिवत् शापस्ते प्रत्यक्षं पातितः ॥ १३ ॥

गो० टी०—**प्रत्यक्षमिति** । तादृशे अल्पेपीत्यर्थः ॥१४॥

१५ ] ति० टी०—तादृशेऽप्यल्पेऽपि ॥ १९ ॥

रा० टी०—**मेति**। येनाहं व्यसनीकृतः स कृतान्तः कृतं कर्म कुशलः फलदाने निपुणः अतः मत्कृते अनुसन्तापं मा कृथाः१४

गो० टी०—**मा कृथा इति** । कृतान्तः ईश्वरः ॥ १९ ॥

१६ ] ति० टी०—कृतान्तः प्राचीनंकर्म । कुशलः सुखदुःखप्रापणप्रभुः । व्यसनी व्यसनवान् । प्राप्तव्यानि प्राप्नोत्येवेत्यपि योजना । प्राप्तव्यान्येकत्रस्थले एव तिष्ठतो यत्नं विना प्राप्याणि । गन्तव्यानि स्वयमन्यत्र गत्वा प्राप्याणि ॥ १६ ॥

१७ ] ति० टी०—लब्धव्यानि स्थले एव तिष्ठतो यत्नलभ्यानि। पूर्वे जात्यन्तरे संपादितकारणानीति शेषः। सुखानि दुःखानि प्राप्तव्यादीनि प्राप्नोतीत्यर्थः। अनेन दुःखाद्यनुभवे नान्यो मूलम्, किं तु स्वकृतकर्मैवेत्युक्तम् ॥ १७ ॥

रा० टी०—कर्मणो बलवत्त्वमेवाह—**प्राप्तव्यानीति** । पूर्वे जात्यन्तरे पूर्वजन्मनि जातकर्मवशादिति शेषः प्राप्तव्यानि प्रापणीयानि वस्तून्येव प्राप्नोति अतः विषादं मा कुरुष्व सार्द्धश्लोक एकान्वयी ॥ १९–१६ ॥

---

१ देवोऽद्येति गो. पाठः । २ इदं पद्यं रा. पुस्तके नास्ति ३ त्वमिति रा. पा. ।

एवमुक्त्वा नृपस्तत्र सुतं राजा महायशाः । श्वभ्रं जगाम सुकृतं वासाय पुरुषर्षभ ॥ १८ ॥
एवं प्रविश्येवे नृपस्तदानीं श्वभ्रं महेद्धविभूषितं तत् ।
संपादयामास तदा महात्मा शापं द्विजाभ्यां हि रुषा विमुक्तम् । ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुःपञ्चाशः सर्गः ॥ ५४ ॥

## पञ्चपञ्चाशः सर्गः ।

पुनः कथाश्रवणकुतूहलिनं तं रामो निमिवसिष्ठयोर्विदेहत्वप्राप्तिं परस्परशापेनेति कथयामास ।

एष ते नृगशापस्य विस्तरोऽभिहितो मया । यद्यस्ति श्रवणे श्रद्धा शृणुष्वेहापरां कथाम् ॥ १ ॥
एवमुक्तस्तु रामेण सौमित्रिः पुनरब्रवीत् । तृप्तिराश्चर्यभूतानां कथानां नास्ति मे नृप ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः । कथां परमधर्मिष्ठां व्याहर्तुमुपचक्रमे ॥ ३ ॥
आसीद्राजा निमिर्नाम इक्ष्वाकूणां महात्मनाम् । पुत्रो द्वादशमो वीर्ये धर्मे च परिनिष्ठितः ॥ ४ ॥
स राजा वीर्यसंपन्नः पुरं देवपुरोपमम् । निवेशयामास तदा अभ्याशे गौतमस्य तु ॥ ५ ॥
पुरस्य सुकृतं नाम वैजयन्तमिति श्रुतम् । निवेशं यत्र राजर्षिर्निमिश्चक्रे महायशाः ॥ ६ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य सुमहापुरम् । यजेयं दीर्घसत्रेण पितुः प्रह्लादयन्मनः ॥ ७ ॥

गो० टी०-प्राप्तव्यानीति । पूर्वे जात्यन्तरे । प्राप्तव्यान्येव प्राप्नोति गन्तव्यान्येव गच्छति । लब्धव्यान्येव लभते दुःखानि च सुखानि च ॥ १६—१९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

१८ ] ति० टी०-सुकृतं सुष्ठु कृतम् ॥ १८ ॥

रा० टी०-एवमिति । सुकृतमतिप्रयत्नेन निर्मितम् श्वभ्रं राजावासाय जगाम ॥ १७ ॥

१९ ] ति० टी०-संपादयामास संपादयांचकार । अनुभवति स्मेत्यर्थः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुष्पञ्चाशः सर्गः ॥५४॥

रा० टी०-एवमिति । नृपः श्वभ्रं प्रविश्य द्विजाभ्यां विमुक्तं शापं सम्पादयामास शापप्राप्तिं प्रार्थयामासेत्यर्थः॥१८॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुष्पञ्चाशः सर्गः ॥ ५४ ॥

१ ] ति० टी०-अथ रामेण पुनर्ब्राह्मणापराधेन शापप्राप्तिकथाभाषणम् । एष ते इति । इह राज्ञामपराधविषये॥१॥

रा० टी०-लक्ष्मणं प्रति रामस्योक्तिमाह-एष इति । नृप हे लक्ष्मण ! एष शापस्य विस्तरः मयाभिहितः यदि श्रवणे कथान्तरश्रुतौ श्रद्धास्ति तर्हि अपरां कथां शृणुष्व शृणु ॥१॥

गो० टी०-एष त इत्यादि । इह राजापराधविषये ॥१॥

२-३ ] ति० टी०-कथानाम् । श्रवणे इति शेषः॥२-३॥

रा० टी०-एवमिति । आश्चर्यभूतानां कथानां श्रवणादिति शेषः मे तृप्तिर्नास्तीति वचनम् सौमित्रिरब्रवीत् ॥ २ ॥

रा० टी०-लक्ष्मणेनेति । रामः परमधर्मिष्ठां परमधर्मसूचिकां कथां व्याहर्तुमुपचक्रमे ॥ ३ ॥

गो० टी०-एवमिति । तृप्तिः कथानां संबन्धिनीत्यर्थः ॥ २—४ ॥

४ ] ति० टी०-इक्ष्वाकूणामिक्ष्वाकुपुत्राणाम् । द्वादशमो द्वादशसंख्यापूरणः । संख्यादेरपि मडार्षः ॥ ४ ॥

रा० टी०-व्याहरणाकारमाह-आसीदिति । इक्ष्वाकूणां द्वादशमः द्वादशः निमिर्नाम पुत्रो राजासीत् ॥ ४ ॥

५ ] ति० टी०-गौतमस्याभ्याशे गौतमाश्रमसमीपे ॥५॥

रा० टी०-स इति । स निमिर्गौतमस्याभ्यासे समीपे देवपुरोपमम् पुरं निवेशयामास कारयामास ॥ ५ ॥

गो० टी०-स इति । गौतमस्येति । गौतमाश्रमस्येत्यर्थः ॥ ५ ॥

६ ] ति० टी०-सुकृतं सुष्ठु कृतं निवेशं वासं यत्र चक्रे तस्य पुरस्येत्यन्वयः ॥ ६ ॥

रा० टी०-पुरस्येति । यत्र पुरे निमिर्निवेशमावासं चक्रे तस्य पुरस्य वैजयन्तमिति श्रुतं प्रसिद्धं नाम सुकृतम् ॥ ६ ॥

गो० टी०-पुरस्येति । वैजयन्तमिन्द्रप्रासादम् [ साहश्यात्तद्व्यपदेशः ॥ ६—९ ॥

७ ] ति० टी०-पितुरिक्ष्वाकोः। दीर्घसत्रं बहुकालसाध्यो बहुयजमानकः सत्राख्यो यागः ॥ ७ ॥

१ एवं प्रविश्यैवेति गो. रा. पाठः । २ महाशनेति गो. पाठः ।

ततः पितरमामन्त्र्य इक्ष्वाकुं हि मनोः सुतम् । वसिष्ठं वरयामास पूर्वं ब्रह्मर्षिसत्तमम् ॥ ८ ॥
अनन्तरं स राजर्षिर्निमिरिक्ष्वाकुनन्दनः । अत्रिमङ्गिरसं चैव भृगुं चैव तपोनिधिम् ॥ ९ ॥
तमुवाच वसिष्ठस्तु निमिं राजर्षिसत्तमम् । वृतोऽहं पूर्वमिन्द्रेण अन्तरं प्रतिपालय ॥ १० ॥
अनन्तरं महाविप्रो गौतमः प्रत्यपूरयत् । वसिष्ठोऽपि महातेजा इन्द्रयज्ञमथाकरोत् ॥ ११ ॥
निमिस्तु राजा विप्रांस्तान्समानीय नराधिपः । अयजद्धिमवत्पार्श्वे स्वपुरस्य समीपतः ॥ १२ ॥
पञ्चवर्षसहस्राणि राजा दीक्षामथाकरोत् । इन्द्रयज्ञावसाने तु वसिष्ठो भगवानृषिः ॥ १३ ॥
सकाशमागतो राज्ञो हौत्रं कर्तुमनिन्दितः । तदन्तरमथापश्यद्गौतमेनाभिपूरितम् ॥ १४ ॥
कोपेन महताविष्टो वसिष्ठो ब्रह्मणः सुतः । स राज्ञो दर्शनाकाङ्क्षी मुहूर्तं समुपाविशत् ॥
तस्मिन्नहनि राजर्षिर्निद्रयापहृतो भृशम् । ॥ १५ ॥
ततो मन्युर्वसिष्ठस्य प्रादुरासीन्महात्मनः । अदर्शनेन राजर्षेर्व्याहर्तुमुपचक्रमे ॥ १६ ॥
यस्मात्त्वमन्यं वृतवान्मामवज्ञाय पार्थिव । चेतनेन विनाभूतो देहस्ते[3] पार्थिवैष्यति ॥ १७ ॥
ततः प्रबुद्धो राजा तु श्रुत्वा शापमुदाहृतम् । ब्रह्मयोनिमथोवाच स[4] राजा क्रोधमूर्च्छितः ॥ १८ ॥
अजानतः शयानस्य क्रोधेन कलुषीकृतः । उक्तवान्[5]मम शापाग्निं यमदण्डमिवापरम् ॥ १९ ॥
तस्मात्तवापि ब्रह्मर्षे चेतनेन विनाकृतः । देहः स[6] सुचिरप्रख्यो भविष्यति न संशयः ॥ २० ॥

रा० टी०—तस्येति । पितुर्मनः प्रल्हादयन् प्रल्हादयितुं दीर्घसत्रेण यजेयमिति बुद्धिः सुमहापुरं निवेश्य कारयित्वा विद्यमानस्य तस्य निमेः समुत्पन्ना ॥ ७ ॥

८–९]ति०टी०—पूर्वं वसिष्ठवरणं ततोऽत्र्यादिवरणम् ८–९

रा० टी०—तत इति । ततः तादृशबुद्धिसमुत्पत्त्यनन्तरं मनोः सुतमिक्ष्वाकुं पितरमामन्त्र्य पृष्ट्वा पूर्वं वसिष्ठं वरयामास यागकारयितृत्वं स्वीकारयामास अनन्तरमत्रिप्रभृतिं वरयामास श्लोकद्वयमेकान्वयि ॥ ८–९ ॥

१० ] ति० टी०—अन्तरं प्रतिपालयेन्द्रयागसमाप्तिपर्यन्तावकाशं प्रतिपालय प्रतीक्षस्व । इन्द्रं याजयित्वा त्वां याजयिष्य इति भावः । देवानामपि यज्ञाधिकारः प्राङ् निरूपितः १०

रा० टी०—तमिति । * * पूर्वमहमिन्द्रेण वृतः अतः अन्तरं तावत्कालं परिपालय क्षमस्व तद्यागं कारयित्वा तव यागं कारयिष्यामीति तात्पर्यम् इति वशिष्ठ उवाच ॥ १० ॥

गो० टी०—तमिति । प्रतीक्ष प्रतीक्षस्व । प्रतीक्ष त्वं तदन्तरमिति च पाठः । तदनन्तरं त्वां याजयिष्य इति शेषः १०

११ ] ति० टी०—अनन्तरं वसिष्ठगमनानन्तरम् । गौतमः प्रत्यपूरयद्वसिष्ठकर्तव्यं हौत्रार्त्विज्यम् । राज्ञ इति शेषः॥ ११ ॥

रा० टी०—अनन्तरमिति । अनन्तरं वसिष्ठगमनानन्तरकाले गौतमः प्रत्यपूरयत् यागकारयितृत्वं स्वीचकार वसिष्ठस्तु इन्द्रयज्ञमकरोत् ॥ ११ ॥

गो० टी०—अनन्तरमिति । गौतमः प्रत्यपूरयत् । वसिष्ठकर्तव्यं हौत्रमिति शेषः ॥ ११ ॥

१२-१३]ति०टी०—तान्विप्रान् । अत्र्यादीनित्यर्थः१२-१३

१४ ] ति० टी०—तदन्तरं वसिष्ठेन प्रतीक्षणीयमित्युक्तमवकाशं गौतमेन पूरितमपश्यत् । कर्तव्यमार्त्विज्यं गौतमेन क्रियमाणमपश्यदित्यर्थः ॥ १४ ॥

रा० टी०—निमिरिति । निमिर्विप्रान्समानीय पंचवर्षसहस्राणि दीक्षां तत्प्रतिज्ञामकरोत् अत एव अयजत् सार्द्धश्लोक एकान्वयी ॥ १२ ॥

रा० टी०—इन्द्रेति । हौत्रं कर्म कर्तुं राज्ञः सकाशमागतो वसिष्ठः गौतमेनाभिपूरितं यागमिति शेषः तदन्तरं प्रतीक्षणीयकालमपश्यत् सार्द्धश्लोक एकान्वयी ॥ १३–१४ ॥

गो० टी०—निमिरिति । तानत्र्यादीन् ॥ १२ ॥ १४ ॥

१५–१६ ] ति० टी०—निद्रयापहृतः । असमाप्ते एव सत्रे इति भावः ॥ १५–१६ ॥

रा० टी०—कोपेनेति । कोपेनाविष्टः अत एव राज्ञो दर्शनाकांक्षी वसिष्ठः मुहूर्तं समुपाविशत् ॥ १५ ॥

रा० टी०—तस्मिन्निति । तस्मिन्नहनि राजर्षिः निद्रयापहृतोऽभवदिति शेषः ततो राजर्षेरदर्शनेन हेतुना वसिष्ठस्य मन्युः प्रादुरासीत् अत एव व्याहर्तुं शापमिति शेषः उपचक्रमे सार्द्धश्लोक एकान्वयी ॥ १६ ॥

गो० टी०—स इति । असमाप्तसत्र इति शेषः ॥१६–१९॥

१७–१९]ति०टी०—मामवज्ञायेत्यस्य स्वपिषि चेति शेषः चेतनेन विनाभूतः । मृत इत्यर्थः । एष्यति भविष्यति १७–१९

२० ] ति० टी०—चेतनेन विनाकृतो मृतः । सुचिरा प्रख्या शोभा यस्य सः ॥ २० ॥

रा० टी०—तदाकारमाह—यस्मादिति । यस्मात् त्वम-

१ धनमिति गो. पाठः । २ उपागमदिति गो. पाठः । ३ तव भविष्यतीवि गो. पाठः । ४ संरंभादिति गो. पाठः । ५ मुक्तवान्मयीति गो.पाठः । ६ सुरुचिरेति गो. रा. पाठः ।

इति रोषवशादुभौ तदानीमन्योन्यं शपितौ नृपद्विजेन्द्रौ ।
सहसैव बभूवतुर्विदेहौ तत्तुल्याधिगतप्रभाववन्तौ । ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

## षट्पञ्चाशः सर्गः ।

वसिष्ठस्य विदेहत्वनिवृत्तिकथाप्रसङ्गेनोर्वश्या मित्रशापेन मनुष्यलोकगमनकथा ।

रामस्य भाषितं श्रुत्वा लक्ष्मणः परवीरहा । उवाच प्राञ्जलिर्भूत्वा राघवं दीप्ततेजसम् ॥ १ ॥
निक्षिप्य देहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २ ॥
लक्ष्मणेनैवमुक्तस्तु राम इक्ष्वाकुनन्दनः । प्रत्युवाच महातेजा लक्ष्मणं पुरुषर्षभः ॥ ३ ॥
तौ परस्परशापेन देहैमुत्सृज्य धार्मिकौ । अभूतां नृपविप्रर्षी वायुभूतौ तपोधनौ ॥ ४ ॥
अशरीरः शरीरस्य कृतेऽन्यस्य महामुनिः । वसिष्ठस्तु महातेजा जगाम पितुरन्तिकम् ॥ ५ ॥
सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित् । पितामहमथोवाच वायुभूत इदं वचः ॥ ६ ॥
भगवन्निमिशापेन विदेहत्वमुपागमम् । । देवदेव महादेव वायुभूतोऽहमण्डज ॥ ७ ॥

---

न्यं हृतवान् तस्मात्ते देहः चेतनेन विनाभूतः एष्यति भविष्यति ॥ १७ ॥

रा० टी०–तत इति । राजा प्रजानां रञ्जको राजा निमिर्ब्रह्मयोनिं वसिष्ठमुवाच ॥ १८ ॥

रा० टी०–तदाकारमाह–अजानत इति । क्रोधेन कलुषीकृतस्त्वं यस्मात् मम शापाग्निमुक्तवान् तस्मात् सुरुचिरप्रख्यः अतिशोभावानपि ते देहः चेतनेन विना भविष्यति अर्द्धचतुष्टयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०–तस्मादिति । चेतनेन विना कृत इति । मृत इत्यर्थः सुरुचिरप्रख्यः सुरुचिरकान्तिः ॥ २० ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

२१ ] ति०टी०–तदिति ब्रह्मनाम । ब्रह्मणस्तुल्यं तुल्यतयाधिगतः प्राप्तो यः प्रभावस्तद्वन्तौ । ब्रह्मतुल्यप्रभावाविति यावत् ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे पञ्चपञ्चाशः सर्गः ॥ ५५ ॥

रा० टी०–इतीति । इत्युक्तप्रकारेण रोषवशात् अन्योन्यं शपितौ ताभ्यामेव तुल्यत्वेनाधिगतः ज्ञातो यः प्रभावः तद्वन्तौ नृपद्विजेन्द्रौ विदेहौ बभूवतुः ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पंचपञ्चाशः सर्गः ॥ ५५ ॥

---

१ ] ति० टी०–अथ त्यक्तदेहयोः पुनर्देहप्राप्तिप्रभोत्तरे–रामस्येति ॥ १ ॥

रा० टी०–वसिष्ठोत्पत्तिं पिपृच्छिषोर्लक्ष्मणस्य रामं प्रति प्रश्नमाह–रामस्येति द्वाभ्याम् । लक्ष्मणः राघवमुवाच॥१॥

गो० टी०–रामस्येत्यादि ॥ १ ॥

२–४ ] ति० टी०–देवसंमतौ देवपूजितौ ॥ २–४ ॥

रा० टी०–तद्वचनाकारमाह–निक्षिप्येत्यादिभिः । द्विजपार्थिवौ देहेन पुनस्संयोगं कथं जग्मतुः ॥ २ ॥

रा० टी०–लक्ष्मणेनेति । रामः प्रत्युवाच ॥ ३ ॥

रा० टी०–तदाकारमाह–ताविति । नृपब्रह्मर्षी परस्परशापेन देहमुत्सृज्य वायुभूतावभूताम् ॥ ४ ॥

गो० टी०–निक्षिप्येति । देवसम्मतौ देवतुल्यौ ॥ २–४ ॥

५ ] ति० टी०–अन्यस्य शरीरस्य कृतेऽन्यस्थूलशरीरप्राप्तिनिमित्तम् ॥ ५ ॥

रा० टी०–अशरीर इति । अन्यस्य शरीरस्य कृते उत्पत्त्यर्थम् अशरीरो वसिष्ठः पितुर्ब्रह्मणोन्तिकं जगाम ॥ ५ ॥

गो० टी०–अशरीर इति । अन्यस्य शरीरस्य कृते अन्यशरीरप्राप्त्यर्थमित्यर्थः ॥ ५–७ ॥

६ ] ति० टी०–अभिवाद्याभिवादनायशरीरस्यापि तपःप्रभावाल्लिङ्गदेहेनोपपन्नम् ॥ ६ ॥

रा० टी०–स इति । स वसिष्ठः पितामहमुवाच ॥ ६ ॥

७ ] ति० टी०–उपागमं प्राप्तः ॥ ७ ॥

रा० टी०–तदाकारमाह–भगवन्निति । अण्डज हे ब्रह्माण्डनिष्पादक निमिशापेन विदेहत्वं देहराहित्यमुपागमम् अत एव वायुभूतोहमस्मीति शेषः ॥ ७ ॥

---

१ वाक्यमिति गो.पा. । २ निक्षिप्तेति गो. रा. पाठः । ३ चेक्ष्वाकेति गो.पा. । ४ देहाविति गो.पा. । ५ त्विति गो. पा. । ६ लोकनाथ महादेव अण्डजोऽपि त्वमब्जज इति गो. पा. ।

सर्वेषां देहहीनानां महद्दुःखं भविष्यति । लुप्यन्ते सर्वकार्याणि हीनदेहस्य वै प्रभो ॥ ८ ॥
देहस्यान्यस्य सद्भावे प्रसादं कर्तुमर्हसि । तमुवाच ततो ब्रह्मा स्वयंभूरमितप्रभः ॥ ९ ॥
मित्रावरुणजं तेज आविश त्वं महायशः । अयोनिजस्त्वं भविता तत्रापि द्विजसत्तम ॥
धर्मेण महता युक्तः पुनरेष्यसि मे वशम् । ॥ १० ॥
एवमुक्तस्तु देवेन अभिवाद्य प्रदक्षिणम् । कृत्वा पितामहं तूर्णं प्रययौ वरुणालयम् ॥ ११ ॥
तमेव कालं मित्रोऽपि वरुणत्वमकारयत् । क्षीरोदेन सहोपेतः पूज्यमानः सुरेश्वरैः ॥ १२ ॥
एतस्मिन्नेव काले तु उर्वशी परमाप्सराः । यदृच्छया तमुद्देशमागता सखिभिर्वृता ॥ १३ ॥
तां दृष्ट्वा रूपसंपन्नां क्रीडन्तीं वरुणालये । तदाविशत्परो हर्षो वरुणं चोर्वशीकृते ॥ १४ ॥
स तां पद्मपलाशाक्षीं पूर्णचन्द्रनिभाननाम् । वरुणो वरयामास मैथुनायाप्सरोवराम् ॥ १५ ॥
प्रत्युवाच ततः सा तु वरुणं प्राञ्जलिः स्थिता । मित्रेणाहं वृता साक्षात्पूर्वमेव सुरेश्वर ॥ १६ ॥
वरुणस्त्वब्रवीद्वाक्यं कंदर्पशरपीडितः । इदं तेजः समुत्स्रक्ष्ये कुम्भेऽस्मिन्देवनिर्मिते ॥ १७ ॥

---

८ ] ति० टी०–महद्दुःखस्य भविष्यत्वे सर्वकार्यविलोपः सर्वकार्याणि ऐहिकामुष्मिकसर्वप्रयोजनानि ॥ ८ ॥

रा० टी०–ननु किं देहराहित्येनेत्यत आह—सर्वेषामिति । हीनदेहस्य सर्वकार्याणि कृत्यानि लुप्यन्ते अत एव देहहीनानां महद्दुःखं भविष्यति ॥ ८ ॥

गो० टी०–सर्वेषामिति । सर्वकार्याणि ऐहिकामुष्मिकसकलप्रयोजनानि ॥ ८ ॥

९ ] ति० टी०–सद्भावे प्राप्तौ ॥ ९ ॥

रा० टी०–देहस्येति । अन्यस्य देहस्य सद्भावे उत्पत्त्यर्थं प्रसादं कर्तुमर्हसि अर्द्धं पृथक्–तमिति । स्वयंभूः तं वसिष्ठमुवाच अर्द्धं पृथक् ॥ ९ ॥

गो० टी०–तमिति । तेजो रेतः ॥ ९ ॥

१० ] ति० टी०–मित्रावरुणजं तद्विसृष्टम् । तत्रापि मित्रावरुणरेतःप्रवेशेऽपि । मे वशं मत्पुत्रत्वेन पूर्ववत्प्रजापतित्वमपि प्राप्स्यसीति भावः ॥ १० ॥

रा० टी०–तदाकारमाह–मित्रेति । मित्रावरुणजं मित्रावरुणोत्सृष्टं तेजः त्वमाविश तत्रावेशेऽपि त्वमयोनिजो भविता अत एव धर्मेण युक्तस्त्वं मे वशं मत्पुत्रत्वमित्यर्थः पुनरेष्यसि किंच मे धर्मेण युक्तस्त्वं वशम् पूर्वशरीरकान्तिं पुनरेष्यसि यद्यप्युत्तरत्र कुम्भे वरुणतेजस्सेक एव वक्ष्यते तथापि तदुत्तरत्र वरुणवीर्यसेकात्पूर्वमुर्वश्याः संनिधौ मित्रवीर्यसेकोपि तस्मिन्नेव कुम्भे वक्ष्यते इति वीर्ययोः संमिलितत्वादुभयोरप्युभयजत्वव्यवहार उपपद्यते इति दिक् सार्द्धश्लोक एकान्वयी॥१०॥

गो० टी०–अयोनिज इति । तत्रापि मित्रावरुणतेजःप्रवेशेपि । अयोनिजत्वं रेतोजन्यत्वेपि योनावप्रवेशादिति भावः । मे वशं मदधीनताम् ॥ १० ॥ ११ ॥

११ ] ति० टी०–वरुणालयं समुद्रम् ॥ ११ ॥

रा० टी०–एवमिति । देवेन ब्रह्मणा एवमुक्तो वसिष्ठः वरुणालयं समुद्रं प्रययौ ॥ ११ ॥

१२ ] ति० टी०–तमेव कालं तस्मिन्नेव काले वसिष्ठागमनकाले मित्रः पूषार्यमादिवत्सूर्यमंडलस्थमूर्तिभेदः सुरेश्वरैः पूज्यमानः सन्क्षीरोदेन क्षीरोदात्मकेन वरुणेनोपेतः सन्वरुणत्वं वरुणतादात्म्यमकारयद्भावयति स्म । यद्वा मित्रोऽपि वरुणत्वं वरुणाधिकारमकरोदित्यर्थः । एवं च मित्रतादात्म्यापन्नेन वरुणेन विसृष्टत्वाद्वरुणरेतोविसर्गस्यापि पूर्वं मित्रकृतोर्वशीनिमित्तत्वाच्च वरुणरेतोऽपि मित्रावरुणरेतो भवतीति मित्रावरुणजं तेज आविवेशेत्यनेन न विरोधः ॥ १२ ॥

रा० टी०–तमिति । तमेव कालम् तस्मिन्नेव काले वसिष्ठागमनसमये इत्यर्थः क्षीरोदेन तदभिधसमुद्रेण सहोपेतः तत्र स्थित इत्यर्थः मित्रः सूर्यविशेषः वरुणत्वम् तदधिकारमकारयत् अकरोत् अत एव मित्रावरुणजं तेज आविवेशेत्युपपद्यते ॥ १२ ॥

गो० टी०–तमेवेति । तमेव कालं तस्मिन्नेव काले । मित्रः सूर्यमूर्तिभेदः वरुणत्वमकारयत् । केनापि हेतुना उभावपि युगपद्वरुणराज्यमकुर्वतामित्यर्थः । तथैवोत्तरत्र वक्ष्यति–मित्रः वरुणत्वं प्रापेति ॥ १२—१९ ॥

१३ ] ति० टी०–एतस्मिन्नेव काले वरुणात्मना मित्रावस्थानकाले ॥ १३ ॥

रा० टी०–एतस्मिन्निति । एतस्मिन्नेव काले तमुद्देशं तत्स्थानमुर्वशी आगता ॥ १३ ॥

१४-१६ ] ति० टी०–वरुणालये क्षीरोदे ॥ १४-१६ ॥

रा० टी०–तामिति । तामुर्वशीं दृष्ट्वा विद्यमानं वरुणम् उर्वशीकृते उर्वश्यर्थम् परो हर्षोऽविशत् ॥ १४ ॥

रा० टी०–स इति । वरुणः अप्सरोवरामुर्वशीम् मैथुनाय वरयामास ॥ १५ ॥

रा० टी०–प्रत्युवाचेति । पूर्वमहम् मित्रेण वृता मैथुनायेति शेषः इति वचनं सोर्वशी वरुणं प्रत्युवाच एतेन तुभ्यं रतिं न दास्यामीति सूचितम् ॥ १६ ॥

१७ ] ति० टी०–इदं तेजः तद्दर्शनक्षुभितवीर्यरूपम् । देवनिर्मिते कुम्भे पुत्रोत्पत्तिसमर्थतया उत्स्रक्ष्ये ॥ १७ ॥

एवमुत्सृज्य सुश्रोणि त्वय्यहं वरवर्णिनि । कृतकामो भविष्यामि यदि नेच्छसि संगमम् ॥ १८ ॥
तस्य तल्लोकनाथस्य वरुणस्य सुभाषितम् । उर्वशी परमप्रीता श्रुत्वा वाक्यमुवाच ह ॥ १९ ॥
काममेतद्भवत्वेवं हृदयं मे त्वयि स्थितम् । भावश्चाप्यधिकं तुभ्यं देहो मित्रस्य तु प्रभो ॥ २० ॥
उर्वश्या एवमुक्तस्तु रेतस्तन्महदद्भुतम् । ज्वलदग्निसमप्रख्यं तस्मिन्कुम्भे न्यवासृजत् ॥ २१ ॥
उर्वशी त्वगमत्तत्र मित्रो वै यत्र देवता । तां तु मित्रः सुसंक्रुद्ध उर्वशीमिदमब्रवीत् ॥ २२ ॥
मयाभिमन्त्रिता पूर्वं कस्मात्त्वमवसर्जिता । पतिमन्यं वृतवती किमर्थं दुष्टचारिणि ॥ २३ ॥
अनेन दुष्कृतेन त्वं मत्क्रोधकलुषीकृता । मनुष्यलोकमास्थाय कंचित्कालं निवत्स्यसि ॥ २४ ॥
बुधस्य पुत्रो राजर्षिः काशिराजः पुरूरवाः । तमभ्यागच्छ दुर्बुद्धे स ते भर्ता भविष्यति ॥ २५ ॥
ततः सा शापदोषेण पुरूरवसमभ्यगात् । प्रतिष्ठाने पुरूरवं बुधस्यात्मजमौरसम् ॥ २६ ॥
तस्य जज्ञे ततः श्रीमानायुः पुत्रो महाबलः । नहुषो यस्य पुत्रस्तु बभूवेन्द्रसमद्युतिः ॥ २७ ॥
वज्रमुत्सृज्य वृत्राय श्रान्तेऽथ त्रिदिवेश्वरे । शतं वर्षसहस्राणि येनेन्द्रत्वं प्रशासितम् ॥ २८ ॥
सा तेन शापेन जगाम भूमिं तदोर्वशी चारुदती सुनेत्रा ।
बहूनि वर्षाण्यवसच्च सुभ्रूः शापक्षयादिन्द्रसदो ययौ च ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

रा० टी०—वरुण इति । वरुणोऽब्रवीत् तदाकारमाह देवनिर्मिते अस्मिन् कुम्भे इदं तेजः समुत्स्रक्ष्ये प्रक्षेप्स्यामि ॥१७॥

१८–१९ ] ति० टी०—त्वयि त्वन्निमित्तमित्यर्थः । कृतकामः कृतकामभोगः ॥ १८–१९ ॥

रा० टी०—ननु समुत्सर्जनेन किं भविष्यतीत्यत आह—एवमिति । यदि संगमं नेच्छसि तदा त्वयि त्वत्सन्निधौ एवमिदं तेज उत्सृज्य कृतकामः जातमनोरथो भविष्यामि १८

रा० टी०—तस्येति । उर्वशी वाक्यमुवाच ॥ १९ ॥

२० ]ति० टी०—काममधिकं मे हृदयं चित्तं त्वयि स्थितम् तुभ्यं तव च भावोऽधिकं मयि स्थितः, अत एतदेवं भवतु । कुम्भे वीर्योत्सर्गो भवतु । हे प्रभो ! देहस्तु मम पूर्ववृतस्य मित्रस्यास्तु । भावेन भोगस्त्वया सह मम देहेन भोगो मित्रेणास्त्वित्युक्तं भवति ॥ २० ॥

रा० टी०—तदाकारमाह—काममिति । मे देहो मित्रस्य हृदयं तु त्वयि स्थितम् तत्र हेतुः मे भावः प्रीतिः तुभ्यं त्वय्यधिकम् वर्तते अतः एतत् भवदुक्तम् कामं यथेष्टम् भवतु॥२०॥

गो० टी०—काममिति । मित्रत्वात्पूर्वस्थितवरुणाविरोधेन राज्यमकरोत् । एतदेव मे भवतु । मे हृदयं चित्तं त्वयि स्थितमेव भवतु । अभ्यधिको भावश्च तुभ्यं तव च मयीति शेषः॥२०॥२१॥

२१–२२] ति० टी०—रेतस्तद्भवसंभोगक्षुभितम्॥२१–२२

रा० टी०—उर्वश्या इति । उर्वश्या एवमुक्तो वरुणः महदद्भुतं तद्रेतः कुम्भे न्यवासृजत् प्राक्षिपत् ॥ २१ ॥

रा० टी०—उर्वशीति । उर्वशी तु यत्र मित्रः तत्रागमत् मित्रस्तु उर्वशीमिदमब्रवीत् ॥ २२ ॥

गो० टी०—उर्वशी त्विति । कस्मात्त्वमवसर्जिता विसृष्टवती । मामिति शेषः । कस्मात्त्वमसि वर्जितेति च पाठः । सुसंक्रम्य सम्यक् परिष्वज्य । तस्याः स्वस्मिन्ननुरागाभावमालोक्येत्यर्थः । तां तु मित्रः सुसंक्रम्येति च पाठः ॥२२-२३॥

२३] ति०टी०—अवसर्जिता विसृष्टवती । मामिति शेषः२३

रा० टी०—तदाकारमाह—मयेति । मया अभिमन्त्रिता मैथुनाय वृत्ता त्वं कस्मादवसर्जिता त्यक्तवती किमर्थं च अन्यं पतिं वृतवती एतेन पत्यन्तरविषयककामनां विना अन्यत्र गमनम् न संभवतीति निश्चयस्सूचितः ॥ २३ ॥

२४–२५ ] ति० टी०—अनेन दुष्कृतेन । एकं पतिमङ्गीकृत्य तत्समये द्वितीयवरणं साधारणस्त्रीणामपि महद्दुष्कृतमित्यनेन बोधितम् । मनुष्यलोकमास्थाय । अनेन देवरूपेणैवेति शेषः ॥ २४–२५ ॥

रा० टी०—अनेनेति । अनेन मत्यागरूपेण दुष्कृतेन मत्क्रोधकलुषीकृता त्वं मनुष्यलोकमास्थाय प्राप्य कंचित् कालं निवत्स्यसि ॥ २४ ॥

रा० टी०—बुधस्येति । बुधस्य पुत्रः पुरूरवा अस्तीति शेषः तमभ्यागच्छ प्राप्नुहि स ते भर्ता भविष्यति ॥ २५ ॥

गो० टी०—अनेनेति । मानुषं लोकमास्थायेत्यनेन देवरूपेणैवेति शेषः ॥ २४—२९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामा०भूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्पञ्चाशः सर्गः ॥ ५६ ॥

२६–२९ ] ति० टी०—पुरूरवं पुरूरवसम् ॥ २६–२९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

१ पार्कस्येति गो.पा. । २ शिखेति गो.पा. । ३ ह्यपेति गो.पा. । ४ तस्मात्त्वमिति गो.पा. । ५ तमद्य गच्छेति गो.पा. । ६ यातेति गो.पा. । ७ आन्ते इति गो.पाठः ।

## सप्तपञ्चाशः सर्गः ।

वसिष्ठस्य मित्रावरुणसंभवत्वकथा निमेश्च सर्वभूतनेत्रवृत्तित्वकथा जनकराजोत्पत्तिकथा च ।

तां श्रुत्वा दिव्यसंकाशां कथामद्भुतदर्शनाम् । लक्ष्मणः परमप्रीतो राघवं वाक्यमब्रवीत् ॥ १ ॥
निक्षिप्तदेहौ काकुत्स्थ कथं तौ द्विजपार्थिवौ । पुनर्देहेन संयोगं जग्मतुर्देवसंमतौ ॥ २ ॥
तस्य तद्भाषितं श्रुत्वा रामः सत्यपराक्रमः । तां कथां कथयामास वसिष्ठस्य महात्मनः ॥ ३ ॥
यः स कुम्भो रघुश्रेष्ठ तेजःपूर्णो महात्मनोः । तस्मिंस्तेजोमयौ विप्रौ संभूतावृषिसत्तमौ ॥ ४ ॥
पूर्वं समभवत्तत्र अगस्त्यो भगवानृषिः । नाहं सुतस्तवेत्युक्त्वा मित्रं तस्मादपाक्रमत् ॥ ५ ॥
तद्धि तेजस्तु मित्रस्य उर्वश्याः पूर्वमाहितम् । तस्मिन्समभवत्कुम्भे तत्तेजो यत्र वारुणम् ॥ ६ ॥

---

रा० टी०–तत इति । सा उर्वशी पुरूरवे पुरूरवःस्वामिके प्रतिष्ठाने पुरे पुरूरवसमभ्यगमत् ॥ २६ ॥

रा० टी०–तस्येति । त्रिदिवेश्वरे इन्द्रे वृत्राय वज्रमुत्सृज्य श्रान्ते सन्तप्ते सति शतं वर्षसहस्राणि येनेंद्रत्वमिन्द्रराज्यं प्रशासितं स नहुषो यस्य पुत्रो बभूव स आयुः तत्सदृशः पुत्रः तस्य बुधस्य जज्ञे अर्द्धचतुष्टयमेकान्वयि ॥ २७–२८ ॥

रा० टी०–सेति । उर्वशी शापेन भूमिं जगाम अत एव बहूनि वर्षाणि अवसत् शापक्षयात् शापक्षयं प्राप्य इन्द्रसदनं इन्द्रस्य सभां ययौ च ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षट्पञ्चाशः सर्गः ॥ ५६ ॥

---

१ ] ति० टी०–अथ तद्विसृष्टरेतःसकाशाद्देहोत्पत्तिप्रकारकथनम्—तामिति । दिव्यसंकाशां दिव्यरूपाम् ॥ १ ॥

रा० टी०–रामं प्रति लक्ष्मणस्य पुनः प्रश्नमाह—तामित्यादिभिः । लक्ष्मणः राघवमब्रवीत् ॥ १ ॥

गो० टी०–तामित्यादि । दिव्यसंकाशां दिव्यरूपाम्॥१॥

२ ] ति० टी०–निक्षिप्तदेहौ विसृष्टदेहौ पुनर्देहसंयोगं कथं जग्मतुः ॥ २ ॥

रा० टी०–तदाकारमाह—निक्षिप्तेति । निक्षिप्तदेहौ त्यक्तशरीरौ द्विजपार्थिवौ देहेन पुनः सयोगं कथं जग्मतुः॥२॥

गो० टी०–निक्षिप्तेति । निक्षिप्तदेहौ । कुम्भे वरुणतेजोविसर्जनमुक्तं तावता प्रकृष्टदेहसिद्धिप्रश्नो न दत्तोत्तर इति पुनः प्रश्नः कृत इति मन्तव्यम् ॥ २ ॥

३ ] ति० टी०–कुम्भे वरुणेन रेतोविसर्ग उक्तः । तावता देहसिद्धिप्रश्नोत्तरं न लब्धमिति पुनः प्रश्नः । तां कथां वसिष्ठस्य देहोत्पत्तिविषयामवशिष्टां कथाम् ॥ ३ ॥

रा० टी०–तस्येति । रामः वसिष्ठस्य कथां कथयामास ३

गो० टी०–तस्येति । तां कथां वसिष्ठस्य देहोत्पत्तिविषयिणीं कथाम् ॥ ३ ॥

४ ] ति० टी०–महात्मनोर्मित्रावरुणयोस्तेजःपूर्णः । अत्रैवमाख्यायिका—प्रथममुर्वशीं मित्रो दृष्ट्वा तामामन्त्रितवान् । तया च त्वन्निवासमागच्छामीत्युक्तस्तदा वरुणलोकस्थ एव मित्रस्तद्दर्शनाद्धटस्खलितं निजतेजः कुम्भ उत्सृज्य स्वं निवासं जगाम । पश्चाद्वरुणोऽपि तां दृष्ट्वा स्खलितं तेजः कुम्भे व्यसृजत् । ततो मित्रनिवासं गता मित्रेण शप्ता चेति ॥ ४ ॥

रा० टी०–य इति । महात्मनोर्मित्रावरुणयोस्तेजसा पूर्णः स प्रसिद्धो यः कुम्भस्तस्मिन्कुम्भे तेजोमयौ विप्रौ वसिष्ठागस्त्यौ सम्भूतौ समभूताम् ॥ ४ ॥

गो० टी०–यस्त्विति । तेजोमयौ निरवधिकतेजस्कौ॥४॥

५ ] ति० टी०–नाहं सुतस्तवेति । यद्यपि मित्रेणापि कुम्भे रेत उत्सृष्टं तथापि तवैकस्य पुत्रो न भवामीत्युक्त्वापाक्रमत् ॥ ५ ॥

रा० टी०–पूर्वमिति । तत्र तस्मिन् कुम्भे पूर्वमगस्त्यस्समभवत् अहं तव एव सुतो न वरुणस्याप्यस्मीत्यर्थः इति मित्रमुक्त्वा तस्मात् मित्रसमीपात् अपाक्रमत् ॥ ५ ॥

गो० टी०–पूर्वमिति । तत्र कुम्भे । पूर्वं वरुणतेजोनिधानात्पूर्वम् मित्रं प्रति नाहं तव सुत इत्युक्त्वा तस्मात्कुम्भादपाक्रमत् उदतिष्ठत ॥ ५ ॥

६ ] ति० टी०–एवमुक्तौ बीजमाह—तद्धि तेज इति । अगस्त्योत्पत्तिहेतुभूतं मित्रस्य तेज उर्वश्याः पूर्वमुर्वशीनिमित्तवरुणवीर्यविसर्गात्पूर्वमाहितम् तस्मिन्कुम्भे तस्मिन्नेव कुम्भे वारुणं तेजः समभवत्संगतमभवत् । यत्र कुम्भे तत्तेजो मित्रस्य तेज आसीत्, अतस्तेजोऽन्तरसंगतादुत्पत्तेर्नैकस्य तव सुत इत्युक्तमगस्त्येन, अत एव मैत्रावरुणिरित्यगस्त्यनाम ॥ ६ ॥

रा० टी०–अगस्त्यस्य प्रथमोत्पत्तौ निमित्तमाह–तद्धिति । यत्र वारुणं तेजः समभवत् प्राप्नोत् तस्मिन्कुम्भे उर्वश्याः सन्निधौ मित्रस्य तेजः पूर्वमाहितम् अतोऽगस्त्यः पूर्वमभवत् इति तात्पर्यम् ॥ ६ ॥

गो० टी०–निषेधस्य का वा प्रसक्तिरित्यत्राह—तद्धि तेज इति । उर्वश्या निमित्तभूतायाः । मित्रतेजस्तस्मिन् कुम्भे पूर्वम् उपरि आहितम् अर्पितं तस्मात्प्रतिषेधः कृत इति भावः

---

१ क्षितिं गो. पाठः । २ ह्यगस्त्य इति गो. पाठः । ३ उर्वश्या इति गो. रा. पाठः ।

कस्यचित्त्वथ कालस्य मित्रावरुणसंभवः। वसिष्ठस्तेजसा युक्तो जज्ञे इक्ष्वाकुदैवतम् ॥ ७ ॥
तमिक्ष्वाकुर्महातेजा जातमात्रमनिन्दितम्। वव्रे पुरोधसं सौम्य वंशस्यास्य हिताय नः ॥ ८ ॥
एवं त्वपूर्वदेहस्य वसिष्ठस्य महात्मनः। कथितो निर्गमः सौम्य निमेः शृणु यथाभवत्[1] ॥ ९ ॥
दृष्ट्वा विदेहं राजानमृषयः सर्व एव ते। तं च ते याजयामासुर्यज्ञदीक्षां मनीषिणः ॥ १० ॥
तं च देहं नरेन्द्रस्य रक्षन्ति स्म द्विजोत्तमाः। गन्धैर्माल्यैश्च वस्त्रैश्च पौरभृत्यसमन्विताः ॥ ११ ॥
ततो यज्ञे समाप्ते तु भृगुस्तत्रेदमब्रवीत्। आनयिष्यामि ते चेतस्तुष्टोऽस्मि तव पार्थिव॥ १२ ॥
सुप्रीताश्च सुराः सर्वे निमेश्चेतस्तदाब्रुवन्। वरं वरय राजर्षे क्व ते चेतो निरूप्यताम् ॥ १३ ॥
एवमुक्तः सुरैः सर्वैर्निमेश्चेतस्तदाब्रवीत्। नेत्रेषु सर्वभूतानां वसेयं सुरसत्तमाः ॥ १४ ॥

यद्वा पूर्ववरणकाले उर्वश्या आहितं तेजः सखीसन्निधानाद् असंभोगात्कुम्भे तत्र निक्षिप्तमिति भावः। अस्मिंस्तु पक्षे मित्रपदं मित्रावरुणपरम्। सर्वथा न मित्रावरुणतेजोजोऽगस्त्यः किन्तु कुम्भमात्रसंभवः। अत एव कुम्भसंभवः कलशीभव इत्यादिव्यवहारः। अयोनिजश्चायं कुम्भस्य मैत्रावरुणत्वात् मैत्रावरुणिरित्यपि व्यवहारः। क्वचित् वसिष्ठस्तु मैत्रावरुणतेजोज एवेत्याह-यस्मात्तेजस्तु मित्रस्योर्वश्यां पूर्वमाहितम्। तत्तेजो यत्र वारुणमिति। अन्ये त्वाहुः। नाहं सुतस्तवेत्यादि। पुत्रो न भवामीत्यर्थः। उत्तरस्य प्रसक्तिं दर्शयति—तद्धीति। अगस्त्यस्य उत्पत्तिबीजभूतं मित्रस्य तत्तेजः उर्वश्याः पूर्वमुर्वश्या निमित्ततः मित्रेण तस्मिन् कुंभे वरुणवीर्यविसर्जनात्पूर्वमेवाहितम्। तस्मिन्नेव कुम्भे वारुणमपि तेज उर्वशीनिमित्तकं समभवत्। तस्मान्नैकस्य तव सुत इत्युक्तम् अगस्त्येन। अत एव मैत्रावरुणिरित्यगस्त्यनाम कुम्भाज्जन्यत्वात्कुम्भसंभव इत्याहुः ॥ ६ ॥

७-८ ति० टी०—तदनन्तरं कस्यचित्कालस्य मित्रावरुणसंभवः। अत्रोपपत्तिरुक्ता—वसिष्ठो यज्ञे तेजसा युक्तो मित्रावरुणयोर्दिव्यतेजसा युक्तः॥ ७ ॥ ८ ॥

**रा०टी०—कस्य चिदिति।** कस्यचित्कालस्याथानन्तरम् मित्रावरुणसम्भवः मित्रावरुणयोस्संभवः पितृत्वसंभावना यस्य सः इक्ष्वाकुदैवतं वसिष्ठः जज्ञे ॥ ७ ॥

**रा० टी०—तमिति।** इक्ष्वाकुः नो वंशस्य हिताय तं वसिष्ठं पुरोधसं वव्रे ॥ ८ ॥

**गो० टी०—कस्य चिदिति।** अगस्त्योत्पत्तेः बहुकालान्तरमित्यर्थः। मित्रावरुणयोस्तेज आविशेति पूर्वं ब्रह्मनियोगः ॥ ७ ॥ ८ ॥

९-१० ] ति० टी०-अपूर्वदेहस्य नूतनदेहवतो वसिष्ठस्य निर्गम उत्पत्तिप्रकारः कथितः। यथा भवद्वृत्तान्त इति शेषः ॥ ९ ॥ १० ॥

**रा० टी०—एवमिति।** वसिष्ठस्यापूर्वदेहस्य निर्गमः कथितः अस्य निमेर्वृत्तमिति शेषः यथाऽभवत्तथा शृणु ॥ ९ ॥

**रा०टी०—दृष्ट्वेति।** ऋषयः राजानं विदेहं दृष्ट्वा अचिन्तयन् इति शेषः अत एव ते ऋषयः यज्ञदीक्षां गृहीत्वेति शेषः याजयामासुः ॥ १० ॥

**गो० टी०—एवमिति।** अपूर्वदेहस्य नूतनदेहस्य। निर्गमः उत्पत्तिः ॥ ९ ॥ १० ॥

११ ] ति० टी०—रक्षन्ति स्म। तैलकटाहे इति शेषः॥११

**रा० टी०—तमिति।** द्विजोत्तमा गंधादिभिः नरेन्द्रस्य देहं रक्षन्ति स्म ॥ ११ ॥

**गो० टी०—तमिति।** रक्षन्ति स्मेति तैलकटाहादाविति शेषः ॥ ११ ॥

१२ ] ति० टी०—भृगुस्तत्र। यज्ञसमाप्तिकाले इत्यर्थः। इदं वक्ष्यमाणम्। हे पार्थिव! पार्थिवदेहाभिमानिप्रत्यगात्मन्, तव तुष्टोऽस्मि। अतस्ते चेतो जीवं देहे आनयिष्यामीत्यब्रवीत् ॥ १२ ॥

**रा० टी०—तत इति।** हे पार्थिव! अहं तुष्टोस्मि अतः तव देहे इति शेषः चेतः चैतन्यं आनयिष्यामि भृगुः तत्राब्रवीत् ॥ १२ ॥

**गो० टी०—तत इति।** भृगुः तत्र तस्मिन्। यज्ञसमाप्तिकाल इत्यर्थः। इदं वक्ष्यमाणम्। हे पार्थिव! देहाभिमानिप्रत्यगात्मन्। तव तुष्टोस्मि अतस्ते चेतः जीवमानयिष्यामि देह इत्यब्रवीत् ॥ १२ ॥

१३ ] ति० टी०—तथा सुप्रीताः सर्वे सुराश्च निमेश्चेत आनयिष्याम इत्यब्रुवन्। हे राजन्! वरं वरय। ते चेतः क्व निरूप्यताम् स्थाप्यतामिति चाब्रुवन् ॥ १३ ॥

**रा० टी०—सुप्रीता इति।** तदा भृगूक्तिसमये निमेश्चेतः प्रति सुप्रीतास्सुराः हे राजर्षे! वरं वरय ते चेतः क्व निरूप्यतां संस्थाप्यताम् इत्यब्रुवन् ॥ १३ ॥

**गो० टी०—सुप्रीता इति।** तदा सुप्रीताः सर्वे सुराश्च निमेश्चेत आनयिष्याम इत्यब्रुवन्। अथ हे राजर्षे! वरं वरय ते चेतस्त्वाकृष्टा क्व निरूप्यतां क्व स्थाप्यतामिति चाब्रुवन्निति संबन्धः। क्व ते चेतो निरूप्यतामिति च पाठः ॥ १३ ॥

१४ ] ति० टी०—निमेश्चेतश्चेतोभिमानी प्रत्यगात्माब्रवीत्। योगवशाल्लिङ्गदेहेनैवेति भावः। किमब्रवीत्तदाह—सर्वभू-

[1] भवेदिति गो. पाठः।

बाढमित्येव विबुधा निमेश्चेतस्तदाब्रुवन् । नेत्रेषु सर्वभूतानां वायुभूतश्चरिष्यसि ॥ १५ ॥
त्वत्कृते च निमिष्यन्ति चक्षूंषि पृथिवीपते । वायुभूतेन चरता विश्रामार्थं मुहुर्मुहुः ॥ १६ ॥
एवमुक्त्वा तु विबुधाः सर्वे जग्मुर्यथागतम् । ऋषयोऽपि महात्मानो निमेर्देहं समाहरन् ॥ १७ ॥
अरणिं तत्र निक्षिप्य मथनं चक्रुरोजसा । मन्त्रहोमैर्महात्मानः पुत्रहेतोर्निमेस्तदा ॥ १८ ॥
अरण्यां मथ्यमानायां प्रादुर्भूतो महातपाः । मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् ॥ १९ ॥
यस्माद्विदेहात्संभूतो वैदेहस्तु ततः स्मृतः । एवं विदेहराजश्च जनकः पूर्वकोऽभवत् ॥
मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवत् । ॥ २० ॥
इति सर्वमशेषतो मया कथितं संभवकारणं तु सौम्य ।
नृपपुंगव शापजं द्विजस्य द्विजशापाच्च यदद्भुतं नृपस्य । ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

तानां नेत्रेषु देहवर्तिसर्वस्थानेभ्यः सर्वात्मकत्वेन प्रशस्ततया स्ववैभवाद्युगपद्वसेयम् ॥ १४ ॥

रा० टी०–एवमिति । एवमुक्तः निमेश्चेतः सर्वभूतानां नेत्रेषु अहं वसेयमित्यब्रवीत् ॥ १४ ॥

गो० टी०–एवमिति । निमेश्चेतः चेतोभिमानी प्रत्यगात्मा तदाब्रवीत् । किमिति, सर्वभूतानां नेत्रेषु सर्वभूतवर्तिनेत्रेषु वैभवात् वसेयं न त्वेकस्मिन्नित्यर्थः ॥ १४ ॥

१५ ] ति० टी०–वायुभूतः । वायुसदृशलघुभूतलिङ्गदेहाश्रित इत्यर्थः ॥ १५ ॥

रा० टी०–बाढमिति । विबुधाः सर्वभूतानां नेत्रेषु बाढं चरिष्यसीति निमेश्चेतोऽब्रुवन् ॥ १५ ॥

गो० टी०–बाढमिति । वायुभूतः नागाद्युपवायुभूत इत्यर्थः ॥ १५ ॥

१६–१७ ] ति० टी०–निमिष्यन्ति निमेषधर्मं प्राप्स्यन्ति । चक्षूंषि । सर्वभूतानामिति शेषः । वायुभूतेन चरता त्वया करणेन विश्रामार्थं[1] त्वत्संबन्धेन जायमानस्य खेदस्यापनोदार्थमित्यर्थः ॥ १६ ॥ १७ ॥

रा० टी०–त्वदिति । त्वत्कृते त्वत्स्थितिहेतुकश्रमे सति विश्रमार्थं वायुभूतेन त्वया सहितानि चक्षूंषि मुहुर्मुहुः निमिष्यन्ति ॥ १६ ॥

गो० टी०–त्वत्कृत इति । त्वत्कृते त्वदवस्थाननिमित्तं निमिष्यन्ति निमेषधर्मं प्राप्स्यन्ति । विश्रमार्थमिति । उन्मीलनखेदापनोदनार्थमित्यर्थः ॥ १६ ॥

रा० टी०–एवमिति । विबुधा यथागतं जग्मुः ऋषयस्तु निमेर्देहं समाहरन् जगृहुः ॥ १७ ॥

गो० टी०–एवमिति । देहं केवलमित्यर्थः ॥ १७ ॥

१८–१९ ] ति० टी०–तत्र यज्ञभूमावरणिं निक्षिप्य निमेर्देहमेवारणिं कृत्वा । मन्त्रहोमैः पुत्रीयमन्त्रपूर्वकहोमैः ॥ १८ ॥ १९ ॥

रा० टी०–अरणिमिति । महात्मानो मुनयः पुत्रहेतोः मन्त्रहोमैः अरणिं तत्र निमिशरीरे निक्षिप्य मन्थनं चक्रुः ॥ १८ ॥

गो० टी०–अरणिमिति । मन्त्रहोमैः पोत्रीयमन्त्रहोमैः । तादृशमन्त्रपूर्वकहोमैरित्यर्थः ॥ १८ ॥

रा० टी०–अरण्यामिति । अरण्यां मथ्यमानायां सत्यां महातपाः सुतः प्रादुर्भूतः मथनात् हेतोर्मिथिरित्याहुः जननात् अद्भुतजनेर्हेतोः जनकोऽभवत् ॥ १९ ॥

गो० टी०–अरण्यामिति । विदेहाद्विगतो देहो विदेहः तस्मात्संभूतो वैदेहः जनकः ॥ १९ ॥ २० ॥

इति श्रीगोविन्द० श्रीरामा० मणिमुकुटाख्याने उत्तरश्रीरामायणं० सप्तपञ्चाशः सर्गः ॥ ५७ ॥

२०–२१ ] ति० टी०–विदेहाद्विगतचेतोदेहात् । अयं जनकवंशः ॥ २० ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

रा० टी०–यस्मादिति । यस्मात् विदेहात् प्राणवियुक्तदेहात् संभूतः ततः तस्मात् वैदेहः स्मृतः एवमनेन प्रकारेण मिथिर्नाम जनकः पूर्वकः प्रथमोऽभवत् तेन हेतुना अयं मिथिवंशः मैथिलोऽभवत् सार्द्धश्लोक एकान्वयी ॥ २० ॥

रा० टी०–इतीति । नृपपुंगवशापजम्[2] द्विजस्य यदद्भुतं शरीरत्यागः द्विजशापाच्च नृपस्य यदद्भुतम् तच्च संभवस्य पुनर्जन्मनः कारणं च अशेषतो मया कथितम् ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तपञ्चाशः सर्गः ॥ ५७ ॥

---

१ विश्रमेति गो. रा. पाठः । २ इदं पद्यं गो. पु. नास्ति ।

## अष्टपञ्चाशः सर्गः ।

देवयान्यवमानसंदीपितक्रोधानलेन भार्गवेण नाहुषाय ययातये दत्तो जराप्राप्तिशापः ।

एवं ब्रुवति रामे तु लक्ष्मणः परवीरहा । प्रत्युवाच महात्मानं ज्वलन्तमिव तेजसा ॥ १ ॥
महदद्भुतमाश्चर्यं विदेहस्य पुरातनम् । निर्वृत्तं राजशार्दूल वसिष्ठस्य मुनेश्च ह ॥ २ ॥
निमिस्तु क्षत्रियः शूरो विशेषेण च दीक्षितः । न क्षमं कृतवान्राजा वसिष्ठस्य महात्मनः ॥ ३ ॥
एवमुक्तस्तु तेनायं रामः क्षत्रियपुंगवः । उवाच लक्ष्मणं वाक्यं सर्वशास्त्रविशारदम् ॥ ४ ॥
रामो रमयतां श्रेष्ठो भ्रातरं दीप्ततेजसम् । न सर्वत्र क्षमा वीर पुरुषेषु प्रदृश्यते ॥ ५ ॥
सौमित्रे दुःसहो रोषो यथा क्षान्तो ययातिना । सत्त्वानुगं पुरस्कृत्य तन्निबोध समाहितः ॥ ६ ॥
नहुषस्य सुतो राजा ययातिः पौरवर्धनः । तस्य भार्याद्वयं सौम्य रूपेणाप्रतिमं भुवि ॥ ७ ॥
एका तु तस्य राजर्षेर्नाहुषस्य पुरस्कृता । शर्मिष्ठा नाम दैतेयी दुहिता वृषपर्वणः ॥ ८ ॥
अन्या तूशनसः पत्नी ययातेः पुरुषर्षभ । न तु सा दयिता राज्ञो देवयानी सुमध्यमा ॥ ९ ॥
तयोः पुत्रौ तु संभूतौ रूपवन्तौ समाहितौ । शर्मिष्ठाजनयत्पूरुं देवयानी यदुं तदा ॥ १० ॥

---

१ ] ति० टी०—अथ लक्ष्मणस्य ब्राह्मणं प्रति शापायुक्तत्वशङ्कायां तादृशक्षमाशीला अपि सन्तीत्याह प्रसङ्गाद्रामः—एवं ब्रुवतीति ॥ १ ॥

रा० टी०—रामं प्रति लक्ष्मणस्योक्तिमाह—एवमित्यादिभिः । तेजसा ज्वलन्तमिव महात्मानं रामं लक्ष्मणः प्रत्युवाच ॥ १ ॥

२ ] ति० टी०—महदिति । मुनेर्वसिष्ठस्य । मुनेः सह प्रसङ्ग इति शेषः ॥ २ ॥

रा० टी०—तदाकारमाह—महदिति द्वाभ्याम् । अद्भुतम् अत् सर्वत्र प्राप्ता भूः चिन्तनं यस्य तत्र हेतुः तम् अमृतप्रायम् अत एव आश्चर्यम् विदेहस्य वशिष्ठस्य च निर्वृत्तं चरितमस्तीति शेषः ॥ २ ॥

गो० टी०—महदिति । पुण्यश्रवणत्वेन महदद्भुतम् । आश्चर्यादप्याश्चर्यमित्यर्थः । निमेः सहेति । प्रसङ्ग इति शेषः ॥२॥

३–५ ] ति० टी०—न क्षमं कृतवान् । अनुचितमेव कृतवानित्यर्थः ॥ ३–५ ॥

रा० टी०—निमिरिति । दीक्षितो निमिः वशिष्ठस्य क्षमं क्षमा यथा भवति तथा न कृतवान् एतेन निमिना क्षन्तव्यमिति सूचितम् ॥ ३ ॥

रा० टी०—एवमिति । रामः सर्वाभिरामदाता अत एव रमयतां श्रेष्ठो रामः लक्ष्मणमुवाच सार्द्धश्लोक एकान्वयी ॥ ४ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । यथा ययातिना सत्वानुगं सत्वगुणानुसारिपन्थानं पुरस्कृत्य दुस्सहो रोषं क्षान्तः तथा क्षमा सर्वत्र पुरुषेषु न प्रदृश्यते अतः ययातिचरितं समाहितस्त्वं निबोध शृणु सार्द्धश्लोक एकान्वयी ॥५॥६॥

गो० टी०—निमिरिति । महात्मनि वसिष्ठे विषये कथं धार्मिकः निमिः अमर्षं चकारेति पृष्टवन्तं लक्ष्मणं प्रति ययातिक्षमाकथनम् "आम्रान् पृष्टः कोविदारानाचष्टे" इति न्यायं कथं नानुसरेत् । मैवं महान् दोषः । चिन्तायाः अकर्तव्याभिप्रायात् । गुणवतो गुणकीर्तनस्य ॥ ३ ॥ ५ ॥

६ ] ति० टी०—सत्त्वानुगं सत्त्वगुणानुगतम् । मार्गमिति शेषः । पुरस्कृत्यावलम्ब्य तं प्रकारं निबोध ॥ ६ ॥

गो० टी०—सौमित्र इति । यथा येन प्रकारेण । सत्त्वानुगं सत्त्वगुणानुमतम् । मार्गमिति शेषः । तं प्रकारं निबोध ॥ ६ ॥ ७ ॥

७ ] ति० टी०—पौरान्वर्धयतीति पौरवर्धनः ॥ ७ ॥

रा० टी०—तच्चरितमेवाह—नहुषस्येत्यादिभिः । नहुषस्य सुतः ययातिरभवदिति शेषः तस्य ययातेः रूपेण अप्रतिमम् असदृशम् भार्याद्वयमासीत् ॥ ७ ॥

८ ] ति० टी०—पुरस्कृता पूजिता । दैतेयी दितेः पौत्री ८

रा० टी०—एकेति । वृषपर्वणो दुहिता शर्मिष्ठा नामैका भार्या नाहुषस्य ययातेः पुरस्कृता आदृतेत्यर्थः ॥ ८ ॥

गो० टी०—एकेति । पुरस्कृता पूजिता । दैतेयी दितेः पुत्री ॥ ८ ॥

९–१० ] ति० टी०—अन्या तूशनसः सुता ययातेः पत्नी देवयानी, सा तु न दयिता नेष्टा ॥ ९ ॥ १० ॥

रा० टी०—अन्येति । अन्या उशनसः कन्येति शेषः देवयानी ययातेः पत्नी अभवत् सा देवयानी राज्ञो ययातेर्दयिता प्रिया नाभवदिति शेषः ॥ ९ ॥

रा० टी०—तयोरिति । शर्मिष्ठा पूरुमजनयत् देवयानी तु यदुमजनयत् तयोः पुत्रौ रूपवन्तौ संभूतौ ॥ १० ॥

गो० टी०—अन्येति । उशनसः शुक्रस्य ॥ ९–१५ ॥

---

१ निमेः सहेति गो. पाठः । २ क्षमामिति गो. पा. । ३ श्रीमानिति गो. पा. ।

पूरुस्तु दयितो राज्ञो गुणैर्मातृकृतेन च । ततो दुःखसमाविष्टो यदुर्मातरमब्रवीत् ॥ ११ ॥
भार्गवस्य कुले जाता[1] देवस्याक्लिष्टकर्मणः । सहसे हृद्गतं दुःखमवमानं च दुःसहम् ॥ १२ ॥
आवां च सहितौ देवि प्रविशाव हुताशनम् । राजा तु रमतां सार्धं दैत्यपुत्र्या बहुक्षपाः ॥ १३ ॥
यदि वा सहनीयं ते मामनुज्ञातुमर्हसि । क्षम त्वं न क्षमिष्येऽहं मरिष्यामि न संशयः ॥ १४ ॥
पुत्रस्य भाषितं श्रुत्वा परमार्तस्य रोदतः । देवयानी तु संक्रुद्धा सस्मार पितरं तदा ॥ १५ ॥
इङ्गितं तदभिज्ञाय दुहितुर्भार्गवस्तदा । आगतस्त्वरितं तत्र देवयानी स्म यत्र सा ॥ १६ ॥
दृष्ट्वा चाप्रकृतिस्थां तामप्रहृष्टामचेतनाम् । पिता दुहितरं वाक्यं किमेतदिति चाब्रवीत् ॥ १७ ॥
पृच्छन्तमसकृत्तं वै भार्गवं दीप्तचेतसम् । देवयानी तु संक्रुद्धा पितरं वाक्यमब्रवीत् ॥ १८ ॥
अहमग्निं विषं तीक्ष्णमपो वा मुनिसत्तम । भक्षयिष्ये प्रवेक्ष्ये[2] वा न तु शक्ष्यामि जीवितुम् ॥१९॥
न मां त्वमवजानीषे दुःखितामवमानिताम् । वृक्षस्यावज्ञया ब्रह्मंश्छिद्यन्ते वृक्षजीविनः ॥ २० ॥
अवज्ञया च राजर्षिः परिभूय च भार्गव । मय्यवज्ञां प्रयुङ्क्ते हि न च मां बहु मन्यते ॥ २१ ॥
तस्यास्तद्वचनं श्रुत्वा कोपेनाभिपरिप्लुतः[3] । व्याहर्तुमुपचक्राम भार्गवो नहुषात्मजम् ॥ २२ ॥
यस्मान्मामवजानीषे नाहुष त्वं दुरात्मवान् । वयसा जरया[4] जीर्णः शैथिल्यमुपयास्यसि ॥ २३ ॥
एवमुक्त्वा दुहितरं समाश्वास्य स भार्गवः । पुनर्जगाम ब्रह्मर्षिर्भवनं स्वं महायशाः ॥ २४ ॥

स एवमुक्त्वा द्विजपुंगवाग्र्यः सुतां समाश्वास्य च देवयानीम् ।
पुनर्ययौ सूर्यसमानतेजा दत्त्वा च शापं नहुषात्मजाय ॥ ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

---

११-१३ ] ति० टी०-मातृकृतेन । राजप्रियमातृत्वेनेति शेषः ॥ ११-१३ ॥

रा० टी०-पूरुरिति । गुणैः मातृकृतेन पितृप्रेमास्पदीभूतमातृपुत्रत्वेन च पूरुस्तु राज्ञो ययातेः दयितः प्रियोऽभवत् ततः तस्माद्धेतोर्यदुर्मातरमब्रवीत् ॥ ११ ॥

रा० टी०-तदाकारमाह-भार्गवस्येत्यादिभिः । भार्गवस्य कुले जाता त्वं दुस्सहमवमानं पतिकृततिरस्क्रियामत एव हृदि गतं दुःखं सहसे ॥ १२ ॥

रा० टी०-आवामिति । हे देवि ! आवां हुताशनं वह्निं प्रविशाव राजा तु दैत्यपुत्र्या सार्द्धं बहुक्षपा बहुरात्रीः रमताम् ॥ १३ ॥

१४-१५ ] ति० टी०-मामनुज्ञातुमर्हसि । अग्निप्रवेशार्थमिति शेषः ॥ १४ ॥ १५ ॥

रा० टी०-यदीति । यदि ते सहनीयं तर्हि मामेव अनुज्ञातुमर्हसि हुताशनप्रवेशायेति शेषः अहं मरिष्याम्येव ॥ १४ ॥

रा० टी०-पुत्रस्येति । देवयानी पितरं संस्मार ॥१५॥

१६ ] ति० टी०-'इङ्गितम्' इति पाठे सखेदरोषभावमित्यर्थः । 'ईप्सितम्' इति पाठान्तरम् ॥ १६ ॥

रा० टी०-इङ्गितमिति । भार्गवः दुहितुरिङ्गितमभिप्रायमभिज्ञाय यत्र देवयानी तत्र त्वरितमागतः ॥ १६ ॥

गो० टी०-इङ्गितमिति । इङ्गितं सखेदरोषभावम् ॥१६॥

१७-१९ ] ति० टी०-अप्रकृतिस्थामस्वस्थाम् । अप्रहृष्टां हर्षहीनाम् । अचेतनां क्षुभितचित्ताम् ॥ १७-१९ ॥

रा० टी०-दृष्ट्वेति । अपहृष्टां हर्षरहिताम् अत एव अप्रकृतिस्थां स्वभावेनानवस्थितां दुहितरं दृष्ट्वा एतत् हर्षाभावादि किं किन्निमित्तकमिति पिताब्रवीत् दुःखहेतुमपृच्छदित्यर्थः ॥१७॥

रा० टी०-पृच्छन्तमिति । पृच्छन्तं पितरं देवयान्यब्रवीत् ॥ १८ ॥

गो० टी०-दृष्ट्वेति । अप्रकृतिस्थामस्वस्थामप्रहृष्टां हर्षरहिताम् । अचेतनां क्षुभितचित्ताम् ॥ १७ ॥ १८ ॥

रा० टी०-तदाकारमाह—अहमित्यादिभिः । अहं जीवितुं न शक्ष्यामि अतः अग्न्याद्यन्यतमं यथासम्भवं भक्षयिष्ये प्रवेक्ष्ये वा अग्नाविति योग्यप्रत्यासत्तिभ्यां लब्धम् ॥ १९ ॥

गो० टी०-अहमिति । अग्निं प्रवेक्ष्यामि विषं भक्षयिष्य इति संबन्धः ॥ १९ ॥

२०-२५ ] ति० टी०-दुःखितामपमानितां मां त्वं न जानीषे न जानासि । अत्रप्रयोगो धात्वर्थमात्रे आर्षः । इदं च मदवमानन राज्ञस्त्वदवगणनमूलमेवेत्यन्यापदेशेनाह-वृक्षस्येति । वृक्षस्यावज्ञया त्रोटमादिलक्षणया वृक्षजीविनो वृक्षाश्रितपुष्पपत्रादयश्छिद्यन्ते नाश्यन्ते ॥ प्रकृते किं तत्राह—

---

१ त्विति गो. पा. । २ प्रवेक्ष्यामीति गो. पा. । ३ परिप्लुत इति गो. पा. । ४ जरया परयेति गो. पा. ।

## एकोनषष्टितमः सर्गः ।

स्वपुत्रात्पूरोर्जराविनिमयेन ययातेस्तारुण्यप्राप्तिः महता कालेन भोगतृप्ताद्ययातेः पुनः पूरोर्यथापूर्वं तारुण्यप्राप्तिस्तस्यैव च राज्येऽभिषेकः यदवे ययातिदत्तशापश्च ।

श्रुत्वा तूशनसं क्रुद्धं तदार्तो नहुषात्मजः । जरां परमिकां प्राप्य यदुं वचनमब्रवीत् ॥ १ ॥
यदो त्वमसि धर्मज्ञो मदर्थं प्रतिगृह्यताम् । जरां परमिकां पुत्र भोगै रंस्ये महायशः ॥ २ ॥
न तावत्कृतकृत्योऽस्मि विषयेषु नरर्षभ । अनुभूय तदा कामं ततः प्राप्स्याम्यहं जराम् ॥ ३ ॥
यदुस्तद्वचनं श्रुत्वा प्रत्युवाच नरर्षभम् । पुत्रस्ते दयितः पूरुः प्रतिगृह्णातु वै जराम् ॥ ४ ॥
बहिष्कृतोऽहमर्थेषु संनिकर्षाच्च पार्थिव । प्रतिगृह्णातु वै राजन्यैः सहाश्नासि भोजनम् ॥ ५ ॥
तस्य तद्वचनं श्रुत्वा राजा पूरुमथाब्रवीत् । इयं जरा महाबाहो मदर्थं प्रतिगृह्यताम् ॥ ६ ॥
नाहुषेणैवमुक्तस्तु पूरुः प्राञ्जलिरब्रवीत् । धन्योऽस्म्यनुगृहीतोऽस्मि शासनेऽस्मि तव स्थितः ७ ॥

हे भार्गव ! राजर्षिस्त्वय्यवज्ञया हेतुभूतया मां परिभूय मय्यवज्ञां प्रयुङ्क्ते ॥ २० ॥ –२९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टपञ्चाशः सर्गः ॥ ५८ ॥

**रा० टी०–नेति** । अपमानिताम् अत एव दुःखितां मां त्वं नावजानीषे जानासि नञु तव पुत्रादीनां सुखित्वे किं तवापमानेनेत्यत आह वृक्षस्य अवज्ञया तत्पूर्वकच्छेदेन वृक्षजीविनः तदवयवा अपि छिद्यन्ते एतेन मदवमानेनैव पुत्रादयोप्यवमानिता इति सूचितम् ॥ २० ॥

**गो०टी०–नेति** । दुःखितामवमानितां नावजानीषे न जानीषे न जानासि । अवोपसर्गो धात्वर्थमात्रे वर्तते । अन्यापदेशेनाह–वृक्षस्येति । वृक्षस्यावज्ञया छेदनादिना वृक्षजीविनः पत्रपुष्पादयश्छिद्यन्ते ॥ २० ॥

**रा० टी०–अवज्ञयेति** । राजर्षिः अवज्ञया परिभूय अस्मदीयाननादृत्य मयि अवज्ञां प्रयुङ्क्ते अत एव मां न बहु मन्यते एतेन अस्मदनादरेण तवाप्यनादरो जात एवेति सूचितम् ॥२१॥

**रा० टी०–तस्या इति** । भार्गवः नहुषात्मजं ययातिं व्याहर्तुं शप्तुमुपचक्राम ॥ २२ ॥

**रा० टी०**–शापाकारमाह—**यस्मादिति** । यस्मान्मामवजानीषे तस्मात् जरया वयसा जीर्णस्त्वं शैथिल्यमुपयास्यसि ॥ २३ ॥

**रा० टी०–एवमिति** । भार्गवः स्वभवनं जगाम ॥ २४ ॥

**रा० टी०**–तदेव भङ्ग्यन्तरेणाह—**स इत्यादिभिः** । स उशना नहुषात्मजाय शापं दत्वा पुनर्ययौ ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टपञ्चाशः सर्गः ॥ ५८ ॥

**गो० टी०**–तदेवोपपादयति–**अवज्ञयेत्यादि** । हे भार्गव ! राजर्षिस्त्वय्यवज्ञया हेतुभूतया मां परिभूय मय्यवज्ञां प्रयुङ्क्ते । अवज्ञाय स राजर्षिः परिभूय च भार्गवमिति पाठे भार्गवविषयावमानाबहुमानाभ्यां मय्यवज्ञानबहुमानाभावं करोतीत्यर्थः ॥ २१–२९ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टपञ्चाशः सर्गः ॥ ५८ ॥

१–४ ] **ति० टी०**–अथ शापसहनमाह—**श्रुत्वेति** । जरां पलिततामुशनःप्रसादादन्यत्र संक्रमयोग्यां प्राप्य । यदुं देवयानीपुत्रम् ॥ १–४ ॥

**रा० टी०**–उशनोगमनानन्तरकालिकं वृत्तमाह—**श्रुत्वेत्यादिभिः** । नहुषात्मजः परमिकां जरां प्राप्य यदुमब्रवीत् १

**रा० टी०**–तदाकारमाह—**यदो इत्यादिभिः** । अहं भोगैस्तत्साधनैः स्त्रीभिः रंस्ये अतः परमिका मे जरा मदर्थं मद्भोगसिद्धये त्वया प्रतिगृह्यतां तत्र हेतुः यतस्त्वं धर्मज्ञोऽसि २

**रा० टी०**–रमणे हेतुमाह—**नेति** । विषयेषु अहं न कृतकृत्योऽस्मि अतः कामं यथेच्छमनुभूय जरां प्राप्स्यामि पुनर्ग्रहीष्यामीत्यर्थः ॥ ३ ॥

**रा० टी०–यदुरिति** । यदुः प्रत्युवाच तदाकारमाह—**पुत्र इति** । पूरुः पुत्रः ते दयितः प्रियः अतः जरां प्रतिगृह्य तिष्ठत्विति शेषः ॥ ४ ॥

**गो० टी०–श्रुत्वेत्यादि**॥ १–४ ॥

५–७ ] **ति० टी०**–संनिकर्षाच्च समीपावस्थानोपलालनादिकृत्याच्च बहिष्कृतः ॥५–७॥

**रा० टी०**–तदेव भङ्ग्यन्तरेणाह—**बहिरिति** । अर्थेषु अर्थेभ्यः सन्निकर्षात् सामीप्याच्च अहं बहिष्कृतः अतः यैः सह भोजनमन्नमश्नासि तेभ्यः प्रतिगृह्णातु ॥ ५ ॥

**रा० टी०–तस्येति** । इयं जरा त्वया प्रतिगृह्यताम् इति वचनम् राजा पूरुमब्रवीत् ॥ ६ ॥

१ परिमितामिति गो. पा. । २ कः सहाश्नातीति गो. पा. ।

पूरोर्वचनमाज्ञाय नाहुषः परया मुदा । प्रहर्षमतुलं लेभे जरां संक्रामयच्च ताम् ॥ ८ ॥
ततः स राजा तरुणः प्राप्य यज्ञान्सहस्रशः । बहुवर्षसहस्राणि पालयामास मेदिनीम् ॥ ९ ॥
अथ दीर्घस्य कालस्य राजा पूरुमथाब्रवीत् । आनयस्व जरां पुत्र न्यासं निर्यातयस्व मे ॥ १० ॥
न्यासभूता मया पुत्र त्वयि संक्रामिता जरा । तस्मात्प्रतिग्रहीष्यामि तां जरां मा व्यथां कृथाः॥११॥
प्रीतश्चास्मि महाबाहो शासनस्य प्रतिग्रहात् । त्वां चाहमभिषेक्ष्यामि प्रीतियुक्तो नराधिपम् ॥१२॥
एवमुक्त्वा सुतं पूरुं ययातिर्नहुषात्मजः । देवयानीसुतं क्रुद्धो राजा वाक्यमुवाच ह ॥ १३ ॥
राक्षसस्त्वं मया जातः क्षत्ररूपो दुरासदः । प्रतिहंसि ममाज्ञां त्वं[1] प्रजार्थे विफलो भव ॥ १४ ॥
पितरं गुरुभूतं मां यस्मात्त्वमवमन्यसे । राक्षसान्यातुधानांस्त्वं जनयिष्यसि दारुणान्॥१५॥
न तु सोमकुलोत्पन्ने वंशे स्थास्यति दुर्मतेः । वंशोऽपि भवतस्तुल्यो दुर्विनीतो भविष्यति ॥ १६ ॥
तमेवमुक्त्वा राजर्षिः पूरुं राज्यविवर्धनम् । अभिषेकेण संपूज्य आश्रमं प्रविवेश ह ॥ १७ ॥
ततः कालेन महता दिष्टान्तमुपजग्मिवान् । त्रिदिवं स[2] गतो राजा ययातिर्नहुषात्मजः ॥ १८ ॥
पूरुश्चकार तद्राज्यं धर्मेण महता वृतः । प्रतिष्ठाने पुरवरे काशिराज्ये महायशाः ॥ १९ ॥
यदुस्तु जनयामास यातुधानान्सहस्रशः । पुरे क्रौञ्चवने दुर्गे राजवंशबहिष्कृते[3] ॥ २० ॥

रा० टी०–नाहुषेणेति । अहं तव शासने आज्ञायां स्थितोऽस्मि अतः धन्योऽस्मि इति वचनम् पूरुरब्रवीत् ॥ ७ ॥

गो० टी०–बहिष्कृत इति । सन्निकर्षात् समीपावस्थापनादिकृत्याच्च बहिष्कृतः ॥ ५–७ ॥

८–१० ] ति० टी०–जरां संक्रामयदसंक्रामयत् । योगबलादिति शेषः ॥ ८–१० ॥

रा० टी०–पूरोरिति । नाहुषः प्रहर्षं लेभे अत एव जरां संक्रामयत् समक्रामयत् योगबलेन स्वशरीरात्संगृह्य पूरुशरीरे समस्थापयत् ॥ ८ ॥

रा० टी०–तत इति । तरुणः स नाहुषः सहस्रशो यज्ञान् प्राप्य कृत्वा मेदिनीं पालयामास ॥ ९ ॥

रा० टी०–अथेति । दीर्घस्य कालस्य अपगमे इति शेषः राजा नाहुषः पूरुमब्रवीत् तदाकारमाह न्यासं जरां निर्यातयस्व निःसारयस्व आनयस्व मां प्रापयस्व च ॥ १० ॥

गो० टी०–पूरोरिति । जरां संक्रामयदिति । योगबलादिति शेषः ॥ ८–१० ॥

११–१३ ] ति० टी०–' तस्मात्पूरो मया जातः प्रतिः देहि जरां मम' इति पाठे यस्मान्मया न्यासभूता जरा त्वयि संक्रामिता तस्मान्मया जातः । मत्तो जात इत्यर्थः ॥११–१३

रा० टी०–न्यासेति । जरा न्यासभूता सती त्वयि मया संक्रामिता प्रापिता तस्मात् जरां प्रतिग्रहीष्यामि अतः व्यथां मा कृथाः ॥ ११ ॥

रा० टी०–प्रीत इति । शासनस्य ममाज्ञायाः प्रतिग्रहाद्धेतोः अहं प्रीतोस्मि अतः प्रीतियुक्तोहं त्वां नराधिपमभिषेक्ष्यामि ॥ १२ ॥

रा०टी०–एवमिति । ययातिः देवयानीसुतं यदुमब्रवीत् १३

गो० टी०–न्यासभूतेति । हे पुत्र ! त्वयि मया संक्रामिता जरा तस्मान्मया जातः ॥ ११–१३ ॥

१४-१५ ] ति० टी०–प्रजार्थे प्रजानामाधिपत्यलक्षणे प्रयोजने विफलो भव । राज्याधिपत्यरहितो भवेत्यर्थः१४।१५

रा० टी०–तदाकारमाह—राक्षस इति । क्षत्ररूपस्त्वं राक्षसो जातः अत एव यस्त्वं ममाज्ञां प्रतिहंसि स त्वं प्रजार्थे विफलो भव राज्यरहितो भवेत्यर्थः ॥ १४ ॥

रा० टी०–तत्र हेतुं वदन्नाह—पितरमिति । यस्मात् मामवमन्यसे तस्मात् राक्षसान् यातुधानान् तद्विशेषांश्च जनयिष्यसि ॥ १५ ॥

गो०टी०–राक्षस इति । प्रजार्थं विफलो भवेति प्रजया पुत्रेण पितुः सकाशात्प्राप्यार्थः राज्यादिलक्षणरूपः तस्मिन्विफलः उक्तप्रयोजनरहित इत्यर्थः ॥ १४ ॥ १५ ॥

१६ ] ति० टी०–दुर्मतेस्तव । संतान इति शेषः । योऽप्यराक्षसस्तव संतानः सोऽपि क्षत्रियमात्रमेव, न तु सोमवंशराजपदाभिषिक्तः । भवत्तुल्यदुर्विनीतत्वादिति भावः ॥१६॥

रा० टी०–नेति । सोमकुलोत्पन्ने वंशे त्वं न स्थास्यसि राजत्वेनेति शेषः भवतः वंशोपि दुर्विनीतः भविष्यति ॥ १६ ॥

गो० टी०–न त्विति । त्वयेति शेषः ॥ १६–२० ॥

१७–२० ] ति० टी०–आश्रमं वानप्रस्थाश्रमम् १७–२०

रा० टी०–तमिति । राजर्षिः पूरुमभिषेकेन संपूज्य सत्कृत्य आश्रमं वानप्रस्थं प्रविवेश ॥ १७ ॥

रा० टी०–तत इति । ययातिः दिष्टान्तं प्रारब्धभोगपर्यवसानम् जग्मिवान् अत एव त्रिदिवं गतः ॥ १८ ॥

रा० टी०–पूरुरिति । प्रतिष्ठाने अतिप्रतिष्ठिते पुरवरे काशिराज्ये स्थितः पूरुः राज्यं चकार ॥ १९ ॥

१ वदेति गो. पा. । २ समिति गो. पा. । ३ कृतः इति गो. रा. पा. ।

एष तूशनसा मुक्तः शापोत्सर्गो ययातिना । धारितः क्षत्रधर्मेण यं निमिश्चक्षमे न च ॥ २१ ॥
एतत्ते सर्वमाख्यातं दर्शनं सर्वकारिणाम् । अनुवर्तामहे सौम्य दोषो न स्याद्यथा नृगे ॥ २२ ॥
इति कथयति रामे चन्द्रतुल्याननेन[1] प्रविरलतरतारं व्योम जज्ञे तदानीम् ।
अरुणकिरणरक्ता दिग्बभौ चैव पूर्वा कुसुमरसविमुक्तं वस्त्रमागुण्ठितेव । ॥ २३ ॥
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनषष्टितमः सर्गः ॥ ५९१ ॥[1]

रा० टी०–यदुरिति । राजवंशबहिष्कृतो यदुः पुरे क्रौञ्चवने च सहस्रशो यातुधानान् जनयामास ॥ २० ॥

२१ ] ति० टी०–यमृषिशापं निमिर्न चक्षमे न क्षान्तवान् । तादृश उशनसा मुक्तः शापोत्सर्गो महाशापो ययातिना धारितः ॥ २१ ॥

रा० टी०–एष इति । यं शापं निमिर्न चक्षमे सः उशनसा मुक्तः शापोत्सर्गः महाशापः ययातिना धारितः ॥ २१ ॥

गो० टी०–ययातिवृत्तान्तप्रतिपादनस्य प्रकृतोपयोगमाह–एष तूशनसेति । यमृषिशापं निमिर्न चक्षमे तादृशः शापो ययातिना धारित इत्यर्थः ॥ २१ ॥

२२ ] ति० टी०–एतत्ते सर्वं प्रजाकार्यानवलोकने शापः केषांचित्तदक्षमा केषांचित्क्षमेत्यादिकं सर्वमाख्यातम् । अतः कारः कृत्यं तदेषामस्ति ते कारिणस्तेषां कार्यापेक्षिणां सर्वेषां दर्शनमनुवर्तामहेऽङ्गीकुर्मः । यथा नृगे दोषो जातस्तथा दोषो मम न स्यान्न भवेदित्येतदर्थमित्यर्थः ॥ २२ ॥

रा० टी०–एतदिति । यथा नृगे दोषः तथा न स्यादतः सर्वेषां कारिणां सद्वस्तुप्रयोजनवताम् दर्शनमीदृग्ज्ञानं यथा भवति तथानुवर्तामहे एतत्सर्वमाख्यातं कथितम् ॥ २२ ॥

गो० टी०–एतदिति । कारः कृत्यमेषामस्तीति कारिणः । कार्यापेक्षिण इत्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनषष्टितमः सर्गः ॥ ५९ ॥

२३ ] ति० टी०–विमुक्तं मुक्तम् ॥ २३ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

रा० टी०–इतीति । चन्द्रतुल्यानने रामे इति कथयति सति व्योम आकाशं प्रविरलतरा तारा यस्मिन् तथाज्ञे बभूव अत एव अरुणकिरणरक्ता पूर्वा दिक् कुसुमरसविमुक्तं वस्त्रमागुण्ठिता धृतवतीव बभौ ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनषष्टितमः सर्गः ॥ ५९ ॥

१ एतदुत्तरं श्वमातुराख्यानं गृध्रोलूकाख्यानं च क्वचिद्दृश्यते. तत्तीर्थकतकायस्पृष्टत्वेन प्रक्षिप्तमिति तिलककारेणापि न व्याख्यातम्. तच्च—

ततः प्रभाते विमले कृत्वा पौर्वाह्णिकीं क्रियाम् । धर्मासनगतो राजा रामो राजीवलोचनः ॥ १ ॥
राजधर्मानवेक्षन्वै ब्राह्मणैर्नैगमैः सह । पुरोधसा वसिष्ठेन ऋषिणा कश्यपेन च ॥ २ ॥
मन्त्रिभिर्व्यवहारज्ञैस्तथान्यैर्धर्मपाठकैः । नीतिज्ञैरथ सभ्यैश्च राजभिः सा सभा वृता ॥ ३ ॥
सभा यथा महेन्द्रस्य यमस्य वरुणस्य च । शुशुभे राजसिंहस्य रामस्याक्लिष्टकर्मणः ॥ ४ ॥
अथ रामोऽब्रवीत्तत्र लक्ष्मणं शुभलक्षणम् । निर्गच्छ त्वं महाबाहो सुमित्रानन्दवर्धन ॥ ५ ॥
कार्यार्थिनश्च सौमित्रे व्याहर्तुं त्वमुपाक्रम । रामस्य भाषितं श्रुत्वा लक्ष्मणः शुभलक्षणः ॥ ६ ॥
द्वारदेशमुपागम्य कार्यिणश्चाह्वयत्स्वयम् । न कश्चिदब्रवीत्तत्र मम कार्यमिहाद्य वै ॥ ७ ॥
नाधयो व्याधयश्चैव रामे राज्यं प्रशासति । पक्वसस्या वसुमती सर्वौषधिसमन्विता ॥ ८ ॥
न बालो म्रियते तत्र न युवा न च मध्यमः । धर्मेण शासितं सर्वं न च बाधा विधीयते ॥ ९ ॥
दृश्यते न च कार्यार्थी रामे राज्यं प्रशासति । लक्ष्मणः प्राञ्जलिर्भूत्वा रामायैवं न्यवेदयत् ॥ १० ॥
अथ रामः प्रसन्नात्मा सौमित्रिमिदमब्रवीत् । भूय एव तु गच्छ त्वं कार्यिणः प्रविचारय ॥ ११ ॥
सम्यक्प्रणीतया नीत्या नाधर्मो विद्यते क्वचित् । तस्माद्राजभयात्सर्वे रक्षन्तीह परस्परम् ॥ १२ ॥
बाणा इव मया मुक्ता इह रक्षन्ति मे प्रजाः । तथापि त्वं महाबाहो प्रजा रक्षस्व तत्परः ॥ १३ ॥
एवमुक्तस्तु सौमित्रिर्निर्जगाम नृपालयात् । अपश्यद्द्वारदेशे वै श्वानं तावदवस्थितम् ॥ १४ ॥
तमेवं वीक्षमाणो वै विक्रोशन्तं मुहुर्मुहुः । दृष्ट्वाथ लक्ष्मणस्तं वै स पप्रच्छाथ वीर्यवान् ॥ १५ ॥

१ आनने चेति गो. रा. पा. ।

किं ते कार्यं महाभाग ब्रूहि विस्रब्धमानसः। लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत ॥ १६ ॥
सर्वभूतशरण्याय रामायाक्लिष्टकर्मणे। भयेष्वभयदात्रे च तस्मै वक्तुं समुत्सहे ॥ १७ ॥
एतच्छ्रुत्वा च वचनं सारमेयस्य लक्ष्मणः। राघवाय तदाख्यातुं प्रविवेशालयं शुभम् ॥ १८ ॥
निवेद्य रामस्य पुनर्निर्जगाम नृपालयात्। वक्तव्यं यदि ते किंचित्तत्त्वं ब्रूहि नृपाय वै ॥ १९ ॥
लक्ष्मणस्य वचः श्रुत्वा सारमेयोऽभ्यभाषत। देवागारे नृपागारे द्विजवेश्मसु वै तथा ॥ २० ॥
वह्निः शतक्रतुश्चैव सूर्यो वायुश्च तिष्ठति। नात्र योग्यास्तु सौमित्रे योनीनामधमा वयम् ॥ २१ ॥
प्रवेष्टुं नात्र शक्ष्यामि धर्मो विग्रहवान्नृपः। सत्यवादी रणपटुः सर्वसत्त्वहिते रतः ॥ २२ ॥
षाड्गुण्यस्य पदं वेत्ति नीतिकर्ता स राघवः। सर्वज्ञः सर्वदर्शी च रामो रमयतां वरः ॥ २३ ॥
स सोमः स च मृत्युश्च स यमो धनदस्तथा। वह्निः शतक्रतुश्चैव सूर्यो वै वरुणस्तथा ॥ २४ ॥
तस्य त्वं ब्रूहि सौमित्रे प्रजापालः स राघवः। अनाज्ञप्तस्तु सौमित्रे प्रवेष्टुं नेच्छयाम्यहम् ॥ २५ ॥
आनृशंस्यान्महाभाग प्रविवेश महाद्युतिः। नृपालयं प्रविश्याथ लक्ष्मणो वाक्यमब्रवीत् ॥ २६ ॥
श्रूयतां मम विज्ञाप्यं कौसल्यानन्दवर्धन। यन्मयोक्तं महाबाहो तव शासनजं विभो ॥ २७ ॥
श्वा वै ते तिष्ठते द्वारि कार्यार्थी समुपागतः। लक्ष्मणस्य वचः श्रुत्वा रामो वचनमब्रवीत् ॥
संप्रवेशय वै क्षिप्रं कार्यार्थी योऽत्र तिष्ठति ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे प्रक्षिप्तः सर्गः ॥ १ ॥

---

श्रुत्वा रामस्य वचनं लक्ष्मणस्त्वरितस्तदा। श्वानमाहूय मतिमान्राघवाय न्यवेदयत् ॥ १ ॥
दृष्ट्वा समागतं श्वानं रामो वचनमब्रवीत्। विवक्षितार्थं मे ब्रूहि सारमेय न ते भयम् ॥ २ ॥
अथापश्यत तत्रस्थं रामं श्वा भिन्नमस्तकः। ततो दृष्ट्वा स राजानं सारमेयोऽब्रवीद्वचः ॥ ३ ॥
राजैव कर्ता भूतानां राजा चैव विनायकः। राजा सुप्तेषु जागर्ति राजा पालयति प्रजाः ॥ ४ ॥
नीत्या सुनीतया राजा धर्मं रक्षति रक्षिता। यदा न पालयेद्राजा क्षिप्रं नश्यन्ति वै प्रजाः ॥ ५ ॥
राजा कर्ता च गोप्ता च सर्वस्य जगतः पिता। राजा कालो युगं चैव राजा सर्वमिदं जगत् ॥ ६ ॥
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः। यस्माद्धारयते सर्वं त्रैलोक्यं सचराचरम् ॥ ७ ॥
धारणाद्विद्विषां चैव धर्मेणारञ्जयन्प्रजाः। यस्माद्धारणमित्युक्तं स धर्म इति निश्चयः ॥ ८ ॥
एष राजन्परो धर्मः फलवान्प्रेत्य राघव। नहि धर्माद्भवेत्किंचिद्दुष्प्रापमिति मे मतिः ॥ ९ ॥
दानं दया सतां पूजा व्यवहारेषु चार्जवम्। एष राम परो धर्मो रक्षणात्प्रेत्य चेह च ॥ १० ॥
त्वं प्रमाणं प्रमाणानामसि राघव सुव्रत। विदितश्चैव ते धर्मः सद्भिराचरितस्तु वै ॥ ११ ॥
धर्माणां त्वं परं धाम गुणानां सागरोपमः। अज्ञानाच्च मया राजन्नुक्तस्त्वं राजसत्तम ॥ १२ ॥
प्रसादयामि शिरसा न त्वं क्रोद्धुमिहार्हसि। शुनः स वचनं श्रुत्वा राघवो वाक्यमब्रवीत् ॥ १३ ॥
किं ते कार्यं करोम्यद्य ब्रूहि विस्रब्ध मा चिरम्। रामस्य वचनं श्रुत्वा सारमेयोऽब्रवीदिदम् ॥ १४ ॥
धर्मेण राष्ट्रं विन्देत धर्मेणैवानुपालयेत्। धर्माच्छरण्यतां याति राजा सर्वभयापहः ॥ १५ ॥
इदं विज्ञाय यत्कृत्यं श्रूयतां मम राघव। भिक्षुः सर्वार्थसिद्धश्च ब्राह्मणावसथे वसन् ॥ १६ ॥
तेन दत्तः प्रहारो मे निष्कारणमनागसः। एतच्छ्रुत्वा तु रामेण द्वाःस्थः संप्रेषितस्तदा ॥ १७ ॥
आनीतश्च द्विजस्तेन सर्वसिद्धार्थकोविदः। अथ द्विजवरस्तत्र रामं दृष्ट्वा महाद्युतिः ॥ १८ ॥
किं ते कार्यं मया राम तद्ब्रूहि त्वं ममानघ। एवमुक्तस्तु विप्रेण रामो वचनमब्रवीत् ॥ १९ ॥
त्वया दत्तः प्रहारोऽयं सारमेयस्य वै द्विज। किं तवापकृतं विप्र दण्डेनाभिहतो यतः ॥ २० ॥
क्रोधः प्राणहरः शत्रुः क्रोधोऽमित्रमुखो रिपुः। क्रोधो ह्यसिर्महातीक्ष्णः सर्वं क्रोधोऽपकर्षति ॥ २१ ॥
तपते यजते चैव यच्च दानं प्रयच्छति। क्रोधेन सर्वं हरति तस्मात्क्रोधं विसर्जयेत् ॥ २२ ॥
इन्द्रियाणां प्रदुष्टानां हयानामिव धावताम्। कुर्वीत धृत्या सारथ्यं संहृत्येन्द्रियगोचरम् ॥ २३ ॥
मनसा कर्मणा वाचा चक्षुषा च समाचरेत्। श्रेयो लोकस्य चरतो न द्वेष्टि न च लिप्यते ॥ २४ ॥
न तत्कुर्यादसिस्तीक्ष्णः सर्पो वा व्याहतः पदा। अरिर्वा नित्यसंक्रुद्धो यथात्मा दुरनुष्ठितः ॥ २५ ॥
विनीतविनयस्यापि प्रकृतिर्न विधीयते। प्रकृतिं गूहमानस्य निश्चयेन कृतिर्ध्रुवा ॥ २६ ॥
एवमुक्तः स विप्रो वै रामेणाक्लिष्टकर्मणा। द्विजः सर्वार्थसिद्धस्तु अब्रवीद्रामसंनिधौ ॥ २७ ॥

मया दत्तप्रहारोऽयं क्रोधेनाविष्टचेतसा । भिक्षार्थमटमानेन काले विगतभैक्षके ॥ २८ ॥
रथ्यास्थितस्त्वयं श्वा वै गच्छ गच्छेति भाषितः । अथ स्वैरेण गच्छंस्तु रथ्यान्ते विषमः स्थितः ॥ २९ ॥
क्रोधेन क्षुधयाविष्टस्ततो दत्तोऽस्य राघव । प्रहारो राजराजेन्द्र शाधि मामपराधिनम् ॥ ३० ॥
त्वया शस्तस्य राजेन्द्र नास्ति मे नरकाद्भयम् । अथ रामेण संपृष्टाः सर्वे एव सभासदः ॥ ३१ ॥
किं कार्यमस्य वै ब्रूत दण्डो वै कोऽस्य पात्यताम् । सम्यक्प्रणिहिते दण्डे प्रजा भवति रक्षिता ॥ ३२ ॥
भृग्वाङ्गिरसकुत्साद्या वसिष्ठश्च सकाश्यपः । धर्मपाठकमुख्याश्च सचिवा नैगमास्तथा ॥ ३३ ॥
एते चान्ये च बहवः पण्डितास्तत्र संगताः । अवध्यो ब्राह्मणो दण्डैरिति शास्त्रविदो विदुः ॥ ३४ ॥
ब्रुवते राघवं सर्वे राजधर्मेषु निष्ठिताः । अथ ते मुनयः सर्वे राममेवाब्रुवंस्तदा ॥ ३५ ॥
राजा शास्ता हि सर्वस्य त्वं विशेषेण राघव । त्रैलोक्यस्य भवाञ्शास्ता देवो विष्णुः सनातनः ॥ ३६ ॥
एवमुक्ते तु तैः सर्वैः श्वा वै वचनमब्रवीत् । यदि तुष्टोऽसि मे राम यदि देयो वरो मम ॥ ३७ ॥
प्रतिज्ञातं त्वया वीर किं करोमीति विश्रुतम् । प्रयच्छ ब्राह्मणस्यास्य कौलपत्यं नराधिप ॥ ३८ ॥
कालञ्जरे महाराज कौलपत्यं प्रदीयताम् । एतच्छ्रुत्वा तु रामेण कौलपत्येऽभिषेचितः ॥ ३९ ॥
प्रययौ ब्राह्मणो हृष्टो गजस्कन्धेन सोऽर्चितः । अथ ते रामसचिवाः स्मयमाना वचोऽब्रुवन् ॥ ४० ॥
वरोऽयं दत्त एतस्य नायं शापो महाद्युते । एवमुक्तस्तु सचिवै रामो वचनमब्रवीत् ॥ ४१ ॥
न यूयं गतितत्त्वज्ञाः श्वा वै जानाति कारणम् । अथ पृष्टस्तु रामेण सारमेयोऽब्रवीदिदम् ॥ ४२ ॥
अहं कुलपतिस्तत्र आसं शिष्टान्नभोजनः । देवद्विजातिपूजायां दासीदासेषु राघव ॥ ४३ ॥
संविभागी शुभरतिर्देवद्रव्यस्य रक्षिता । विनीतः शीलसंपन्नः सर्वसत्त्वहिते रतः ॥ ४४ ॥
सोहं प्राप्त इमां घोरामवस्थामधमां गतिम् । एवं क्रोधान्वितो विप्रस्त्यक्तधर्मा हिते रतः ॥ ४५ ॥
क्रुद्धो नृशंसः परुष अविद्वांश्चाप्यधार्मिकः । कुलानि पातयत्येव सप्त सप्त च राघव ॥ ४६ ॥
तस्मात्सर्वास्ववस्थासु कौलपत्यं न कारयेत् । यमिच्छेन्नरकं नेतुं सपुत्रपशुबान्धवम् ॥ ४७ ॥
देवेष्वधिष्ठितं कुर्याद्गोषु तं ब्राह्मणेषु च । ब्रह्मस्वं देवताद्रव्यं स्त्रीणां बालधनं च यत् ॥ ४८ ॥
दत्तं हरति यो भूय इष्टैः सह विनश्यति । ब्राह्मणद्रव्यमादत्ते देवानां चैव राघव ॥ ४९ ॥
सद्यः पतति घोरे वै नरके वीचिसंज्ञके । मनसापि हि देवस्वं ब्रह्मस्वं च हरेत्तु यः ॥ ५० ॥
निरयान्निरयं चैव पतत्येव नराधमः । तच्छ्रुत्वा वचनं रामो विस्मयोत्फुल्ललोचनः ॥ ५१ ॥
श्वाप्यगच्छन्महातेजा यत एवागतस्ततः । मनस्वी पूर्वजात्या स जातिमात्रोऽपदूषितः ॥
वाराणस्यां महाभागः प्रायं चोपविवेश ह ॥ ५२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे प्रक्षिप्तः सर्गः ॥ २ ॥

---

अथ तस्मिन्वनोद्देशे रम्ये पादपशोभिते । नदीकीर्णे गिरिवरे कोकिलानेककूजिते ॥ १ ॥
सिंहव्याघ्रसमाकीर्णे नानाद्विजगणावृते । गृध्रोलूकौ प्रवसतो बहुवर्षगणानपि ॥ २ ॥
अथोलूकस्य भवनं गृध्रः पापविनिश्चयः । ममेदमिति कृत्वासौ कलहं तेन चाकरोत् ॥ ३ ॥
राजा सर्वस्य लोकस्य रामो राजीवलोचनः । तं प्रपद्यावहे शीघ्रं यस्यैतद्भवनं भवेत् ॥ ४ ॥
इति कृत्वा मतिं तां तु निश्चयार्थं सुनिश्चिताम् । गृध्रोलूकौ प्रपद्येतां कोपाविष्टौ ह्यमर्षितौ ॥ ५ ॥
रामं प्रपद्य तौ शीघ्रं कलिव्याकुलचेतसौ । तौ परस्परविद्वेषात्स्पृशतश्चरणौ तदा ॥ ६ ॥
अथ दृष्ट्वा नरेन्द्रं तं गृध्रो वचनमब्रवीत् । सुराणामसुराणां च प्रधानस्त्वं मतो मम ॥ ७ ॥
बृहस्पतेश्च शुक्राच्च विशिष्टोऽसि महाद्युते । परावरज्ञो भूतानां कान्त्या चन्द्र इवापरः ॥ ८ ॥
दुर्निरीक्ष्यो यथा सूर्यो हिमवांश्चैव गौरवे । सागरश्चैव गाम्भीर्ये लोकपालो यमो ह्यसि ॥ ९ ॥
क्षान्त्या धरण्या तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः । गुरुस्त्वं सर्वसंपन्नः कीर्तियुक्तश्च राघव ॥ १० ॥
अमर्षी दुर्जयो जेता सर्वास्त्रविधिपारगः । शृणुष्व मम वै राम विज्ञाप्यं नरपुंगव ॥ ११ ॥
ममालयं पूर्वकृतं बाहुवीर्येण राघव । उलूको हरते राजंस्तत्र त्वं त्रातुमर्हसि ॥ १२ ॥
एवमुक्ते तु गृध्रेण उलूको वाक्यमब्रवीत् । सोमाच्छतक्रतोः सूर्याद्धनदाद्वा यमात्तथा ॥ १३ ॥
जायते वै नृपो राम किंचिद्भवति मानुषः । त्वं तु सर्वमयो देवो नारायण इवापरः ॥ १४ ॥
याचते सौम्यता राजन्सम्यक्प्रणिहिता विभो । समं चरसि चान्विष्य तेन सोमांशको भवान् ॥ १५ ॥

क्रोधे दण्डे प्रजानाथ दाने पापभयापहः। दाता हर्तासि गोप्तासि तेनेन्द्र इव नो भवान् ॥ १६ ॥
अधृष्यः सर्वभूतेषु तेजसा चानलोपमः। अभीक्ष्णं तपसे लोकांस्तेन भास्करसंनिभः ॥ १७ ॥
साक्षाद्वित्तेशतुल्योऽसि अथवा धनदाधिकः। वित्तेशस्येव पद्मा श्रीर्नित्यं ते राजसत्तम ॥ १८ ॥
धनदस्य तु कार्येण धनदस्तेन नो भवान्। समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥ १९ ॥
शत्रौ मित्रे च ते दृष्टिः समतां याति राघव। धर्मेण शासनं नित्यं व्यवहारे विधिक्रमात् ॥ २० ॥
यस्य रुष्यसि वै राम तस्य मृत्युर्विधावति। गीयसे तेन वै राम यम इत्यभिविक्रमः ॥ २१ ॥
यश्चैष मानुषो भावो भवतो नृपसत्तम। आनृशंस्यपरो राजा सत्त्वेषु क्षमयान्वितः ॥ २२ ॥
दुर्बलस्य त्वनाथस्य राजा भवति वै बलम्। अचक्षुषोत्तमं चक्षुरगतेः स गतिर्भवान् ॥ २३ ॥
अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक। ममालयं प्रविष्टस्तु गृध्रो मां बाधते नृप ॥ २४ ॥
त्वं हि देव मनुष्येषु शास्ता वै नरपुंगव। एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत्स्वयम् ॥ २५ ॥
धृष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः। अशोको धर्मपालश्च सुमन्त्रश्च महाबलः ॥ २६ ॥
एते रामस्य सचिवा राज्ञो दशरथस्य च। नीतियुक्ता महात्मानः सर्वशास्त्रविशारदाः ॥ २७ ॥
ह्रीमन्तश्च कुलीनाश्च नये मन्त्रे च कोविदाः। तानाहूय च धर्मात्मा पुष्पकादवतीर्य च ॥ २८ ॥
गृध्रोलूकविवादं तं पृच्छति स्म रघूत्तमः। कति वर्षाणि वै गृध्र तवेदं निलयं कृतम् ॥ २९ ॥
एतन्मे कारणं ब्रूहि यदि जानासि तत्त्वतः। एतच्छ्रुत्वा तु वै गृध्रो भाषते राघवं स तम् ॥ ३० ॥
इयं वसुमती राम मनुष्यैः परितो यदा। उत्थितैरावृता सर्वा तदा प्रभृति मे गृहम् ॥ ३१ ॥
उलूकश्चाब्रवीद्रामं पादपैरुपशोभिता। यदेयं पृथिवी राजंस्तदाप्रभृति मे गृहम् ॥
एतच्छ्रुत्वा तु वै रामः सभासदमुवाच ह ॥ ३२ ॥

न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ॥ ३३ ॥

ये तु सभ्याः सदा ज्ञात्वा तूष्णीं ध्यायन्त आसते। यथाप्राप्तं न ब्रुवते ते सर्वेऽनृतवादिनः ॥ ३४ ॥
जानन्न वाब्रवीत्प्रश्नान्कामात्क्रोधाद्भयात्तथा। सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ ३५ ॥
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते। तस्मात्सत्येन वक्तव्यं जानता सत्यमञ्जसा ॥ ३६ ॥
एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा। उलूकः शोभते राजन्न तु गृध्रो महामते ॥ ३७ ॥
त्वं प्रमाणं महाराज राजा हि परमा गतिः। राजमूलाः प्रजाः सर्वा राजा धर्मः सनातनः ॥ ३८ ॥
शास्ता नृणां नृपो येषां ते न गच्छन्ति दुर्गतिम्। वैवस्वतेन मुक्तास्तु भवन्ति पुरुषोत्तमाः ॥ ३९ ॥
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत्। श्रूयतामभिधास्यामि पुराणे यदुदाहृतम् ॥ ४० ॥
द्यौः सचन्द्रार्कनक्षत्रा सपर्वतमहावना। सलिलार्णवसंपूर्णं त्रैलोक्यं सचराचरम् ॥ ४१ ॥
एक एव तदा ह्यासीद्युक्तो मेरुरिवापरः। पुरा भूः सह लक्ष्म्या च विष्णोर्जठरमाविशत् ॥ ४२ ॥
तां निगृह्य महातेजाः प्रविश्य सलिलार्णवम्। सुष्वाप देवो भूतात्मा बहून्वर्षगणानपि ॥ ४३ ॥
विष्णौ सुप्ते तदा ब्रह्मा विवेश जठरं ततः। रुद्धस्रोतं तु तं ज्ञात्वा महायोगी समाविशत् ॥ ४४ ॥
नाभ्यां विष्णोः समुत्पन्ने पद्मे हेमविभूषिते। स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥ ४५ ॥
सिसृक्षुः पृथिवीं वायुं पर्वतान्समहीरुहान्। तदन्तरे प्रजाः सर्वाः समनुष्यसरीसृपाः ॥ ४६ ॥
जरायुजाण्डजाः सर्वाः स ससर्ज महातपाः। तत्र श्रोत्रमलोत्पन्नः कैटभो मधुना सह ॥ ४७ ॥
दानवौ तौ महावीर्यौ घोररूपौ दुरासदौ। दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टौ बभूवतुः ॥ ४८ ॥
वेगेन महता तत्र स्वयंभुवमधावताम्। दृष्ट्वा स्वयंभुवा मुक्तो रावो वै विकृतस्तदा ॥ ४९ ॥
तेन शब्देन संप्राप्तौ दानवौ हरिणा सह। अथ चक्रप्रहारेण सूदितौ मधुकैटभौ ॥ ५० ॥
मेदसा प्लाविता सर्वा पृथिवी च समन्ततः। भूयो विशोधिता तेन हरिणा लोकधारिणा ॥ ५१ ॥
शुद्धां वै मेदिनीं तां तु वृक्षैः सर्वामपूरयत्। ओषध्यः सर्वसस्यानि निष्पद्यन्त पृथग्विधाः ॥ ५२ ॥
मेदोगन्धा तु धरणी मेदिनीत्यभिसंज्ञिता। तस्मान्न गृध्रस्य गृहमुलूकस्येति मे मतिः ॥ ५३ ॥
तस्माद्गृध्रस्तु दण्ड्यो वै पापो हर्ता परालयम्। पीडां करोति पापात्मा दुर्विनीतो महामयम् ॥ ५४ ॥
अथाशरीरिणी वाणी अन्तरिक्षात्प्रबोधिनी। मावधी राम गृध्रं त्वं पूर्वदग्धं तपोबलात् ॥ ५५ ॥
कालगौतमदग्धोऽयं प्रजानाथो नरेश्वर। ब्रह्मदत्तेति नाम्नैष शूरः सत्यव्रतः शुचिः ॥ ५६ ॥

## षष्टितमः सर्गः ।

यमुनातीरवासिनामुग्रतपसामृषीणामनुभूतलवणासुरत्रासानां दाशरथिनिकटे स्वसंकटं निवेदयितुमागमनम् । तेषामासनपाद्यादिसत्कारपूर्वकमागमनहेतुप्रश्नो रामस्य ।

तयोः संवदतोरेवं रामलक्ष्मणयोस्तदा । वासन्तिकी निशा प्राप्ता न शीता न च घर्मदा ॥ १ ॥
ततः प्रभाते विमले कृतपूर्वाह्णिकक्रियः[1] । अभिचक्राम काकुत्स्थो दर्शनं पौरकार्यवित् ॥ २ ॥
ततः सुमन्त्रस्त्वागम्य राघवं वाक्यमब्रवीत् । एते प्रतिहता राजन्द्वारि[2] तिष्ठन्ति तापसाः ॥ ३ ॥
भार्गवं च्यवनं चैव पुरस्कृत्य महर्षयः । दर्शनं ते महाराजे चोदयन्ति कृतत्वराः ॥ ४ ॥
प्रीयमाणा नरव्याघ्र यमुनातीरवासिनः । तस्य तद्वचनं श्रुत्वा रामः प्रोवाच धर्मवित् ॥ ५ ॥
प्रवेश्यन्तां महाभागा भार्गवप्रमुखा द्विजाः । राज्ञस्त्वाज्ञां पुरस्कृत्य द्वाःस्थो मूर्ध्ना[3] कृताञ्जलिः ॥६॥

१ ] ति० टी०–अथ लवणासुरपीडितऋषीणां रामसमीपागमनम्—तयोरिति । एवं संवदतोः प्रतिदिवसं धर्मसंवादं कुर्वतोः । तत्पूर्वं प्रजारक्षणं कुर्वतोरिति यावत् । वासन्तिकी वसन्तकालभवा निशा प्राप्ता । कालान्तरे इति शेषः । इदं कालवचनं ऋषिकार्योचितत्वप्रदर्शनार्थम् ॥ १ ॥

रा० टी०–रामकर्तृकेतिहासवर्णनानन्तरकालिकं वृत्तमाह—तयोरित्यादिभिः । रामलक्ष्मणयोः सम्वदतोस्सतोः वासन्तिकी वसन्तर्तुसम्बन्धिनी निशा प्राप्ता ॥ १ ॥

गो० टी०–तयोरित्यादि । वासन्तिकी वसन्ते भवा । एवं प्रतिदिवसं संवदतोर्धर्मसंवादं कुर्वतोः । तत्पूर्वं प्रजारक्षणं कुर्वतोरिति शेषः। वासन्तिकी निशा प्राप्तेति । कालान्तर इति शेषः। एतेन वसन्ते समानीता देवी पुनर्वसन्ते त्यक्तेति सूचयति । इदं च कालवचनम् ऋषिकार्योचितप्रदर्शनार्थम् ॥१॥२

२ ] ति० टी०–दर्शनमभिचक्राम । प्रजा दृश्यन्ते यत्र स्थाने तत्स्थानं दर्शनमभिचक्राम जगाम ॥ २ ॥

रा० टी०–तत इति । कृतपूर्वाह्णिकक्रियः पौरकार्यवित्काकुत्स्थो रामः दर्शनं प्रजाकर्तृकावलोकनं यथा भवति तथा अभिचक्राम ॥ २ ॥

३ ] ति० टी०–प्रतिहताः । द्वारि निरुद्धा इत्यर्थः ॥३॥

रा० टी०–तत इति । सुमन्त्रः राघवमब्रवीत् अर्द्धं पृथक् तदाकारमाह–एते इति । भार्गवं च्यवनं पुरस्कृत्य अप्रतिहताः अनिवारिताः अपि यमुनातीरवासिनः एते महर्षयः द्वारि तिष्ठन्ति ते दर्शनमुद्दिश्य कृतत्वराः सन्तः चोदयन्ति स्वागमनबोधनार्थं प्रेरयन्ति च अर्द्धचतुष्टयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–तत इति । द्वारि प्रतिहता निरुद्धा इत्यर्थः॥३॥

४–५ ] ति० टी०–भृगुगोत्रापत्यं च्यवनं पुरस्कृत्य हे महाराज ! तव दर्शनं प्रत्यस्मांश्चोदयन्ति प्रेरयन्ति ॥ ४ ॥ ५ ॥

गो० टी०–भार्गवेति । भृगोर्गोत्रापत्यं भार्गवः स चासौ च्यवनश्च तम् । महाराज्ञः महाराजस्य दर्शनं प्रति अस्मदादीन् चोदयन्ति प्रेरयन्ति महाराजश्चोदयन्तीति च पाठः ॥ ४ ॥

रा० टी०–तस्येति । भार्गवप्रमुखाः द्विजाः प्रवेश्यन्ताम् इति रामः प्रोवाच ॥ ५ ॥

गो० टी०–तस्येति । भार्गवप्रमुखाः च्यवनप्रमुखाः ५॥६

६ ] ति० टी०–भार्गवप्रमुखाश्च्यवनप्रमुखाः ॥ ६ ॥

रा० टी०–राज्ञ इति । द्वाःस्थः तापसान्प्रवेशयामास॥६॥

गृहं त्वस्यागतो विप्रो भोजनं प्रत्यमार्गत । साग्रं वर्षशतं चैव भोक्तव्यं नृपसत्तम ॥ ५७ ॥
ब्रह्मदत्तः स वै तस्य पाद्यमर्घ्यं स्वयं नृपः । हार्दं चैवाकरोत्तस्य भोजनार्थं महाद्युतेः ॥ ५८ ॥
मांसमस्याभवत्तत्र आहारे तु महात्मनः । अथ क्रुद्धेन मुनिना शापो दत्तोऽस्य दारुणः ॥ ५९ ॥
गृध्रस्त्वं भव वै राजन्मा मैनं त्वथ सोऽब्रवीत् । प्रसादं कुरु धर्मज्ञ अज्ञानान्मे महाव्रत ॥ ६० ॥
शापस्यान्तं महाभाग क्रियतां वै ममानघ । तदज्ञानकृतं मत्वा राजानं मुनिरब्रवीत् ॥ ६१ ॥
उत्पत्स्यति कुले राज्ञां रामो नाम महायशाः । इक्ष्वाकूणां महाभागो राजा राजीवलोचनः ॥ ६२ ॥
तेन स्पृष्टो विपापस्त्वं भविता नरपुंगव । स्पृष्टो रामेण तच्छ्रुत्वा नरेन्द्रः पृथिवीपतिः ॥ ६३ ॥
गृध्रत्वं त्यक्तवान्राजा दिव्यगन्धानुलेपनः । पुरुषो दिव्यरूपोऽभूदुवाचेदं च राघवम् ॥ ६४ ॥
साधु राघव धर्मज्ञ त्वत्प्रसादादहं विभो । विमुक्तो नरकाद्धोराच्छापस्यान्तः कृतस्त्वया ॥ ६५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे प्रक्षिप्तः सर्गः ॥ ३ ॥

१ पौर्वाह्णिकेति गो. पाठः । २ राज्ञ इति गो. पाठः । ३ मुर्ध्नीति गो. पाठः ।

प्रवेशयामास तदा तापसान्सुदुरासदान् । शतं समधिकं तत्र दीप्यमानं स्वतेजसा ॥ ७ ॥
प्रविष्टं राजभवनं तापसानां महात्मनाम् । ते द्विजाः पूर्णकलशैः सर्वतीर्थाम्बुसत्कृतं ॥ ८ ॥
गृहीत्वा फलमूलं च रामस्याभ्याहरन्बहु । प्रतिगृह्य तु तत्सर्वं रामः प्रीतिपुरस्कृतः ॥ ९ ॥
तीर्थोदकानि सर्वाणि फलानि विविधानि च । उवाच च महाबाहुः सर्वानेव महामुनीन् ॥ १० ॥
इमान्यासनमुख्यानि यथार्हमुपविश्यताम् । रामस्य भाषितं श्रुत्वा सर्व एव महर्षयः ॥ ११ ॥
बृसीषु रुचिराख्यासु निषेदुः काञ्चनीषु ते । उपविष्टानृषींस्तत्र दृष्ट्वा परपुरंजयः ॥
प्रयतः प्राञ्जलिर्भूत्वा राघवो वाक्यमब्रवीत् । ॥ १२ ॥
किमागमनकार्यं वः किं करोमि समाहितः । आज्ञाप्योऽहं महर्षीणां सर्वकामकरः सुखम् ॥ १३ ॥
इदं राज्यं च सकलं जीवितं च हृदि स्थितम् । सर्वमेतद्द्विजार्थं मे सत्यमेतद्ब्रवीमि वः ॥ १४ ॥
तस्य तद्वचनं श्रुत्वा साधुकारो महानभूत् । ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ॥ १५ ॥
ऊचुश्चैवं महात्मानो हर्षेण महता वृताः । उपपन्नं नरश्रेष्ठ तवैव भुवि नान्यतः ॥ १६ ॥
बहवः पार्थिवा राजन्नातिक्रान्ता महाबलाः । कार्यस्य गौरवं मत्वा प्रतिज्ञां नाभ्यरोचयन् ॥ १७ ॥

---

७ ] ति० टी०—समधिकं किंचिदधिकं शतम् ॥ ७ ॥

रा० टी०—शतमिति । समधिकं किञ्चिदधिकं तापसानां शतं राजभवनं प्रविष्टम् ॥ ७ ॥

गो० टी०—शतमिति । समधिकम् अधिकसहितम् ७—१२

८ ] ति० टी०—पूर्णकलशैरुपलक्षिताः ॥ ८ ॥

रा० टी०—ते इति । द्विजाः सत्कृतैः समीचीनतया निष्पादितैः पूर्णकलशैः तीर्थाम्बु बहुफलं च गृहीत्वा रामस्य रामाय अभ्याहरन् ॥ ८ ॥

९-१० ] ति० टी०—फलमूलं गृहीत्वा रामस्याभ्याहरन् ॥ ९ ॥ १० ॥

रा० टी०—प्रतीति । रामः तत्सर्वं सर्वाणि तीर्थोदकानि सर्वाणि फलानि च प्रतिगृह्य आसनमुख्यानि आसनमुख्येषु उपविश्यताम् इत्युवाच अर्द्धचतुष्टयमेकान्वयि ॥ ९ ॥ १० ॥

११ ] ति० टी०—उपविश्यताम् । एषु भवद्भिरिति शेषः ॥ ११ ॥

रा० टी०—रामस्येति । महर्षयः बृसीषु ऋषियोग्यासनेषु निषेदुः ॥ ११ ॥

१२ ] ति० टी०—रुचिराख्यासु रुचिरशोभासु ॥ १२ ॥

रा० टी०—उपविष्टानिति । राघवो वाक्यमब्रवीत् ॥ १२ ॥

१३ ] ति० टी०—किं करोमि किं कुर्याम् । सर्वकामकरः सर्वाभीष्टसाधकः ॥ १३ ॥

रा० टी०—तदाकारमाह—किमिति । अहं महर्षीणां सर्वकामकरः निखिलकृत्यसाधकः अत एव आज्ञाप्यः अतः वः आगमनकार्यं किं तद्ब्रूहीत्यर्थः समाहितोऽहं किं करोमि ॥ १३ ॥

गो० टी०—किमिति । किं करोमि किं कुर्याम् । सर्वकामकरः सर्वाभीष्टसाधकः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०—हृदि स्थितम् । हृत्पुण्डरीकप्रदेशे स्थितमित्यर्थः ॥ १४ ॥

रा० टी०—इदमिति । मे राज्यादि सर्वं द्विजार्थमेव एतत्सत्यमहं ब्रवीमि ॥ १४ ॥

१५ ] ति० टी०—साधुकारः साधुसाध्विति शब्दप्रयोगः १५

रा० टी०—तस्येति । तस्य रामस्य वचनं श्रुत्वा ऋषीणां साधुकारः साधुसाध्विति शब्दोऽभूत् ॥ १५ ॥

गो० टी०—तस्येति । साधुकारः साधु साध्विति संभाषणम् ॥ १५ ॥

१६ ] ति० टी०—तवैवोपपन्नं त्वय्येवेदृशं वचो युक्तं नान्यतो नान्यस्य ॥ १६ ॥

रा० टी०—ऊचुरिति । महात्मान ऊचुः तदाकारमाह—तवैव उपपन्नं युक्तमेवं वचनमिति शेषः अन्यतः अन्यस्य न १६

गो० टी०—ऊचुरिति । नान्यतः नान्यस्य ॥ १६ ॥

१७ ] ति० टी०—कार्यस्य गौरवं मत्वा तच्छ्रवणादुत्तरमपि करिष्यामीति प्रतिज्ञां नाभ्यरोचयन्न कुर्वन्ति । अशक्यत्वेनेति भावः । भवांस्त्वर्थमश्रुत्वैव प्रतिज्ञातवानित्याश्चर्यम् ॥ १७ ॥

रा० टी०—बहव इति । अतिक्रान्ताः अस्माभिः प्राप्ताः बहवः पार्थिवाः कार्यस्य गौरवं मत्वा प्रतिज्ञां मत्कार्यसाधनविषयकनिश्चयं नाभ्यरोचयन् अकुर्वन् ॥ १७ ॥

गो०टी०—बहव इति । कार्यस्य गौरवं मत्वा ततः पूर्वं करिष्यामीति प्रतिज्ञां नाभ्यरोचयन् न कुर्वन्ति । अशक्यनियोगापत्तिभयादिति शेषः ॥ १७ ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षष्टितमः सर्गः ॥ ६० ॥

---

१ ते इति गो. पाठः ।

त्वया पुनर्ब्राह्मणगौरवादियं कृता प्रतिज्ञा ह्यनवेक्ष्य कारणम् ।
ततश्च कर्ता ह्यसि नात्र संशयो महाभयात्त्रातुमृषींस्त्वमर्हसि । ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

## एकषष्टितमः सर्गः ।

काकुत्स्थेनानुयुक्तानां मुनीनां मध्ये भार्गवो लवणपितुर्मधोः किंचिच्चरितं प्रसन्नाद्भवानीपतेः शूलप्राप्तिं च कथयित्वा तदात्मजस्यास्यापि स्वपितृप्राप्तशूलेन त्रिलोकीपीडां विशेषतस्तापसपीडनं स्वेषामनन्यगतिकत्वं चाकथयत् ।

ब्रुवद्भिरेवमृषिभिः काकुत्स्थो वाक्यमब्रवीत् । किं कार्यं ब्रूत मुनयो भयं तावदपैतु वः ॥ १ ॥
तथा ब्रुवति काकुत्स्थे भार्गवो वाक्यमब्रवीत् । भयानां शृणु यन्मूलं देशस्य च नरेश्वर ॥ २ ॥
पूर्वं कृतयुगे राजन्दैतेयः सुमहामतिः । लोलापुत्रोऽभवज्ज्येष्ठो मधुर्नाम महासुरः ॥ ३ ॥
ब्रह्मण्यश्च शरण्यश्च बुद्ध्या च परिनिष्ठितः । सुरैश्च परमोदारैः प्रीतिस्तस्यातुलाभवत् ॥ ४ ॥
स मधुर्वीर्यसंपन्नो धर्मे च सुसमाहितः । बहुमानाच्च रुद्रेण दत्तस्तस्याद्भुतो वरः ॥ ५ ॥
शूलं शूलाद्विनिष्कृष्य महावीर्यं महाप्रभम् । [ बहूैर्वर्षसहस्राणि रुद्रप्रीत्याकरोत्तपः ॥
रुद्रः प्रीतोऽभवत्तस्मै वरं दातुं ययौ च सः ] । ददौ महात्मा सुप्रीतो वाक्यं चैतदुवाच ह ॥ ६ ॥
त्वयायमतुलो धर्मो मत्प्रसादकरः शुभः । प्रीत्या परमया युक्तो ददाम्यायुधमुत्तमम् ॥ ७ ॥

१८ ] ति० टी०—तदाह—त्वयेति ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

रा० टी०—त्वयेति । ब्राह्मणगौरवाद्धेतोः कारणमनवेक्ष्य प्रभतः अज्ञात्वापि त्वया इयं कार्यसाधनविषयिणी प्रतिज्ञा कृता ततः प्रतिज्ञाकरणाद्धेतोः कर्तासि अस्मत्कार्यमिति शेषः अत एव ऋषीन् महाभयात्त्रातुं त्वमेवार्हसि ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षष्टितमः सर्गः ॥ ६० ॥

१ ] ति० टी०—अथ ऋषिभिः स्वकार्यनिवेदनम्—एवं ब्रुवद्भिः । भयत्राणमिति शेषः । ऋषिभिः । प्रेरित इति शेषः । किं कार्यम् । किं जन्यभयत्राणं कार्यमित्यर्थः ॥ १ ॥

रा० टी०—ऋषीन्प्रति रामोक्तिमाह—ब्रुवद्भिरिति । एवं ब्रुवद्भिः ऋषिभिः प्रार्थितः काकुत्स्थः वो युष्माकं किं कार्यं तद्ब्रूत वो भयमपैतु इति वाक्यमब्रवीत् ॥ १ ॥

गो० टी०—एवमित्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—देशस्य च चादस्माकं भयानां यन्मूलं तच्छृणु ॥ २ ॥

रा० टी०—तथेति । भार्गवोऽब्रवीत् तदाकारमाह—देशस्य भयानां यन्मूलं तच्छृणु ॥ २ ॥

३–५ ] ति० टी०—लोलायाः पुत्रो लोलापुत्रः ॥ ३–५ ॥

रा० टी०—पूर्वमिति । कृतयुगे ब्रह्मण्यः शरण्यश्च ज्येष्ठः मधुर्नाम लोलापुत्रः अभवत् अत एव सुरैस्सह तस्य मधोः अतुला प्रीतिरभवत् श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०—स इति । स मधुः धर्मे सुसमाहितोऽभवदिति शेषः तस्य मधोर्बहुमानात् रुद्रस्यातिपूजनात् रुद्रेण अद्भुतो वरो दत्तः ॥ ५ ॥

गो० टी०—पूर्वमिति । लोलायाः पुत्रो लोलापुत्रः ॥ ३–६ ॥

६ ] ति० टी०—विनिष्कृष्य तच्छक्तिमाकृष्य ॥ ६ ॥

रा० टी०—वराकारमाह—शूलमिति । महात्मा रुद्रः महावीर्यं शूलं शूलाद्विनिष्कृष्य ददौ एतदुवाच च ॥ ६ ॥

गो० टी०—शूलमिति । शूलाच्छूलं विनिष्कृष्येति । स्वशूलाच्छक्तिमाकृष्य सृष्ट्वेत्यर्थः ॥ ७ ॥ ८ ॥

७ ] ति० टी०—यतस्त्वया मत्प्रसादकरो धर्मः कृतः अत आयुधं ददामि ॥ ७ ॥

रा० टी०—तदाकारमाह—त्वयेति । मत्प्रसादकरः अतुलो धर्मः यतस्त्वया कृत इति शेषः अतः परमया प्रीत्या युक्तोऽहं उत्तममायुधं ददामि ॥ ७ ॥

१ बक इति गो. पा । २ धर्मे इति गो. पाठः । ३ पद्यमिदमधिकं गो. पु. । ४ कृत इति गो. पाठः ।

यावत्सुरैश्च विप्रैश्च न विरुध्येर्महासुर । तावच्छूलं तवेदं स्यादन्यथा नाशमेष्यति ॥ ८ ॥
यश्च मामभियुञ्जीत युद्धाय विगतज्वरः । तं शूलो भस्मसात्कृत्वा पुनरेष्यति ते करम् ॥ ९ ॥
एवं रुद्राद्वरं लब्ध्वा भूय एव महासुरः । प्रणिपत्य महादेवं वाक्यमेतदुवाच ह ॥ १० ॥
भगवन्मम वंशस्य शूलमेतदनुत्तमम् । भवेत्तु सततं देव सुराणामीश्वरो ह्यसि ॥ ११ ॥
तं ब्रुवाणं मधुं देवः सर्वभूतपतिः शिवः । प्रत्युवाच महादेवो नैतदेवं भविष्यति ॥ १२ ॥
मा भूत्ते विफला वाणी मत्प्रसादकृता शुभा । भवतः पुत्रमेकं तु शूलमेतद्भविष्यति ॥ १३ ॥
यावत्करस्थः शूलोऽयं भविष्यति सुतस्य ते । अवध्यः सर्वभूतानां शूलहस्तो भविष्यति ॥ १४ ॥
एवं मधुर्वरं लब्ध्वा देवात्सुमहदद्भुतम् । भवनं सोऽसुरश्रेष्ठः कारयामास सुप्रभम् ॥ १५ ॥
तस्य पत्नी महाभागा प्रिया कुम्भीनसीति या । विश्वावसोरपत्यं सार्प्यनलायां महाप्रभा ॥ १६ ॥
तस्याः पुत्रो महावीर्यो लवणो नाम दारुणः । बाल्यात्प्रभृति दुष्टात्मा पापान्येव समाचरत् ॥ १७ ॥
तं पुत्रं दुर्विनीतं तु दृष्ट्वा क्रोधसमन्वितः । मधुः स शोकमापेदे न चैनं किंचिदब्रवीत् ॥ १८ ॥
स विहाय इमं लोकं प्रविष्टो वरुणालयम् । शूलं निवेश्य लवणे वरं तस्मै न्यवेदयत् ॥ १९ ॥
स प्रभावेण शूलस्य दौरात्म्येनात्मनस्तथा । संतापयति लोकांस्त्रीन्विशेषेण च तापसान् ॥ २० ॥

८-१२ ] ति० टी०-यावन्न विरुध्येर्विरोधं न कुर्याः । अन्यथा नाशमदर्शनम् ॥ ८-१२ ॥

रा० टी०-शूलस्थितेरवधिमाह—यावदिति । यावत् सुरैर्न विरुध्येः तावत्कालमेव इदं शूलं तव स्यात् अन्यथा तादृग्विरोधे नाशमेष्यति ॥ ८ ॥

रा० टी०-य इति । युद्धाय यस्त्वामभियुञ्जात तं जनं शूलो भस्मसात्कृत्वा ते करं पुनरेष्यति ॥ ९ ॥

रा० टी०-एवमिति । महासुरः एतद्वाक्यमुवाच ॥ १० ॥

रा० टी०-तदाकारमाह—भगवन्निति । एतत् शूलं मम वंशस्य भवेत् न ममैवेत्यर्थः ॥ ११ ॥

रा० टी०-तमिति । शिवः मधुं प्रत्युवाच तदाकारमाह—यद्यपि एतत्तवोक्तमेवं मया दत्तं न भविष्यति तथापि मत्प्रसादकृता ते वाणी विफला माभूत् अतः भवत एकं पुत्रमेतच्छूलं भविष्यति प्राप्स्यति श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

गो० टी०-यावदिति । अनाशमदर्शनम् ॥ ९-१३ ॥

१३-१५ ] ति० टी०-मत्प्रसादकृता मत्प्रसादजसंतोषोक्ता । भविष्यति प्राप्स्यति ॥ १३-१५ ॥

गो० टी०-मेति । मत्प्रसादकृता मत्प्रसादजसंतोषजनितेत्यर्थः ॥ १४-१६ ॥

रा० टी०-तत्फलमाह—यावदिति । अयं शूलः यावत्ते सुतस्य करस्थो भविष्यति तावत्कालं शूलहस्तस्तव सुतः सर्वभूतानामवध्यो भविष्यति ॥ १४ ॥

रा० टी०-एवमिति । मधुः एवं वरं लब्ध्वा सुप्रभं भवनं कारयामास ॥ १५ ॥

१६-१८ ] ति० टी०-कुम्भीनसी माल्यवत्सुता, यानलायाः सुता रावणस्वसा पूर्वं मधुना हृतेत्युक्ता । तदेवाह—अनलायामिति । कुम्भीनसीपितरमाह—विश्वावसोरिति १६-१८

रा० टी०-तस्येति । तस्य मधोः प्रिया पत्नी या कुंभीनसी सा अनलायां जाता विश्वावसोरपत्यम् ॥ १६ ॥

रा० टी०-तस्या इति । लवणो नाम दारुणः तस्याः कुंभीनस्याः पुत्रः बाल्यात्प्रभृति पापान्येव समाचरत् ॥ १७ ॥

रा० टी०-तमिति । मधुः पुत्रं दुर्विनीतं दृष्ट्वा शोकमापेदे एनं पुत्रं किञ्चिन्नाब्रवीत् ॥ १८ ॥

गो० टी०-तस्येति । कुम्भीनसी माल्यवत्पुत्र्याः अनलायाः सुता रावणस्वसा पूर्वं मधुना हृतेति विभीषणेन रावणं प्रत्युक्ता । हिः प्रसिद्धौ ॥ १७-१९ ॥

१९-२० ] ति० टी०-वरं यावच्छूलं तव हस्ते तावदवध्यत्वं तवेत्येवंरूपं वरवृत्तान्तं न्यवेदयत् ॥ १९ ॥ २० ॥

रा० टी०-स इति । स मधुः लवणे शूलं निवेश्य तस्मै लवणाय वरं शंभुनोक्तवचनं न्यवेदयत् अकथयत् वरुणालयं प्रविष्टोऽभवच्चेति शेषः ॥ १९ ॥

रा० टी०-स इति । स लवणः त्रीन् लोकान् विशेषेण तापसांश्च सन्तापयति ॥ २० ॥

गो० टी०-स इति । वरं न्यवेदयत् यावच्छूलं तव हस्ते तावदवध्यत्वं तवेत्येवंरूपं वरवृत्तान्तम् ॥ २०-२५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकषष्टितमः सर्गः ॥ ६१ ॥

१ त्वामिति गो. रा. पाठः । २ तेजा इति गो. पाठः । ३ भजिष्यते इति गो. पाठः । ४ ह्यनलायामिति गो. पाठः । ५ लवणः इति गो.रा.पा. ।

एवंप्रभावो लवणः शूलं चैव तथाविधम् । श्रुत्वा प्रमाणं काकुत्स्थ त्वं हि नः परमा गतिः॥ २१ ॥
बहवः पार्थिवा राम भयार्तैर्ऋषिभिः पुरा । अभयं याचिता वीर त्रातारं न च विद्महे ॥ २२ ॥
ते वयं रावणं श्रुत्वा हतं सबलवाहनम् । त्रातारं विद्महे तात नान्यं भुवि नराधिपम् ॥
तत्परित्रातुमिच्छामो लवणाद्भयपीडितान् । ॥ २३ ॥
इति राम निवेदितं तु ते भयजं कारणमुत्थितं च यत् ।
विनिवारयितुं भवान्क्षमः कुरु तं काममहीनविक्रम । ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकषष्टितमः सर्गः ॥ ६१ ॥

## द्विषष्टितमः सर्गः ।

रामः पुनस्तत्स्थानाहारकर्माणि तापसमुखान्निशम्य न भेतव्यमचिरादेव तं घातयिष्यामीति प्रतिश्रुत्य भवतां को हन्ता लवणमिति भ्रातॄनपृच्छत् ततः संनद्धं भरतं निरुध्य स्वयं निष्कान्तं शत्रुघ्नं प्रशस्य साधु लवणं हत्वा तत्रैव त्वं राज्यं प्रशाधीति सीतापतिस्तमभाषत।

तथोक्ते तानृषीन्रामः प्रत्युवाच कृताञ्जलिः । किमाहारः किमाचारो लवणः क्व च वर्तते ॥ १ ॥
राघवस्य वचः श्रुत्वा ऋषयः सर्व एव ते । ततो निवेदयामासुर्लवणो ववृधे यथा ॥ २ ॥
आहारः सर्वसत्त्वानि विशेषेण च तापसाः । आचारो रौद्रता नित्यं वासो मधुवने तथा ॥ ३ ॥
हत्वा बहुसहस्राणि सिंहव्याघ्रमृगाण्डजान् । मानुषांश्चैव कुरुते नित्यमाहारमाह्निकम् ॥ ४ ॥
ततोऽन्तराणि सत्त्वानि खादते स महाबलः । संहारे समनुप्राप्ते व्यादितास्य इवान्तकः ॥ ५ ॥
तच्छ्रुत्वा राघवो वाक्यमुवाच स महामुनीन् । घातयिष्यामि तद्रक्षो व्यपगच्छतु वो भयम् ॥ ६ ॥
प्रतिज्ञाय तदा तेषां मुनीनामुग्रतेजसाम् । स भ्रातॄन्सहितान्सर्वानुवाच रघुनन्दनः ॥ ७ ॥

---

२१–२३ ] ति० टी०–त्वं प्रमाणम् । यथोचितकरणे इति शेषः ॥ २१–२३ ॥

रा० टी०–उपसंहरन्नाह–**एवमिति** । लवण एवंप्रभावः तथाविधं शूलं च श्रुत्वा प्रमाणं शास्त्रप्रामाण्यं यथा भवेत्तथा त्वं नः परमा गतिर्भवेति शेषः पापिनामेव वृद्धौ शास्त्रप्रामाण्यं निवर्तेतेति तात्पर्यम् ॥ २१ ॥

रा० टी०–**बहव इति** । भयार्तैर्ऋषिभिः बहवः पार्थिवाः पुरा अभयं याचिताः त्रातारं तु न विद्महे ॥ २२ ॥

रा० टी०–ननु मां त्रातृत्वेन कथं वेत्सीत्यत आह–**ते इति** । रावणं हतं श्रुत्वा त्वां त्रातारं विद्महे अन्यं त्रातारं न विद्महे तत्तस्माद्धेतोः रावणाद्भयपीडितान् ऋषीन् परित्रातुं त्वया परित्राणं कारयितुमिच्छामः सार्द्धश्लोक एकान्वयी २३

२४ ] ति० टी०–भयजं भयजनकम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

रा० टी०–**इतीति** । भयजं भयकारकं यत्कारणमुत्थितं तत्कारणं ते तुभ्यं निवेदितमतः विनिवारयितुं भवान् एव क्षमः अतः तमस्मदीयं काममीप्सितं कुरु ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकषष्टितमः सर्गः ॥ ६१ ॥

१ ] ति० टी०–अथ शत्रुघ्नस्य तद्वधार्थं प्रेषणम्—**तथोक्ते इति** । परित्राणमिच्छाम इत्युक्ते ॥ १ ॥

रा० टी०–ऋषिप्रार्थनानन्तरकालिकं वृत्तमाह–**तथेत्यादिभिः** । लवणः किमाहारः क्व वर्तते च इति रामः ऋषीन् प्रत्युवाच ॥ १ ॥

गो० टी०–अथ शत्रुघ्नस्य लवणासुरवधार्थं प्रेषणं–**तथेत्यादि** ॥ १ ॥

२–४ ] ति० टी०–यथा ववृधे यादृगाहारादिनावर्धत तन्निवेदयामासुः ॥ २–४ ॥

रा० टी०–**राघवस्येति** । ऋषयः लवणो यथा ववृधे तथा निवेदयामासुः ॥ २ ॥

रा० टी०–तदाकारमाह–**आहार इति** । सर्वसत्त्वानि प्राणिनः आहारः तापसास्तु विशेषेणाहारः नित्यं रौद्रता तु आचारः मधुवने वासः लवणस्येति शेषः ॥ ३ ॥

रा० टी०–आहारमेव विशिष्याह–**हत्वेति द्वाभ्याम्** । बहुसहस्राणि सिंहादीन् हत्वा आह्निकमाहारं कुरुते ॥ ४ ॥

गो० टी०–**राघवस्येति** । यथा ववृधे यादृगाहारादिना वर्धते स्म तथा निवेदयामासुः ॥ २–७ ॥

५–७ ] ति० टी०–ततोऽन्तराणि । अन्यान्यपीत्यर्थः ५–७

रा० टी०–**तत इति** । संहारे समनुप्राप्ते अन्तक इव

---

१ दिपानिति गो. । २ तथेति गो. पाठः ।

को हन्ता लवणं वीरः कस्यांशः स विधीयताम् । भरतस्य महाबाहोः शत्रुघ्नस्य च धीमतः ॥ ८ ॥
राघवेणैवमुक्तस्तु भरतो वाक्यमब्रवीत् । अहमेनं वधिष्यामि ममांशः स विधीयताम् ॥ ९ ॥
भरतस्य वचः श्रुत्वा धैर्यशौर्यसमन्वितम् । लक्ष्मणावरजस्तस्थौ हित्वा सौवर्णमासनम् ॥ १० ॥
शत्रुघ्नस्त्वब्रवीद्वाक्यं प्रणिपत्य नराधिपम् । कृतकर्मा महाबाहुर्मध्यमो रघुनन्दनं ॥ ११ ॥
आर्येण हि पुरा शून्या त्वयोध्या परिपालिता । संतापं हृदये कृत्वा आर्यस्यागमनं प्रति ॥ १२ ॥
दुःखानि च बहूनीह अनुभूतानि पार्थिव । शयानो दुःखशय्यासु नन्दिग्रामे महायशाः ॥ १३ ॥
फलमूलाशनो भूत्वा जटी चीरधरस्तथा । अनुभूयेदृशं दुःखमेष राघवनन्दनः ॥ १४ ॥
प्रेष्ये मयि स्थिते राजन्न भूयः क्लेशमाप्नुयात् । तथा ब्रुवति शत्रुघ्ने राघवः पुनरब्रवीत् ॥ १५ ॥
एवं भवतु काकुत्स्थ क्रियतां मम शासनम् । राज्ये त्वामभिषेक्ष्यामि मधोस्तु नगरे शुभे ॥ १६ ॥
निवेशय महाबाहो भरतं यद्यवेक्षसे । शूरस्त्वं कृतविद्यश्च समर्थश्च निवेशने ॥ १७ ॥

---

ध्यादितास्यो लवणः ततोऽन्तराणि भिन्नानि वराहादीन्यपि सत्वानि खादते खादति रात्राविति शेषः ॥ ५ ॥

रा० टी०—तदिति । तद्रक्षोहं घातयिष्यामि अतो भयं व्यपगच्छतु इति वचनं राघवो मुनीन् उवाच ॥ ६ ॥

रा० टी०—प्रतिज्ञायेति । स रामः मुनीनामग्रे प्रतिज्ञाय सहितान् भ्रातॄन् उवाच ॥ ७ ॥

८–९ ] ति० टी०—कस्यांश इति पृष्ट्वा स्वयमेव निश्चिनोति—भरतस्येति । लक्ष्मणेन मया च रावणवधवल्लवणवधो भरतशत्रुघ्नाभ्यां कार्य इति भावः ॥ ८ ॥ ९ ॥

रा० टी०—तदाकारमाह—क इति । लवणं को वीरो हन्ता अतः स हननयोग्यो लवणः भरतस्य शत्रुघ्नस्य वा कस्यांशः हननभागो विधीयताम् ॥ ८ ॥

रा० टी०—राघवेणेति । एनं लवणमहं वधिष्यामि अतः सोऽसुरः ममांशः हननदायादो विधीयताम् इति वाक्यं भरतोऽब्रवीत् ॥ ९ ॥

गो० टी०—क इति । कस्यांश इति पृष्ट्वा स्वयमेव निश्चिनोति । भरतस्येति ॥ ८ ॥ ९ ॥

१०–११ ] ति० टी०—आसनं हित्वा । आसनादुत्थायेत्यर्थः ॥ १० ॥ ११ ॥

रा० टी०—भरतस्येति । लक्ष्मणावरजश्शत्रुघ्नः आसनं हित्वा तस्थौ ॥ १० ॥

रा० टी०—शत्रुघ्न इति । शत्रुघ्नोऽब्रवीत् ॥ ११ ॥

गो० टी०—भरतस्येति । आसनं हित्वा आसनादुत्थायेत्यर्थः ॥ १०–१९ ॥

१२–१४ ] ति० टी०—पूर्वं त्वद्वियोगदुःखितस्य भरतस्य पुनरपि क्लेशाय प्रेषणमयुक्तमित्याशयेनाह—आर्येणेति । आर्येण त्वया शून्यायोध्या भरतेन पालिता । आर्यस्यागमनं प्रति तावत्पर्यन्तम् ॥ १२–१४ ॥

रा० टी०—तदाकारमाह—आर्येणेत्यादिभिः । आर्यस्य तवागमनं प्रति आर्येण भरतेन पुरा त्वया शून्या अयोध्या परिपालिता अत एव बहूनि दुःखान्यनुभूतानि सार्द्धश्लोक एकान्वयी ॥ १२ ॥

रा० टी०—दुःखाकारमाह—[illegible]शान इति । फलमूलाशनादिर्भूत्वा दुःखशय्यासु शय[illegible]स्सन् नन्दिग्रामे महायशा भरतोऽतिष्ठदिति शेषः ॥ १३ ॥

रा० टी०—अनुभूयेति । एष [illegible] ईदृशं दुःखमनुभूय मयि प्रेष्ये स्थिते सति प्रेषणे इति शेषः भू[illegible] क्लेशमवाप्नुयात् अहमेव प्रेषणीय इति तात्पर्यम् ॥ १४ ॥

१५–१६ ] ति० टी०—प्रेष्ये विशिष्य भरतस्य नियोज्ये ॥ १५ ॥ १६ ॥

रा० टी०—तथेति । राघवो रामः पुनरब्रवीत् एवं भवदुक्तं भवतु अतः मम शासनं क्रियताम् ॥ १५ ॥

रा०टी०—शासनकरणे फलमाह—राज्य इति । मधोः राज्ये त्वामभिषेक्ष्यामि अतो भरतं यद्यवेक्षसे श्रान्तत्वेनेति शेषः तदा नगरे अयोध्यायामेव निवेशय संस्थापय प्रजाः संस्थापयेत्यर्थो वा ॥ १६ ॥

गो० टी०—राज्य इति । निवेशय अत्रैव नगर इति शेषः । अथवा तत्रैव तिष्ठेति भावः । अवेक्षसे अक्लेशनीयत्वेनेति शेषः ॥ १६ ॥

१७ ] ति० टी०—यद्यवेक्षसे । अक्लेशनीयत्वेनेति शेषः । तदा भरतं निवेशय । अत्रैव स्थापयेत्यर्थः । निवेशने नूतननगरनिवेशने त्वं समर्थः ॥ १७ ॥

रा० टी०—शूर इति । शूरः निवेशने नगरनिर्मापणे समर्थश्च त्वं यमुनाजुष्टं नगरं जनपदान् देशान् शुभान् मङ्गलयुक्तांश्च कारयेति शेषः ॥ १७ ॥

गो० टी०—शूर इति । निवेशने नूतनगृहनिर्माण इत्यर्थः ॥ १७ ॥

---

-१ नन्दन इति गो. पाठः । २ अवसत्पुरेति गो. पाठः ।

नगरं यमुनाजुष्टं तथा जनपदाञ्शुभान्। यो हि वंशं समुत्पाद्य पार्थिवस्य निवेशने ॥ १८ ॥
न विधत्ते नृपं तत्र नरकं स हि गच्छति। स त्वं हत्वा मधुसुतं लवणं पापनिश्चयम् ॥ १९ ॥
राज्यं प्रशाधि धर्मेण वाक्यं मे यद्यवेक्षसे। उत्तरं च न वक्तव्यं शूर वाक्यान्तरे मम ॥ २० ॥
बालेन पूर्वजस्याज्ञा कर्तव्या नात्र संशयः। अभिषेकं च काकुत्स्थ प्रतीच्छस्व ममोद्यतम् ॥
वसिष्ठप्रमुखैर्विप्रैर्विधिमन्त्रपुरस्कृतम् । ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

## त्रिषष्टितमः सर्गः ।

वसिष्ठादिभिः सहाभिषेक्तुं प्रवृत्तोऽग्रजः ज्येष्ठेषु सत्स्वपि कथं ममाभिषेक इति लज्जमानमतिपूज्यत्वात्प्रत्युत्तराक्षमं लक्ष्मणानुजं लवणराज्येऽभिषिच्याङ्कमारोप्यामोघशरं प्रदायायं सशूलश्चेदवध्योऽतः समयं परिपाल्य शूलविनाकृतो हन्तव्य इत्युपादिशत्, तापसाश्च लवणं हतप्रायममन्यन्त ।

एवमुक्तस्तु रामेण परां व्रीडामुपागमत्। शत्रुघ्नो वीर्यसंपन्नो मन्दं मन्दमुवाच ह ॥ १ ॥
अधर्मं विद्म काकुत्स्थ अस्मिन्नर्थे नरेश्वर। कथं तिष्ठत्सु ज्येष्ठेषु कनीयानभिषिच्यते ॥ २ ॥

---

१८ ] ति० टी०–मधोर्नगरे त्वामभिषेक्ष्यामीति यदुक्तं तत्र हेतुमाह—यो हीति। निवेशने नगरे ॥ १८ ॥

रा० टी०–तत्राभिषेके हेतुमाह–य इति । यः पार्थिवस्य वंशं समुत्पाद्य पार्थिवस्य निवेशने नृपं न विधत्ते स उत्पादयिता नरकं गच्छति ॥ १८ ॥

गो० टी०–मधोस्तु नगरे त्वामभिषेक्ष्यामीत्यत्र हेतुमाह–यो हीति। नृपं तत्रेति। उत्पादितवंशनृपराज्य इत्यर्थः॥१८॥१९

१९ ] ति० टी०–नृपं तत्रोत्पादितवंशनृपराज्ये ॥ १९॥

रा० टी०–स इति। यदि मे वाक्यमवेक्षसे विचारयसि तर्हि लवणं हत्वा राज्यं धर्मेण प्रशाधि ॥ १९ ॥

२०-२१ ] ति० टी०–उत्तरं न वक्तव्यम्। लवणं हत्वा त्वत्समीप एव मया स्थेयमित्यादि न वाच्यमित्यर्थः २०॥२१

२२ ] ति० टी०–विधिमन्त्रपुरस्कृतं विधिना मन्त्रेण पुरस्कृतम् ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

रा० टी०–वियोगभीरुत्वेन राज्येच्छारहितं विज्ञाय आह–उत्तरमिति। बालेन कनिष्ठेन पूर्वजस्याज्ञा कर्तव्या अतो मम वाक्यान्तरे राज्यकरणाज्ञापने उत्तरं न करिष्यामीति प्रतिवचनं न कर्तव्यम् ॥ २० ॥

गो० टी०–उत्तरं च न वक्तव्यमिति । त्वत्समीप एव मया वस्तव्यमित्यादिकमित्यर्थः ॥ २० ॥

रा० टी०–अभिषेकमिति। ममोद्यतमाज्ञापितं विप्रैः विधिमन्त्रपुरस्कृतमभिषेकं प्रतीक्षस्व स्वीकुरु ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विषष्टितमः सर्गः ॥ ६२ ॥

गो० टी०–अभिषेकमिति। विधिना मन्त्रेण च पुरस्कृतम् ॥ २१ ॥

इति श्रीगोविन्दराजविरचिते मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विषष्टितमः सर्गः ॥ ६२ ॥

१ ] ति० टी०–अथ रामेण स्वसंनिधावेव मधुराज्ये शत्रुघ्नमभिषिच्य लवणवधोपायोपदेशपूर्वकं तद्वधार्थं दिव्यास्त्रप्रदानम्—एवमिति। परां व्रीडामनुचितराज्याभिषेकोक्तिश्रवणजां लज्जाम्, अत एव मन्दं मन्दमुवाच ॥ १ ॥

रा० टी०–रामाज्ञाश्रवणानन्तरकालिकं शत्रुघ्नवृत्तमाह एवमित्यादिभिः। रामेणैवमुक्तश्शत्रुघ्नः परां व्रीडामुपागमत् मन्दं मन्दमुवाच च ॥ १ ॥

गो०टी०–अथ रामेण स्वसंनिधावेव मधुराज्ये शत्रुघ्नमभिषिच्य लवणवधोपायोपदेशपूर्वकं तद्वधार्थं दिव्यास्त्रप्रदानम्। एवमित्यादि ॥ १ ॥

२ ] ति० टी०–तदेवाह—अधर्ममिति। विद्म वेद्मि। अस्मिन्निरयेतद्विशदयन्नधर्मे हेतुमाह—कथमिति। कनीयानभिषिच्यते। न कथमपीत्यर्थः। अत एवाधर्म इत्यर्थः ॥ २ ॥

रा० टी०–तदाकारमाह–अधर्ममित्यादिभिः। ज्येष्ठेषु तिष्ठत्सु कनीयान् कथमभिषिच्यते नोचितमित्यर्थः अतः अस्मिन् भवदाज्ञापिते अर्थे राज्याभिषेके अधर्मं विद्म वेद्मि २

गो० टी०–अधर्ममिति। विद्म वेद्मीत्यर्थः। अस्मिन्नित्युक्तं विवृणोति–कथमित्यादि। तिष्ठत्सु ज्येष्ठेष्विति गुरुवैषम्यमार्षम्। कथमभिषिच्यते न कथमपि। अधर्म एवेत्यर्थः ॥ २ ॥

---

१ इदमर्धं गो. पुस्त. नास्ति। २ मयेति गो. पाठः।

अवश्यं करणीयं च शासनं पुरुषर्षभ । तव चैव महाभाग शासनं दुरतिक्रमम् ॥ ३ ॥
त्वत्तो मया श्रुतं वीर श्रुतिभ्यश्च मया श्रुतम् । नोत्तरं हि मया वाच्यं मध्यमे प्रतिजानति ॥ ४ ॥
व्याहृतं दुर्वचो घोरं हन्तास्मि लवणं मृधे । तस्यैवं मे दुरुक्तस्य दुर्गतिः पुरुषर्षभ ॥ ५ ॥
उत्तरं नहि वक्तव्यं ज्येष्ठेनाभिहिते पुनः । अधर्मसहितं चैव परलोकविवर्जितम् ॥ ६ ॥
सोऽहं द्वितीयं काकुत्स्थ न वक्ष्यामीति[1] चोत्तरम् । मा द्वितीयेन दण्डो वै निपतेन्मयि मानद ॥ ७ ॥
कामकारो ह्यहं राजंस्तवास्यैं[2] पुरुषर्षभ । अधर्मं जहि काकुत्स्थ मत्कृते रघुनन्दन ॥ ८ ॥

३ ] ति० टी०—तव शासनं चावश्यं करणीयम्, यतस्तव शासनं वेदशासनवद्दुरतिक्रमम‌तिक्रमितुमशक्यम् । एवं चोभयतः पाशा रज्जुरियं मे जातेत्यर्थः ॥ ३ ॥

रा० टी०—ननु अधर्मं त्वं माङ्गीकुर्वित्यत आह—अवश्यमिति । तव शासनं दुरतिक्रममस्ति अतः तव शासनमवश्यं करणीयमेतेन तवाज्ञापिताकरणेपि महानधर्मो भविष्यतीति सूचितम् ॥ ३ ॥

गो० टी०—अवश्यमिति । तव शासनं चावश्यं करणीयमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—ज्येष्ठे विद्यमाने कनिष्ठाभिषेकोऽधर्मस्तथा ज्येष्ठवाक्याकरणं चाधर्म इति त्वया कथमवगतं तत्राह—त्वत्त इति । सद्गुरोस्त्वत्तः, श्रुतिभ्यश्च ममैवं श्रवणमिति भावः । एवमधर्मसंकटप्राप्तिरपि मे स्वदोषमूलेत्याह—नोत्तरं हीति । मध्यमे भ्रातरि भरते घोरं लवणं हन्तास्मीति प्रतिजानति सति, हि यस्मान्मया ज्येष्ठवचनमुल्लङ्घ्योत्तरं न वाच्यं न वक्तुं योग्यम् । तद्वचस्तिरस्काररूपत्वात् ॥ ४ ॥

रा० टी०—ननु ज्येष्ठसत्त्वे कनिष्ठाभिषेको नोचित इति ज्येष्ठाज्ञापितं न त्याज्यमिति च कथं त्वया ज्ञातमित्यत आह—त्वत्त इति । त्वत्तः श्रुतिभ्यश्च श्रुतमत एव मध्यमे भरते प्रतिजानति प्रतिज्ञां कुर्वति सत्यपि उत्तरं मया न प्रतिवाच्यम् एतेन अविचारादुत्तरमुक्तमिति सूचितम् ॥ ४ ॥

गो० टी०—त्वत्त इति । मध्यमे भ्रातरि भरत इत्यर्थः । घोरं लवणं हन्तास्मीति प्रतिजानति सति । हि यस्मात् । मया उत्तरं ज्येष्ठवच उल्लङ्घ्य न वाच्यं वक्तुं न योग्यम् ॥ ४ ॥

५ ] ति० टी०—तथापि मृधे युद्धे घोरं लवणं हन्तास्मीत्येतद्दुर्वचो व्याहृतं तस्यास्य दुरुक्तस्य फलभूतेयं दुर्गतिर्ज्येष्ठातिक्रमहेतुना निरयप्रापकाभिषेकप्राप्तिस्तत्प्रापकत्वद्वाक्यातिक्रमप्राप्तिर्वा जातेति शेषः ॥ ५ ॥

रा० टी०—व्याहृतमिति । अहं लवणं हन्तास्मि इति यद्दुर्वचो मया व्याहृतं तस्यैव दुरुक्तस्य फलमिति शेषः दुर्गतिः ज्येष्ठातिक्रमहेतुकनिरयप्राप्तिकारणीभूताभिषेकप्राप्तिर्मे जाता ५

गो० टी०—व्याहृतमिति । तथाप्यहं मृधे युद्धे लवणं हन्तास्मीति दुर्वचो व्याहृतं तस्यास्य मे दुरुक्तस्येयं दुर्गतिः दुष्टकार्यस्य प्राप्तिः । तव ज्येष्ठातिक्रमेण आत्माभिषेचनम्॥५॥

६ ] ति० टी०—अतिपीडावशादुक्तमेव पुनर्वदति—उत्तरं हीति । ज्येष्ठेन भरतेन त्वया वाभिहिते उत्तरं न वक्तव्यं वक्तुमनर्हमेव । किं च तन्मूलकं त्वयाधर्मसहितम्, अत एव परलोकविवर्जितमभिषेकशासनं कृतम् । तच्च दुरतिक्रममिति शेषः ॥ ६ ॥

रा० टी०—उत्तरमिति । ज्येष्ठेनाभिहिते सति यदुत्तरं तत् अधर्मसहितमधर्मस्य मूलमत एव परलोकविवर्जितम् अत एव न कर्त्तव्यम् अत एव सः भरतवचनातिक्रमणस्य कर्त्ताप्यहं द्वितीयं भवदुक्तेरुत्तरं कर्त्तुं न शक्ष्यामि अत एव द्वितीयेन त्वद्रूपज्येष्ठवचनस्योत्तरेण मयि दण्डः अभिषेकप्राप्तिरिवापराधर्मप्राप्तिर्मा निपतेत् श्लोकद्वयमेकान्वयि ॥ ६-७ ॥

गो० टी०—उक्तमर्थं व्यावर्तयति—उत्तरं हीत्यादि । ज्येष्ठेन भरतेनाभिहिते सति ततः परमुत्तरं न वक्तुमुचितमेव । किन्चाधर्मसहितमपि । अत एव परलोकविवर्जितमपि । तव शासनं च दुरतिक्रममिति शेषः ॥ ६ ॥

७ ] ति० टी०—यदेवमतः—सोऽहं भरतोक्तेः प्रथमं कृतोत्तरवचनः । हे काकुत्स्थ ! तव ज्येष्ठस्योक्तेरभिषेकं प्रतीच्छेत्यस्या द्वितीयमुत्तरमिति हेतोर्न वक्ष्यामि । कुतस्तत्राह—मा द्वितीयेनेति । यथा भरते जिगमिषत्यहं गमिष्यामीत्युत्तरेण प्रथमेन राज्याभिषेकापत्तिरूपो दण्डः पतितः, तस्येदानीं त्वयाभिषेकं प्रतीच्छेत्युक्ते तदनङ्गीकारोत्तरेण द्वितीयेन मम दण्डो मा निपतेदिति ॥ ७ ॥

गो० टी०—फलितमाह—सोहमित्यादि । भरतोक्तेः प्रथमं कृतोत्तरवचनः सोहं हे काकुत्स्थ ! तव ज्येष्ठस्योत्तरं द्वितीयं न वक्ष्यामि । तत्र हेतुमाह—मेति । द्वितीयेन ज्येष्ठप्रत्युत्तरेण दण्डो मयि मा निपतेत् । भरते जिगमिषत्यहं गमिष्यामीत्युत्तरेण प्रथमेन राज्याभिषेकापत्तिरूपो दण्डः पतितः । त्वया अभिषेकं प्रतीच्छेत्युक्ते तदनङ्गीकारोत्तरेण द्वितीयेन मयि दण्डो मा निपतेदिति भावः ॥ ७ ॥

८ ] ति० टी०—यदेवमतो हे राजन् ! अहमस्य तव कामकारोऽभीष्टनियोगकर्तास्मि । यतः, अतो हे रघुनन्दन ! मत्कृते मदनुष्ठिते राज्याभिषेकस्वीकारेऽधर्मं जहि, ममाधर्मसंबन्धो यथा न भवेत्तथा कुरु । इहामुत्र सर्वलोकस्य मय्यन्याय्यकारित्वबुद्धिं परिहर ॥ ८ ॥

१ तवेति गो. पाठः । २ अस्मीति गो. पा. ।

एवमुक्ते तु शूरेण शत्रुघ्नेन महात्मना । उवाच रामः संहृष्टो भरतं लक्ष्मणं तथा ॥ ९ ॥
संभारानभिषेकस्य आनयध्वं समाहिताः । अद्यैव पुरुषव्याघ्रमभिषेक्ष्यामि राघवम् ॥ १० ॥
पुरोधसं च काकुत्स्थ नैगमानृत्विजस्तथा । मन्त्रिणश्चैव तान्सर्वानानयध्वं ममाज्ञया ॥ ११ ॥
राज्ञः शासनमाज्ञाय तथाकुर्वन्महारथाः । अभिषेकसमारम्भं पुरस्कृत्य पुरोधसम् ॥ १२ ॥
प्रविष्टा राजभवनं राजानो ब्राह्मणास्तथा । ततोऽभिषेको ववृधे शत्रुघ्नस्य महात्मनः ॥ १३ ॥
संप्रहर्षकरः श्रीमान्राघवस्य पुरस्य च । अभिषिक्तस्तु काकुत्स्थो बभौ चादित्यसंनिभः॥१४॥
अभिषिक्तः पुरा स्कन्दः सेन्द्रैरिव दिवौकसैः । अभिषिक्ते तु शत्रुघ्ने रामेणाक्लिष्टकर्मणा ॥ १५ ॥
पौराः प्रमुदिताश्चासन्ब्राह्मणाश्च बहुश्रुताः । कौसल्या च सुमित्रा च मङ्गलं केकयी तथा ॥ १६ ॥
चक्रुस्ता राजभवने याश्चान्या राजयोषितः । ऋषयश्च महात्मानो यमुनातीरवासिनः ॥ १७ ॥
हतं लवणमाशंसुः शत्रुघ्नस्याभिषेचनात् । ततोऽभिषिक्तं शत्रुघ्नमङ्कमारोप्य राघवः ॥
उवाच मधुरां वाणीं तेजस्तस्याभिपूरयन् । ॥ १८ ॥
अयं शरस्त्वमोघस्ते दिव्यः परपुरंजयः । अनेन लवणं सौम्य हन्तासि रघुनन्दन ॥ १९ ॥
सृष्टः शरोऽयं काकुत्स्थ यदा शेते महार्णवे । स्वयंभूरजितो दिव्यो यं नापश्यन्सुरासुराः ॥ २० ॥

---

रा० टी०–**कामकार इति** । यतोहं तव कामकारः इच्छानुकूलवर्त्ती अतो मत्कृते मया निष्पादिते अयुक्तेप्यभिषेके अधर्मं तद्बुद्धिं जहि त्यज एतेन रामोऽवटितघटनापटीयानिति शत्रुघ्ननिश्चयस्सूचितः ॥ ८ ॥

गो० टी०–फलितमाह–**कामकार इति** । अहं तव कामकारोस्मि अभीष्टनियोगकर्तास्मि । मत्कृते मदनुष्ठितराज्याभिषेकस्वीकारे । अधर्मं ज्येष्ठातिक्रमेण राज्यप्राप्तिनिमित्तम् । काकुत्स्थेत्यत्रापि प्राधान्याल्लोकस्य अधर्मम् अधर्मबुद्धिम् जहि परिहर ॥ ८ ॥

९ ] ति० टी०–एवमुक्ते स्वातन्त्र्यं विहायाभिषेकाङ्गीकारवाक्ये उक्ते ॥ ९ ॥

रा० टी०–**एवमिति** । राम उवाच ॥ ९ ॥

गो० टी०–**एवमिति** । संहृष्ट इति । कृताभिषेकनियोगत्वादिति भावः । अभिषेकस्य संभारान् अभिषेकोपकरणानि लक्ष्मणं भरतं तथेति । प्राधान्यात् सुमन्त्रादीनपीत्यर्थः । अन्यथाऽऽनयध्वमिति बहुवचनं विरुध्येत ॥ ९ ॥ १७ ॥

१०–११ ] ति० टी०–आनयध्वमिति बहुवचनं सुमन्त्राद्यभिप्रायेण ॥ १० ॥ ११ ॥

रा० टी०–तदाकारमाह–**सम्भारानित्यादिभिः** । पुरुषव्याघ्रं शत्रुघ्नमद्यैवाभिषेक्ष्यामि अतः अभिषेकस्य सम्भारान् सामग्रीः आनयध्वम् ॥ १० ॥

रा० टी०–**पुरोधसमिति** । पुरोधःप्रभृतीन् आनयध्वम् ॥ ११ ॥

१२ ] ति० टी०–अभिषेकसमारम्भमभिषेकोपकरणवन्तं पुरोधसं पुरस्कृत्य ॥ १२ ॥

१३–१७ ] ति० टी०–राजानः क्षत्रिया ब्राह्मणाश्च राजभवनं प्रविष्टाः ॥ १३–१७ ॥

रा० टी०–**राज्ञ इति** । महारथाः तथा यथाज्ञप्तमकुर्वन् अत एव अभिषेकस्य समारम्भं सामग्रीं पुरोधसं च पुरस्कृत्य राजानो ब्राह्मणाश्च राजभवनं प्रविष्टाः ततोऽनन्तरं शत्रुघ्नस्याभिषेको ववृधे प्रववृते श्लोकद्वयमेकान्वयि ॥ १२–१३ ॥

रा० टी०–**सम्प्रहर्षेति** । दिवौकसैरभिषिक्तः स्कन्द इव अभिषिक्तः काकुत्स्थश्शत्रुघ्नः आदित्यनिभो बभौ सार्धश्लोक एकान्वयी ॥ १४ ॥

रा० टी०–**अभिषिक्त इति** । शत्रुघ्ने अभिषिक्ते सति पौरप्रभृतयः प्रमुदिता आसन् कौशल्याप्रभृतयस्तु मङ्गलं चक्रुः अर्धचतुष्टयमेकान्वयि ॥ १५ ॥ १६ ॥

रा० टी०–**ऋषय इति** । शत्रुघ्नस्याभिषेचनाद्धेतोः ऋषयः लवणं हतमाशंसुः ॥ १७ ॥

१८ ] ति० टी०–आशंसुराशशंसुर्निश्चितवन्तः । तेजः शत्रुसंहारोचितबलवीर्यम् ॥ १८ ॥

रा० टी०–**तत इति** । तस्य शत्रुघ्नस्य तेजः पूरयन्सन् राघव उवाच ॥ १८ ॥

गो० ति०–**तत इति** । तेजः शत्रुसंहारोचितबलवीर्यम् ॥ १८ ॥

१९ ] ति० टी०–अयं शरः दीयत इति शेषः ॥ १९ ॥

रा० टी०–तदाकारमाह–**अयमित्यादिभिः** । अयममोघश्शरः ते तुभ्यं मया दीयते इति शेषः अनेन शरेणैव लवणं त्वं हन्तासि ॥ १९ ॥

गो० टी०–**अयमिति** । अयं मया दीयमानः ॥ १९ ॥

२० ] ति० टी०–शरस्यामोघत्वहेतुमाह–**सृष्ट इति** ।

---

१ पुरोहितं च काकुत्स्थमिति गो. पा. । २ तथेति गो. पा. । ३ शत्रुघ्न इति गो. पा. । ४ मरुद्गणैरिति गो. पा. ।

अदृश्यः सर्वभूतानां तेनायं हि शरोत्तमः । सृष्टः क्रोधाभिभूतेन विनाशार्थं दुरात्मनोः ॥ २१ ॥
मधुकैटभयोर्वीर विघाते सर्वरक्षसाम् । स्रष्टुकामेन लोकांस्त्रींस्तौ चानेन हतौ युधि ॥ २२ ॥
तौ हत्वा जनभोगार्थे कैटभं तु मधुं तथा । अनेन शरमुख्येन ततो लोकांश्चकार सः ॥ २३ ॥
नायं मया शरः पूर्वं रावणस्य वधार्थिना । मुक्तः शत्रुघ्न भूतानां महान्ह्रासो भवेदिति ॥ २४ ॥
यच्च तस्य महच्छूलं त्र्यम्बकेण महात्मना । दत्तं शत्रुविनाशाय मधोरायुधमुत्तमम् ॥ २५ ॥
तत्संनिक्षिप्य भवने पूज्यमानं पुनः पुनः । दिशः सर्वाः समासाद्य प्राप्नोत्याहारमुत्तमम् ॥ २६ ॥
यदा तु युद्धमाकाङ्क्षन्यदि कश्चित्समाह्वयेत् । तदा शूलं गृहीत्वा तुं भस्म रक्षः करोति हि ॥ २७ ॥
स त्वं पुरुषशार्दूल तमायुधविनाकृतम् । अप्रविष्टं पुरं पूर्वं द्वारि तिष्ठ धृतायुधः ॥ २८ ॥

---

स्वयंभूर्जन्मरहितोऽजितो विष्णुर्यदा प्रलयकाले महार्णवे शेते । यं तदा सुरा असुराश्च नापश्यन् । कैमुतिकन्यायेन सर्वभूतादृश्यः । महार्णवे शयनं च वायुरूपेण । 'प्रजापतिर्वायुर्भूत्वा चरत्' इति श्रुतेरिति कतकः । तेन विष्णुना साक्षादयं शरोत्तमः सृष्टः ॥ २० ॥

रा० टी०–शरस्य तादृशप्रभावे हेतुमाह—सृष्ट इति । स्वयम्भूरजितो यदा महार्णवे शेते अत एव सुरासुराः यं नापश्यन् तेनायं शरस्सृष्टः अत एव अयं शरोत्तमः सार्द्धश्लोक एकान्वयी ॥ २० ॥ २१ ॥

गो० टी०–अमोघत्वे हेतुमाह-सृष्ट इत्यादि ॥२०॥२१॥

२१–२२ ] ति० टी०–तदा किमर्थं तत्सृष्टिस्तत्राह–सृष्ट इति । त्रींल्लोकान्स्रष्टुकामेन भगवता हिरण्यगर्भेण तस्याः सृष्टेर्मधुकैटभयोः सर्वरक्षसां च सकाशाद्विघाते विघ्ने प्राप्ते तयोर्दुरात्मनोर्विनाशार्थं क्रोधाभिभूतेनायं शरः सृष्टः । सत्यसंकल्पत्वाच्चानेन तौ हतौ । 'सृष्टः क्रोधाभिभूतेन प्रभो सर्वदुरात्मनोः' इति पाठेऽभिषिक्तत्वाच्छत्रुघ्नसंबोधनं प्रभो इति ॥ २१ ॥ २२ ॥

२३ ] ति० टी०–उपसंहरति—तौ हत्वेति । जनभोगार्थं जनानां भोग्यभोगस्थानादिसंपादनद्वारा भोगसिद्ध्यर्थं लोकांश्चकार । निष्प्रत्यूहं ससर्जेत्यर्थः । अनेन स्वस्य विष्णुत्वं दृढीकृतम् ॥ २३ ॥

रा० टी०–तत्सर्जने कारणमाह—सृष्ट इति । क्रोधाभिभूतेन विष्णुना मधुकैटभयोस्सर्वरक्षसां तदनुयायिनिखिलराक्षसानां च विघाते विघातार्थं सृष्टः ॥ २२ ॥

रा० टी०–स्रष्टुकामेनेति । स्रष्टुकामेन अनेन विष्णुना तौ मधुकैटभौ हतौ अर्द्धं पृथक् । ताविति । अनेन शरमुख्येन तौ कैटभं मधुं च हत्वा जनभोगार्थे जनानां भोगसिद्ध्यर्थं लोकान् चकार ॥ २३ ॥

गो० टी०–सृष्ट इति । विघाते सृष्टिविघ्ने वर्तमानयोः तत्परयोरित्यर्थः । सृष्टः क्रोधाभिभूतेन विनाशे सर्वरक्षसाम् । मधुकैटभयोर्वीर विघाते सर्वरक्षसामिति च पाठः ॥ २२॥२३॥

२४ ] ति० टी०–नायं मुक्तस्तत्र हेतुः—लोकानां ह्रासो भवेदिति । अल्पलक्ष्ये महास्त्रप्रयोगेण तन्मात्रहनने न शाम्यति, किं तु भूतानि संहरति । अतो भूतदयया न क्षिप्त इति भावः । अनेन रावणादपि लवणस्य महाबलत्वेन दिव्यशरपर्याप्तविषयत्वमुक्तम् ॥ २४ ॥

रा० टी०–नेति । भूतानां महान् ह्रासः विनाशो भवेत् इति विचार्य रावणस्य वधार्थिनापि मया न मुक्तः ॥ २४ ॥

गो० टी०–नायमिति । अनेन शरेण महान् त्रासो भवेदित्यलक्ष्यविषयं महास्त्रप्रयोगे तदीयांश्च सर्वान् लक्षीकृत्य नाशयेदिति भावः । अनेन रावणादपि बलीयान् लवण इति सूचितम् । महान् ह्रासो भवेदिति च पाठः ॥ २४ ॥

२५–२७ ] ति० टी०–अथ निकुम्भिलायां समाप्तयागस्येन्द्रजित इव गृहीतशूलस्य तस्य दुर्जयत्वान्निकुम्भिलानिरोधमिव पुरप्रवेशनिरोधमुपदिशति—यच्च तस्येत्यादि । मधोर्दत्तमित्यन्वयः ॥ २५–२७ ॥

रा० टी०–लवणवृत्तमाह—यदिति । त्र्यम्बकेन यच्छूलं मधोर्दत्तं तत् मुहुर्मुहुः पूज्यमानं यथा भवति तथा भवने संनिक्षिप्य सर्वा दिशः समासाद्य आहारं प्राप्नोति ॥ २५ ॥

गो० टी०–गृहीतशूलस्य तस्य दुर्जयत्वात्तदग्रहणाय पुरप्रवेशनिरोधमुपदिशति–यच्च तस्येत्यादि ॥ मधोर्दत्तमित्यन्वयः ॥ २५ ॥ २६ ॥

रा० टी०–यदेति । यदि यः कश्चित् युद्धमाकांक्षन्सन् यदा समाह्वयेत् तदैव रक्षो लवणः शूलं गृहीत्वा तं भस्म करोति ॥ २६ ॥

गो० टी०–यदेति । युद्धमाकाङ्क्षिति । अनेन सहेति शेषः ॥ २७ ॥

२८ ] ति० टी०–आयुधविनाकृतमायुधरहितम् । युध्यस्वेति शेषः । तत्प्रकारमाह—अप्रविष्टमिति । पुरमप्रविष्टं प्रतीक्षन्पूर्वमेव द्वारि तिष्ठ ॥ २८ ॥

रा० टी०–तद्वधप्रकारमाह—स इति । स तद्वधाकाङ्क्षी त्वं पुरमप्रविष्टमत एव आयुधेन विनाकृतं रहितं लवणमुद्दिश्य द्वारि तत्पुरद्वारं धृतायुधस्सन् तिष्ठ ॥ २७ ॥

---

१ स्थिति गो. पा. । २ वर्तमानयोरिति गो. पा. । ३ त्रास इति गो. पा. । ४ स तमिति गो. पाठः । ५ कश्चिदेनमिति गो. पा. । ६ तमिति गो. पाठः ।

अप्रविष्टं च भवनं युद्धाय पुरुषर्षभ । आह्वयेथा महाबाहो ततो हन्तासि राक्षसम् ॥ २९ ॥
अन्यथा क्रियमाणे तु अवध्यः स भविष्यति । यदि त्वेवं कृतं वीर विनाशमुपयास्यति ॥ ३० ॥
एतत्ते सर्वमाख्यातं शूलस्य च विपर्ययः । श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम् ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

## चतुष्षष्टितमः सर्गः ।

---

तेन सार्धं गजवाजिरथादि महद्बलं दत्वा त्वमेक एव धनुष्पाणिर्गच्छ बलमिदं यमुनातीरे स्थापय ग्रीष्मेऽपयाते वर्षारम्भे तं जहीत्युपादिशच्छत्रुघ्नं रामः स तु कौसल्यावसिष्ठरामादीनभिवन्द्य प्रदक्षिणीकृत्य च प्रस्थितः ।

एवमुक्त्वा च काकुत्स्थं प्रशस्य च पुनः पुनः । पुनरेवापरं वाक्यमुवाच रघुनन्दनः ॥ १ ॥
इमान्यश्वसहस्राणि चत्वारि पुरुषर्षभ । रथानां द्वे सहस्रे च गजानां शतमुत्तमम् ॥ २ ॥
अन्तरापणवीथ्यश्च नानापण्योपशोभिताः । अनुगच्छन्तु काकुत्स्थं तथैव नटनर्तकाः ॥ ३ ॥
हिरण्यस्य सुवर्णस्य नियतं पुरुषर्षभ । आदाय गच्छ शत्रुघ्न पर्याप्तधनवाहनः ॥ ४ ॥

---

गो० टी०—स इति । तमायुधविनाकृतम् आयुधविवर्जितमुपलक्ष्येति शेषः ॥ २८ ॥ २९ ॥

२९ ] ति० टी०—उक्तमेवार्थं द्राढ्याय स्पष्टमाह—अप्रविष्टं चेति ॥ २९ ॥

रा० टी०—अप्रविष्टमिति । भवनमप्रविष्टं राक्षसमेनं लवणमाहूय ततस्तस्मात् त्वं हन्तासि ॥ २८ ॥

३० ] ति० टी०—यदि त्वेवमुक्तरीत्या कृतमनुष्ठितं भवति, तदावश्यं विनाशमुपयास्यति ॥ ३० ॥

रा० टी०—अन्यथेति । यथेवं कृतं त्वया भवेदिति शेषः तदैव स लवणो विनाशमुपयास्यति अन्यथा क्रियमाणे शूलग्रहणसमये गमने सतीति शेषः अवध्यो भविष्यति ॥२९॥

गो० टी०—अन्यथेति । यदि त्वेवं कृत इति । यदा त्वेवमुक्तरीत्या कृतमनुष्ठितं भवति तदा त्वेवं कृते सति सः अवश्यं विनाशमुपयास्यति ॥ ३० ॥

३१ ] ति० टी०—विपर्ययः परिहारः किमनेननु निर्बन्धेन, बाणेन शूलं छित्वा तमपि हनिष्यामि तत्राह—श्रीमत इति । कृत्यं शूलमाहात्म्यं दुरतिक्रममतिक्रमितुमशक्यम् । शक्तावप्यनुचितं चेत्यर्थः । ईश्वरकृतमर्यादापालनार्थमेवास्मदवतारादिति भावः ॥ ३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

रा० टी०—एतदिति । शितिकण्ठस्य कृत्यं दुरतिक्रमं कैश्चिदपि लङ्घयितुमशक्यमतः शूलस्य विपर्ययः परिहारो यथा भवेत् तथा एतत्सर्वं ते आख्यातम् ॥ ३० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिषष्टितमः सर्गः ॥ ६३ ॥

गो० टी०—एतदिति । विपर्ययः परिहार इत्यर्थः । श्रीमत इति । कृत्यमाज्ञापनम् । अत्र कश्चिज्जल्पति—अत्र रामेण दुरतिक्रमत्वं शूलिन उक्तमिति विष्णोरप्यधिको रुद्र इति तन्न । अवतारमर्यादया तादृशोक्तिसंभवादन्यथा ब्रह्माण्डबन्धने दुरतिक्रमो ब्रह्मणो महिमेत्यादि । यद्वा दुरतिक्रमं कृत्यं भगवतैव तस्य बहुमन्तव्यत्वादिति भावः ॥ ३१ ॥

इति श्रीगोविन्दराजविरचिते उत्तरश्रीरामायणव्याख्याने त्रिषष्टितमः सर्गः ॥ ६३ ॥

---

१-२ ] ति० टी०—अथ शत्रुघ्नप्रस्थानम्—एवमिति । प्रशस्य स्तुत्वा ॥ १ ॥ २ ॥

रा० टी०—शत्रुघ्नं प्रति रामस्य वचनान्तरमाह—एवमित्यादिभिः । रघुनन्दनः काकुत्स्थं शत्रुघ्नमपरं वाक्यमुवाच १

रा० टी०—तदाकारमाह—इमानीत्यादिभिः । चत्वार्यश्वसहस्राणि रथानां द्वे सहस्रे च गजानां शतं च नानापण्यैरुपशोभिताः अन्तराः पुरान्तरवर्तिन्यः या आपणवीथ्यः मार्गपणाः नटनर्तकाश्च काकुत्स्थमनुगच्छन्तु श्लोकद्वयमेकान्वयि ॥ २-३ ॥

गो० टी०—अथ शत्रुघ्नप्रस्थापनम्—एवमित्यादि ॥१॥२

३ ] ति० टी०—अन्तरा नगरमध्यवर्तिन्यो या आपणवीथ्यो वीथ्यो वीथिस्था वणिजो नानाविधैः पण्यैः क्रयविक्रयार्हद्रव्यैरुपशोभिता युक्ता अनुगच्छन्तु । 'नानावर्णोपशोभिताः' इति पाठे नानावर्णैर्ब्राह्मणादिभिरुपशोभिता इत्यर्थ इति कतकः । 'पण्य' इति पाठ एव युक्तः । नटा वाक्यार्थाभिनयकर्तारः । नर्तकाः पदार्थाभिनयकर्तारः ॥ ३ ॥

गो० टी०—अन्तरेति । अन्तरा मध्ये निवासस्थले नानापण्यैरुपशोभिताः । नानावर्णोपशोभिता इति पाठे वर्णा ब्राह्मणादयः । आपणवीथ्यस्तत्प्रवर्तकाः ॥ ३ ॥

४ ] ति० टी०—सुवर्णस्योत्कृष्टवर्णस्य । नियतं लब्धमि-

बलं च सुभृतं वीर हृष्टतुष्टमनुद्धतम् । संभाषासंप्रदानेन रञ्जयस्व नरोत्तम ॥ ५ ॥
न ह्यर्थास्तत्र तिष्ठन्ति न दारा न च बान्धवाः । सुप्रीतो भृत्यवर्गस्तु यत्र तिष्ठति राघव ॥ ६ ॥
अतो हृष्टजनाकीर्णां प्रस्थाप्य महतीं चमूम् । एक एव धनुष्पाणिर्गच्छ त्वं मधुनो वनम् ॥ ७ ॥
यथा त्वां न प्रजानाति गच्छन्तं युद्धकाङ्क्षिणम् । लवणस्तु मधोः पुत्रस्तथा गच्छेरशङ्कितम् ॥ ८ ॥
न तस्य मृत्युरन्योऽस्ति कश्चिद्धि पुरुषर्षभ । दर्शनं योऽभिगच्छेत स वध्यो लवणेन हि ॥ ९ ॥
स[2] ग्रीष्मे अपयाते तु वर्षारात्र उपागते । हन्यास्त्वं लवणं सौम्य स हि कालोऽस्य दुर्मतेः ॥ १० ॥
महर्षींस्तु पुरस्कृत्य प्रयान्तु तव सैनिकाः । यथा ग्रीष्मावशेषेण तरेयुर्जाह्नवीजलम् ॥ ११ ॥

---

त्येके, दशलक्षमित्यन्ये । पर्याप्तधनवाहनः जीवनपर्याप्तधनः। युद्धपर्याप्तवाहन इत्यर्थः ॥ ४ ॥

रा० टी०—हिरण्येति । पर्याप्तधनवाहनस्त्वं सुवर्णस्य उत्कृष्टवर्णविशिष्टस्य अत्युत्तमस्येत्यर्थः हिरण्यस्य तन्मयमुद्रायाः नियुतं दशलक्षमादाय गच्छ ॥ ४ ॥

गो० टी०—हिरण्यस्येति । पर्याप्तधनवाहन इत्यत्र धनं पश्वादयः ॥ ४ ॥

५ ] ति० टी०—बलं सुभृतं हृष्टं तुष्टम्, अत एव त्वय्यनुद्धतं यथा भवति तथा कुरु । वेतनादिप्रदानेनेत्यर्थः । किं च संभाषायाः सम्यग्वचनस्य संप्रदानेनोक्तया रञ्जय तत् ॥ ५ ॥

रा०टी०—बलमिति । सुभृतं सुरक्षितमत एव हृष्टतुष्टं प्राप्तानन्दसन्तोषमत एव अनुद्धतं स्वप्रत्युद्धतिरहितं यथा भवति तथा भाषासम्प्रदानेनैनं समीचीनवचनोक्त्या रञ्जयस्व ॥ ५ ॥

गो० टी०—बलं चेति । सुभृतं सुसंपूर्णम् । संभाषायाः सम्यग्वचनस्य संप्रदानेन उक्त्या ॥ ५ ॥

६ ] ति० टी०—किमेवं बलादरेण तत्राह—न ह्यर्था इति । यत्र रिपुसंकटे भृत्यास्तिष्ठन्ति तत्रार्थादयो न तिष्ठन्तीत्येते सर्वे आदर्तव्या इत्यर्थः ॥ ६ ॥

रा० टी०—तत्र हेतुमाह—न हीति । यत्र उत्कटरिपुसंघाते सुप्रीतो भृत्यवर्गस्तिष्ठति तत्र अर्थादयो न तिष्ठन्ति अर्थादिभिः प्रयोजनसिद्धिर्न भविष्यतीत्यर्थः ॥ ६ ॥

गो० टी०—न हीति । यत्र प्रदेशे तिष्ठसि स्थास्यसि तत्र वनप्रदेशे अर्था न सन्ति अतः सर्वं गृहीत्वा गन्तव्यमित्यर्थः ॥ ६ ॥

७ ] ति० टी०—ननु किं सेनया तर्हि लवणेन योत्स्यामि, नेत्याह—अत इति । अतोऽयोध्याया इदानीमेव महतीं चमूं प्रस्थाप्यैक एव त्वं मधुनो वनं मधोर्वनं गच्छ । अयं भावः—छलेन जाह्नवीतरणाय ग्रीष्मकाल एव प्रस्थाप्य जाह्नवीदुत्तीर्य किंचित्कालं तत्र स्थित्वा तद्बलं तत्रैव संस्थाप्य स्वयमेक एव मधुवनं प्राप्य वर्षाप्रादुर्भावे लवणं जहीति ॥ ७ ॥

रा० टी०—तत इति । एक एव त्वं मधुनो वनं गच्छ ७

गो० टी०—तत इति । प्रस्थाप्य संस्थाप्य । मासमात्रोषितः अयोध्यायां पथि एक एव गच्छ ॥ ७ ॥

८ ] ति० टी०—तदेवाह—यथेति । अशङ्कितं त्वदागमनशङ्कारहितं यथा तथा गच्छेः ॥ ८ ॥

रा० टी०—गमनप्रकारमाह—यथेति । गच्छन्तं त्वां लवणो यथा न जानाति तथा अशङ्कितं यथा भवति तथा गच्छेः ८

गो० टी०—यथेति । एवं हि पूर्वजेन संमन्त्रितो लवणवधार्थं सेनया सह शत्रुघ्नो यातीति वार्तापरिहारार्थं केवलं बलमेवाग्रे मुनिभिः सह गच्छतु । तत्र ग्रीष्मावशेषेण शनैः शनैर्गङ्गायाः परतीरे विशतु । ब्राह्मणैः समुद्योजितं बलं श्रुत्वा स विश्वस्य वर्तते । तत्रान्तरे त्वमस्मान्नगरात् केवलं ब्राह्मणान् गृहीत्वा अज्ञातं गत्वा तं जहीति । अशङ्कितं त्वदागतिशङ्कारहितम् यथा भवति तथा ॥ ८ ॥

९ ] ति० टी०—तस्य लवणस्यान्योऽशङ्किततया तदुपरोधकव्यतिरिक्तो मृत्युर्नास्तीत्येतदुपपादयति—दर्शनमिति। युद्धाकाङ्क्षी समायातीति तत्कर्तृकज्ञानविषयो यो भवेदित्यर्थः ९

रा० टी०—नेति । यो दर्शनं शूलसहितलवणस्य दृष्टिपथमभिगच्छेत स लवणेन वध्यः अतस्तस्य मृत्युः तदुपायः अन्यः कश्चिन्नास्ति ॥ ९ ॥

गो० टी०—नेति । मृत्युर्मारकः। अन्यः अशङ्कितयां तदुपरोधकव्यतिरिक्तः नास्ति। एतदेवोपपादयति—दर्शनमित्यादि ९

१० ] ति० टी०—वसन्ते प्रस्थितस्यापि युद्धकालो नायमित्याह—स इति । वर्षारात्रे वर्षाकाले वर्षासु केऽपि युद्धार्थं न यतन्त इति निर्भयो निःशङ्क एव चरति, अतः स एवास्य वधकाल इति भावः ॥ १० ॥

रा० टी०—वधकालं बोधयन्नाह—स इति । स वधार्थी त्वं ग्रीष्मे अपयाते सति वर्षारात्रे चोपागते सति लवणं त्वं हन्याः स वर्षाकाल एव अस्य दुर्मतेः कालः एतेन वर्षाकाले राज्ञां गमनाभावेन तद्भीतिराहित्यात् शूलं न गृह्णातीति सूचितम् १०

गो० टी०—वसन्ते प्रस्थितस्यापि न स युद्धकाल इत्याह—स हीत्यादि । वर्षारात्रे वर्षाकाले । समासान्त आर्षः । स हि काल इति । वर्षासु राजानः केपि युद्धाय न निर्गच्छन्तीति निर्भयो निःशङ्क एव चरति । अतः स एवास्य वधावसर इति भावः ॥ १० ॥

११ ] ति० टी०—तर्हि नेदानीं गन्तव्यमित्याशङ्क्य

---

१ पुष्टमिति गो. पाठः । २ स हि ग्रीष्म इति गो. पाठः ।

तत्र स्थाप्य बलं सर्वं नदीतीरे समाहितः । अग्रतो धनुषा सार्धं गच्छ त्वं लघुविक्रमै[1] ॥ १२ ॥
एवमुक्तस्तु रामेण शत्रुघ्नस्तान्महाबलान् । सेनामुख्यान्समानीय ततो वाक्यमुवाच ह ॥ १३ ॥
एते वो गणिता वासा यत्र तत्र निवत्स्यथ । स्थातव्यं चाविरोधेन यथा बाधा न कस्यचित् ॥ १४ ॥
तथा तांस्तु समाज्ञाप्य प्रस्थाप्य च महद्बलम् । कौसल्यां च सुमित्रां च कैकेयीं चाभ्यवादयत् ॥ १५ ॥
रामं प्रदक्षिणीकृत्य शिरसाभिप्रणम्य च । लक्ष्मणं भरतं चैव प्रणिपत्य कृताञ्जलिः ॥ १६ ॥
पुरोहितं वसिष्ठं च शत्रुघ्नः प्रयतात्मवान् । रामेण[2] चाभ्यनुज्ञातः शत्रुघ्नः शत्रुतापनः ॥
प्रदक्षिणमथो कृत्वा निर्जगाम महाबलः । ॥ १७ ॥

निर्याप्य[3] सेनामथ सोऽग्रतस्तदा गजेन्द्रवाजिप्रवरौघसंकुलाम् ।
उपास्यमानः स नरेन्द्रपार्श्वतः प्रतिप्रयातो[4] रघुवंशवर्धनः । ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

## पञ्चषष्टितमः सर्गः ।

प्रस्थितेन मार्गे वाल्मीक्याश्रमं प्रविष्टेन तदविदूरे च यज्ञायतनं प्रेक्ष्य कस्येदमिति पृच्छता शत्रुघ्नेनाभिहितः स वाल्मीकिस्तस्मै यज्ञपूर्ववृत्तकथनादिहेतुकल्माषपादेतिहासमाचख्यौ ।

प्रस्थाप्य च बलं सर्वं मासमात्रोषितः पथि । एक एवाशु शत्रुघ्नो जगाम त्वरितं तदा ॥ १ ॥
द्विरात्रमन्तरे शूर उष्य राघवनन्दनः । वाल्मीकेराश्रमं पुण्यमगच्छद्वासमुत्तमम् ॥ २ ॥
सोऽभिवाद्य महात्मानं वाल्मीकिं मुनिसत्तमम् । कृताञ्जलिरथो भूत्वा वाक्यमेतदुवाच ह ॥ ३ ॥

---

स्वदेशे कार्यान्तरसाधनार्थमेव प्रथमतः शनैः सेनामात्रगमनं कार्यमित्याह—महर्षीनिति ॥ ११ ॥

रा० टी०—ननु तस्मिन्काले एव गमनं भवतु किं वसन्तकालेगमनेनेत्यत आह—महर्षीनिति । तव सैनिकाः प्रयान्तु अत एव ग्रीष्मावशेषेण जान्हवीजलं यथावत्तरेयुः ॥ ११ ॥

गो० टी०—तर्हीदानीं निर्गमने किं प्रयोजनमित्यत्राह—महर्षीनिति ॥ ११ ॥

१२-१३] ति०टी०—तत्र जाह्नवीपरतीरेऽग्रतस्ततः परभूते मार्गे । धनुषा सार्धम् । नान्येन बलेनेत्यर्थः ॥ १२ ॥ १३ ॥

रा० टी०—तत्रेति । नदीतीरे गङ्गोत्तरतटे बलं स्थाप्य स्थापयित्वा त्वं धनुषा सार्द्धमग्रतो गच्छ ॥ एवमिति । शत्रुघ्नः सेनामुख्यान् समानीय ततस्तानुवाच ॥ १२ ॥ १३ ॥

गो० टी०—तत्रेति । तत्र जाह्नवीपरतीरे । अग्रतः परमार्ग इत्यर्थः । धनुषा सार्धं नान्येन बलेनेत्यर्थः ॥ १२ ॥ १३ ॥

१४ ] ति० टी०—एते प्रसिद्धा वो युष्माकं वासा गणिता एव सन्ति । यत्र यत्र वासे वत्स्यथ तत्र तत्राविरोधेन स्थातव्यम् । तदेवाह—यथेति । इदं सैनिकान्प्रति वाक्यम् १४

रा० टी०—तदाकारमाह—एत इति । यत्र यस्मिन् स्थले वो गणिताः अतिशयेन ज्ञाताः वासाः सेनोचितवासगृहाणि तत्र यूयं निवत्स्यथ यथा कस्यचिद्बाधः पीडा न भवेत् तथा अविरोधेन स्थातव्यम् ॥ १४ ॥

गो० टी०—एत इति । एते प्रसिद्धा इत्यर्थः । वः युष्माकम् । वासा गणिताः यत्र यत्र गणिते वासे निवत्स्यथ तत्र तत्राविरोधेनैव स्थातव्यम् ॥ १४ ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुष्षष्टितमः सर्गः ॥ ६४ ॥

१५-१८ ] ति० टी०—अनेन केवलसेनैव प्रस्थिता, शत्रुघ्नस्तु पश्चादयोध्यात एकक एव गमिष्यतीति ज्ञायते १५-१८

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

रा० टी०—तथेति । तथोक्तप्रकारेण तान् सेनामुख्यान् समाज्ञाप्य महद्बलं प्रस्थाप्य च कौशल्याप्रभृतीरभ्यवादयत्—राममिति । शत्रुघ्नः रामादीन् प्रदक्षिणीकृत्य कृताञ्जलिस्सन् अतिष्ठदिति शेषः सार्द्धश्लोक एकान्वयी ॥ रामेणेति । रामेणाभ्यनुज्ञातश्शत्रुघ्नः प्रदक्षिणं कृत्वा राममिति शेषः निर्जगाम ॥ निर्याप्येति । स शत्रुघ्नः सेनां निर्याप्य उपास्यमानः सन् सेनापतिभिरिति शेषः नरेन्द्रस्य रामस्य पार्श्वतः पार्श्वात् प्रतिप्रयातोऽभवदिति शेषः ॥ १५-१८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुष्षष्टितमः सर्गः ॥ ६४ ॥

---

१-३ ] ति० टी०—अथ सेनाप्रस्थानोत्तरं मासमात्रमयो-

---

१ विक्रम इति गो.पाठः । २ "इदमर्धं" रामं प्रदक्षिणीकृत्येति षोडशपद्यपूर्वार्धोत्तरं दृश्यते गो.पु. । ३ प्रस्थाप्येति गो.पाठः । ४ अथेति गो.पाठः ।

भगवन्वस्तुमिच्छामि गुरोः कृत्यादिहागतः । श्वः प्रभाते गमिष्यामि प्रतीचीं दारुणां दिशम्[1] ॥ ४ ॥
शत्रुघ्नस्य वचः श्रुत्वा प्रहस्य मुनिपुंगवः । प्रत्युवाच महात्मानं स्वागतं ते महायशः ॥ ५ ॥
स्वमाश्रममिदं सौम्य राघवाणां कुलस्य वै[2] । आसनं पाद्यमर्घ्यं च निर्विशङ्कः प्रतीच्छ मे ॥ ६ ॥
प्रतिगृह्य तदा पूजां फलमूलं च भोजनम् । भक्षयामास काकुत्स्थस्तृप्तिं च परमां गतः ॥ ७ ॥
स भुक्त्वा फलमूलं च महर्षिं तमुवाच ह । पूर्वा यज्ञविभूतीयं[3] कस्याश्रमसमीपतः ॥ ८ ॥
तत्तस्य भाषितं श्रुत्वा वाल्मीकिर्वाक्यमब्रवीत् । शत्रुघ्न शृणु यस्येदं बभूवायतनं पुरा ॥ ९ ॥
युष्माकं पूर्वको राजा सौदासस्तस्य भूपतेः । पुत्रो वीर्यसहो नाम वीर्यवानतिधार्मिकः ॥ १० ॥
स बाल एव सौदासो मृगयामुपचक्रमे । चञ्चूर्यमाणं ददृशे स शूरो राक्षसद्वयम् ॥ ११ ॥
शार्दूलरूपिणौ घोरौ मृगान्बहुसहस्रशः । भक्षमाणावसंतुष्टौ पर्याप्तिं नैव जग्मतुः ॥ १२ ॥
स तु तौ राक्षसौ दृष्ट्वा निर्मृगं च वनं कृतम् । क्रोधेन महताविष्टो जघानैकं महेषुणा ॥ १३ ॥
विनिपात्य तमेकं तु सौदासः पुरुषर्षभः । विज्वरो विगतामर्षो हतं रक्षो ह्युदैक्षत ॥ १४ ॥

---

ध्यायामुषित्वा पश्चादेकाकिनो गच्छतः शत्रुघ्नस्य मार्गवशाद्वाल्मीक्याश्रमप्राप्तिः—प्रस्थाप्येति । मासमात्रोषितः । अयोध्यायामिति शेषः । पथ्येक एवासहाय एव जगाम १–३

रा० टी०—शत्रुघ्नयात्राकालं बोधयन्नाह—प्रस्थाप्येत्यादिभिः । बलं प्रस्थाप्य मासमात्रोषितश्शत्रुघ्नः एक एव पथि जगाम १

रा० टी०—द्विरात्रमिति । शूरश्शत्रुघ्नः अन्तरे मार्गमध्ये द्विरात्रमुष्य वासं वासयोग्यं वाल्मीकेराश्रममगच्छत् ॥ २ ॥

रा० टी०—स इति । स शत्रुघ्नः वाल्मीकिमभिवाद्य कृताञ्जलिर्भूत्वा एतद्वाक्यमुवाच ॥ ३ ॥

गो० टी०—प्रस्थाप्येत्यादि ॥ १—३ ॥

४–५ ] ति० टी०—दारुणाम् । लवणाधिष्ठितत्वात् ४–५

रा० टी०—तदाकारमाह—भगवन्निति । गुरोः रामस्य कृत्यात् कार्यात् इहागतोहं वस्तुमिच्छामि श्वः प्रभाते प्रतीचीं दिशं गमिष्यामि गन्तास्मि ॥ ४ ॥

गो० टी०—रामेण यथाक्रमगमनं संग्रहेणोक्त्वा अयोध्यातो द्विरात्रगमनानन्तरवृत्तमाह—भगवन्निति । वारुणीं वरुणपालिताम् । दारुणां दिशमिति पाठे दारुणां लवणाधिष्ठितत्वादिति भावः ॥ ४ ॥

रा० टी०—शत्रुघ्नस्येति । मुनिपुङ्गवः प्रत्युवाच तदाकारमाह ते तव स्वागतम् ॥ ५ ॥

गो० टी०—शत्रुघ्नस्येति । प्रहस्येति । अनिवेदितमपि शत्रुघ्नागमननिमित्तं ज्ञातव्यमित्यभिप्रायः ॥ ५ ॥

६–७ ] ति० टी०—इदमाश्रमं राघवाणां कुलस्य स्वमेव स्वीयमेव ॥ ६ ॥ ७ ॥

रा० टी०—स्वमिति । राघवाणां कुलस्य इदं स्वं स्वकीयमाश्रमम् अतः निर्विशङ्कस्सन् मे दत्तमासनादि प्रतीक्ष गृहाण ॥ ६ ॥

रा० टी०—प्रतीति । काकुत्स्थः पूजां प्रतिगृह्य फलादि भक्षयामास ॥ ७ ॥

गो० टी०—स्वमिति । राघवाणां कुलस्य स्वं स्वभूतम् ६॥७

८ ] ति० टी०—पूर्वा यज्ञविभूतीयमित्यार्षः संधिः । आश्रमसमीपतः पूर्वा पूर्वप्रदेशे दृश्यमाना पुरातनी चेयं यज्ञविभूतिर्यूपादियज्ञोपकरणसमृद्धिः कस्य यजमानस्येत्यर्थः ॥ ८ ॥

रा० टी०—स इति । स शत्रुघ्नः आश्रमस्य समीपतो निकटे पूर्वा पुरातनी इयं यज्ञविभूतिः कस्येति वाक्यमुवाच सन्धिरार्ष इति भट्टाः ॥ ८ ॥

गो० टी०—स इति । इयं यज्ञविभूतिस्ते कस्याश्रमसमीपत इति । तवाश्रमसमीपतः इयं वर्तमाना यज्ञविभूतिः यज्ञस्य समृद्धिः कस्य यजमानस्य ॥ ८ ॥

९–१० ] ति० टी०—यस्य यजमानस्येदमायतनं बभूव तच्छृणु ॥ ९ ॥ १० ॥

रा० टी०—तदिति । इदमायतनं यस्य पुरा बभूव तं शृणु इति वाक्यं वाल्मीकिरब्रवीत् ॥ ९ ॥

रा० टी०—तद्वचनमेवाह—युष्माकमित्यादिभिः । युष्माकं पूर्वकः सौदासस्तदभिधो राजा बभूव तस्य सौदासस्य वीर्यसहो नाम पुत्रो बभूव ॥ १० ॥

गो० टी०—तदिति । आयतनं यज्ञायतनम् ॥ ९ ॥ १० ॥

११–१२ ] ति० टी०—चञ्चूर्यमाणं मुहुर्मुहुश्चरन्तम् ११।१२

रा० टी०—स इति । बाल एव सौदासः मृगयामुपचक्रमे स सौदासः चञ्चूर्यमाणमतिशयेन जंतून् हिंसन्तं राक्षसद्वयं ददृशे ॥ ११ ॥

रा० टी०—शार्दूलेति । शार्दूलरूपिणौ बहुसहस्रशो मृगान् भक्षमाणौ राक्षसौ असन्तुष्टौ सन्तौ पर्याप्तिं परिपूर्णतां नैव जग्मतुः ॥ १२ ॥

गो० टी०—स इति । चञ्चूर्यमाणं मुहुर्मुहुः चरन्तम् । चरतेर्यङन्ताच्छानच् । "उत्परस्यातः" इत्युत्त्वम् ॥ ११॥१२॥

१३–१४ ] ति० टी०—निर्मृगं कृतं वनं च दृष्ट्वेत्यनुकर्षः ॥ १३ ॥ १४ ॥

---

१ वारुणीमिति गो. पा. । २ हीति गो. पाठः । ३ इयं यज्ञविभूतिस्ते इति गो. पाठः ।

निरीक्षमाणं तं दृष्ट्वा सहायं तस्य रक्षसः। संतापमकरोद्घोरं सौदासं चेदमब्रवीत् ॥ १५ ॥
यस्मादनपराधं तं सहायं मम जघ्निवान्। तस्मात्तवापि पापिष्ठ प्रदास्यामि प्रतिक्रियाम् ॥१६॥
एवमुक्त्वा तु तद्रक्षस्तत्रैवान्तरधीयत। कालपर्याययोगेन राजा मित्रसहोऽभवत् ॥ १७ ॥
राजापि यजते यज्ञमस्याश्रमसमीपतः। अश्वमेधं महायज्ञं तं वसिष्ठोऽभ्यपालयत् ॥ १८ ॥
तत्र यज्ञो महानासीद्बहुवर्षगणायुतः। समृद्धः परया लक्ष्म्या देवयज्ञसमोऽभवत् ॥ १९ ॥
अथावसाने यज्ञस्य पूर्ववैरमनुस्मरन्। वसिष्ठरूपी राजानमिति होवाच राक्षसः ॥ २० ॥
अद्य यज्ञावसानान्ते सामिषं भोजनं मम। दीयतामिति शीघ्रं वै नात्र कार्या विचारणा॥ २१ ॥
तच्छ्रुत्वा व्याहृतं वाक्यं रक्षसा ब्रह्मरूपिणा। सूदान्संस्कारकुशलानुवाच पृथिवीपतिः ॥ २२ ॥
हविष्यं सामिषं स्वादु यथा भवति भोजनम्। तथा कुरुत शीघ्रं वै परितुष्येद्यथा गुरुः ॥ २३ ॥
शासनात्पार्थिवेन्द्रस्य सूदः संभ्रान्तमानसः। तच्च रक्षः पुनस्तत्र सूदवेषमथाकरोत् ॥ २४ ॥
स मानुषमथो मांसं पार्थिवाय न्यवेदयत्। इदं स्वादु हविष्यं च सामिषं चान्नमाहृतम् ॥ २५ ॥

---

रा० टी०–स इति। सौदासः निर्मृगं कृतं वनं च दृष्ट्वा एकं राक्षसं जघान ॥ १३ ॥

रा० टी०–विनिपात्येति। एकं रक्षो विनिपात्य विज्वरः सौदासः हतं रक्ष उदैक्षत ॥ १४ ॥

गो० टी०–स इति। निर्मृगं कृतं वनं च दृष्ट्वेत्यनुकर्षः ॥ १३ ॥ १४ ॥

१५–१६ ] ति० टी०–तस्य हतस्य रक्षसः सहायं सहायभूतमात्मानं निरीक्षमाणं तं राजानं दृष्ट्वा संतापमकरोत् ॥ १५ ॥ १६ ॥

रा० टी०–निरीक्षमाण इति। तस्य प्रसिद्धस्य रक्षसः स्वस्य रक्षोमात्रस्य वा सहायं निरीक्षमाणं सौदासं दृष्ट्वा सन्तापमकरोत् राक्षसान्तरमिति शेषः इदमब्रवीच्च ॥ १५ ॥

रा० टी०–तदाकारमाह–यस्मादिति। यस्मात् अनपराधं मम सहायं त्वं जघ्निवान् तस्मात् प्रतिक्रियां तवापि दास्यामि ॥ १६ ॥

गो० टी०–निरीक्षमाणमिति। निरीक्षमाणं स्वसहायभूतं द्वितीयरक्षो निरीक्षमाणं प्रथमरक्षो दृष्ट्वा ॥ १५ ॥ १६ ॥

१७ ] ति० टी०–कालपर्याययोगेन बहुकालानन्तरं प्राप्य राज्यप्रापककर्मवशेन मित्रसहो राजाभवत्। वीर्यसहस्यैव मित्रसह इति नामान्तरम् ॥ १७ ॥

रा० टी०–एवमिति। रक्षः तत्रैवान्तरधीयत मित्रसहः मित्रसहाभिधः सौदासपुत्रस्तु कालपर्याययोगेन कालक्रमवशात् राजाभवत् एतेन पुत्रं राज्ये संस्थाप्य सौदासः परलोकचित्तोऽभवदिति सूचितम् ॥ १७ ॥

गो० टी०–एवमिति। कालपर्याययोगेन बहुकालातिवाहकर्मयोगेन युक्तोऽभवत् ॥ १७ ॥

१८ ] ति० टी०–अस्याश्रमेति लुप्तषष्ठीकम्। अस्याश्रमस्य समीपतो राजा यज्ञं यजते स्म ॥ १८ ॥

रा० टी०–राजेति। राजा सौदासः अश्वमेधं महायज्ञं यजते तं यज्ञं वशिष्ठोपालयत् ॥ १८ ॥

गो० टी०–राजेति। अस्याश्रमसमीपत इति। अस्याश्रमस्येत्यविभक्तिकनिर्देशः ॥ १८—२१ ॥

१९–२३ ] ति० टी०–गणायुत इत्यत्राङ्प्रश्लेषः॥१९-२३

रा० टी०–तत्रेति। परया लक्ष्म्या समृद्धः बहुवर्षगणायुतः महान् यज्ञ आसीत् अत एव देवयज्ञसमोऽभवत् ॥ १९ ॥

रा० टी०–अथेति। राक्षसः वशिष्ठरूपी भूत्वा राजानमित्युवाच ॥ २० ॥

रा० टी०–तदाकारमाह–अद्येति। अद्य सामिषं मांससहितं भोजनं मम दीयतामत्र अस्मिन्समये विचारणा किमर्थमयमभक्ष्यं याचते इति विचारो न कार्यः ॥ २१ ॥

रा० टी०–तदिति। पृथिवीपतिः सूदान् पाककर्तृन् उवाच ॥ २२ ॥

रा० टी०–तदाकारमाह–हविष्यमिति। यथा गुरुः परितुष्येत् तथा सामिषं हविष्यभोजनं स्वादु यथा भवति तथा कुरुत ॥ २३ ॥

गो० टी०–तदिति। भक्ष्यसंस्कारकुशलसुवाचेति। भोजनार्थमिति शेषः ॥ २२—२६ ॥

२४ ] ति० टी०–संभ्रान्तमानसः। अभूदिति शेषः। पाकत्वरयेति शेषः। सूदवेषमिति। तत्र महानसे सूदान्तरवेषं गृहीत्वा सूदरूपसूदेन पाकसमये मानुषं मांसं प्राक्षिपदिति शेषः ॥ २४ ॥

रा० टी०–शासनादिति। पार्थिवेन्द्रस्य शासनात् शासनं प्राप्यापि सूदः संभ्रान्तमानसः गुरुकर्तृकाभक्ष्यभक्षणेच्छाश्रवणेनोद्विग्नचित्तोऽभवदिति शेषः तद्रक्षस्तु सूदवेषमकरोत् ॥ २४ ॥

२५ ] ति० टी०–अथानन्तरं सूदवेषो राक्षसः पार्थि-

---

१ स्थिति गो.पाठः। २ अभीति गो.पाठः। ३ अस्य यज्ञस्य जातोऽन्त इति गो.पाठः। ४ इहेति गो.पा.। ५ महयेति अग्रे कुशलमिति च गो.पाठः।

स भोजनं वसिष्ठाय पत्न्या सार्धमुपाहरत् । मदयन्त्या नरश्रेष्ठ सामिषं रक्षसा हृतम् ॥ २६ ॥
ज्ञात्वा तदामिषं विप्रो मानुषं भोजनागतम् । क्रोधेन महताविष्टो व्याहर्तुमुपचक्रमे ॥ २७ ॥
यस्मात्त्वं भोजनं राजन्ममैतद्दातुमिच्छसि । तस्माद्भोजनमेतत्ते भविष्यति न संशयः ॥ २८ ॥
ततः क्रुद्धस्तु सौदासस्तोयं जग्राह पाणिना । वसिष्ठं शप्तुमारेभे भार्या चैनमवारयत् ॥ २९ ॥
राजन्प्रभुर्यतोऽस्माकं वसिष्ठो भगवानृषिः । प्रतिशप्तुं न शक्तस्त्वं देवतुल्यं पुरोधसम् ॥ ३० ॥
ततः क्रोधमयं तोयं तेजोबलसमन्वितम् । व्यसर्जयत धर्मात्मा ततः पादौ सिषेच च ॥ ३१ ॥
तेनास्य राज्ञस्तौ पादौ तदा कल्माषतां गतौ । तदाप्रभृति राजासौ सौदासः सुमहायशाः ॥ ३२ ॥
कल्माषपादः संवृत्तः ख्यातश्चैव तथा नृपः । स राजा सह पत्न्या वै प्रणिपत्य मुहुर्मुहुः ॥
पुनर्वसिष्ठं प्रोवाच यदुक्तं ब्रह्मरूपिणा । ॥ ३३ ॥
तच्छ्रुत्वा पार्थिवेन्द्रस्य रक्षसा विकृतं च तत् । पुनः प्रोवाच राजानं वसिष्ठः पुरुषर्षभम् ॥ ३४ ॥
मया रोषपरीतेन यदिदं व्याहृतं वचः । नैतच्छक्यं वृथा कर्तुं प्रदास्यामि च ते वरम् ॥ ३५ ॥
कालो द्वादश वर्षाणि शापस्यान्तो भविष्यति । मत्प्रसादाच्च राजेन्द्र अतीतं न स्मरिष्यसि ॥ ३६ ॥
एवं स राजा तं शापमुपभुज्यारिसूदनः । प्रतिलेभे पुना राज्यं प्रजाश्चैवान्वपालयत् ॥ ३७ ॥

वाय मानुषमांसं पक्वं न्यवेदयत् । इदमन्नं सिद्धमिति निवेदनप्रकारः ॥ २५ ॥

रा० टी०—स इति । स मृदरूपो राक्षसः सामिषमिदं स्वादु हविष्यमन्नं मया आहृतमित्युक्त्वेति शेषः मानुषं मांसं पार्थिवाय न्यवेदयत् ॥ २९ ॥

२६ ] ति० टी०—राजापि सामिषं मानुषमप्यमानुषं सद्धविष्यमित्येव विज्ञाय पत्न्या सार्धं वसिष्ठायोपाहरत् ॥ २६ ॥

रा० टी०—स इति । मदयन्त्या पत्न्या सार्द्धं स राजा रक्षसाहृतं सामिषं भोजनं वसिष्ठाय उपाहरत् ॥ २६ ॥

गो० टी०—स इति । मदयन्त्या राजपत्न्या ॥ २६-३२ ॥

२७ ] ति० टी०—मानुषमामिषं भोजनागतं ज्ञात्वा । भोजनरसवशेनेति भावः ॥ २७ ॥

रा० टी०—ज्ञात्वेति । भोजनागतं मानुषमामिषं ज्ञात्वा क्रोधमाविष्टो वशिष्ठः । व्याहर्तुमुपचक्रमे ॥ २७ ॥

२८-३२ ] ति० टी०-एतद्भोजनं मानुषामिषभोजनम् २८-३२

रा० टी०—तद्वचनाकारमाह—यस्मादिति । यस्मात् एतन्मानुषामिषं मम दातुमिच्छसि तस्मात् एतत् मानुषामिषमेव ते भोजनं भविष्यति राक्षसो भविष्यसीत्यर्थः ॥ २८ ॥

रा० टी०—तत इति । सौदासः तोयं जग्राह वसिष्ठं शप्तुमारेभे च भार्या तु एनं सौदासमवारयत् ॥ २९ ॥

रा० टी०—वारणाकारमाह—राजन्निति । यतः वसिष्ठोऽस्माकं प्रभुः तस्मात् पुरोधसं वशिष्ठं प्रति शप्तुं त्वं न शक्तः ॥ ३० ॥

रा० टी०—तत इति । तेजोबलसमन्वितं तोयं व्यसर्जयत् अत्यजत् ततः तेन त्यक्तजलेन पादौ सिषेच पादोपर्यत्यजदित्यर्थः ॥ ३१ ॥

रा० टी०—तेनेति । तेन सेकेन हेतुना अस्य सौदासस्य पादौ कल्माषतां श्यामत्वं गतौ अत एव तदाप्रभृति कल्माषपादः सम्वृत्तो जातः सौदासः ख्यातः तेनैव नाम्ना प्रसिद्धोऽभवदिति शेषः सार्द्धश्लोक एकान्वयी ॥ ३२ ॥

३३ ] ति० टी०—वसिष्ठं शुद्धवसिष्ठम् । ब्रह्मरूपिणा मायावसिष्ठेन यदुक्तं सामिषभोजनप्रार्थनम् ॥ ३३ ॥

रा० टी०—स इति । स सौदासः मुहुर्मुहुः प्रणिपत्य ब्रह्मरूपिणा राक्षसेन यदुक्तं तद्वशिष्ठं प्रोवाच ॥ ३३ ॥

गो० टी०—स इति । ब्रह्मरूपिणा वसिष्ठरूपधरेण यदुक्तं तद्वचो वसिष्ठं प्रति प्रोवाच ॥ ३३ ॥

३४-३५ ] ति० टी०—तद्रक्षसा । विकृतं कृतमिति शेषः । एतद्राजवचनं श्रुत्वा पुनर्वसिष्ठः प्रोवाच ॥ ३४ ॥ ३५ ॥

रा टी०—तदिति । रक्षसा एव विकृतं तद्भोजनमिति पार्थिवेन्द्रस्य पार्थिवेन्द्रात् श्रुत्वा वशिष्ठो राजानं पुनः प्रोवाच ३४

रा० टी०—तदाकारमाह—मयेति । यदिदं वचो मया व्याहृतं तदेतत् वृथा कर्तुं न शक्यमतः ते वरं प्रदास्यामि ३५

गो० टी०—तदिति । तत्पार्थिवेन्द्रस्य प्रणिपातवाक्यं रक्षोविकृतं च श्रुत्वा । रक्षसाधिकृतमिति पाठे अधिकृतं राजद्वेषमाश्रित्य कृतम् ॥ ३४ ॥ ३५ ॥

३६-३७ ] ति० टी०—द्वादशवर्षाणि कालः । व्यतीतश्चेदिति शेषः । अतीतं स्वकं राजत्वं च न शापभोगकाले स्मरिष्यसि ॥ ३६ ॥ ३७ ॥

रा० टी०—वराकारमाह—काल इति । द्वादश वर्षाणि व्यतीतानि चेदिति शेषः शापस्यान्तो विनाशो भविष्यति मत्प्रसादात् हेतोरतीतं शापकालिकाभक्ष्यभक्षणादि न स्मरिष्यसि ॥ ३६ ॥

१ भाजनं गतमिति गो. पाठः ।

तस्य कल्माषपादस्य यज्ञस्यायतनं शुभम् । आश्रमस्य समीपेऽस्मिन्यन्मां पृच्छसि राघव ।। ३८ ।।
तस्य तां पार्थिवेन्द्रस्य कथां श्रुत्वा सुदारुणाम् । विवेश पर्णशालायां महर्षिमभिवाद्य च ।। ३९ ।।

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चषष्टितमः सर्गः ।। ६५ ।।

## षट्षष्टितमः सर्गः ।

वाल्मीकेराश्रमे यस्यां रात्र्यां पर्णशालां प्रविष्टः शत्रुघ्नः तस्यामेवार्धरात्रसमये सीतायां कुशलवाख्यमपत्यद्वयं संजातं तच्छ्रुत्वा तत्र गत्वा मातर्दिष्ट्येति तामभिनन्द्यान्येद्युर्निष्क्रम्य पथि सप्तरात्रं गमयित्वा यमुनातीरवासिमुन्याश्रममभ्ययात् ।

यामेव रात्रिं शत्रुघ्नः पर्णशालां समाविशत् । तामेव रात्रिं सीतापि प्रसूता दारकद्वयम् ।। १ ।।
ततोऽर्धरात्रसमये बालका मुनिदारकाः । वाल्मीकेः प्रियमाचख्युः सीतायाः प्रसवं शुभम् ।।२।।
भगवन्रामपत्नी सा प्रसूता दारकद्वयम् । ततो रक्षां महातेजः कुरु भूतविनाशिनीम् ।। ३ ।।
तेषां तद्वचनं श्रुत्वा महर्षिः समुपागमत् । बालचन्द्रप्रतीकाशौ देवपुत्रौ महौजसौ ।। ४ ।।
जगाम तत्र हृष्टात्मा ददर्श च कुमारकौ । भूतघ्नीं चाकरोत्ताभ्यां रक्षां रक्षोविनाशिनीम् ।। ५ ।।
कुशमुष्टिमुपादाय लवं चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ।।६ ।।

रा० टी०—एवमिति । राजा शापमेवमुपभुज्य राज्यं पुनः प्रतिलेभे ।। ३७ ।।

गो० टी०—काल इति । व्यतीतं न स्मरिष्यसि । मया हठाच्छप्तं न मनसि कुर्वित्यर्थः ।। ३६ ।। ३७ ।।

३८ ] ति० टी०—कल्माषपाद इति मित्रसहस्यैव नामान्तरम् ।। ३८ ।।

रा० टी०—तस्येति । आश्रमस्य समीपे विद्यमानं तत् कल्माषपादस्य यज्ञस्यायतनम् ।। ३८ ।।

गो० टी०—तस्येति । कल्माषपाद इति तस्य नामान्तरम् । शापानन्तरम् मित्रसहः कुपितः सन् वसिष्ठं शप्तुं जलमाददे । स्वयमेव मां नियुज्य कथं पुनः स्वयमेव कुप्यतीति । तदा तद्भार्या समागत्य सर्वथा गुरुर्न प्रतिशापार्ह इति प्रतिषिद्धवती। ततो राजा तद्वचः साध्विति मत्वा शापाय गृहीतं जलं स्वपादे प्रक्षिप्तवान् । तदाप्रभृति कल्माषपादनामाभवत् । कल्माषं कोपगृहीतशापजलकृतनीलरूपता ।। ३८ ।। ३९ ।।

इति श्रीगोविन्दराजविर० श्रीरा० भूषणे मणिमुकुटाख्याने उ० श्रीरामायणव्याख्याने पञ्चषष्टितमः सर्गः ।। ६५ ।।

३९ ] ति० टी०—विवेश। शत्रुघ्नः स्वप्तुमिति शेषः।।३९।।

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चषष्टितमः सर्गः ।।६५।।

रा० टी०—तस्येति । तस्य कल्माषपादस्य कथां श्रुत्वा पर्णशालायां विवेश ।। ३९ ।।

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चषष्टितमः सर्गः ।। ६५ ।।

१ ] ति० टी०—अथ शत्रुघ्नस्य तद्दिने एव सीताप्रसवज्ञानपूर्वकमृषिभिः सह मधुवनप्रस्थानम्—यामेवेति । यस्यां रात्र्यां प्रसूता प्रसूतवती ।। १ ।।

रा० टी०—पर्णशालाप्रवेशानन्तरकालिकं वृत्तमाह—यामित्यादिभिः । यां यस्यां रात्रिं रात्रौ शत्रुघ्नः पर्णशालायां समाविशत् तां तस्यामेव रात्रिं रात्रौ सीता दारकद्वयं पुत्रयुग्मं प्रसूता प्रसूतवती ।। १ ।।

गो० टी०—यामेवेत्यादि । यस्यां रात्र्यामित्यर्थः । दारकद्वयं पुत्रद्वयम् । प्रसूता प्रसूतवती ।। १ ।। २ ।।

२ ] ति० टी०—मुनिदारका मुनिपुत्राः ।। २ ।।

रा० टी०—तत इति । बालकाः अल्पवयस्काः मुनिदारकाः प्रियं प्रीतिविषयीभूतं सीतायां प्रसवं वाल्मीकिमाचख्युः ।। २ ।।

३ ] ति० टी०—भूतविनाशिनीं चतुःषष्टिबालग्रहविनाशिनीम् ।। ३ ।।

रा० टी०—आख्यानाकारमाह—भगवन्निति। सा सीता दारकद्वयं प्रसूता तत्तस्माद्धेतोः भूतविनाशिनीं रक्षां कुरु ।।३।।

गो० टी०—भगवन्निति । भूतविनाशिनीं बालग्रहविनाशिनीम् ।। ३—६ ।।

४-५ ] ति० टी०—देवपुत्रौ तत्सदृशौ । द्रष्टुमिति शेषः।४-५

रा० टी०—तेषामिति । महर्षिः समुपागमत् अर्द्ध पृथक्—बालेति । देवपुत्रौ तत्सदृशौ कुमारकौ जगाम प्राप ददर्श च ।। ४ ।।

रा० टी०—भूतघ्नीमिति । भूतघ्नीं रक्षोविनाशिनीं च रक्षां ताभ्यामकरोत् अर्द्ध पृथक् ।। ५ ।।

६ ] ति० टी०—भूतघ्नीं रक्षोविनाशिनीं च रक्षामकरोदि-

१ यस्येति गो. पाठः ।

यस्तयोः पूर्वजो जातः स कुशैर्मन्त्रसत्कृतैः । निर्माजनीयस्तु तदा कुश इत्यस्य नाम तत् ॥ ७ ॥
यश्चावेरो भवेत्ताभ्यां लवेन सुसमाहितः । निर्माजनीयो वृद्धाभिर्लवेति च स नामतः ॥ ८ ॥
एवं कुशलवौ नाम्ना तावुभौ यमजातकौ । मत्कृताभ्यां च नामभ्यां ख्यातियुक्तौ भविष्यतः॥९॥
तां रक्षां जगृहुस्तां च मुनिहस्तात्समाहिताः । अकुर्वंश्च ततो रक्षां तयोर्विगतकल्मषाः ॥ १० ॥
तथा तां क्रियमाणां च वृद्धाभिर्गोत्रनाम च । संकीर्तनं च रामस्य सीतायाः प्रसवौ शुभौ ॥ ११ ॥
अर्धरात्रे तु शत्रुघ्नः शुश्राव सुमहत्प्रियम् । पर्णशालां ततो गत्वा मातर्दिष्ट्येति चाब्रवीत्॥ १२ ॥

स्युक्तम्, तत्प्रकारमाह—कुशमुष्टिमिति । कुशमुष्टिं लवं चोपादाय रक्षां प्रददौ। लूनकुशानामग्रभागः कुशमुष्टिरित्युच्यते, तेषामधोभागो लव इति । तत्र कतिपयसाग्रकुशान्गृहीत्वा मध्ये द्विधा छित्वा तदग्राधोभागाभ्यां क्रमाज्ज्येष्ठकनिष्ठयोः प्रमार्जनफलकं तद्रूपं रक्षादानं वृद्धानां श्रीणां हस्ते इति बोध्यम्॥६॥

रा० टी०–रक्षाप्रकारमाह–कुशमिति । वाल्मीकिः कुशमुष्टिं लूनकुशानामग्रभागं लवं तेषामधोभागं चोपादाय रक्षां प्रददौ चकार ॥ ६ ॥

गो० टी०–कुशमुष्टिमिति । लवं चैवेति । अधःप्रदेश-लूनकुशमुष्ट्येकदेशमित्यर्थः । कुशमुष्ट्यग्राधोभागाभ्यां क्रमाज्ज्येष्ठकनिष्ठयोः प्रमार्जनमिति द्रष्टव्यम् ॥ ६ ॥

७ ] ति० टी०–निर्माजनीयो निर्माजनार्हो यतो जातस्ततोऽस्य कुश इति नाम भविष्यतीत्यर्थः ॥ ७ ॥

रा० टी०–य इति । तयोर्बालयोर्मध्ये यो जातः पूर्वजो ज्येष्ठः सः मन्त्रसत्कृतैः कुशैर्निर्माजनीयः अतः अस्य ज्येष्ठस्य तदा नामकरणसमये तत् कुश इति नाम भविष्यति ॥ ७ ॥

गो० टी०–य इति । निर्माजनीयः निर्माजनार्हो यतो जातः ततः कुश इति नामाकरोदिति शेषः॥ ७ ॥

८ ] ति० टी०–ताभ्याम् । तयोर्मध्ये इत्यर्थः । स लवेन कुशाधोभागमुष्टिना वृद्धाभिर्निर्माजनीयः सूतीगृहे ऋषेः प्रवेशाभावाद्वृद्धाभिरिति । स लवेति नामतो भविष्यतीति शेषः। जातकर्मण एवाय दिवसे कर्तव्यता, न तु नामकरणस्यापीति भविष्यतीति शेषपूरणम् ॥ ८ ॥

रा० टी०–य इति । ताभ्यां तयोर्योऽवरः कनिष्ठः स वृद्धाभिर्निर्माजनीयः लवेन सुसमाहितश्च भवेत् अभवत् अतः नामतो नाम्ना लवेति भविष्यति एतेन प्रादुर्भावकाले कनिष्ठस्तिरोहितश्चैतन्योऽभवदिति सूचितम् ॥ ८ ॥

गो० टी०–यश्चापर इति । ताभ्यां तयोः कुमारयोर्मध्ये इत्यर्थः । लवेन लूनकुशमुष्ट्यधोभागेन । वृद्धाभिर्माजनीय इति । सूतिकागृहमध्ये ऋषिप्रवेशाभावात् ॥ ८ ॥

९ ] ति० टी०–यमजातकौ यमलौ ॥ ९ ॥

रा० टी०–उपसंहरन्नाह–एवमिति । यमजातकौ युग्मजन्मानौ यौ नाम्ना करिष्यमाणाभिधया युक्तौ भविष्यत इति शेषः तौ कुशलवौ मत्कृताभ्यां नामभ्यां ख्यातियुक्तौ भविष्यतः जन्मकाले एव नामनिरुक्त्या ऋषेर्हर्षातिशयश्च सूचितः ९

गो० टी०–एवमिति । ख्यातियुक्तौ भविष्यत इति । यमजातकौ यमलौ ॥ ९ ॥

१० ] ति० टी०–समाहिता वृद्धास्तां मुनिहस्तान्मुनिना दीयमानां रक्षां जगृहुः ॥ १० ॥

रा० टी०–तामिति । ताः रक्षाकरणे प्रसिद्धाः समाहिता वृद्धाः रक्षां रक्षाकरणसामग्रीं मुनिहस्तात् जगृहुः ततो रक्षामकुर्वन् ॥ १० ॥

गो० टी०–तामिति । ततः अनन्तरम् । समाहितास्ता वृद्धाः मुनिहस्तात्तां मुनिना दीयमानां रक्षां च जगृहुः । पुत्रयोः प्रदानार्थमिति शेषः । रक्षामकुर्वन्निति । वृद्धा इति शेषः ॥ १० ॥

११ ] ति० टी०–गोत्रनाम च गोत्रं च नाम च । तत्र नाम्नः करिष्यमाणत्वेन श्रवणम् । रामस्य संकीर्तनम् । भगवन्रामपत्नी सा प्रसूतेति मुनिदारकवचनश्रवणात् ॥ ११ ॥

१२ ] ति० टी०-ततस्तच्छ्रवणानन्तरम् । पर्णशालां सीतायाः प्रसवपर्णशालां गत्वा मातर्दिष्ट्या दैवयोगेन ते पुत्रजन्मेति शेष इत्यब्रवीदित्यर्थ इति कतकः । 'पर्णशालां गतो रात्रौ दिष्ट्या दिष्ट्येति चाब्रवीत्' इति पाठे स्वपर्णशालास्थः सर्वमिदं श्रुत्वा स्वात्मन्येव भाग्यं भाग्यमित्यब्रवीदित्यर्थः । आद्यपाठेऽपि वाल्मीकिदत्तपर्णशालां पूर्वमेव गत्वा स्थितः, ततः श्रवणानन्तरं मातर्भाग्येनेदं तव पुत्रजन्मेति स्वात्मन्येवाब्रवीदित्यर्थो वक्तुं शक्यः । रामाज्ञां विना रामपत्न्यकसंभाषणस्यानौचित्यादिति तीर्थः ॥ १२ ॥

रा० टी०—तथेति । क्रियमाणां तां रक्षां तन्मन्त्रान् गोत्रनाम च शुभौ प्रसवौ उद्दिश्य रामस्य सीतायाः संकीर्तनं च शत्रुघ्नः अर्धरात्रे शुश्राव ततोऽनन्तरं पर्णशालां गत्वा हे मातः ! दिष्टेत्यब्रवीत् श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०–तथेति । जन्म च नाम चेति । यद्यपि जातकर्म पुत्रजन्मदिवसे कर्तव्यं न तु नामकरणं तथाप्येवंनामकौ भविष्यत इति ऋषिवचनात्तच्छ्रवणमात्रमिति मन्तव्यम् । संकीर्तनं च रामस्येति । रामपत्नीप्रसूतेति मुनिदारकवचः-श्रवणात् । वाल्मीकेः पर्णशालां गत्वा सामान्यतो दिष्ट्या दृष्टेति सूचयन् मुनिं प्रति हर्षेणाह—अर्धरात्र इत्यादिना । अनेन सीता विसृष्टेति रामादिव्यतिरिक्तैर्न ज्ञातमिति सूचितम् ॥ ११ ॥ १२ ॥

१ अपर इति गो. पाठः । २ जन्मेति गो. पाठः ।

तदा तस्य प्रहृष्टस्य शत्रुघ्नस्य महात्मनः । व्यतीता वार्षिकी रात्रिः श्रावणी लघुविक्रमा ॥१३॥
प्रभाते सुमहावीर्यः कृत्वा पौर्वाह्णिकीं क्रियाम् । मुनिं प्राञ्जलिरामन्त्र्य ययौ पश्चान्मुखः पुनः ॥१४॥
स गत्वा यमुनातीरं सप्तरात्रोषितः पथि । ऋषीणां पुण्यकीर्तीनामाश्रमे वासमभ्ययात् ॥१५॥
स तत्र मुनिभिः सार्धं भार्गवप्रमुखैर्नृपः । कथाभिरभिरूपाभिर्वासं चक्रे महायशाः ॥ १६ ॥
स काञ्चनाद्यैर्मुनिभिः समेतै रघुप्रवीरो रजनीं तदानीम् ।
कथाप्रकारैर्बहुभिर्महात्मा विरामयामास नरेन्द्रसूनुः ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

## सप्तसष्टितमः सर्गः ।

रात्रौ शत्रुघ्नो भृगुनन्दनं च्यवनं लवणशूलमाहात्म्यं पृष्टवान् शूलधार्ययमवध्य इति कथाप्रस्तावे भवत्पूर्वजो मान्धाताप्यनेन शूलसहायेन भस्मसात्कृतः आमिषार्थे शूलं विना गच्छन्तं तं श्वः प्रभाते निरुध्य हनिष्यसि नात्र संदेह इति च्यवनः शत्रुघ्नं प्रत्यब्रवीत् ।

अथ रात्र्यां प्रवृत्तायां शत्रुघ्नो भृगुनन्दनम् । पप्रच्छ च्यवनं विप्रं लवणस्य यथाबलम् ॥ १ ॥
शूलस्य च बलं ब्रह्मन्के च पूर्वं विनाशिताः । अनेन शूलमुख्येन द्वन्द्वयुद्धमुपागताः ॥ २ ॥
तस्य तद्वचनं श्रुत्वा शत्रुघ्नस्य महात्मनः । प्रत्युवाच महातेजाश्च्यवनो रघुनन्दनम् ॥ ३ ॥

१३ ] ति० टी०—वार्षिकी वर्षाकालिकी । तत्रापि श्रावणी श्रावणमासीया । दीर्घतरापि लघुविक्रमा शीघ्रगमना व्यतीता ॥ १३ ॥

रा० टी०—तदेति । लघुविक्रमा क्षिप्रं गमनशीला श्रावणी श्रवणयुक्ता वार्षिकी रात्रिर्व्यतीता ॥ १३ ॥

गो० टी०—तथेति । वर्षासु भवा वार्षिकी तत्रापि श्रावणी श्रावणमासवर्तिनी काचिद्रात्रिरिति । लघुविक्रम इत्यग्रेण संबन्धः । लघुविक्रमेति पाठे शीघ्रगमनेति रात्रिविशेषणम् १३

१४-१५ ] ति० टी०—मुनिं वाल्मीकिम् ॥ १४ ॥ १५ ॥

रा० टी०—प्रभात इति । प्रभाते पश्चान्मुखस्सन् ययौ ॥ १४ ॥

रा० टी०—स इति । पथि सप्तरात्रोषितः शत्रुघ्नः यमुनातीरं गत्वा ऋषीणामाश्रमे वासमभ्ययात् कर्तुमारभत ॥१५॥

गो० टी०—प्रभात इति । मुनिं वाल्मीकिम् ॥१४॥१५॥

१६ ] ति० टी०—स तत्र यमुनातीरे । यत्तु गङ्गातीर इति कतकस्तत्पूर्वापरसंदर्भविरुद्धम् ॥ १६ ॥

रा० टी०—स इति । तत्राश्रमेषु वासं चक्रे ॥ १६ ॥

गो० टी०—स इति । मुनिभिः सार्धमित्यनेन सेना गङ्गातीर एव स्थापितेति सूचितम् ॥ १६ ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरा० भूषणे मणिमुकुटाख्याने उ०श्रीरामायणव्याख्याने षट्षष्टितमः सर्गः ॥ ६६ ॥

१७ ] ति० टी०—सकाञ्चनाद्यैरिति । काञ्चनेति च्यवनस्य नामान्तरम् । 'सभार्गवाद्यैः' इति पाठान्तरम् ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्षष्टितमः सर्गः ॥६६॥

रा० टी०—स इति । स शत्रुघ्नः समेतैः काञ्चनाद्यैः च्यवनप्रभृतिभिर्मुनिभिस्सह बहुभिः कथाप्रकारैः विलक्षणकथाभिः रजनीं विरामयामास ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षट्षष्टितमः सर्गः ॥ ६६ ॥

१-३ ] ति० टी०—अथ रात्र्यामिति । प्रवृत्तायां जातायां लवणबलं शूलबलम् । पूर्वं शूलेन विनाशिताश्च के इति पप्रच्छेति संबन्धः ॥ १-३ ॥

रा० टी०—प्रातःकालिकं शत्रुघ्नवृत्तमाह—अथेत्यादिभिः । शत्रुघ्नः लवणस्य बलं च्यवनं यथा यथावत् पप्रच्छ ॥ १ ॥

गो० टी०—अथेत्यादि । प्रवृत्तायामागतायामित्यर्थः । पप्रच्छ शूलवृत्तान्तमिति शेषः ॥ १ ॥

रा० टी०—तदाकारमाह—शूलस्येति । अनेन शूलं मुख्यं यस्य तेन लवणेन यथावत् द्वन्द्वयुद्धमुपागतास्सन्तः के जनाः पूर्वं शूलस्य शूलेन विनाशिताः ॥ २ ॥

रा० टी०—तस्येति । च्यवनो रघुनन्दनं प्रत्युवाच ॥३॥

गो० टी०—शूलस्येति । अनेन द्वन्द्वयुद्धमुपागताः के पूर्वं शूलेन निपातिता इति पप्रच्छेति योजना । ब्रह्मन्नित्यारभ्य प्रश्नवचनम् । अनेनेति लवणः परामृश्यते । अनेन लवणबलं शूलबलं च पृष्टं भवति ॥ २ ॥ ३ ॥

१ समेतं इति गो० पाठः ।

असंख्येयानि कर्माणि यान्यस्य रघुनन्दन । इक्ष्वाकुवंशप्रभवे यद्वृत्तं तच्छृणुष्व मे ॥ ४ ॥
अयोध्यायां पुरा राजा युवनाश्वसुतो बली । मांधाता इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ५ ॥
स कृत्वा पृथिवीं कृत्स्नां शासने पृथिवीपतिः । सुरलोकमितो जेतुमुद्योगमकरोन्नृपः ॥ ६ ॥
इन्द्रस्य च भयं तीव्रं सुराणां च महात्मनाम् । मांधातरि कृतोद्योगे देवलोकजिगीषया ॥ ७ ॥
अर्धासनेन शक्रस्य राज्यार्धेन च पार्थिवः । वन्द्यमानः सुरगणैः प्रतिज्ञामध्यरोहत ॥ ८ ॥
तस्य पापमभिप्रायं विदित्वा पाकशासनः । सान्त्वपूर्वमिदं वाक्यमुवाच युवनाश्वजम् ॥ ९ ॥
राजा त्वं मानुषे लोके न तावत्पुरुषर्षभ । अकृत्वा पृथिवीं वश्यां देवराज्यमिहेच्छसि ॥ १० ॥
यदि वीर समग्रा ते मेदिनी निखिला वशे । देवराज्यं कुरुष्वेह सभृत्यबलवाहनः ॥ ११ ॥
इन्द्रमेवं ब्रुवाणं तं मांधाता वाक्यमब्रवीत् । क्व मे शक्र प्रतिहतं शासनं पृथिवीतले ॥ १२ ॥
तमुवाच सहस्राक्षो लवणो नाम राक्षसः । मधुपुत्रो मधुवने न तेऽऽज्ञां कुरुतेऽनघ ॥ १३ ॥
तच्छ्रुत्वा विप्रियं घोरं सहस्राक्षेण भाषितम् । व्रीडितोऽवाङ्मुखो राजा व्याहर्तुं न शशाक ह ॥ १४ ॥
आमन्त्र्य तु सहस्राक्षं प्रायात्किंचिदवाङ्मुखः । पुनरेवागमच्छ्रीमानिमं लोकं नरेश्वरः ॥ १५ ॥
स कृत्वा हृदयेऽमर्षं सभृत्यबलवाहनः । आजगाम मधोः पुत्रं वशे कर्तुमरिंदमः ॥ १६ ॥
स काङ्क्षमाणो लवणं युद्धाय पुरुषर्षभः । दूतं संप्रेषयामास सकाशं लवणस्य सः ॥ १७ ॥
स गत्वा विप्रियाण्याह बहूनि मधुनः सुतम् । वदन्तमेवं तं दूतं भक्षयामास राक्षसः ॥ १८ ॥

४-७ ] ति० टी०—अस्य शूलस्य लवणस्य चासंख्येयानि कर्माणि यानि सन्ति तेषु इक्ष्वाकुवंशप्रभवे मांधातरि यन्महत्कर्मास्य वृत्तं तच्छृणुष्व ॥ ४-७ ॥

रा० टी०—तदाकारमाह—असंख्येयानीति । असंख्येयानि यान्यस्य लवणस्य कर्माणि तेषां मध्ये इक्ष्वाकुवंशप्रभवे यत्कर्म प्रवृत्तं तन्मे शृणुष्व ॥ ४ ॥

रा० टी०—तत्कर्माण्येवाह—अयोध्यायामित्यादिभिः । मांधाता इति विख्यातः युवनाश्वसुतः अयोध्यायां राजा बभूवेति शेषः ॥ ५ ॥

रा० टी०—स इति । पृथिवीपतिर्मान्धाता पृथिवीं शासने स्ववशे कृत्वा सुरलोकं जेतुमितः अयोध्यातः उद्योगमकरोत् ॥ ६ ॥

रा० टी०—इन्द्रस्येति । मांधातरि कृतोद्योगे सति इन्द्रस्य सुराणां च तीव्रं भयमभवदिति शेषः ॥ ७ ॥

गो० टी०—असंख्येयानीति । अस्य शूलस्य यानि शत्रुसंहारकर्माणि तान्यसंख्येयानि । तत्र प्रसिद्धमेकं दर्शयति—इक्ष्वाकुवंशप्रभव इति । यद्वृत्तं यद्व्यापारम् तच्छृणुष्व ॥ ४-७ ॥

८-९ ] ति० टी०—शक्रस्यार्धासनेनार्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वन्द्यमानः स्थास्ये इति प्रतिज्ञां कृत्वा दिवमध्यरोहत । राजेत्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—अर्द्धेति । शक्रस्यार्द्धासनेन राज्यार्द्धेन च युक्तोपि पार्थिवो मांधाता प्रतिज्ञां सर्वं ग्रहीतुं संकल्पमध्यारोहत अकरोत् ॥ ८ ॥

रा० टी०—तस्येति । पाकशासन इन्द्रः तस्य मांधातुः पापमभिप्रायं ज्ञात्वा सान्त्वपूर्वं वाक्यमुवाच ॥ ९ ॥

गो० टी०—अर्धेति । शक्रस्यार्धासनेन अर्धराज्येन च युक्तः पार्थिवो राजा भूत्वा सुरगणैर्वन्द्यमानः स्थास्य इति प्रतिज्ञां कृत्वा दिवमध्यारोहत ॥ ८ ॥ ९ ॥

१० ] ति० टी०—तावत्प्रथमं मानुषे एव लोके सर्वात्मना राजा नासि, स त्वं पृथिवीमेव वश्यामकृत्वा कथमिह देवराज्यमिच्छसि ॥ १० ॥

रा० टी०—तदाकारमाह—राजेति द्वाभ्याम् । यस्त्वं देवराज्यमिहेच्छसि स त्वं पृथिवीं निखिलवसुधां वश्यामकृत्वा मानुषे लोकेपि राजा न ॥ १० ॥

गो० टी०—राजा त्वमिति । तावत्प्रथमतः । मानुष एव लोके सर्वात्मना न राजासि स त्वं पृथिवीमेव वश्यामकृत्वा कथमिह देवराज्यमिच्छसि ॥ १०-१२ ॥

११-१२ ] ति० टी०—यदि समग्रा मेदिनी ते तव वशे भविष्यति तदा देवराज्यं कुरु ॥ ११ ॥ १२ ॥

रा० टी०—यदीति । यदि समग्रा अग्रभागसहिता निखिला मेदिनी ते वशे भवेदिति शेषः तदा इह लोके राज्यं कुरुष्व ॥ ११ ॥

रा० टी०—इन्द्रमिति । हे शक्र ! पृथिवीतले मे शासनं क्व प्रतिहतमिति वाक्यं मांधाता अब्रवीत् ॥ १२ ॥

१३-१८ ] ति० टी०—न ते ज्ञाम् । न ते आज्ञामित्यर्थः । संधिरार्षः ॥ १३-१८ ॥

१ मान्धातेति स विख्यात इति गो. पा. । २ द्विधेति गो. पाठः । ३ ह्रीति गो. पाठः ।

चिरायमाणे दूते तु राजा क्रोधसमन्वितः । अर्दयामास तद्रक्षः शरवृष्ट्या समन्ततः ॥ १९ ॥
ततः प्रहस्य तद्रक्षः शूलं जग्राह पाणिना । वधाय सानुबन्धस्य मुमोचायुधमुत्तमम् ॥ २० ॥
तच्छूलं दीप्यमानं तु सभृत्यबलवाहनम् । भस्मीकृत्वा नृपं भूमौ[1] लवणस्यागमत्करम् ॥ २१ ॥
एवं स राजा सुमहान्हतः सबलवाहनः । शूलस्य तु बलं सौम्य अप्रमेयमनुत्तमम् ॥ २२ ॥
श्वः प्रभाते तु लवणं वधिष्यसि न संशयः । अगृहीतायुधं क्षिप्रं ध्रुवो हि विजयस्तव ॥ २३ ॥
लोकानां स्वस्ति चैवं[2] स्यात्कृते कर्मणि च त्वया । एतत्ते सर्वमाख्यातं लवणस्य दुरात्मनः ॥ २४ ॥
शूलस्य च बलं घोरमप्रमेयं नरर्षभ । विनाशश्चैव मांधातुर्यत्नेनाभूच्च पार्थिव ॥ २५ ॥
त्वं श्वः प्रभाते लवणं महात्मन्वधिष्यसे नात्र तु संशयो मे ।
शूलं विना निर्गतमामिषार्थे ध्रुवो जयस्ते भविता नरेन्द्र ॥ ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०–तमिति । मधुवने विद्यमानो लवणो नाम राक्षसः ते आज्ञां न कुरुते इति वाक्यं सहस्राक्ष उवाच आ-ज्ञाशब्दाकारलोप आर्षः ज्ञाशब्दस्यैवाज्ञेत्यर्थो वा ॥ १३ ॥

रा० टी०–तदिति । सहस्राक्षेण भाषितं श्रुत्वा व्रीडितः अत एव अवाङ्मुखो राजा व्याहर्तुं न शशाक ॥ १४ ॥

रा० टी०–आमन्त्र्येति । किञ्चिदवाङ्मुखो राजा सहस्राक्षमामन्त्र्य तदाज्ञां गृहीत्वा प्रायात् आगच्छत् अत एव इमं मानुषं लोकं पुनरागमत् प्राप्नोत् ॥ १५ ॥

रा० टी०–स इति । सः मांधाता मधोः पुत्रं वशीकर्तुमाजगाम मधुवनमिति शेषः ॥ १६ ॥

रा० टी०–स इति । युद्धाय लवणं काङ्क्षमाणस्सः वायुवेगस्स राजा लवणस्य सकाशं समीपं दूतं सम्प्रेषयामास स वायुः । परदेशदूरगमनमित्यादिना सशब्दस्य वायुपरत्वम् ॥ १७ ॥

रा० टी०–स इति । स दूतो गत्वा मधुनस्सुतं विप्रियाणि अप्रियाणि वचांस्याह एवं वदन्तं दूतं राक्षसो लवणो भक्षयामास ॥ १८ ॥

गो० टी०–तमिति । तेज्ञामिति संधिरार्षः । ते आज्ञाम् ॥ १३—१८ ॥

१९-२२ ] ति० टी०–चिरायमाणे विलम्बं कुर्वाणे १९-२२

रा० टी०–चिरायेति । दूते चिरायमाणे विलम्बं कुर्वति सति क्रोधसमन्वितो राजा रक्षो लवणं मर्दयामास ॥ १९ ॥

रा० टी०–तत इति । रक्षो लवणस्सानुबन्धस्य सपरिकरस्य मान्धातुर्वधाय शूलं जग्राह मुमोच च ॥ २० ॥

रा० टी–तदिति । शूलं सभृत्यबलवाहनं नृपं भस्मीकृत्वा लवणस्य करमगमत् ॥ २१ ॥

रा० टी०–एवमिति । सबलवाहनो राजा एवं हतः अतः शूलस्य बलमप्रमेयं विद्धीति शेषः ॥ २२ ॥

गो० टी०–चिरायमाण इति । चिरायमाणे विलम्बं कुर्वाणे ॥ १९—२२ ॥

२३–२६ ] ति० टी०–अथ श्रुतशूलबलं प्रति स्वविजयसंदेहनिवृत्तय आह—श्वः प्रभाते इति ॥ २३–२६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

रा० टी०–ननु शूलस्यैवं बलवत्वे मम विजयः कथमित्यत आह—श्वरिति । अगृहीतायुधं लवणं श्वरागामिनि प्रभाते वधिष्यसि अतस्ते विजयो ध्रुवः ॥ २३ ॥

रा०टी०–लोकानामिति । एवं कर्मणि त्वया कृते सति लोकानां स्वस्ति स्यात् अर्द्धं पृथक् । एतदिति । लवणस्य शूलस्य एतद्बलं सर्वमाख्यातं येन बलेन मांधातुर्विनाशो यत्नेन इन्द्रप्रयत्नेनाभूत् सार्द्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

रा० टी०–उपसंहरन्नाह–त्वमिति । आमिषार्थं शूलं विना निर्गतं लवणं त्वं श्वः प्रभाते वधिष्यस्यतस्ते विजयो ध्रुवो भविता ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तषष्टितमः सर्गः ॥ ६७ ॥

गो० टी०–अथ श्रुतशूलबलं प्रति स्वविजयसन्देहनिवृत्त्यर्थ आह—श्वः प्रभात इत्यादि ॥ २३—२६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तषष्टितमः सर्गः ॥ ६७ ॥

१ भूव इति गो. पाठः । २ एवेति गो. पाठः ।

## अष्टषष्टितमः सर्गः ।

प्रभाते धनुष्पाणिः शत्रुघ्नो यमुनामुत्तीर्य मधुपुरद्वारि आमिषार्थं बहिर्गतं लवणं पालयन्स्थितः । ततः प्राणिनां भारमुद्वहन् स क्रूरकर्मा प्रत्यागच्छन् तेन दृष्टो द्वन्द्वयुद्धं याचितः क्रूरशब्दैर्मर्मभेदिभिर्विद्धश्च ।

कथां कथयतस्तेषां जयं चाकाङ्क्षतां शुभम् । व्यतीता रजनी शीघ्रं शत्रुघ्नस्य महात्मनः ॥ १ ॥
ततः प्रभाते विमले तस्मिन्काले स राक्षसः । निर्गतस्तु पुराद्वीरो भक्ष्याहारप्रचोदितः ॥ २ ॥
एतस्मिन्नन्तरे वीरैः उत्तीर्य यमुनां नदीम् । तीर्त्वा मधुपुरद्वारि धनुष्पाणिरतिष्ठत ॥ ३ ॥
ततोऽर्धदिवसे प्राप्ते क्रूरकर्मा स राक्षसः । आगच्छद्बहुसाहस्रं प्राणिनां भारमुद्वहन् ॥ ४ ॥
ततो ददर्श शत्रुघ्नं स्थितं द्वारि धृतायुधम् । तमुवाच ततो रक्षः किमनेन करिष्यसि ॥ ५ ॥
ईदृशानां सहस्राणि सायुधानां नराधम । भक्षितानि मया रोषात्कालेनानुगतो ह्यसि ॥ ६ ॥
आहारश्चाप्यसंपूर्णो ममायं पुरुषाधम । स्वयं प्रविष्टोऽद्य मुखं कथमासाद्य दुर्मते ॥ ७ ॥
तस्यैवं भाषमाणस्य हसतश्च मुहुर्मुहुः । शत्रुघ्नो वीर्यसंपन्नो रोषादश्रूण्यवासृजत् ॥ ८ ॥
तस्य रोषाभिभूतस्य शत्रुघ्नस्य महात्मनः । तेजोमया मरीच्यस्तु सर्वगात्रैर्विनिष्पतन् ॥ ९ ॥
उवाच च सुसंक्रुद्धः शत्रुघ्नः स निशाचरम् । योद्धुमिच्छामि दुर्बुद्धे द्वन्द्वयुद्धं त्वया सह ॥ १० ॥
पुत्रो दशरथस्याहं भ्राता रामस्य धीमतः । शत्रुघ्नो नाम शत्रुघ्नो वधकाङ्क्षी तवागतः ॥ ११ ॥

१ ] ति० टी०—अथ प्रातःकाले लवणे कचिद्गते मधुपुरद्वारं निरुध्य स्थितेन शत्रुघ्नेन मध्याह्ने प्रतिनिवृत्तस्य युद्धायाह्वानम्—कथामिति । तेषां वचः शृण्वानस्य शत्रुघ्नस्य रजनी व्यतीता ॥ १ ॥

रा० टी०—प्रातःकालिकं वृत्तमाह—कथामित्यादिभिः । तेषामृषीणां कथां कथयतां सतां शत्रुघ्नस्य रजनी शीघ्रं व्यतीता १

गो० टी०—कथामित्यादि ॥ १ ॥

२–४ ] ति० टी०—भक्ष्यस्याहार आहरणं तेन प्रचोदितः प्रेरितः ॥ २–४ ॥

रा०टी०-तत इति । भक्ष्यस्य आहारेणानयनेन प्रचोदितः प्रेरितः भक्ष्यानयनमना इत्यर्थः लवणः प्रभाते पुरान्निर्गतः २

रा० टी०—एतस्मिन्निति । वीरश्शत्रुघ्नः यमुनानदीमुत्तीर्य मधुपुरद्वारि तीर्त्वा प्राप्य अतिष्ठत् ॥ ३ ॥

रा० टी०—तत इति । राक्षसो लवणः प्राणिनां बहुसाहस्रं भारमुद्वहन् अर्धदिवसे ततो वनात् आगच्छत् ॥ ४ ॥

गो० टी०—तत इति । भक्ष्याहारप्रचोदितः भक्ष्यस्याहारः आहरणं तेन प्रचोदितः ॥ २–४ ॥

५–६ ] ति० टी०—किमनेन । आयुधेनेत्यर्थः ॥५॥६॥

रा० टी०—तत इति । रक्षः शत्रुघ्नं ददर्श अनेनायुधेन किं करिष्यसीत्युवाच च ॥ ५ ॥

रा० टी०—मन्नायुधेन त्वां हनिष्यामीत्यत आह—ईदृशानामिति । ईदृशानां सायुधानां सहस्राणि मया भक्षितानि अतः त्वं कालेन अन्तसमयेन अनुगतोसि ॥ ६ ॥

गो० टी०—तत इति । अनेनायुधेन ॥ ५–७ ॥

७–८ ] ति० टी०—स्वयमागत्यागत्य मम मुखं कथमद्य प्रविष्टोऽसि ॥ ७ ॥ ८ ॥

रा० टी०—आहार इति ममानीतोयमाहारः असंपूर्णः परिपूर्णतृप्तिकारको न अतः स्वयमासाद्य प्राप्य मम मुखं प्रविष्टस्त्वं कथं निवर्त्तसे इति शेषः ॥ ७ ॥

रा० टी०—तस्येति । एवं भाषमाणस्य हसतश्च तस्य लवणस्याग्रे शत्रुघ्नो रोषादश्रूण्यवासृजत् अत्यजत् ॥ ८ ॥

गो० टी०—तस्येति । रोषादिति । दुःखानन्दाभ्यामिव रोषादप्यश्रु जायते ॥ ८ ॥

९–११ ] ति० टी०—गात्रैर्विनिष्पतन्विनिरपतन् । मरीच्यो मरीचयः ॥ ९–११ ॥

रा० टी०—तस्येति । शत्रुघ्नस्य सर्वगात्रैः तेजोमया मरीच्यो मरीचयः विनिष्पतन् विनिरपतन् ॥ ९ ॥

रा० टी०—उवाचेति । शत्रुघ्नः निशाचरमुवाच तदाकारमाह रामस्य भ्राता तव वधाकाङ्क्षी आगतः शत्रुघ्नो नामाहं त्वया सह द्वन्द्वयुद्धं प्रहारो यथा भवति तथा योद्धुमिच्छामि श्लोकद्वयमेकान्वयि ॥ १० ॥ ११ ॥

गो० टी०—तस्येति । गात्रैः विनिष्पतन्निति । गात्रेभ्यो विनिष्पतन्नित्यर्थः ॥ ९–११ ॥

१ कथयतामिति गो. रा. पाठः । २ वीर इति गो.पाठः । ३ वीरः शत्रुघ्न इति गो. पाठः । ४ कालमाकाङ्क्षसे न किमिति गो. पाठः । ५ कस्येति गो. पाठः । ६ निस्येति गो. पाठः ।

तस्य मे युद्धकामस्य द्वन्द्वयुद्धं प्रदीयताम् । शत्रुस्त्वं सर्वभूतानां न मे जीवन्गमिष्यसि ॥ १२ ॥
तस्मिंस्तथा ब्रुवाणे तु राक्षसः प्रहसन्निव । प्रत्युवाच नरश्रेष्ठं दिष्ट्या प्राप्तोऽसि दुर्मते ॥ १३ ॥
मम मातृष्वसुर्भ्राता रावणो नाम राक्षसः । हतो रामेण दुर्बुद्धे स्त्रीहेतोः पुरुषाधम ॥ १४ ॥
तच्च सर्वं मया क्षान्तं रावणस्य कुलक्षयम् । अवज्ञां पुरतः कृत्वा मया यूयं विशेषतः ॥ १५ ॥
निहताश्च हि ते[2] सर्वे परिभूतास्तृणं यथा । भूताश्चैव भविष्याश्च यूयं च पुरुषाधमाः ॥ १६ ॥
तस्य ते युद्धकामस्य युद्धं दास्यामि दुर्मते । तिष्ठ त्वं च मुहूर्तं तु यावदायुधमानये ॥ १७ ॥
ईप्सितं यादृशं तुभ्यं सज्जये यावदायुधम् । तमुवाचाशु शत्रुघ्नः क्व मे जीवन्गमिष्यसि ॥ १८ ॥
स्वयमेवागतः शत्रुर्न मोक्तव्यः कृतात्मना । यो हि विक्लवया बुद्ध्या प्रसरं शत्रवे दिशेत्[4] ॥
स हतो मन्दबुद्धिः[5] स्याद्यथा कापुरुषस्तथा । ॥ १९ ॥
तस्मात्सुदृष्टं कुरु जीवलोकं शरैः शितैस्त्वां विविधैर्नयामि ।
यमस्य गेहाभिमुखं हि पापं रिपुं त्रिलोकस्य च राघवस्य । ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

---

१२-१३ ] ति० टी० — मे सकाशात् जीवन्न गमिष्यसि १२।१३

रा० टी० — तस्येति । द्वन्द्वयुद्धं मे प्रदीयतां त्वयेति शेषः । तत्र हेतुः सर्वभूतानां शत्रुस्त्वं मे सकाशात् जीवन्न गमिष्यसि १२

रा० टी० – तस्मिन्निति । राक्षसः प्रत्युवाच—तदाकारमाह दिष्ट्या भाग्यवत्त्वेनैव त्वं प्राप्तोऽसि ॥१३॥

गो० टी० — तस्येति । मत्तो जीवन्न गमिष्यसि ॥१२।१३॥

१४ ] ति० टी० — मम मातृष्वसुर्भ्राता । कुम्भीनसीसम्बन्धत सूर्पणखाऽस्य मातृष्वसा तद्भ्राता रावणः ॥१४॥

रा० टी० — त्वं मयावश्यं हन्तव्य एवेति बोधयन्नाह—ममेति । मम मातृष्वसुर्भ्रात रावणो हतः ॥ १४ ॥

गो० टी० — मम मातृष्वसुरिति । अयमर्थः पूर्वमुक्तः १४

१५ ] ति० टी० — मयावज्ञां पुरतः कृत्वा यूयं विशेषतः क्षान्ता इत्यनुकर्षः ॥ १५ ॥

रा० टी० — तदिति । रावणस्य कुलक्षयं कुलक्षयदुःखं मया क्षान्तमवज्ञामस्माकमनादरं पुरतः कृत्वा विद्यमाना यूयं मयि मया विशेषतः क्षान्ताः लिङ्गविपरिणामेनात्राप्यन्वयः क्षयशब्दः अर्शआद्यजन्तः ॥ १५ ॥

गो० टी० — तच्चेति । मयावज्ञां पुरतः कृत्वा यूयं विशेषतः क्षान्ता इति संबन्धः । मया पूर्वं विशेषत इति पाठान्तरम् १५

१६-१७ ] ति० टी० — भूताश्च भविष्याश्च यूयं वर्तमानाश्च पुरुषाधमाः सर्वेऽपि मे मया निहताः । सुकरहननत्वं वर्तमानेषु व्यङ्ग्यम् । परे तृणं यथा तथा परिभूताश्च । मांधातृपरिभवेन परिभूता इति युष्मास्ववज्ञां कृत्वा इतः पूर्वं भवन्तो न हता इति भावः ॥ १६ ॥ १७ ॥

रा० टी० — ननु सामर्थ्याभावाच्छान्तं किं तादृशक्षमयेत्यत आह—निहता इति । ते तव कुलप्रधानाः ये भूताः ते मया निहताः अत एव भविष्याः तदपेक्षया भविष्यत्कालकाः यूयं तृणमिव परिभूताः अनादृताः ॥ १६ ॥

गो० टी० — निहताश्चेति । भूताश्च भविष्याश्च वर्तमानाश्च पुरुषाः सर्वेऽपि मे मया निहताः । केचित्परे तृणं यथा भवति तथा परिभूताश्च । अलक्षीकृताश्च ॥ १६ ॥

रा० टी० — तस्येति । ते युद्धं दास्यामि अतो यादृशमायुधं तुभ्यं त्वदर्थमीप्सितं तादृशमायुधं यावदानये सज्जये च तावन्मुहूर्तं त्वं तिष्ठ सार्द्धश्लोक एकान्वयी ॥ १७ ॥

गो० टी० — तस्येति । यादृशं तुभ्यमीप्सितं तादृशं युद्धं दास्यामि । सज्जये यावदायुधमिति । आयुधं गृहीत्वा सज्जयिष्ये तावत्तिष्ठेत्यर्थः ॥ १७ ॥

१८ ] ति० टी० — तुभ्यं त्वां हन्तुं यादृशमायुधं ममेप्सितं तादृशं यावत्सज्जये सज्जं करोमि । त्वं तावत्तिष्ठेति शेषः ॥ १८ ॥

रा० टी० — तमिति । शत्रुघ्नः तं लवणमुवाच तदाकारमाह स्वयमागतश्शत्रुर्न मोक्तव्यः अतः जीवन् त्वं क्व गमिष्यसि न त्यक्ष्यामीति तात्पर्यम् ॥ १८ ॥

गो० टी० — तमिति । तमायुधं जिघृक्षुमित्यर्थः ॥ १८ ॥

१९-२० ] ति० टी० — प्रसरमवकाशम् ॥ १९ ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टषष्टितमः सर्गः ॥ ६८ ॥

रा० टी० — त्यागे दोषमाह—य इति । विक्लवया विचाररहितया बुद्ध्या यः शत्रवे प्रसरमवकाशं दिशेत् दद्यात् स मन्दबुद्धिः कापुरुष इव हतस्स्यात् ॥ १९ ॥

रा० टी० — तस्मादिति । त्रिलोकस्य राघवस्य च रिपुमतः पापं तन्मयमत एव यमस्य गेहाभिमुखं त्वां शितैश्श-

---

१ राक्षसापि इति गो.पाठः । २ मे इति गो.पाठः । ३ शत्रुर्यदृच्छयादृष्ट इति गो.पाठः । ४ ददाविति गो.पाठः । ५ मन्दबुद्धिरवादिति गो.पाठः ।

# एकोनसप्ततितमः सर्गः ।

शत्रुघ्नवाक्प्रहारैः पीडितः स निशाचरो गृहं न गत्वा शूलं विनापि वृक्षादिभिरेव युयुधे शत्रुघ्नोपीतरायुधैरजय्यं तं ज्ञात्वाग्रज-वितीर्णामोघशरेणान्ते कालवशं निनाय ।

तच्छ्रुत्वा भाषितं तस्य शत्रुघ्नस्य महात्मनः । क्रोधमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ १ ॥
पाणौ पाणिं से निष्पिष्य दन्तान्कटकटाय्य च । लवणो रघुशार्दूलमाह्वयामास चासकृत् ॥ २ ॥
तं ब्रुवाणं तथा वाक्यं लवणं घोरदर्शनम् । शत्रुघ्नो देवशत्रुघ्न इदं वचनमब्रवीत् ॥ ३ ॥
शत्रुघ्नो न तदा जातो यदान्ये निर्जितास्त्वया । तदद्य बाणाभिहतो व्रज त्वं यमसादनम् ॥ ४ ॥
ऋषयोऽप्यद्य पापात्मन्मया त्वां निहतं रणे । पश्यन्तु विप्रा विद्वांसस्त्रिदशा इव रावणम् ॥ ५ ॥
त्वयि मद्बाणनिर्दग्धे पतितेऽद्य निशाचरे । पुरे जनपदे चापि क्षेममेव भविष्यति ॥ ६ ॥
अद्य मद्बाहुनिष्क्रान्तः शरो वज्रनिभाननः । प्रवेक्ष्यते ते हृदयं पद्ममंशुरिवार्कजः ॥ ७ ॥
एवमुक्तो महावृक्षं लवणः क्रोधमूर्च्छितः । शत्रुघ्नोरसि चिक्षेप स च तं शतधाच्छिनत् ॥ ८ ॥
तद्दृष्ट्वा विफलं कर्म राक्षसः पुनरेव तु । पादपान्सुबहून्गृह्य शत्रुघ्नायासृजद्बली ॥ ९ ॥
शत्रुघ्नश्चापि तेजस्वी वृक्षानापततो बहून् । त्रिभिश्चतुर्भिरेकैकं चिच्छेद नतपर्वभिः ॥ १० ॥
ततो बाणमयं वर्षं व्यसृजद्राक्षसोपरि । शत्रुघ्नो वीर्यसंपन्नो विव्यथे न स राक्षसः ॥ ११ ॥
ततः प्रहस्य लवणो वृक्षमुद्यम्य वीर्यवान् । शिरस्यभ्यहनच्छूरं स्रस्ताङ्गः स मुमोह वै ॥ १२ ॥
तस्मिन्निपतिते वीरे हाहाकारो महानभूत् । ऋषीणां देवसङ्घानां गन्धर्वाप्सरसां तथा ॥ १३ ॥

---

रैर्नयामि यमस्य गेहमिति शेषः तस्मात् जीवलोकं सुदृष्टं कुरु पुनर्न द्रक्ष्यसीति तात्पर्यम् ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

गो॰ टी॰—यो हीति । प्रसरमवकाशम् । शूलग्रहणार्थमित्यर्थः ॥ १९ ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टषष्टितमः सर्गः ॥ ६८ ॥

---

१ ] ति॰ टी॰—अथ लवणवधः—तदिति ॥ १ ॥

रा॰ टी॰—शत्रुघ्नवचनश्रवणानंतरकालिकं वृत्तमाह—तदित्यादिभिः । क्रोधमाहारयत् प्राप अत एव तिष्ठतिष्ठेत्यब्रवीत् १

गो॰ टी॰—अथ लवणवधः—तच्छ्रुत्वेत्यादि ॥१–९ ॥

२–६ ] ति॰ टी॰—कटकटाय्य कटकटाशब्दवतः कृत्वा ॥ २–६ ॥

रा॰ टी॰—पाणाविति । लवणः रघुशार्दूलमाह्वयामास २

रा॰ टी॰—तमिति । शत्रुघ्नः इदमब्रवीत् ॥ ३ ॥

रा॰ टी॰—तदाकारमाह—शत्रुघ्न इति । यदा अन्ये राजानः त्वया निर्जिताः तदा शत्रुघ्नो न जातः तत्तस्माद्धेतोः अद्य शत्रुघ्नजननसमये बाणाभिहतस्त्वं यमसादनं व्रज ॥ ४ ॥

रा॰ टी॰—ऋषय इति । ऋषयो विद्वांसो विप्राः मया हतं त्वां हतं रावणं त्रिदशा देवा इव पश्यन्तु ॥ ५ ॥

रा॰ टी॰—त्वयीति । निशाचरे त्वयि मद्बाणनिर्दग्धे अत एव पतिते सति क्षेममेव भविष्यति ॥ ६ ॥

७–११ ] ति॰ टी॰—वज्रनिभाननो वज्रायुधसमाग्रभागः । अंशुः किरणः ॥ ७–११ ॥

रा॰ टी॰—अद्येति । मद्बाहुनिष्क्रान्तश्शरः अर्कजोंऽशुः पद्ममिव ते हृदयं प्रवेक्ष्यते ॥ ७ ॥

रा॰ टी॰—एवमिति । लवणो महावृक्षं शत्रुघ्नोरसि चिक्षेप स शत्रुघ्नः तं वृक्षं शतधाच्छिनत् ॥ ८ ॥

रा॰ टी॰—तदिति । राक्षसः कर्म स्वकृतव्यापारं विफलं दृष्ट्वा पादपान् गृह्य गृहीत्वा असृजत् ॥ ९ ॥

रा॰ टी॰—शत्रुघ्न इति । शत्रुघ्नः आपततो वृक्षान् एकैकं वृक्षं त्रिभिश्चतुर्भिर्वा नतपर्वभिश्शरैः चिच्छेद ॥ १० ॥

रा॰ टी॰—तत इति । शत्रुघ्नः राक्षसोपरि बाणमयं वर्षं व्यसृजत् राक्षसस्तु न विव्यथे ॥ ११ ॥

गो॰ टी॰—शत्रुघ्नश्चेति । एकैकमिति । वृक्षमिति शेषः ॥ १०–१३ ॥

१२–१३ ] ति॰ टी॰—स्रस्ताङ्गो गलिताङ्गः ॥१२॥ १३ ॥

रा॰ टी॰—तत इति । लवणो वृक्षमुद्यम्य उत्थाप्य शूरं शत्रुघ्नं शिरस्यभ्यहनत् अभ्यहन् अत एव स्रस्तं प्रकम्पितमङ्गं यस्य स शत्रुघ्नो मुमोह ॥ १२ ॥

रा॰ टी॰—तस्मिन्निति । तस्मिन् शत्रुघ्ने निपतिते सति ऋषिप्रभृतीनां महान् हाहाकारोऽभूत् ॥ १३ ॥

---

१ वीति गो. पाठः । २ निशाचरेति गो. पाठः । ३ उरसीति गो. पाठः ।

तमवज्ञाय तु हतं शत्रुघ्नं भुवि पातितम् । रक्षो लब्धान्तरमपि न विवेश स्वमालयम् ॥ १४ ॥
नापि शूलं प्रजग्राह तं दृष्ट्वा भुवि पातितम् । ततो हत इति ज्ञात्वा तान्भक्षान्समुदावहत् ॥ १५ ॥
मुहूर्ताल्लब्धसंज्ञस्तु पुनस्तस्थौ धृतायुधः । शत्रुघ्नो वै पुरद्वारि ऋषिभिः संप्रपूजितः ॥ १६ ॥
ततो दिव्यममोघं तं जग्राह शरमुत्तमम् । ज्वलन्तं तेजसा घोरं पूरयन्तं दिशो दश ॥ १७ ॥
वज्राननं वज्रवेगं मेरुमन्दरसंनिभम् । नतं पर्वसु सर्वेषु संयुगेष्वपराजितम् ॥ १८ ॥
असृक्चन्दनदिग्धाङ्गं चारुपत्रं पतत्रिणम् । दानवेन्द्राचलेन्द्राणामसुराणां च दारुणम् ॥ १९ ॥
तं दीप्तमिव कालाग्निं युगान्ते समुपस्थितम् । दृष्ट्वा सर्वाणि भूतानि परित्रासमुपागमन् ॥ २० ॥
सदेवासुरगन्धर्वं मुनिभिः साप्सरोगणम् । जगद्धि सर्वमस्वस्थं पितामहमुपस्थितम् ॥ २१ ॥
ऊचुश्च देवदेवेशं वरदं प्रपितामहम् । देवानां भयसंमोहो लोकानां संक्षयं प्रति ॥ २२ ॥
[ कच्चिल्लोकक्षयो देव संप्राप्तो वा युगक्षयः । नेदृशं दृष्टपूर्वं च न श्रुतं प्रपितामह ॥ ]
तेषां तद्वचनं श्रुत्वा ब्रह्मा लोकपितामहः । भयकारणमाचष्ट देवानामभयंकरः ॥ २३ ॥
उवाच मधुरां वाणीं शृणुध्वं सर्वदेवताः । वधाय लवणस्याजौ शरः शत्रुघ्नधारितः ॥ २४ ॥
तेजसा तस्य संमूढाः सर्वे स्म सुरसत्तमाः । एषो पूर्वस्य देवस्य लोककर्तुः सनातनः ॥ २५ ॥
शरस्तेजोमयो वत्सा येन वै भयमागतम् । एष वै कैटभस्यार्थे मधुनश्च महाशरः ॥ २६ ॥

१४-१६ ] ति० टी०-लब्धान्तरं शूलग्रहणाय स्वगृहप्रवेशं प्रति लब्धावकाशमपि ॥ १४-१६ ॥

रा० टी०-तमिति । शत्रुघ्नं हतमवज्ञाय लब्धांतरं प्राप्तप्रवेशावसरमपि रक्षस्स्वमालयं न विवेश अत एव शूलं न प्रजग्राह भुवि पातितं शत्रुघ्नं दृष्ट्वा हत इति ज्ञात्वा च भक्ष्यान् समुदावहत् श्लोकद्वयमेकान्वयि ॥ १४ ॥ १५ ॥

रा० टी०-मुहूर्त्तादिति । मुहूर्त्तात् लब्धसञ्ज्ञश्शत्रुघ्नः ऋषिभिस्सम्प्रपूजितस्सन् पुरद्वारि पुनस्तस्थौ ॥ १६ ॥

गो० टी०-तमिति । लब्धान्तरमपि शूलग्रहणं प्रति लब्धावकाशमपीत्यर्थः ॥ १४-१८ ॥

१७ ] ति० टी०-पूरयन्तं दिशो दश । स्वतेजसेति शेषः १७

रा० टी०-तत इति । तेजसा ज्वलन्तमत एव दश दिशः पूरयन्तं शरं जग्राह ॥ १७ ॥

१८ ] ति० टी०-गौरवेण मेरुमन्दरसंनिभम् ॥ १८ ॥

रा० टी०-वज्रेति । वज्रस्याननमिव आननं यस्य नतं पर्वैरपि नमस्कृतं संयुगेषु अपराजितं असृक्चन्दनाभ्यां दिग्धमङ्गं यस्य दानवेन्द्रादीनां दारुणं दारकं युगान्ते समुपस्थितं कालाग्निमिव दीप्तं पतत्रिणं शरं दृष्ट्वा सर्वाणि भूतानि परित्रासमुपागमन् श्लोकत्रयमेकान्वयि ॥ १८-२० ॥

१९-२० ] ति० टी०-असृग्रूपैश्चन्दनैर्लिप्ताङ्गं पतत्रिणं बाणम् । दानवेन्द्ररूपाणामचलेन्द्राणाम् ॥ १९ ॥ २० ॥

गो० टी०-असृगिति । असृक्चन्दनदिग्धाङ्गम् असृग्विशिष्टचन्दनैः लिप्तदेहम् । पतत्रिणं बाणम् । दानवेन्द्ररूपाः अचलेन्द्राः तेषां दारणम् ॥ १९-२६ ॥

२१ ] ति० टी०-मुनिभिः । सहितमिति शेषः । पितामहं चतुर्मुखं ब्रह्माणम् ॥ २१ ॥

रा० टी०-सेति । मुनिभिस्सह सहितमस्वस्थं सर्वं जगत् पितामहं ब्रह्माणमुपस्थितम् ॥ २१ ॥

२२-२३ ] ति० टी०-नेदृशं दृष्टपूर्वं न श्रुतं वा लोकानां संक्षयं प्रति । लोकक्षयो भवेत्किमिति भयसंमोहः ॥ २२ ॥ २३ ॥

रा० टी०-ऊचुरिति । प्रपितामहं ब्रह्माणमूचुः आगता मुनिप्रभृतय इति शेषः तदाकारमाह लोकानां संक्षयं प्रति लोका विनङ्क्ष्यन्तीति सम्भावनया देवानां भयसम्मोहोऽस्तीति शेषः ॥ २२ ॥

रा० टी०-तेषामिति । ब्रह्मा भयकारणमाचष्ट अत एव हे सर्वदेवताः! यूयं शृणुध्वमिति मधुरां वाणीमुवाच सार्द्धश्लोक एकान्वयी ॥ २३ ॥

२४ ] ति० टी०-शत्रुघ्नधारितः । तेन धृत इत्यर्थः ॥ २४ ॥

रा० टी०-तदाकारमाह-वधायेति । लवणस्य वधाय शत्रुघ्नधारितो यः शरः तस्य तेजसा सुरसत्तमास्सम्मूढाः ॥ २४ ॥

२५-२६ ] ति० टी०-एषो पूर्वस्येति । पूर्वस्य लोककर्तुर्देवस्यैष शरः आर्षः संधिः ॥ २५ ॥ २६ ॥

रा० टी०-शरस्य तादृशतेजस्वित्वे कारणं वदन्नाह-एष इत्यादिभिः । येन भयमागतं प्राप्तं स एषः न पूर्वो यस्मात् तस्य नित्यस्येत्यर्थः लोककर्तुर्विष्णोः शरः ॥ २५ ॥

रा० टी०-तच्छरस्योत्पादने हेतुं वदन्नाह—एष इति । कैटभस्य मधुनश्चार्थे निहत्यर्थमेष शरः महात्मना विष्णुना सृष्टः दैत्ययोर्मधुकैटभयोर्वधार्थे येन शरः सृष्टः स एष एव विष्णुः

१ दारणमिति गो. पाठः । २ समुपस्थिते इति गो. पाठः । ३ उवाचेति गो. पाठः । ४ पद्यमिदमधिकं गो. पु. । ५ लोकानामिति गो. पाठः । ६ एष इति गो. पाठः ।

सृष्टो महात्मना तेन वधार्थे दैत्ययोस्तयोः । एक एव प्रजानाति विष्णुस्तेजोमयं शरम् ॥ २७ ॥
एषा एव तनुः पूर्वा विष्णोस्तस्य महात्मनः । इतो गच्छत पश्यध्वं वध्यमानं महात्मना ॥ २८ ॥
रामानुजेन वीरेण लवणं राक्षसोत्तमम् । तस्य ते देवदेवस्य निशम्य वचनं सुराः ॥ २९ ॥
आजग्मुर्यत्र युध्येते शत्रुघ्नलवणावुभौ । तं शरं दिव्यसंकाशं शत्रुघ्नकरधारितम् ॥ ३० ॥
ददृशुः सर्वभूतानि युगान्ताग्निमिवोत्थितम् । अकाशमावृतं दृष्ट्वा देवैर्हि रघुनन्दनः ॥ ३१ ॥
सिंहनादं भृशं कृत्वा ददर्श लवणं पुनः । आहूतश्च पुनस्तेन शत्रुघ्नेन महात्मना ॥ ३२ ॥
लवणः क्रोधसंयुक्तो युद्धाय समुपस्थितः । आकर्णात्स विकृष्याथ तद्धनुर्धन्विनां वरः ॥ ३३ ॥
स मुमोच महाबाणं लवणस्य महोरसि । उरस्तस्य विदार्याशु प्रविवेश रसातलम् ॥ ३४ ॥
गत्वा रसातलं दिव्यः शरो विबुधपूजितः । पुनरेवागमत्तूर्णमिक्ष्वाकुकुलनन्दनम् ॥ ३५ ॥
शत्रुघ्नशरनिर्भिन्नो लवणः स निशाचरः । पपात सहसा भूमौ वज्राहत इवाचलः ॥ ३६ ॥
तच्च शूलं महद्दिव्यं हते लवणराक्षसे । पश्यतां सर्वदेवानां रुद्रस्य वशमन्वगात् ॥ ३७ ॥

एकेषुपातेन भयं निपात्य लोकत्रयस्यास्य रघुप्रवीरः ।
विनिर्बभावुत्तमचापबाणस्तमः प्रणुद्येव सहस्ररश्मिः । ॥ ३८ ॥
ततो हि देवा ऋषिपन्नगाश्च प्रपूजिरे ह्यप्सरसश्च सर्वाः ।
दिष्ट्या जयो दाशरथेरवाप्तस्त्यक्त्वा भयं सर्प इव प्रशान्तः । ॥ ३९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

तेजोमयं शरं प्रजानाति मशकार्थो धूम इत्यादाविवार्थशब्दो निष्टत्तिपरः सार्द्धश्लोक एकान्वयी ॥ २६ ॥ २७ ॥

गो० टी–एष इति । तेन भगवतेत्यर्थः ॥ २७ ॥

२७ ] ति० टी०–तेन भगवतेत्यर्थः । तमेवं तेजोमयं शरमेको विष्णुरेव प्रजानाति तदपरमूर्तित्वात् ॥ २७ ॥

गो० टी०–एक एवेति । महात्मनस्तस्य विष्णोरेषा शरमयी तनुरेव पूर्वा प्राचीनमूर्तिः । एषा एवेत्यसंधिरार्षः२८

२८–३८ ] ति० टी०–तदेवाह—एषा एवेति । असंधिरार्षः । महात्मनस्तस्य विष्णोरेषा शरमयी तनुरेव पूर्वा प्राचीना मूर्तिः । वध्यमानं लवणमित्यन्वयः ॥ २८–३८ ॥

रा० टी०–ननु दाशरथौ शत्रुघ्ने कथं विष्णुत्वमित्यत आह–एषेति । एषा शत्रुघ्नतनुरेव विष्णोः पूर्वा तनुः इतो हेतोः रामानुजेन वध्यमानं लवणं यूयं पश्यध्वम् पश्यत अत एव गच्छत सार्द्धश्लोक एकान्वयी ॥ २८ ॥

रा० टी०–तस्येति । यत्र शत्रुघ्नलवणौ युध्येते तत्र सुरा आजग्मुः ॥ २९ ॥

रा० टी०–तमिति । उत्थितं युगान्ताग्निमिव दिव्यसंकाशं दिव्यत्वेन प्रकाशमानं शत्रुघ्नकरधारितं शरं सर्वभूतानि ददृशुः ३०

रा० टी०–आकाशमिति । रघुनन्दनः सिंहनादं कृत्वा आगतं लवणं पुनर्ददर्श ॥ ३१ ॥

रा० टी०–आहूत इति । शत्रुघ्नेन आहूतो लवणः युद्धाय समुपस्थितोऽभवदिति शेषः ॥ ३२ ॥

रा० टी०–आकर्णादिति । स वायुवेगः स शत्रुघ्नः धनुराकर्णात् विकृष्य लवणस्य महोरसि महाबाणं मुमोच॥३३॥

रा० टी०–उर इति । शरस्तु तस्य लवणस्य उरो विदार्य रसातलं प्रविवेश अद्भं पृथक् ॥ ३४ ॥

रा० टी०–गत्वेति । शरः रसातलं गत्वा इक्ष्वाकुकुलनन्दनं पुनरागमत् ॥ ३५ ॥

रा० टी०–शत्रुघ्नेति । लवणः वज्राहतोऽचल इव भूमौ पपात ॥ ३६ ॥

रा० टी०–तदिति । लवणराक्षसे हते सति तत् रुद्रदत्तशूलं रुद्रस्य वशमन्वगात् ॥ ३७ ॥

रा० टी०–एकेष्विति । रघुप्रवीरः एकेषुपातेन एकबाणप्रहारेण लोकत्रयस्य भयं निपात्य तमः प्रणुद्य सहस्ररश्मिः सूर्य इव विनिर्बभौ ॥ ३८ ॥

गो०टी०–इत इति । वध्यमानं लवणमिति संबन्धः२९–४०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनसप्ततितमः सर्गः ॥६९॥

३९ ] ति० टी०–भयं त्यक्त्वा जयोऽवाप्तः । सर्प इव सर्पसदृशो लवणश्च प्रशान्तः ॥ ३९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनसप्ततितमः सर्गः॥६९॥

रा० टी०–तत इति । भयं त्यक्त्वा विद्यमानस्य दाशरथेः

---

१ तूणमिति गो. पाठः । २ तेनेति गो. पाठः । ३ भृशमिति गो. पाठः ।

## सप्ततितमः सर्गः ।

हते लवणे सेन्द्राग्नयोऽमरास्तत्रैत्य शत्रुघ्नमभिनन्द्य तदिच्छानुरूपवरदानेन परितोष्य दिवमारुरुहुः सोऽपि तस्मिन्पुरे सेनामानाय्य सुदीर्घकालं प्रजाः परिपाल्य द्वादशे वत्सरेऽग्रजचरणदर्शने मतिं दधार ।

हते तु लवणे देवाः सेन्द्राः साग्निपुरोगमाः । ऊचुः सुमधुरां वाणीं शत्रुघ्नं शत्रुतापनम् ॥ १ ॥
दिष्ट्या ते विजयो वत्स दिष्ट्या लवणराक्षसः । हतः पुरुषशार्दूल वरं वरय सुव्रत ॥ २ ॥
वरदास्तु महाबाहो सर्वं एव समागताः । विजयाकाङ्क्षिणस्तुभ्यममोघं दर्शनं हि नः ॥ ३ ॥
देवानां भाषितं श्रुत्वा शूरो मूर्ध्नि कृताञ्जलिः । प्रत्युवाच महाबाहुः शत्रुघ्नः प्रयतात्मवान् ॥ ४ ॥
इयं मधुपुरी रम्या मधुरा देवनिर्मिता । निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥ ५ ॥
तं देवाः प्रीतमनसो बाढमित्येव राघवम् । भविष्यति पुरी रम्या शूरसेना न संशयः ॥ ६ ॥
ते तथोक्त्वा महात्मानो दिवमारुरुहुस्तदा । शत्रुघ्नोऽपि महातेजास्तां सेनां समुपानयत् ॥ ७ ॥
सा सेना शीघ्रमागच्छच्छ्रुत्वा शत्रुघ्नशासनम् । निवेशनं च शत्रुघ्नः श्रावणेन समारभत् ॥ ८ ॥
स[1] पुरा दिव्यसंकाशो वर्षे द्वादशमे शुभे । निविष्टः[2] शूरसेनानां विषयश्चाकुतोभयः ॥ ९ ॥
क्षेत्राणि सस्ययुक्तानि काले वर्षति वासवः । अरोगवीरपुरुषा शत्रुघ्नभुजपालिता ॥ १० ॥

---

जयः दिष्ट्या प्राप्तः सर्प इव लवणः दिष्ट्या प्रशान्तः इति देवादयः प्रपूजिरे शत्रुघ्नमिति शेषः ॥ ३९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

१-२ ] ति० टी०—अथ देवप्रसादतो महती प्रतिष्ठा शत्रुघ्नस्य—हते इति ॥ १ ॥ २ ॥

रा० टी०—लवणवधानन्तरकालिकं वृत्तमाह—हत इत्यादिभिः । देवाः सुमधुरां वाणीमूचुः ॥ १ ॥

रा० टी०—तदाकारमाह—दिष्ट्येत्यादिभिः । लवणराक्षसो हतः अतो वरं वरय ॥ २ ॥

गो० टी०—हते त्वित्यादि ॥ १—४ ॥

३-४ ] ति० टी०—तुभ्यं तव ॥ ३ ॥ ४ ॥

रा० टी०—तत्र हेतुमाहुः—वरदा इति । तुभ्यं तव विजयाकाङ्क्षिणो वरदा वयं समागताः ॥ ३ ॥

रा० टी०—ननु किमागमनेनेत्यत आहुः नो दर्शनममोघं निष्फलं न ॥ ३ ॥

रा० टी०—देवानामिति । शत्रुघ्नः प्रत्युवाच ॥ ४ ॥

५ ] ति० टी०—मधुरा मनोहरा । निवेशं सपौरजानपदमहाबलसेनानिवेशभूतमहाराजधानीत्वं प्राप्नुयात् ॥ ५ ॥

रा० टी०—तदाकारमाह—इयमिति । निवेशमतिचमत्कारप्रवेशम् प्राप्नुयात् ॥ ५ ॥

गो० टी०—इयमिति । मधुरा मनोहरा । निवेशं राजधानीत्वम् ॥ ५ ॥

६ ] ति० टी०—शूरसेना शूरा सेना यस्यां सा ॥ ६ ॥

रा० टी०—याचनानन्तरकालिकं वृत्तमाह—तमित्यादिभिः । देवाः तं शत्रुघ्नं बाढमित्युक्त्वा तथा तेन प्रकारेण पुरी मधुरा शूरसेना शूरसेनजनपदजननिवासभूता भविष्यति इति चोक्त्वा दिवमारुरुहुः सार्धश्लोक एकान्वयी ॥ ६ ॥

गो० टी०—तमिति । शूरा सेना यस्यां सा शूरसेना ॥ ६ ॥

७ ] ति० टी०—तां सेनां गङ्गातीरे स्थापिताम् ॥ ७ ॥

रा० टी०—शत्रुघ्न इति । तां गङ्गातीरे स्थापितां सेनां शत्रुघ्नः समुपानयत् मधुरामायातुं प्रैरयत् अर्द्धं पृथक् ॥ ७ ॥

८ ] ति० टी०—श्रावणेन श्रावणमासावलम्बनेन । निवेशनं स्थापनं सेनायाः । पौरजानपदानां च समारभदारभते स्म ॥ ८ ॥

रा० टी०—सेति । सेना शीघ्रमागच्छत् शत्रुघ्नस्तु श्रावणेन श्रावणमासीत्यर्थः निवेशनं प्रवेशं समाचरत् ॥ ८ ॥

गो० टी०—सेति । श्रावणेन श्रावणमासालम्बनेन । निवेशनम् स्थापनम् समारभत् समारभते स्म ॥ ८ ॥

९-१० ] ति० टी०—द्वादशमे द्वादशे । पुरा पूर्वं प्राथमिके द्वादशे वर्षे निविष्टः । शूरसेनानां विषयो देशः । 'सा पुरी' इति पाठे सा पुरी निविष्टा । विषयो देशश्च निविष्ट इत्यर्थः ॥ ९ ॥ १० ॥

रा० टी०—स इति । द्वादशमे द्वादशे वर्षे पुरा सर्वसंपद्विशिष्टमधुरया निविष्टः शूरसेनानां सः प्रसिद्धो विषयो देशः अकुतोभयः अत एव दिव्यसंकाशो बभूवेति शेषः ॥ ९ ॥

रा० टी०—अकुतोभयत्वे हेतुं वदन्नाह—क्षेत्राणीति । वासवः काले एव वर्षति अत एव क्षेत्राणि सस्ययुक्तानि भव-

---

१ सा पुरा दिव्यसंकाशेति गो. पाठः । २ निविष्टेति गो. पाठः ।

अर्धचन्द्रप्रतीकाशा यमुनातीरशोभिता । शोभिता गृहमुख्यैश्च चत्वरापणवीथिकैः ॥
चातुर्वर्ण्यसमायुक्ता नानावाणिज्यशोभिता । ॥ ११ ॥
यच्च तेन पुरा शुभ्रं लवणेन कृतं महत् । तच्छोभयति शत्रुघ्नो नानावर्णोपशोभिताम् ॥ १२ ॥
आरामैश्च विहारैश्च शोभमानं समन्ततः । शोभितां शोभनीयैश्च तथान्यैर्दैवमानुषैः ॥ १३ ॥
तां पुरीं दिव्यसंकाशां नानापण्योपशोभिताम् । नानादेशगतैश्चापि वणिग्भिरुपशोभिताम् ॥ १४ ॥
तां समृद्धां समृद्धार्थः शत्रुघ्नो भरतानुजः । निरीक्ष्य परमप्रीतः परं हर्षमुपागमत् ॥ १५ ॥
तस्य बुद्धिः समुत्पन्ना निवेश्य मधुरां पुरीम् । रामपादौ निरीक्षेऽहं वर्षे द्वादश आगते ॥ १६ ॥

ततः सताममरपुरोपमां पुरीं निवेश्य वै विविधजनाभिसंवृताम् ।
नराधिपो रघुपतिपाददर्शने दधे मतिं रघुकुलवंशवर्धनः । ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

## एकसप्ततितमः सर्गः ।

शत्रुघ्नस्ततो निष्क्रम्यायोध्यां जिगमिषुर्मध्येमार्गं वाल्मीकेराश्रमं प्रविश्य तस्मात्सादरं गृहीतातिथिसत्कारस्तद्रचितरामचरितं सुमधुरं यथावृत्तं समाकर्ण्य मुहूर्तमिवासंज्ञो बाष्पार्द्रनेत्रश्च संवृत्तः सैनिकाश्च तद्वीक्ष्य प्राप्तविस्मयाः समभवन् ।

ततो द्वादशमे वर्षे शत्रुघ्नो रामपालिताम् । अयोध्यां चकमे गन्तुमल्पभृत्यबलानुगः ॥ १ ॥

न्तीति शेषः अर्द्धं पृथक् । पुरीमेव वर्णयति–अरोगेत्यादिभिः । अरोगाः वीरपुरुषा यस्याम् नानावाणिजैर्वणिग्भिः शोभिता आस्तेति शेषः अर्धचतुष्टयमेकान्वयि ॥ १०॥११ ॥

गो० टी०–सेति । द्वादशमे द्वादश इत्यर्थः।पुरा पूर्वम्। प्रथमे द्वादशे वर्षे सा पुरी निविष्टा । शूरसेनानां राज्ञां विषयो देशश्चाकुतोभयो जातः ॥ ९॥१० ॥

११ ] ति० टी०–अर्धचन्द्रप्रतीकाशेति पुरीसंस्थानकथनम् । वीथिकस्याणीत्वमार्षम् ॥ ११ ॥

गो० टी०–अर्धचन्द्रेति । अर्धचन्द्रप्रतीकाशा अर्धचन्द्राकारसंस्थाना ॥ ११ ॥

१२–१७ ] ति० टी०–तेन लवणेन यद्गृहं पुरा पूर्वं कृतं तदेव शुभ्रं सुधाधवलं कृत्वा नानावर्णैश्चित्रैरुपशोभितं यथा भवति तथा शोभयति स्मेत्यर्थः ॥ १२–१७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

रा० टी०–यदिति । यत् गृहं लवणेन शुभ्रं श्वेतं कृतं तत् नानावर्णोपशोभितं यथा भवति तथा शत्रुघ्नश्शोभयति अशोभयत् अकारयत् ॥ १२ ॥

रा० टी०–आरामैरिति । आरामादिभिः समन्ततः शोभमानां शोभनीयैः शोभाविशिष्टैर्दैवमानुषैः शोभितां नानापण्यैरुपशोभितां वणिग्भिरुपशोभितां च अत एव समृद्धां तामम्लतरां तां प्रसिद्धां पुरीं मधुरां परमप्रीतश्शत्रुघ्नो निरीक्ष्य परं हर्षमुपागमत् अर्द्धषट्कमेकान्वयि ॥ १३–१५ ॥

गो० टी०–यच्च तेनेति । यत्पुरा तेन लवणेन कृतं तदेव शुभ्रं सुधाधवलं कृत्वा शोभयति स्म ॥ १२—१५ ॥

रा० टी०–तस्येति । द्वादशे वर्षे आगते सति अहं रामपादौ निरीक्षे इति मधुरां निवेश्य विद्यमानस्य तस्य शत्रुघ्नस्य बुद्धिस्समुत्पन्ना ॥ १६ ॥

रा० टी०–तदेव भंग्यन्तरेणाह–तत इति । नराधिपः शत्रुघ्नः रघुपतिपाददर्शने मतिं दधे ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

गो० टी०–तस्येति । रामपादाविति । द्वादशवर्षातिक्रमे भ्रातृदर्शनस्य दुष्टत्वादिति भावः ॥ १६ ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्ततितमः सर्गः ॥ ७० ॥

१ ] ति० टी०–अथ शत्रुघ्नस्यागमनसमये वाल्मीक्याश्रमे रामचरितश्रवणम्—ततो द्वादशमे इति । अल्पभृत्या बलानि चानुगा अनुयायिनो यस्य सः ॥ १ ॥

रा०टी०–शत्रुघ्नस्य अयोध्यागमनं वर्णयितुमाह–तत इति । शत्रुघ्नः द्वादशे वर्षे द्वादशे अल्पभृत्यबलानुगो भूत्वा अयोध्यां गन्तुं चकमे ॥ १ ॥

गो० टी०–तत इत्यादि ॥ १—९ ॥

१ आग तैरिति गो. पाठः ।

ततो मन्त्रिपुरोगांश्च बलमुख्यान्निवर्त्य च । जगाम हयमुख्येन रथानां च शतेन सः ॥ २ ॥
स गत्वा गणितान्वासान्सप्ताष्टौ रघुनन्दनः । वाल्मीकाश्रममागत्य वासं चक्रे महायशाः ॥ ३ ॥
सोऽभिवाद्य ततः पादौ वाल्मीकेः पुरुषर्षभः । पाद्यमर्घ्यं तथातिथ्यं जग्राह मुनिहस्ततः ॥ ४ ॥
बहुरूपाः सुमधुराः कथास्तत्र सहस्रशः । कथयामास स मुनिः शत्रुघ्नाय महात्मने ॥ ५ ॥
उवाच च मुनिर्वाक्यं लवणस्य वधाश्रितम् । सुदुष्करं कृतं कर्म लवणं निघ्नता त्वया ॥ ६ ॥
बहवः पार्थिवाः सौम्य हताः सबलवाहनाः । लवणेन महाबाहो युध्यमाना महाबलाः ॥ ७ ॥
स त्वया निहतः पापो लीलया पुरुषर्षभ । जगतश्च भयं तत्र प्रशान्तं तव तेजसा ॥ ८ ॥
रावणस्य वधो घोरो यत्नेन महता कृतः । इदं चै सुमहत्कर्म त्वया कृतमयत्नतः ॥ ९ ॥
प्रीतिश्चास्मिन्परा जाता देवानां लवणे हते । भूतानां चैव सर्वेषां जगतश्च प्रियं कृतम् ॥ १० ॥
तच्च युद्धं मया दृष्टं यथावत्पुरुषर्षभ । सभायां वासवस्याथ उपविष्टेन राघव ॥ ११ ॥
ममापि परमा प्रीतिर्हृदि शत्रुघ्न वर्तते । उपाघ्रास्यामि ते मूर्ध्नि स्नेहस्यैषा परा गतिः ॥ १२ ॥
इत्युक्त्वा मूर्ध्नि शत्रुघ्नमुपाघ्राय महामतिः । आतिथ्यमकरोत्तस्य ये च तस्य पदानुगाः ॥ १३ ॥
स भुक्तवान्नरश्रेष्ठो गीतमाधुर्यमुत्तमम् । शुश्राव रामचरितं तस्मिन्काले यथा कृतम् ॥ १४ ॥

२ ] ति० टी०—बलमुख्यान्बलप्रधानान् ॥ २ ॥
रा० टी०—तत इति । स शत्रुघ्नः हया मुख्या यस्मिन् तेन रथानां शतेन जगाम ॥ २ ॥
३–५ ] ति० टी०—गणितान्वासान् । पूर्वमेवैतावद्भिर्वासैर्वाल्मीक्याश्रमं यास्यामीति संख्यातान्वाल्मीकेरयं वाल्मीकः स चासावाश्रमस्तम् ॥ ३–५ ॥
रा० टी०—स इति । स शत्रुघ्नः गणितान् ज्ञातान् सप्तवासान् निवासस्थानानि गत्वा वाल्मीकाश्रममागत्य आष्टौ अकारेण एकेन युक्ता अष्टौ नव दिनानीत्यर्थः वासं चक्रे अकारच्छेदस्तु वक्ष्यमाणरामायणश्रवणविध्यनुरोधेन ॥ ३ ॥
रा० टी०—स इति । स शत्रुघ्नः वाल्मीकेः पादौ अभिवाद्य मुनिहस्ततः पाद्यादि जग्राह ॥ ४ ॥
रा० टी०—बहुरूपा इति । मुनिः सुमधुराः कथाः रामगाथाः शत्रुघ्नाय कथयामास ॥ ५ ॥
६–७ ] ति० टी०—लवणस्य वधाश्रितम् । कथालापमिति शेषः । 'न कृतं तव पूर्वकैः' इति पाठे तव पूर्वकैर्मान्धात्रादिभिर्यन्न कृतं तत्त्वया कृतमित्यर्थः ॥ ६ ॥ ७ ॥
रा० टी०—उवाचेति । मुनिः लवणस्य वधाश्रितं वाक्यं वचनमुवाच तदाकारमाह लवणं निघ्नता त्वया सुदुष्करं कर्म कृतम् ॥ ६ ॥
रा० टी०—सुदुष्करत्वं प्रकटयन्नाह—बहव इति । लवणेन बहवः पार्थिवा हताः ॥ ७ ॥
गो० टी०—उवाचेति । लवणस्य वधाश्रितं वृत्तान्तमिति शेषः ॥ ६—१० ॥
८ ] ति० टी०—तत्र तन्निमित्तम् ॥ ८ ॥
रा० टी०—स इति । स लवणः त्वया लीलया निहतः अत एव तत्र तस्मिन् हनने सति तव तेजसा जगतो भयं प्रशान्तम् ॥ ८ ॥
९–१० ] ति० टी०—सुमहत्कर्म रावणवधादपि महदुष्करमिदं कर्म लवणवधकर्म त्वयायत्नतो लीलयैव कृतम् ९॥१०
रा० टी०—तदेव भङ्ग्यन्तरेणाह—रावणस्येति । महता रामेण अयत्नेन ईषद्यत्नतः रावणस्य वधः कृतः त्वयापि इदं लवणहननं सुमहत्कर्म अयत्नतः कृतम् ॥ ९ ॥
रा० टी०—प्रीतिरिति । यतस्त्वया जगतः प्रियं कृतमतः लवणे हते सति देवादीनां परा प्रीतिर्जाता ॥ १० ॥
११ ] ति० टी०—वासवसभायामुपविष्टेनापि मया तद्युद्धं यथावद्दृष्टम् । दिव्यचक्षुषेति शेषः । दृष्टमित्यस्य श्रुतमित्यर्थो वा ॥ ११ ॥
रा० टी०—ननु त्वया लवणयुद्धं कथं ज्ञातमित्यत आह—तदिति । वासवस्य सभायामुपविष्टेन मया तद्युद्धं यथावद्दृष्टमेतेन इन्द्रोपि युद्धदर्शनार्थमागत इति सूचितम् ॥ ११ ॥
गो० टी०—तच्चेति । सभायामिति । युद्धं द्रष्टुमाग*तायामिति शेषः ॥ ११ ॥
१२–१३ ] ति० टी०—मूर्ध्न्याघ्राणं परा गतिः परं कार्यं स्नेहस्य ॥ १२ ॥ १३ ॥
रा० टी०—ममेति । मम परमप्रीतिर्वर्त्तते अतः ते मूर्ध्नि उपाघ्रास्यामि तत्र हेतुः एषा मद्धृदये समागता प्रीतिः स्नेहस्य परा गतिः काष्ठा ॥ १२ ॥
रा० टी०—इतीति । महामतिर्वाल्मीकिः तस्य शत्रुघ्नस्य ये च तस्य पदानुगाः तेषां च आतिथ्यमकरोत् ॥ १३ ॥
गो० टी०—ममेति । परा गतिः परमप्रयोजनम् १२॥१३
१४ ] ति० टी०—गीतस्य माधुर्यं यत्र तादृशं रामच-

१ मुख्यैश्चेति गो. पाठः । २ वाल्मीक्याश्रममिति गो. पाठः । ३ स्विति गो. पाठः । ४ क्रममिति गो. पाठः । * आगतेनेति निर्दोषं भाति ।

तन्त्रीलयसमायुक्तं त्रिस्थानकरणान्वितम् । संस्कृतं लक्षणोपेतं समतालसमन्वितम् ॥ १५ ॥
शुश्राव रामचरितं तस्मिन्काले पुरा कृतम् । तान्यक्षराणि सत्यानि यथावृत्तानि पूर्वशः ॥ १६ ॥
श्रुत्वा पुरुषशार्दूलो विसंज्ञो बाष्पलोचनः । स मुहूर्तमिवासंज्ञो विनिःश्वस्य मुहुर्मुहुः ॥ १७ ॥
तस्मिन्गीते यथावृत्तं वर्तमानमिवाशृणोत् । पदानुगाश्च ये राज्ञस्तां श्रुत्वा गीतिसंपदम् ॥ १८ ॥
अवाङ्मुखाश्च दीनाश्च ह्याश्चर्यमिति चाब्रुवन् । परस्परं च ये तत्र सैनिकाः संबभाषिरे ॥ १९ ॥
किमिदं क्व च वर्तामः किमेतत्स्वप्नदर्शनम् । अर्थो यो नः पुरा दृष्टस्तमाश्रमपदे पुनः ॥ २० ॥

रितं तस्मिन्काले पूर्वकाले यथा रामेण कृतं तादृशमेव काव्यनिबद्धं शुश्राव । क्वचिदाश्रमप्रदेशे गायतोः कुशलवयोर्मुखादिति शेषः ॥ १४ ॥

रा० टी०—स इति । भुक्तवान् कृतभोजनः शत्रुघ्नः रामयोः चरितानि यस्मिन् अत एव उत्तमं गीतमाधुर्यं गीतेन लवकुशगानेन माधुर्यमतिमधुरत्वं यस्मिन् तद्रामायणं यथाकृतं वाल्मीकिकृतमनतिक्रम्य शुश्राव ॥ १४ ॥

गो० टी०—स इति । गीतमाधुर्यमिति । आश्रमान्तरे गायतोः कुशलवयोरिति शेषः ॥ १४ ॥

१५ ] ति० टी०—तन्त्रीलयसमायुक्तं तन्त्र्याः वीणातन्त्र्युत्थध्वनेर्लयस्य तालपरिच्छेदस्य समनुकद्रम् । त्रीणि स्थानान्युरःकण्ठशिरांसि तेषु करणं मन्द्रमध्यतारभेदेनोच्चारणं तेनान्वितम् । संस्कृतं संस्कृतवाक्यबद्धम् । लक्षणोपेतं व्याकरणलक्षणैर्वृत्तलक्षणैः काव्यलक्षणैः संगीतशास्त्रलक्षणैश्चोपेतम् । समतालेन गानोचिततालशब्देन समन्वितम् ॥ १५ ॥

रा० टी०—तदेव विशिष्याह—तन्त्रीति । तन्त्री वीणा-ज्या लक्षणया तद्ध्वनिः लयः तालादिपरिच्छेदः ताभ्यां युक्तं किंच तन्त्रीषु वीणाध्वनिषु यो लयः तेन समायुक्तं त्रिषु उरःकण्ठशिरस्सु स्थानेषु करणम् मंद्रमध्यतारभेदेनोच्चारणं तेनान्वितम् संस्कृतम् व्याकरणसंस्कारविशिष्टपदवाक्यविशिष्टं लक्षणैः काव्यसंगीतशास्त्रोक्तलक्ष्मभिः उपेतं समतालेन समन्वितं पुरा पूर्वं कृतं रामचरितं तस्मिन् काले शुश्रावशत्रुघ्न इति शेषः सार्धश्लोक एकान्वयी ॥ १५ ॥

गो० टी०—तन्त्रीति । तन्त्रीलयसमायुक्तं तन्त्री वीणा लयस्तालमानम् । त्रिस्थानकरणान्वितं हृदयकण्ठमुखलक्षणवर्णोत्पत्तिस्थानेन करणेन अन्वितं संयुक्तम् । संस्कृतं संस्कृतशब्दरूपम् । लक्षणं व्याकरणलक्षणम् । समतालेन गानोचिततालशब्देन च समन्वितम् रामचरितं रामचरितविषयम्॥१५॥

१६ ] ति० टी०—रामचरितं रामचरितगीतम् । तस्मिन्काले पुरा पूर्वं रामेण यथा कृतं स्वानुभूतं च तथैव शुश्राव । तदेव पुनराह—तानीति । अक्षराण्यक्षरघटितवाक्यानि । सत्यानि सत्यार्थानि पूर्वशः पूर्वकाले यथावृत्तानि यथावृत्तार्थकानि । यद्वा यथावृत्तानि वृत्तलक्षणमनतिक्रम्य निबद्धानि । पूर्वशः आनुपूर्व्येण ॥ १६ ॥

रा० टी०—तानीति । तानि गीतानि यथावृत्तानि वृत्तमनतिक्रम्य विद्यमानानि अत एव सत्यानि मृषासंसर्गशून्यानि अक्षराणि पदवाक्यघटितवर्णानि श्रुत्वा बाष्पलोचनः शत्रुघ्नः विसंज्ञः सम्यग्ज्ञानरहितः अभवदिति शेषः ॥ १६ ॥

गो० टी०—तानीति । पूर्वशः पूर्वस्मिन् काले । यथावृत्तानि यथाप्रवृत्तान्यनुभवसिद्धानि । अक्षराणि गीताक्षराणि१६

१७ ] ति० टी०—श्रुत्वा पुरुषशार्दूलः शत्रुघ्नो विसंज्ञो हर्षाद्विवेकशून्योऽभूदिति शेषः । स मुहूर्तमसंज्ञ इव स्थितः पश्चाल्लब्धविवेको विस्मयातिरेकान्मुहुर्मुहुर्निःश्वस्य ॥ १७ ॥

रा० टी०—स इति । मुहूर्तमसंज्ञ इव शत्रुघ्नः मुहुर्मुहुर्विनिश्वस्य तस्मिन् गीते वृत्तं पूर्वं जातमपि चरितं वर्त्तमानमिव यथावदाशृणोत् ॥ १७ ॥

गो० टी०—स इति । तस्मिन् गीते वर्तमानमिव स्थितम् ॥ १७ ॥

१८ ] ति० टी०—तस्मिन्गीते यथावृत्तमतीतमपि वर्तमानमिवाशृणोत् । रसावेशादतीता अप्यर्थाः प्रत्यक्षवद्भान्तीति भावः । ये च राज्ञो मधुराराजस्य शत्रुघ्नस्य पदानुगास्तेऽपि गीतिसंपदं श्रुत्वा ॥ १८ ॥

रा० टी०—पदेति । राज्ञः शत्रुघ्नस्य ये पदानुगाः पदानामतिगायकाः ते गीतिसम्पदं श्रुत्वा दीनाः च्युतगानगर्वाः अत एव अवाङ्मुखाः सन्तः आश्चर्यमित्यब्रुवन् ॥ १८ ॥

गो० टी०—पदानुगाश्चेति । अवाङ्मुखाश्च दीनाश्चेति । एवं रामचरित्रगायकोस्माभिर्न दृष्ट इत्यवाङ्मुखत्वादि१८॥१९

१९ ] ति० टी०—एवं रामचरितगायकोऽस्माभिर्न दृश्यत इति खेदादवाङ्मुखत्वत्वादिविशिष्टाः सन्त आश्चर्यमित्यब्रुवन् । यद्वा ये तु गीतिकुशलास्ते स्वस्य तादृशगीतिनैपुण्याभावादवाङ्मुखा इत्यर्थः । ये च सैनिकास्ते परस्परं संबभाषिरे ॥ १९ ॥

रा० टी०—परस्परमिति । ये सैनिकाः ते तत्र तस्मिन् समये परस्परं संबभाषिरे तद्भाषणाकारमाह—किमिति । इदं गानत्वेन प्रतीयमानं किम् कस्यचिन्माया सत्यं वेत्यर्थः वयं क्व वर्तामः पृथिव्यां लोकान्तरे वेत्यर्थः एतत् किं स्वप्नदर्शनं नवेत्यर्थः ॥ १९ ॥

२० ] ति० टी०—तदेवाह—किमिति । क्व वर्तामः । आश्रमेऽन्यत्र वा योऽर्थो नोऽस्माकमस्माभिः पुरा दृष्टस्तमर्थमाश्रमपदे शृणुमः । किमिदम् । आश्रमवर्तिभिरननुभवेनाशक्यनिबन्धनत्वादिति भावः ॥ २० ॥

रा०टी०—अर्थ इति । योर्थः पुरा दृष्टः तमर्थम् आश्र-

शृणुमः किमिदं स्वैमे गीतबन्धनमुत्तमम् । विस्मयं ते परं गत्वा शत्रुघ्नमिदमब्रुवन् ॥ २१ ॥
साधु पृच्छ नरश्रेष्ठ वाल्मीकिं मुनिपुंगवम् । शत्रुघ्नस्त्वब्रवीत्सर्वान्कौतूहलसमन्वितान् ॥ २२ ॥
सैनिकानक्षमोऽस्माकं परिप्रष्टुमिहेदृशः । आश्चर्याणि बहूनीह भवन्त्यस्याश्रमे मुनेः ॥ २३ ॥
न तु कौतूहलाद्युक्तमन्वेष्टुं तं महामुनिम् । एवं तद्वाक्यमुक्त्वा तु सैनिकान्रघुनन्दनः ॥
अभिवाद्य महर्षिं तं स्वं निवेशं ययौ तदा । ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकसप्ततितमः सर्गः ॥ ७१ ॥

## द्विसप्ततितमः सर्गः ।

शत्रुघ्नः प्रभाते वाल्मीकिना परिष्वक्तः प्रणम्य तं निष्क्रम्य राममुपगम्याभिवन्द्य च भवद्विरहं सोढुमक्षमोऽत्रागतः एवं ब्रुवन्नपि सप्तरात्रादधिकं न वस्तव्यं यतः प्रकृतिमण्डलपरिरक्षणं क्षत्रियधर्म इति तेन स्फुटं प्रोक्तः स स्वपुरीं गतः ।

तं शयानं नरव्याघ्रं निद्रा नाभ्यागमत्तदा । चिन्तयानमनेकार्थं रामगीतमनुत्तमम् ॥ १ ॥
तस्य शब्दं सुमधुरं तन्त्रीलयसमन्वितम् । श्रुत्वा रात्रिर्जगामाशु शत्रुघ्नस्य महात्मनः ॥ २ ॥
तस्यां रजन्यां व्युष्टायां कृत्वा पौर्वाह्णिकक्रमम् । उवाच प्राञ्जलिर्वाक्यं शत्रुघ्नो मुनिपुंगवम् ॥ ३ ॥

---

मपदे शृणुमः अतः उत्तमं गीतबन्धनं किं स्वप्ने अनुभूयते इति शेषः ॥ २० ॥

गो० टी०—अर्थ इति । पुरा दृष्टः अपरोक्षदृष्टः । तमर्थमाश्रमपदे आश्रमस्थाने शृणुमः । किन्विदमाश्रमासंभावितमित्यर्थः ॥ २०—२२ ॥

२१ ] ति० टी०—यद्येवमतः स्वप्नेऽस्मदीये एव गीतबन्धमाश्रितो भवेत्तत्र दुर्घटस्यापि सुघटत्वादिति संबभाषिरे इति संबन्धः ॥ २१ ॥

रा० टी०—विस्मयमिति । हे नरश्रेष्ठ ! वाल्मीकिं पृच्छ कथमेवमाश्चर्यमनुभूयते इति ब्रूहीत्यर्थः इदं ते सैनिका अब्रुवन् ॥ २१ ॥

२२ ] ति० टी०—साधु पृच्छेति । किंकर्तृकं गानमितीति शेषः ॥ २२ ॥

रा० टी०—शत्रुघ्न इति । शत्रुघ्नः सर्वान् सैनिकान् अब्रवीत् अर्द्धम्पृथक् ॥ २२ ॥

२३ ] ति० टी०—ईदृशोऽर्थः परिप्रष्टुं न क्षमः ॥ २३ ॥

रा० टी०—तदाकारमाह—सैनिका इति । अस्य मुनेः आश्रमे इहास्मिन्काले बहून्याश्चर्याणि भवन्ति अतः ईदृशः अ तत्प्रभाववान्मुनिः अस्माकं परिप्रष्टुं न क्षमः ॥ २३ ॥

गो० टी०—आश्चर्याणीति । अन्वेष्टुमवगन्तुं प्रष्टुं चेत्यर्थः ॥ २३ ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकसप्ततितमः सर्गः ॥ ७१ ॥

२४ ] ति० टी०—अन्वेष्टुमवगन्तुं प्रष्टुं च ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकसप्ततितमः सर्गः ॥ ७१ ॥

रा० टी०—तदेवभङ्ग्यन्तरेणाह—नेति । कौतूहलात् अनिर्वचनीयाश्चर्यहेतोः मुनिमन्वेष्टुं बोधयितुं न युक्तम् एतेन सीता तदानीं रामसमीपे एव स्थितेति शत्रुघ्नेनावलोकितमिति व्यञ्जितम् । अर्द्धम्पृथक्—एवमिति । रघुनन्दनः शत्रुघ्नः एवं तद्वाक्यमुक्त्वा महर्षिमभिवाद्य स्वं निवेशं शयनस्थानं ययौ ॥२४॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

१ ] ति० टी०—अथ शत्रुघ्नस्य रामं दृष्ट्वा पुनः प्रतिनिवृत्तिः—तमिति ॥ १ ॥

रा० टी०—निवासस्थानगमनानन्तरकालिकं शत्रुघ्नवृत्तमाह—तमित्यादिभिः । अनेके अनेकविधत्वेनप्रतिभासमाना अर्था यस्मिन् तत् चिन्तयानं कः सिद्धान्तार्थ इति चिन्ताविशिष्टं शयानं तं शत्रुघ्नं निद्रा नाभ्यागमत् प्राप्नोत् ॥ १ ॥

गो० टी०—तं शयानमित्यादि ॥ १—३ ॥

२] ति० टी०—तस्य रामगीतस्य ॥ २ ॥

रा० टी०—तस्येति । सुमधुरं शब्दं श्रुत्वा विद्यमानस्य तस्य शत्रुघ्नस्य रात्रिः आशु जगाम ॥ २ ॥

३ ] ति० टी०—पौर्वाह्णिकक्रमं शौचस्नानसंध्यावन्दनब्रह्मयज्ञादिस्थानरूपं पूर्वाह्णसंबन्ध्याचारक्रमम् ॥ ३ ॥

रा० टी०—तस्यामिति । रजन्यां व्युष्टायां व्यतीतायां पौर्वाह्णिकक्रमं पूर्वाह्णोचितशौचस्नानसंध्यावंदनब्रह्मयज्ञादिस्थानरूपकर्मपरंपरां कृत्वा मुनिपुङ्गवमुवाच ॥ ३ ॥

---

१ स्वप्न इति गो. पाठः । २ चेति गो. पाठः ।

भगवन्द्रष्टुमिच्छामि राघवं रघुनन्दनम् । त्वयानुज्ञातमिच्छामि सहैभिः संशितव्रतैः ॥ ४ ॥
इत्येवं वादिनं तं तु शत्रुघ्नं शत्रुसूदनम् । वाल्मीकिः संपरिष्वज्य विससर्ज स राघवम् ॥ ५ ॥
सोऽभिवाद्य मुनिश्रेष्ठं रथमारुह्य सुप्रभम् । अयोध्यामगमत्तूर्णं राघवोत्सुकदर्शनः ॥ ६ ॥
स प्रविष्टः पुरीं रम्यां श्रीमानिक्ष्वाकुनन्दनः । प्रविवेश महाबाहुर्यत्र रामो महाद्युतिः ॥ ७ ॥
स रामं मन्त्रिमध्यस्थं पूर्णचन्द्रनिभाननम् । पश्यन्नमरमध्यस्थं सहस्रनयनं यथा ॥ ८ ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा । उवाच प्राञ्जलिर्भूत्वा रामं सत्यपराक्रमम् ॥ ९ ॥
यदाज्ञप्तं महाराज सर्वं तत्कृतवानहम् । हतः स लवणः पापः पुरी चास्य निवेशिता ॥ १० ॥
द्वादशैतानि वर्षाणि त्वां विना रघुनन्दन । नोत्सहेयमहं वस्तुं त्वया विरहितो नृप ॥ ११ ॥
स मे प्रसादं काकुत्स्थ कुरुष्वामितविक्रम । मातृहीनो यथा वत्सो न चिरं प्रवसाम्यहम् ॥ १२ ॥
एवं ब्रुवाणं काकुत्स्थः परिष्वज्येदमब्रवीत् । मा विषादं कृथाः शूर नैतत्क्षत्रियचेष्टितम् ॥ १३ ॥
नावसीदन्ति राजानो विप्रवासेषु राघव । प्रजा हि परिपाल्या हि क्षत्रधर्मेण राघव ॥ १४ ॥
काले काले तु मां वीर अयोध्यामवलोकितुम् । आगच्छ त्वं नरश्रेष्ठ गन्तासि च पुरं तव ॥ १५ ॥
ममापि त्वं सुदयितः प्राणैरपि न संशयः । अवश्यं करणीयं च राज्यस्य परिपालनम् ॥ १६ ॥
तस्मात्त्वं वस काकुत्स्थ सप्तरात्रं मया सह । ऊर्ध्वं गन्तासि मधुरां सभृत्यबलवाहनः ॥ १७ ॥
रामस्यैतद्वचः श्रुत्वा धर्मयुक्तं मनोनुगम् । शत्रुघ्नो दीनया वाचा बाढमित्येव चाब्रवीत् ॥ १८ ॥

---

४-६ ] ति० टी०—राघवं रघुगोत्रापत्यं रघुनन्दनं रघुकुलस्यानन्दजनकम् । त्वयानुज्ञातं तवानुज्ञाम् । एभिर्मुनिभिः सहेच्छामि ॥ ४-६ ॥

रा० टी०—भगवन्निति । राघवमहं द्रष्टुमिच्छामि अतः संशितव्रतैः अतितीक्ष्णव्रतविशिष्टैः एभिः ऋषिभिस्सह विद्यमानेन त्वया अनुज्ञातमाज्ञामिच्छामि ॥ ४ ॥

रा० टी०—इतीति । वाल्मीकिः शत्रुघ्नं परिष्वज्य विससर्ज ॥ ५ ॥

रा० टी०—स इति । राघवस्य दर्शनाय उत्सुकः राघवोत्सुकदर्शनः अयोध्यां तूर्णमगमत् राजदन्तादित्वाद्दर्शनस्य परनिपातः ॥ ६ ॥

गो० टी०—भगवन्निति । राघवं रघुगोत्रापत्यम् । रघुनन्दनं रघुकुलनन्दनम् । त्वयानुज्ञातुमिति तवानुज्ञामित्यर्थः । एभिरिति । मुनिभिरिति शेषः ॥ ४—१२ ॥

७-९ ] ति० टी०—पुरीमयोध्याम् ॥ ७-९ ॥

रा० टी०—स इति । पुरीमयोध्यां प्रविष्टः शत्रुघ्नः यत्र रामः तत्र प्रविवेश ॥ ७ ॥

रा० टी०—स इति । अमरमध्यस्थं सहस्रनयनमिन्द्रमिव मन्त्रिमध्यस्थं रामं पश्यन् सो वायुवेगः स शत्रुघ्नोभिवाद्य राममुवाच श्लोकद्वयमेकान्वयि ॥ ८ ॥ ९ ॥

१० ] ति० टी०—अस्य पुरी निवेशिता सर्वप्रजानिवेशनेन प्रतिष्ठापिता ॥ १० ॥ १२ ॥

रा० टी०—तदाकारमाह—यदिति । यद्भवताज्ञप्तं तदहं कृतवान् कृतमेवाह लवणो हतः अस्य लवणस्य पुरी निवेशिता च ॥ १० ॥

रा० टी०—द्वादशेति । त्वां विना एतानि द्वादश वर्षाणि व्यतीतानीति शेषः अतः त्वया विरहितोहं वस्तुं नोत्सहेयम् ॥ ११ ॥

रा० टी०—स इति । मातृहीनो वत्स इव अहं चिरं न प्रवसामि अतो मे प्रसादं कुरुष्व मत्प्रार्थितं स्वीकुर्वित्यर्थः १२

१३ ] ति० टी०—क्षत्रियचेष्टितं क्षत्रियाचारः ॥ १३ ॥

रा० टी०—एवमिति । काकुत्स्थः एवं ब्रुवाणं शत्रुघ्नमब्रवीत् तदाकारमाह एतद्भवदुक्तं क्षत्रियचेष्टितम् क्षत्रियोचितकथनं न अतः विषादं मा कृथाः ॥ १३ ॥

गो०टी०-एवमिति। क्षत्रियचेष्टितं क्षत्रियविचारः१३-२१

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विसप्ततितमः सर्गः ॥ ७२ ॥

१४ ] ति० टी०—हि यस्मात्क्षत्रियाणां प्रजाः सर्वथा परिपाल्या इति हि प्रसिद्धम् ॥ १४ ॥

रा० टी०—अनुचितत्वमेव प्रकटयन्नाह—नेति । क्षत्रधर्मेण प्रजा परिपाल्या एव राजभिरिति शेषः अतः राजानः विप्रवासेषु नावसीदन्ति ॥ १४ ॥

१५-१८] ति० टी०—मामवलोकितुमयोध्यामागच्छ । तव पुरं स्वपुरं गन्तासि । गच्छेत्यर्थः ॥ १५-१८ ॥

रा० टी०—काल इति । मामयोध्यां चावलोकितुं काले-

---

१ ज्ञातुमिति गो. पाठः । २ तापसमिति गो. पाठः । ३ वाक्यमिति गो. पाठः । ४ एते गता वर्षा इति गो. पाठः । ५ शत्रुघ्नमिति गो. पाठः । ६ इहावसेति गो. पा. ।

सप्तरात्रं च काकुत्स्थो राघवस्य यथाज्ञया। उष्य तत्र महेष्वासो गमनायोपचक्रमे ॥ १९ ॥
आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमम्। भरतं लक्ष्मणं चैव महारथमुपारुहत् ॥ २० ॥
दूरं पद्भ्यामनुगतो लक्ष्मणेन महात्मना। भरतेन च शत्रुघ्नो जगामाशु पुरीं तदा ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः।

शत्रुघ्नं प्रेष्य सुखेन कंचित्समयं गमयति कौसल्येये कश्चन जानपदो वृद्धविप्रः अकालमृतं स्वमात्मजं गृहीत्वा अकालनिधनं भूपदोषहेतुकमित्युद्घोष्योद्विग्नो विलपन् भूपतिसभाद्वारमागमत्।

प्रस्थाप्य तु स शत्रुघ्नं भ्रातृभ्यां सह राघवः। प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥
ततः कतिपयाहःसु वृद्धो जानपदो द्विजः। मृतं बालमुपादाय राजद्वारमुपागमत् ॥ २ ॥
[ रुदन्बहुविधा वाचः स्नेहदुःखसमन्वितः। असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ]
किं नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम्। रुदन्बहुविधा वाचः स्नेहदुःखसमन्वितः ॥
असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह। ॥ ३ ॥
किं नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम्। यदहं पुत्रमेकं तु पश्यामि निधनं गतम् ॥ ४ ॥
अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम्। अकाले कालमापन्नं मम दुःखाय पुत्रक ॥ ५ ॥

---

काले यथोचितसमये आगच्छ अनंतरं तव पुरं मधुरां त्वं गन्तासि ॥ १९ ॥

रा० टी०—ममेति। यद्यपि त्वं ममापि हृदयितः तथापि राज्यस्य परिपालनमवश्यं करणीयम् तस्माद्धेतोः सप्तरात्रं मया सह त्वं वस ऊर्ध्वं मधुरां गंतासि श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

रा० टी०—रामस्येति। धर्मयुक्तमेतद्रामस्य वचः श्रुत्वा शत्रुघ्नः दीनया वाचा बाढमित्येवाब्रवीत् ॥ १८ ॥

१९-२१ ] ति० टी०—यथाज्ञया यथावत्कृतयाज्ञया १९-२१
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्विसप्ततितमः सर्ग ॥ ७२ ॥

रा० टी०—सप्तेति। काकुत्स्थः शत्रुघ्नः राघवस्याज्ञया सप्तरात्रं यथा यथावत् उष्य उषित्वा गमनाय उपचक्रमे ॥ १९ ॥

रा० टी०—आमन्त्र्येति। महारथमुपारुहत् उपारोहत् शत्रुघ्न इति शेषः ॥ २० ॥

रा० टी०—दूरमिति। लक्ष्मणेन भरतेन च पद्भ्यां दूरमनुगतः शत्रुघ्नः पुरीं मधुरामाशु जगाम ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरायायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

१ ] ति० टी०—अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः—प्रस्थाप्येति। भ्रातृभ्यां लक्ष्मणभरताभ्याम् ॥ १ ॥

रा० टी०—शत्रुघ्नगमनानन्तरकालिकं वृत्तमाह—प्रस्थाप्येत्यादिभिः। राघवः भ्रातृभ्यां लक्ष्मणभरताभ्यां सह प्रमुमोद प्रमुमुदे ॥ १ ॥

गो० टी०—अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः—प्रस्थाप्येत्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—कतिपयाहःसु। गतेष्विति शेषः ॥ २ ॥

रा० टी०—तत इति। कतिपयाहःसु गतेष्विति शेषः जानपदः जनपदे भवः वृद्धो द्विजः राजद्वारमुपागमत् ॥ २ ॥

३ ] ति० टी०—स्नेहेन पुत्रस्नेहेन तन्मरणदुःखेन च समन्वितः ॥ ३ ॥

रा० टी०—रुदन्निति। स्नेहदुःखसमन्वितः स्नेहहेतुकदुःखेन समन्वितो द्विजः बहुविधा वाचः असकृत् पुत्र पुत्रेति च रुदन् उच्चारयन् एतद्वाक्यमुवाच ॥ ३ ॥

गो० टी०—रुदन्निति। असकृत् पुत्र पुत्रेति स्नेहसमन्विता बहुविधा वाचः रुदन् विलपन्। रुदन् बहुविधं विप्र इति च पाठः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—यद्यस्मान्निधनं गतं त्वां पश्यामि, अतो मे मया किं दुष्कृतं कृतम् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—किमित्यादिभिः। यत् यस्मात् दुष्कृतात् एकमपि पुत्रं निधनं मरणं गतं पश्यामि ॥ ४ ॥

५ ] ति० टी०—किं च हे पुत्रका! प्राप्तयौवनं मम दुःखाय अकाले कालमापन्नं पश्यामीत्यनुषङ्गः। पञ्चवर्षसहस्रकम् वर्षशब्दोऽत्र दिनपरः। 'सहस्रसंवत्सरं सत्रमुपासीत' इतिवत्। तेन षोडशवर्षमित्यर्थ इत्येके। तेन किंचिन्न्यूनचतुर्दशवर्षमित्यर्थ इत्यन्ये ॥ ५ ॥

---

१ आत्मानमिति गो. पा.। २ पद्ममिदमधिकं गो. रा. पु.। ३ त्वामिति गो. पाठः।

अल्पैरहोभिर्निधनं गमिष्यामि न संशयः । अहं च जननी चैव तव शोकेन पुत्रक ॥ ६ ॥
न स्मराम्यनृतं ह्युक्तं न च हिंसां स्मराम्यहम् । सर्वेषां प्राणिनां पापं न स्मरामि कदाचन ॥ ७ ॥
केनाद्य दुष्कृतेनायं बाल एव ममात्मजः । अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम् ॥ ८ ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम् । मृत्युरप्राप्तकालानां रामस्य विषये ह्ययम् ॥ ९ ॥
रामस्य दुष्कृतं किंचिन्महदस्ति न संशयः । यथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥
नह्यन्यविषयस्थानां बालानां मृत्युतो भयम् । स राजञ्जीवयस्वैनं बालं मृत्युवशं गतम् ॥ ११ ॥
राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत् । ब्रह्महत्यां ततो राम समुपेत्य सुखी भव ॥ १२ ॥
भ्रातृभिः सहितो राजन्दीर्घमायुरवाप्स्यसि । उषिताः स्म सुखं राज्ये तवास्मिन्सुमहाबल ॥ १३ ॥
इदं तु पतितं तस्मात्तव राम वशे स्थितान् । कालस्य वशमापन्नाः स्वल्पं हि नहि नः सुखम् ॥१४॥

रा० टी०—अप्राप्तेति । पञ्चवर्षसमन्वितमत एव बालमत एव अप्राप्तयौवनमकाले कालं मरणमापन्नं त्वां मम दुःखाय पश्यामीत्यनुकृष्यते ॥ ९ ॥

गो० टी०—अप्राप्तेति । कालमापन्नं कालवशं गतम् ५॥६

६ ] ति० टी०—तव शोकेनाहं तव जननी च निधनं गमिष्यामि ॥ ६ ॥

रा० टी०—अल्पैरिति । तव शोकेन अहं तव जननी च निधनं गमिष्यामि ॥ ६ ॥

७ ] ति० टी०—अस्य मरणे मत्कृतं किंचिन्न कारणमित्याह—नेति । सर्वेषां प्राणिनां तद्विषयमनृतहिंसातिरिक्तमपि पापं मनोवाक्कायैरनिष्टाचरणं स्वकृतं न स्मरामि । अकृतत्वादेव । 'सर्वेषां प्राणिनां प्राणं न कदाचन विद्यते' इति पाठे सर्वेषां प्राणिनां प्राणमुद्दिश्य मया कृतहिंसां न स्मरामि । अतो मम कदाचन जन्मान्तरेऽपि पापं न विद्यते । जन्मान्तरे तत्करणे संस्कारेणैतज्जन्मन्यपि तत्र प्रवृत्तिः स्यादिति भावः ७

रा० टी०—ननु सर्वोऽपि जनः स्वकृतं भुङ्क्ते अतः किमर्थं शोचसीत्यत आह—नेति । उक्तस्ववचनमनृतं मिथ्या न स्मरामि हिंसां च न स्मरामि सर्वेषां प्राणिनाम् पापं सर्वप्राणिकर्तृकपापाचरणं न स्मरामि स्मृत्वा न कथयामीत्यर्थः ॥ ७ ॥

गो० टी०—नेति । न स्मरामि । अकृतत्वादेवेति भावः ७॥८

८ ] ति० टी०—पितृकार्याणि श्राद्धादीनि ॥ ८ ॥

रा० टी०—केनेति । बाल एव ममात्मजः पितृकार्याणि अकृत्वा केन दुष्कृतेन वैवस्वतक्षयं गतः ॥ ८ ॥

९ ] ति० टी०—रामस्य विषये देशे ॥ ९ ॥

रा० टी०—मरणस्यासंभवे हेतुमाह—नेति । रामस्य विषये देशे अप्राप्तकालानामीदृशं मृत्युः दृष्टपूर्वं न श्रुतमपि न सामान्ये नपुंसकम् ॥ ९ ॥

गो० टी०—नेति । विषये देशे । यथा सर्वानुभवादितः पूर्वं नेदृशं दृष्टपूर्वम् ॥ ९ ॥

१० ] ति० टी०—तस्माद्राजदोषादेवेदं बालमरणमित्याह—रामस्येति ॥ १० ॥

रा० टी०—स्वोहितमाह—रामस्येति । यथा येन हेतुना बालानां मृत्युरागतः तस्मात् रामस्य किंचित् महत् दुष्कृतमस्ति ॥ १० ॥

गो० टी०—अथ तु—रामस्य दुष्कृतमित्यादि ॥१०॥

११ ] ति० टी०—स राजन्नित्याभिमुख्येन वादः ॥११॥

रा० टी०—नहीति । हि यतः अन्यविषयस्थानां बालानां मृत्युतो भयं न अतः स त्वमेनं बालं जीवयस्व ॥ ११ ॥

गो० टी०—न हीति । त्वं राजन्नित्यादिना आभिमुख्येन वादः ॥ ११ ॥

१२ ] ति० टी०—सुखी भवेति व्यङ्ग्योक्तिः ॥ १२ ॥

रा० टी०—राजेति । राजद्वारि मरिष्यामि ततोनन्तरं हे राम ! ब्रह्महत्यां समुपेत्य सुखी भव दुःखी एव भविष्यसीत्यर्थः ॥ १२ ॥

गो० टी०—राजद्वारीति । सुखी भवेत्यादि व्यङ्ग्योक्तिः ॥ १२ ॥

१३ ] ति० टी०—उषिताः स्म । एतावत्कालमिति शेषः ॥ १३ ॥

रा० टी०—भ्रातृभिरिति । तव राज्ये वयं सुखमुषिताः स्म अतः दीर्घमायुरवाप्स्यसि व्यञ्जनपानसुखमुषिताः अतो दीर्घमायुर्नावाप्स्यसीति बोधितम् ॥ १३ ॥

गो० टी०—भ्रातृभिरिति । उषिताः स्म । एतावत्कालमिति शेषः ॥ १३ ॥

१४ ] ति० टी०—इदं बालकमरणदुःखम् । हि यत इदानीं वयं कालस्य वशमापन्नाः, हि तस्मात्तव राज्ये नोऽस्माकं स्वल्पमपि सुखं नहि ॥ १४ ॥

रा० टी०—इदमिति । तव वशे स्थितान् अस्मान् इदं पतितं प्राप्तम् इदमाकारमाह यतो वयं कालस्य वशमापन्नाः अतः स्वल्पमपि सुखं नोस्माकं न ॥ १४ ॥

गो० टी०—इदमिति । तव वशे राज्ये नोस्माकं स्वल्पमपि सुखं न ॥ १४ ॥

१ कृतं नैव स्मराम्यहमिति गो. पाठः । २ यथेति गो. पाठः । ३ स्वमिति गो. पाठः । ४ स्थिता इति गो. पाठः ।

सप्तरात्रं च काकुत्स्थो राघवस्य यथाज्ञया। उष्य तत्र महेष्वासो गमनायोपचक्रमे ॥ १९ ॥
आमन्त्र्य तु महात्मानं रामं सत्यपराक्रमम्। भरतं लक्ष्मणं चैव महारथमुपारुहत् ॥ २० ॥
दूरं पद्भ्यामनुगतो लक्ष्मणेन महात्मना। भरतेन च शत्रुघ्नो जगामाशु पुरीं तदा ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

## त्रिसप्ततितमः सर्गः ।

शत्रुघ्नं प्रेष्य सुखेन कंचित्समयं गमयति कौसल्येये कश्चन जानपदो वृद्धविप्रः अकालमृतं स्वमात्मजं गृहीत्वा अकालनिधनं भूपदोषहेतुकमित्युद्घोष्योद्विग्नो विलपन् भूपतिसभाद्वारमागमत् ।

प्रस्थाप्य तु स शत्रुघ्नं भ्रातृभ्यां सह राघवः। प्रमुमोद सुखी राज्यं धर्मेण परिपालयन् ॥ १ ॥
ततः कतिपयाहःसु वृद्धो जानपदो द्विजः। मृतं बालमुपादाय राजद्वारमुपागमत् ॥ २ ॥
[ रुदन्बहुविधा वाचः स्नेहदुःखसमन्वितः। असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह ॥ ]
किं नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम्। रुदन्बहुविधा वाचः स्नेहदुःखसमन्वितः ॥
असकृत्पुत्र पुत्रेति वाक्यमेतदुवाच ह। ॥ ३ ॥
किं नु मे दुष्कृतं कर्म पुरा देहान्तरे कृतम्। यदहं पुत्रमेकं तु पश्यामि निधनं गतम् ॥ ४ ॥
अप्राप्तयौवनं बालं पञ्चवर्षसहस्रकम्। अकाले कालमापन्नं मम दुःखाय पुत्रक ॥ ५ ॥

---

काले यथोचितसमये आगच्छ अनंतरं ~~तत्र—पुरं~~ मधुरां त्वं गन्तासि ॥ १९ ॥

रा० टी०—ममेति । यद्यपि त्वं ममापि सुदयितः तथापि राज्यस्य परिपालनमवश्यं करणीयम् तस्माद्धेतोः सप्तरात्रं मया सह त्वं वस ऊर्ध्वं मधुरां गंतासि श्लोकद्वयमेकान्वयि ॥ १६ ॥ १७ ॥

रा० टी०—रामस्येति । धर्मयुक्तमेतद्रामस्य वचः श्रुत्वा शत्रुघ्नः दीनया वाचा बाढमित्येवाब्रवीत् ॥ १८ ॥

१९-२१ ] ति० टी०—यथाज्ञया यथावत्कृतयाज्ञया १९-२१
इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्ये उत्तरकाण्डे द्विसप्ततितमः सर्ग ॥ ७२ ॥

रा० टी०—सप्तेति । काकुत्स्थः शत्रुघ्नः राघवस्याज्ञया सप्तरात्रं यथा यथावत् उष्य उषित्वा गमनाय उपचक्रमे ॥१९॥

रा० टी०—आमन्त्र्येति । महारथमुपारुहत् उपारोहत् शत्रुघ्न इति शेषः ॥ २० ॥

रा० टी०—दूरमिति । लक्ष्मणेन भरतेन च पद्भ्यां दूरमनुगतः शत्रुघ्नः पुरीं मधुरामाशु जगाम ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरायायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

१ ] ति० टी०—अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः—प्रस्थाप्येति । भ्रातृभ्यां लक्ष्मणभरताभ्याम् ॥१॥

रा० टी०—शत्रुघ्नगमनानन्तरकालिकं वृत्तमाह—प्रस्थाप्येत्यादिभिः । राघवः भ्रातृभ्यां लक्ष्मणभरताभ्यां सह प्रमुमोद प्रमुमुदे ॥ १ ॥

गो० टी०—अथ मृतबालकब्राह्मणस्य राजद्वारि विलापः—प्रस्थाप्येत्यादि ॥ १ ॥ २ ॥

२ ] ति० टी०—कतिपयाहःसु । गतेष्विति शेषः ॥ २ ॥

रा० टी०—तत इति । कतिपयाहःसु गतेष्विति शेषः जानपदः जनपदे भवः वृद्धो द्विजः राजद्वारमुपागमत् ॥२॥

३ ] ति० टी०—स्नेहेन पुत्रस्नेहेन तन्मरणदुःखेन च समन्वितः ॥ ३ ॥

रा० टी०—रुदन्निति । स्नेहदुःखसमन्वितः स्नेहहेतुकदुःखेन समन्वितो द्विजः बहुविधा वाचः असकृत् पुत्र पुत्रेति च रुदन् उच्चारयन् एतद्वाक्यमुवाच ॥ ३ ॥

गो० टी०—रुदन्निति । असकृत् पुत्र पुत्रेति स्नेहसमन्विता बहुविधा वाचः रुदन् विलपन् । रुदन् बहुविधं विप्र इति च पाठः ॥ ३ ॥ ४ ॥

४ ] ति० टी०—यद्यस्मान्निधनं गतं त्वां पश्यामि, अतो मे मया किं दुष्कृतं कृतम् ॥ ४ ॥

रा० टी०—तद्वचनाकारमाह—किमित्यादिभिः । यत् यस्मात् दुष्कृतात् एकमपि पुत्रं निधनं मरणं गतं पश्यामि ॥ ४॥

५ ] ति० टी०—किं च हे पुत्रका ! प्राप्तयौवनं मम दुःखाय अकाले कालमापन्नं पश्यामीत्यनुषङ्गः । पञ्चवर्षसहस्रकम् वर्षशब्दोऽत्र दिनपरः । 'सहस्रसंवत्सरं सत्रमुपासीत' इतिवत् । तेन षोडशवर्षमित्यर्थ इत्येके । तेन किंचिन्न्यूनचतुर्दशवर्षमित्यर्थ इत्यन्ये ॥ ५ ॥

---

१ भ्राभ्यामिति गो. पा. । २ पद्यमिदमधिकं गो. रा. पु. । ३ स्वामिति गो. पाठः ।

अल्पैरहोभिर्निधनं गमिष्यामि न संशयः । अहं च जननी चैव तव शोकेन पुत्रक ॥ ६ ॥
न स्मराम्यनृतं ह्युक्तं न च हिंसां स्मराम्यहम् । सर्वेषां प्राणिनां पापं न स्मरामि कदाचन ॥ ७ ॥
केनाद्य दुष्कृतेनायं बाल एव ममात्मजः । अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम् ॥ ८ ॥
नेदृशं दृष्टपूर्वं मे श्रुतं वा घोरदर्शनम् । मृत्युरप्राप्तकालानां रामस्य विषये ह्ययम् ॥ ९ ॥
रामस्य दुष्कृतं किंचिन्महदस्ति न संशयः । यथा हि विषयस्थानां बालानां मृत्युरागतः ॥ १० ॥
नह्यन्यविषयस्थानां बालानां मृत्युतो भयम् । स राजञ्जीवयस्वैनं बालं मृत्युवशं गतम् ॥ ११ ॥
राजद्वारि मरिष्यामि पत्न्या सार्धमनाथवत् । ब्रह्महत्यां ततो राम समुपेत्य सुखी भव ॥ १२ ॥
भ्रातृभिः सहितो राजन्दीर्घमायुरवाप्स्यसि । उषिताः स्म सुखं राज्ये तवास्मिन्सुमहाबल ॥ १३ ॥
इदं तु पतितं तस्मात्तव राम वशे स्थितान् । कालस्य वशमापन्नाः स्वल्पं हि नहि नः सुखम् ॥१४॥

रा० टी०—अप्राप्तेति । पञ्चवर्षसमन्वितमत एव बालमत एव अप्राप्तयौवनमकाले कालं मरणमापन्नं त्वां मम दुःखाय पश्यामीत्यत्रकृष्यते ॥ ५ ॥

गो० टी०—अप्राप्तेति । कालमापन्नं कालवशं गतम् ५॥६

६ ] ति० टी०—तव शोकेनाहं तव जननी च निधनं गमिष्यामि ॥ ६ ॥

रा० टी०—अल्पैरिति । तव शोकेन अहं तव जननी च निधनं गमिष्यामि ॥ ६ ॥

७ ] ति० टी०—अस्य मरणे मत्कृतं किंचिन्न कारणमित्याह—नेति । सर्वेषां प्राणिनां तद्विषयमनृतहिंसातिरिक्तमपि पापं मनोवाक्कायैरनिष्टाचरणं स्वकृतं न स्मरामि । अकृतत्वादेव । 'सर्वेषां प्राणिनां प्राणं न कदाचन विद्यते' इति पाठे सर्वेषां प्राणिनां प्राणमुद्दिश्य मया कृतहिंसां न स्मरामि । अतो मम कदाचन जन्मान्तरेऽपि पापं न विद्यते । जन्मान्तरे तत्करणे संस्कारेणैतज्जन्मन्यपि तत्र प्रवृत्तिः स्यादिति भावः ७

रा० टी०—ननु सर्वोपि जनः स्वकृतं भुङ्क्ते अतः किमर्थं शोचसीत्यत आह—नेति । उक्तस्ववचनमनृतं मिथ्या न स्मरामि हिंसां च न स्मरामि सर्वेषां प्राणिनाम् पापं सर्वप्राणिकर्तृकपापाचरणं न स्मरामि स्मृत्वा न कथयामीत्यर्थः ॥ ७ ॥

गो० टी०—नेति । न स्मरामि । अकृतत्वादेवेति भावः ७॥८

८ ] ति० टी०—पितृकार्याणि श्राद्धादीनि ॥ ८ ॥

रा० टी०—केनेति । बाल एव ममात्मजः पितृकार्याणि अकृत्वा केन दुष्कृतेन वैवस्वतक्षयं गतः ॥ ८ ॥

९ ] ति० टी०—रामस्य विषये देशे ॥ ९ ॥

रा० टी०—मरणस्यासंभवे हेतुमाह—नेति । रामस्य विषये देशे अप्राप्तकालानामीदृशं मृत्युः दृष्टपूर्वं न श्रुतमपि न सामान्ये नपुंसकम् ॥ ९ ॥

गो० टी०—नेति । विषये देशे । यथा सर्वानुभवादितः पूर्वं नेदृशं दृष्टपूर्वम् ॥ ९ ॥

१० ] ति० टी०—तस्माद्राजदोषादेवेदं बालमरणमित्याह—रामस्येति ॥ १० ॥

रा० टी०—स्वोहितमाह—रामस्येति । यथा येन हेतुना बालानां मृत्युरागतः तस्मात् रामस्य किंचित् महत् दुष्कृतमस्ति ॥ १० ॥

गो० टी०—अथ तु—रामस्य दुष्कृतमित्यादि ॥१०॥

११ ] ति० टी०—स राजन्नित्याभिमुख्येन वादः ॥११॥

रा० टी०—नहीति । हि यतः अन्यविषयस्थानां बालानां मृत्युतो भयं न अतः स त्वमेनं बालं जीवयस्व ॥ ११ ॥

गो० टी०—न हीति । त्वं राजन्नित्यादिना आभिमुख्येन वादः ॥ ११ ॥

१२ ] ति० टी०—सुखी भवेति व्यङ्ग्योक्तिः ॥ १२ ॥

रा० टी०—राजेति । राजद्वारि मरिष्यामि ततोनन्तरं हे राम ! ब्रह्महत्यां समुपेत्य सुखी भव दुःखी एव भविष्यसीत्यर्थः ॥ १२ ॥

गो० टी०—राजद्वारीति । सुखी भवेत्यादि व्यङ्ग्योक्तिः ॥ १२ ॥

१३ ] ति० टी०—उषिताः स्म । एतावत्कालमिति शेषः ॥ १३ ॥

रा० टी०—भ्रातृभिरिति । तव राज्ये वयं सुखमुषिताः स्म अतः दीर्घमायुरवाप्स्यसि व्यञ्जनपानसुखमुषिताः अतो दीर्घमायुर्नावाप्स्यसीति बोधितम् ॥ १३ ॥

गो० टी०—भ्रातृभिरिति । उषिताः स्म । एतावत्कालमिति शेषः ॥ १३ ॥

१४ ] ति० टी०—इदं बालकमरणदुःखम् । हि यत इदानीं वयं कालस्य वशमापन्नाः, हि तस्मात्तव राज्ये नोऽस्माकं स्वल्पमपि सुखं नहि ॥ १४ ॥

रा० टी०—इदमिति । तव वशे स्थितान् अस्मान् इदं पतितं प्राप्तम् इदमाकारमाह यतो वयं कालस्य वशमापन्नाः अतः स्वल्पमपि सुखं नोस्माकं न ॥ १४ ॥

गो० टी०—इदमिति । तव वशे राज्ये नोस्माकं स्वल्पमपि सुखं न ॥ १४ ॥

१ कृतं नैव स्मराम्यहमिति गो. पाठः । २ यथेति गो. पाठः । ३ स्वमिति गो. पाठः । ४ स्थिता इति गो. पाठः ।

संप्रत्यनाथो विषय इक्ष्वाकूणां महात्मनाम् । रामं नाथमिहासाद्य बालान्तकरणं ध्रुवम् ॥ १५ ॥
राजदोषैर्विपद्यन्ते प्रजा ह्यविधिपालिताः । असद्वृत्ते हि[1] नृपतावकाले म्रियते जनः ॥ १६ ॥
यद्वा पुरेष्वयुक्तानि जना जनपदेषु च । कुर्वते न च रक्षास्ति तदा कालकृतं भयम् ॥ १७ ॥
सुव्यक्तं राजदोषो हि भविष्यति न संशयः । पुरे जनपदे चापि तथा बालवधो ह्ययम् ॥ १८ ॥
एवं बहुविधैर्वाक्यैरुपरुध्य मुहुर्मुहुः । राजानं दुःखसंतप्तः सुतं तमुपगूहति ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

## चतुःसप्ततितमः सर्गः ।

रामो द्विजस्य करुणं परिदेवनं श्रुत्वा दुःखसंतप्तो वसिष्ठादीनमात्यांश्च सभायामाहूय तत् कथयामास ततो नारदो युगधर्मान् श्रावयित्वा अनधिकृतोऽपि शूद्रः कश्चन तपस्यत्यतस्तं मृगयित्वा प्रतिबन्धः कार्यस्तेन बालोऽयं जीवतीति शशंस ।

तथा तु करुणं तस्य द्विजस्य परिदेवनम् । शुश्राव राघवः सर्वं दुःखशोकसमन्वितम् ॥ १ ॥
स दुःखेन च संतप्तो मन्त्रिणस्तानुपाह्वयत् । वसिष्ठं वामदेवं च भ्रातॄंश्च[2] सह नैगमान् ॥ २ ॥
ततो द्विजा वसिष्ठेन सार्धमष्टौ प्रवेशिताः । राजानं देवसंकाशं वर्धस्वेति ततोऽब्रुवन् ॥ ३ ॥
मार्कण्डेयोऽथ मौद्गल्यो वामदेवश्च काश्यपः । कात्यायनोऽथ जाबालिर्गौतमो नारदस्तथा ॥ ४ ॥
एते द्विजर्षभाः सर्वे आसनेषूपवेशिताः । महर्षीन्समनुप्राप्तानभिवाद्य कृताञ्जलिः ॥ ५ ॥

१५ ] ति० टी०—इदानीमिक्ष्वाकूणामयं विषयो देशो रामं बालानामन्तं करोति तादृशं नाथमासाद्य प्राप्यानाथो जातो रक्षकसुराजरहितो जातः ॥ १५ ॥

रा० टी०—सम्प्रतीति । इक्ष्वाकूणां विषये देशे बालान्तकरणं रामं नाथमासाद्य प्राप्य विद्यमानोहं सम्प्रत्यनाथोस्मीति शेषः ॥ १५ ॥

गो० टी०—संप्रतीति । अन्तं करोतीत्यन्तकरणम् कर्तरि ल्युट् बालान्तकरणं राममासाद्य महात्मनामिक्ष्वाकूणां विषयः संप्रत्यनाथो जातः । रक्षकसुराजरहितो जात इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—कथमेवं वादस्तत्राह—राजदोषैरिति । असद्वृत्ते धर्मेण प्रजापालनहीने ॥ १६ ॥

रा० टी०—राजेति । राजदोषैः अविधिपालिताः प्रजाः न विद्यन्ते नश्यन्तीत्यर्थः तदेव भंग्यन्तरेणाह नृपतौ असद्वृत्ते सति जनः अकाले म्रियते ॥ १६ ॥

गो० टी०—कथमित्थं कथ्यत इत्यत्राह—राजदोषैरित्यादि ॥ १६ ॥

१७ ] ति० टी०—अयुक्तान्यनुचितकृत्यानि । न च रक्षास्ति, अनुचितकृत्यनिवारणं च यदा नास्ति तदैव कालकृतमकालमृत्युकृतं भयम्, नान्यथेत्यर्थः ॥ १७ ॥

रा० टी०—यदेति । यदा रक्षा नास्ति तदा पुरादिषु जनाः अयुक्तानि कुर्वते अत एव कालकृतं भयमस्ति भवति १७

गो० टी०—यद्वेति । अयुक्तानि अनुचितकृत्यानि । न च रक्षास्ति अनुचितकृत्यनिवारणं यदा नास्ति तदैव कालकृतं भयं, नान्यथेत्यर्थः ॥ १७ ॥

१८ ] ति० टी०—तस्मान्मत्पुत्रमरणं राजदोषहेतुकमेवेत्याह—सुव्यक्तमिति । पुरे जनपदे वानुचितकृत्यप्रवृत्तदण्डाभावरूपो राजदोषो जातो भविष्यति तथा तस्मादेवायं बालवधः । 'तथाकालवधो ह्ययम्' इति पाठान्तरम् ॥१८॥

रा० टी०—सुव्यक्तमिति । पुरे जनपदे वा राजदोषः सुव्यक्तं भविष्यत्येव अत एव अयं बालवधः ॥ १८ ॥

गो० टी०—सुव्यक्तमिति । तस्मादेव ह्ययमकालवधः॥१८॥

१९ ] ति० टी०—राजानमुपरुध्येत्यन्वयः ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

रा० टी०—एवमिति । बहुविधैर्वाक्यैर्मुहुर्मुहुः राजानमुपरुध्य तत्सन्निधिं प्राप्य सुतमुपगूहति ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिसप्ततितमः सर्गः ॥ ७३ ॥

गो० टी०—एवमिति । राजानमुपरुध्य ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिसप्ततितमः सर्गः ॥ ७३ ॥

१ ] ति० टी०—अथ महर्षीनाहूय तान्प्रति बालमरणनिमित्तप्रश्ने तेभ्यस्तन्निमित्तज्ञानलाभः—तथात्विति । सर्वं परिदेवनं दुःखमात्मनो वार्धकादिनिमित्तं शोकः पुत्रवियोगजस्ताभ्यां समन्वितं शुश्राव ॥ १ ॥

रा० टी०—द्विजविलापानन्तरकालिकं वृत्तमाह—तथेत्यादिभिः । राघवः द्विजस्य परिदेवनं विलापं शुश्राव ॥ १ ॥

गो० टी०—तथा त्वित्यादि ॥ १–५ ॥

२–५ ] ति० टी०—नैगमाः पौरास्तत्सहितान् ॥ २–५॥

१ त्विति गो० पाठः । २ तत इति गो० पाठः । ३ भ्रातरान्निति गो० पाठः ।

मन्त्रिणो नैगमाश्चैव यथार्हमनुकूलिताः । तेषां समुपविष्टाना सर्वेषां दीप्ततेजसाम् ॥ ६ ॥
राघवः सर्वमाचष्टे द्विजोऽयमुपरोधति । तस्य तद्वचनं श्रुत्वा राज्ञो दीनस्य नारदः ॥ ७ ॥
प्रत्युवाच शुभं वाक्यमृषीणां संनिधौ स्वयम् । शृणु राजन्यथाकाले प्राप्तो बालस्य संक्षयः ॥ ८ ॥
श्रुत्वा कर्तव्यतां राजन्कुरुष्व रघुनन्दन । पुरा कृतयुगे राजन्ब्राह्मणा वै तपस्विनः ॥ ९ ॥
अब्राह्मणस्तदा राजन्न तपस्वी कथंचन । तस्मिन्युगे प्रज्वलिते ब्रह्मभूते त्वनावृते ॥ १० ॥
अमृत्यवस्तदा सर्वे जज्ञिरे दीर्घदर्शिनः । ततस्त्रेतायुगं नाम मानवानां वपुष्मताम् ॥ ११ ॥
क्षत्रिया यत्र जायन्ते पूर्वेण तपसान्विताः । वीर्येण तपसा चैव तेऽधिकाः पूर्वजन्मनि ॥
मानवा ये महात्मानस्तत्र त्रेतायुगे युगे । ॥ १२ ॥

रा० टी०—स इति । दुःखेन द्विजदुःखश्रवणजनितखेदेन संतप्तो राघवः मन्त्रिप्रभृतीनुपाह्वयत् ॥ २ ॥

रा० टी०—तत इति । वसिष्ठेन सार्द्धं प्रवेशिता मार्कण्डेयादयः अष्टौ द्विजाः ततः प्रवेशानन्तरकाले वर्द्धस्वेति राजानं राममब्रुवन् श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

रा० टी०—एते इति । एते आगता द्विजर्षभा आसनेषूपवेशिता रामेणेति शेषः कृताञ्जलिः रामः महर्षीनभिवाद्य आस्तेति शेषः ॥ ५ ॥

६-७ ] ति० टी०—अनुकूलिताः कृतशिष्टाचाराः । अयं द्विज उपरोधति उपरुणद्धि । राजद्वारमिति शेषः । सर्वं राजदोषमूलमेव बालमरणं वदतीत्यादिकं च सर्वमाचष्टे॥६॥७॥

रा० टी०—मन्त्रिण इति । मन्त्रिप्रभृतयः यथार्हमनुकूलिताः सत्कृताः रामेणेति शेषः अर्हं पृथक् । तेषामिति । समुपविष्टानां तेषां मध्ये अयं द्विज उपरोधति उपरुणद्धि राजद्वारमिति शेषः इति सर्वं वृत्तं च राघव आचष्टे ॥ ६ ॥

रा० टी०—तस्येति । नारदः ऋषीणां सन्निधौ शुभं वाक्यं प्रत्युवाच ॥ ७ ॥

गो० टी०—तेषामिति । राघवः द्विजोयम् उपरोधत इति सर्वमाचष्टे ॥ ६ ॥ ७ ॥

८ ] ति० टी०—हे राजन् ! अयं बालस्य संक्षयो यथा येन प्रकारेणाकाले संप्राप्तस्तच्छृणु । ततस्तस्य प्रतिक्रियायाः कर्तव्यतामस्मद्वेयार्थं श्रुत्वा तत्कुरुष्व ॥ ८ ॥

रा० टी०—शृण्विति । यथा अकाले बालस्य संक्षयः प्राप्तः तथा शृणु ॥ ८ ॥

गो० टी०—शृण्विति । हे राजन् ! अकाले अयं बालसंक्षयः यथा येन प्रकारेण प्राप्तः तच्छृणु । ततस्तस्य प्रतिक्रियायाः कर्तव्यतां श्रुत्वा तत्कुरुष्व ॥ ८ ॥

९ ] ति० टी०—तदेव वक्तुं पीठिकामाह—पुरेति । तपस्विनोऽनशनप्रभृत्यनेककायक्लेशलक्षणतपोयुक्ता ब्राह्मणा एव कृतयुगेऽभवन् ॥ ९ ॥

रा० टी०—तदाकारमाह—पुरेत्यादिभिः । कृतयुगे ब्राह्मणा एव तपस्विनः अब्राह्मणस्तु कथञ्चन न तपस्वी ॥ ९ ॥

गो० टी०—प्रतिज्ञातमर्थमुपपादयितुं पीठिकामाह—पुरेत्यादि । त्रेतायुगे अनर्हस्य शूद्रस्य तपश्चरणमधर्मः । तेनायं बालवध इति वक्तुं चतुर्युगधर्माः क्रमेण चोच्यन्ते । कृतयुगे ब्राह्मणा एव तपस्विनो भवन्ति । अनशनप्रभृतिकायक्लेशकारिणो भवन्ति । ततस्तस्मादब्राह्मणः ब्राह्मणव्यतिरिक्तवर्णः कथंचन तपस्वी न भवति । नित्यनैमित्तिककर्ममात्रपर एव भवति॥९॥

१० ] ति० टी०—अब्राह्मणस्तद्व्यतिरिक्तः कथमपि तपस्वी न कृते इति शेषः । किं तु नित्यनैमित्तिककर्ममात्रपर एव । तस्मिन्युगे प्रज्वलिते तपसा दीप्ते । ब्रह्मभूते ब्राह्मणवर्णप्रधाने । अनावृतेऽज्ञानावरणरहितजने युगे कृतयुगे ॥१०॥

रा० टी०—तस्मिन्निति । ब्रह्मभूते ब्राह्मणप्रधानके तस्मिन् सत्ययुगे प्रज्वलिते सति सर्वे जनाः अमृत्यवः अकालमृत्युरहिताः दीर्घदर्शिनः आगतानागतविषयकज्ञानवन्तश्च सन्तः जज्ञिरे ॥ १० ॥

गो० टी०—तस्मिन्निति । प्रज्वलिते तपसा दीप्ते । ब्रह्मभूते ब्राह्मणवर्णप्रधाने अनावृते अज्ञानावरणरहिते । तस्मिन्युगे कृतयुगे । सर्वे एव तदा अमृत्यवः मरणहेत्वधर्मलेशस्याप्यभावात् मरणरहिताः । अज्ञानानावृतत्वाद्दीर्घदर्शिनः अतीतानागतज्ञाश्च भवन्ति ॥ १० ॥

११ ] ति० टी०—सर्वे एव तदामृत्यवो जज्ञिरे । मरणदुःखहेत्वधर्मलेशस्याप्यभावात् । अनावृतज्ञानत्वाच्च दीर्घदर्शिनोऽतीतानागतादिसकलज्ञानवन्तः । ततः कृतयुगसमाप्त्यनन्तरं वपुष्मतां शिथिलब्रह्मात्मबुद्धितया किंचिद्देहात्मबुद्धिमतां मानवानां त्रेतायुगं नाम भवति ॥ ११ ॥

रा० टी०—तत इति । ततः सत्ययुगानन्तरं वपुष्मतां देहिनां सम्बन्धि त्रेतायुगमवर्ततेति शेषः यत्र त्रेतायुगे क्षत्रियाः पूर्वेण पूर्वयुगे ब्राह्मणमात्राऽऽश्रितेनेत्यर्थः तपसान्विताः क्षत्रियाः जायन्ते ॥ ११ ॥

गो० टी०—तत इति । ततः कृतयुगावसाने । वपुष्मतां दृढशरीराणाम् । मानवानां मनुवंश्यक्षत्रियाणां संबन्धि त्रेतायुगं नाम भवति । तत्प्रधानत्वात्तत्संबन्धित्वम् । तत्र त्रेतायाम् । क्षत्रियाः पूर्णेन तपसान्विता जायन्ते ॥ ११ ॥

१२ ] ति० टी०—यत्र त्रेतायुगे पूर्वेण पूर्वयुगे पूर्ववर्णब्रा-

१ कूलता इति गो. पाठः २ रोधते इति गो. पाठः ।

ब्रह्म क्षत्रं च तत्सर्वं यत्पूर्वमवरं च यत्। युगयोरुभयोरासीत्समवीर्यसमन्वितम् ॥ १३ ॥
अपश्यन्तस्तु ते सर्वे विशेषमधिकं ततः। स्थापनं चक्रिरे तत्र चातुर्वर्ण्यस्य संमतम् ॥ १४ ॥
तस्मिन्युगे प्रज्वलिते धर्मभूते ह्यनावृते। अधर्मः पादमेकं तु पातयत्पृथिवीतले ॥
अधर्मेण हि संयुक्तस्तेजो मन्दं भविष्यति। ॥ १५ ॥
आमिषं यच्च पूर्वेषां राजसं च मलं भृशम्। अनृतं नाम तद्भूतं क्षिप्तेन पृथिवीतले ॥ १६ ॥

क्षणानुष्ठितेन तपसान्विताः क्षत्रिया जायन्ते। तादृशं त्रेतायुगं नामाभूदिति संबन्धः। कृतयुगे ब्राह्मणमात्रनिष्ठं तपस्त्रेतायां क्षत्रियसाधारणमभूदिति भावः। त्रयीविहितत्रेताग्निसाध्यकर्मसु प्रवृत्त्या युगस्य त्रेतासंज्ञेति पुराणविदः। किंच तत्र त्रेतायुगे त्रेतायुगाख्ये युगे महात्मानस्तपोयुक्ता ये मानवा ब्राह्मणाः क्षत्रिया वा सन्ति तदपेक्षया पूर्वस्मिञ्जन्मनि पूर्वजाते कृतयुगे तपोभाजो ये मानवास्ते वीर्येण प्रभावेण तपसा तपोतिशयेनाधिका उत्कृष्टाः ॥ १२ ॥

रा० टी०—वीर्येणेति। पूर्वजन्मनि युगे सत्ययुगे इत्यर्थः ते ब्राह्मणा एव वीर्येण तपसा चाधिकाः मानवाः क्षत्रियास्तु त्रेतायुगे एव वीर्येण तपसा चाधिकाः ॥ १२ ॥

गो० टी०—त्रेतायुगे तपस्विनो जाताः क्षत्रियाः कृतयुगे तपस्विभिर्ब्राह्मणैः किं तुल्याः नेत्याह—वीर्येणेति। अत्र त्रेतायुगे युगे त्रेतायुगाख्ये युगे महात्मानो ये मानवाः सन्ति तदपेक्षया पूर्वजन्मनि पूर्वस्मिन् कृतयुगे ये मानवास्ते तपसा वीर्येण चाधिकाः ॥ १२ ॥

१३ ] ति० टी०—अथ त्रेताकालिकक्षत्रियाणां कृतकालिकब्राह्मणेभ्यो न्यूनता, त्रेताकालिकब्राह्मणैस्तु समतेत्याह—ब्रह्म क्षत्रमिति। उभयोर्युगयोर्मध्ये कृतयुगे ब्रह्मपूर्वं तपोवीर्याभ्यामुत्कृष्टं क्षत्रं चावरं च ताभ्यां तपोवीर्याभ्यां न्यूनमासीत्तत्सर्वं ब्रह्मक्षत्ररूपमुभयं त्रेतायां समवीर्यसमन्वितमासीत्। कृते क्षत्रियाणां तपस्यनधिकारात्तद्युगीयेभ्यो ब्राह्मणेभ्यस्तेषां न्यूनता। त्रेतायां तूभयोरपि तपोधिकारादुभावपि तपोवीर्याभ्यां समाविति भावः। अर्थात्कृतयुगब्राह्मणेभ्यस्त्रेतायुगब्राह्मणानामपि न्यूनत्वमुक्तम् ॥ १३ ॥

रा० टी०—ब्रह्मेति। पूर्वमवरं तपसा हीनमित्यर्थः यत् क्षत्रं क्षत्रियकुलं तत् समवीर्यसमन्वितं सत्ययुगीयवीर्यसदृशवीर्ययुक्तम् ब्रह्म ब्राह्मणकुलं च तत्सर्वमुभयोर्युगयोः यत् इन्द्रियनिग्रहवदित्यर्थः आसीत् ॥ १३ ॥

गो० टी०—त्रेतायुगब्राह्मणास्तुल्या एवेत्याह—ब्रह्मेति। उभयोर्युगयोः कृतत्रेतयोः कृते यद्ब्रह्म पूर्वमुत्कृष्टम् यच्च त्रेतायामपकृष्टं क्षत्रम् तदुभयं त्रेतायां समप्रधानमासीत् ॥ १३ ॥

१४ ] ति० टी०—अतस्त्रेतायुगे ब्राह्मणक्षत्रिययोस्तपोविशेषेण तयोर्मध्ये ब्राह्मणस्य ततः क्षत्रादधिकं विशेषमपश्यन्तो मन्वादयः सर्वे तात्कालिका धर्मप्रवर्तनाधिकृताः। चातुर्वर्ण्यस्य स्वार्थे ष्यञ्। ब्राह्मणादिचतुर्वर्णानां संमतमनादितः सर्वलोकसंमतं स्थापनं वर्णानामाचारभेदकस्थापनं शास्त्रं तत्र त्रेतायुगे चक्रिरे। कृते तु विनैव स्थापनं स्वयमेव सर्वे वर्णाः स्वस्वधर्मरता इति भावः ॥ १४ ॥

रा० टी०—अपश्यन्त इति। ते तात्कालिकाधिकारिण इत्यर्थः सर्वे मनुप्रभृतयः ततः ब्राह्मणक्षत्रियादधिकममन्यदित्यर्थः अपश्यन्त आसन्निति शेषः अत एव सर्वे मन्वादयः चातुर्वर्ण्यस्य चतुर्णां वर्णानां सम्मतं सर्वसम्मतिविषयीभूतं स्थापनमाचारभेदेन विभागं चक्रिरे एतेन सेवाकर्तृन्विना क्षत्रियाणां मनःप्रसादो न जात इति ध्वनितम् ॥ १४ ॥

गो० टी०—एतदेवाह—अपश्यन्निति। सर्वे जनाः। ततः क्षत्रियात्। ब्राह्मणस्याधिकं विशेषं तु नापश्यन्। अपश्यन्तस्तु ते सर्वे इति पाठः। तत्स्थापनमाचारभेदं वेदोदितं चक्रिरे। चातुर्वर्ण्यस्येत्यत्र स्वार्थे ष्यञ्। कृतयुगे तपस्तदभावाभ्यामुभयोर्वैलक्षण्यं स्पष्टम्। त्रेतायुगे उभयोरपि तपस्साम्यात् वैलक्षण्यकरमाचारभेदमकल्पयन्नित्यर्थः। एवं वैश्यशूद्रयोरपि वेदपुराणोक्ताचारव्यवस्थां महान्तोकल्पयन्नित्यर्थः ॥ १४ ॥

१५ ] ति० टी०—तस्मिंस्त्रेतायुगे धर्मभूते वर्णाश्रमप्रयुक्तयागादिधर्मबहुलेऽनावृते धर्माचरणप्रतिबन्धकपापरहिते प्रज्वलिते तेनैव धर्मेण प्रदीप्ते सत्यधर्मो हिंसानृतासंतोषविग्रहरूपचतुष्पात्पृथिवीतले पादं चतुर्थांशं पातयदपातयत्। प्रवर्तयामासेत्यर्थः। एवं च त्रेतापुरुषाः कृतयुगपुरुषा इव निर्मलज्ञानराहित्याद्ब्रह्मज्ञानाधिकारशून्या अग्निहोत्रादिधर्मे एव प्रवृत्ताः। ज्ञानाभावादेव चाधर्मोऽपि पादेन प्रवृत्त इति भावः। अत एव ते कृतयुगपुरुषेभ्यः क्षीणा इत्याह—अधर्मेणेति। यतस्तेन संयुक्तो लोको वर्णाश्रमाधिकृतो भवति ततस्तस्य तेजो मन्दं भविष्यति ॥ १५ ॥

रा० टी०—तस्मिन्निति। धर्मभूते प्रचुरधर्मविशिष्टे अत एव अनावृते तत्वावरकमहाज्ञानविशिष्टजनरहिते तस्मिन् त्रेतायुगे अधर्मः अनृतहिंसासन्तोषविग्रहरूपपादचतुष्टयविशिष्टो धर्मविरोधी एकं पादं चरणं पृथिवीतले पातयत् अपातयत् १५

गो० टी०—तस्मिन्निति। धर्मभूते यज्ञादिधर्मप्रधाने अनावृते अधर्मावरणरहिते। तस्मिन् त्रेतायुगे प्रवृत्ते अधर्मः पादं चतुर्थांशं पातयदपातयत् वर्तयामास। त्रेतायुगपुरुषाः कृतयुगपुरुषवद्विमलज्ञानरहिततया ब्रह्मज्ञानाधिकारशून्याः वर्णाश्रमधर्मानेवाचरन्। अतो विमलज्ञानाभावादधर्मः पादमवतीर्ण इत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—एवं च तेषां कृष्यादिकमेव जीवनो-

१ अपरमिति गो. पाठः। २ पादेनेति गो. पाठः।

अनृतं पातयित्वा तु पादमेकमधर्मतः । ततः प्रादुष्कृतं पूर्वमायुषः परिनिष्ठितम् ॥ १७ ॥
[1]पातिते त्वनृते तस्मिन्नधर्मेण महीतले । शुभान्येवाचरँल्लोकः सत्यधर्मपरायणः ॥ १८ ॥
त्रेतायुगे च वर्तन्ते ब्राह्मणाः क्षत्रियाश्च ये । तपोऽतप्यन्त ते सर्वे शुश्रूषामपरे जनाः ॥ १९ ॥
स्व[2]धर्मः परमस्तेषां वैश्यशूद्रं तदागमत् । पूजां च सर्ववर्णानां शूद्राश्चक्रुर्विशेषतः ॥ २० ॥

पाय इत्याह—आमिषमिति । पूर्वेषां कृतयुगस्थानां भृशमत्यर्थं मलं मलवस्याज्यं यद्राजसं रजोगुणमूलमामिषं जीवनोपायरूपं कृष्याद्यासीत्तदनृतं नाम । 'सेवाश्ववृत्तिरनृतं कृषिः' इति कोशात् । तद्रूपेण पादेन पृथिवीतले भूतं प्राप्तम् । अधर्मेणेति शेषः । कृते त्वकृष्टपच्याहारा इति भाव इति तीर्थः । कतकस्तु—अपि च पूर्वेषां स्वस्ववंश्यानां यच्चामिषं पुरदेशगृहक्षेत्रादि तदुद्दिश्य राजसं रजोगुणमूलं द्वेषलक्षणं भवति । त्रेतायामिति शेषः । 'काम एष क्रोध एष रजोगुणसमुद्भवः' इत्युक्तेः कोनामाधर्मस्य पादस्तत्राह—अनृतमिति । येन पृथिवीक्षिप्तेन पादेन तत्प्रागुक्तं द्वेषरूपं मलं भूतं तदनृतं नाम । देहात्मताधीरूपमिथ्याज्ञानात्मकः सर्वानर्थमूलोऽहंकारमयः प्रथमः पाद इत्यर्थ इत्याह ॥ १६ ॥

रा० टी०—अधर्मेणेति । अधर्मेण अधर्मचरणेन संयुक्तो जनः मन्दं तेजो भविष्यति प्राप्स्यति अर्द्धम् पृथक् ॥ १६ ॥

रा०टी०—आमिषमिति । पृथिवीतले भूतमधर्मेण प्रापितं चरणमनृतं नाम अनृतनामकमित्यर्थः ततस्य चरणस्य क्षिप्तेन हेतुना यत् राजसं कामक्रोधं पूर्वेषां सत्ययुगस्थानां मलम् मलवस्यक्तम् तत् आमिषम् त्रेतायुगस्थबहूनां भोग्यमभवदिति शेषः आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनीति कोशः ॥१७॥

गो० टी०—एवमीषत्पापसंबन्धात्तदात्वानां जनानां प्रभावः पूर्वयुगपुरुषेभ्यः क्षीणोभूदित्याह—अधर्मेण इति । भविष्यतीति भूते लृट् । एवं त्रेतायुगजनानां प्रभावस्याल्पत्वेन सत्यसंकल्पत्वाकृष्टपच्यत्वादिसिद्ध्यभावात् कृष्यादिकमेव जीवनोपायोभूदित्याह—आमिषमिति । सर्वेषां कृतयुगब्राह्मणानां राज्ञां च भृशं मलं मलवन्निन्द्यमानमामिषं जीवनोपायः अनृतं कृषिर्नाम प्रसिद्धं यदस्ति तत्पृथिवीतले पादेन भूतं स्थितम् । कृतयुगपुरुषतुल्यवैभवाभावेनाकृष्टपच्यत्वाद्यभावात् त्रेतायुगपुरुषाणाम् अनृतमेव जीवनोपायोभूदित्यर्थः । सेवाश्ववृत्तिरनृतं कृषिरुञ्छशिलं त्वृतमित्यमरः ॥ १६ ॥ १७ ॥

१७ ] ति० टी०—तत्पादपाते किं भवतीत्याह—अनृतमिति । उक्तरूपमेकमनृतपादं पातयित्वा निक्षिप्याधर्मतोऽधर्मेण पूर्वयुगेऽपरिमितस्यायुषः परिनिष्ठितं परिमाणं प्रादुष्कृतं तेन कृतयुगपुरुषापेक्षया त्रेतापुरुषाणां प्रभावादिन्यूनता आयुर्न्यूनता चोक्ता ॥ १७ ॥

रा० टी०—कामक्रोधप्राप्तौ दोषमाह—अनृतमिति । अधर्मतः अधर्मेण अनृतमेकं पादं पातयित्वा ततः अनृतकार्यभूतकामक्रोधात् आयुषः परिनिष्ठितं परिनिष्ठितत्वं सत्ययुगायुःप्रमाणापेक्षयाल्पप्रमाणकत्वमित्यर्थः प्रादुष्कृतम् एतेन प्रभावादीनामप्यल्पत्वं सूचितम् ॥ १८ ॥

गो० टी०—एवमायुषः क्षयोप्यभूदित्याह—अनृतमिति । अधर्मतः अधर्मस्तदेकं पादमनृतलक्षणं जीवनोपायं पातयित्वा निक्षिप्य । ततस्तेनैव पातेन पूर्वं प्रथममायुषः परिनिष्ठितं विनाशः प्रादुष्कृतं प्रादुर्भूतम् । कृतयुगपुरुषापेक्षया त्रेतायुगपुरुषा न्यूनायुषोऽभवन्नित्यर्थः ॥ १८ ॥

१८ ] ति० टी०—अथायुःक्षयकारकाधर्मपादपरिहारहेतुव्यापारोपदेशः—पातिते त्विति । अधर्मेण तस्मिन्ननृते उक्तलक्षणानृतपादे महीतले पातिते सति तत्प्रयुक्तायुःक्षयपरिहाराय शुभान्येव यज्ञदानतपोरूपपुण्यकर्माण्येवाचरँल्लोको धर्माधिकारी तद्बलात्सत्यधर्मपरायणो भवति । अनेन त्रेतायां यज्ञाद्यनुष्ठानेन शुद्धचित्तस्य झटिति देहात्माभिमाननिवृत्तिरित्युक्तम् ॥ १८ ॥

रा० टी०—पातित इति । अधर्मेण अनृते पातिते सति लोकः एतद्वृत्तज्ञाता जनः सत्यधर्मपरायणः दृढं सत्याश्रितस्सन् शुभान्येवाचरत् अनृतसंसर्गभिया शुभकर्मतो न न्यवर्तन्त इत्यर्थः ॥ १९ ॥

गो० टी०—एवमनुभावस्यायुषः क्षये प्रवृत्ते सति भीताः सन्तः त्रेतायुगपुरुषाः शुभाचरणे निरता आसन्नित्याह—पातिते त्विति । अधर्मे अधर्मजायुःक्षये । पातिते त्वनृते तस्मिन्नधर्मेणेति च पाठः ॥ १९ ॥

१९ ] ति० टी०—उक्तमेव स्पष्टीकरोति—त्रेतेति । ब्राह्मणाः क्षत्रियाश्च ये त एव यज्ञादिशुद्धचित्तास्तपोऽतप्यन्त । अपरे सर्वे विट्शूद्रसंकरविशेषाः । ब्राह्मणक्षत्रियशुश्रूषां चक्रुरिति शेषः ॥ १९ ॥

रा० टी०—फलितमाह—त्रेतेति । त्रेतायुगे ये ब्राह्मणाः क्षत्रियाश्च वर्तन्ते ते सर्वे तपोऽतप्यन्त अपरे जनाः वैश्यप्रभृतयः शुश्रूषां ब्राह्मणक्षत्रियसेवामेवाकुर्वन्निति शेषः ॥ २० ॥

गो० टी०—शुभाचारे भेदमेव दर्शयति—त्रेतेति । शुश्रूषां पूर्ववर्णपरिचर्याम् । अपरे वैश्यशूद्राः । अकुर्वन्निति शेषः २०

२० ] ति० टी०—अथ तेषां मध्ये वैश्यशूद्रम् । समाहारद्वन्द्वः । शुश्रूषारूपः परमः स्वधर्म उत्कृष्टः स्वधर्मो भूत्वागमत्प्राप्तोऽभूत् । तदेवाह—पूजां चेति । सर्ववर्णानां त्रैवर्णिकानाम् । एवं च वैश्यस्य कृष्यादिकरणेन द्विवर्णसेवाधर्म इत्यर्थादुक्तमिति बोध्यम् ॥ २० ॥

रा० टी०—स्वधर्म इति । तेषां ब्राह्मणादीनां मध्ये

१ पतिते इति गो. पाठः । २ स धर्मं इति गो. पाठः ।

एतस्मिन्नन्तरे तेषामधर्मे चानृते च ह । ततः पूर्वे पुनर्ह्रासमगमन्नृपसत्तम ॥ २१ ॥
ततः पादमधर्मस्य द्वितीयमवतारयत् । ततो द्वापरसंख्या सा युगस्य समजायत ॥ २२ ॥
तस्मिन्द्वापरसंख्ये तु वर्तमाने युगक्षये । अधर्मश्चानृतं चैव ववृधे पुरुषर्षभ ॥ २३ ॥
अस्मिन्द्वापरसंख्याने तपो वैश्यान्समाविशत् । त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्क्रमाद्वै तप आविशत्॥२४॥
त्रिभ्यो युगेभ्यस्त्रीन्वर्णान्धर्मश्च परिनिष्ठितः । न शूद्रो लभते धर्मं युगतस्तु नरर्षभ ॥ २५ ॥
हीनवर्णो नृपश्रेष्ठ तप्यते सुमहत्तपः । भविष्यच्छूद्रयोन्यां हि तपश्चर्या कलौ युगे ॥ २६ ॥

वैश्यशूद्रं समाहारद्वन्द्वः तत् ब्राह्मणक्षत्रियशुश्रूषणम् स्वधर्मः स्वावश्यकर्तव्यत्वेन रूपेण विद्यमानस्सन् आगमत् प्राप्नोत् शूद्रास्तु सर्ववर्णानां वैश्यपर्यन्तानां विशेषतः पूजां चक्रुः ॥२१॥

गो० टी०—शुश्रूषानन्त पूर्वोक्तकृष्यादिकमपि वैश्यशूद्रयोः परमधर्मोऽभूदित्याह—स धर्म इति । स्वधर्मः परम इति च पाठः । पूजां चेति । वैश्यानां हि शुश्रूषा । अतोपि कृष्यादिकमेव परमो धर्मोऽभूत् । शूद्राणां कृष्यादिभ्योपि शुश्रूषैव विशिष्टो धर्मोऽभूदित्यर्थः ॥ २१ ॥

२१ ] ति० टी०—अथ द्वापरप्रवृत्तिं दर्शयितुमाह—एतस्मिन्निति । एतस्मिन्नन्तरे त्रेतायुगावसानकाले तेषां वैश्यशूद्राणामनृतरूपेऽधर्मपादे सम्यक्प्राप्ते सतीति शेषः । ततः पूर्वे ब्राह्मणाः क्षत्रिया ह्रासमगमन्प्राप्ताः । 'त्रासमुपागमन्' इति पाठे सेवकदोषस्य स्वामिप्राप्यत्वाद्राष्ट्रदोषाद्भीता बभूवुः ॥२१॥

रा० टी०—द्वापरप्रवृत्तिं दर्शयितुमाह—एतस्मिन्निति । एतस्मिन्नन्तरे वैश्यशूद्रविशेषसेवासमये त्रेतायुगावसानसमये इत्यर्थः तेषां वैश्यशूद्राणाम् अनृते अनृतरूपे अधर्मे अधर्मप्रथमपादे प्राप्ते सतीति शेषः पूर्वे ब्राह्मणक्षत्रियाः ह्रासं तादृशसेवकसंसर्गेणाल्पतेजःप्रभृतित्वमगमन् ॥ २२ ॥

गो० टी०—एवं त्रेतायुगे लोकस्थितिमुक्त्वा तदवस्थानकालस्थितिमाह—एतस्मिन्निति । एतस्मिन्नन्तरे त्रेतायुगावसानकाले । अधर्मे अधर्मकार्ये आयुषः क्षये । अनृते कृष्याद्युपाये च प्रवृत्ते सति क्षीणायुषो वृत्तिकर्शिताश्च । पूर्वे त्रेतायुगस्थाः । ह्रासं विनाशमगमन् ॥ २२ ॥

२२] ति० टी०—ततस्तदनन्तरमधर्मस्य द्वितीयं पादं ममतारूपमधर्मोऽवतारयत् । ततो द्वितीयपादावतारणादेव तृतीययुगस्य द्वापरसंख्या द्वापर इति नाम । पृषोदरादित्वात्साधुः॥२२॥

रा० टी०—तत इति । ततोऽनन्तरमधर्मस्य द्वितीयपादं हिंसामित्यर्थः अवतारयत् उदपादयत् ततस्माद्धेतोः युगस्य तृतीयस्येत्यर्थः द्वापरसंख्याद्वापराभिधा समजायत द्वौ अपरौ धर्मौ आगतौ यस्मिन् पृषोदरादित्वात् साधुः ॥ २३ ॥

गो०टी०—तत इति । अधर्मः सः त्रेतायुगप्रसारितैकपादः २३

२३ ] ति० टी०—तत्कालिकलोकस्थितिमाह—तस्मिन्निति । द्वापरसंख्ये द्वापराख्ये युगस्याधर्मपादद्वयस्य क्षये आश्रयभूते युगे वर्तमाने तद्रूपाश्रयं प्राप्याधर्मो विहितातिक्रमरूपोऽनृतं च ववृधे । अहंभावममतयोराधिक्यात् । तीर्थस्तु-अधर्मवृद्धिरत्यल्पायुष्ट्वम्, अनृतवृद्धिः प्रयासबाहुल्येन कृषिसाफल्यमित्याह ॥ २३ ॥

रा०टी०—तस्मिन्निति । युगस्य अधर्मपादद्वयस्य क्षये आश्रयभूते किं च युगक्षये त्रेतावसाने द्वापरसंख्ये द्वापराख्ये वर्तमाने सति अधर्मः अधर्मद्वितीयपादो हिंसा अनृतं च ववृधे २४

गो० टी०—तस्मिन्निति । अधर्मस्याभिवृद्धिर्नाम त्रेतायुगपुरुषेभ्योल्पायुष्यम् । अनृतस्याभिवृद्धिस्तु प्रयासबाहुल्येन कृषेः सफलत्वम् ॥ २४ ॥

२४ ] ति० टी०—तद्वृद्धिफलमाह—वैश्यांस्तपः समाविशत् । एवं त्रिभ्यो युगेभ्यः सप्तम्यर्थे चतुर्थी । त्रिषु युगेषु २४

रा० टी०—अस्मिन्निति । द्वापरसंख्याते द्वापराख्ये तपो वैश्यान् समाविशत् अर्द्धं पृथक् ॥ २५ ॥

गो० टी०—तस्मिन्निति । तपः वैश्यान् समाविशत् । वैश्यास्तपोधिकारिणोऽभवन्नित्यर्थः । एवं युगत्रयधर्मानभिधाय प्रकृतं वक्तुं तत्रोपयुक्तमर्थं संक्षिप्याह—त्रिभ्य इति । हेतौ पञ्चमी २५

२५ ] ति० टी०—तथा त्रिषु युगेषु त्रीन्वर्णानवलम्ब्य धर्मस्तपोरूपः परिनिष्ठितः परिनिष्ठितोऽभूत् । धर्मं तपोलक्षणं शूद्रो युगतो युगत्रयेऽपि न लभते ॥ २५ ॥

रा० टी०—फलितमाह—त्रिभ्य इति । त्रिभ्यो युगेभ्यः त्रिषु युगेषु यो धर्मस्तपश्चरणं त्रीन्वर्णान् परिनिष्ठितः क्रमप्राप्तः स्वधर्मत्वेन प्राप्तः तं धर्मं युगतः त्रिषु युगेषु शूद्रो न लभते अलभत २६

गो०टी०-त्रिभ्य इति । प्रकृतं बालवधहेतुमाह-हीनेति २६

२६ ] ति० टी०—किं तु हीनवर्णः शूद्रः कदाचित्सुमहत्तपस्तप्यते । कदा तत्राह—भविष्यदिति । भविष्यत्कालवर्तिन्यां शूद्रयोन्यां शूद्रजातौ कलौ युगे तपश्चर्या भविष्यति, न त्वेतत्कालिके इति भावः ॥ २६ ॥

रा० टी०—हीनेति । कलौ युगे भविष्यच्छूद्रयोन्यां तपश्चर्यापि स्वधर्म इति शेषः अत एव कलौ युगे हीनवर्णः सुमहत्तपः तप्यते तप्ता ॥ २७ ॥

गो० टी०—भविष्यदिति । इकारलोपश्छान्दसः । तपश्चर्या तपश्चरणाधिकारः । शूद्राणां तपश्चर्या कलियुग एव धर्मो भविष्यति अस्मिन्युगे स्वधर्म इत्याह—अधर्म इति । रामराज्यस्य त्रेतायुगत्वेपि, अधर्मः परमो राजन् द्वापरे शूद्रजन्मन इत्युक्तेः, किन्तुत त्रेतायामित्यर्थः ॥ २७—३० ॥

१ सुखमिति गो. पाठः । २ अधर्मः स इति गो. पाठः । ३ संज्ञे इति गो. पाठः । ४ वै इति गो. पाठः ।

अधर्मः परमो राजन्द्वापरे शूद्रजन्मनः । स वै विषयपर्यन्ते तव राजन्महातपाः ॥ २७ ॥
अद्य तप्यति दुर्बुद्धिस्तेन बालवधो ह्ययम् । यो ह्यधर्ममकार्यं वा विषये पार्थिवस्य तु ॥ २८ ॥
करोति चाश्रीमूलं तत्पुरे वा दुर्मतिर्नरः । क्षिप्रं च नरकं याति स च राजा न संशयः ॥ २९ ॥
अधीतस्य च तप्तस्य कर्मणः सुकृतस्य च । षष्ठं भजति भागं तु प्रजा धर्मेण पालयन् ॥ ३० ॥
षड्भागस्य चै भोक्तासौ रक्षते न प्रजाः कथम् । स त्वं पुरुषशार्दूल मार्गस्व विषयं स्वकम् ॥ ३१ ॥
दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर । एवं चेद्धर्मवृद्धिश्च नृणां चायुर्विवर्धनम् ॥
भविष्यति नरश्रेष्ठ बालस्यास्य च जीवितम् । ॥ ३२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

## पञ्चसप्ततितमः सर्गः ।

नारदवचनं निशम्य प्रहृष्टो रामो लक्ष्मणमुखेन जरद्द्विजन्मानं समाश्वास्य नगरे भरतलक्ष्मणौ निक्षिप्य स्मरणसमसमयसंनिहितपुष्पकमारुह्य प्रतीचीमुदीचीं प्राचीं च हरितं क्रमेण विचिन्वन्नपि तत्र कंचनाधर्ममपश्यन्दक्षिणां दिशं गत्वा तत्र कस्मिंश्चित्सरसि लम्बमानमधोमुखं तपस्यन्तमुपलभ्य को भवान् जातिः का किमर्थोऽयं यत्न इत्याद्यपृच्छत् ।

नारदस्य तु तद्वाक्यं श्रुत्वामृतमयं यथौ । प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ १ ॥
गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय सुव्रत । बालस्य च शरीरं तत्तैलद्रोण्यां निधापय ॥ २ ॥
गन्धैश्च परमोदारैस्तैलैश्च [१]सुसुगन्धिभिः । यथा न क्षीयते बालस्तथा सौम्य विधीयताम् ॥ ३ ॥

---

२७ ] ति० टी०–यदेवमतो द्वापरेऽपि शूद्रजन्मनस्तपोधारणं परमोऽधर्मः किमुताद्य त्रेतायाम् । स शूद्रो वै निश्चयेन तव विषयपर्यन्ते देशसमीपे महातपा भूत्वा दुर्बुद्धिरद्य तपति । तेनैव हेतुनायं बालवधो जातः ॥ २७ ॥

रा० टी०–प्रकृतमाह–अधर्म इति । द्वापरे शूद्रजन्मनः परमोऽधर्मः तप इति शेषः यदि द्वापरे एवाधर्मः तर्हि त्रेतायां किं वक्तव्यमिति काव्यार्थापत्त्यलङ्कारः सूचितः अर्द्धं पृथक् । स इति । तव विषयपर्यन्ते देशान्ते स शूद्रः महातपास्सन् अद्य तप्यति तेन हेतुना अयं बालवधः ॥ २८ ॥

२८–३० ] ति० टी०–उक्तमेव व्याख्याय पुनराह–यो हीति । यो हि दुर्मतिः पार्थिवस्य विषये देशे पुरे वाधर्मं विहितधर्मलोपमकार्यं निषिद्धकृत्यं वा करोति तदेव पुरे राज्ये वाश्रीमूलमलक्ष्मीमूलं भवति, तदनिवारयन्स राजा क्षिप्रं नरकं याति, इहामुत्र च परमकष्टमलं प्राप्नोति नात्र संशयः॥२८–३०॥

रा० टी०–ननु तत्पापेन अयं बालः कथं मृत इत्यत आह–य इति । यो नरः पार्थिवस्य विषये पुरे वा अधर्मं धर्मविरुद्धम् अकार्यं स्वस्याकर्तव्यं धर्मं वा करोति तस्य तत्करणमश्रीमूलं विपत्तिकारणं तत्समीपवासिनामपीति शेषः सः अधर्मनिवारणस्याकर्ता राजा तु क्षिप्रं नरकं याति सार्द्धश्लोक एकान्वयी ॥२९॥३०॥

३१ ] ति० टी०–नन्वन्यदीयाधर्मेण कथं राज्ञः कष्टमलप्राप्तिरत आह–षड्भागस्येति । रक्षार्थं धनधान्यपुण्यादिषड्भागवेतनभोक्ता कथं न रक्षेत् । न्यायेन रक्षायां धर्मादिषड्भागप्राप्तिवदरक्षणेऽधर्मभागप्राप्तिरपीति भावः । अतः स त्वमिति ॥ ३१ ॥

रा० टी०–ननु प्रजाकृताधर्मेण राज्ञः कथं नरकप्राप्तिरित्यत आह- अधीतस्येति । धर्मेण प्रजाः पालयन् राजा अधीतादेः षष्ठं भागमंशं भजति प्राप्नोति अतः षड्भागस्य भोक्ता असौ राजा प्रजाः कथं न रक्षते एतेन पालनाकरणमधर्मः राजानं विनाशयत्येवेति सूचितम् सार्द्धश्लोक एकान्वयी ॥३१॥

गो० टी०–कथमन्येषु पापं कुर्वाणेषु राज्ञो नरकप्राप्तिस्तत्राह–षड्भागस्येति ॥ ३१ ॥

३२ ] ति० टी०–यत्नं निवारणयत्नम् ॥ ३२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

रा० टी०–स इति । विषयं देशं मार्गस्व यत्र जने दुष्कृतं पश्येथाः तत्र तस्मिन् यत्नं निवारणोपायं समाचर ॥ ३२ ॥

रा० टी०–एवमिति । एवमनेन प्रकारेण चेद्यदि करिष्यसीति शेषः तर्हि अस्य बालस्य जीवितं च भविष्यति॥३३॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुःसप्ततितमः सर्गः ॥ ७४ ॥

गो० टी०–स इति । तत्र यत्नं निराकरणयत्नम्॥३२॥३३॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुःसप्ततितमः सर्गः ॥ ७४ ॥

---

१–३ ] ति० टी०–अथ शूद्रतपस्विनोऽन्विष्य दर्शनम्–नारदस्येति ॥ १–३ ॥

---

१ नेति गो. पाठः । २ तदेति गो. तथेति रा. पा. । ३ द्रुमतमिवि गो. पाठः । ४ अपीति गो. पा. ।

यथा शरीरो बालस्य गुप्तः सन्क्लिष्टकर्मणः । विपत्तिः परिभेदो वा न भवेच्च तथा कुरु ॥ ४ ॥
एवं संदिश्य काकुत्स्थो लक्ष्मणं शुभलक्षणम् । मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ५ ॥
इङ्गितं स तु विज्ञाय पुष्पको हेमभूषितः । आजगाम मुहूर्तेन समीपे राघवस्य वै ॥ ६ ॥
सोऽब्रवीत्प्रणतो भूत्वा अयमस्मि नराधिप । वश्यस्तव महाबाहो किंकरः समुपस्थितः ॥ ७ ॥
भाषितं रुचिरं श्रुत्वा पुष्पकस्य नराधिपः । अभिवाद्य महर्षीन्स विमानं सोऽध्यरोहत ॥ ८ ॥
धनुर्गृहीत्वा तूणी च खड्गं च रुचिरप्रभम् । निक्षिप्य नगरे चैतौ[2] सौमित्रिभरतावुभौ ॥ ९ ॥
प्रायात्प्रतीचीं हरितं विचिन्वंश्च ततस्ततः । उत्तरामगमच्छ्रीमान्दिशं हिमवतावृताम् ॥ १० ॥
अपश्यमानस्तत्रापि स्वल्पमप्यथ दुष्कृतम् । पूर्वामपि दिशं सर्वामथोऽपश्यन्नराधिपः ॥ ११ ॥
प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् । पुष्पकस्थो महाबाहुस्तदापश्यन्नराधिपः ॥ १२ ॥
दक्षिणां दिशमाक्रामत्ततो राजर्षिनन्दनः । शैवलस्योत्तरे पार्श्वे ददर्श सुमहत्सरः ॥ १३ ॥
तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः । ददर्श राघवः श्रीमाँल्लम्बमानमधोमुखम् ॥ १४ ॥
राघवस्तमुपागम्य तप्यन्तं तप उत्तमम् । उवाच च[3] नृपो वाक्यं धन्यस्त्वमसि सुव्रत ॥ १५ ॥
कस्यां योन्यां तपोवृद्ध वर्तसे दृढविक्रम । कौतूहलात्त्वां पृच्छामि रामो दाशरथिर्ह्यहम् ॥ १६ ॥

---

रा० टी०—नारदवचनश्रवणानंतरकालिकं वृत्तमाह—नारदस्येत्यादिभिः । इदमब्रवीच्च राम इति शेषः ॥ १ ॥

रा० टी०—तदाकारमाह—गच्छेत्यादिभिः । द्विजश्रेष्ठं समाश्वासय बालस्य शरीरं तु गंधादिभिः युक्तायाम् तैलद्रोण्यां निधाय यथा येन प्रकारेण बालस्तत् शरीरं न क्षीयते तथा विधीयतां श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—नारदस्येत्यादि ॥ १–३ ॥

४–५ ] ति० टी०—यथा न क्षीयते तथा विधीयतामित्युक्तमेव विवृणोति—यथेति । क्लिष्टकर्मणः शुभाचारस्य बालस्य शरीरः । अर्धर्चादिः । गुप्तः सन्यथा न क्षीयते तथा विधीयतामिति पूर्वेणान्वयः । विपत्तिः स्वरूपनाशः । शरीरस्येति शेषः । परिभेदः संधिबन्धकेशादिविश्लेषजो रूपभेदश्च । तदुभयं यथा न भवति तथा कुरु ॥ ४ ॥ ५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—यथेति । क्लिष्टकर्मणः विनष्टक्रियस्य मृतस्येत्यर्थः बालस्य शरीरः विपत्तिः स्वरूपनाशवान् परिभेदः रूपविपर्ययविशिष्टो वा यथा न भवेत् तथा कुरु४

रा० टी०—एवमिति । काकुत्स्थः आगच्छेति मनसा पुष्पकं दध्यौ ॥ ५ ॥

गो० टी०—उक्तार्थस्य विवरणं—यथेत्यादि । बालस्य शरीर इति लिङ्गव्यत्ययः । विपत्तिः स्वरूपनाशः । भेदः सन्धिबन्धादिविनिर्मुक्तिः ॥ ४ ॥ ५ ॥

६–९ ] ति० टी०—पुष्पकस्तदधिष्ठातृचेतनः ॥ ६–९ ॥

रा० टी०—इङ्गितमिति । पुष्पकः इङ्गितमभिप्रायं विज्ञाय आजगाम ॥ ६ ॥

रा० टी०—स इति । हे नराधिप ! तव वश्यः किङ्करः अत एव समुपस्थितः अयमहमस्मि इति स पुष्पकोऽब्रवीत्॥७॥

रा० टी०—भाषितमिति । सः धर्मविरोधिविघातकस्स रामः विमानमध्यरोहत ॥ ८ ॥

रा० टी०—धनुरिति । धनुरादि गृहीत्वा सौमित्रिभरतौ नगरे निक्षिप्य संस्थाप्य विचिन्वन्सन् प्रतीचीं पश्चिमां हरितं दिशं प्रायात् ततोऽनन्तरमुत्तरां दिशमगमत् श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

गो० टी०—इङ्गितमिति । स त्विति । पुष्पकाधिष्ठातृचेतन इत्यर्थः ६–९ ॥

१० ] ति० टी०—हरितं दिशं विचिन्वन् । शूद्रतपस्विनमिति शेषः ॥ १० ॥

गो० टी०—प्रायादिति । हरितं दिशं विचिन्वन्निति । शूद्रतपस्विनमिति शेषः ॥ १० ॥

११–१२ ] ति० टी०—अपश्यमानोऽपश्यन् ॥११॥१२॥

रा० टी०—अपश्यमान इति । तत्र पश्चिमोत्तरयोः स्वल्पमपि दुष्कृतमपश्यमानो रामः पूर्वां दिशमपश्यत् ॥ ११ ॥

रा० टी०—प्रविशुद्धेति । प्रविशुद्धः समाचारो यस्यामत एव आदर्शतलवन्निर्मलां पूर्वामिति शेषः नराधिपोऽपश्यत् ॥ १२ ॥

गो० टी०—अपश्यमान इति । अपश्यमानः अपश्यन् ॥ ११ ॥ १२ ॥

१३–१६ ] ति० टी०—शैवलस्य शैवलाख्यस्य विन्ध्यसमीपदक्षिणभागवर्तिगिरेः ॥ १३–१६ ॥

रा० टी०—दक्षिणामिति । राजर्षिनन्दनः दक्षिणां दिशमाक्रामत् ततोऽनन्तरं शैवलस्य तदभिधविन्ध्यासमीपदक्षिणभागवर्त्तिपर्वतस्य उत्तरे पार्श्वे सुमहत्सरो ददर्श ॥ १३ ॥

रा० टी०—तस्मिन्निति । तस्मिन्सरसि सुमहत्तपस्त-

---

१ आदिश्येति गो. पा. । २ वीराविति गो. पा. । ३ स तदेति गो. पा. ।

कोऽर्थो मनीषितस्तुभ्यं स्वर्गलाभो परोऽथवा । वराश्रयो यदर्थं त्वं तपस्यन्यैः सुदुश्चरम् ॥ १७ ॥
यमाश्रित्य तपस्तप्तं श्रोतुमिच्छामि तापस । ब्राह्मणो वासि भद्रं ते क्षत्रियो वासि दुर्जयः ॥
वैश्यस्तृतीयो वर्णो वा शूद्रो वा सत्यवाग्भव । ॥ १८ ॥
इत्येवमुक्तः स नराधिपेन अवाक्शिरा दाशरथाय तस्मै ।
उवाच जातिं नृपपुंगवाय यत्कारणं चैव तपःप्रयत्नः । ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

## षट्सप्ततितमः सर्गः ।

राघवप्रश्नमाकर्ण्य शूद्रोऽहं सशरीरः स्वर्गं जिगमिषुः शम्बूकनामेति कथयतस्तस्य दाशरथिः खड्गेन शिरश्चिच्छेद ततस्तुष्टान्देवान्मृतबालजीवनमयाचच्च तथास्त्वित्युक्तवद्भिर्निर्जरैरगस्त्याश्रममासाद्य, तत आतिथ्यं तद्विश्राणितमहार्हाभरणं जग्राह ततस्तद्भूषणपूर्ववृत्तमप्यपृच्छत्तम् ।

तस्य तद्वचनं श्रुत्वा रामस्याक्लिष्टकर्मणः । अवाक्शिरास्तथाभूतो वाक्यमेतदुवाच ह ॥ १ ॥
शूद्रयोन्यां प्रजातोऽस्मि तप उग्रं समास्थितः । देवत्वं प्रार्थये राम सशरीरो महायशः ॥ २ ॥
न मिथ्याहं वदे राम देवलोकजिगीषया । शूद्रं मां विद्धि काकुत्स्थ शम्बूको नाम नामतः ॥ ३ ॥
भाषतस्तस्य शूद्रस्य खड्गं सुरुचिरप्रभम् । निष्कृष्य कोशाद्विमलं शिरश्चिच्छेद राघवः ॥ ४ ॥

प्यन्तमधोमुखं यथा भवति तथा लम्बमानं तापसं राघवो ददर्श ॥ १४ ॥

रा० टी०—राघव इति । राघवः उवाच तदाकारमाह त्वं धन्योसि ॥ १५ ॥

रा० टी०—कस्यामिति । हि तपोवृद्ध त्वं कस्यां योन्यां वर्तसे उत्पन्नोसीत्यर्थः इति कौतूहलात् त्वां रामोहं पृच्छामि १६

गो० टी०—दक्षिणामिति । शैवलाख्यस्य विन्ध्यसमीपवर्तिगिरेः ॥ १३–१६ ॥

१७ ] ति० टी०—कोऽर्थ इति । तुभ्यं तव वराश्रयः प्रीतदेवतावरलभ्यो मनीषितोऽभीष्टोऽर्थः कः स्वर्गलाभः परोऽन्यो वा यदर्थं तपसि ॥ १७ ॥

रा० टी०—क इति । अन्यैः सुदुश्चरं तपः यदर्थं तपसि स मनीषितोर्थः स्वर्गलाभः कः कश्चिदपरो वा तद्वदेत्यर्थः १७

गो० टी०—कोर्थ इत्यादि । तुभ्यं तव । वराश्रयः तपःप्रीतदेवतावरलभ्यो मनीषितोभीष्टोर्थः स्वर्भोगो वा अन्यो वा । यमाश्रित्य ॥ १७ ॥

१८–१९ ] ति० टी०—सत्यवाग्भव सत्यं वद ॥ १८ ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्य उत्तरकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

रा० टी०—उपसंहरन्नाह—यमिति । यं देहमाश्रित्य तपस्तप्तं तेन देहेनोपलक्षितस्त्वं ब्राह्मणो वासि क्षत्रियो वासीति च श्रोतुमिच्छामि ॥ १८ ॥

रा० टी०—इतीति । अवाक्शिरास्तापसः जातिं यत्कारणमुद्दिश्य तपःप्रयत्नस्तच्च दाशरथायोवाच ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

गो० टी०—ब्राह्मण इति । सत्यवाग्भव सत्यं कथयेत्यर्थः ॥ १८ ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चसप्ततितमः सर्गः ॥ ७५ ॥

१–२ ] ति० टी०—अथ शूद्रशिरश्छेदेन बालोज्जीवनम्—तस्येति ॥ १ ॥ २ ॥

रा० टी०—तापसवचनमेव वर्णयितुमाह—तस्येति । अवाक्शिरास्तापसः एतदुवाच ॥ १ ॥

रा० टी०—तदाकारमाह—शूद्रेति । उग्रं तप आस्थितोऽहं शूद्रयोन्यां प्रजातोस्मि सशरीरः दिव्यशरीरे आस्थायुक्तोहं देवत्वमितो गमनं प्रार्थये ॥ २ ॥

गो० टी०—तस्येत्यादि ॥ १–३ ॥

३ ] ति० टी०—मिथ्यावचनाभावे हेतुः—देवलोकजिगीषया ॥ ३ ॥

रा० टी०—नेति । अहं मिथ्या न वदे अतः देवलोकजिगीषया विशिष्टं मां शंबूकं नाम शूद्रं विद्धि जानीहि ॥ ३ ॥

४ ] ति० टी०—तस्य शिर इत्यन्वयः ॥ ४ ॥

रा० टी०—भाषत इति । राघवः शूद्रस्य शिरः कोशात्

१ तपस्यसीति गो. पा. । २ भूत्वेति गो. पा. । ३ प्रसूतोऽस्मि शम्बूको नाम नाम्न इति गो. । ४ तप उग्रं समास्थितम् इति गो. पाठः ।

तस्मिञ्शूद्रे हते देवाः सेन्द्राः साग्निपुरोगमाः । साधुसाध्विति काकुत्स्थं ते शशंसुर्मुहुर्मुहुः ॥ ५ ॥
पुष्पवृष्टिर्महत्यासीद्दिव्यानां सुसुगन्धिनाम् । पुष्पाणां वायुमुक्तानां सर्वतः प्रपपात ह ॥ ६ ॥
सुप्रीताश्चाब्रुवन्रामं देवाः सत्यपराक्रमम् । सुरकार्यमिदं देव सुकृतं ते महामते ॥ ७ ॥
गृहाण च वरं सौम्य यं त्वमिच्छस्यरिंदम । स्वर्गभाङ् नहि शूद्रोऽयं त्वत्कृते रघुनन्दन ॥ ८ ॥
देवानां भाषितं श्रुत्वा रामः सत्यपराक्रमः । उवाच प्राञ्जलिर्वाक्यं सहस्राक्षं पुरंदरम् ॥ ९ ॥
यदि देवाः प्रसन्ना मे द्विजपुत्रः स जीवतु । दिशन्तु वरमेतं मे ईप्सितं परमं मम ॥ १० ॥
ममापचाराद्बालोऽसौ ब्राह्मणस्यैकपुत्रकः । अप्राप्तकालः कालेन नीतो वैवस्वतक्षयम् ॥ ११ ॥
तं जीवयथ भद्रं वो नानृतं कर्तुमर्हथ । द्विजस्य संश्रुतोऽर्थो मे जीवयिष्यामि ते सुतम् ॥ १२ ॥
राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः । प्रत्यूचू राघवं प्रीता देवाः प्रीतिसमन्वितम् ॥ १३ ॥
निर्वृतो भव काकुत्स्थ सोऽस्मिन्नहनि बालकः । जीवितं प्राप्तवान्भूयः समेतश्चापि बन्धुभिः ॥ १४ ॥

खड्गं निष्कृष्य विमलं मलसंसर्गराहित्यं यथा भवति तथा चिच्छेद नचैतत्तपश्चर्याया विरुद्धत्वे परमात्मदर्शनम् परमपुरुषार्थप्रापकरामशस्त्रकरणकहननं च विरुद्धम् निषिद्धाचरणस्य निषिद्धफलकत्वादिति वाच्यम् तस्य परमपुरुषार्थप्रापकसत्यावलम्बित्वेन विरोधाभावात् एतेन शीघ्रं परमात्मप्राप्त्यर्थमेव विरुद्धाचरणमप्यनेन कृतमिति बोध्यम् एतेन तस्यार्तप्रपन्नत्वं व्यक्तम् तत्प्रणामाद्यकरणेन प्रणामादिकरणेतिदयालु रामो न हनिष्यतीति तन्निश्चयो व्यक्तः ॥ ४ ॥

गो० टी०–भाषत इति । तस्य शिर इत्यन्वयः ॥४॥५॥

५ ] ति० टी०–अग्निपुरोगमो वायुब्रह्मा तत्सहिताः ॥५॥

रा० टी०–तस्मिन्निति । देवाः साधुसाध्विति काकुत्स्थं शशंसुः ॥ ५ ॥

६–७ ] ति० टी०–पुष्पवृष्टेः प्रपञ्चनम्—दिव्यानामिति । प्रपपात । वृष्टिरिति शेषः ॥ ६ ॥ ७ ॥

रा० टी०–पुष्पेति । महती पुष्पवृष्टिरासीत् तत्प्रकारमाह सुगन्धिनाम् पुष्पाणां वृष्टिरिति शेषः सर्वतः प्रपपात सुप्रीता इति सुप्रीताः देवाः सत्यपराक्रमं राममब्रुवन् तदाकारमाह इदं शूद्रतपोनिवारणरूपम् सुरकार्यं त्वया सुकृतम् ॥ ६ ॥ ७ ॥

गो० टी०–पुष्पवृष्टिरिति । पुष्पवृष्टिः पपातेति शेषः । पुष्पवृष्टिश्च महतीति पाठे तस्यैव प्रपञ्चनम् दिव्यानामित्यादि । प्रपपातेति वृष्टिरिति शेषः ॥ ६ ॥ ७ ॥

८–९ ] ति० टी०–किंनाम सुरकार्यं तत्राहुः—स्वर्गभागिति । हि यतः शूद्रस्तपसा स्वर्गानर्हः सोऽसौ त्वत्कृते त्वत्कृततपोनिवर्तनेन स्वर्गभाङ् न जातः, अतो देवकार्यं कृतमिति भावः ॥ ८ ॥ ९ ॥

रा० टी०–गृहाणेति । त्वत्कृतं त्वत्कर्तृकच्छेदने सति अयं शूद्रो न अतः स्वर्गभाक् अतः यत्त्वमिच्छसि तद्वरं गृहाण एतेन दुष्टाचरणप्रवृत्तौ देवानां दुःखं भवतीति सूचितम् ॥ ८ ॥

रा० टी०–देवानामिति । रामः पुरन्दरमुवाच ॥ ९ ॥

गो० टी०–गृहाणेति । सुरकार्यमेवाह–स्वर्गभागिति । हि यस्माच्छूद्रः तपसा स्वर्गं नार्हः सोऽसौ त्वत्कृततपोनिवर्तनेन स्वर्गभाक् न कृतः । तस्माद्देव देवकार्यं कृतमित्यर्थः । ममेति । वैवस्वतक्षयं यमगृहम् ॥ ८–११ ॥

१० ] ति० टी०–एतं वरं मे दिशन्तु । एतद्वरदानमेव ममेप्सितमित्यन्वयात्र ममेति पुनरुक्तम् ॥ १० ॥

रा० टी०–तदाकारमाह–यदीति । हे देवाः ! यदि यूयं प्रसन्नाः तर्हि स मृतो द्विजपुत्रः जीवतु इदम्परमभीप्सितं वरं मे दिशन्तु एतेन दत्ताधिकाराणामिन्द्रादीनां सम्माननं सूचितम् ॥ १० ॥

११ ] ति० टी०–वैवस्वतक्षयं यमसदनम् ॥ ११ ॥

रा० टी०–तादृशवरयाचने हेतुमाह—ममेति । ब्राह्मणस्य एकपुत्रकः अनुकम्पितैकपुत्रः बालः अत एव अप्राप्तकालः ममापचारात् कालेन मृत्युना वैवस्वतस्य क्षयं निवासं नीतः एतेन परमसत्यवतोभिप्रायं विज्ञाय पूर्वमेव तदभिप्रेतपूर्तिर्न कृतेति पश्चात्तापः सूचितः ॥ ११ ॥

१२ ] ति० टी०–ते तव सुतं जीवयिष्यामीत्ययमर्थो मे मया द्विजस्य संश्रुतः प्रतिज्ञातः, अतस्तं जीवयथ । मामनृतं कर्तुं नार्हथ ॥ १२ ॥

रा० टी०–तमिति । ते सुतमहं जीवयिष्यामि इति द्विजस्यार्थः मे मया संश्रुतः प्रतिज्ञातः अतः तं बालं जीवयथ अनृतं कर्तुं नार्हथ ॥ १२ ॥

गो० टी०–तमिति । द्विजस्येति । ते तव सुतं जीवयिष्यामीत्ययमर्थो मे मया द्विजस्य संश्रुतः प्रतिज्ञातः ॥ १२ ॥ १३ ॥

१३ ] ति० टी०–प्रीतिसमन्वितं युक्तम् ॥ १३ ॥

रा० टी०–राघवस्येति । देवाः राघवं प्रत्यूचुः ॥ १३ ॥

१४ ] ति० टी०–अस्मिन्नहनि शूद्रशिरश्छेददिवसे विनापि वरं जीवितं प्राप्तवानित्यर्थः ॥ १४ ॥

रा० टी०–तदाकारमाह–निर्वृत इति । बालकः अस्मि-

१ प्रेति गो. तमिति रा. पा. । २ सौम्येति गो. पा. । ३ राघवः सुसमाहित इति गो. पा. । ४ या न इति गो. पाठः ।

यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः। तस्मिन्मुहूर्ते बालोऽसौ जीवेन समयुज्यत ॥ १५ ॥
स्वस्ति प्राप्नुहि भद्रं ते साधु याम नरर्षभ। अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम राघव ॥ १६ ॥
तस्य दीक्षा समाप्ता हि ब्रह्मर्षेः सुमहाद्युते। द्वादशं हि गतं वर्षं जलशय्यां समासतः ॥ १७ ॥
काकुत्स्थ तद्गमिष्यामो मुनिं समभिनन्दितुम्। त्वं चापि[२] गच्छ भद्रं ते द्रष्टुं तमृषिसत्तमम् ॥ १८ ॥
स तथेति प्रतिज्ञाय देवानां रघुनन्दनः। आरुरोह विमानं तं पुष्पकं हेमभूषितम् ॥ १९ ॥
ततो देवाः प्रयातास्ते विमानैर्बहुविस्तरैः। रामोऽप्यनुजगामाशु कुम्भयोनेस्तपोवनम् ॥ २० ॥
दृष्ट्वा तु देवान्संप्राप्तानगस्त्यस्तपसां निधिः। अर्चयामास धर्मात्मा सर्वांस्तानविशेषतः ॥ २१ ॥
प्रतिगृह्य ततः पूजां संपूज्य च महामुनिम्। जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगाः ॥ २२ ॥
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च। ततोऽभिवादयामास अगस्त्यमृषिसत्तमम् ॥ २३ ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा। आतिथ्यं परमं प्राप्य निषसाद नराधिपः ॥ २४ ॥
तमुवाच महातेजाः कुम्भयोनिर्महातपाः। स्वागतं ते नरश्रेष्ठ दिष्ट्या प्राप्तोऽसि राघव ॥ २५ ॥
त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः। अतिथिः पूजनीयश्च मम राजन्हृदि स्थितः ॥ २६ ॥
सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम्। ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ २७ ॥

---

ऽहनि जीवितं प्राप्तवान् बंधुभिस्समेतश्च अभूदिति शेषः अतस्त्वं निर्वृतः परमानन्दयुक्तो भव ॥ १४ ॥

गो० टी०—**निर्वृत इति**। अस्मिन्नहनि त्वया शूद्रशिरश्छेददिवसे वरं विनापि स्वयमेव जीवितं प्राप्तवानित्यर्थः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०—उक्तमेवार्थमहःशब्दविवक्षितार्थप्रदर्शनेन प्रकाशयन्ति—**यस्मिन्मुहूर्त इति** ॥ १५ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—**यस्मिन्निति**। यस्मिन्मुहूर्ते शूद्रस्त्वया विनिपातितः तस्मिन्मुहूर्ते एव बालः जीवेन समयुज्यत ॥ १५ ॥

१६–१८ ] ति० टी०—यामेति लोट् ॥ १६–१८ ॥

रा० टी०—**स्वस्तीति**। त्वं स्वस्ति प्राप्नुहि सर्वान् प्रापय ते भद्रं वयं तु अगस्त्यस्याश्रमपदं द्रष्टुमिच्छाम अतः याम॥१६॥

रा० टी०—तत्र गमने हेतुमाह—**तस्येति**। जलशय्यां समासतः तस्यागस्त्यस्य द्वादशं वर्षं गतम् अतः दीक्षा समाप्ता ततस्माद्धेतोः मुनिं समभिनन्दितुं गमिष्यामः त्वमपि ऋषिसत्तमं द्रष्टुं गच्छ श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—**स्वस्तीति**। यामेति लोडुत्तमबहुवचनम् ॥ १६—२० ॥

१९–२० ] ति० टी०—तथेति प्रतिज्ञाय। देवानाम् देवान्प्रति तथास्त्वित्युक्त्वेत्यर्थः ॥ १९ ॥ २० ॥

रा० टी०—**स इति**। रघुनन्दनः पुष्पकमारुरोह ॥ १९ ॥

रा० टी०—**तत इति**। देवाः बहुविस्तरैर्विमानैः कुंभयोनेस्तपोवनं प्रयाताः रामोप्यनुजगाम ॥ २० ॥

२१–२५ ] ति० टी०—अविशेषतः। अपक्षपातत इत्यर्थः ॥ २१—२५ ॥

रा० टी०—**दृष्ट्वेति**। अगस्त्यः तान्देवानर्चयामास॥२१॥

रा० टी०—**प्रतीति**। त्रिदशाः नाकपृष्ठं स्वर्गं जग्मुः॥२२॥

रा० टी०—**गतेष्विति**। काकुत्स्थः पुष्पकादवरुह्य अगस्त्यमभिवादयामास ॥ २३ ॥

रा० टी०—**स इति**। नराधिपः स रामः परमातिथ्यं प्राप्य निषसाद ॥ २४ ॥

रा० टी०—**तमिति**। कुम्भयोनिः तं राममुवाच तदाकारमाह दिष्ट्या भाग्यवशेन त्वं प्राप्तोसि ॥ २५ ॥

गो०टी०—**दृष्ट्वेति**। अविशेषतः अपक्षपातत इत्यर्थः २१-२५

२६ ] ति० टी०—उत्तमैर्बहुभिर्गुणैस्त्वं बहुमतो बहुमान्यः। अतिथित्वाच्च पूज्यः। विशेषतश्च त्वं मे पूज्य इत्याह—**मम हृदि स्थित इति**। अन्तर्यामिस्वरूपत्वादिति भावः। अत एव सदा स्मरणविषयतयापि हृदि स्थितः, अतो ध्येयत्वाच्च त्वं पूज्यः। यद्वा हृदि स्थितः। तेन स्वस्वरूपत्वमप्युक्तम् ॥२६॥

रा० टी०—**त्वमिति**। उत्तमैर्बहुभिर्गुणैर्हेतुः मम हृदि स्थितः बहुमतः अत्यन्तमीप्सितः त्वमतिथिः पूजनीय एव २६

गो० टी०—**त्वमिति**। हृदि स्थित इति। परब्रह्मभूतत्वान्मम त्वद्धृदये सदा स्थित इत्यर्थः ॥ २६ ॥

२७ ] ति० टी०—ब्राह्मणस्य सुतः। शूद्रहननधर्मेण त्वया जीवापितो जीवनं प्रापितः। पुगार्षः ॥ २७ ॥

रा० टी०—**सुरा इति**। येन त्वया ब्राह्मणस्य सुतः जीवापितः जीवं जीवनमापितः प्रापितः तं शूद्रघातिनमागतं त्वां सुराः कथयन्ति अकथयन् ॥ २७ ॥

गो० टी०—**सुरा हीति**। जीवापितः जीवनं प्रापितः। पुगार्षः। अत्र त्वयेत्यत्र येति गायत्र्यक्षरं त्रयोविंशमित्याहुः ॥ २७—३० ॥

उष्यतां चेह रजनीं सकाशे मम राघव । त्वं हि नारायणः श्रीमांस्त्वयि सर्वं प्रतिष्ठितम् ॥ २८ ॥
त्वं प्रभुः सर्वदेवानां पुरुषस्त्वं सनातनः । प्रभाते पुष्पकेण त्वं गन्ता स्वपुरमेव हि ॥ २९ ॥
इदं चाभरणं सौम्य निर्मितं विश्वकर्मणा । दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥ ३० ॥
प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव । दत्तस्य हि पुनर्दाने सुमहत्फलमुच्यते ॥ ३१ ॥
भरणे हि भवाञ्शक्तः फलानां महतामपि । त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः ॥ ३२ ॥
तस्मात्प्रदास्ये विधिवत्तत्प्रतीच्छ नराधिप । [दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम्] ॥
अथोवाच महात्मानमिक्ष्वाकूणां महारथः । ॥ ३३ ॥
[ रामो मतिमतां श्रेष्ठः क्षत्रधर्ममनुस्मरन् । प्रतिग्रहोऽयं भगवन्ब्राह्मणस्याविगर्हितः ॥
क्षत्रियेण कथं विप्र प्रतिग्राह्यं भवेत्ततः । प्रतिग्रहो हि विप्रेन्द्र क्षत्रियाणां सुगर्हितः ॥
ब्राह्मणेन विशेषेण दत्तं तद्वक्तुमर्हसि । एवमुक्तस्तु रामेण प्रत्युवाच महानृषिः ॥
आसन्कृतयुगे राम ब्रह्मभूते पुरायुगे । अपार्थिवाः प्रजाः सर्वाः सुराणां तु शतक्रतुः ॥
ताः प्रजा देवदेवेशं राजार्थं समुपाद्रवन् । सुराणां स्थापितो राजा त्वया देव शतक्रतुः ॥
प्रयच्छास्मासु लोकेश पार्थिवं नरपुंगवम् । यस्मै पूजां प्रयुञ्जाना धूतपापाश्चरेमहि ॥
न वसामो विना राज्ञा एष नो निश्चयः परः । ततो ब्रह्मा सुरश्रेष्ठो लोकपालान्सवासवान् ॥
समाहूयाब्रवीत्सर्वांस्तेजोभागान्प्रयच्छत । ततो ददुर्लोकपालाः सर्वे भागान्स्वतेजसः ॥

२८ ] ति० टी०—नारायणो नारस्य जीवसमूहस्य स्थानम् । तदेवाह—त्वयि सर्वमिति ॥ २८ ॥

२९ ] ति० टी०—सनातनः पुरुषो ब्रह्म ॥ २९ ॥

रा० टी०—उष्यतामिति । यतः त्वम् सर्वभूतानां प्रभुः अत एव त्वं नारायणः नारेण नीत्यैव अयते गच्छति सनातनः पुरुषस्त्वमसि अत एव त्वयि सर्वं प्रतिष्ठितमतः मम सकाशे समीपे रजनी उष्यतां प्रभाते एव स्वपुरं गन्ता भवान् इति शेषः श्लोकद्वयमेकान्वयि ॥ २८ ॥ २९ ॥

३० ] ति० टी०—दिव्येन वपुषा संनिवेशेन दिव्यम्, अत एव स्वतेजसा दीप्यमानम् । आभरणं वलयरूपम् ॥ ३० ॥

३१ ] ति० टी०—ननु क्षत्रियस्य ब्राह्मणाद्द्रव्यग्रहणमनुचितं तत्राह—मत्प्रियं कुर्विति । मत्प्रियार्थमनुचितमपि कार्यमित्याशयः । किं च राजत्वाद्विकहस्ततया त्वद्दर्शनस्य ममानुचिततया एतद्ग्रहणे मम प्रियं भवति, तव च दोषो नास्ति । भक्तदत्ताङ्गीकारे इव हविषोङ्गीकार इव च दोषाभावाचेत्याशयः । ननु तव किं प्रियं तत्राह—दत्तस्येति । येन केनापि दत्तस्यानुपभुज्य पुनः स्वेष्टदेवादिभ्यो दाने महत्फलमुच्यते । 'लब्धावष्टगुणं पुण्यम्' इति स्मरणात् । एवं च महाफलहेतुत्वात्तुभ्यं तद्दानं मम प्रियमिति भावः ॥ ३१ ॥

रा० टी०—इदमिति । विश्वकर्मणा निर्मितं स्वतेजसा दीप्यमानमिदमाभरणं वलयरूपमित्यर्थः दिव्येन वपुषोपलक्षितस्त्वं प्रतिगृह्णीष्व धारय अत एव मत्प्रियं कुरु प्रियकरणे हेतुमाह दत्तस्य मनसा समर्पितस्य वस्तुनः पुनर्दाने महत्फलम् अत्यर्थनिष्पत्तिरुच्यते श्लोकद्वयमेकान्वयि ॥ ३० ॥ ३१ ॥

गो० टी०—दत्तस्येति । पारितोषिकतया येन केनापि दत्तस्योत्तमवस्तुनः स्वयमनुपभुज्यान्यस्मै दानं सुमहत्फलमुच्यते । भरण इति । मरुतां देवानामपि । भरणे रक्षणे । अपिशब्दात् किमुतैतद्धरण इत्यर्थः । भरणेपि भवान् शक्तः फलानां महतामपीति च पाठः ॥ ३१–४७ ॥

३२–३३ ] ति० टी०—नन्वन्यस्मा एव तर्हि देयं तत्राह—भरणे हीति । आभरणस्य धारणे भवानेव शक्तो योग्यः । किं च महतामपि फलानां ब्रह्मलोकादीनां दाने च त्वं शक्त इति शेषः । ननु मत्तोऽपि महद्भ्य इन्द्रादिभ्यो दीयतां तत्राह—त्वं हीति । ते त्वत्तो न महान्त इति भावः ॥ ३२ ॥ ३३ ॥

रा० टी०—ननु मद्धारणेन कार्यनिष्पत्तिरित्यत आह—भरण इति । महताम् अत्युत्कृष्टानां फलानां भरणे धारणे दाने इत्यर्थः भवानेव शक्तः ननु फलदायकत्वेन देवाः प्रसिद्धा इत्यत आह सेन्द्रान् दिवौकसोपि तारयितुं स्वलोकं प्रापयितुं त्वमेव समर्थः एतेन अगस्त्यस्य साकेतप्राप्तीच्छा सूचिता ॥ ३२ ॥

रा० टी०—तस्मादिति । तस्मात् सर्वथेष्टत्वाद्धेतोः विधिवत्प्रदास्ये आभरणमिति शेषः तत्प्रतीक्ष धारय अथ अनन्तरमिक्ष्वाकूणां महारथो रामः महात्मानमगस्त्यमुवाच ननु किमुवाचेत्यत आह दीप्तस्य तस्याभरणस्य आगममेव प्रष्टुमुपचक्रमे अर्द्धं पृथक् ॥ ३३ ॥

१ इदमुष्यतांचेहरजनीमिति अष्टविंशपद्यपूर्वार्धोत्तरं दृश्यते गो. पुस्तके । २ सेन्द्राणां मरुतामिति गो. पाठः । ३ प्रतीक्षेति रा. पा. । ४ अर्धमिदमधिकं गो. पुस्त. । ५ इमानि पद्यान्यधिकानि गो. पु. ।

अक्षुपश्च ततो ब्रह्मा यतो जातः क्षुपो नृपः । तं ब्रह्मा लोकपालानां समांशैः समयोजयत् ॥
ततो ददौ नृपं तासां प्रजानामीश्वरं क्षुपम् । तत्रैन्द्रेण च भागेन महीमाज्ञापयन्नृपः ॥
वारुणेन तु भागेन वपुः पुष्यति पार्थिवः । कौबेरेण तु भागेन वित्तपाभां ददौ तदा ॥
यस्तु याम्योऽभवद्भागस्तेन शास्ति स्म सं प्रजाः । तत्रैन्द्रेण नरश्रेष्ठ भागेन रघुनन्दन ॥
प्रतिगृह्णीष्व भद्रं ते तारणार्थं मम प्रभो । तद्रामः प्रतिजग्राह मुनेस्तस्य महात्मनः ॥
दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् । प्रतिगृह्य ततो रामस्तदाभरणमुत्तमम् ] ॥
आगमं तस्य दीप्तस्य प्रष्टुमेवोपचक्रमे । अत्यद्भुतमिदं दिव्यं वपुषा युक्तमद्भुतम् ॥ ३४ ॥
कथं वा भवता प्राप्तं कुतो वा केन वा हृतम् । कौतूहलतया ब्रह्मन्पृच्छामि त्वां महायशः ॥ ३५ ॥
आश्चर्याणां बहूनां हि निधिः परमको भवान् । एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत् ॥
शृणु राम यथावृत्तं पुरा त्रेतायुगे युगे ।　　　　॥ ३६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

## सप्तसप्ततितमः सर्गः ।

पुरा त्रेतायुगे तपश्चरितुं पक्षिमृगवर्जितमरण्यं गच्छन्नहमेकं स्वर्गिणं विमानादवरुह्य शवं भक्षयन्तं निशाम्य कथमहो चारुरूपस्येदृशं गर्हितं चर्वणमिति तमपृच्छमित्यगस्त्यो राममकथयत् ।

पुरा त्रेतायुगे राम बभूव बहुविस्तरम् । समन्ताद्योजनशतं विमृगं पक्षिवर्जितम् ॥ १ ॥
तस्मिन्निर्मानुषेऽरण्ये कुर्वाणस्तप उत्तमम् । अहमाक्रमितुं सौम्य तदारण्यमुपागमम् ॥ २ ॥

---

३४ ] ति० टी०—किंविषयकश्चवाचेत्यत्राह—आगममिति । प्राप्तिमार्गमित्यर्थः । इदं विस्मयमत्यद्भुतम् । अत्याश्चर्यमित्यर्थः । अद्भुतं यथा भवति तथा वपुषा संनिवेशविशेषेण युक्तम् ॥ ३४ ॥

रा० टी०—अतीति । वपुषा अवयवसंनिवेशेन अद्भुतं यथा भवति तथा युक्तमत एव अत्यद्भुतमिदं दिव्यमाभरणं भवता कथं केन प्रकारेण कुतः कस्माद्धेतोश्च प्राप्तं केन वाहृतम् ॥ ३४ ॥

गो० टी०—प्रतिगृह्णीति । आगमं प्राप्तिमार्गम् ॥ ४८ ॥

३५ ] ति० टी०—कथं केन प्रकारेण कुतो हेतोः केन पुरुषेणाहृतं दत्तम् ॥ ३५ ॥

रा० टी०—कौतूहलेति । भवान् बहूनामाश्चर्याणां परमको निधिः अतः कौतूहलतया त्वां पृच्छामि ॥ ३५ ॥

गो० टी०—अत्यद्भुतमिति । कुतो वा केन वा निमित्तेन केन पुरुषेण वा हृतमुपहृतम् । दत्तमिति यावत् ४९॥५०

३६ ] ति० टी०—पुरा त्रेतायुगे युगे पूर्वतनत्रेतायुगाख्ये युगे ॥ ३६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षट्सप्ततितमः सर्गः ॥ ७६ ॥

रा० टी०—एवमिति । अयुगे युगविलक्षणे त्रेतायुगे यथावृत्तं तथा त्वं शृणु इति मुनिर्वाक्यमब्रवीत् ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षष्ठिसप्ततितमः सर्गः ॥ ७६ ॥

गो० टी०—एवमिति । त्रेतायुगे त्रेतायुगाख्ये ५१ ॥५२

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षट्सप्ततितमः सर्गः ॥ ७६ ॥

---

१ ] ति० टी०—अथ तत्प्राप्तिकथनम्—पुरेति । पूर्वचतुर्युगवर्तित्रेतायुगे बहुविस्तरं बहुविस्तारं पक्षिवर्जितमरण्यमभूदिति शेषः ॥ १ ॥

रा० टी०—तद्वृत्ताकारमाह—पुरेत्यादिभिः । विमृगं मृगरहितं पक्षिवर्जितम् समंतात् योजनशतमत एव बहुविस्तरमरण्यमिति शेषः बभूव ॥ १ ॥

गो० टी०—पुरेत्यादि । पुरा त्रेतायुगे पूर्वचतुर्युगवर्तित्रेतायुगे । बहुविस्तरं बहुविस्तारम् । पक्षिवर्जितमिति । अरण्यमभूदिति शेषः ॥ १ ॥

२ ] ति० टी०—तस्मिन्नरण्ये तदेकदेशे उत्तमं तपः कुर्वाणोऽहं तदारण्यमाक्रमितुमासमन्तात्पर्यटनेन कृत्स्नमवगन्तुमुपागमम्उपगतवानस्मि ॥ २ ॥

---

१ तद्विति गो. पाठः ।

तस्य रूपमरण्यस्य निर्देष्टुं न शशाक ह । फलमूलैः सुखास्वादैर्बहुरूपैश्च काननैः ॥ ३ ॥
तस्यारण्यस्य मध्ये तु सरो योजनमायतम् । हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ॥ ४ ॥
पद्मोत्पलसमाकीर्णं समतिक्रान्तशैवलम् । तदाश्चर्यमिवात्यर्थं सुखास्वादमनुत्तमम् ॥ ५ ॥
अरजस्कं तैदाक्षोभ्यं श्रीमत्पक्षिगणायुतम् । तस्मिन्सरःसमीपे तु महदद्भुतमाश्रमम् ॥ ६ ॥
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम् । तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ॥ ७ ॥
प्रभाते काल्यमुत्थाय सरस्तदुपचक्रमे । अथापश्यं शवं तत्र सुपुष्टमरजः क्वचित् ॥ ८ ॥
[ पंङ्क्ति भेदेन पुष्टाङ्गं समाश्रितसरोवरम् । ]
तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप । तमर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव ॥ ९ ॥
विष्ठितोऽस्मि सरस्तीरे किन्विदं स्यादिति प्रभो । अथापश्यं मुहूर्तात्तु दिव्यमद्भुतदर्शनम् ॥ १० ॥
विमानं परमोदारं हंसयुक्तं मनोजवम् । अत्यर्थं स्वर्गिणं त विमाने रघुनन्दन ॥ ११ ॥
उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणम् । गायन्ति काँश्चिद्रम्याणि वादयन्ति तथापराः॥१२॥

**रा० टी०–तस्मिन्निति** । तस्मिन्नरण्ये तदेकदेश उत्तमं तपः कुर्वाणोहं तदरण्यमाक्रमितुं समंततः पर्यटितुमुपागमम्॥२॥

**गो० टी०–तस्मिन्निति** । तस्मिन्नरण्ये तदेकदेशे । तपः कुर्वाणोऽहं तदरण्यमाक्रमितुम् आसमन्तात्पर्यटनं कृत्वा कात्स्न्येंनावगन्तुमुपागमम् उपगतवान् ॥ २ ॥

३-४ ] **ति० टी०–तस्य रूपमिति** । सुखावहम् स्वरूपमित्यर्थः । न शशाक न शक्तवान् । अपरोक्षे लिडार्षः । तदेवाह—**फलमूलैरिति** ॥ ३-४ ॥

**रा० टी०–तस्येति** । फलादिभिरुपलक्षितस्य तस्यारण्यस्य रूपं निर्देष्टुमेतादृशमिति वक्तुं न शशाक कश्चिदपीति शेषः ॥ ३ ॥

**रा० टी०–तस्येति** । योजनमायतं पद्मोत्पलैस्समाकीर्णं समतिक्रान्तशैवलं शैवलरहितमित्यर्थः सुखं सुखकरमास्वादमास्वादविशिष्टतोयं यस्य अत्यर्थमाश्चर्यमिव अक्षोभ्यं संचालयितुमशक्यं पक्षिगणैरायतं तस्यारण्यस्य मध्ये सरोऽस्तीति शेषः सार्धं श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

**गो० टी०–तस्येति** । निर्देष्टुं परिज्ञातुम् । न शशाक नाशक्नुवम् । तस्य रूपमिति । सुखावहं रूपमित्यर्थः ॥३॥४॥

५-६ ] **ति० टी०–सुखास्वादं** सुखावहप्राशनपानीयवत् ॥ ५ ॥ ६ ॥

**गो० टी०–पद्मेति** । सुखास्वादम् । सुखावहप्राशनपानीयवदित्यर्थः ॥ ५ ॥

**रा० टी०–तस्मिन्निति** । तपस्विजनवर्जितमाश्रमं तस्मिन् सरस्समीपेऽस्तीति शेषः ॥ ६ ॥

**गो० टी०–अरजस्कमिति** । अरजस्कं निर्मलम्॥ ६ ॥

७ ] **ति० टी०–नैदाघीं** निदाघसंबन्धिनीम् ॥ ७ ॥

**रा० टी०–तत्रेति** । तत्र सरस्समीपे नैदाघीं रात्रिमहमवसं प्रभाते काल्यं प्रातः कर्तव्यं स्नानादि कर्तुमिति शेषः उत्थाय तत् सरोहमुपचक्रमे जगाम अपरोक्षेपि लिडार्षः ॥ ७ ॥

**गो०टी०–पुराणमिति** । नैदाघीं निदाघसंबन्धिनीम् ७

८ ] **ति० टी०–**काल्यं प्रातःकर्तव्यं स्नानादिकर्मोद्दिश्योत्थाय तत्सरो गन्तुमुपचक्रमे । अपरोक्षे लिडार्षः । अरजो निर्मलम् ॥ ८ ॥

**रा० टी०–अथेति** । तस्मिन् तोयाशये परया लक्ष्म्या शोभया तिष्ठन्तं सुपुष्टं शवं मृतशरीरमपश्यम् ॥ ८ ॥

**गो० टी०–प्रभात इति** । काले साधु काल्यं, प्रातःकालकर्तव्यं स्नानकर्म उद्दिश्य उत्थाय उपचक्रमे । अपरोक्षेपि लिडार्षः ॥ ८ ॥

९-१० ] **ति० टी०–**लक्ष्म्या उपेतमिति शेषः । तमर्थं चिन्तयानः किमिदं स्यादिति चिन्तयानः । शवः सन्नपि निर्मलो लक्ष्मीयुक्तश्चेति । किमिदमिति स्वदृष्टार्थविषयकचिन्तां कुर्वाण इत्यर्थः ॥ ९ ॥ १० ॥

११-१२ ] **ति० टी०–**अत्यर्थमतिरूपवन्तम् ॥११॥१२॥

**रा० टी०–तमिति** । तमरजः शवरूपमर्थमिदं किं स्यात् एवं निर्मलत्वं न संभवतीत्यर्थः इति मुहूर्तं चिन्तयानोहं सरस्तीरे विष्ठितोस्मि ॥ ९ ॥

**रा० टी०–अथेति** । मुहूर्तात् विमानमहमपश्यं तत्र विमाने स्वर्गिणं चापश्यं सार्द्धश्लोक एकान्वयी ॥ १० ॥ ११॥

**रा० टी०–उपास्त इति** । दिव्यानि भूषणानि यस्य तदप्सरसां सहस्रमुपास्ते स्वर्गिणमिति शेषः अर्द्धं पृथक् उपासनाप्रकारमाह–**गायन्तीत्यादिभिः** । काश्चिद्गायन्ति अपराः नृत्यन्ति ॥ १२ ॥

**गो०टी०–पङ्क्तिभेदेनेति** । लक्ष्म्या उपेतमिति शेषः९-१९

१ पादपैरिति गो. पाठः । २ तथेति गो. पाठः । ३ समीपे तस्य सरस इति गो. पाठः । ४ अजरमिति गो. पाठः । ५ अर्धमिदमधिकं गो. पुस्त. । ६ ऊषित इति गो. पाठः । ७ दिव्यगेयानीति गो. पाठः ।

मृदङ्गवीणापणवान्नृत्यन्ति च तथापराः । अपराश्चन्द्ररश्म्याभैर्हेमदण्डैर्महाधनैः ॥ १३ ॥
दोधूयुर्वदनं तस्य पुण्डरीकनिभेक्षणाः । ततः सिंहासनं हित्वा मेरुकूटमिवांशुमान् ॥ १४ ॥
पश्यतो मे तदा राम विमानादवरुह्य च । तं शवं भक्षयामास स स्वर्गी रघुनन्दन ॥ १५ ॥
ततो[४] भुक्त्वा यथाकामं मांसं बहु सुपीवरम् । अवतीर्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे ॥ १६ ॥
उपस्पृश्य यथान्यायं स स्वर्गी रघुनन्दन । आरोढुमुपचक्राम विमानवरमुत्तमम् ॥ १७ ॥
तमहं देवसंकाशमारोहन्तमुदीक्ष्य वै । अथाहमब्रुवं वाक्यं तमेव पुरुषर्षभ ॥ १८ ॥
को भवान्देवसंकाश आहारश्च विगर्हितः । त्वयेदं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ॥ १९ ॥
कस्य स्यादीदृशो भाव आहारो देवसंमत । आश्चर्यं वर्तते सौम्य श्रोतुमिच्छामि तत्त्वतः ॥
नाहमौपयिकं मन्ये तव भक्ष्यमिमं शवम् । ॥ २० ॥

इत्येवमुक्त स नरेन्द्र नाकी कौतूहलात्सूनृतया गिरा च ।
श्रुत्वा च वाक्यं मम सर्वमेतत्सर्वं तथा चाकथयन्ममेति ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

१३ ] ति० टी०—चन्द्ररश्म्याभैः चामरैरिति शेषः ॥१३॥

रा० टी०—अपरा इति । अपराः चन्द्ररश्म्याभैः हेमः दंडाः येषु तैः व्यजनैः तदुद्भूतपवनैः तस्य स्वर्गिणो मुखं दोधूयुः पुनःपुनः पवनसंसर्गवत् कुर्युरित्यर्थः ॥ १३ ॥

१४ ] ति० टी०—दोधूयुरिति यङ्लुगन्तस्य ॥ १४ ॥

रा० टी०—तत इति । ततः सरःसमीपप्राप्त्यनन्तरं मेरुकूटमिव सिंहासनं हित्वा त्यक्त्वा विमानादवरुह्य च स्वर्गी शवं भक्षयामास सार्द्धश्लोक एकान्वयी ॥ १४ ॥

१५ ] ति० टी०—पश्यतो मे । समक्षमिति शेषः ॥१५॥

१६–१९ ] ति० टी०—संस्प्रष्टुं शुद्धाचमनं कर्तुम् १६-१९

रा० टी०—तत इति । बहु सुपीवरं मांसं भुक्त्वा सरः अवतीर्य प्राप्य स्वर्गी संस्प्रष्टुं आचमितुमुपचक्रमे ॥ १६ ॥

रा० टी०—उपस्पृश्येति । स्वर्गी यथान्यायमुपस्पृश्य विमानवरमारोढुमुपचक्राम ॥ १६ ॥

रा० टी०—तमिति । अहमारोहन्तमुदीक्ष्य तमब्रुवन्१७

रा० टी०—तदाकारमाह देवसंकाशो भवान् कः विगर्हितः आहारश्च कः इदं विगर्हितं त्वया किमर्थं भुज्यते वक्तुमर्हसि पृष्टमिति शेषः ॥ १८ ॥ १९ ॥

गो०टी०—तथेति । संस्प्रष्टुं शुद्धाचमनं कर्तुमित्यर्थः१६-१९

२०–२१ ] ति० टी०—हे देवसंमत देवतुल्य ! ईदृश आहार ईदृशो भावश्च कस्य स्यान्न कस्यापि । अतो हेतोस्त्वयीदं द्वयं दृष्ट्वा आश्चर्यं मे वर्तते, तस्मात्सर्वं तत्त्वतः श्रोतुमिच्छामि ॥ २० ॥ २१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

रा० टी०—ननु देव एव अहमित्यत आह—कस्येति । हे देव! ईदृशः त्वत्सदृशः भावोऽभिप्रायः ईदृशः आहारश्च कस्य देवस्य संमतः स्यात् न कस्यापीत्यर्थः अतः आश्चर्यं वर्तते अतः श्रोतुमिच्छामि तत्र हेतुः शवमिमं तवौपयिकं योग्यं भक्ष्यं नाहं मन्ये सार्द्धश्लोक एकान्वयी ॥ २० ॥

रा० टी०—इतीति । इत्येवमुक्तो नाकी सर्वमेतन्मम वाक्यं श्रुत्वा सर्वं निखिलोत्तरम् मामकथयत् ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तसप्ततितमः सर्गः ॥ ७७ ॥

गो०टी०—कस्येति । आहारः ईदृशो भावश्च देवसंमतः । अतः आश्चर्यमेव वर्तते । अहमित्यस्य क्रियाभेदाद्भेदः । अतस्तत्सर्वं तत्त्वतः श्रोतुमिच्छामि ॥ २०–२२ ॥

इति श्रीगो० श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तसप्ततितमः सर्गः ॥ ७७ ॥

---

१ क्ष्वेळयन्ति तथाचान्या इति गो. पा. । २ च चामरैरिति गो. पा. । ३ ईक्षणमिति गो. पाठः । ४ तथेति गो. पाठः । ५ पुंगवेति गो. पाठः । ६ विमानपङ्कुवं वाक्यं स्वर्गिणमिति गो. पाठः । ७ संमत इति गो. पाठः ।

## अष्टसप्ततितमः सर्गः ।

मया दुश्चरं तपस्तप्त्वा ब्रह्मलोकं गतेनापि क्षुत्पिपासाबाधितेन विरिंचिः पृष्टस्तदा भोस्तपश्चरितं नत्वन्नादि किंचिद्दत्तमतोऽरण्ये गच्छ स्वं शवं भक्षयेस्तत्रैवागस्त्यदर्शनेन पूतो भवसीत्यवदत् तथाद्य भवांस्तारयमित्यवदत्स: मया तारितेन तेनेदं दिव्यमाभरणं वितीर्णमिति कुम्भजन्मा रामं जगाद ।

श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरम् । प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ १ ॥
शृणु ब्रह्मन्पुरा वृत्तं ममैतत्सुखदुःखयोः । अनतिक्रमणीयं चे यथा पृच्छसि मां द्विज ॥ २ ॥
पुरा वैदर्भको राजा पिता मम महायशाः । सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ३ ॥
तस्य पुत्रद्वयं ब्रह्मन्द्वाभ्यां स्त्रीभ्यामजायत । अहं श्वेत इति ख्यातो यवीयान्सुरथोऽभवत् ॥ ४ ॥
ततः पितरि स्वर्याते पौरा मामभ्यषेचयन् । तत्राहं कृतवान्राज्यं धर्म्यं च सुसमाहितः ॥ ५ ॥
एवं वर्षसहस्राणि समतीतानि सुव्रत । राज्यं कारयतो ब्रह्मन्प्रजा धर्मेण रक्षतः ॥ ६ ॥
सोऽहं निमित्ते कस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम । कालधर्मं हृदि न्यस्य ततो वनमुपागमम् ॥ ७ ॥
सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितम् । तपश्चर्तुं प्रविष्टोऽस्मि समीपे सरसः शुभे ॥ ८ ॥
भ्रातरं सुरथं राज्ये अभिषिच्य महीपतिम् । इदं सरः समासाद्य तपस्तप्तं मया चिरम् ॥ ९ ॥
सोऽहं वर्षसहस्राणि तपस्त्रीणि महावने । तप्त्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ १० ॥
तस्येमे स्वर्गभूतस्य क्षुत्पिपासे द्विजोत्तम । बाधेते परमे वीर ततोऽहं व्यथितेन्द्रियः ॥ ११ ॥

---

१-४ ] ति० टी०-श्रुत्वेति । सुखदुःखयोर्दिव्यदेहशवभक्षणनिमित्तकयोः कारणमिति शेषः । अनतिक्रमणीयमेव तत्कारणं यथा पृच्छसि तथा वक्ष्यामि शृण्विति संबन्धः १-४

रा० टी०-स्वर्गिणो वाक्यमाह—श्रुत्वेत्यादिभिः । स्वर्गी प्रत्युवाच ॥ १ ॥

रा० टी०-तद्वचनाकारमाह-शृण्वित्यादिभिः । यथा यत्त्वं पृच्छसि तत् मम सुखदुःखयोः अनतिक्रमणीयम् पुरावृत्तं कारणं शृणु ॥ २ ॥

रा० टी०-कारणाकारमाह-पुरेत्यादिभिः । सुदेव इति विख्यातः मम पिता अभवदिति शेषः ॥ ३ ॥

रा० टी०-तस्येति । तस्य सुदेवस्य पुत्रद्वयमजायत पुत्रयोर्नाम आह श्वेत इति ख्यातोऽहमभवं यवीयान्सुरथश्चाभवत् ॥ ४ ॥

गो० टी०-शृण्विति । सुखदुःखयोरिति । देवत्वशवभक्षकरूपयोः कारणमिति शेषः ॥ २-४ ॥

५-६ ] ति० टी०-धर्म्यं धर्मादनपेतं यथा तथा कृतवान् ॥ ५ ॥ ६ ॥

रा० टी०-तत इति । पौराः मामभ्यषेचयन् तत्र तस्मिन्काले सुसमाहितोऽहं धर्म्यं राज्यं कृतवान् ॥ ५ ॥

रा० टी०-एवमिति । एवं राज्यं कारयतो मम वर्षसहस्राणि समतीतानि व्यतीतानि ॥ ६ ॥

गो० टी०-तत इति । धर्म्यं धर्मादनपेतं यथा भवति तथा ॥ ५ ॥ ६ ॥

७-१० ] ति० टी०-कस्मिंश्चिन्निमित्ते केनचिल्लक्षणेन कालधर्मं मृत्युं हृदि न्यस्य ज्ञात्वा ॥ ७—१० ॥

रा० टी०-स इति । कस्मिंश्चिन्निमित्ते केनचित्कारणेन उपायेनेत्यर्थः विज्ञातमायुः तदियत्ता येन सोऽहं कालधर्मं अल्पकालेन अवश्यं देहविघातं हृदि न्यस्य वनमुपागमम् ॥७॥

रा० टी०-स इति । सरसः समीपे तपश्चर्तुमिदं वनमहं प्रविष्टोस्मि ॥ ८ ॥

रा० टी०-सिंहावलोकनन्यायेनाह-भ्रातरमिति । सुरथं भ्रातरं महीपतिमभिषिच्य इदं सरस्समासाद्य मया चिरं तपस्तप्तम् ॥ ९ ॥

रा० टी०-स इति । त्रीणि वर्षसहस्राणि तपस्तप्त्वा ब्रह्मलोकं प्राप्तः ॥ १० ॥

गो० टी०-सोहमिति । निमित्ते कस्मिंश्चिदिति । केनचिन्निमित्तेन लक्षणेन सामुद्रिकादिना । विज्ञातायुः निश्चितायुरवधिः । कालधर्मं हृदि न्यस्य । स्वस्य मरणकालं ज्ञात्वेत्यर्थः ॥ ७-१० ॥

११ ] ति० टी०-स्वर्गभूतस्य स्वर्गं ब्रह्मलोकं भूतस्य प्राप्तस्य ॥ ११ ॥

रा० टी०-तस्येति । स्वर्गं ब्रह्मलोकं भूतस्य प्राप्तस्य मे क्षुत्पिपासे बाधेते ततस्तस्माद्धेतोः अहं व्यथितेन्द्रियो भवामीति शेषः ॥ ११ ॥

गो० टी०-तस्येति । स्वर्गभूतस्य स्वर्गं प्राप्तस्य । स्वर्गोत्र ब्रह्मलोकः ॥ ११-१४ ॥

---

१ हीति गो. पाठः । २ परमोदरेति गो. पाठः ।

गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह । भगवन्ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः ॥ १२ ॥
कस्यायं कर्मणः पाकः क्षुत्पिपासानुगो ह्यहम् । आहारः कश्च मे देव तन्मे ब्रूहि पितामह ॥ १३ ॥
पितामहस्तु मामाह तवाहारः सुदेवज । स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः॥१४॥
स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् । अनुप्तं रोहते श्वेत न कदाचिन्महामते ॥ १५ ॥
[ तृप्तिर्नतेऽस्ति सूक्ष्मापि वने सत्वनिषेविते । पुराचुं भिक्षमाणाय भिक्षायै यतये नृप ॥
न हि दत्ता त्वयेन्द्राभ यस्मादतिथयेऽपि वै । ]
दत्तं न तेऽस्ति सूक्ष्मोऽपि तप एव निषेवसे । तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया ॥ १६ ॥
स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् । भक्षयित्वामृतरसं तेन तृप्तिर्भविष्यति ॥ १७ ॥
यदा तु तद्वनं श्वेत अगस्त्यः स महानृषिः । आगमिष्यति दुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यसे ॥ १८ ॥
स हि तारयितुं सौम्य शक्तः सुरगणानपि । किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतम् ॥ १९ ॥
सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् । आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ॥ २० ॥
बहून्वर्षगणान्ब्रह्मन्भुज्यमानमिदं मया । क्षयं नाभ्येति ब्रह्मर्षे तृप्तिश्चापि ममोत्तमा ॥ २१ ॥

१२ ] ति० टी०—त्रिभुवनश्रेष्ठं तृतीये भुवने भूस्वःपदापेक्षया तृतीयब्रह्मलोके श्रेष्ठम् । हिरण्यगर्भमित्यर्थः । यद्वा त्रिष्वपि भुवनेषु श्रेष्ठमित्यर्थः ॥ १२ ॥

१३-१४ ] ति० टी०—क्षुत्पिपासे अनुगे यस्य सः १३॥१४

रा० टी०—गत्वेति । पितामहमुवाच अहमिति शेषः हर्षातिशयात्पारोक्ष्यं वचनाकारमाह ब्रह्मलोकः क्षुत्पिपासावर्जितोस्तीति शेषः अहं तु क्षुत्पिपासानुगः अयमपि क्षुत्पिपासागमः कस्य कर्मणः पाकः फलम् मे आहारश्च कः तन्मे ब्रूहि श्लोकद्वयमेकान्वयि ॥ १२ ॥ १३ ॥

रा० टी०—पितामह इति । पितामहो मामाह तदाकारमाह स्वादूनि स्वानि मांसान्येव तवाहारः अतस्तानि भक्षय१४

१५ ] ति० टी०—स्वशरीरं त्वया पुष्टं केवलम् ॥ १५ ॥

रा० टी०—ननु ब्रह्मलोके ममैकस्यैवंभूतत्वे किं कारणमित्यत आह—स्वेति । हे श्वेत ! उत्तमं तपः कुर्वता त्वया स्वशरीरमेव पुष्टं दानरूपतपो न कृत इत्यर्थः स्वेन अनुप्तं तु कदा किंचिन्न रोहते ॥ १५ ॥

गो० टी०—स्वशरीरं त्वया पुष्टमिति । मुख्यं तपो न कृतं स्वशरीरमेव केवलं त्वया पुष्टम् । अनुप्तमकृतावापं बीजं न रोहते हि ॥ १५ ॥ १६ ॥

१६ ] ति० टी०—ते सूक्ष्मः । लिङ्गव्यत्ययः । अल्पमपि दत्तं दानं ते नास्ति देवपित्रतिथिषु, किं तु तप एव निषेवसे । असेविष्टेति यावत् । तपो मनस इन्द्रियाणां चैकाग्र्यं तन्मात्रविषयकत्वरूपं तादृशतपःफलं ब्रह्मलोकप्राप्तिर्जाता तव । स्वर्गगतः परस्वर्गगतः ॥ १६ ॥

रा० टी०—दत्तमिति । यस्त्वं तपो निषेवसे तेन त्वया सूक्ष्मोऽपि भक्ष्यादिर्न दत्तं सामान्ये नपुंसकम् तेन हेतुना स्वर्गगतोपि त्वं क्षुत्पिपासया बाध्यसे ॥ १६ ॥

गो० टी०—दत्तमिति । सूक्ष्मोपि लिङ्गव्यत्यय आर्षः । सूक्ष्ममपि अत्यल्पमपि । ते दत्तं दानं नास्ति देवपित्रतिथिषु । किन्तु तप एव केवलं निषेवसे निषेवितवानित्यर्थः । "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इत्युक्तम् । दृढसमाधिरूपं तप एव कृतमित्यर्थः ॥ १७-२० ॥

१७ ] ति० टी०—तेन मांसभक्षणेन ते तृप्तिः क्षुदादिनिवृत्तिर्भविष्यति ॥ १७ ॥

रा० टी०—स इति । आहारैस्स्वार्जितपदार्थैः निष्पन्नमिति शेषः अमृतरसममृतवत्सारांशं भक्षयित्वा स त्वं बलवत्स्वशरीरं सुपुष्टं सुपोषितम् अतः तेन मांसभक्षणेन तृप्तिः क्षुन्निवृत्तिः भविष्यति ॥ १७ ॥

१८-१९ ] ति० टी०—विमोक्ष्यसे । विमोचयिष्यत इत्यर्थः ॥ १८ ॥ १९ ॥

रा० टी०—अतिखिन्नं मामवलोक्याह—यदेति । तत् तव तपस्सम्बंधिवनं अगस्त्य आगमिष्यति तदा कृच्छ्रात् विमोक्ष्यते अगस्त्यस्त्वामिति शेषः ॥ १८ ॥

रा० टी०—ननु दुर्निवारणीयं कृच्छ्रं कथं निवारयिष्यतीत्यत आह—स इति । सोऽगस्त्यः सुरगणानपि तारयितुं शक्तः त्वां तारयितुं शक्तश्चेति किम् ॥ १९ ॥

२० ] ति० टी०—स्वशरीरमेव भगवदाज्ञया नित्योपस्थितमाहारं कुर्मि करोमि ॥ २० ॥

रा० टी०—स इति । भगवतो ब्रह्मणः निश्चयं निश्चितवचनं श्रुत्वा गर्हितं स्वशरीरमाहारं भक्ष्यं कुर्मि करोमि ॥ २० ॥

गो० टी०—सोहमिति । कुर्मि करोमि ॥ २१ ॥ २२ ॥

२१ ] ति० टी०—तदेवाह—क्षयं नाभ्येतीति ॥ २१ ॥

रा० टी०—बहूनिति । बहून् वर्षगणान् मया भुज्यमानमिदं स्वं शरीरं क्षयं नाभ्येति मम तृप्तिश्च भवति ॥ २१ ॥

१ श्वेते ह्यतं गो. पाठः । २ सार्धश्लोकमिदमधिकं गो पुस्त. । ३ तृप्तिरिति गो. पाठः । ४ स्विति गो. रा. पाठः ।

तस्य मे कृच्छ्रभूतस्य कृच्छ्रादस्माद्विमोक्षय । अन्येषां न गतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ॥ २२ ॥
इदमाभरणं सौम्य धारणार्थं द्विजोत्तम । प्रतिगृह्णीष्व भद्रं ते प्रसादं कर्तुमर्हसि ॥ २३ ॥
इदं तावत्सुवर्णं च धनं वस्त्राणि च द्विज । भक्ष्यं भोज्यं च ब्रह्मर्षे ददाम्याभरणानि च ॥ २४ ॥
सर्वान्कामान्प्रयच्छामि भोगांश्च मुनिपुंगव । तारणे[2] भगवन्मह्यं प्रसादं कर्तुमर्हसि ॥ २५ ॥
तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् । तारणायोपजग्राह तदाभरणमुत्तमम् ॥ २६ ॥
मया प्रतिगृहीते तु तस्मिन्नाभरणे शुभे । मानुषः पूर्वको देहो राजर्षेर्विननाश ह ॥ २७ ॥
प्रनष्टे तु शरीरेऽसौ राजर्षिः परया मुदा । तृप्तः प्रमुदितो राजा जगाम त्रिदिवं सुखम् ॥ २८ ॥
तेनेदं शक्रतुल्येन दिव्यमाभरणं मम । तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतदर्शनम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

## एकोनाशीतितमः सर्गः ।

कथमिदमरण्यममृगद्विजमिति रामेण पृष्टः कुम्भयोनिः कथयति पुरा कृतयुगे मनुरिक्ष्वाकुमात्मजं जनयित्वा राज्येऽभिषिच्य धर्मेण प्रजाः शाधीत्यादिश्य च ब्रह्मलोकं गतः तत इक्ष्वाकुः शतमात्मजान्प्रसूय तेष्ववरजाय दण्डाख्याय मूर्खपुत्राय विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादिति ।

तदद्भुततमं वाक्यं श्रुत्वागस्त्यस्य राघवः । गौरवाद्विस्मयाच्चैव भूयः प्रष्टुं प्रचक्रमे ॥ १ ॥

२२-२३ ] ति० टी०—कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य । दृग्गोचरो मां कृच्छ्राद्विमोक्षयेत्यर्थः । ननु कथमहमगस्त्य इति त्वयावगतस्तत्राह—अन्येषामिति । कुम्भयोनिं द्विजमृते भयादन्येषामत्र निर्मानुषे गतिर्नास्ति, अतस्त्वमगस्त्य इति निर्णीतमिति भावः ॥ २२ ॥ २३ ॥

रा० टी०—तस्येति । कृच्छ्रं भूतस्य प्राप्तस्य प्राप्तं मे मामस्मात्कृच्छ्रात् विमोक्षय हि यतः कुंभयोनिं भवन्तमृते विना अत्र अस्मिन् विमोक्षणे अन्येषां गतिर्न ॥ २२ ॥

रा० टी०—इदमिति । आभरणं प्रतिगृह्णीष्व प्रसादं कर्तुमर्हसि ॥ २३ ॥

गो० टी०—तस्येति । कृच्छ्रभूतस्य कृच्छ्रं प्राप्तस्य । विमोचय मामिति शेषः ॥ २३—२७ ॥

२४ ] ति० टी०—नन्वेतद्दानस्यादानस्याभावात्कथं पुनरेतद्दानेऽपि दुःखमोक्षस्तत्राह—इदमिति । अस्य सर्वदत्वादेतद्दानं सर्वदानात्मकमिति भावः ॥ २४ ॥

रा० टी०—इदमिति । इदं सुवर्णादि तुभ्यं ददामि भक्ष्यादि ददामीत्यनेन पूर्वं भक्ष्यसत्वेपि तादृशभक्ष्येण तस्य तृप्तिर्न जातेति सूचितम् ॥ २४ ॥

२५-२६ ] ति० टी०—तस्माद्यदिदं प्रयच्छामि तत्सर्वान्कामान्सर्वभोगांश्च प्रयच्छामीति जानीहि । तारणे तारणनिमित्तम् ॥ २५ ॥ २६ ॥

गो० टी०—सर्वानिति । कामान् इच्छाविषयीभूतान् भोगान् प्रयच्छामि अतः तारणे तारणार्थं मह्यं प्रसादं कर्तुमर्हसि ॥ २५ ॥

रा० टी०—तस्येति । स्वर्गिणस्तारणाय तदाभरणमहमुपजग्राह रामप्रश्नजनितहर्षातिशयात्पारोक्ष्यम् ॥ २६ ॥

२७ ] ति० टी०—मया प्रतिगृहीते । तत्सुकृतबलादिति शेषः । ननाश ह । पुनर्भक्षणाय नोपस्थितोऽभूदित्यर्थः ॥ २७ ॥

रा० टी०—मयेति । मया आभरणे प्रतिगृहीते सति राजर्षेः पूर्वको मानुषो देहो विननाश ॥ २७ ॥

गो० टी०—मयेति । तस्मिन् तारणनिमित्ते विननाश ह । पुनर्भक्षणाय नोपस्थितमित्यर्थः ॥ २८—३० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टसप्ततितमः सर्गः ॥ ७८ ॥

२८ ] ति० टी०—प्रमुदितः क्षुत्पिपासारहिततयातिसंतोषं प्राप्तः ॥ २८ ॥

रा० टी०—प्रनष्ट इति । शरीरे प्रनष्टे सति परया राजदीप्त्योपलक्षितः प्रमुदितो राजर्षिः परया मुदोपलक्षितं त्रिदिवं सुखं यथा भवति तथा जगाम ॥ २८ ॥

२९ ] ति० टी०—तस्मिन्निमित्ते स्वतारणरूपे निमित्ते २९

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टसप्ततितमः सर्गः ॥ ७८ ॥

रा० टी०—उपसंहरन्नाह—तेनेति । तेन स्वर्गिणा तस्मिन् क्षुन्निवृत्त्यादिरूपे निमित्ते अद्भुतदर्शनमाभरणं मम मह्यं दत्तम् २९

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

१ ] ति० टी०—अथ रामेण वनस्य निर्जनत्वहेतुप्रश्ने तद्द-

१ ददातीति गो. पाठः । २ तारण इति गो. पाठः ।

भगवंस्तद्वनं घोरं तपस्तप्यति यत्र सः। श्वेतो वैदर्भको राजा कथं तदमृगद्विजम् ॥ २ ॥
तद्वनं स कथ राजा शून्यं मनुजवर्जितम्। तपश्चर्तुं प्रविष्टः स श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥
रामस्य वचनं श्रुत्वा कौतूहलसमन्वितम्। वाक्यं परमतेजस्वी वक्तुमेवोपचक्रमे ॥ ४ ॥
पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः। तस्य पुत्रो महानासीदिक्ष्वाकुः कुलनन्दनः ॥ ५ ॥
तं पुत्रं पूर्वकं राज्ये निक्षिप्य भुवि दुर्जयम्। पृथिव्यां राजवंशानां भव कर्तेत्युवाच तम् ॥ ६ ॥
तथैव च प्रतिज्ञातं पितुः पुत्रेण राघव। ततः परमसंतुष्टो मनुः पुत्रमुवाच ह ॥ ७ ॥
प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः। दण्डेन च प्रजा रक्ष मा च दण्डमकारणे ॥ ८ ॥
अपराधिषु यो दण्डः पात्यते मानवेषु वै। स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥ ९ ॥
तस्माद्दण्डे महाबाहो यत्नवान्भव पुत्रक। धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १० ॥
इति तं बहु संदिश्य मनुः पुत्रं समाधिना। जगाम त्रिदिवं हृष्टो ब्रह्मलोकं सनातनम् ॥ ११ ॥
प्रयाते त्रिदिवे तस्मिन्निक्ष्वाकुरमितप्रभः। जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् ॥ १२ ॥

र्णनम्-तदिति। गौरवात्सर्वज्ञः सर्ववक्ता परमगुरुरिति संभावनयेत्यर्थः ॥ १ ॥

रा० टी०-आभरणप्राप्तिकारणश्रवणानन्तरकालिकं वृत्तमाह-तदित्यादिभिः। राघवः अगस्त्यस्य वाक्यं श्रुत्वा विस्मयात् विस्मयं प्राप्य अगस्त्यस्य गौरवात् गुरुत्वात्सर्वज्ञत्वादित्यर्थः भूयः प्रष्टुं प्रचक्रमे ॥ १ ॥

गो० टी०-तदित्यादि। गौरवात् सर्वज्ञः सर्ववक्तेति संभावनया ॥ १ ॥

२ ] ति० टी०-यत्र स तपस्तप्यति तद्वनं कथममृगद्विजम् ॥ २ ॥

रा० टी०-प्रश्नाकारमाह—भगवन्निति। यत्र श्वेतस्तपस्तप्यति अतप्यत् तद्वनममृगद्विजम् कथमभवदिति शेषः २

गो० टी०-भगवन्निति। स यत्र तप्यति तद्वनं कथममृगद्विजम् ॥ २ ॥

३-४ ] ति० टी०-तादृशं तद्वनं तपश्चर्तुं चरितुं प्रविष्टः ॥ ३ ॥ ४ ॥

रा० टी०-तदिति। स राजा तपश्चर्तुं मनुजवर्जितमत एव शून्यं वनं कथं प्रविष्टः सः श्रुतसामान्यवृत्तान्तोऽहं तत्त्वतः श्रोतुमिच्छामि ॥ ३ ॥

रा० टी०-रामस्येति। परमतेजस्वी अगस्त्यः वक्तुमुपचक्रमे ॥ ४ ॥

गो० टी०-तदिति। कथं तादृशं तद्वनं तपश्चर्तुं चरितुं प्रविष्टः ॥ ३ ॥ ४ ॥

५-७ ] ति० टी०-दण्डधरो राजा प्रभुर्वर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥ ५-७ ॥

रा० टी०-तदाकारमाह—पुरेत्यादिभिः। कृतयुगे मनुर्नाम दण्डधरो राजा अभवदिति शेषः तस्य पुत्रः इक्ष्वाकुरासीत् ॥ ५ ॥

रा० टी०-तमिति। पूर्वकं ज्येष्ठं पुत्रं तमिक्ष्वाकुं राज्ये राज्यरक्षायां निक्षिप्य नियोज्य राजवंशानां कर्ता भवेत्युवाच ॥ ६ ॥

रा० टी०-तथेति। पुत्रेण इक्ष्वाकुणा तथेति प्रतिज्ञाते सत्येव सन्तुष्टो मनुः पुत्रमुवाच ॥ ७ ॥

गो० टी०-पुरेति। दण्डधरो राजा प्रभुः वर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥ ५-७ ॥

८ ] ति० टी०-दण्डेन क्षत्रियसहजधर्मभूतेन शिक्षणेन। अकारणे च दण्डं मा पातयेति शेषः ॥ ८ ॥

रा० टी०-तदाकारमाह-प्रीत इत्यादिभिः। त्वं कर्तासि प्रजापालनमिति शेषः अतः प्रीतोस्मि पालनोपायमाह दण्डेनेत्यादिभिः दण्डेन प्रजा रक्ष अकारणे दण्डकारणरहिते जने दण्डं मा कुर्विति शेषः ॥ ८ ॥

गो० टी०-प्रीत इति। दण्डेन चेति। क्षत्रियसहजधर्मभूतेन। अकारणे दण्डं मा पातयेति शेषः ॥ ८ ॥

९ ] ति० टी०-ननु परपीडावहो दण्डः कथं कर्तुं युक्तस्तत्राह—अपराधिष्विति। विधिवद्यथाशास्त्रम्। यथापराधं मुक्तः। प्रवर्तित इत्यर्थः ॥ ९ ॥

रा० टी०-दण्डे फलमाह—अपराधिष्विति। यो दण्डः पात्यते विधिवन्मुक्तः कृतस्स दण्डः पार्थिवं स्वर्गं नयति ॥९॥

गो० टी०-ननु कथं परपीडावहो दण्डो युक्तः कर्तुमिति तत्राह-अपराधिष्वित्यादि। विधिवद्यथाशास्त्रम् यथापराधम्। मुक्तः प्रवर्तित इत्यर्थः ॥ ९ ॥ १० ॥

१० ] ति० टी०-कुर्वतः। दण्डमिति शेषः ॥ १० ॥

रा० टी०-तस्मादिति। दण्डे यत्नवान् भव कुर्वतः यत्नमिति शेषः ते परमो धर्मो भविष्यति ॥ १० ॥

११-१२ ] ति० टी०-समाधिना प्रणवानुसंधानसहितचित्तैकाग्र्येण, अत एव ब्रह्मलोकं जगाम ॥ ११ ॥ १२ ॥

१ स्यादिति गो. पाठः। २ हेति गो. पाठः। ३ इतीति गो. पाठः। ४ भिदिवमिति गो. पाठः।

कर्मभिर्बहुरूपैश्च तैस्तैर्मनुसुतस्तदा । जनयामास धर्मात्मा शतं देवसुतोपमान् ॥ १३ ॥
तेषामवरजस्तात सर्वेषां रघुनन्दन । मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान् ॥ १४ ॥
नाम तस्य च दण्डेति पिता चक्रेऽल्पतेजसः । अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ॥ १५ ॥
अपश्यमानस्तं देशं घोरं पुत्रस्य राघव । विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादरिंदम ॥ १६ ॥
स दण्डस्तत्र राजाभूद्रम्ये पर्वतरोधसि । पुरं चाप्रतिमं राम न्यवेशयदनुत्तमम् ॥ १७ ॥
पुरस्य चाकरोन्नाम मधुमन्तमिति प्रभो । पुरोहितं तूशनसं वरयामास सुव्रतम् ॥ १८ ॥
एवं स राजा तद्राज्यमकरोत्सपुरोहितः । प्रहृष्टमनुजाकीर्णं देवराजो यथा दिवि ॥ १९ ॥
ततः स राजा मनुजेन्द्रपुत्रः सार्धं च तेनोशनसा तदानीम् ।
चकार राज्यं सुमहान्महात्मा शक्रो दिवीवोशनसा समेतः ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

## अशीतितमः सर्गः ।

पितृदत्तं राज्यं शासद्दण्ड एकदा भार्गवाश्रमं गत्वा तत्र तदात्मजामरजाख्यामकामयमानामपि मनसिजपीडितो बलाद्रमयित्वा स्वनगरं प्रयातः भार्गवदुहिता तु बलात्कृतिदुःखिता पितरं प्रतीक्षमाणा तस्थौ ।

एतदाख्याय रामाय महर्षिः कुम्भसंभवः । अस्यामेवापरं वाक्यं कथायामुपचक्रमे ॥ १ ॥

---

रा० टी०–इतीति । मनुः पुत्रं बहु संदिश्य त्रिदिवं त्रयाणां ब्रह्मादीनां दिवः स्तुतिर्यस्य तं ब्रह्मलोकं जगाम ॥ ११ ॥

रा० टी०–प्रयात इति । इक्ष्वाकुः पुत्रान्कथं जनयिष्ये इति चिंतापरोभवत् ॥ १२ ॥

गो० टी०–इतीति । समाधिना योगेन ॥ ११ ॥ १२ ॥

१३ ] ति० टी०–बहुरूपैर्यज्ञदानतपोलक्षणैः ॥ १३ ॥

रा० टी०–चिंतानन्तरकालिकं वृत्तमाह–कर्मभिरिति । बहुरूपैर्यज्ञदानाद्यात्मकैः तैस्तैः प्रसिद्धैः कर्मभिर्मनुसुतः शतं पुत्रान् जनयामास ॥ १३ ॥

गो० टी०–कर्मभिरिति । बहुरूपैरिति । यज्ञदानतपोलक्षणैरित्यर्थः ॥ १३ ॥

१४ ] ति० टी०–पूर्वजाञ्ज्येष्ठान् ॥ १४ ॥

रा० टी०–तेषामिति । तेषां पुत्राणाम् अवरजः कनिष्ठः मूढत्वादिविशिष्टोभवत् अत एव पूर्वजान् न शुश्रूषति शुश्रूषते सेवितुमिच्छति ॥ १४ ॥

गो० टी०–तेषामिति । पूर्वजाः ज्येष्ठाः ॥ १४ ॥

१५ ] ति० टी०–दण्डेति । नामकरणं पितुः सर्वज्ञत्वादन्वर्थावसायपूर्वकमित्याह–अवश्यमिति ॥ १५ ॥

रा० टी०–नामेति । अस्य शरीरे दण्डपतनमवश्यं भविष्यति अतः पिता तस्य कनिष्ठस्य दण्डेति नाम चक्रे ॥ १५ ॥

गो० टी०–नामेति । दण्ड इत्याख्याकरणं पितुः सर्वज्ञत्वात् अन्वर्थतावसायपूर्वकमित्याह–अवश्यमित्यादि ॥ १५ ॥ १६ ॥

१६ ] ति० टी०–घोरं देशमपश्यमानाः । दण्डराज्ययोग्यं घोरं देशमपश्यन्नित्यर्थः ॥ १६ ॥

रा० टी०–अपश्यमान इति । पुत्रस्य दण्डस्य योग्यं घोरं देशमपश्यमान इक्ष्वाकुः विन्ध्यशैवलयोर्मध्ये राज्यं प्रादात् ॥ १६ ॥

१७–१९ ] ति० टी०–पर्वतरोधसि पर्वततटप्राये १७-१९

रा० टी०–स इति । तत्र दण्डो राजाभूत् पुरं च न्यवेशयत् अवासयत् ॥ १७ ॥

रा० टी०–पुरस्येति । पुरस्य मधुमन्तमिति नामाकरोत् पुरोहितं तु उशनसं वरयामास ॥ १८ ॥

रा० टी०–एवमिति । राजा दण्डः तद्राज्यमकरोत् १९

गो० टी०–स इति । पर्वतरोधसि पर्वततटप्रान्ते १७–२०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनाशीतितमः सर्गः ॥७९॥

२० ] ति० टी०–शक्रोऽत्र बलिः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनाशीतितमः सर्गः ॥ ७९ ॥

रा० टी०–उपसंहरन्नाह–तत इति । राजा उशनसा सार्धं राज्यं चकार तत्र दृष्टान्तः दिवि उशनसा समेतः शक्र इव अभूतोपमैषा ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

१ ] ति० टी०–एवमुक्तोपोद्घातां प्रकृतकथामाह–एत-

---

१ सुतानिति गो. पाठः । २ मेधस इति गो. पाठः । ३ देवराजं यथा बलेति गो. पाठः ।

ततः स दण्डः काकुत्स्थ बहुवर्षगणायुतम् । अकरोत्तत्र दान्तात्मा राज्यं निहतकण्टकम् ॥ २ ॥
अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् । रमणीयमुपाक्रामच्चैत्रे मासि मनोरमे ॥ ३ ॥
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि । विचरन्तीं वनोद्देशे दण्डोऽपश्यदनुत्तमाम् ॥ ४ ॥
स दृष्ट्वा तां सुदुर्मेधा अनङ्गशरपीडितः । अभिगम्य सुसंविग्नः[1] कन्यां वचनमब्रवीत् ॥ ५ ॥
कुतस्त्वमसि सुश्रोणि कस्य वासि सुता शुभे । पीडितोऽहमनङ्गेन पृच्छामि[2] त्वां शुभानने ॥ ६ ॥
तस्य त्वेवं ब्रुवाणस्य मोहोन्मत्तस्य कामिनः । भार्गवी प्रत्युवाचेदं वचः सानुनयं त्विदम्[3] ॥ ७ ॥
भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः । अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥
मा मां स्पृश बलाद्राजन्कन्या पितृवशा ह्यहम् । गुरुः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः ॥ ९ ॥
व्यसनं सुमहत्क्रुद्धः स ते दद्यान्महातपाः । यदि वान्यन्मया कार्यं धर्मदृष्टेन सत्पथा ॥ १० ॥
वरयस्व नरश्रेष्ठ[4] पितरं मे महाद्युतिम् । अन्यथा तु फलं तुभ्यं भवेद्घोराभिसंहितम् ॥ ११ ॥
क्रोधेन हि पिता मेऽसौ त्रैलोक्यमपि निर्दहेत् । दास्यते चानवद्याङ्ग तव मा याचितः पिता ॥ १२ ॥
एवं ब्रुवाणामरजां दण्डः कामवशं गतः । प्रत्युवाच मदोन्मत्तः शिरस्याधाय चाञ्जलिम् ॥ १३ ॥

दिति । अस्यामेवापरं वाक्यमुपक्रान्तकथायामेव संबद्धम् । तत्पृष्टोत्तरभूतमित्यर्थः ॥ १ ॥

रा० टी०—अगस्त्यकर्तृककथान्तरमाह—एतदित्यादिभिः । कुंभसम्भवोऽगस्त्यः अस्यां कथायां समाप्तायामिति शेषः अपरं वाक्यम् उपचक्रमे ॥ १ ॥

गो० टी०—एतदित्यादि । अस्यामेवापरं वाक्यमिति । प्रोक्तदानकथायामेव संबद्धम् अपरं तत्पृष्टोत्तरभूतं कथान्तरमित्यर्थः ॥ १ ॥ २ ॥

२ ] ति० टी०—दान्तात्मा जितेन्द्रियः ॥ २ ॥

रा० टी०—तत इति । स दण्डः बहुवर्षगणायुतम् राज्यमकरोत् ॥ २ ॥

३–६ ] ति० टी०—भार्गवः शुक्रस्तत्संबन्धिनमाश्रममुपाक्रामदगमत् ॥ ३–६ ॥

रा० टी०—अथेति । राजा दण्डकः कस्मिंश्चिच्चैत्रे मासि काले कस्मिंश्चित्समये भार्गवमाश्रममुपाक्रामत् अगच्छत् ॥ ३ ॥

रा० टी०—तत्रेति । स दण्डः वनोद्देशे विचरन्तीं रूपेणाप्रतिमामत एव अनुत्तमामतिश्रेष्ठां भार्गवकन्यां तत्राश्रमे अपश्यत् ॥ ४ ॥

रा० टी०—स इति । तां दृष्ट्वा अनङ्गशरपीडितः अत एव सुसंविग्नः स दण्डः कन्यां दृष्ट्वा अभिगम्य समीपं प्राप्याब्रवीत् ॥ ५ ॥

रा० टी०—तदाकारमाह—कुत इति । कुतस्त्वमागतेति शेषः अनङ्गेन पीडितोऽहं त्वां पृच्छामि ॥ ६ ॥

गो० टी०—अथेति । भार्गवः शुक्रः तस्यायमपि भार्गवः तम् ॥ ३–६ ॥

७–९ ] ति० टी०—मोहेन रागमोहेनोन्मत्तस्योचितानुचितविवेकरहितस्य ॥ ७–९ ॥

रा० टी०—तस्येति । एवं ब्रुवाणस्य तस्य दण्डकस्य समीपे भार्गवी सानुनयम् इदं वचः प्रत्युवाच ॥ ७ ॥

रा० टी०—तदाकारमाह—भार्गवस्येति । भार्गवस्य ज्येष्ठामरजां नाम सुताम् आश्रमवासिनीं पित्राश्रमवसनशीलां त्वं विद्धि ॥ ८ ॥

रा० टी०—मेति । अहं कन्या अत एव पितृवशा मे पिता ते गुरुः त्वं च शिष्यः अतः बलात् मां मा स्पृश ॥ ९ ॥

गो० टी०—तस्येति । मोहेन काममोहेन । उन्मत्तः उचितानुचितवनकर्मविवेकरहितः ॥ ७–९ ॥

१० ] ति० टी०—यदि वान्यत्कामभोगानुकूल्यं तर्हि धर्मदृष्टेन सत्पथा सन्मार्गेण मां वरयस्व ॥ १० ॥

रा० टी०—तत्र दोषमाह—व्यसनमिति । स मे पिता सुमहद्व्यसनं ते तुभ्यं दद्यात् अहं पृथक् यदीति । यदि मया सह अन्यत् मदुक्तभिन्नरतिमित्यर्थः त्वया कार्यं तर्हि धर्मदृष्टेन धर्मात्मभिः प्रवर्त्तितेन सत्पथा समीचीनमार्गेण मे पितरं वरयस्व विवाहार्थं याचयस्वेत्यर्थः अनित्यत्वानृजभावः ॥ १० ॥

गो० टी०—यदि वान्यदित्यादि । यदि वान्यत्कामभोगानुकूल्यम् ॥ १० ॥

११ ] ति० टी०—अन्यथावरणे घोराभिसंहितं महानर्थफलम् ॥ ११ ॥

१२–१३ ] ति० टी०—याचितः पिता मा मां तव दास्यते इत्यन्वयः ॥ १२ ॥ १३ ॥

रा० टी०—अन्यथेति । अन्यथा मदुक्तविपरीतकरणे घोराभिसंहितमतिघोरताविशिष्टं फलं तुभ्यं भवेत् हि यतः क्रोधेन विशिष्टो मे पिता त्रैलोक्यमपि निर्दहेत् तव याचितः पिता तु मां दास्यते सार्धश्लोक एकान्वयी ॥ ११ ॥ १२ ॥

१ संविग्नामिति गो. पाठः । २ गच्छामीति गो. पाठः । ३ नृपमिति गो. पाठः । ४ नृपेति गो. पाठः ।

प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि । त्वत्कृते हि मम प्राणा विदीर्यन्ते वरानने ॥ १४ ॥
त्वां प्राप्य तु वधो वापि पापं वापि सुदारुणम् । भक्तं भजस्व मां भीरु भजमानं सुविह्वलम् ॥ १५ ॥
एवमुक्त्वा तु तां कन्यां दोर्भ्यां प्राप्य बलाद्बली । विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥ १६ ॥
तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणम् । नगरं प्रययावाशु मधुमन्तमनुत्तमम् ॥ १७ ॥
अरजापि रुदन्ती सा आश्रमस्याविदूरतः । प्रतीक्षते सुसंत्रस्ता पितरं देवसंनिभम् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

## एकाशीतितमः सर्गः ।

भार्गवस्तु सुताक्रोशमाकर्ण्य कोपपरीतात्मा तज्जनपदान् बहिः स्थापयित्वा सर्वं तद्देशं सप्तरात्रावधिमात्रेणैव शापानलेन दग्ध्वा भस्मसाच्चकार पूर्वं दण्डाधिष्ठितत्वादिदं दण्डकारण्यमुच्यत इत्येदतन्तं लोपामुद्राभर्ता दाशरथयेऽकथयत् ।

स मुहूर्तादुपश्रुत्य देवर्षिरमितप्रभः । स्वमाश्रमं शिष्यवृतः क्षुधार्तः संन्यवर्तत ॥ १ ॥
सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् । ज्योत्स्नामिव ग्रहग्रस्तां प्रत्यूषे न विराजतीम् ॥ २ ॥
तस्य रोषः समभवत्क्षुधार्तस्य विशेषतः । निर्दहन्निव लोकांस्त्रीञ्शिष्यांश्चैतदुवाच ह ॥ ३ ॥

---

रा० टी०–एवमिति । एवं ब्रुवाणामरजां शिरस्यञ्जलिमाधाय दण्डः प्रत्युवाच ॥ १३ ॥

गो० टी०–अन्यथेति । घोराभिसंहितं महानर्थसंबद्धम् ॥ ११–१३ ॥

१४ ] ति० टी०–क्षेप्तुं विलम्बं कर्तुम् ॥ १४ ॥

रा० टी०–तदाकारमाह—प्रसादमिति । त्वत्कृते त्वत्सङ्गमविलम्बे मम प्राणा विदीर्यन्ते अतः प्रसादं कुरु कालं क्षेप्तुमसङ्गमेन विलम्बयितुं नार्हसि ॥ १४ ॥

गो० टी०–प्रसादमिति । कालं क्षेप्तुं विलम्बं कर्तुमित्यर्थः ॥ १४ ॥

१५ ] ति० टी०–त्वां प्राप्य यदि वधादिर्भवेत्तदा भवतु नामेति शेषः ॥ १५ ॥

रा० टी०–ननु तथात्वे त्वद्विघातो भविष्यतीत्यत आह—त्वामिति । त्वां प्राप्य विद्यमानस्य मे वधो वा पापं वा भवत्विति शेषः बधादौ न दुःखं सङ्गमविलम्बे एव दुःखमिति तात्पर्यमतः भक्तं मां भजस्व ॥ १५ ॥

गो० टी०–त्वामिति । त्वां प्राप्य मे यदि वधादिर्भवेत् भवतु नामेति शेषः ॥ १५ ॥

१६–१७ ] ति० टी०–विस्फुरन्तीं विलुठन्तीम् १६–१७

रा० टी०–एवमिति । दोर्भ्यां कन्यां प्राप्य यथाकामं मैथुनाय उपचक्रमे ॥ १६ ॥

रा० टी०–तमिति । दण्डः महाघोरमनर्थं कृत्वा मधुमन्तं नगरं प्रययौ ॥ १७ ॥

गो० टी०–एवमिति । विस्फुरन्तीं विलुठन्तीम्॥१६॥१७

१८ ] ति० टी०–अरजापीति आकारान्तं नाम । पितरं प्रतीक्षते स्म ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽशीतितमः सर्गः ॥ ८० ॥

रा० टी०–अरजेति । आश्रमस्याविदूरतः सुसंत्रस्ता रुदन्ती अरजा पितरं प्रतीक्षते ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अशीतितमः सर्गः ॥ ८० ॥

गो० टी०–अरजापीति । प्रतीक्षन्ती पितरमास्त इति शेषः । प्रतीक्षते स्म संत्रस्तेति पाठः ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अशीतितमः सर्गः ॥ ८० ॥

१ ] ति० टी०–कथाशेषपूरणम्–स इति । उपश्रुत्य शिष्यमुखादरजावृत्तान्तमित्यर्थः ॥ १ ॥

रा० टी०–अरजाप्रतीक्षानन्तरकालिकं वृत्तमाह–स इत्यादिभिः । देवर्षिः स भार्गवः मुहूर्तात् उपश्रुत्य शिष्यादिद्वारा अरजावृत्तान्तं श्रुत्वा स्वमाश्रमं संन्यवर्तत ॥ १ ॥

गो० टी०–स मुहूर्तादित्यादि । उपश्रुत्येति शिष्यमुखाद्वृत्तान्तमिति शेषः ॥ १ ॥

२–३ ] ति० टी०–प्रत्यूषे प्रातःकाले । न विराजतीमशोभमानाम् ॥ २ ॥ ३ ॥

रा० टी०–स इति । रजसा समभिप्लुताम् अत एव ग्रहग्रस्तां प्रत्यूषे प्रातःकाले न विराजतीं ज्योत्स्नामिव अरजां स भार्गवोऽपश्यत् ॥ २ ॥

---

१ मे वधो वा स्याच्छापो वा यदि दारुणः इति गो. पाठः । २ गृह्येति गो. पाठः । ३ एतमर्थमिति गो. पाठः । ४ प्रतीक्षन्तीति गो. पाठः ।

पश्यध्वं विपरीतस्य दण्डस्याविदितात्मनः । विपत्तिं घोरसंकाशां क्रुद्धादग्निशिखामिव ॥ ४ ॥
क्षयोऽस्य दुर्मतेः प्राप्तः सानुगस्य महात्मनः । यः प्रदीप्तां हुताशस्य शिखां वै स्प्रष्टुमर्हति ॥ ५ ॥
यस्मात्स कृतवान्पापमीदृशं घोरसंहितम् । तस्मात्प्राप्स्यति दुर्मेधाः फलं पापस्य कर्मणः ॥ ६ ॥
सप्तरात्रेण राजासौ सपुत्रबलवाहनः । पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ७ ॥
समन्ताद्योजनशतं विषयं चास्य दुर्मतेः । धक्ष्यते पांसुवर्षेण महता पाकशासनः ॥ ८ ॥
सर्वसत्वानि यानीह स्थावराणि चराणि च । महता पांसुवर्षेण विलयं सर्वतोऽगमन् ॥ ९ ॥
दण्डस्य विषयो यावत्तावत्सर्वं समुच्छ्रयम् । पांसुवर्षमिवालक्ष्यं सप्तरात्रं भविष्यति ॥ १० ॥
इत्युक्त्वा क्रोधताम्राक्षस्तमाश्रमनिवासिनम् । जनं जनपदान्तेषु स्थीयतामिति चाब्रवीत् ॥ ११ ॥
श्रुत्वा तूशनसो वाक्यं सोऽश्रमावसथो जनः । निष्क्रान्तो विषयात्तस्मात्स्थानं चक्रेऽथ बाह्यतः ॥ १२ ॥

रा० टी०—तस्येति । त्रीन् लोकान् निर्दहन्निव तस्य रोषः समभवत् अत एव शिष्यानुवाच ॥ ३ ॥

गो० टी०—स इति । प्रत्यूषे प्रातःकाले ॥ २ ॥ ३ ॥

४ ] ति० टी०—विपरीतस्य विपरीतानुष्ठानवतः । क्रुद्धान्मत्तो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम् ४

रा० टी०—तदाकारमाह—पश्यध्वमित्यादिभिः । विपरीतस्य विरुद्धमार्गवर्तिनः दण्डस्य क्रुद्धामग्निशिखामिव घोरसङ्काशां विपत्तिं पश्यध्वम् ॥ ४ ॥

गो० टी०—पश्यध्वमिति । विपरीतस्य विपरीतानुष्ठानस्य विपत्तिं विनाशं मत्क्रोधतो जायमानामिति शेषः । अग्निशिखामिव स्थितां क्रुद्धामरजाम् । क्रुद्धादग्निशिखामिवेति पाठे क्रुद्धान्मत्तो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम् ॥ ४ ॥

५ ] ति० टी०—अस्य क्षयः प्राप्तस्तत्र हेतुः—य इति ॥५॥

रा० टी०—क्षय इति । यः प्रदीप्तां हुताशस्य शिखां स्प्रष्टुमर्हति तस्य दण्डकस्य क्षयः प्राप्तः ॥ ५ ॥

गो० टी०—क्षय इति । अस्य प्राप्तः क्षय इति योजना॥५॥

६–७ ] ति० टी०—सामान्येनोक्तं विशेषेणाह—यस्मादिति । ईदृशं मत्पुत्रीधर्षणरूपम् ॥ ६ ॥ ७ ॥

रा० टी०—यस्मादिति । दुर्मेधा दण्डः पापस्य कर्मणः फलं प्राप्स्यति ॥ ६ ॥

रा० टी०—फलस्वरूपं बोधयन्नाह—सप्तेति । पापकर्मसमाचारोऽसौ राजा सप्तरात्रेण वधं प्राप्स्यति ॥ ७ ॥

गो० टी०—शिखां वै स्प्रष्टुमिच्छतीत्युक्तान्यापदेशार्थं विशदयति—यस्मादित्यादि । ईदृशमिति मत्पुत्रीधर्षणरूपमित्यर्थः ॥ ६ ॥ ७ ॥

८ ] ति० टी०—धक्ष्यते नाशयिष्यति ॥ ८ ॥

रा० टी०—वधाकारमाह—समन्तादिति । पाकशासनः समंताद्योजनशतमस्य विषयं देशं पांसुवर्षेण धक्ष्यते विनाशयिष्यतीत्यर्थः ॥ ८ ॥

गो० टी०—समन्तादिति । धक्ष्यत इति । नाशयिष्यतीत्यर्थः ॥ ८ ॥

९ ] ति० टी०—विलयमगमन्विलयं गमिष्यन्ति ॥ ९ ॥

रा० टी०—सर्वेति । सर्वतः सर्वदिग्भ्यः महता पांसुवर्षेण सर्वसत्वानि विलयमगमन् गमिष्यन्ति ॥ ९ ॥

गो० टी०—सर्वेति । विलयमगमन् गमिष्यन्तीति यावत्॥९

१० ] ति० टी०—सर्वमुच्छ्रयं चराचरप्राणिमात्रमुच्छ्रयत उद्भवतीत्युच्छ्रयः पांसुवर्षमिवालक्ष्यम् । प्रसिद्धप्रलयकालिकमहापांसुवर्षमिव प्राप्य सप्तरात्रं सप्तरात्रिपर्यन्तमलक्ष्यं भविष्यति । विनष्टपुरपौरजानपदं भविष्यतीत्यर्थः ॥ १० ॥

रा० टी०—दण्डस्येति । समुच्छ्रयमतिवृद्धिविशिष्टं यावद्दण्डस्य विषयः तावत्सर्वं सप्तरात्रं पांसुवर्षं प्राप्येति शेषः अलक्ष्यं भविष्यति ॥ १० ॥

गो० टी०—दण्डस्येति । सर्वसमुच्छ्रयं चराचरप्राणिमात्रमित्यर्थः । उच्छ्रयत्यस्मादित्युच्छ्रयम् । पांसुवर्षमिवालक्ष्यमिति । पांसुवर्षं प्रसिद्धप्रलयपांसुमहावर्षमिव प्राप्य सप्तरात्रं सप्तरात्रपर्यन्तमलक्ष्यं भविष्यतीति । विनष्टपुरपौरजानपदकं । भविष्यतीत्यर्थः ॥ १० ॥

११ ] ति० टी०—तमाश्रमनिवासिनं स्वाश्रमनिवासिनम् । जनपदान्तेषु दण्डजनपदसीमान्तदेशेषु ॥ ११ ॥

रा० टी०—इतीति । क्रोधताम्राक्षो भार्गवः आश्रमनिवासिनं जनं जनपदान्तेषु दण्डस्वामिकदेशान्तेषु स्थीयतामित्यब्रवीत् ॥ ११ ॥

गो० टी०—इतीति । तदाश्रमवासिनमिति । स्वाश्रमनिवासिनमित्यर्थः॥ जनपदान्तेषु दण्डजनपदसीमान्तदेशेष्वित्यर्थः॥११

१२ ] ति० टी०—सोऽश्रमावसथ इत्यार्षः संधिः । स आश्रमनिवासीत्यर्थः । एतावता कथं तदमृगद्विजमित्यस्योत्तरमुक्तम् ॥ १२ ॥

रा० टी०—श्रुत्वेति । आश्रमावसथः आश्रमे निवासी जनः तस्मात् दण्डसम्बन्धिनो विषयात् निष्क्रान्तस्सन् बाह्यतः देशबहिर्भूतदेशे स्थानं चक्रे सोऽश्रमादित्यार्ष इति भट्टाः ॥ १२ ॥

गो० टी०—श्रुत्वेति । सोऽश्रमावसथ इति छान्दसः सन्धिः । एतावता कथं तदमृगद्विजमित्यस्योत्तरं निवृत्तम्॥१२॥

१ क्रुद्धामिति गो. रा. पाठः । २ दुरात्मन इति गो. पाठः । ३ श्रुत्वेति गो. पाठः । ४ तदाश्रमेति गो. पाठः ।

स तथोक्त्वा मुनिजनमरजामिदमब्रवीत् । इहैव वस दुर्मेधे आश्रमे सुसमाहिता ॥ १३ ॥
इदं योजनपर्यन्तं सरः सुरुचिरप्रभम् । अरजे विज्वरा भुङ्क्ष्व कालश्चात्र प्रतीक्ष्यताम् ॥ १४ ॥
त्वत्समीपे च ये सत्त्वा वासमेष्यन्ति तां निशाम् । अवध्याः पांसुवर्षेण ते भविष्यन्ति नित्यदा ॥ १५ ॥
श्रुत्वा नियोगं ब्रह्मर्षेः सारजा भार्गवी तदा । तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥ १६ ॥
इत्युक्त्वा भार्गवो वासमन्यत्र समकारयत् । तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम् ॥ १७ ॥
सप्ताहाद्भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना । तस्यासौ दण्डविषयो विन्ध्यशैवलयोर्नृप ॥ १८ ॥
शप्तो ब्रह्मर्षिणा तेन वैधर्म्ये सहिते कृते । ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ॥ १९ ॥
तपस्विनः स्थिता ह्यत्र जनस्थानमतोऽभवत् । एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव ॥ २० ॥
संध्यामुपासितुं वीर समयो ह्यतिवर्तते । एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः ॥ २१ ॥
कृतोदका नरव्याघ्र आदित्यं पर्युपासते । स तैर्ब्राह्मणमभ्यस्तं सहितैर्ब्रह्मवित्तमैः ॥
रविरस्तंगतो राम गच्छोदकमुपस्पृश । ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

---

१३ ] ति० टी०–अथ निर्जनं वनं कथं तपसे प्रविष्ट इत्यस्योत्तरमाह–**स तथेति** । वासप्रयोजनमाह—सुसमाहिता । शोभनसमाधिमती भूत्वेत्यर्थः । समाध्यनुष्ठाने निमित्तमाह—**दुर्मेधे इति** । यस्माद्दण्डधर्षणसहिष्णुर्दुर्मतिरसि, अतस्तत्पापनिवृत्तये समाधिरावश्यक इति भावः ॥ १३ ॥

**रा० टी०–स इति** । स भार्गवः अरजामिदमब्रवीत् तदाकारमाह इहैवाश्रमे सुसमाहिता त्वं वस एतेन अरजाया अपि किञ्चिदपराधस्सूचितः ॥ १३ ॥

**गो० टी०**–निर्जनम् वनं कथं तपसे प्रविष्ट इत्यस्योत्तरमाह–**स तथेत्यादि** । तव समलत्वात् इहैव वसेति । वासप्रयोजनमाह–सुसमाहितेति । शोभनसमाधिमतीत्यर्थः । समाध्यनुष्ठानस्यापि निमित्तमाह–**दुर्मेध इति** । यस्माद्धर्षणसहिष्णुदुर्बुद्धिरसि, ततः तादृशमलमोचनार्थं समाधिमती सती वसेत्यर्थः ॥ १३ ॥

**१४] ति० टी०**–पांसुवर्षे कथं वासस्तत्राह—**इदमिति** १४

**रा० टी०–इदमिति** । इदं सरः भुङ्क्ष्व अत्रैव स्थित्वेति शेषः कालः अपराधनिवृत्तिसमयः प्रतीक्ष्यताम् त्वयेति शेषः १४

**गो० टी०**–कथं वस्तुं शक्यं पांसुवर्षे इत्यत्राह–**इदं योजनपर्यन्तमित्यादि** ॥ १४ ॥

**१५–१७ ] ति० टी०**–ये सत्त्वाः पशुपक्ष्यादयो वासमेष्यन्ति । सप्तरात्रमध्येऽपीति शेषः । एवं चोशनोऽनुग्रहेण सरःप्रदेशस्य सुखावासत्वादत्र तपसे प्रविष्ट इति भावः १५–१७

**रा० टी०**–नन्वस्याश्रमस्यापि आशु विनाशित्वात् कथमत्र वास इत्यत आह—**त्वदिति** । त्वत्समीपे ये सत्त्वा प्राणिनः निशां निशायां वासमेष्यन्ति ते पांसुवर्षेण अवध्या भविष्यन्ति ॥ १५ ॥

**रा० टी०–श्रुत्वेति** । अरजा भृशदुःखितापि पितरं तथेति प्राह ॥ १६ ॥

**रा० टी०–इतीति** भार्गवः अन्यत्र वासं समकारयत् अर्द्धं पृथक् । **तदिति** । नरेन्द्रस्य राज्यं ब्रह्मवादिना यथोक्तं सप्ताहात् भस्मसाद्भूतम् ॥ १७ ॥

**गो० टी०–त्वत्समीप इति** । सत्त्वाः पक्ष्यादयः । एवं चोशनसोऽनुग्रहेण सरःप्रदेशस्य सुखावहत्वात्सुखवासत्वाच्चात्र तपसे प्रविष्ट इति भावः ॥ १५–१७ ॥

**१८ ] ति० टी०**–तस्यासौ । व्यत्ययात्षष्ठी । सोऽसावित्यर्थः । विन्ध्यशैवलयोः मध्ये इति शेषः ॥ १८ ॥

**रा० टी०–तस्येति** । असहिते असहनीये वैधर्म्ये कृते सति ब्रह्मर्षिणा शप्तः विंध्यशैवलयोर्मध्ये विद्यमानः तस्य दण्डस्य दण्डविषयः दण्डविशिष्टदेशः असावेव ॥ १८ ॥

**गो० टी०–तस्येति** । तस्यासौ व्यत्ययात् षष्ठी । सोऽसावित्यर्थः । सहिते पूर्णधर्मपूर्णसौख्यसहित इत्यर्थः । कृते कृतयुगे ॥ १८—२० ॥

**१९–२१ ] ति० टी०**–सहिते पूर्णधर्मपूर्णसौख्यसहिते कृते कृतयुगे तेन राज्ञा वैधर्म्ये धर्मवैपरीत्ये कृते सति यो ब्रह्मर्षिणा शप्तः सोऽसावित्यन्वयः॥ १९–२१ ॥

**रा० टी०–तत इति** । ततः प्रभृति दण्डकारण्यमुच्यते हि यतः तपस्विनः स्थिताः अतः जनस्थानमभवत् ॥ १९ ॥

**रा० टी०–एतदिति** । सन्ध्यामुपासितुं समयोतिवर्तते अत एव महर्षयः कृतोदकाः सन्तः आदित्यं पर्युपासते श्लोकद्वयमेकान्वयि ॥ २० ॥ २१ ॥

**गो० टी०–एत इति** । कृतोदकाः कृतस्नानादिकर्माण इत्यर्थः ॥ २१ ॥

**२२ ] ति० टी०**–कृतोदकाः कृतस्नानादिकर्माणः । स रविर्ब्रह्मवित्तमैः सहितैस्तीर्थसमीपे संगतैरभ्यस्तं ब्राह्मणं ब्राह्मणपठितोपनिषद्बोधितज्ञानाभ्यासं तल्लक्षणां पूजां प्राप्येति शेषः । रविरस्तं गतः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकाशीतितमः सर्गः ॥८१॥

## द्व्यशीतितमः सर्गः ।

रामः प्रभाते सरसि स्नात्वा सन्ध्यामन्वास्य मुनिदत्तकंदमूलशाल्यादीनि पूर्वदिने एव गृहीतत्वादभुक्त्वैवागस्त्यादींस्तपोधनानभिवाद्य पुष्पकमारुह्य साकेतं प्रविश्य विसृज्य च तद्विमानं भरतलक्ष्मणयोरानयनाय प्रतीहारं प्राहिणोत् ।

ऋषेर्वचनमाज्ञाय रामः संध्यामुपासितुम् । अपाक्रामत्सरः पुण्यमप्सरोगणसेवितम् ॥ १ ॥
तत्रोदकमुपस्पृश्य संध्यामन्वास्य पश्चिमाम् । आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः ॥ २ ॥
तस्यागस्त्यो बहुगुणं कन्दमूलं तथौषधम् । शाल्यादीनि पवित्राणि भोजनार्थमकल्पयत् ॥ ३ ॥
स भुक्तवान्नरश्रेष्ठस्तदन्नममृतोपमम् । प्रीतश्च परितुष्टश्च तां रात्रिं समुपाविशत् ॥ ४ ॥
प्रभाते काल्यमुत्थाय कृत्वाह्निकमरिंदमः । ऋषिं समुपचक्राम गमनाय रघूत्तमः ॥ ५ ॥
अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसंभवम् । आपृच्छे स्वाश्रमं गन्तुं मामनुज्ञातुमर्हसि ॥ ६ ॥
धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महात्मनः । द्रष्टुं चैवागमिष्यामि पावनार्थं महात्मनः ॥ ७ ॥
तथा वदति काकुत्स्थे वाक्यमद्भुतदर्शनम् । उवाच परमप्रीतो धर्मनेत्रस्तपोधनः ॥ ८ ॥

---

रा० टी०—स इति । रविरस्तं गतः अतः सहितैः संघीभूतैः ब्रह्मवित्तमैर्ब्रह्मर्षिभिस्सह गच्छ ब्राह्मणं ब्राह्मणोपदिष्टमभ्यस्तं समीपवर्ति उदकमुपस्पृश च ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकाशीतितमः सर्गः ॥ ८१ ॥

गो० टी०—स तैरिति । स रविः ब्रह्मवित्तमैः तीर्थसमीपे सहितैः संगतैस्तैर्ऋषिभिरभ्यस्तं ब्राह्मणं ब्रह्ममन्त्रतन्त्रयोगाभ्यासलक्षणपूजां प्राप्येति शेषः ॥ २२ ॥

इति श्रीगोविंदराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकाशीतितमः सर्गः ॥ ८१ ॥

१–२ ] ति० टी०—ऋषेरिति ॥ १ ॥ २ ॥

रा० टी०—अगस्त्यवचनश्रवणानन्तरकालिकं वृत्तमाह—ऋषेरित्यादिभिः । रामः अप्सरोगणसेवितं सरः अपाक्रामत् अगच्छत् ॥ १ ॥

रा० टी०—तत्रेति । तत्र सरसि पश्चिमां सायङ्कालिकीं संध्यामन्वास्य कुंभयोनेराश्रमं प्राविशत् ॥ २ ॥

गो० टी०—ऋषेरित्यादि ॥ १ ॥ २ ॥

३–४ ] ति० टी०—कन्दमूलं कन्दरूपं मूलम् । औषधं जरापलितघ्नं दिव्यौषधम् ॥ ३ ॥ ४ ॥

रा० टी०—तस्येति । तस्य रामस्य भोजनार्थं कन्दादीन् अगस्त्योऽकल्पयत् ॥ ३ ॥

रा० टी०—स इति । अन्नं भुक्तवान् अत एव परितुष्टः अत एव प्रीतो रामस्तां रात्रिं समुपाविशत् ॥ ४ ॥

गो० टी०—तस्येति । कन्दमूलं कन्दरूपं मूलं कन्दमूलम् । तथा ओषधिं दिव्यौषधिरूपम् । जरापलितघ्नमित्यर्थः । एवं बहुगुणप्रयोजनार्थं ददौ । भोजनार्थं तु शालिपवित्राणि पवित्रशाल्यन्नानीत्यर्थः ॥ ३ ॥ ४ ॥

५–६ ] ति० टी०—प्रभात उत्थाय काल्यं प्रातःकालिकमाह्निकं कृत्वा गमनायानुज्ञां ग्रहीतुमृषिं तत्समीपं समुपचक्राम जगाम ॥ ५ ॥ ६ ॥

रा० टी०—प्रभात इति । प्रभाते उत्थाय काल्यं प्रातःकालिकमाह्निकं कृत्वा गमनाय गमनं कर्तुमृषिं समुपचक्राम ॥ ५ ॥

रा० टी०—अभिवाद्येति । रामो महर्षिमब्रवीत् तदाकारमाह स्वाश्रमं गन्तुमापृच्छे प्रार्थयामि अतोऽनुज्ञातुमर्हसि ६

गो० टी०—प्रभात इति । काल्यं प्रातःकालिकमाह्निकम् कृत्वा । गमनायेति । गमनानुज्ञार्थमित्यर्थः ॥ ५ ॥ ६ ॥

७ ] ति० टी०—आगमिष्यामि । अतः परमपि यदाकाङ्क्षा भविष्यतीति शेषः । महात्मनः सकाशादात्मनः पावनार्थमित्यर्थः ॥ ७ ॥

रा० टी०—धन्य इति । तव दर्शनेन अहं धन्योस्मि अत एव अनुगृहीतोस्मि त्वयेति शेषः पावनार्थं भव महात्मनो भवतः द्रष्टुमागमिष्यामि पुनः कदाचिदिति शेषः ॥ ७ ॥

गो० टी०—धन्य इति । आगमिष्यामीति । अतः परमपि यदाकाङ्क्षा तदा आत्मनः पावनार्थमागमिष्यामीत्युक्तवानित्यर्थः ॥ ७ ॥

८ ] ति० टी०—तथा वदत्यात्मनः पावनार्थं गमिष्यामीति वदति । परमप्रीतः । एवं विनयवचनादिति शेषः । धर्मो योगधर्मो नेत्रं सर्वज्ञानसाधनं चक्षुर्यस्य सः ॥ ८ ॥

रा० टी०—तथेति । धर्मनेत्रः धर्मप्रवर्त्तकः अगस्त्यः उवाच ॥ ८ ॥

गो० टी०—तथेति । परमप्रीत इति । एवं विनयवचनादिति शेषः । धर्मनेत्र इति । धर्मो नेत्रं ज्ञानसाधनं यस्य स तथा ॥ ८ ॥ ९ ॥

---

१ अपेति गो. पाठः । २ स्तां पुरीमिति गो. पाठः । ३ उक्तेति गो. पाठः ।

अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरम् । पावनः सर्वभूतानां त्वमेव रघुनन्दन ॥ ९ ॥
मुहूर्तमपि राम त्वां येऽनुपश्यन्ति केचन । पाविताः स्वर्गभूताश्च पूज्यास्ते त्रि२दिवेश्वरैः ॥ १० ॥
ये च त्वां घोरचक्षुर्भिः पश्यन्ति प्राणिनो भुवि । हतास्ते यमदण्डेन सद्यो निरयगामिनः ॥ ११ ॥
ईदृशस्त्वं रघुश्रेष्ठ पावनः सर्वदेहिनाम् । भुवि त्वां कथयन्तो हि३ सिद्धिमेष्यन्ति राघव॥१२॥
त्वं गच्छारिष्टमव्यग्रः पन्थानमकुतोभयम् । प्रशाधि राज्यं धर्मेण गतिर्हि जगतो भवान् ॥ १३ ॥
एवमुक्तस्तु मुनिना प्राञ्जलिः प्रग्रहो नृपः । अभ्यवादयत प्राज्ञस्तमृषिं सत्यशीलिनम् ॥ १४ ॥
अभिवाद्य ऋषिश्रेष्ठं तांश्च सर्वांस्तपोधनान् । अध्यारोहत्तदव्यग्रः पुष्पकं हेमभूषितम् ॥ १५ ॥
तं प्रयान्तं मुनिगणा आशीर्वादैः समन्ततः । अपूजयन्महेन्द्राभं सहस्राक्षमिवामराः ॥ १६ ॥
खस्थः स ददृशे रामः पुष्पके हेमभूषिते । शशी मेघसमीपस्थो यथा जलधरागमे ॥ १७ ॥
ततोऽर्धदिवसे प्राप्ते पूज्यमानस्ततस्ततः । अयोध्यां प्राप्य काकुत्स्थो मध्यकक्षामवातरत्॥१८॥
ततो विसृज्य रुचिरं पुष्पकं कामगामिनम् । विसर्जयित्वा गच्छेति स्वस्ति तेऽस्त्विति च प्रभुः॥१९॥

९ ] ति० टी०–अथागस्त्यो रामस्य ब्रह्मत्वं द्रढिक्-त्याह—पावनः सर्वभूतानामिति । सर्वजीवानाम् । 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति शास्त्रादित्याशयः । त्वमेवेत्यनेन सर्वपावनस्य भगवद्रूपत्वमेवोक्तम् ॥ ९ ॥

रा० टी०–तदाकारमाह–अतीति । त्वमेव सर्वभूतानां पावनः स्वतः पावनकर्ता अतः इदं पावनार्थमागमिष्यामीति वाक्यमत्यद्भुतम् ॥ ९ ॥

१० ] ति० टी०–ये त्वां पश्यन्ति । चित्ते स्वतस्त्वब्रह्मतया पश्यन्तीत्यर्थः । तव लीलावतारमूर्तिं विष्णुत्वेन चक्षुषा च ये पश्यन्तीत्यर्थः । ते पाविताः । त्वज्ज्ञानदर्शनाभ्यामिति शेषः । अत एव देहान्ते स्वर्गभूताः परमपदं वा स्वर्गं प्राप्ताः, अत एव ते सर्वदेवतैः पूज्याः । एवमनुकूलदृष्टेः फलमुक्तम् ॥ १० ॥

रा० टी०–मुहूर्तमिति । ये मुहूर्तमपि त्वामनुपश्यन्ति ते पाविताः पावनकर्तारस्सन्तः सर्वलोकेषु त्रिदिवेश्वरैरपि पूज्या भवन्तीति शेषः पाविता इत्यत्र कृतपूर्वीकटमित्यादिवत्कर्माविवक्षया कर्तरि निष्ठाभावनिष्ठान्तप्रकृतिकः अर्शआद्यच् वा ॥ १० ॥

गो० टी०–मुहूर्तमिति । स्वर्गभूताः स्वर्गं प्राप्ताः१०॥११

११ ] ति० टी०–अथ प्रतिकूलदृष्टेस्तदाह—ये चेति । प्राणिन इति सामान्योक्त्या तपःप्रभावे सत्यपि त्वद्वेषमात्रेण निरयगामितोक्ता । परं तु ते सद्यस्तत्क्षणमेव निरयगामिन इत्युक्त्या कालान्तरे तादृशरीत्यापि त्वद्दर्शनमाहात्म्यात्ते स्वर्गमोक्षभाज इति सूचितम् ॥ ११ ॥

रा०टी०–ये इति । ये प्राणिनः घोरचक्षुर्भिस्त्वां पश्यन्ति ते निरयगामिनस्सन्तः यमदण्डेन हता भवन्तीति शेषः ॥११॥

१२ ] ति० टी०–ईदृशः सकलकल्याणगुणः परमानन्दरूपः सर्वदेहिनां पावनोऽसि, अतः कालान्तरे त्वां कथयन्तस्त्वच्चरितं कीर्तयन्तोऽपि सिद्धिं ब्रह्मतारूपां चित्तशुद्धिद्वारा एष्यन्ति प्राप्स्यन्ति । किं च ईदृशस्त्वं पावन इतरविलक्षणपावनत्वस्वभावः । ये त्वां रागद्वेषकामभयान्यतमैरपि कथयन्तस्ते सिद्धिं मोक्षं गमिष्यन्ति ॥ १२ ॥

रा० टी०–ईदृश इति । अत एव त्वां कथयन्तो जनाः सिद्धिमेष्यन्ति ॥ १२ ॥

गो० टी०–ईदृश इति । सिद्धिं परमं तत्त्वं ब्रह्मभावम्१२

१३ ] ति० टी०–रिष्टं दुःखम् । अरिष्टं सुखम् । गतिः स्वर्गादिगतिसाधनम् ॥ १३ ॥

रा० टी०–त्वमिति । अरिष्टं विघ्नरहितम् अत एव अकुतोभयं पन्थानं त्वं गच्छ राज्यं प्रशाधि हि यतः भवान् एव जगतो गतिः ॥ १३ ॥

गो० टी०–गच्छेति । अरिष्टं सुखम् ॥ १३ ॥

१४-१७ ] ति० टी०–प्रग्रह उद्यतबाहुः ॥ १४-१७ ॥

रा० टी०–एवमिति । प्राञ्जलिभिः प्रग्रहः प्रग्रहणं यस्य स नृपो रामः ऋषिमगस्त्यमभ्यवादयत ॥ १४ ॥

रा० टी०–अभिवाद्येति । तत्पुष्पकमव्यग्रो रामः अध्यारोहत् ॥ १५ ॥

रा० टी०–तमिति । मुनिगणाः आशीर्वादैः प्रयान्तं रामं समन्ततोऽपूजयन् ॥ १६ ॥

रा० टी०–खस्थ इति । जलधरागमे मेघसमीपस्थः शशी प्रातिपदिकश्चन्द्र इव हेमभूषिते पुष्पके रामो ददृशे एतेनोपमालङ्कारेण रामस्सर्वैर्नमस्कृतोऽभूदिति सूचितम् ॥ १७ ॥

गो० टी०–एवमिति । प्रग्रहः उद्यतबाहुः ॥ १४-१७॥

१८ ] ति० टी०–मध्यकक्षाम् । प्राप्येति शेषः ॥ १८ ॥

रा० टी०–तत इति । ततस्ततः तत्र तत्र पूज्यमानो रामः अर्धदिवसे प्राप्ते सति अयोध्यां प्राप्य मध्यकक्षामवातरत् प्राप्नोत् ॥ १८ ॥

गो० टी०–तत इति । मध्यकक्ष्यां प्राप्येति शेषः१८-१९

१९ ] ति० टी०–विसृज्य स्वरहितं कृत्वा । विसर्जयित्वा । कुबेरं वहेत्यनुज्ञाय ॥ १९ ॥

१ चेति गो. पाठः । २ सर्वदेवतैरिति गो. पाठः। ३ अपी गो. पाठः। ४ पुण्यशालिनमिति गो. पाठः । ५ कक्ष्यामवारुह । आरुहदिति गो. पाठः । ६ र्दिति गो. पाठः ।

कक्षान्तरस्थितं क्षिप्रं द्वास्थं रामोऽब्रवीद्वचः । लक्ष्मणं भरतं चैव गत्वा तौ लघुविक्रमौ ॥
ममागमनमाख्याय शब्दापयत मा चिरम् । ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्र्यशीतितमः सर्गः ॥ ८२ ॥

## त्र्यशीतितमः सर्गः ।

भरतलक्ष्मणौ राजसूययागेन यियक्षामीति स्वाशयमवगमयन्तमग्रजं राजसूये भूपतीनां महान्क्षयः राजानस्तु निखिला भवत्यनुरक्ता अतो न मह्यं रोचते भवन्मनोगतमिति भरतो न्यषेधत् ।

तच्छ्रुत्वा भाषितं तस्य रामस्याक्लिष्टकर्मणः । द्वास्थः कुमारावाहूय राघवाय न्यवेदयत् ॥ १ ॥
दृष्ट्वा तु राघवः प्राप्तावुभौ भरतलक्ष्मणौ । परिष्वज्य ततो रामो वाक्यमेतदुवाच ह ॥ २ ॥
कृतं मया यथा तथ्यं द्विजकार्यमनुत्तमम् । धर्मसेतुमथो भूयः कर्तुमिच्छामि राघवौ ॥ ३ ॥
अक्षयश्चाव्ययश्चैव धर्मसेतुर्मतो मम । धर्मप्रवचनं चैव सर्वपापप्रणाशनम् ॥ ४ ॥
युवाभ्यामात्मभूताभ्यां राजसूयमनुत्तमम् । सहितो यष्टुमिच्छामि तत्र धर्मस्तु शाश्वतः ॥ ५ ॥
इष्ट्वा तु राजसूयेन मित्रः शत्रुनिबर्हणः । सुहुतेन सुयज्ञेन वरुणत्वमुपागमत् ॥ ६ ॥
सोमश्च राजसूयेन इष्ट्वा धर्मेण धर्मवित् । प्राप्तश्च सर्वलोकेषु कीर्तिं स्थानं च शाश्वतम् ॥ ७ ॥

---

रा० टी०—तत इति । प्रभुः रामः पुष्पकं विसृज्य त्यक्त्वा गच्छेति विसर्जयित्वा विसर्ज्य उक्त्वेत्यर्थः स्वस्ति तेऽस्तु इत्युवाचेति शेषः ॥ १९ ॥

२० ] ति० टी०—शब्दापयत । दौवारिकेणाह्वयस्वेत्यर्थः । बहुवचनमार्षम् । आह्वानं कारयेत्यर्थः ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्र्यशीतितमः सर्गः ॥ ८२ ॥

रा० टी०—कक्षेति । रामः कक्षान्तरस्थितं चारमब्रवीत् अर्द्धं पृथक् तदाकारमाह—लक्ष्मणमिति । लक्ष्मणं भरतं च गत्वा ममागमनमाख्याय उक्त्वा शब्दापयत आह्वयत प्रयमिति शेषः ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्र्यशीतितमः सर्गः ॥ ८२ ॥

गो० टी०—कक्ष्यान्तरेति । विनिक्षिप्तं योजितमिति यावत् । शब्दापयतेति युगार्थः । आत्मानं शब्दवन्तं कुर्वित्यर्थः । बहुवचनमार्षम् ॥ २० ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्र्यशीतितमः सर्गः ॥ ८२ ॥

---

१–२ ] ति० टी०—अथ रामस्य राजसूयकरणेच्छा भरतेन क्षत्रियकुलनाशप्रसक्तो निवार्यते—तच्छ्रुत्वेति ॥१॥२॥

रा० टी०—रामाज्ञापनश्रवणानन्तरकालिकं वृत्तमाह—तदित्यादिभिः । द्वास्थः कुमारावाहूय न्यवेदयत ॥ १ ॥

रा० टी०—दृष्ट्वेति । रामः एतदुवाच ॥ २ ॥

गो० टी०—तच्छ्रुत्वेत्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०—द्विजकार्यं यथा प्रतिज्ञातं तथा तथ्यं कृतम् । बाल उज्जीवित इत्यर्थः । 'धर्मसेतुं राजा राजसूयेन यजेत' इति विधिना राज्ञामसाधारणभूतं धर्ममर्यादारूपमित्यर्थः ३

रा० टी०—तदाकारमाह—कृतमित्यादिभिः । हे राघवौ ! तथ्यं सत्यं द्विजकार्यं मया यथावत्कृतम् अथो अनन्तरं धर्मसेतुं धर्ममर्यादां राजसूयमित्यर्थः कर्तुमिच्छामि ॥ ३ ॥

गो० टी०—कृतमिति । द्विजकार्यं यथा प्रतिज्ञातं तत्तथा तथ्यं कृतम् । बालो जीवित इत्यर्थः । धर्मसेतुं राजधर्ममर्यादाभूतं राजसूयमित्यर्थः ॥ ३ ॥

४ ] ति० टी०—अक्षयः बहुकालानुभवयोग्यफलत्वात् । अव्ययः सजातीयधर्मान्तरहेतुत्वात् । राजसूयानुष्ठानमेवंभूतमिति किं वक्तव्यम् । यत्कीर्तनमपि विशिष्टफलमित्याह—धर्मप्रवचनं चेति । मम मर्यादाभूतराजसूयधर्मसंकीर्तनं चेत्यर्थः । 'य उ चैनमेवं वेद' इति श्रुतेः ॥ ४ ॥

रा० टी०—अक्षय इति । यतः धर्मप्रवचनं प्रभृतधर्मचर्चा सर्वपापप्रणाशनं भवति अतः अक्षयः बहुकालसाध्यः अव्ययः नित्यफलकः धर्मसेतुर्मम मतः कर्तव्यत्वेनेप्सितः ॥ ४ ॥

गो० टी०—अक्षय्य इति । धर्मप्रसाधकं धर्मवर्धकमित्यर्थः । धर्मप्रवचनमिति च पाठः ॥ ४ ॥

५–७ ] ति० टी०—तत्र राजसूये शाश्वतो धर्मः । क्षत्रियस्यासाधारणोऽक्षयकीर्तिहेतुर्धर्म इत्यर्थः ॥ ५–७ ॥

रा० टी०—धर्मसेतोर्निर्वचनं कुर्वन्नाह—युवाभ्यामिति । युवाभ्यां सहितोऽहं राजसूयं यष्टुमिच्छामि तत्र हेतुः तत्र राजसूये शाश्वतः निरन्तरो धर्मः ॥ ५ ॥

---

१ विनिक्षिप्तमिति गो. पाठः । २ प्रियाविति गो. पाठः । ३ तदेति गो. पा. । ४ प्रसाधकं स्वेवदिति गो. पाठः । ५ ह्येति गो. पाठः ।

अस्मिन्नहनि यच्छ्रेयश्चिन्त्यतां तन्मया सह । हितं चायतियुक्तं च प्रयतौ वक्तुमर्हथः ॥ ८ ॥
श्रुत्वा तु राघवस्यैतद्वाक्यं वाक्यविशारदः । भरतः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९ ॥
त्वयि धर्मः परः साधो त्वयि सर्वा वसुंधरा । प्रतिष्ठिता महाबाहो यशश्चामितविक्रम ॥ १० ॥
महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः । निरीक्षन्ते महात्मानं लोकनाथं यथा वयम् ॥ ११ ॥
पुत्राश्च पितृवद्राजन्पश्यन्ति त्वां महाबल । पृथिव्या गतिभूतोऽसि प्राणिनामपि राघव ॥ १२ ॥
स त्वमेवंविधं यज्ञमाहर्तासि कथं नृप । पृथिव्या राजवंशानां विनाशो यत्र दृश्यते ॥ १३ ॥
पृथिव्यां ये च पुरुषा राजन्पौरुषमागताः । सर्वेषां भविता तत्र संक्षयः सर्वकोपजः ॥ १४ ॥
सैर्वं पुरुषशार्दूल गुणैरतुलविक्रम । पृथिवीं नार्हसे हन्तुं वशे हि तव वर्तते ॥ १५ ॥
भरतस्य तु तद्वाक्यं श्रुत्वामृतमयं यथा । प्रहर्षमतुलं लेभे रामः सत्यपराक्रमः ॥ १६ ॥
उवाच च शुभं वाक्यं कैकेय्यानन्दवर्धनम् । प्रीतोऽस्मि परितुष्टोऽस्मि तवाद्य वचनेऽनघ ॥ १७ ॥
इदं वचनमक्लीबं त्वया धर्मसमागतम् । व्याहृतं पुरुषव्याघ्र पृथिव्याः परिपालनम् ॥ १८ ॥

रा० टी०—तत्र शिष्टाचारं प्रमाणयन्नाह—इष्ट्वेति । मित्रः सुयज्ञेन राजसूयेन इष्ट्वा वरुणत्वमुपागमत् ॥ ६ ॥

रा० टी०—सोम इति । सोमः सर्वलोकेषु कीर्तिं शाश्वतं स्थानं च प्राप्तः ॥ ७ ॥

गो० टी०—युवाभ्यामिति । तत्र धर्मो हि शाश्वत इति । तत्र राजसूये । क्षत्रियस्यासाधारणः अक्षयकीर्तिहेतुर्धर्म इत्यर्थः ॥ ५–७ ॥

८–९ ] ति० टी०—हितमिहलोकसुखम् । आयतियुक्तम् । उत्तरकाले च हितमित्यर्थः ॥ ८ ॥ ९ ॥

रा० टी०—अस्मिन्निति । यत् श्रेयः अत्यन्तकल्याणं तत् अस्मिन्नहनि चिन्त्यतां तत्र हेतुः आयतियुक्तमुत्तरकालवृद्धिसहितं हितं प्रयतौ युवां वक्तुमर्हथः ८ ॥

रा० टी०—श्रुत्वेति । भरतः एतदुवाच ॥ ९ ॥

गो० टी०—अस्मिन्निति । हितम् । इह लोके सुखम् आयतियुक्तम् । उत्तरः काल आयतिः । उत्तरकाले च हितमित्यर्थः ॥ ८ ॥ ९ ॥

१० ] ति० टी०—सर्वा वसुंधरा प्रतिष्ठिता । सार्वभौमत्वादित्याशयः ॥ १० ॥

रा० टी०—तदाकारमाह—त्वयीत्यादिभिः । त्वयि परो धर्मो वर्तत इति शेषः सर्वा वसुन्धरा यशश्च त्वय्येव प्रतिष्ठिता ॥ १० ॥

गो० टी०—त्वयीति । सर्वा वसुंधरा प्रतिष्ठितेति । सार्वभौमत्वादिति भावः ॥ १० ॥ ११ ॥

११ ] ति० टी०—प्रजापतिममरा इव परमाप्तत्वेन निरीक्षन्त इत्यर्थः ॥ ११ ॥

रा० टी०—महीपाला इति । सर्वे महीपालाः अमराश्च प्रजापतिं त्वां वयमिव यथावन्निरीक्षन्ते ॥ ११ ॥

१२ ] ति० टी०—पुत्राः पितृवत् । पितरमिवेत्यर्थः ॥ १२ ॥

रा० टी०—पुत्रा इति । पुत्राः पितृवत् त्वां पश्यन्ति महीपालादय इति शेषः अतः पृथिव्याः सकलभूमेः प्राणिनां च त्वं गतिर्भूतोसि ॥ १२ ॥

गो० टी०—प्रजा इति । पितृवत्पितरमिव ॥ १२–१४ ॥

१३ ] ति० टी०—स त्वं सर्वप्रियः । एवंविधत्वं दर्शयति—पृथिव्यामिति ॥ १३ ॥

रा० टी०—स इति । राजवंशानां यत्र यस्मिन् राजसूये विनाशो दृश्यते तमेवंविधं यज्ञं स सकलप्रियस्त्वं कथमाहर्तासि ॥ १३ ॥

१४ ] ति० टी०—राजसूयस्य सर्वराजविजयपूर्वं साधनीयत्वात्तत्र चास्मास्तु प्रवृत्तेषु पृथिव्यां ये क्षत्रियाः पौरुषमागताः शौर्यं प्राप्तास्तेषां सर्वेषां तत्र राजसूयार्थविजये सर्वप्रकोपजः संक्षयोऽवश्यं भविता । एवंविधं क्षत्रियनाशकं यज्ञं सर्वराजभिः पितृवदुपास्यमानः कथमाहर्तुमर्हसि । सर्वथैवानुचितं तवेत्यर्थः ॥ १४ ॥

रा० टी०—विनाशहेतुं वदन्नाह—पृथिव्यामिति । ये पुरुषाः पौरुषं बलगर्वमागताः सर्वेषां तेषां तत्र राजसूयहेतुकराजविजयसमये सर्वकोपजः सर्वाभिमानिविषयकक्रोधजनितः संक्षयो भविता ॥ १४ ॥

१५–१६ ] ति० टी०—सर्वं तव वशे वर्तत इत्यन्वयः ॥ १५ ॥ १६ ॥

रा० टी०—सर्वमिति । तव वशे सर्वं जगद्वर्तते अतः पृथिवीं तद्वर्त्यभिमानिनोपि हन्तुं त्वं नार्हसि ॥ १५ ॥

रा० टी०—भरतस्येति । रामः अतुलं प्रहर्षं लेभे ॥ १६ ॥

गो० टी०—स त्वमिति । तव वशे वर्तते तव स्वाधीने वर्तते इत्यर्थः ॥ १५–१८ ॥

१७–१८ ] ति० टी०—वचने वचनरूपे निमित्ते । अनघेति संबुद्धिः ॥ १७ ॥ १८ ॥

१ कर्तुमिति गो. पाठः । २ प्रजा इति गो. पाठः । ३ स त्वमिति गो. पाठः । ४ तवेति गो. पाठः । ५ समाहितमिति गो. पाठः ।

एष्यदस्मदभिप्रायाद्राजसूयात्क्रतूत्तमात् । निवर्तयामि धर्मज्ञ तव सुव्याहृतेन च ॥ १९ ॥
लोकपीडाकरं कर्म न[१] कर्तव्यं विचक्षणैः । बालानां तु शुभं वाक्यं ग्राह्यं लक्ष्मणपूर्वज ॥
तस्माच्छृणोमि ते वाक्यं साधु युक्तं महाबले ॥ ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

## चतुरशीतितमः सर्गः ।

भरतोक्तमङ्गीकुर्वाणं रामं वाजिमेधयागे प्राशस्त्यं कथयन् तत्प्रसंगाद्वृत्रासुरकथां निशमयति सौमित्रिः ।

तथोक्तवति रामे तु भरते च महात्मनि । लक्ष्मणोऽथ शुभं वाक्यमुवाच रघुनन्दनम् ॥ १ ॥
अश्वमेधो महायज्ञः पावनः सर्वपाप्मनाम् । पावनस्तव दुर्धर्षो रोचतां रघुनन्दन ॥ २ ॥
श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि । ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥ ३ ॥
पुरा किल महाबाहो देवासुरसमागमे । वृत्रो नाम महानासीद्दैतेयो लोकसंमतः ॥ ४ ॥

रा० टी०–उवाचेति । कैकेय्यानन्दवर्द्धनं भरतमुवाच तदाकारमाह तव वचने परितुष्टोऽस्मि अत एव प्रीतोस्मि १७

रा० टी०–इदमिति । धर्मस्य समागमो यस्मिन् अत एव पृथिव्याः परिपालनं येन तदिदमक्लीबं वचनं त्वया व्याहृतम् ॥ १८ ॥

१९ ] ति० टी०–एष्यदस्मदभिप्रायादस्मदभिप्रायमेष्यतः । अस्मच्चिकीर्षां प्राप्स्यत इत्यर्थः । निवर्तयामि । अभिप्रायमिति शेषः । तत्र हेतुस्तव सुव्याहृतम् ॥ १९ ॥

रा० टी०–एष्यदिति । एष्यन् प्राप्नुवन् अस्मदभिप्रायो यस्मिन् तस्माद्राजसूयात् तव सुव्याहृतेन वचनेन निवर्तयामि स्वोहितमिति शेषः ॥ १९ ॥

गो० टी०–एष्यदिति । एष्यदस्मदभिप्रायात् । अस्मदभिप्रायमेष्यतः मामकचिकीर्षामाजिगमिषत इत्यर्थः॥१९॥२०॥ इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्र्यशीतितमः सर्गः ॥ ८३ ॥

२० ] ति० टी०–तुरप्यर्थे । बालानामपि यद्वाक्यं युक्तमुचितं साधु शुभावहं च तद्ग्राह्यमेव, हि यस्मात्तस्मात्ते वाक्यमीदृशं शृणोमि ॥ २० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

रा० टी०–तत्र हेतुमाह–लोकेति । विचक्षणैः पुरुषैः लोकपीडाकरं कर्म न कर्तव्यम् अहं पृथक् बालानामिति बालानामपि शुभं वाक्यं ग्राह्यं तस्माद्धेतोः युक्तं ते वाक्यं साधु शृणोमि ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्र्यशीतितमः सर्गः ॥ ८३ ॥

१ ] ति० टी०–अथ लक्ष्मणेनाश्वमेध एव सर्वार्थसाधकोऽनुष्ठेय इत्युक्त्वा तदुपोद्बलकं वृत्रवधाख्यानं प्रस्तूयते–तथेति ॥ १ ॥

रा० टी०–रामोक्तानन्तरकालिकवृत्तमाह–तथेत्यादिभिः । लक्ष्मणः रघुनन्दनमुवाच ॥ १ ॥

गो० टी०–तथोक्तवतीत्यादि ॥ १ ॥

२ ] ति० टी०–सर्वपाप्मनां पावनोऽस्ति । यतश्च स पावनः, अतो रोचताम् । अनुष्ठातुमिति शेषः ॥ २ ॥

रा० टी०–तदाकारमाह–अश्वेत्यादिभिः । सर्वपापानां पावनो निवर्त्तकोऽश्वमेधोस्तीति शेषः अतः दुर्धर्षः सर्वयज्ञाच्छ्रेष्ठ इत्यर्थः पावनोऽश्वमेधः तव रोचताम् ॥ २ ॥

गो० टी०–अश्वमेध इति । रोचतामित्यादि । अनुष्ठातुमिति शेषः । "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुतेः ॥ २ ॥

३ ] ति० टी०–अश्वमेधस्य सर्वपापशोधकत्वम् 'सर्वं पाप्मानं तरति तरति ब्रह्महत्याम्' इति श्रुतिसिद्धं बोधयितुं पुराणवृत्तान्तमाह–श्रूयते हीति । वासवे वासवविषये ॥ ३ ॥

रा० टी०–अश्वमेधप्रवृत्तौ शिष्टाचारं प्रमाणयन्नाह–श्रूयते इत्यादिभिः । वासवे इन्द्रे पुरावृत्तमश्वमेधप्रवृत्तिः श्रूयते तत्प्रयोजनं वदन्नाह शक्रः हयमेधेन पावितः ॥ ३ ॥

गो० टी०–एवमश्वमेधस्य ब्रह्महत्यान्तसर्वपापशोधकत्वे पुरावृत्तकथनं–श्रूयते हीत्यादि ॥ ३ ॥ ४ ॥

४ ] ति० टी०–देवासुरसमागमे देवासुरस्नेहकाले ॥ ४ ॥

रा० टी०–तदेव सकारणमाह–पुरेत्यादिभिः । देवासुरयोः समागमे स्नेहकाले योजनशतं विस्तीर्णं ततस्त्रिगुणमुच्छ्रितः वृत्रो नाम दैतेयो य आसीत् सः अनुरागेण स्वीयत्वगर्वेण हेतुना त्रीन् लोकान् स्नेहात्पश्यति श्लोकद्वयमेकान्वयि ॥ ४ ॥ ६ ॥

[१] मते इति गो. पाठः

विस्तीर्णो योजनशतमुच्छ्रितस्त्रिगुणं ततः । अनुरागेण लोकांस्त्रीन्स्नेहात्पश्यति सर्वतः ॥ ५ ॥
धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः । शशास पृथिवीं स्फीतां धर्मेण सुसमाहितः ॥ ६ ॥
तस्मिन्प्रशासति तदा सर्वकामदुघा मही । रसवन्ति प्रसूनानि मूलानि च फलानि च ॥ ७ ॥
अकृष्टपच्या पृथिवी सुसंपन्ना महात्मनः । स राज्यं तादृशं भुङ्क्ते स्फीतमद्भुतदर्शनम् ॥ ८ ॥
तस्य बुद्धिः समुत्पन्ना तपः कुर्यामनुत्तमम् । तपो हि परमं श्रेयः संमोहमितरत्सुखम् ॥ ९ ॥
स निक्षिप्य सुतं ज्येष्ठं पौरेषु मधुरेश्वरम् । तप उग्रं समातिष्ठत्तापयन्सर्वदेवताः ॥ १० ॥
तपस्तप्यति वृत्रे तु वासवः परमार्तवत् । विष्णुं समुपसंक्रम्य वाक्यमेतदुवाच ह ॥ ११ ॥
तपस्यता महाबाहो लोकाः सर्वे विनिर्जिताः । बलवान्स हि धर्मात्मा नैनं शक्ष्यामि शासितुम् ॥ १२ ॥
यद्यसौ तप आतिष्ठेद्भूय एव सुरेश्वर । यावल्लोका धरिष्यन्ति तावदस्य वशानुगाः ॥ १३ ॥
तं चैनं परमोदारमुपेक्षसि महाबल । क्षणं हि न भवेद्वृत्रः क्रुद्धे त्वयि सुरेश्वर ॥ १४ ॥
यदा हि प्रीतिसंयोगं त्वया विष्णो समागतः । तदा प्रभृति लोकानां नाथत्वमुपलब्धवान् ॥ १५ ॥

५-८ ] ति० टी०-ततस्त्रिगुणम् । योजनशतत्रयमित्यर्थः । त्रींल्लोकांस्तद्वर्तिप्राणिनोऽनुरागेण स्वीयत्वाभिमानेन हेतुना स्नेहात्संतोषयुक्तचक्षुषा पश्यति स्म ॥ ५-८ ॥

गो० टी०-विस्तीर्ण इति । ततस्त्रिगुणमिति । योजनशतत्रयमित्यर्थः । अनुरागेण मदीयत्वाभिमानेन हेतुना, स्नेहात् ॥ ५-८ ॥

रा० टी०-धर्मज्ञ इति । धर्मज्ञः धर्माणां वेत्ता अत एव कृतज्ञः सुसमाहितो वृत्रः धर्मेण पृथिवीं शशास ॥ ६ ॥

रा० टी०-तस्मिन्निति । तस्मिन्वृत्रे प्रशासति सति मही सर्वकामदुघा आसीत् अत एव प्रसूनानि मूलानि फलानि च रसवन्ति बभूवुरिति शेषः ॥ ७ ॥

रा० टी०-अकृष्टेति । महात्मनः पृथिवी अकृष्टे स्वयमेव पच्यते सा अत एव सुसम्पन्ना आसीदिति शेषः अत एव स वृत्रः अद्भुतदर्शनं तादृशं राज्यं भुङ्क्ते ॥ ८ ॥

९ ] ति० टी०-इतरत्सुखं विषयसुखम् । संमोहं संमोहकरम् ॥ ९ ॥

रा० टी०-तस्येति । तपः एव परमं श्रेयः इतरत्सुखं तु संमोहं सम्मोहकारकमतः अनुत्तमं तपोहं कुर्यामिति बुद्धिः तस्य वृत्रस्य समुत्पन्ना ॥ ९ ॥

गो० टी०-तस्येति । इतरत्सुखमिति । वैषयिकसुखमित्यर्थः ॥ ९ ॥

१० ] ति० टी०-मधुरेश्वरं मधुरश्चासौ तन्नामकत्वादीश्वरस्तम ॥ १० ॥

रा० टी०-तत्प्रकारमाह—स इति । मधुराणां मधुरवक्तॄणामीश्वरमतिमधुरवाचमित्यर्थः ज्येष्ठं सुतं पौरेषु निक्षिप्य उग्रं तपस्समातिष्ठत् ॥ १० ॥

गो० टी०-स इति । मधुरः सौम्यश्चासावीश्वरश्च मधुरेश्वरः तम । मधुराया नगर्या ईश्वरं वा ॥ १० ॥

११-१२ ] ति० टी०-परमार्तवत्परमार्तः सन् ॥ ११-१२ ॥

रा० टी०-तप इति । वासवः परमार्तवत् विष्णुं समुपसंक्रम्य प्राप्य एतदुवाच ॥ ११ ॥

रा० टी०-तदाकारमाह-तपस्यतेत्यादिभिः । तपस्यता वृत्रेण सर्वे लोकाः विनिर्जिताः तपोबलेन स्ववशीकृता अतः धर्मात्मा स वृत्रः बलवान् अतः एनं वृत्रं शासितुं न शक्ष्यामि ॥ १२ ॥

गो० टी०-तप इति । परमार्तवत् परमार्तः सन् ॥ ११ ॥ १२ ॥

१३ ] ति० टी०-भूयोऽतःपरमपि । धरिष्यन्ति । भूतजातमिति शेषः । तावदस्य वशानुगाः सर्वे वयं देवगणा भविष्याम इति शेषः ॥ १३ ॥

रा० टी०-यदीति । असौ वृत्रः यदि भूयस्तपः आतिष्ठेत् तदा लोकाः यावद्भूतजातं धरिष्यन्ति तावत् अस्य वृत्रस्य वशानुगा भविष्यन्तीति शेषः ॥ १३ ॥

गो० टी०-यदीति । भूय एव अतः परमपीत्यर्थः । भूतजातमपीति शेषः ॥ १३ ॥

१४ ] ति० टी०-क्षणं न भवेत् । न जीवेदित्यर्थः ॥ १४ ॥

रा० टी०-तमिति । हि यतः त्वयि क्रुद्धे सति वृत्रः क्षणमपि न भवेत् विनश्येदित्यर्थः अतः एनं वृत्रं त्वं समुपेक्षसि समुपेक्षा न युक्तेति तात्पर्यम् ॥ १४ ॥

गो० टी०-तं चेति । क्षणमपि न भवेत न जीवेदित्यर्थः ॥ १४

१५ ] ति० टी०-त्वत्संतोषेणैव तस्य सौख्यमित्याह—यदा हीति । तदारभ्यैवेदं तस्य माहात्म्यमिति शेषः ॥ १५ ॥

रा० टी०-यदेति । त्वया सह यदा यत्कालादारभ्य प्रीतिसंयोगं समागतः तत्कालादारभ्यैव एतस्य महत्त्वमिति शेषः अर्द्धं पृथक् । इमे इति । वृत्रस्य घातेन हेतुभूतेन दिवौकसः त्वां निरीक्षन्ते प्रतीक्षन्ते अतः तेषां दिवौकसां साह्यं साहाय्यं कुरुष्व ॥ १८ ॥

१ वृत्रेणेति गो. पाठः । २ असुरेश्वर इति गो. पाठः । ३ बलमिति गो. पाठः ।

स त्वं प्रसादं लोकानां कुरुष्व सुसमाहितः । त्वत्कृते नहि सर्वं स्यात्प्रशान्तमरुजं जगत् ॥ १६ ॥
इमे हि सर्वे विष्णो त्वां निरीक्षन्ते दिवौकसः । वृत्रघातेन महता तेषां साह्यं कुरुष्व ह ॥ १७ ॥
त्वया हि नित्यशः साह्यं कृतमेषां महात्मनाम् । असह्यमिदमन्येषामगतीनां गतिर्भवान् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

## पञ्चाशीतितमः सर्गः ।

ततो विष्णवंशपूर्णेन शक्रो वज्रेण वृत्रं जघान ब्रह्महत्यया च पीडितः इन्द्रोऽश्वमेधेन मां यजतां तेन पावयिष्यामि त्वमिति पद्मनाभः शरणागतानमरानादिदेश ।

लक्ष्मणस्य तु तद्वाक्यं श्रुत्वा शत्रुनिबर्हणः । वृत्रघातमशेषेण कथयेत्याह सुव्रत ॥ १ ॥
राघवेणैवमुक्तस्तु सुमित्रानन्दवर्धनः । भूय एव कथां दिव्यां कथयामास सुव्रतः ॥ २ ॥
सहस्राक्षवचः श्रुत्वा सर्वेषां च दिवौकसाम् । विष्णुर्देवानुवाचेदं सर्वानिन्द्रपुरोगमान् ॥ ३ ॥
पूर्वं सौहृदबद्धोऽस्मि वृत्रस्येह महात्मनः । तेन युष्मत्प्रियार्थं हि नाहं हन्मि महासुरम् ॥ ४ ॥
अवश्यं करणीयं च भवतां सुखमुत्तमम् । तस्मादुपायमाख्यास्ये सहस्राक्षो वधिष्यति ॥ ५ ॥
त्रेधाभूतं करिष्यामि आत्मानं सुरसत्तमाः । तेन वृत्रं सहस्राक्षो वधिष्यति न संशयः ॥ ६ ॥

---

गो० टी०–यद्दा हीति । उपलब्धवान् वृत्र इति शेषः ॥ १५ ॥

१६ ] ति० टी०–त्वत्कृतेन । रक्षणेनेति शेषः ॥ १६ ॥

गो० टी०–स त्वमिति । रक्षणेनेति शेषः ॥ १६ ॥

१७ ] ति० टी०–वृत्रघातेन हेतुना तेषां साह्यमुपकारं कुरु । हशब्दः पादपूरकः ॥ १७ ॥

गो० टी०–इमे हीति । वृत्रघातेन हेतुना साह्यम् उपकारं कुरु । हशब्दः पादपूरकः ॥ १७ ॥

१८ ] ति० टी०–यद्यपीदं सुरसाहाय्यकरणमन्येषामसुराणामसह्यं तथापि कुरु । यस्मादगतीनामस्माकं सुराणां भवानेव गतिः शरणम् ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

रा० टी०–ननु किमर्थं त्वत्साहाय्यकरणमित्यत आह—त्वयेति । एषां देवानां साह्यं साहाय्यं त्वया नित्यशः कृतं ननु भवन्तोप्यतिबलवन्तः अतो भवद्भिरेव कुतो न पराभाव्यते इत्यत आह इदं दैत्यरूपं वस्तु अन्येषामसह्यमतः अगतीनामस्माकं गतिर्भवानेव ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुरशीतितमः सर्गः ॥ ८४ ॥

गो० टी०–त्वया हीति । अन्येषामिदमसह्यम् । अन्येषामसुराणां यद्यपि त्वत्साह्यमसह्यमथापि तत्कुरु । हि यस्माद्भवानेवागतीनां गतिः तस्मात् ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामा०भूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुरशीतितमः सर्गः ॥ ८४ ॥

१ ] ति० टी०–अथ प्रकृतोपयुक्तशेषकथापूरणम्—लक्ष्मणस्येति ॥ १ ॥

रा० टी०–लक्ष्मणं प्रति राघवस्य पुनः प्रश्नमाह—लक्ष्मणस्येति । शत्रुनिबर्हणो रामः वृत्रघातमशेषेण कथयेत्याह ॥ १ ॥

गो० टी०–लक्ष्मणस्येत्यादि ॥ १–३ ॥

२–३ ] ति० टी०–दिव्यां कथां प्रकृताम् ॥ २ ॥ ३ ॥

रा० टी०–राघवेणेति । सुमित्रानन्दवर्द्धनः दिव्यां कथां भूयः कथयामास ॥ २ ॥

रा० टी०–तदाकारमाह–सहस्राक्षेत्यादिभिः । दिवौकसां मध्ये सहस्राक्षवचः श्रुत्वा विष्णुर्देवानुवाच ॥ ३ ॥

४–५ ] ति० टी०–पूर्वं युष्माभिस्तद्वधप्रार्थनात्पूर्वम् । सौहृदबद्धः प्रीतिबद्धः ॥ ४ ॥ ५ ॥

रा० टी०–तदाकारमाह—पूर्वमित्यादिभिः । पूर्वं वृत्रस्य सौहृदबद्धोस्मि तेन हेतुना महासुरं युष्मत्प्रियार्थं न हन्मि ॥ ४ ॥

रा० टी०–ननु तर्हि अस्माकं कल्याणं कथं भविष्यतीत्यत आह–अवश्यमिति । भवतां सुखमवश्यं करणीयम् मयेति शेषस्तस्माद्धेतोः उपायं वृत्रवधयत्नमाख्यास्ये अतः सहस्राक्षो वधिष्यति वृत्रमिति शेषः ॥ ५ ॥

गो० टी०–पूर्वमिति । सौहृदबद्धः भक्तिबद्धः । पूर्वमिति । युष्माभिस्तद्वधप्रार्थनात्पूर्वमित्यर्थः ॥ ४ ॥ ५ ॥

६ ] ति० टी०–त्रेधाभूतं त्रेधाविभक्तम् । आत्मानं स्वतेजोमूर्तिम् ॥ ६ ॥

रा०टी०–उपायाकारमाह–त्रेधेति । द्वाभ्याम् । आत्मा-

---

१ स्थिति गो. पाठः । २ तेन वृत्रो निहन्यते इति गो. पा. ।

एकांशो वासवं यातु द्वितीयो वज्रमेव तु। तृतीयो भूतलं यातु तदा वृत्रं हनिष्यति॥ ७॥
तथा ब्रुवति देवेशे देवा वाक्यमथाब्रुवन्। एवमेतन्न संदेहो यथा वदसि दैत्यहन्॥ ८॥
भद्रं तेऽस्तु गमिष्यामो वृत्रासुरवधैषिणः। भजस्व परमोदार वासवं स्वेन तेजसा॥ ९॥
ततः सर्वे महात्मानः सहस्राक्षपुरोगमाः। तदारण्यमुपाक्रामन्यत्र वृत्रो महासुरः॥ १०॥
ते पश्यंस्तेजसा भूतं तपन्तमसुरोत्तमम्। पिबन्तमिव लोकांस्त्रीन्निर्दहन्तमिवाम्बरम्॥ ११॥
दृष्ट्वैव चासुरश्रेष्ठं देवास्त्रासमुपागमन्। कथमेनं वधिष्यामः कथं न स्यात्पराजयः॥ १२॥
तेषां चिन्तयतां तत्र सहस्राक्षः पुरंदरः। वज्रं प्रगृह्य पाणिभ्यां प्राहिणोद्वृत्रमूर्धनि॥ १३॥
कालाग्निनेव घोरेण दीप्तेनेव महार्चिषा। पतता वृत्रशिरसा जगत्त्रासमुपागमत्॥ १४॥
असंभाव्यं वधं तस्य वृत्रस्य विबुधाधिपः। चिन्तयानो जगामाशु लोकस्यान्तं महायशाः॥ १५॥
तमिन्द्रं ब्रह्महत्याशु गच्छन्तमनुगच्छति। अपतच्चास्य गात्रेषु तमिन्द्रं दुःखमाविशत्॥ १६॥
हतारयः प्रनष्टेन्द्रा देवाः साग्निपुरोगमाः। विष्णुं त्रिभुवनेशानं मुहुर्मुहुरपूजयन्॥ १७॥

नं स्वतेजः त्रेधा भूतं करिष्यामि तेन हेतुना वृत्रं सहस्राक्षो वधिष्यति॥ ६॥

गो० टी०—त्रिधेति। त्रिधाभूतं त्रेधा विभक्तमित्यर्थः॥६॥

७-१० ] ति० टी०—तृतीयो भूतलं यातु। पतद्वृत्रदेहधारणार्थमित्यर्थः। इन्द्रस्य वृत्रहननजब्रह्महत्यानिवृत्तिं यावद्भूलोकरक्षणार्थं चेत्यपि बोध्यम्॥ ७-१०॥

रा० टी०—अंशविभागाकारमाह—एकेति। तदा वृत्रं हनिष्यति इन्द्र इति शेषः॥ ७॥

रा० टी०—तथेति। देवा वाक्यमब्रुवन् तदाकारमाह—यथा त्वं वदसि एतत्त्वद्वचनमेवमेव॥ ८॥

रा० टी०—भद्रमिति। वृत्रासुरवधैषिणो वयं गमिष्यामः ते भद्रमस्तु वासवं स्वेन तेजसा भजस्व च॥ ९॥

रा० टी०—तत इति। ततः प्रार्थनानन्तरं सर्वे देवाः यत्र वृत्रः तदरण्यमुपाक्रामन्॥ १०॥

गो० टी०—एकांश इति। तृतीयो भूतलं यात्विति। वृत्रदेहधारणशक्तिसिद्ध्यर्थम्। इन्द्रस्य वृत्रहननजब्रह्महत्याबाधानिवृत्तिर्यावद्वरारक्षणार्थं चेत्यर्थः॥ ७-१०॥

११-१३ ] ति० टी०—तेजसा प्रागुक्तलक्षणेन स्वेन तेजसा भूतं व्याप्तं पिबन्तमित्यादि तपआधिक्यपरम्॥११-१३॥

रा० टी०—ते इति। तपन्तमत एव तेजसा भूतं व्याप्तं त्रीन् लोकान् पिबन्तमिव अम्बरं निर्दहन्तमिव असुरोत्तमं ते देवाः अपश्यन्॥ ११॥

रा० टी०—दृष्ट्वेति। देवाः असुरश्रेष्ठं दृष्ट्वैव त्रासमुपागमन् अयं पृथक् कथमिति एनं कथं वधिष्यामः पराजयोऽस्माकं पराभूतिः कथं न स्यात् इति तेषां चिन्तयतां सतां पुरन्दरः वज्रं वृत्रमूर्द्धनि प्राहिणोत् सार्धश्लोक एकान्वयी॥ १२॥ १३॥

गो० टी०—त इति। भूतं व्याप्तम्। पिबन्तमित्यादिकं तेजोदुर्धर्षत्वपरम्॥ ११-१३॥

१४ ] ति० टी०—दीप्तेन दीप्यमानेन महार्चिषा महार्चिष्मदयःपिण्डादिसदृशेन वज्रेण वज्रकृतच्छेदेन हेतुना पतता वृत्रशिरसा जगत्त्रासमुपागमत्॥ १४॥

रा० टी०—कालेति। घोरेण कालाग्निनेव पतता वृत्रशिरसा जगत् त्रासं भीतिमुपागमत्॥ १४॥

गो० टी०—कालाग्निनेति। तप्तेन दीप्यमानेन। "तप, संतापदीप्त्योः" इति धातुः। दीप्तेनेति च पाठः। वज्रेण छेदनहेतुना पतता वृत्रशिरसा जगत्त्रासमुपागमत्॥ १४॥

१५ ] ति० टी०—असंभाव्यमनपराधिनस्तप्यतस्तूष्णीं स्थितस्य वधमनुचितं चिन्तयानो विबुधाधिपो लोकस्यान्तं लोकालोकात्परं तमःप्रदेशं जगाम ब्रह्महत्याभिया पलायितोऽभूत्॥ १५॥

रा० टी०—असंभाव्यमिति। असंभाव्यमनपराधित्वेन ब्राह्मणत्वेन च संभावनारहितं वृत्रस्य वधम् चिन्तयानो विबुधाधिपः लोकस्यान्तं जगाम॥ १५॥

गो० टी०—असंभाव्यमिति। असंभाव्यमनपराधिनस्तप्यतो वृत्रस्य वधमसंभाव्यमनुचितं कृतमिति चिन्तयानो विबुधाधिपः लोकस्यान्तमन्तदेशं लोकालोकात्परं तमःप्रदेशं जगाम। ब्रह्महत्याभिया पलायितोऽभूत्॥ १५॥

१६-१७ ] ति० टी०—तमिन्द्रमनुगमनं तदभिमानिदेवतारूपेण। इन्द्रहतपुत्रेण त्वष्ट्रा मुनिना पुत्रेच्छया 'स्वाहेन्द्रशत्रुर्वर्धस्व' इति होमे कृते आहवनीयाज्जातो वृत्रो ब्राह्मण इति। तमिन्द्रं ब्रह्महत्याग्रस्तमिन्द्रम्॥ १६॥ १७॥

रा० टी०—तमिति। गच्छन्तमिन्द्रं ब्रह्महत्या आश्वनुगच्छति अत एव अस्य इन्द्रस्य गात्रेषु अपतत् अत एव इन्द्रं दुःखमाविशत् प्राप्नोत्॥ १६॥

रा० टी०—हतेति। हतारयो देवा विष्णुं मुहुर्मुहुरपूजयन् सत्कृतमकुर्वन्॥ १७॥

१ शक्रस्तदा वृत्रं वधिष्यतीति गो. पाठः। २ तदरण्यमिति गो. रा. पाठः। ३ तपन्तमिति गो. पाठः ४ तप्तेनेति गो. पाठः।

त्वं गतिः परमेशान पूर्वजो जगतः पिता । रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ॥ १८ ॥
हतश्चायं त्वया वृत्रो ब्रह्महत्या च वासवम् । बाधते सुरशार्दूल मोक्षं तस्य विनिर्दिश ॥ १९ ॥
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् । मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ॥ २० ॥
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः । पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ॥ २१ ॥
एवं संदिश्य तां वाणीं देवानां चामृतोपमाम् । जगाम विष्णुर्देवेशः स्तूयमानस्त्रिविष्टपम् ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

## षडशीतितमः सर्गः ।

भगवदुक्तप्रकारेण शचीपतीरितविबुधैरश्वमेधसंभारेषु सम्पादितेषु भक्तिप्रह्वामरेन्द्रोऽश्वमेधेनेजे तेन तस्मान्निर्गताया ब्रह्महत्यायाश्चतुर्षु स्थानेषु त्रिदशकृतो विनियोगोऽत एवानेन यजेति सौमित्र्युक्तं विचार्य रामः प्रहर्षमतुलं लेभे ।

तदा वृत्रवधं सर्वमखिलेन स लक्ष्मणः । कथयित्वा नरश्रेष्ठः कथाशेषं प्रचक्रमे ॥ १ ॥
ततो हते महावीर्ये वृत्रे देवभयंकरे । ब्रह्महत्यावृतः शक्रः संज्ञां लेभे न वृत्रहा ॥ २ ॥
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः । कालं तत्रावसत्कंचिद्वेष्टमान इवोरगः ॥ ३ ॥
अथ नष्टे सहस्राक्षे उद्विग्नमभवज्जगत् । भूमिश्च ध्वस्तसंकाशा निःस्नेहा शुष्ककानना ॥ ४ ॥

---

गो० टी०—तमिति । तं पलायमानमिन्द्रम् । ब्रह्महत्या त्वष्ट्रा मुनिना वृत्रस्योत्पादितत्वात् । अस्य गात्रेष्वपतच्च । ब्रह्महत्येति शेषः । तमिन्द्रं ब्रह्महत्याग्रस्तमिन्द्रमित्यर्थः ॥ १६—२२ ॥

इति श्रीगोविन्द० श्रीरामा० मणिमुकुटाख्याने उत्तरश्रीरामायण० पञ्चाशीतितमः सर्गः ॥ ८५ ॥

१८ ] ति० टी०—पूर्वजो जगतः पिता । 'अहमस्मि प्रथमजा ऋतस्य' इति श्रुतेः । एवं कारणमूर्तिर्हिरण्यगर्भ एव सर्वभूतरक्षोद्देशेन विष्ण्वाकारत्वं पालनशक्तिप्राधान्येन प्राप्तः॥१८॥

रा० टी०—तदाकारमाह—त्वमिति । त्वं पूर्वजः अत एव जगतः पिता गतिश्च अत एव सर्वभूतानां रक्षार्थं विष्णुत्वमुपजग्मिवान् ॥ १८ ॥

१९ ] ति० टी०—यदर्थं विष्णुमूर्त्यवलम्बनं तत्कार्यं ते कृतं दुष्टवधेनैव शिष्टपालनादित्याह—हतश्चेति ॥ १९ ॥

रा० टी०—यतस्त्वया वृत्रो हतः इन्द्रेण घातितः अतः वासवं ब्रह्महत्या बाधते अतः तस्य बाधस्य मोक्षं विनिर्दिश ॥ १९ ॥

२०—२२ ] ति० टी०—मामौपासनाग्निहोत्राद्यश्वमेधान्ताशेषयज्ञयजनीयं विशिष्याश्वमेधस्य साक्षाद्दैवतं मामेव शक्रो यजताम् । 'इन्द्राय स्वाहा' इत्यादिमन्त्रैश्च तत्तद्देवतान्तर्याम्यहमेव तत्तत्पदैर्बोध्य इति भावः ॥ २०—२२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

रा० टी०—तेषामिति । विष्णुरब्रवीत् तदाकारमाह शक्रः मामेव यजतामतः वज्रिणं पावयिष्यामि ॥ २० ॥

रा० टी०—पावनप्रकारमाह—पुण्येनेति । पाकशासनः हयमेधेन मामिष्ट्वा देवानामिन्द्रत्वं पुनरेष्यति ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चाशीतितमः सर्गः ॥ ८५ ॥

१ ] ति० टी०—अथाश्वमेधतो ब्रह्महत्यानिवृत्तिकथनेनाश्वमेधवैभवकथनेन च तद्यज्ञप्रोत्साहनम्—तदेति । कथाशेषं प्रचक्रमे । वक्तुमिति शेषः ॥ १ ॥

रा० टी०—लक्ष्मणकर्तृकाग्रिमवृत्तान्तं वर्णयितुमुपक्रमते—तदेति । लक्ष्मणः वृत्रवधमखिलेन सर्वात्मना कथयित्वा कथाशेषमुपचक्रमे वक्तुमिति शेषः ॥ १ ॥

गो० टी०—तदा वृत्रेत्यादि । कथाशेषं वक्तुमिति शेषः ॥ १ ॥

२ ] ति० टी०—न संज्ञां लेभे । ग्रहग्रस्तवत्परवशोऽभूदित्यर्थः ॥ २ ॥

रा० टी०—तत इति । वृत्रे हते सति ब्रह्महत्यावृतः वृत्रहा संज्ञां स्वस्थचित्ततां न लेभे ॥ २ ॥

गो० टी०—तत इति । न संज्ञां लेभ इति । ग्रहग्रस्तवदप्रकाशोऽभूदित्यर्थः ॥ २ ॥

३ ] ति० टी०—कंचित्कालमवसदित्यन्वयः ॥ ३ ॥

रा० टी०—स इति । लोकानामन्तमाश्रित्य नष्टसंज्ञः स शक्रः वेष्टमान उरग इव कञ्चित्कालम् तत्रावसत् ॥ ॥ ३ ॥

गो० टी०—स इति । कंचित्कालमित्यन्वयः ॥ ३ ॥

४ ] ति० टी०—नष्टेऽदर्शनं प्राप्ते । उद्विग्नम् । अराजकत्वात् । निःस्नेहा इन्द्राभावमूलावृष्ट्यानार्द्रा ॥ ४ ॥

---

१ तरया इति गो. पाठः । २ भयमिति गो. पाठः । ३ इदं पद्यं रा. पुस्तके नास्ति । ४ देवानामभुतोपमामिति गो. पाठः ।

निःस्रोतसस्ते सर्वे तु ह्रदाश्च सरितस्तथा । संक्षोभश्चैव सत्त्वानामनावृष्टिकृतोऽभवत् ॥ ५ ॥
क्षीयमाणे तु लोकेऽस्मिन्संभ्रान्तमनसः सुराः । यदुक्तं विष्णुना पूर्वं तं यज्ञं समुपानयन् ॥ ६ ॥
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः । तं देशं समुपाजग्मुर्यत्रेन्द्रो भयमोहितः ॥ ७ ॥
ते तु दृष्ट्वा सहस्राक्षमावृतं ब्रह्महत्यया । तं पुरस्कृत्य देवेशमश्वमेधं प्रचक्रिरे ॥ ८ ॥
ततोऽश्वमेधः सुमहान्महेन्द्रस्य महात्मनः । ववृते ब्रह्महत्यायाः पावनार्थं नरेश्वर ॥ ९ ॥
ततो यज्ञे समाप्ते तु ब्रह्महत्या महात्मनः । अभिगम्याब्रवीद्वाक्यं क्व मे स्थानं विधास्यथ ॥ १० ॥
ते तामूचुस्ततो देवास्तुष्टाः प्रीतिसमन्विताः । चतुर्धा विभजात्मानमात्मनैव दुरासदे ॥ ११ ॥
देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम् । संदधौ स्थानमन्यत्र वरयामास दुर्वसा ॥ १२ ॥
एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै । चतुरो वार्षिकान्मासान्दर्पघ्नी कामचारिणी ॥ १३ ॥
भूम्यामहं सर्वकालमेकेनांशेन सर्वदा । वसिष्यामि न संदेहः सत्येनैतद्ब्रवीमि वः ॥ १४ ॥

---

रा० टी०–अथेति । सहस्राक्षे नष्टे अदृष्टे सति जगदुद्विग्नमभवत् अत एव निःस्नेहा अत एव शुष्ककानना अत एव ध्वस्तसंकाशा भूमिरभवत् ॥ ४ ॥

गो० टी०–अथेति । नष्टे अदृष्टे । उद्विग्नमिति । अराजकत्वादिति शेषः । निस्स्नेहा अनार्द्रा ॥ ४ ॥

५ ] ति० टी०–तदेवाह–निःस्रोतस इति ॥ ५ ॥

रा० टी०–निःस्रोतस इति । अनावृष्टिकृतः वृष्टिकरणाभावात् ह्रदाः सरितश्च निःस्रोतसोऽभवन् अत एव सत्वानां प्राणिनां संक्षोभोऽभवत् अभवदित्यस्य वचनविपरिणामेन पूर्वत्राप्यन्वयः ॥ ५ ॥

गो० टी०–निस्स्रोतस इति । अनावृष्टिकृत इति । इन्द्राभावमूलानावृष्टिकृत इत्यर्थः ॥ ५ ॥

६–७ ] ति० टी०–समुपानयन्नावेदयन् । स्मृतवन्त इति यावत् ॥ ६ ॥ ७ ॥

रा० टी०–क्षीयमाण इति । सुराः यत् विष्णुना पूर्वमुक्तं तं यज्ञं समुपानयन् अकुर्वन् सामान्ये नपुंसकम् ॥ ६ ॥

रा० टी०–तत्प्रकारमाह–तत इति । यत्रेन्द्रः तत्र सुरगणाः समुपाजग्मुः ॥ ७ ॥

गो० टी०–क्षीयमाण इति । समुपानयन् संपादयन्ति स्म ॥ ६ ॥ ७ ॥

८–१० ] ति० टी०–तं देवेशं विष्णुमिन्द्रं वा ॥ ८–१० ॥

रा० टी०–ते इति । ते देवाः शक्रं ब्रह्महत्यासमावृतं दृष्ट्वा अत एव पुरस्कृत्य अश्वमेधं प्रचक्रिरे ॥ ८ ॥

रा० टी०–तत इति । ब्रह्महत्यायाः पावनार्थम् महेन्द्रस्याश्वमेधो ववृते ॥ ९ ॥

रा० टी०–तत इति । यज्ञे समाप्ते सति महात्मनो देवान् अभिगम्य मे स्थानं क्व विधास्यथ इति ब्रह्महत्याब्रवीत् ॥ १० ॥

गो० टी०–त इति । तं देवेशमिति । विष्णुमित्यर्थः ॥ ८–१० ॥

११ ] ति० टी०–हे दुरासदे ! ब्रह्महत्ये, आत्मानं चतुर्धा विभजेति तामूचुरित्यन्वयः ॥ ११ ॥

रा० टी०–ते इति । हे दुरासदे ! त्वमात्मानं चतुर्धा विभज इति वचनं ते देवाः तां ब्रह्महत्यामूचुः ॥ ११ ॥

गो० टी०–त इति । हे दुरासदे ! ब्रह्महत्ये इति शेषः ॥ ११ ॥

१२ ] ति० टी०–संदधौ चतुर्धा विभागं संपादितवती । तथा कृत्वा देवेन्द्रादन्यत्र स्थानं वरयामास । दुर्वसा दुःखजनकवासवती ॥ १२ ॥

रा० टी०–देवानामिति । दुर्वसा दुष्टवसयुक्तब्रह्महत्या अन्यत्र इन्द्रातिरिक्तस्थले स्थानं सन्दधौ स्थाननिश्चयं चकार अत एव वरयामास ॥ १२ ॥

गो० टी०–देवानामिति । सन्निधौ देवानां सन्निधौ संदधाविति पाठे चतुर्धा विभागं संपादितवतीत्यर्थः । अन्यत्र महेन्द्रादन्यत्र । दुर्वसा महेन्द्रे दुर्वसा ॥ १२ ॥

१३ ] ति० टी०–तानि स्थानान्याह—एकेनेति । चतुरो वार्षिकान्मासान्पूर्णोदासु पूर्णोदकासु । तेनान्यदाल्पोदकासु न क्षुद्रनदीषु वासः । सोऽपि प्रत्यासत्त्या पूर्णोदकत्वकाले एव स च कालः ‘ सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ’ इत्युक्तः । दर्पघ्नी । पापिनामिति शेषः । तत्रैव वासे हेतुः—कामचारिणीति । तेन गङ्गादिषु न वास इत्युक्तम् ॥ १३ ॥

रा० टी०–तद्द्वराकारमाह–एकेनेत्यादिभिः । एकेन अंशेन नदीषु चतुरो वार्षिकान्मासान् दर्पघ्न्यहं वत्स्यामि १३

गो० टी०–एकेनेति । चतुर इति । “सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः” इति स्मरणात् । “पक्षा वै मासाः” इति पक्षानुसारेण चतुष्ट्वात् । दर्पघ्नी । अपुण्यकृतामिति शेषः । कामवारिणी । स्नातुमिच्छतामिति शेषः । कामचारिणीति च पाठः ॥ १३ ॥ १४ ॥

१४ ] ति० टी०–भूम्यामूषररूपेण वासः ॥ १४ ॥

---

* १ उपाक्रमन्निति गो. पाठः । २ तदेति गो. पाठः । ३ संनिधाविति गो. पाठः । ४ वारिणीति गो. पा० । ५ दुर्वसेति गो. पाठः ।

योऽयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु । त्रिरात्रं दर्पपूर्णासु वसिष्ये दर्पघातिनी ॥ १५ ॥
हन्तारो ब्राह्मणान्ये तु मृषापूर्वमदूषकान् । तांश्चतुर्थेन भागेन संश्रयिष्ये सुरर्षभाः ॥ १६ ॥
प्रत्यूचुस्तां ततो देवा यथा वदसि दुर्वसे । तथा भवतु तत्सर्वं साधयस्व यदीप्सितम् ॥ १७ ॥
ततः प्रीत्यान्विता देवाः सहस्राक्षं ववन्दिरे । विज्वरः पूतपाप्मा च वासवः समपद्यत ॥ १८ ॥
प्रशान्तं च जगत्सर्वं सहस्राक्षे प्रतिष्ठिते । यज्ञं चाद्भुतसंकाशं तदा शक्रोऽभ्यपूजयत् ॥ १९ ॥
ईदृशो ह्यश्वमेधस्य प्रसादो रघुनन्दन । यजस्व सुमहाभाग हयमेधेन पार्थिव ॥ २० ॥
इति लक्ष्मणवाक्यमुत्तमं नृपतिरतीव मनोहरं महात्मा ।
परितोषमवाप हृष्टचेताः स निशम्येन्द्रसमानविक्रमौजाः । ॥ २१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

## सप्ताशीतितमः सर्गः ।

लक्ष्मणोक्त्यनन्तरं रामो बाल्हीश्वरस्येलस्य कथामकथयत् मृगयां कुर्वन्निलः सहानुगो महासेनप्रसवस्थानमगमयत्रोमायाः प्रीतिकृते रुद्रः स्त्रीरूपं दधौ तत्रत्याः पुरुषसत्वा अपि निखिलाः स्त्रीरूपाश्च अर्थात्कार्दमेयोऽपि सबलं स्त्रीभूतमात्मानं जानन्स्थाणुं संसेव्याप्यलब्धार्थः पार्वतीप्रसादेनैकैकं मासं पुंस्त्वं द्वितीयं च स्त्रीत्वमलब्धेति ।

तच्छ्रुत्वा लक्ष्मणेनोक्तं वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजाः प्रहसन्राघवो वचः ॥ १ ॥

रा० टी०–भूम्यामिति । एकेनांशेन सर्वकालं भूम्यां वसिष्यामि वत्स्यामि ॥ १४ ॥

१५ ] ति० टी०–दर्पघातिनी पुरुषसंभोगकरणसुखविघातिनी ॥ १५ ॥

रा० टी०–य इति । तृतीयोंऽशस्तेन यौवनशालिषु यौवनशालिनीषु अत एव दर्पपूर्णासु दर्पघातिन्यहं त्रिरात्रं वसिष्ये वत्स्यामि ॥ १५ ॥

गो० टी०–योयमिति । दर्पघातिनी । पुरुषसंभोगसुखहारिणीति भावः ॥ १५–२१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने षडशीतितमः सर्गः ॥ ८६ ॥

१६–१८ ] ति० टी०–अदूषकान्ब्रह्मब्रह्मविद्याब्राह्मणब्रह्मलोकानां मार्गान्तरावलम्बेन दूषणकरणरहितान् । उक्तपदार्थेषु दृढविश्वासान् । मृषापूर्वं मृषावादपूर्वं ये राजस्थानादौ घातं कुर्वन्ति, धिक्कारादि कुर्वन्ति, लोहितादिस्रावं कुर्वन्ति, कैमुतिकन्यायेनैव ये प्राणवियोगं कुर्वन्ति तांश्चतुर्थेन भागेन संश्रयिष्ये । 'यो लोहितं करवावतः प्रस्कन्नं पांसून्संगृह्णात् । तावत्संवत्सरं पितृलोकं न प्रजानात् । तस्माद्ब्राह्मणाय नापगुरेत निहन्यान्न लोहितं कुर्यात्' इति श्रुतेः ॥ १६–१८ ॥

रा० टी०–हन्तार इति । मृषापूर्वं मिथ्यावादमाश्रित्येत्यर्थः अदूषकान् वेदमहात्म्याद्युद्देशकदूषणरहितान् ब्राह्मणान् ये हन्तारस्ताडयितारस्तान् चतुर्थेन भागेन संश्रयिष्ये ॥ १६ ॥

रा० टी०–प्रत्यूचुरिति । यथा त्वं वदसि तथा भवतु अतः यत्तवेप्सितं तत्सर्वं साधयस्व इति वचनं देवाः तां ब्रह्महत्यां प्रत्यूचुः ॥ १७ ॥

रा० टी०–तत इति । ततः ब्रह्महत्यापगमनानन्तरं देवाः सहस्राक्षं ववन्दिरे पूतपाप्मा वासवस्तु विज्वरं सन्तापरहितः समपद्यत अभवत् ॥ १८ ॥

१९–२१ ] ति० टी०–यज्ञं विष्णुम् ॥ १९–२१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

रा० टी०–प्रशान्तमिति । शक्रः यज्ञं विष्णुमपूजयत् ॥ १९ ॥

रा० टी०–ईदृश इति । हे रघुनन्दन ! यस्याश्वमेधस्य ईदृशः प्रसादः तेन हयमेधेन त्वं यजस्व ॥ २० ॥

रा० टी०–इतीति । नृपतिः राम इति लक्ष्मणवाक्यं निशम्य परितोषमवाप ॥ २१ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षडशीतितमः सर्गः ॥ ८६ ॥

१ ] ति० टी०–अथ रामोऽपीलोपाख्यानेनाश्वमेधस्य राज्ञामशेषानर्थनिवृत्तिपूर्वकपरमेष्टसाधनत्वं दर्शयति–तदिति । अश्वमेधमाहात्म्यमजानानं प्रतीव लक्ष्मणस्तद्वैभवमुक्तवानिति भावेन हासः ॥ १ ॥

रा० टी०–लक्ष्मणवचनश्रवणानन्तरकालिकं वृत्तमाह–तदित्यादिभिः । राघवः प्रत्युवाच ॥ १ ॥

गो० टी०–तच्छ्रुत्वेत्यादि । अश्वमेधवैभवं स्वयमपि जानामीति प्रहासः ॥ १ ॥ २ ॥

१ स च पूतात्मेति गो. पाठः । २ प्रभाव इति गो. पाठः । ३ निशमय्येति गो. पाठः ।

एवमेव नरश्रेष्ठ यथा वदसि लक्ष्मण । वृत्रघातमशेषेण वाजिमेधफलं च यत् ॥ २ ॥
श्रूयते हि पुरा सौम्य कर्दमस्य प्रजापतेः । पुत्रो बाह्लीश्वरः श्रीमानिलो नाम सुधार्मिकः ॥ ३ ॥
स राजा पृथिवीं सर्वां वशे कृत्वा महायशाः । राज्यं चैव नरव्याघ्र पुत्रवत्पर्यपालयत् ॥ ४ ॥
सुरैश्च परमोदारैर्दैतेयैश्च महाधनैः । नागराक्षसगन्धर्वैर्यक्षैश्च सुमहात्मभिः ॥ ५ ॥
पूज्यते नित्यशः सौम्य भयार्तै रघुनन्दन । अबिभ्यंश्च त्रयो लोकाः सरोषस्य महात्मनः ॥ ६ ॥
स राजा तादृशोऽप्यासीद्धर्मे वीर्ये च निष्ठितः । बुद्ध्या च परमोदारो बाह्लीकेशो महायशाः ॥ ७ ॥
स प्रचक्रे महाबाहुर्मृगयां रुचिरे वने । चैत्रे मनोरमे मासे सभृत्यबलवाहनः ॥ ८ ॥
प्रजघ्ने स नृपोऽरण्ये मृगाञ्छतसहस्रशः । हत्वैव तृप्तिर्नाभूच्च राज्ञस्तस्य महात्मनः ॥ ९ ॥
नानामृगाणामयुतं वध्यमानं महात्मना । यत्र जातो महासेनस्तं देशमुपचक्रमे ॥ १० ॥
तस्मिन्प्रदेशे देवेश शैलराजसुतां हरः । रमयामास दुर्धर्षः सर्वैरनुचरैः सह ॥ ११ ॥
कृत्वा स्त्रीरूपमात्मानमुमेशो गोपतिध्वजः । देव्याः प्रियचिकीर्षुः संस्तस्मिन्पर्वतनिर्झरे ॥ १२ ॥
यत्र यत्र वनोद्देशे सत्त्वाः पुरुषवादिनः । वृक्षाः पुरुषनामानस्ते सर्वे स्त्रीजनाभवन् ॥ १३ ॥
यच्च किंचन तत्सर्वं नारीसंज्ञं बभूव ह । एतस्मिन्नन्तरे राजा स इलः कर्दमात्मजः ॥ १४ ॥
निघ्नन्मृगसहस्राणि तं देशमुपचक्रमे । स दृष्ट्वा स्त्रीकृतं सर्वं सव्यालमृगपक्षिणम् ॥ १५ ॥

२ ] ति० टी०—वृत्रघातं वाजिमेधफलं च यद्यथा वदसि तदेवमेवेत्यन्वयः ॥ २ ॥

रा० टी०—तदाकारमाह—एवमित्यादिभिः । यत् यं वृत्रघातम् अश्वमेधफलं च यथा वदसि तदेवमेव ॥ २ ॥

३–५ ] ति० टी०—अथ स्वस्य परिपूर्णाश्वमेधज्ञातृत्वज्ञापनायाह—श्रूयते इति । बाह्लिर्देशविशेषः ॥ ३–५ ॥

रा० टी०—रामोपि अश्वमेधस्य निखिलानर्थनिवृत्तिकरत्वं द्योतयन् वृत्तमुपक्रमते—श्रूयते इत्यादिभिः । बाल्हीश्वरः बाल्हिदेशस्य राजा इलो नाम कर्दमस्य पुत्रः पुरा श्रूयते ॥३॥

रा० टी०—स इति । राजा स इलः राज्यं राजधर्मं स्वीकृत्येति शेषः सर्वां पृथिवीं वशे कृत्वा च सुरादिभिः नित्यशः पूज्यते अत एव सरोषस्य महात्मन इलस्य त्रयो लोकाः अबिभ्यन् अबिभयुः श्लोकत्रयमेकान्वयि ॥ ४–६ ॥

गो० टी०—अथ वृषध्वजप्रियं विष्ण्वाराधनरूपं हयमेधं श्लाघयितुं राम उपक्रमते—श्रूयत इत्यादि । बाह्लिर्देशविशेषः ॥ ३–५ ॥

६–८] ति० टी०—भयार्तत्वं कुतस्तत्राह—अबिभ्यन्निति । अबिभयुरित्यर्थः । तत्र हेतुः—सरोषस्येति ॥ ६–८ ॥

गो० टी०—पूज्यत इति । भयार्तैरिति विशेषणं दैतेयादीनाम । भयहेतुश्च । तदोष इत्याह—अबिभ्यन्निति । बिभ्युरित्यर्थः ॥ ६–९ ॥

रा० टी०—स इति । बाल्हीकेशः स इलः धर्मे वीर्ये च निष्ठित आसीत ॥ ७ ॥

रा० टी०—स इति । स राजा चैत्रे मासि रुचिरे वने मृगयां प्रचक्रे ॥ ८ ॥

९ ] ति० टी०—हत्वैव । हत्वापीत्यर्थः ॥ ९ ॥

रा० टी०—प्रजघ्न इति । नृपः शतसहस्रशः मृगान् प्रजघ्ने हत्वापि राज्ञस्तृप्तिर्नाभूत् ॥ ९ ॥

१०–११ ] ति० टी०—अयुतमयुतसंख्याकम् । वध्यमानमभूदिति शेषः । अथ यत्र महासेनः स्कन्दो जातस्तं देशमुपचक्रमे जगाम ॥ १० ॥ ११ ॥

१२ ] ति० टी०—गोपतिध्वजो वृषभध्वज आत्मानं स्त्रीरूपं कृत्वा । तत्र पर्वते तिष्ठतीति शेषः । किमर्थमेवं तत्राह—देव्याः प्रियं चिकीर्षुरिति ॥ १२ ॥

रा० टी०—नानेति । महात्मना राज्ञा नानामृगाणामयुतं वध्यमानमभवदिति शेषः अत एव महासेनः स्कन्दः यत्र जातः तं देशमुपचक्रमे राजेति शेषः ॥ १० ॥

रा० टी०—तस्मिन्निति । अनुचरैस्सह तस्मिन् देशे विद्यमानो हरः देव्याः प्रियं चिकीर्षुस्सन् आत्मानं स्त्रीरूपं कृत्वा पर्वतनिर्झरे शैलराजसुतां रमयामास श्लोकद्वयमेकान्वयि ॥ ११ ॥ १२ ॥

गो० टी०—नानेति । अयुतम् अयुतसंख्याकम् । वध्यमानमभूदिति शेषः । यत्र जात इत्यादि । महासेनः स्कन्दः ॥ १०–१२ ॥

१३–१५ ] ति० टी०—पुरुषवादिनः पुरुष इति वादो व्यपदेशो येषां ते । पुंलिङ्गवत्त्वेन शब्दवाच्या ये पदार्थाः सन्ति, यच्चान्यत्किंचन नपुंसकवाच्यम्, तत्सर्वं नारीसंज्ञं स्त्रीलिङ्गशब्दवाच्यत्वार्हं स्त्रीवेषं बभूव ॥ १३–१५ ॥

रा० टी०—यत्रेति । वनोद्देशे यत्र यत्र पुरुषवादिनः पुंबोधकनामविशिष्टा इत्यर्थः सत्वाः मृगादयः पुरुषनामानः

१ महायशा इति गो.पा. । २ सुधार्मिक इति गो.पा. । ३ ह्यासीदिति गो.पा. । ४ ये त्विति गो.पा. । ५ तदेति गो.पा. । ६ पाक्षिकमिति गो.पा. ।

आत्मानं स्त्रीकृतं चैव सानुगं रघुनन्दन । तस्य दुःखं महच्चासीद्दृष्ट्वात्मानं तथागतम् ॥ १६ ॥
उमापतेश्च तत्कर्म ज्ञात्वा त्रासमुपागमत् । ततो देवं महात्मानं शितिकण्ठं कपर्दिनम् ॥ १७ ॥
जगाम शरणं राजा सभृत्यबलवाहनः । ततः प्रहस्य वरदः सह देव्या महेश्वरः ॥ १८ ॥
प्रजापतिसुतं वाक्यमुवाच वरदः स्वयम् । उत्तिष्ठोत्तिष्ठ राजर्षे कार्दमेय महाबल ॥ १९ ॥
पुरुषत्वमृते सौम्य वरं वरय सुव्रत । ततः स राजा शोकार्तः प्रत्याख्यातो महात्मना ॥ २० ॥
स्त्रीभूतोऽसौ न जग्राह वरमन्यं सुरोत्तमात् । ततः शोकेन महता शैलराजसुतां नृपः ॥ २१ ॥
प्रणिपत्य उमां[1] देवीं सर्वेणैवान्तरात्मना । ईशे वराणां वरदे लोकानामसि भामिनी ॥ २२ ॥
अमोघदर्शने देवी[2] भज सौम्येन चक्षुषा । हृद्गतं तस्य राजर्षेर्विज्ञाय हरसंनिधौ ॥ २३ ॥
प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य संमता । अर्धस्य देवो वरदो वरार्धस्य तव ह्यहम् ॥ २४ ॥

वृक्षाश्च ते सर्वे स्त्रीजना भवन् अभवन् वादिनामशब्दप्रोरुपादानेन सर्वेषां नामान्यपि स्त्रीत्वविशिष्टत्वेन प्रसिद्धानि बभूवुरिति सूचितम् ॥ १३ ॥

गो० टी०—ये त्विति । पुरुष इति वादो व्यपदेशो येषामिति पुरुषवादिनः । पुँल्लिङ्गशब्दवाच्या ये पदार्थाः सन्ति ॥ १३ ॥

रा० टी०—तदेव स्फुटमाह—यदिति । यत्किञ्चन वस्तु तत्सर्वं नारीसंज्ञं नारीत्वविशिष्टमित्यर्थः बभूव अर्द्धं पृथक्—एतस्मिन्निति । एतस्मिन्सर्वेषां स्त्रीभवनरूपे अन्तरे समये मृगसहस्राणि निघ्नन्निलः तं देशमुपचक्रमे ॥ १४ ॥

गो० टी०—यच्चेति । अन्यच्च यत् किञ्चन नपुंसकलिङ्गवाच्यमस्ति तत्सर्वं नारीसंज्ञं स्त्रीलिङ्गशब्दवाच्यार्हं स्त्रीवेषं बभूव १४

रा० टी०—स इति । स इलः सव्यालमृगपक्षिणं सर्वं स्त्रीकृतं दृष्ट्वा सानुगमात्मानं च स्त्रीकृतं दृष्ट्वा अवर्तत इति शेषः अत एव तथागतं विध्वंसानुगमात्मानं स्त्रीकृतं दृष्ट्वा तस्य इलस्य महद्दुःखमासीत् सार्द्धश्लोक एकान्वयी ॥ १५ ॥ १६ ॥

गो० टी०—स दृष्ट्वेत्यादि । अथात्मानं स्त्रीकृतम् ॥ १५ ॥

१६ ] ति० टी०—सानुगमात्मानं स्त्रीकृतं स्त्रीरूपं कृतं दृष्ट्वा, आत्मानं तथागतं तथावस्थां प्राप्तमात्मानं दृष्ट्वा । इदमुत्तरान्वयि ॥ १६ ॥

गो० टी०—तस्येति । तथागतं तथावस्थां प्राप्तमात्मानं दृष्ट्वा तच्चात्मनस्तथाप्राप्तिरूपं कर्म तदिच्छावशात्प्राप्तं ज्ञात्वा त्रासमुपागमत् ॥ १६–१८ ॥

१७–१९ ] ति० टी०—तच्च आत्मनस्तादृशावस्थाप्राप्तिरूपमुमापतेः कर्म तदिच्छावशप्राप्तं ज्ञात्वा ॥ १७–१९ ॥

रा० टी०—उमापतेरिति । तत्कर्म उमापतेर्ज्ञात्वा त्रासमुपागमत् राजेति शेषः अर्द्धं पृथक्—तत इति । राजा शितिकण्ठं शरणं जगाम ॥ १७ ॥

रा० टी०—तत इति । वरदः वरस्य दाता महेश्वरः वरदः ईप्सितविनाशकस्सन् प्रजापतिसुतमुवाच ॥ १८ ॥

रा० टी०—तदाकारमाह—उत्तिष्ठेति । हे कार्दमेय ! पुरुषत्वमृते विना वरं वरय ॥ १९ ॥

गो० टी०—उत्तिष्ठेति । कार्दमेयेति शुभ्रादित्वाड्ढक् । पुरुषत्वमृते पुरुषत्वं विना ॥ १९ ॥

२० ] ति० टी०—पुरुषत्वमृते तद्विना । प्रत्याख्यातः । पुरुषत्वप्राप्तेरिति शेषः ॥ २० ॥

रा० टी०—तत इति । महात्मना शिवेन प्रत्याख्यातः स्त्रीभूतो राजा अन्यं वरं न जग्राह ॥ २० ॥

गो० टी०—तत इति । न च जग्राह स्त्रीभूत इति । गुरुवैषम्यमार्षम् । अन्यद्वरं पुंस्त्ववरणव्यतिरिक्तम् वरं न जग्राह ॥ २० ॥ २१ ॥

२१ ] ति० टी०—' न च जग्राह स्त्रीभूतः ' इति पाठे गुरुवैषम्यमार्षम् । अन्यं वरं पुंस्त्वातिरिक्तं वरं न जग्राह । ' अन्यद्वाक्यम् ' इति पाठे पुंस्त्वातिरिक्तवरदातृवाक्यं न जग्राहेत्यर्थः ॥ २१ ॥

रा० टी०—तत इति । शोकेनोपलक्षितो नृपः सर्वेणान्तरात्मना निखिलप्रयत्नेन उमां देवीं प्रणिपत्य अवर्ततेति शेषः ॥ २१ ॥

२२ ] ति० टी०—सर्वेणैवान्तरात्मना मनोबुद्ध्यभिमानलक्षणेन सर्वेणान्तःकरणेन प्रणिपत्य । साष्टाङ्गं प्रणिपत्येत्यर्थः । वराणामीशे, अत एव लोकानां वरदे त्वं भामिनी असि ॥ २२ ॥

रा० टी०—प्रणिपाताकारमाह–ईश इति । हे ईशे ! सौम्येन चक्षुषा भज मां पश्येत्यर्थः ॥ २२ ॥

गो० टी०—ईश इति । सौम्येन चक्षुषा अनुग्रहचक्षुषा मां भज अनुगृहाण ॥ २२ ॥ २३ ॥

२३–२४ ] ति० टी०—अतः—अमोघेत्यादि । सौम्येन चक्षुषानुग्रहचक्षुषा मां भजानुगृहाण ॥ २३ ॥ २४ ॥

रा० टी०—हृदिति । राजर्षेः हृद्गतमभिप्रायं विज्ञाय रुद्रस्य संमता देवी प्रत्युवाच ॥ २३ ॥

रा० टी०—तदाकारमाह—अर्द्धस्येति । अर्द्धस्य वरस्य दातेति शेषः वरदो देवोऽस्ति वरार्द्धस्य दात्री अहमस्मि तस्मात् स्त्रीपुंसोः स्त्रीपुंसयोरावयोर्यद्वरमिच्छसि तस्यार्द्धं त्वं गृहाण मत्त इति शेषः ॥ २४ ॥

१ सुमामिति गो. पाठः । २ देवि इति गो. रा. पुस्तकयोः ।

तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि । तदद्भुततरं श्रुत्वा देव्या वरमनुत्तमम् ॥ २५ ॥
संप्रहृष्टमना भूत्वा राजा वाक्यमथाब्रवीत् । यदि देवि प्रसन्ना मे रूपेणाप्रतिमा भुवि ॥ २६ ॥
मासं स्त्रीत्वमुपासित्वा मासं स्यां पुरुषः पुनः । ईप्सितं तस्य विज्ञाय देवी सुरुचिरानना ॥ २७ ॥
प्रत्युवाच शुभं वाक्यमेवमेव भविष्यति । राजन्पुरुषभूतस्त्वं स्त्रीभावं न स्मरिष्यसि ॥ २८ ॥
स्त्रीभूतश्च परं मासं न स्मरिष्यसि पौरुषम् । एवं स राजा पुरुषो मासं भूत्वाथ कार्दमिः ॥
त्रैलोक्यसुन्दरी नारी मासमेकमिलाभवत् । ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

## अष्टाशीतितमः सर्गः ।

जलाशये तपस्यन्सोमसुतो बुध इलानुचरस्त्रीः किंपुरुषीभूयात्र पर्वतरोधसि वसतेति प्रोवाच ।

तां कथामैलसंबद्धां रामेण समुदीरिताम् । लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १ ॥
तौ रामं प्राञ्जली भूत्वा तस्य राज्ञो महात्मनः । विस्तरं तस्य भावस्य तदा पप्रच्छतुः पुनः ॥ २ ॥
कथं स राजा स्त्रीभूतो वर्तयामास दुर्गतिः । पुरुषः स यदा भूतः कां वृत्तिं वर्तयत्यसौ ॥ ३ ॥

---

**गो० टी०-अर्धस्येत्यादि** । स्त्रीपुंसोरर्धस्य । समासान्तनिपाताभाव आर्षः । पुरुषत्वप्राप्तिरूपे वरे अर्धस्य देवो वरदो दाता । अर्धस्यैवाहं दात्री । तस्मात्त्वं मत्तोर्धं गृहाण । यावदिच्छसि यदिच्छसि ॥ २४ ॥ २५ ॥

२५-२६ ] **ति० टी०-स्त्रीपुंसोः** । समासान्ताभाव आर्षः । स्त्रीपुंस्त्वयोरावयोः सकाशाद्वरमिच्छसीति शेषः । तत्र वरदो देवोऽर्धस्य वरस्य दाता, वरार्धस्याहं दात्री, तस्माद्याव-दिच्छसि तदर्धं मत्तो गृहाण ॥ २५ ॥ २६ ॥

**रा० टी०-तदिति** । राजा अब्रवीत् ॥ २५ ॥

**रा० टी०-तदाकारमाह-यदीति** । मासं स्त्रीत्वमुपासित्वा प्राप्य मासं पुनः पुरुषः स्याम् ॥ २६ ॥

**गो० टी०-यदीति** । उपासित्वा प्राप्य ॥ २६ ॥ २७ ॥

२७ ] **ति० टी०-उपासित्वा** प्राप्य ॥ २७ ॥

**रा० टी०-ईप्सितमिति** । देवी प्रत्युवाच तदाकारमाह वाक्यं त्वदुक्तमेवमेवं भविष्यति ॥ २७ ॥

२८ ] **ति० टी०-देवी** स्वतोऽनुग्रहान्तरं करोति-**राजन्निति** ॥ २८ ॥

**रा० टी०-तस्य** पश्चात्तापनिवारणाय वरान्तरमप्याह—**राजन्निति** । पुरुषभूतस्त्वं स्त्रीभावं स्वस्त्रीभवनं न स्मरिष्यसि परं मासं स्त्रीभूतस्त्वं पौरुषं पुरुषभवनं न स्मरिष्यसि ॥२८॥

**गो० टी०-अनुग्रहान्तरमाह—राजन्नित्यादि** ॥ २८ ॥

२९ ] **ति० टी०-कार्दमिः** कर्दमापत्यम् ॥ २९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

**रा० टी०-एवमिति** । कार्दमिः कर्दमापत्यं मासं पुरुषो भूत्वा मासमेकं त्रैलोक्यसुन्दरी इलाभवत् ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्ताशीतितमः सर्गः ॥ ८७ ॥

**गो० टी०-एवमिति** । कार्दमिः ।"अत इञ्" ॥ २९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्ताशीतितमः सर्गः ॥ ८७ ॥

१ ] **ति० टी०-अथ** कथावशेषप्रश्ने तत्प्रतिपादनम्-**तां कथमिति** ॥ १ ॥

**रा० टी०-रामं** प्रति इलसम्बन्धिवृत्तविषयकप्रश्नमुपक्रमते-**तामित्यादिभिः** । ऐलसंबद्धामिलचरितसम्बन्धिनीं कथां श्रुत्वा परमविस्मितौ लक्ष्मणो भरतश्च बभूवतुरिति शेषः ॥ १ ॥

**गो० टी०-तां कथामित्यादि** ॥ १ ॥

२ ] **ति० टी०-तस्य** राज्ञ इलस्य । तस्य भावस्य स्त्रीपुंसभावस्य ॥ २ ॥

**रा० टी०-ताविति** । तौ लक्ष्मणभरतौ राज्ञ- इलस्य तस्य भावस्य पुरुषत्वसमानाधिकरणस्त्रीत्वधर्मस्य विस्तरं पुनः पप्रच्छतुः ॥ २ ॥

**गो० टी०-ताविति** । प्राञ्जली इति द्विवचनम् । तस्य भावस्येति । स्त्रीपुंसभावस्येत्यर्थः ॥ २ ॥

३ ] **ति० टी०-स्त्रीभूतः**, अत एव दुर्गतिः कथं वर्तयामास । तत्कालमिति शेषः । तथा पुरुषभूतोऽसौ कां वृत्तिं वर्तयति ॥ ३ ॥

**रा० टी०-तदाकारमाह—कथमिति** । राजा इलः

तयोस्तद्भाषितं श्रुत्वा कौतूहलसमन्वितम् । कथयामास काकुत्स्थस्तस्य राज्ञो यथागमम् ॥ ४ ॥
तमेव प्रथमं मासं स्त्री भूत्वा लोकसुन्दरी । ताभिः परिवृता स्त्रीभिर्येऽस्यै पूर्वं पदानुगाः ॥ ५ ॥
तत्काननं विगाह्याशु विजह्रे लोकसुन्दरी । द्रुमगुल्मलताकीर्णं पद्भ्यां पद्मदलेक्षणा ॥ ६ ॥
वाहनानि च सर्वाणि संत्यक्त्वा वै समन्ततः । पर्वताभोगविवरे तस्मिन्रेमे इला तदा ॥ ७ ॥
अथ तस्मिन्वनोद्देशे पर्वतस्याविदूरतः । सरः सुरुचिरप्रख्यं नानापक्षिगणायुतम् ॥ ८ ॥
ददर्श सा इला तस्मिन्बुधं सोमसुतं तदा । ज्वलन्तं स्वेन वपुषा पूर्णं सोममिवोदितम् ॥ ९ ॥
तपन्तं च तपस्तीव्रमम्भोमध्ये दुरासदम् । यशस्करं कामकरं कारुण्ये पर्यवस्थितम् ॥ १० ॥
सा तं जलाशयं सर्वं क्षोभयामास विस्मिता । सह तैः पूर्वपुरुषैः स्त्रीभूतै रघुनन्दन ॥ ११ ॥
बुधस्तु तां समीक्ष्यैव कामबाणवशं गतः । नोपलेभे तदात्मानं स चचाल तदाम्भसि ॥ १२ ॥
इलां निरीक्षमाणस्तु त्रैलोक्यादधिकां शुभाम् । [10]चित्तं समभ्यतिक्रामत्कान्वियं देवताधिका ॥ १३ ॥
न देवीषु न नागीषु नासुरीष्वप्सरःसु च । दृष्टपूर्वा मया काचिद्रूपेणानेन शोभिता ॥ १४ ॥

स्त्रीभूतस्सन् कथं वर्तयामास यदा स पुरुषो भूतः तदा कां वृत्तिं वर्तयति ॥ ३ ॥

गो० टी०—कथमिति । स्त्रीभूतः अत एव दुर्गतिः कथं वर्तयामास । तत्कालमिति शेषः ॥ ३–६ ॥

४ ] ति० टी०—यथागमं यथाप्राप्तम् ॥ ४ ॥

रा० टी०—तयोरिति । काकुत्स्थः राज्ञः इलस्य यथागमं यथाप्राप्तं वृत्तं कथयामास ॥ ४ ॥

५–६ ] ति० टी०—लोकसुन्दरी लोकेभ्यः सुन्दरी । एवंभूतापि सा स्त्रीपरिवृता । कास्ताः स्त्रियस्तत्राह—येऽस्येति ॥ ५ ॥ ६ ॥

रा० टी०—तदाकारमाह—तमित्यादिभिः । अस्य राज्ञः ये पूर्वपदानुगाः ताभिः स्त्रीभिः परिवृता स्त्रीभूता लोकसुन्दरी इला प्रथमं मासं गमयामासेति शेषः ॥ ५ ॥

रा० टी०—तदिति । लोकसुन्दरी काननं पद्भ्यां विगाह्य विजह्रे ॥ ६ ॥

७ ] ति० टी०—पर्वतानामाभोगो विस्तारस्तस्य विवरे पर्वतमध्यप्रदेशे ॥ ७ ॥

रा० टी०—वाहनानीति । संत्यक्त्वा संत्यज्य पर्वतानामाभोगस्य विस्तारस्य विवरे समन्ततः इला रेमे ॥ ७ ॥

गो० टी०—वाहनानीति । पर्वतानाम् आभोगो विस्तारः ॥ ७ ॥

८–१० ] ति० टी०—पर्वतस्याविदूरतः सरो ददर्शेत्यन्वयः यत्रेश्वराज्ञया स्त्रीत्वप्राप्तिस्ततः परस्मिन्नविदूरे प्रदेशे इत्यर्थः । अत एव बुधस्य सरसि तपश्चरतः स्त्रीत्वाप्राप्तिरिति बोध्यम् ॥ ८–१० ॥

रा० टी०—अथेति । वनोद्देशे पर्वतस्य अविदूरतः निकटे सुरुचिरप्रख्यं सरः इला ददर्श तस्मिन् सरसि उदितं पूर्णसोममिव स्वेन वपुषा ज्वलन्तमंभोमध्ये तीव्रं तपस्तपन्तं यशस्करं कामकरं निरपेक्षं सोमसुतं बुधं च ददर्श त्रैलोक्यमेकान्वयि ॥ ८–१० ॥

गो० टी०—अथेति । अविदूरतः यत्र स्त्रीत्वप्राप्तिस्तस्याविदूरत इत्यर्थः । अन्यदेशत्वात् बुधस्य स्त्रीत्वाप्राप्तिरिति भावः ॥ ८–१० ॥

११ ] ति० टी०—जलाशयं क्षोभयामास । क्रीडयेति शेषः ॥ ११ ॥

रा० टी०—सेति । स्त्रीभूतैः पुरुषैस्सह सा इला सर्वं जलाशयं क्षोभयामास ॥ ११ ॥

गो० टी०—सेति । क्षोभयामासेति । क्रीडयेति शेषः ॥ ११ ॥

१२ ] ति० टी०—आत्मानं नोपलेभे आत्मध्यानं न प्राप्तवान् । काममोहपरवशचित्तोऽभूदित्यर्थः अम्भसि स्थितः स चचाल ॥ १२ ॥

रा० टी०—बुध इति । तामिलां समीक्ष्यैव कामबाणवशं गतो बुधः आत्मानं स्वशरीरं नोपलेभे संस्मार अत एव अंभसि चचाल इतस्ततो बभ्राम ॥ १२ ॥

गो० टी०—बुधस्त्विति । आत्मानं नोपलेभे । आत्मध्यानं न प्राप्तवानित्यर्थः । कामपरवशचित्तोऽभूदिति भावः ॥ १२ ॥

१३–१४ ] ति० टी०—चित्तं समभ्यतिक्रामत् । इलायामिति शेषः । इलाविषयचिन्तां प्राप्तमभूदित्यर्थः ॥ १३ ॥ १४ ॥

रा० टी०—इलामिति । त्रैलोक्यादधिकामिलां निरीक्षमाणः राजा अतिक्रदिति शेषः अत एव देवताधिका इयं का इति चित्तं समभ्यतिक्रामत् संचचाल ॥ १३ ॥

रा० टी०—नेति । अनेन रूपेण शोभिता काचिदपि देव्यादिषु मया दृष्टपूर्वा न ॥ १४ ॥

गो० टी०—इलामिति । चिन्तां समभ्यतिक्रामत् । इलायामिति शेषः । इलाविषयकचिन्तां प्राप्त इत्यर्थः । तदेवाह—का न्वित्यादि ॥ १३ ॥ १४ ॥

१ गतामिति गो. पाठः । २ स्त्रीति गो. पा. । ३ पूर्वपदानुगा इति गो. पाठः । ४ सेति गो. पाठः । ५ गणैर्युतमिति गो. पा. । ६ स्थितेति गो. पाठः । ७ तारुण्ये इति गो. पाठः । ८ समिति गो. पाठः । ९ त्रैलोक्याभ्यधिकामिति गो. पाठः । १० चिन्तामिति गो. पाठः ।

सदृशीयं मम भवेद्यदि नान्यपरिग्रहः । इति बुद्धिं समास्थाय जलात्कूलमुपागमत् ॥ १५ ॥
आश्रमं समुपागम्य ततस्ताः प्रमदोत्तमाः । शब्दापयत धर्मात्मा ताश्चैनं च ववन्दिरे ॥ १६ ॥
स ताः पप्रच्छ धर्मात्मा कस्यैषा लोकसुन्दरी । किमर्थमागता चैव सर्वमाख्यात मा चिरम् ॥ १७ ॥
शुभं तु तस्य तद्वाक्यं मधुरं मधुराक्षरम् । श्रुत्वा स्त्रियश्च ताः सर्वा ऊचुर्मधुरया गिरा ॥ १८ ॥
अस्माकमेषा सुश्रोणी प्रभुत्वे वर्तते सदा । अपतिः काननान्तेषु सहास्माभिश्चरत्यसौ ॥ १९ ॥
तद्वाक्यमौव्यक्तपदं तासां स्त्रीणां निशम्य च । विद्यामावर्तनीं पुण्यामावर्तयति[2] स द्विजः ॥ २० ॥
सोऽर्थं विदित्वा सकलं तस्य राज्ञो यथा तैथा । सर्वा एव स्त्रियस्ताश्च बभाषे मुनिपुंगवः ॥ २१ ॥
अत्र किंपुरुषीर्भूत्वा शैलरोधसि वत्स्यथ । आवासस्तु गिरावस्मिञ्शीघ्रमेव विधीयताम् ॥२२॥
मूलपत्रफलैः सर्वा वर्तयिष्यथ नित्यदा । स्त्रियः किंपुरुषान्नाम भर्तॄन्समुपलप्स्यथ ॥ २३ ॥
ताः श्रुत्वा सोमपुत्रस्य स्त्रियः किंपुरुषीकृताः । उपासांचक्रिरे शैलं वध्वस्ता बहुलास्तदा ॥ २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टाशीतितमः सर्गः ॥ ८८ ॥

---

१५ ] ति० टी०–यदि नान्यपरिग्रहः । अन्यपरिग्रहत्वरहिता ॥ १५ ॥

रा० टी०–सदृशीति । यदि इयमन्यपरिग्रहः अन्यस्य स्त्री न भवेत् तदा मम सदृशी मत्परिग्रहयोग्या ॥ १५ ॥

गो० टी०–सदृशीति । नान्यपरिग्रहः अन्यपरिग्रहत्वरहिता । १५ ॥

१६–१७ ] ति० टी०–शब्दापयत आह्वयत ॥१६॥१७॥

रा० टी०–आश्रममिति । धर्मात्मा बुधः प्रमदोत्तमाः शब्दापयत आह्वयत् ताः प्रमदोत्तमाश्च एतं बुधं ववन्दिरे॥१६॥

रा० टी०–स इति । स बुधः ताः स्त्रियः पप्रच्छ तदाकारमाह लोकसुन्दरी एका किमर्थमागता एतत्सर्वमाख्यात यूयं कथयत ॥ १७ ॥

गो० टी०–आश्रममिति । शब्दापयत । युगार्षः१६–१८

१८ ] ति० टी०–मधुरं संध्यादिकृतश्रुतिकटुत्वरहितम् । मधुराक्षरं टवर्गादिरहितम् ॥ १८ ॥

रा० टी०–शुभमिति । स्त्रियः मधुरया गिरा ऊचुः॥१८॥

१९ ] ति० टी०–अपतिः पतिहीना ॥ १९ ॥

रा० टी०–तदाकारमाह—अस्माकमिति । अपतिः एषा सुश्रोणी अस्माकं प्रभुत्वे अस्मन्निरूपितस्वामित्वे सदा वर्तते अत एव अस्माभिस्सह काननान्तेषु असौ सदा चरति ॥१९॥

गो० टी०–अस्माकमिति । अपतिः पतिरहिता ॥१९॥

२० ] ति० टी०–आव्यक्तपदमासमन्ताद्व्यक्तानि पदानि यत्र तत् । आवर्तनी विद्या सांग्रहणीपर्यायनामिका संवर्तविद्या तामावर्तयति स्म । तद्विद्यैकसाध्यप्रकृतप्रयोजनार्थमिति शेषः२०

रा० टी०–तदिति । तासां स्त्रीणामव्यक्तं प्रकटितवृत्तरहितं वाक्यं व्यक्तं निशम्य द्विजस्स बुधः आवर्तनीमाज्ञातार्थबोधिनीं विद्यामावर्तयति आवर्तयत् अस्मरत् ॥ २० ॥

गो० टी०–तद्वाक्यमिति । अव्यक्तपदम् अस्पष्टाक्षरमित्यर्थः । आवर्तिनीम् आवर्तिन्याख्यां विद्यामावर्तयत आवर्तयति स्म । प्रकृतप्रयोजनार्थम् । द्विजः क्षत्रियो बुधः ॥ २० ॥

२१ ] ति० टी०–राज्ञः सकलमर्थं वृत्तान्तं विदित्वा । ध्यानयोगत इति शेषः । ताः स्त्रियः । इलाव्यतिरिक्ता इति शेषः॥२१॥

रा० टी०–स इति । राज्ञ इलस्य सकलमर्थं स बुधो विदित्वा सर्वाः स्त्रियो बभाषे ॥ २१ ॥

गो० टी०–स इति । स बुधः तस्य राज्ञः कार्दमेः सकलमर्थं वृत्तान्तम् विदित्वा । योगमाहात्म्यादिति शेषः । ताः स्त्रियः इलासहचरीः ॥ २१ ॥

२२ ] ति० टी०–किंपुरुषीर्भूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वात्रास्मिञ्शैलरोधसि वत्स्यथ । अस्मिन्गिरावावास उटजादिः शीघ्रमेव विधीयताम् ॥ २२ ॥

रा० टी०–तदाकारमाह–अत्रेत्यादिभिः । किम्पुरुषीदेवविशेषस्त्रीत्वं भूत्वा संप्राप्य यूयं शैलरोधसि वत्स्यथ अतः अस्मिन् गिरौ आवासः शीघ्रं विधीयताम् ॥ २२ ॥

गो० टी०–अत्रेति । यूयं सर्वाः किंपुरुषीभूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वा अत्रास्मिन् शैलस्य रोधसि वत्स्यथ । अतोस्मिन् गिरौ शीघ्रमेव आवासः उटजादिः विधीयताम्॥२२॥

२३] ति० टी०–स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान्भर्तॄन्समुपलप्स्यथ । अन्विष्य प्राप्स्यथेत्यर्थः ॥२३॥

रा० टी०–मूलेति । सर्वा यूयं मूलादिभिः वर्तयिष्यथ किम्पुरुषान्नाम भर्तॄन् उपलप्स्यथ च ॥ २३ ॥

गो० टी०–मूलपत्रफलैरिति । स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान् भर्तॄन् समुपलप्स्यथ । अन्विष्य प्राप्स्यथेत्यर्थः ॥ २३ ॥

२४ ] ति० टी०–किंपुरुषीकृता बुधेन योगबलात्किंपुरुषीकृताः । शैलमुपशैलसमीपे आसांचक्रिरे ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड अष्टाशीतितमः सर्गः ॥ ८८ ॥

---

१ अव्यक्तेति गो. व्यक्तमव्यक्तामिति रा. पा. । २ आवर्तयेति गो. पाठः । ३ गतमिति गो. पा. । ४ पुरुषीति गो. पाठः । ५ तामिति गो. पाठः । ६ वाचमिति गो. पाठः ।

## एकोननवतितमः सर्गः ।

क्रमेण इलाया बुधस्य च सङ्गमे तस्यां तस्मात्पुरूरवोऽभिधात्मजस्योत्पत्तिः ।

श्रुत्वा किंपुरुषोत्पत्तिं लक्ष्मणो भरतस्तथा । आश्चर्यमिति च ब्रूतामुभौ रामं जनेश्वरम् ॥ १ ॥
अथ रामः कथामेतां भूय एव महायशाः । कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २ ॥
सर्वास्ता विद्रुता दृष्ट्वा किंनरीर्ऋषिसत्तमः । उवाच रूपसंपन्नां तां स्त्रियं प्रहसन्निव ॥ ३ ॥
सोमस्याहं सुदयितः सुतः सुरुचिरानने । भजस्व मां वरारोहे भक्त्या स्निग्धेन चक्षुषा ॥ ४ ॥
तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जिते[3] । इला सुरुचिरप्रख्यं प्रत्युवाच महाप्रभम् ॥ ५ ॥
अहं कामचरी सौम्य तवास्मि वशवर्तिनी । प्रशाधि मां सोमसुत यथेच्छसि तथा कुरु ॥ ६ ॥
तस्यास्तदद्भुतप्रख्यं श्रुत्वा हर्षमुपागतः । स वै कामी सह तया रेमे चन्द्रमसः सुतः ॥ ७ ॥
बुधस्य माधवो मासस्तामिलां रुचिराननाम् । गतो रमयतोऽत्यर्थं क्षणवत्तस्य कामिनः ॥ ८ ॥
अथ मासे तु संपूर्णे पूर्णेन्दुसदृशाननः । प्रजापतिसुतः श्रीमाञ्शयने प्रत्यबुध्यत ॥ ९ ॥
सोऽपश्यत्सोमजं तत्र तपन्तं सलिलाशये । ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥ १० ॥
भगवन्पर्वतं दुर्गं प्रविष्टोऽस्मि सहानुगः । न च पश्यामि तत्सैन्यं क नु ते मामका गताः ॥ ११ ॥

रा० टी०—ता इति । किंपुरुषीकृता बुधेन स्वयोगबलात् किम्पुरुषस्त्रीत्वेन संपादिताः वृद्धस्त्रियः सोमपुत्रस्य ताः वाचः श्रुत्वा शैलमुपासाञ्चक्रिरे विविशुः ॥ २४ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टाशीतितमः सर्गः ॥ ८८ ॥

गो० टी०-तामिति । किंपुरुषीकृताः बुधस्य योगबलात्किंपुरुषस्त्रीकृता इत्यर्थः । शैलमुप शैलस्य समीप इत्यर्थः ॥२४॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टाशीतितमः सर्गः ॥ ८८ ॥

१-२ ] ति० टी०—श्रुत्वेति । किंपुरुषोत्पत्तिं किंपुरुषजातित्वेन तासां स्त्रीणामुत्पत्तिम् । ब्रूतामब्रुवताम् ॥१॥२॥

रा० टी०—किम्पुरुषस्त्रीत्वोत्पत्तिश्रवणानन्तरकालिकं वृत्तमाह—श्रुत्वेत्यादिभिः । लक्ष्मणो भरतश्च आश्चर्यमिति रामं ब्रूताम् ॥ १ ॥

रा० टी०—अथेति । रामः प्रजापतिसुतस्य इलस्य एतां कथां भूयः कथयामास ॥ २ ॥

गो० टी०—श्रुत्वेत्यादि । किंपुरुषोत्पत्तिं किंपुरुषत्वेन तासां स्त्रीणामुत्पत्तिमित्यर्थः । अब्रूताम् ॥ १ ॥ २ ॥

३ ] ति० टी०—विद्रुता गता दृष्ट्वा । 'विद्रुताः' इति पाठान्तरम् । प्रहसन्नेव सर्वासां स्वबुध्या निराकरणात्प्रहासः ॥ ३ ॥

रा० टी०—तदाकारमाह—सर्वा इति । किंनरीर्विद्रुताः दृष्ट्वा ऋषिसत्तमो बुधः रूपसम्पन्नामिलामुवाच ॥३॥

गो० टी०—सर्वा इति । सर्वासाम् इलाव्यतिरिक्तानाम् विद्रुतत्वात् हासः कामविकारमूल एव ॥ ३ ॥

४-५ ] ति० टी०—भक्त्यानुरागेण स्निग्धं स्नेहयुक्तम्, न केवलं चक्षुषैव तथाभूतम् ॥ ४ ॥ ५ ॥

रा० टी०—तदाकारमाह—सोमस्येति । अहं सोमस्य सुतः अतः स्निग्धेन स्नेहयुक्तेन चक्षुषा मां भजस्व ॥ ४ ॥

गो० टी०—सोमस्येति । भक्त्यानुरागेण । स्निग्धं स्नेहयुक्तम् ॥ ४ ॥

रा० टी०—तस्येति । इला महाप्रभं बुधं प्रत्युवाच ॥ ५ ॥

गो० टी०—तस्येति । महाग्रहो ग्रहदेवः ॥ ५ ॥

६-८ ] ति० टी०—कामचरी स्वतन्त्रा ॥ ६-८ ॥

रा० टी०—तदाकारमाह—अहमिति । कामचरी स्वेच्छाचारिणी अहं तव वशवर्तिन्यस्मि अतः मां प्रशाधि यथेच्छसि तथा कुरु च ॥ ६ ॥

रा० टी०—तस्या इति । तस्याः इलायाः अद्भुतप्रख्यं वचनं श्रुत्वा हर्षमुपागतः स बुधः तया इलया सह रेमे ॥ ७ ॥

गो० टी०- अहमिति । कामचरी स्वतन्त्रा ॥ ६ ॥ ७ ॥

रा० टी०—बुधस्येति । इलां रमयतो बुधस्य माधवो मासः क्षणवद्गतः ॥ ८ ॥

गो० टी०—बुधस्येति । मासो गत इत्यन्वयः ॥ ८ ॥

९-१० ] ति० टी०—प्रजापतिसुत इलः ॥ ९ ॥ १० ॥

रा० टी०—अथेति । प्रजापतिसुतः मासे सम्पूर्णे सति शयने प्रत्यबुध्यत स्वस्वरूपमजानात् ॥ ९ ॥

रा० टी०—स इति । स इलः सोमजं बुधमपश्यत् प्रत्यभाषत च ॥ १० ॥

गो० टी०—अथेति । प्रजापतिसुतः इलः ॥ ९ ॥ १० ॥

११ ] ति० टी०—विस्मृतस्त्रीत्वकालवृत्तान्तः पृच्छति-भगवन्निति ॥ ११ ॥

१ अब्रूतामिति गो. पा. । २ विद्रुता इति गो. पाठः । ३ वर्जितेति गो. पा. । ४ महाग्रहमिति गो. पाठः ।

तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितम् । प्रत्युवाच शुभं वाक्यं सान्त्वयन्परया गिरा ॥ १२ ॥
अश्मवर्षेण महता भृत्यास्ते विनिपातिताः । त्वं चाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥ १३ ॥
समाश्वसिहि भद्रं ते निर्भयो विगतज्वरः । फलमूलाशनो वीर निवसेह यथासुखम् ॥ १४ ॥
स राजा तेन वाक्येन प्रत्याश्वस्तो महामतिः । प्रत्युवाच शुभं वाक्यं दीनो भृत्यजनक्षयात् ॥ १५ ॥
त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विनाकृतः । वर्तेयेयं क्षणं ब्रह्मन्समनुज्ञातुमर्हसि ॥ १६ ॥
सुतो धर्मपरो ब्रह्मञ्ज्येष्ठो मम महायशाः । शशबिन्दुरिति ख्यातः स मे राज्यं प्रपत्स्यते॥१७॥
नहि शक्ष्याम्यहं हित्वा भृत्यदारान्सुखान्वितान् । प्रतिवक्तुं महातेजः किंचिदप्यशुभं वचः ॥ १८ ॥
तथा ब्रुवति राजेन्द्रे बुधः परममद्भुतम् । सान्त्वपूर्वमथोवाच वासस्त इह रोचताम् ॥ १९ ॥
न संतापस्त्वया कार्यः कार्दमेय महाबल । संवत्सरोषितस्यार्थं कारयिष्यामि ते हितम्॥२०॥

---

रा० टी०—तदाकारमाह—भगवन्निति । दुर्गं पर्वतं प्रविष्टः सहानुगोऽहं तत्सैन्यं न पश्यामि तेन मामकाः सेनाधीशाः क्व गता इति न पश्यामि जानामि शब्दाद्युत्पत्तिः ॥ ११ ॥

गो० टी०—इलो विस्मृतस्वस्त्रीत्वादिवृत्तान्तः पृच्छति—भगवन्नित्यादि ॥ ११ ॥

१२ ] ति० टी०—नष्टसंज्ञस्य । देवीप्रसादवशादिति भावः ॥ १२ ॥

रा० टी०—तदिति । गिरा सांत्वयन् सन् प्रत्युवाच बुध इति शेषः ॥ १२ ॥

गो० टी०—तच्छ्रुत्वेति । नष्टसंज्ञस्येति । गौरीशापवशादिति शेषः ॥ १२ ॥

१३–१४ ] ति० टी०—अश्मवर्षेणेति । मायावचनमीश्वरवाक्यानुरोधेनेति कतकः ॥ १३ ॥ १४ ॥

रा० टी०—तदाकारमाह—अश्मेत्यादिभिः । ते भृत्या अश्मवर्षेण विनिपातिताः त्वं तु वातवर्षभयार्दितस्सन् आश्रमपदे सुप्तः ॥ १३ ॥

रा० टी०—समिति । समाश्वसिहि चित्तस्वास्थ्यं कुर्वित्यर्थः फलमूलाशनस्सन् यथासुखमिह निवस ॥ १४ ॥

गो० टी०—अश्मवर्षेणेति । अश्मवर्षेणेत्यादि छद्मवचनं गिरीशशापानुरोधार्थम् ॥ १३ ॥ १४ ॥

१५ ] ति० टी०—तेन वाक्येनेति । इह यथासुखं वसेति वाक्येन ॥ १५ ॥

रा० टी०—स इति । भृत्यजनक्षयाद्दीनोऽपि तेन बुधोक्तेन प्रत्याश्वस्त इलः प्रत्युवाच ॥ १५ ॥

गो० टी०—स इति । तेन वाक्येनेति । इह यथासुखं निवसेति वाक्येनेत्यर्थः ॥ १५ ॥

१६ ] ति० टी०—अहं भृत्यैर्विनाकृतोऽपि स्वकं राज्यं न त्यक्ष्यामि त्यक्तुं न शक्नोमि । इह वासत इति शेषः । अतो हे ब्रह्मन्! इह क्षणमपि न वर्तेयेयम् । नञ इहानुकर्षः तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥

रा० टी०—तदाकारमाह—त्यक्ष्यामीत्यादिभिः । भृत्यैर्विनाकृतोऽहं क्षणमपि न वर्तेयेयमतः स्वकं राज्यमहं त्यक्ष्यामि अतः समनुज्ञातुमर्हसि ॥ १६ ॥

गो० टी०—त्यक्ष्यामीति । भृत्यैर्विनाकृतोऽप्यहं स्वकं राज्यं न त्यक्ष्यामि त्यक्तुं न शक्नोमि । इह वसन इति शेषः । एतदेवाह—हे ब्रह्मन् ! क्षणमपि न वर्तेयेयं । नञ इहानुकर्षः । तस्मान्मां गमनाय समनुज्ञातुमर्हसि ॥ १६ ॥

१७ ] ति० टी०—उक्तमेव राज्योत्कण्ठाप्रदर्शनायाह—सुत इति । प्रपत्स्यते । मम राज्यम् । प्रतिगमनाभावे इति शेषः ॥ १७ ॥

रा० टी०—ननु त्यागे प्रजापालनं कथं भविष्यतीत्यत आह—सुत इति । शशबिन्दुरिति ख्यातो मम सुतोऽस्ति स सुतः राज्यं प्रपत्स्यते प्राप्य पालयिष्यति ॥ १७ ॥

गो० टी०—उक्तवृत्तान्तमेव पुनरौत्कण्ठ्यप्रदर्शनायाह—सुत इति । प्रपत्स्यत इति । मया गत्वा कृतादभिषेकादिति भावः ॥ १७ ॥

१८ ] ति० टी०—सुखान्वितान्देशस्थान्भृत्यदारान्हित्वाहं न शक्ष्यामि । इह स्थातुमिति शेषः । यदेवमतो मां प्रति किंचिदप्यशुभमिह वासनियोगलक्षणानिष्टं वक्तुं नार्हसीति शेषः ॥ १८ ॥

रा० टी०—ननु इहैव नित्यं तिष्ठेरयत आह—नहीति । सुखान्वितान् भृत्यदारान् हित्वा प्राप्य असुखं वचः प्रतिवक्तुं न शक्ष्यामि ॥ १८ ॥

गो० टी०—न हीति । सुखान्वितानिति । देशस्थानिति शेषः । हित्वा न शक्ष्यामीति । इह स्थातुमिति शेषः । अशुभं वचः इह निवासलक्षणानिष्टवचनं वक्तुं नार्हसीति शेषः१८–२२

१९–२० ] ति० टी०—अद्भुतमागम्याद्भुतकर्मसिद्धिजनकं परमं वचः सान्त्वपूर्वं तव किंचित्कालवासेन सुखं भविष्यतीत्येवंवादपूर्वं ते इह वासो रोचतामित्युवाच ॥ १९॥२०॥

रा० टी०—तथेति । बुधः सांत्वपूर्वमुवाच तदाकारमाह इहवासस्ते रोचताम् ॥ १९ ॥

---

१ तत इति गो. पाठः । २ क्षयाद्दुःशर्मिति गो. पा. । ३ इहेति गो. पाठः ।

तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः । वासाय विदधे बुद्धिं यदुक्तं ब्रह्मवादिना ॥ २१ ॥
मासं स स्त्री तदा भूत्वा रमयत्यनिशं सदा । मासं पुरुषभावेन धर्मबुद्धिं चकार सः ॥ २२ ॥
ततः सा नवमे मासि इला सोमसुतात्सुतम् । जनयामास सुश्रोणी पुरूरवसमूर्जितम् ॥ २३ ॥
जातमात्रे तु सुश्रोणी पितुर्हस्ते न्यवेशयत् । बुधस्य समवर्णं च इला पुत्रं महाबलम् ॥ २४ ॥
बुधस्तु पुरुषीभूतं स वै संवत्सरान्तरम् । कथाभी रमयामास धर्मयुक्ताभिरात्मवान् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोननवतितमः सर्गः ॥ ८९ ॥

## नवतितमः सर्गः ।

एवं संवत्सरमुषित्वा बुधानुमत्या स इलः संवर्तादिमहामुनिप्रसादेनाश्वमेधेनेष्ट्वा धूर्जटेस्तुष्टात्स्पष्टं पुरुषत्वं पुनरवाप्य यथापूर्वं शाश्वतीः समाः प्रजा अपालयदिति रामोऽनुजावाख्याति स्म ।

तथोक्तवति रामे तु तस्य जन्म तदद्भुतम् । उवाच लक्ष्मणो भूयो भरतश्च महायशाः ॥ १ ॥
इला सा सोमपुत्रस्य संवत्सरमथोषिता । अकरोत्किं नरश्रेष्ठ तत्त्वं शंसितुमर्हसि ॥ २ ॥
तयोस्तद्वाक्यमाधुर्यं निशम्य परिपृच्छतोः । रामः पुनरुवाचेदं प्रजापतिसुते कथाम् ॥ ३ ॥
पुरुषत्वं गते शूरे बुधः परमबुद्धिमान् । संवर्तं परमोदारमाजुहाव महायशाः ॥ ४ ॥
च्यवनं भृगुपुत्रं च मुनिं चारिष्टनेमिनम् । प्रमोदनं मोदकरं ततो दुर्वाससं मुनिम् ॥ ५ ॥

रा० टी०—नेति । त्वया संतापो न कार्यः संवत्सरोषितस्य ते हितं कारयिष्यामि ॥ २० ॥

२१–२२ ] ति० टी०—यदुक्तं ब्रह्मवादिना तस्य तद्वचनं श्रुत्वेति संबन्धः ॥ २१ ॥ २२ ॥

रा० टी०—तस्येति । यत् ब्रह्मवादिना बुधेनोक्तं तस्य तद्वचनं श्रुत्वा वासाय बुद्धिं विदधे ॥ २१ ॥

रा० टी०—मासमिति । मासं स्त्री भूत्वा अनिशं रमयति बुधमिति शेषः मासं पुरुषभावेन धर्मबुद्धिं चकार ॥ २२ ॥

२३ ] ति० टी०—नवमे मासीति न चैवं मध्ये पुरुषत्वावस्थायां गर्भदर्शनेन पूर्वावस्थास्मरणाभावरूपपार्वतीवरान्यथाभावापत्तिः । तद्वरबलादेव ध्रियमाणस्यापि गर्भस्यानेनाज्ञानमिति कल्पनेनादोषात् । एतदनुपपत्त्यैव बुधस्य समागममारभ्य नवमे मासि सद्य एव गर्भग्रहणप्रसवाविति तीर्थः ॥ २३ ॥

रा० टी०—तत इति । नवमे मासि पुरुरवसं सुतं जनयामास ॥ २३ ॥

गो० टी०—तत इति । इला सोमसुतात्सुतं जनयामासेति । योजनगन्धयादिः पराशरादिभ्यो व्यासादिमिव निषेकानन्तरमेवेति ज्ञेयम् ॥ २३ ॥

२४ ] ति० टी०—जातमात्रं तत्क्षण एव पितृसमानाकारं पितृहस्ते उपनयनादिकृत्यार्थं न्यवेदयत्स्थापितवती ॥ २४ ॥

रा० टी०—जातेति । इला जातमात्रं पुत्रं पितुर्हस्ते न्यवेशयत् ॥ २४ ॥

गो० टी०—जातमात्रमिति । जातमात्रं तत्क्षण एव । पितृसमाकारं पितृहस्ते उपनयनादिकृत्यार्थं न्यवेशयत् २४–२५

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोननवतितमः सर्गः ॥ ८९ ॥

२५ ] ति० टी०—संवत्सरान्तरं संवत्सरान्तरप्राप्त्यपेक्षितावशिष्टमासत्रयपर्यन्तम् ॥ २५ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोननवतितमः सर्गः ॥ ८९ ॥

रा० टी०—बुध इति । बुधस्तु पुरुषीभूतमिलं धर्मयुक्ताभिः कथाभिः रमयामास ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोननवतितमः सर्गः ॥ ८९ ॥

१ ] ति० टी०—तस्य पुरूरवसो जन्म ॥ १ ॥

रा० टी०—रामं प्रति लक्ष्मणभरतयोः पुनः प्रश्नमाह—तथेति द्वाभ्याम् । लक्ष्मणो भरतश्च भूय उवाच ॥ १ ॥

गो० टी०—तथेत्यादि । तस्येति । पुरूरवस इत्यर्थः ॥ १ ॥

२ ] ति० टी०—सोमपुत्रस्य । समीप इति शेषः । किमकरोत् संवत्सरानन्तरमिति शेषः । पुरूरवसः शशबिन्दोश्च तत्पुत्रतया पश्चाज्जातपुरूरवसो राज्यमभून्न वेति प्रश्नार्थः ॥ २ ॥

रा० टी०—तदाकारमाह—इलेति । सोमपुत्रस्य समीपे संवत्सरमुषिता इला किमकरोत् तत्त्वं शंसितुमर्हसि ॥ २ ॥

गो० टी०—इलेति । किमिति । संवत्सरात्परमिति शेषः । इलस्य पुरूरवसोपि पुत्रस्य सत्त्वाच्छशबिन्दोः पूर्वपुत्रस्य च सत्त्वात्पुरूरवसो राज्यप्राप्तिरभून्न वेति प्रश्नाशयः ॥ २–५ ॥

३–५ ] ति० टी०—प्रजापतिसुते तद्विषयाम् ॥ ३–५ ॥

१ तथेति गो. पा. । २ शुभेति गो. पा. । ३ जातमात्रमिति गो. पा. । ४ समवर्णाभमिति गो. पाठः । ५ इमामिति गो. पाठः । ६ तथेति गो. पाठः ।

एतान्सर्वान्समानीय वाक्यज्ञस्तत्त्वदर्शनः । उवाच सर्वान्सुहृदो धैर्येण सुसमाहितान ॥ ६ ॥
अयं राजा महाबाहुः कर्दमस्य इलः सुतः । जानीतैनं यथाभूतं श्रेयो ह्यत्र विधीयताम् ॥ ७ ॥
तेषां संवदतामेव द्विजैः सह महात्मभिः । कर्दमस्तु महातेजास्तदाश्रममुपागमत् ॥ ८ ॥
पुलस्त्यश्च क्रतुश्चैव वषट्कारस्तथैव च । ओङ्कारश्च महातेजास्तमाश्रममुपागमन् ॥ ९ ॥
ते सर्वे हृष्टमनसः परस्परसमागमे । हितैषिणो बाल्हिपतेः पृथग्वाक्यान्यथाब्रुवन् ॥ १० ॥
कर्दमस्त्वब्रवीद्वाक्यं सुतार्थं परमं हितम् । द्विजाः शृणुत मद्वाक्यं यच्छ्रेयः पार्थिवस्य हि ॥ ११ ॥
नान्यं पश्यामि भैषज्यमन्तरा वृषभध्वजम् । नाश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः ॥ १२ ॥
तस्माद्यजामहे सर्वे पार्थिवार्थे दुरासदम् । कर्दमेनैवमुक्तास्तु सर्वे एव द्विजर्षभाः ॥ १३ ॥
रोचयन्ति स्म तं यज्ञं रुद्रस्याराधनं प्रति । संवर्तस्य तु राजर्षेः शिष्यः परपुरंजयः ॥ १४ ॥
मरुत्त इति विख्यातस्तं यज्ञं समुपाहरत् । ततो यज्ञो महानासीद्बुधाश्रमसमीपतः ॥ १५ ॥
रुद्रश्च परमं तोषमाजगाम महायशाः । अथ यज्ञे समाप्ते तु प्रीतः परमया मुदा ॥ १६ ॥
उमापतिर्द्विजान्सर्वानुवाच इलसंनिधौ । प्रीतोऽस्मि हयमेधेन भक्त्या च द्विजसत्तमाः ॥ १७ ॥
अस्य बाल्हिपतेश्चैव किं करोमि प्रियं शुभम् । तथा वदति देवेशे द्विजास्ते सुसमाहिताः ॥ १८ ॥

---

रा० टी०–तयोरिति । रामः प्रजापतिसुते तद्विषये कथां पुनरुवाच ॥ ३ ॥

रा० टी०–तदाकारमाह—पुरुषत्वमित्यादिभिः । बुधः संवर्तादीन् आजुहाव श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

६ ] ति० टी०–सुहृदः स्वमित्रसुतान् ॥ ६ ॥

रा० टी०–एतानिति । एतान् मुनीन्समानीय उवाच ॥ ६ ॥

गो० टी०–एतानिति । सुहृदः स्वसखीभूतान् ॥ ६ ॥

७–११ ] ति० टी०–यथाभूतमीश्वराज्ञयानुभवसिद्धं स्त्रीपुंसरूपप्रकारद्वयं प्राप्तमेनं जानीत ॥ ७–११ ॥

रा० टी०–तदाकारमाह–अयमिति । अयमिलः कर्दमस्य सुतः एनं यथा भूतं यद्धर्मं प्राप्तं जानीत योगबलेनेति शेषः अत्र अस्मिन् श्रेयः स्त्रीत्वत्यागोपायः विधीयताम् ॥ ७ ॥

रा०टी०–तेषामिति । संवदतां सतां द्विजैस्सह कर्दमः तस्य बुधस्याश्रममुपागमत् ॥ ८ ॥

रा० टी०–द्विजानां नामानि निर्दिशन्नाह—पुलस्त्य इत्यादिभिः । पुलस्त्यप्रभृतिः समुपागमत् ॥ ९ ॥

रा० टी०–ते इति । हृष्टमनसः सर्वे द्विजाः पृथक् वाक्यानि अब्रुवन् ॥ १० ॥

रा० टी०–कर्दम इति । कर्दमोऽब्रवीत् तदाकारमाह पार्थिवस्य इलस्य यच्छ्रेयः तन्मद्वाक्यं शृणुत ॥ ११ ॥

गो० टी०–अयमिति । यथाभूतमिलस्य वृत्तान्तम् ७–११

१२–१४ ] ति० टी०–वृषभध्वज एव स्वकृतशापनिवर्तनसमर्थस्तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरणेनेत्याह—नान्यमिति । नान्यं भैषज्यं पश्यामि । नान्यमित्येतद्विवृणोति—अन्तरा वृषभध्वजम् । नाश्वमेधात्परो यज्ञः । राज्ञां ब्रह्महत्यान्तसर्वपापनिवर्तकत्वादिति भावः । नन्वश्वमेधेन कथं वृषभध्वजमनोऽयोऽत आह—प्रिय एव महात्मनः । यद्यपि प्रजापतिदैवत्यत्वात्प्रजापतिप्रीतिकरः सः, तथापि हिरण्यगर्भावस्थाविशेषस्यैव रुद्रत्वान्न दोषः ॥ १२–१४ ॥

रा० टी०–तदाकारमाह—नेति । वृषभध्वजं शिवमन्तरा अन्यं भैषज्यमिलः श्रेयः प्राप्त्युपायं न पश्यामि अहं पृथक् ननु तस्य प्रसादः कथं स्यादित्यत आह–नेति । अश्वमेधात्परो यज्ञः महात्मनः शिवस्य प्रियो न तस्माद्धेतोः पार्थिवार्थे दुरासदमश्वमेधं यजामहे ॥ १२ ॥

रा० टी०–कर्दमेनेति । द्विजर्षभाः रुद्रस्याराधनं प्रति तमश्वमेधं रोचयन्ति स्म ॥ १३ ॥

गो० टी०–नान्यमिति । वृषध्वज एव स्वकृतशापनिवर्तकः । तत्प्रीतिश्चाश्वमेधेन सर्वदेवताप्रीतिकरणेनैवेति भावः । नाश्वमेधात्पर इति । राज्ञां ब्रह्महत्यान्तसर्वपापनिवारक इति शेषः । प्रियश्चैव महात्मन इति । यद्यपि प्रजापतिदेवताकः प्रजापतिप्रीतिकरोऽश्वमेधः तथापि सर्वदेवताप्रीतिकरत्वात् अस्य रुद्रप्रीतिकरत्वमपि सिद्धम् । वस्तुतस्तु "यज्ञो वै विष्णुः" इति श्रुतिवचनाद्यज्ञपुरुषाराधनमश्वमेधः । विष्ण्वाराधनमित्युपक्रमे लक्ष्मणोक्त्या विष्ण्वाराधनमेवाश्वमेधः । तदाराधनत्वेनैव हरस्य[1] प्रियत्वम् । प्रकृतब्रह्महत्यावारकत्वेन तस्य प्रशंसार्थं पुनरपि रामेण तद्विषयार्थवाद उक्तः । एतेन यत् केनचिदुक्तं लक्ष्मणेन विष्ण्वाराधनयज्ञे प्रस्तुते पुनः रामेण रुद्राराधनत्वप्रदर्शनं विष्णवपेक्षया रुद्राधिक्यस्य प्रतिपादनार्थमिति, तद्दूरोत्सारितम् । ब्रह्महत्यावारकप्रदर्शनार्थत्वाद्रामोक्तस्य ॥ १२–१३ ॥

रा० टी०–संवर्तस्येति । मरुत्त इति विख्यातः सम्वर्तस्य सुतः तं यज्ञं समुपाहरत् सामग्रीसंपादनमकरोत् ॥ १४ ॥

गो० टी०–संवर्तस्येति । समुपाहरत् संभारजातमुपहृतवान् ॥ १४–२० ॥

१५–१८ ] ति० टी०–तं यज्ञं समुपाहरत् । इलयज्ञापेक्षितसंभारमुपाहृतवानित्यर्थः ॥ १५–१८ ॥

---

१ हरस्येति गो. पाठः । २ अत्रत्यपद्यस्य प्रथमचतुर्थचरणौ तथा द्वितीयतृतीयचरणावेकत्र क्रमेण गो. पुस्तके. । ३ राजर्षेरिति गो. पा. ।

प्रसादयन्ति देवेशं यथा स्यात्पुरुषस्त्विला । ततः प्रीतो महादेवः पुरुषत्वं ददौ पुनः ॥ १९ ॥
इलायै सुमहातेजा दत्त्वा चान्तरधीयत । निवृत्ते हयमेधे च गते चादर्शनं हरे ॥ २० ॥
यथागतं द्विजाः सर्वे तेऽगच्छन्दीर्घदर्शिनः । राजा तु बाह्लिमुत्सृज्य मध्यदेशे ह्यनुत्तमम् ॥ २१ ॥
निवेशयामास पुरं प्रतिष्ठानं यशस्करम् । शशबिन्दुश्च राजर्षिर्बाह्लिं परपुरंजयः ॥ २२ ॥
प्रतिष्ठाने इलो राजा प्रजापतिसुतो बली । स काले प्राप्तवाँल्लोकमिलो ब्राह्ममनुत्तमम् ॥ २३ ॥
ऐलः पुरूरवा राजा प्रतिष्ठानमवाप्तवान् । ईदृशो ह्यश्वमेधस्य प्रभावः पुरुषर्षभ ॥
स्त्रीपूर्वः पौरुषं लेभे ॥ यच्चान्यदपि दुर्लभम् । २४ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

## एकनवतितमः सर्गः ।

रामो वसिष्ठवामदेवादिद्विजवर्यानुमत्या वाजिमेधाध्वरनिश्चितधिषणो बिभीषणः सुग्रीवश्चान्ये भूपतयः सर्वे सानुगपरिग्रहा यागार्थमामन्त्र्यन्तां स तु नैमिषक्षेत्रे निर्वर्त्यतां तदर्थाः सर्वसंभाराश्च भृत्यसूदादिसंबद्धाः पूर्वमेव प्रेष्यन्तामित्यादि लक्ष्मणमब्रवीत् ।

एतदाख्याय काकुत्स्थो भ्रातृभ्याममितप्रभः । लक्ष्मणं पुनरेवाह धर्मयुक्तमिदं वचः ॥ १ ॥
वसिष्ठं वामदेवं च जाबालिमथ कश्यपम् । द्विजांश्च सर्वप्रवरानश्वमेधपुरस्कृतान् ॥ २ ॥

रा० टी०—तत इति । बुधाश्रमसमीपतः यशोऽश्वमेध आसीत् अत एव रुद्रः परमं तोषं जगाम ॥ १९ ॥

रा० टी०—अथेति । उमापतिः द्विजान् उवाच ॥१६॥

रा० टी०—तदाकारमाह—प्रीत इति । अहं प्रीतोस्मि अत बाह्लिपते: किं प्रियं करोमि ॥ १७ ॥

रा० टी० तथेति । इला यथा पुरुषः स्यात् तथा देवेशं शिवं प्रसादयन्ति प्रासादयन् ॥ १८ ॥

१९-२० ] ति० टी०—देवेशं प्रसादयन्ति स्म पुरुषत्वं विनान्यं वरं वृणीष्वेति पूर्ववद्यथा न वदेत्तथा विशिष्य प्रसन्नमकुर्वन्नित्यर्थः । तदेवोक्तम्—यथा स्यादिति ॥ १९-२० ॥

रा० टी०—तत इति । महादेवः इलायै पुरुषत्वं ददौ अन्तरधीयत च ॥ १९ ॥

रा० टी०—निवृत्त इति । दीर्घदर्शना द्विजाः यथागतमगच्छन् ॥ २० ॥

२१ ] ति० टी०—बाह्लिमुत्सृज्य । जेष्ठपुत्रशशबिन्दुधिष्ठितमिति शेषः ॥ २१ ॥

रा० टी०—राजेति । राजा इलः बाह्लिं स्वज्येष्ठपुत्रशशबिन्द्वधिष्ठितदेशमुत्सृज्य मध्यदेशे अनुत्तमं प्रतिष्ठानं नाम पुरं निवेशयामास शशबिन्दुस्तु बाह्लिमध्युवासेति शेषः सार्द्धश्लोक एकान्वयी ॥ २१ ॥ २२ ॥

गो० टी०—राजेति । बाह्लिमुत्सृज्येति । ज्येष्ठपुत्रशशबिन्द्वधिष्ठितमिति शेषः ॥ २१ ॥

२२ ] ति० टी०—बाह्लिम । अध्युवासेति शेषः ॥ २२ ॥

गो० टी०—शशबिन्दुस्त्विति । बाह्लिमिति । अध्युवासेति शेषः ॥ २२ ॥

२३ ] ति० टी०—बली उवासेति शेषः ॥ २३ ॥

२४ ] ति० टी०—पौरुषं पुरुषत्वम् ॥ २४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

रा० टी०—प्रतिष्ठान इति । प्रतिष्ठाने पुरे स्थितः इलः अतिप्रतिष्ठितः स इलः काले यथोचितसमये ब्राह्मं लोकं प्राप्तवान् ॥ २४ ॥

रा० टी०—ऐल इति । पुरूरवाः प्रतिष्ठानं पुरमवाप्तवान् अहं पृथक्—ईदृश इति । स्त्रीपूर्वः इलः पौरुषम् ब्रह्मलोकम् अन्यदपि यद्दुर्लभं तल्लेभे ईदृशोऽश्वमेधस्य प्रभावः॥२६॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

गो० टी०—स इति । काले शरीरावसानकाले । ब्राह्मं ब्रह्मसंबन्धिनम् ॥ २३ ॥

गो० टी०—ईदृश इति । यच्चान्यदिति । उक्तब्रह्मलोकादित्यर्थः ॥ २४ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने नवतितमः सर्गः ॥ ९० ॥

१ ] ति० टी०—अथाश्वमेधयागाय नैमिषे भरतप्रेषणम्—एतदिति । भ्रातृभ्यामिति चतुर्थी ॥ १ ॥

रा० टी०—रामकर्तृकऐलचरितवर्णनानन्तरकालिकं वृत्तमाह—एतदित्यादिभिः । काकुत्स्थः लक्ष्मणं पुनराह ॥ १ ॥

गो०टी०—एतदाख्यायेत्यादि । भ्रातृभ्यामिति चतुर्थी१

२ ] ति० टी०—अश्वमेधपुरस्कृतानश्वमेधप्रयोगसमर्थान्२

१ स इति गो.पा. । २ तु गतश्चादर्शनं हर इति गो.पा. । ३ त्विति गो.पा. । ४ ब्राह्ममिति रा.पा. । ५ पुरुषर्षभाविति गो.पा. । ६ भूत इति गो.पा. ।

एतान्सर्वान्समानीय मन्त्रयित्वा च लक्ष्मण । इयं लक्षणसंपन्नं विमोक्ष्यामि समाधिना ॥ ३ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा त्वरितविक्रमः । द्विजान्सर्वान्समाहूय दर्शयामास राघवम् ॥ ४ ॥
ते दृष्ट्वा देवसंकाशं कृतपादाभिवन्दनम् । राघवं सुदुराधर्षमाशीर्भिः समपूजयन् ॥ ५ ॥
प्राञ्जलिः स तदा भूत्वा राघवो द्विजसत्तमान् । उवाच धर्मसंयुक्तमश्वमेधाश्रितं वचः ॥ ६ ॥
तेऽपि रामस्य तच्छ्रुत्वा नमस्कृत्वा वृषध्वजम् । अश्वमेधं द्विजाः सर्वे पूजयन्ति स्म सर्वशः ॥ ७ ॥
स तेषां द्विजमुख्यानां वाक्यमद्भुतदर्शनम् । अश्वमेधाश्रितं श्रुत्वा भृशं प्रीतोऽभवत्तदा ॥ ८ ॥
विज्ञाय कर्म तत्तेषां रामो लक्ष्मणमब्रवीत् । प्रेषयस्व महाबाहो सुग्रीवाय महात्मने ॥ ९ ॥
यथा महद्भिर्हरिभिर्बहुभिश्च वनौकसाम् । सार्धमागच्छ भद्रं ते अनुभोक्तुं महोत्सवम् ॥ १० ॥
बिभीषणश्च रक्षोभिः कामगैर्बहुभिर्वृतः । अश्वमेधं महायज्ञमायात्वतुलविक्रमः ॥ ११ ॥
राजानश्च महाभागा ये मे प्रियचिकीर्षवः । सानुगाः क्षिप्रमायान्तु यज्ञभूमिनिरीक्षकाः ॥ १२ ॥
देशान्तरगता ये च द्विजा धर्मसमाहिताः । आमन्त्रयस्व तान्सर्वानश्वमेधाय लक्ष्मण ॥ १३ ॥
ऋषयश्च महाबाहो आहूयन्तां तपोधनाः । देशान्तरगताः सर्वे सदाराश्च द्विजातयः ॥ १४ ॥

---

रा० टी०—तदाकारमाह—वसिष्ठमित्यादिभिः । अश्वमेधपुरस्कृतान् अश्वमेधप्रयोगसमर्थान् अत एव सर्वप्रवरान् एतान् वशिष्ठादीन् समानीय मन्त्रयित्वा तेषां सम्मतिं सङ्गृह्य लक्षणसम्पन्नम् उत्सर्जनयोग्यलक्षणविशिष्टम् इयं समाधिना एकाग्रचित्तेनोपलक्षितोऽहं विमोक्ष्यामि श्लोकद्वयमेकान्वयि२।३

गो० टी०—वसिष्ठमिति । द्विजांश्च सर्वप्रवरानिति गुरुवैषम्यमार्षम् । अश्वमेधपुरस्कृतानिति । अश्वमेधप्रयोगकुशलानित्यर्थः ॥ २ ॥

३–६ ] ति० टी०—मन्त्रयित्वा विचार्य । समाधिना सावधानचित्ततया इयं विमोक्ष्यामीति लक्ष्मणमाहेति पूर्वेण संबन्धः ॥ ३–६ ॥

रा० टी०—तदिति । त्वरितविक्रमो लक्ष्मणः द्विजान् समाहूय राघवं दर्शयामास ॥ ४ ॥

रा० टी०—ते इति । ते ब्राह्मणा आशीर्भिः राघवं समपूजयन् ॥ ५ ॥

रा० टी०—प्राञ्जलिरिति । राघवः अश्वमेधाश्रितमत एव धर्मसंयुक्तं वचः उवाच ॥ ६ ॥

गो० टी०—एतानिति । मन्त्रयित्वा विचार्य ॥ ३–६ ॥

गो० टी०—प्राञ्जलिरिति । अश्वमेधस्येति । अनुष्ठानविषयकमिति शेषः । उवाच धर्मसंयुक्तमश्वमेधाश्रितं वच इति च पाठः ॥ ६ ॥

७–८ ] ति० टी०—वृषध्वजं रुद्रम् । त्रेताग्निरूपत्वाद्रुद्रस्य यज्ञनिर्विघ्नार्थं तन्नमस्कारः ॥ ७ ॥ ८ ॥

रा० टी०—ते इति । ते ऋषयः अश्वमेधं पूजयन्ति प्रशंसन्ति स्म ॥ ७ ॥

रा० टी०—स इति । स रामः अश्वमेधाश्रितं द्विजमुख्यानां वाक्यं श्रुत्वा भृशं प्रीतोऽभवत् ॥ ८ ॥

गो० टी०—ते त्विति । वृषध्वजं नमस्कृत्वेति । सोल्लुण्ठनं वचः इत्यवद्रुद्राराधनं विहायेत्यर्थः । कर्दमकृतयागस्येवास्य रुद्रात्प्रयोजनगन्धाभावात् परदेवतामुद्दिश्याश्वमेधं कर्तुमुद्युक्ता इति भावः । रुद्रस्तु सर्वयज्ञानर्हः शूद्राराध्यः । यज्ञमध्ये च तत्प्रसङ्गे अप उपस्पर्शनादिप्रायश्चित्तस्य प्रसिद्धत्वात् । "इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने" इत्यादिश्रुतिस्तु अग्नेरेव यज्ञान्वयप्रतिपादिका । कर्दमकृतयज्ञस्य नाराध्यो रुद्रः । किन्तु स्वाभिमतदेवतारूपविष्ण्वाराधनत्वेन प्रीतो रुद्र इत्युच्यते । उपक्रमे तत्पूर्वसर्गेषु "यज्ञो वै विष्णुः" इत्युक्तरीत्या विष्णोराराध्यत्वसमर्थनात् । यद्वा विष्णुदत्तवरत्वाद्रुद्रस्य । विष्णुमपूजयन् । रामस्त्वश्वमेधं यथापूर्वमकरोत् ॥ ७ ॥ ८ ॥

९ ] ति० टी०—तत्कर्म विज्ञाय तत्कर्मकरणाङ्गीकारं विज्ञाय ॥ ९ ॥

रा० टी०—विज्ञायेति । तेषां ब्राह्मणानां कर्म अश्वमेधप्रवृत्तिं विज्ञाय लक्ष्मणमब्रवीत् तदाकारमाह सुग्रीवाय प्रेषयस्व दूतानिति शेषः ॥ ९ ॥

१०–१४ ] ति० टी०—महद्भिर्हरिभिर्हनुमदादिभिः । बहुभिश्च वनौकसाम् । अनुचररूपाणां बहुभिः समुदायैरित्यर्थः । अनुभोक्तुं द्रष्टुं यथा यथाकालमागच्छ ॥ १०–१४ ॥

रा० टी०—प्रेषणकालिकं संदेशमाह—यथेत्यादिभिः । वनौकसामनुचराणां बहुभिः विशिष्टैः महद्भिरङ्गदादिभिः सार्द्धं यथावदागच्छ ॥ १० ॥

रा० टी०—बिभीषण इति । बहुभिः रक्षोभिर्वृतः बिभीषणश्च अश्वमेधमायातु ॥ ११ ॥

रा० टी०—राजान इति । ये मे प्रियचिकीर्षवो राजानस्तेपि क्षिप्रमायान्तु ॥ १२ ॥

रा० टी०—देशान्तरेति । धर्मसमाहिताः ये द्विजाः

---

१ आचचक्षेऽश्वमेधस्य ह्यभिप्रायं महायशा इति गो. पाठः । २ कृतं दूतानिति गो. पा. । ३ यज्ञं द्रष्टुमत्तमर्मिति गो. पाठः ।

तथैव तालावचरास्तथैव नटनर्तकाः । यज्ञवाटश्च सुमहान्गोमत्या नैमिषे वने ॥ १५ ॥
आज्ञाप्यतां महाबाहो तद्धि पुण्यमनुत्तमम् । शान्तयश्च महाबाहो प्रवर्तन्तां समन्ततः ॥ १६ ॥
शतशश्चापि धर्मज्ञाः क्रतुमुख्यमनुत्तमम् । अनुभूय महायज्ञं नैमिषे रघुनन्दन ॥ १७ ॥
तुष्टः पुष्टश्च सर्वोऽसौ मानितश्च यथाविधि । प्रतियास्यति धर्मज्ञ शीघ्रमामन्त्र्यतां जनः ॥ १८ ॥
शतं वाहसहस्राणां तण्डुलानां वपुष्मताम् । अयुतं तिलमुद्गस्य प्रयात्वग्रे महाबल ॥ १९ ॥
चणकानां कुलित्थानां माषाणां लवणस्य च । अतोऽनुरूपं स्नेहं च गन्धं संक्षिप्तमेव च ॥ २० ॥
सुवर्णकोट्यो बहुला हिरण्यस्य शतोत्तराः । अग्रतो भरतः कृत्वा गच्छत्वग्रे समाधिना ॥ २१ ॥
अन्तरापणवीथ्यश्च सर्वे च नटनर्तकाः । सूदा नार्यश्च बहवो नित्यं यौवनशालिनः ॥ २२ ॥
भरतेन तु सार्धं ते यान्तु सैन्यानि चाग्रतः । नैगमान्[1]बालवृद्धांश्च द्विजांश्च सुसमाहिताः[2] ॥ २३ ॥

---

देशान्तरं गताः प्रयोजनवशेन दूरदेशं प्राप्ताः तानप्याम-न्त्रयस्व ॥ १३ ॥

रा० टी०—ऋषय इति । देशान्तरगता ऋषयः आहूयन्तां तथा तालावचराः तालं गृहीत्वैव अवचरणकर्तारः सूत्रधरा इत्यर्थः तथा नटनर्तकाश्च आहूयन्तां सार्द्धश्लोक-एकान्वयी ॥ १४ ॥

गो० टी०—यज्ञेति । महद्भिर्हरिभिः हनुमदङ्गदादिभिः । बहुभिश्चेति । भात्रभिप्रायेण अनुभोक्तुं द्रष्टुमित्यर्थः । तथैवेति । तालं गृहीत्वावचरन्तीति तालावचराः सूत्रधाराः ॥ ९–१४ ॥

१५ ] ति० टी०—तालं गृहीत्वावचरास्तालावचराः । नटाः सूत्रधाराः । गोमत्या नद्याः । तीरे इति शेषः ॥ १५ ॥

१६ ] ति० टी०—आज्ञाप्यतां कार्यताम् । तद्धि नैमिषं वनम् ॥ १६ ॥

रा० टी०—यज्ञेति । गोमत्यास्तीरे नैमिषे तदभिधे वने यज्ञवाटः आज्ञाप्यतां हि यतः तद्वनं पुण्यमत एव अनुत्तमम् अतिश्रेष्ठमत एव समन्ततः शान्तयः प्रवर्तन्तां सार्द्धश्लोक एकान्वयी ॥ १५ ॥ १६ ॥

गो० टी०—यज्ञवाटश्चेति । गोमत्या नद्यास्तीर इति शेषः ॥ १५ ॥ १६ ॥

१७ ] ति० टी०—शतशोऽनेके धर्मज्ञा नैमिषे महायज्ञं महान्तोऽङ्गभूता यज्ञा यस्य तं क्रतुमुख्यमनुभूय दृष्ट्वा कृतार्था भवन्त्विति शेषः ॥ १७ ॥

रा० टी०—शतश इति । धर्मज्ञाः क्रतुमुख्यमत एव महायज्ञमनुभूय कृतार्था भवन्त्विति शेषः ॥ १७ ॥

गो० टी०—शतश इति । धर्मज्ञाः शतशः अनेके नैमिषे महायज्ञमश्वमेधमनुभूयानुष्ठाय कृतार्था इति शेषः । यद्वा धर्मज्ञ इति पाठे अनुभूय दृष्ट्वा, प्रीतिं यास्यतीत्युत्तरेणान्वयः ॥ १७ ॥

१८ ] ति० टी०—अतः शीघ्रमामन्त्र्यतां जनः । स चास्माभिर्मानितः पूजितः संतुष्टः पुष्टश्च भूत्वा प्रतियास्यति ॥ १८ ॥

रा० टी०—तुष्ट इति । जनः प्रेष्यः शीघ्रमामन्त्र्यतामत एव तुष्टत्वादिविशिष्टस्सन् प्रतियास्यति ॥ १८ ॥

गो० टी०—तुष्ट इति । प्रतियास्यतीति च पाठः ॥ १८ ॥

१९ ] ति० टी०—वपुष्मतां तण्डुलानाम् । अभग्नस्वरूपाणामित्यर्थः । शतं वाहानामनेकानि सहस्राणि । अनेकलक्षं बलीवर्दादय इत्यर्थः । अयुतं वाहकपशवः ॥ १९ ॥

२० ] ति० टी०—अतोऽनुरूपमुक्तान्नभोजनीयब्राह्मणभोजनानुरूपं स्नेहम् । घृततैलपयोदध्यादिकमित्यर्थः । संक्षिप्तं गन्धम् । अघृष्टमेवेत्यर्थः ॥ २० ॥

रा० टी०—शतमिति । वपुष्मतां प्रशस्तशरीराणामच्छिन्नावयवानामित्यर्थः वाहसहस्राणां सहस्रसंख्याकबलीवर्दनीतानां तण्डुलानां शतं लक्षसंख्याकबलीवर्दनीततण्डुला इत्यर्थः तिलमुद्गस्य चणकादीनामयुतं च अत एषां तण्डुलादीनामनुरूपं योग्यं स्नेहं घृततैलपयोदध्यादिसंक्षिप्तं स्नेहापेक्षयाल्पं गन्धं किंच शतोत्तराः शतेन शतसंख्यया उत्तीर्यन्ते ज्ञायन्ते शतसंख्याका इत्यर्थः बहुला बहुजनग्रहणयोग्याः च अग्रे प्रयातु श्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

गो० टी०—शतमिति । वपुष्मतामिति । अखण्डानामित्यर्थः । शतं वाहसहस्राणीति । लक्षं बलीवर्दा इत्यर्थः । चणकानामिति । अतोनुरूपम् उक्तब्राह्मणभोजनसंविधानानुरूपम् । स्नेहं घृततैलपयोदध्यादिकमित्यर्थः । संक्षिप्तमेव गन्धमिति । अघृष्टमेवेत्यर्थः ॥ १९ ॥ २० ॥

२१ ] ति० टी०—हिरण्यस्य रजतस्य । शतोत्तराः । कोट्य इत्यनुकर्षः । समाधिना सावधानतया ॥ २१ ॥

रा० टी०—सुवर्णेति । हिरण्यस्य शतोत्तराश्शतैरुत्तारणयोग्याः बहुलाः सुवर्णकोट्यः भरतोग्रतः कृत्वा गच्छतु सुवर्णकोट्यः अग्रे कृत्वा गच्छतु समुदायस्य कर्मत्वेनान्वयात्र द्वितीया ॥ २१ ॥

गो० टी०—सुवर्णकोट्य इति । हिरण्यस्य रजतस्येत्यर्थः । शतोत्तरा इति । कोट्य इत्यर्थः । समाधिना सावधानतया ॥ २१ ॥

२२–२३ ] ति० टी०—अन्तरा मार्गमध्ये तत्र तत्रापेक्षिता आपणवीथ्यः । तत्प्रवर्तका वणिज इत्यर्थः—सर्व इति । 'दुन्दुभीन्समाघ्नन्ति,' 'वीणागाथिनौ गायतः' इत्यादि

---

१ नैगमा बलवृद्धाश्च द्विजाश्चेति गो. पा. । २ समाहितानिति रा. पा. ।

कर्मान्तिकान्वर्धकिनः कोशाध्यक्षांश्च नैगमान् । मम मातृस्तथा सर्वाः कुमारान्तःपुराणि च ॥ २४ ॥
काञ्चनीं मम पत्नीं च दीक्षायां ज्ञांश्च कर्मणि । अग्रतो भरतः कृत्वा गच्छत्वग्रे महायशाः ॥ २५ ॥
उपकार्या महार्हाश्च पार्थिवानां महौजसाम् । सानुगानां नरश्रेष्ठे व्यादिदेश महाबलः ॥ २६ ॥
अन्नपानानि वस्त्राणि अनुगानां महात्मनाम् । भरतः स तदा यातः शत्रुघ्नसहितस्तदा ॥ २७ ॥
वानराश्च महात्मानः सुग्रीवसहितास्तदा । विप्राणां प्रवराः सर्वे चक्रुश्च परिवेषणम् ॥ २८ ॥
विभीषणश्च रक्षोभिः स्त्रीभिश्च बहुभिर्वृतः । ऋषीणामुग्रतपसां पूजां चक्रे महात्मनाम् ॥ २९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकनवतितमः सर्गः ॥ ९१ ॥

## द्विनवतितमः सर्गः ।

स यागः निर्विघ्नः सबह्वन्नपानदक्षिणोऽदृष्टश्रुतपूर्वः साग्रवत्सरं समवर्तत ।

तत्सर्वमखिलेनाशु प्रस्थाप्य भरताग्रजः । हयं लक्षणसंपन्नं कृष्णसारं मुमोच ह ॥ १ ॥

कल्पसूत्रोक्तप्रयोगापेक्षिताः । यौवनशालिन इति 'पुमान्स्त्रिया' इत्येकशेषः ॥ २२ ॥ २३ ॥

रा० टी०—अन्तरेति । अन्तरापणवीथीप्रभृतयः भरतेन सार्द्धमग्रतो यान्तु सार्द्धश्लोक एकान्वयी ॥ २२ ॥

रा० टी०—नैगमानिति । नैगमादीन् भरतोऽग्रतः कृत्वा अग्रे पूर्वं गच्छन्तु तत्र नैगमाः शास्त्राभिज्ञाः कर्मान्तिकाः किङ्कराः अंतःपुराणि भरतादिस्त्रियः काञ्चनीं सुवर्णमयीं ताः पण्डिताः नैगमाः वैदिकाः सार्द्धश्लोकद्वयमेकान्वयि २३-२५

गो० टी०—अन्तरेति । अन्तरा मार्गमध्ये । तत्र चापेक्षिताः आपणवीथ्यः । तत्प्रवर्तका वणिजश्चेत्यर्थः ॥ २२ ॥ २३ ॥

२४ ] ति० टी०—कर्मान्तिकाः किंकराः । अन्तःपुराणि भरतादीनाम् ॥ २४ ॥

गो० टी०—कर्मान्तिकानिति । कर्मान्तिकाः किङ्कराः । कुमारान्तःपुराणीति । भरतलक्ष्मणशत्रुघ्नपत्न्य इत्यर्थः ॥२४॥

२५ ] ति० टी०—काञ्चनीं काञ्चनमयीम् । दीक्षायां दीक्षानिमित्तम् । कर्मणि ज्ञानकर्मविषयज्ञानवत ऋषीन् । 'ज्ञो विद्वान्सोमजोऽपि च' इत्यमरः । न च पत्न्या अपि यजमानत्वाद्यज्ञस्वामित्वाच्च स्वामिनो यजमानस्य प्रतिनिधिप्रतिषेधात्कथं पत्न्याः प्रतिनिधिः 'स्वामिनोऽग्रेर्देवतायाश्च शब्दात्कर्मणश्च प्रतिनिधिर्निवृत्तः' इत्यापस्तम्बसूत्रात्स्वामिनो यजमानस्य पत्न्या वा इति चेन्न । 'यस्य भार्यान्यदेशस्था नेष्यते पतिनाथवा । अशक्ता प्रतिकूला वा तस्याः प्रतिनिधिक्रिया ॥' इत्येवंविधे विषये प्रतिनिधेरनुमतत्वात् । 'अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः । अग्निहोत्रमुपासन्ते यावज्जीवमनुव्रताः । सौवर्णीं वा षोडशपलैर्माषकैः षोडशैरपि ॥' इति स्मृतेश्च । 'मृतायामपि भार्यायां वैदिकीं न त्यजेद्द्विजः । उपाधिनापि तत्कर्म यावज्जीवं समापयेत् ॥' इति विष्णुस्मृतेश्च । वस्तुतस्त्वेषां सौवर्णी न प्रतिनिधिः । देवताप्रतिमास्विव तत्त्वबुद्धिरेवं, न तु सादृश्यबुद्धिरत्रेति प्रतिनिधित्वाभावात्, किंतु भगवत ऋषीणां चावाहनादिसामर्थ्येन घटनाकौशलेन च तत्त्वबुद्धिरेवोत्पादात् । पत्नीकर्मनिर्वाहकत्वं च तत एव । अत एव 'काञ्चनीं मम पत्नीम्' इति संगच्छते । एतेन काम्येष्वश्वमेधादिषु कथं प्रतिनिधिरिति परास्तमित्याहुः ॥ २५ ॥

२६-२९ ] ति० टी०—उपकार्या वासस्थानानि ॥२६-२९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

रा० टी०—उपकार्या इति । पार्थिवानां उपकार्याः निवासस्थानानि अन्नादींश्च संपादयितुमिति शेषः नरश्रेष्ठो व्यादिदेश सार्द्धश्लोक एकान्वयी ॥ २६ ॥

रा० टी०—भरत इति । तदा रामाज्ञापनसमये भरतो यातः अर्द्धं पृथक् ॥ २७ ॥

रा० टी०—आगतवानरादीनां कर्तव्यमाह—वानरा इति । वानराः ये विप्राणां प्रवरास्तेभ्यः परिवेषणं चक्रुः ॥ २८ ॥

रा० टी०—विभीषण इति । विभीषणः ऋषीणां पूजां चक्रे ॥ २९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

गो० टी०—काञ्चनीमिति । काञ्चनीं मम पत्नीमिति । स्वर्णमयीं सीताप्रतिमामित्यर्थः । पत्न्याश्च प्रतिनिधिसद्भावादिकं सर्वं युद्धकाण्डे सप्रकारं निरूपितम्, तत्रैव द्रष्टव्यम् ॥ २५ ॥ २६ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकनवतितमः सर्गः ॥ ९१ ॥

१ ] ति० टी०—अथाश्वमेधप्रवृत्तिः—तत्सर्वमिति । यागोपकरणं सर्वमित्यर्थः । अखिलेनान्यूनतया जनेन वा । कृष्णसारं कृष्णसारमृगसमानवर्णम् । यद्वा कृष्णवर्णं सर्वयज्ञपशुभ्यः सारभूतं चेत्यर्थः ॥ १ ॥

१ श्रेष्ठ इति गो. पाठः । २ एतदादिपद्यत्रयं गो. पु. नास्ति । ३ समिति गो. पा. ।

ऋत्विग्भिर्लक्ष्मणं सार्धमश्वे च विनियुज्य च । ततोऽभ्यगच्छत्काकुत्स्थः सह सैन्येन नैमिषम् ॥ २ ॥
यज्ञवाटं महाबाहुर्दृष्ट्वा परममद्भुतम् । प्रहर्षमतुलं लेभे श्रीमानिति च सोऽब्रवीत् ॥ ३ ॥
नैमिषे वसतस्तस्य सर्व एव नराधिपाः । आनिन्युरुपहारांश्च तान्रामः प्रत्यपूजयत् ॥ ४ ॥
अन्नपानादिवस्त्राणि सर्वोपकरणानि च । भरतः सह शत्रुघ्नो नियुक्तो राजपूजने ॥ ५ ॥
वानराश्च महात्मानः सुग्रीवसहितास्तदा । परिवेषणं च विप्राणां प्रयताः संप्रचक्रिरे ॥ ६ ॥
विभीषणश्च रक्षोभिर्बहुभिः सुसमाहितः । ऋषीणामुग्रतपसां किंकरः समपद्यत ॥ ७ ॥
उपकार्या महार्हाश्च पार्थिवानां महात्मनाम् । सानुगानां नरश्रेष्ठो व्यादिदेश महाबलः ॥ ८ ॥
एवं सुविहितो यज्ञो ह्यश्वमेधो ह्यवर्तत । लक्ष्मणेन सुगुप्ता सा हयचर्या प्रवर्तत ॥ ९ ॥
ईदृशं राजसिंहस्य यज्ञप्रवरमुत्तमम् । नान्यः शब्दोऽभवत्तत्र हयमेधे महात्मनः ॥ १० ॥
छन्दतो देहि विस्रब्धो यावत्तुष्यन्ति याचकाः । तावत्सर्वाणि दत्तानि क्रतुमुख्ये महात्मनः ॥ ११ ॥

रा० टी०—अश्वमेधवृत्तं वर्णयन्नाह—तदित्यादिभिः । भरताग्रजः तत आज्ञापितं सर्वम् अखिलेन जनेन सह प्रस्थाप्य लक्षणैः यागोचितचिन्हैः संपन्नं कृष्णो नीलवर्णस्सारः स्थिरो यस्मिन् तं हयं मुमोच ॥ १ ॥

गो० टी०—तत्सर्वमित्यादि । कृष्णसारं कृष्णप्रधानम् । प्रायशः कृष्णवर्णमित्यर्थः । कृष्णशारमिति च पाठः ॥ १ ॥

२–३ ] ति० टी०—ऋत्विग्भिरिति । तं चतुःशता रक्षन्ति यज्ञस्याघाताय । तथा 'शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्प्रोक्षति' इति श्रुतेरिति भावः ॥ २ ॥ ३ ॥

रा० टी०—ऋत्विग्भिरिति । ऋत्विग्भिस्सार्द्धं लक्ष्मणः अश्वे तत्सहगमनाथ विनियुज्यते विन्ययुज्यत काकुत्स्थस्तु नैमिषमभ्यगच्छत् ॥ २ ॥

रा० टी०—यज्ञेति । महाबाहुः प्रहर्षं लेभे श्रीमान् अयं देशः निखिलसम्पत्तिसम्पन्नः इत्यब्रवीच्च ॥ ३ ॥

गो० टी०—ऋत्विग्भिरिति । अश्वतन्त्र इति । "चतुश्शता रक्षन्ति यज्ञस्याघाताय तथा शतेन राजपुत्रैः सहाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन् प्रोक्षति" इति श्रुतेः । अश्वरक्षादिसंबन्धयज्ञप्रयोगनिवर्तनार्थमित्यर्थः ॥ २ ॥ ३ ॥

४ ] ति० टी०—उपहारानुपदाः ॥ ४ ॥

रा० टी०—नैमिष इति । नैमिषे वसतस्तस्य रामस्य नराधिपाः उपहारानानिन्युः रामस्तु तान् प्रत्यपूजयत् ॥ ४ ॥

गो०टी०—नैमिष इति । उपहाराः उपदाः ॥ ४ ॥ ५ ॥

५–८ ] ति० टी०—तेषामेव स्वरूपकथनम्—अन्नेत्यादि । अथ राजसत्कारे भरतशत्रुघ्ननियोगः सुग्रीवादीनां विप्रपरिवेषणे विभीषणस्य ऋषिसत्कारे विनियोग इत्याह—भरत इत्यादि ॥ ५–८ ॥

रा० टी०—अन्नेति । अन्नादि सम्पाद्य विद्यमान इति शेषः भरतः राजपूजने नियुक्तः ॥ ५ ॥

रा० टी०—वानर इति । प्रयता वानराः विप्राणां परिवेषणं संप्रचक्रिरे ॥ ६ ॥

रा० टी०—विभीषण इति । विभीषण ऋषीणां किङ्करः सेवाकर्त्ता समपद्यत अभवत् ॥ ७ ॥

रा० टी०—उपकार्या इति । नरश्रेष्ठो रामः पार्थिवानामुपकार्याः व्यादिदेश स्थापयितुमाज्ञापयामासेति शेषः ॥ ८ ॥

गो० टी०—राजपूजामाह—अन्नेत्यादि । राजसत्कारे भरतशत्रुघ्ननियोगः सुग्रीवादीनां विप्रपरिवेषणे विभीषणस्य ब्रह्मर्षिसत्कारे नियोग इत्याह—भरत इत्यादि ॥ ६–८ ॥

९ ] ति० टी०—हयचर्याऽश्वमेधयागानुष्ठानमित्यर्थ इति तीर्थकतकौ । हयमार्गगमनमित्यर्थमन्ये ॥ ९ ॥

रा० टी०—एवमिति । एवं विहितः अश्वमेधो यज्ञोऽवर्त्तत हयचर्या लक्ष्मणेन गुप्ता सती प्रवर्त्तत प्रावर्तत ॥ ९ ॥

गो० टी०—एवमिति । हयचर्याम् अश्वमेधयागानुष्ठानम् ९

१०–११ ] ति० टी०—यज्ञप्रवरमुत्तमम् । अभयादिति शेषः । याचका यावत्तुष्यन्ति तावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥ ११ ॥

रा० टी०—ईदृशमिति । यत् ईदृशमुत्तमं तमोनिवर्तकं यज्ञप्रवरं तस्मिन् हयमेधे विश्रब्धस्सन् यावत् कालं याचकास्तुष्यन्ति तावत्कालं छन्दतो देहीति इत्येव शब्दोऽभवत् नान्यः अन्यशब्दो नाभवत् सार्द्धश्लोक एकान्वयी ॥ १० ॥

गो० टी०—नेति । याचकाः यावत्तुष्यन्ति तावद्देहि देहीति शब्दादन्यः शब्दो नाभवत् ॥ १० ॥

रा० टी०—तावदिति । क्रतुमुख्यं यावन्ति गौडादीनि प्रतिदिनं स्थापितानीति शेषः तावत् तावन्ति सर्वाणि दत्तानि भवन्ति ॥ ११ ॥

गो० टी०—तावदीति । सर्वाणि दत्तानीत्यस्यैव प्रपञ्चनं—विविधानीत्यादि । गौडानि गुडविकाररूपाणि ॥ ११ ॥

१ अश्वतन्त्रे नियोज्य चेति गो. पा. । २ ते इति रा. पा. । ३ वच इति गो. पा. । ४ सानुगानां महात्मनामिति गो. पाठः । संददावाशु शत्रुघ्नसहितस्तदेति गो. पा. । ६ विप्राणां प्रणताः सर्वे चक्रिरे परिवेषणमिति गो. पा. । ७ सुविभिर्वृत इति गो. पा. । ८ पूजां चक्रे महात्मनामिति गो. पा. । ९ यज्ञमिदं परिवेषणं भेदि पञ्चश्लोकोत्तराशीतिपरं गो. पु. । १० मर्त्तिरिति गो. पा. । ११ देहीतीति गो. पाठः ।

विविधानि च गौडानि खाण्डवानि तथैव च । न निःसृतं भवत्योष्ठाद्वचनं यावदर्थिनाम् ॥ १२ ॥
तावद्वानररक्षोभिर्दत्तमेवाभ्यदृश्यत । न कश्चिन्मलिनो वापि दीनो वाप्यथवा कृशः॥१३॥
तस्मिन्यज्ञवरे राज्ञो हृष्टपुष्टजनावृते । ये च तत्र महात्मानो मुनयश्चिरजीविनः ॥ १४ ॥
नास्मरंस्तादृशं यज्ञं दानौघसमलंकृतम् । यः कृत्यवान्सुवर्णेन सुवर्णं लभते स्म सः ॥ १५ ॥
वित्तार्थी लभते वित्तं रत्नार्थी रत्नमेव च । हिरण्यानां सुवर्णानां रत्नानामथ वाससाम् ॥ १६ ॥
अनिशं दीयमानानां राशिः समुपदृश्यते । न शक्रस्य न सोमस्य यमस्य वरुणस्य च ॥ १७ ॥
ईदृशो दृष्टपूर्वो न एवमूचुस्तपोधनाः । सर्वत्र वानरास्तस्थुः सर्वत्रैव च राक्षसाः ॥ १८ ॥
वासोधनान्नकामेभ्यः पूर्णहस्ता ददुर्भृशम् । ईदृशो राजसिंहस्य यज्ञः सर्वगुणान्वितः ॥
संवत्सरमथो साग्रं वर्तते न च हीयते । ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

## त्रिनवतितमः सर्गः ।

तस्मिन्क्रतौ वाल्मीकिरपि सशिष्य आजगाम स्वशिष्यौ कुशलवौ पूर्वमात्मना रचितं रामचरितं यज्ञवाटे रामस्येच्छया मधुरया गिरा निःस्पृहं गायतमित्यादिशच्च ।

वर्तमाने तथाभूते यज्ञे च परमाद्भुते । सशिष्य आजगामाशु वाल्मीकिर्भगवानृषिः॥ १ ॥

१२ ] ति० टी०—सर्वाणि वृत्तानीत्यस्यैव प्रपञ्चः—विविधानीति । यावदर्थिमुखाद्देहीति वचनं न निःसृतं भवति ॥ १२ ॥

रा० टी०—नेतीति । यावत् अर्थिनां वचनमोष्ठान्निस्सृतं न भवति तावदेव वानररक्षोभिर्दत्तमेव अभ्यदृश्यत ॥ १२ ॥

गो० टी०—नेति । अर्थिनां मुखाद्देहीति वचनं यावन्न निस्सृतं, तावद्दत्तमेवाभ्यदृश्यत ॥ १२ ॥ १३ ॥

१३-१४ ] ति० टी०—तावद्दत्तमेवाभ्यदृश्यत॥१३॥१४॥

रा० टी०—नेति । तस्मिन् यज्ञवरे मलिनत्वादिविशिष्टः कश्चिन्न ॥ १३ ॥

रा० टी०—ये इति । ये तत्र चिरजीविनस्तेपि तादृशं यज्ञं नास्मरन् तादृशो यागो नाभवदित्यर्थः ॥ १४ ॥

गो० टी०—ये चेति । चिरजीविनो मुनयः तादृशं यज्ञम् इतः पूर्वं तादृशो नासीदित्याहुरिति शेषः ॥ १४-१६ ॥

१५-१६ ] ति० टी०—'नास्मरंस्तादृशं यज्ञं न चाप्यासीत्कदाचन' इति पाठे तादृशयज्ञ इतः पूर्वं नासीदित्याहुरिति शेषः ॥ १५ ॥ १६ ॥

रा० टी०—य इति । यः सुवर्णेन कृत्यवान् प्रयोजनवान् सः सुवर्णं लभते स्म ॥ १५ ॥

रा० टी०—हिरण्यानामिति । दीयमानानां हिरण्यादीनां राशिस्समुपदृश्यते ॥ १६ ॥

१७-१८ ] ति० टी०—उक्त एवार्थ आदरादभ्यस्यते—न शक्रस्येति ॥ १७ ॥ १८ ॥

रा० टी०—नेति । ईदृशो यज्ञः शक्रादेर्दृष्टपूर्वो न तपोधना एवमूचुः ॥ १७ ॥

रा० टी०—सर्वत्रेति । वानरा राक्षसाश्च पूर्णहस्ताः सन्तः वासोधनान्नकामेभ्यः भृशं ददुः ॥ १८ ॥

गो० टी०—उक्त एवार्थ आदरादभ्यस्यते न शक्रस्येत्यादि ॥ १७ ॥ १८ ॥

१९ ] ति० टी०—वर्तते न च हीयते । संवत्सरात्परमपीति शेषः । पुनः पुनरश्वमेधः प्रावर्ततेत्यर्थः । तावत्पर्यन्तमेकाश्वमेधदीक्षेत्यन्ये ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

रा० टी०—ईदृश इति । ईदृशो राजसिंहस्य यज्ञः साग्रं किञ्चिदधिकं संवत्सरं वर्तते न च हीयते मध्ये विरमति ॥१९॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

गो० टी०—ईदृश इति । संवत्सरं वर्तते न च हीयते । संवत्सरात्परमपीति शेषः पुनः पुनरश्वमेधः प्रावर्ततेत्यर्थः ॥ १२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने द्विनवतितमः सर्गः ॥ ९२ ॥

१ ] ति० टी०—अथ यज्ञार्थमागतेन वाल्मीकिना कुशलवयो रामायणगाने नियोगः—वर्तमाने इति । तथाभूते उक्तप्रकारे ॥ १ ॥

१ तत्रेति गो. पाठः । २ कश्चित इति गो. पाठः । ३ नाप्यासीत्स कदाचनेति गो. पाठः । ४ रजतानामिति गो. पाठः । ५ अश्मनामिति गो. पाठः ६ धनेशस्येति गो. पा. । ७ वेति गो. पाठः । ८ अन्नमर्थिभ्य इति गो. पाठः । ९ मुनिपुङ्गव इति गो. पाठः ।

स दृष्ट्वा दिव्यसंकाशं यज्ञमद्भुतदर्शनम् । एकान्त ऋषिसंवातश्चकार उटजाञ्शुभान् ॥ २ ॥
शकटांश्च बहून्पूर्णान्फलमूलांश्च शोभनान् । वाल्मीकिवाटे रुचिरे स्थापयन्नविदूरतः ॥ ३ ॥
[ आसीत्सुपूजितो राज्ञा मुनिभिश्च महात्मभिः । वाल्मीकिः सुमहातेजा न्यवसत्परमात्मवान् । ]
स शिष्यावब्रवीद्धृष्टौ युवां गत्वा समाहितौ । कृत्स्नं रामायणं काव्यं गायतां परया मुदा ॥ ४ ॥
ऋषिवाटेषु पुण्येषु ब्राह्मणावसथेषु च । रथ्यासु राजमार्गेषु पार्थिवानां गृहेषु च ॥ ५ ॥
रामस्य भवनद्वारि यत्र कर्म चै कुर्वते । ऋत्विजामग्रतश्चैव तत्र गेयं विशेषतः ॥ ६ ॥
इमानि च फलान्यत्र स्वादूनि विविधानि च । जातानि पर्वताग्रेषु आस्वाद्यास्वाद्य गायताम् ॥ ७ ॥
न यास्यथः श्रमं वत्सौ भक्षयित्वा फलान्यथ । मूलानि च सुमृष्टानि न रागात्परिहास्यथः ॥ ८ ॥
यदि शब्दापयेद्रामः श्रवणाय महीपतिः । ऋषीणामुपविष्टानां यथायोगं प्रवर्तताम् ॥ ९ ॥

---

रा० टी०—लवकुशयोर्वृत्तमुपक्रमते—वर्त्तमान इत्यादिभिः । वाल्मीकिराजगाम ॥ १ ॥

गो० टी०—वर्तमान इत्यादि । तथाभूते प्रागुक्तप्रकारं प्रवृत्ते ॥ १ ॥

२ ] ति० टी०—'एकान्ते ऋषिवाटानाम्' इति पाठे समीपे इति शेषः । 'ऋषिसङ्घातः' इति पाठे वाल्मीकिना सहागतो ऋषिसमूह इत्यर्थः । उटजानिति बहुवचनं बहुशिष्यत्वात् ॥ २ ॥

रा० टी०—स इति । ऋषिसंघातः ऋषिसमूहवान् स वाल्मीकिः यज्ञं दृष्ट्वा एकान्ते उटजान् पर्णशालाः चकार कारयामास ॥ २ ॥

गो० टी०—स इति । ऋषिवाटानामिति । समीप इति शेषः । उटजानिति बहुवचनं बहुशिष्यत्वात् ॥ २ ॥

३ ] ति० टी०—शकटानन्नादिपूर्णान्फलमूलांश्च शोभनान्सर्वतो रुचिरे वाल्मीकिवाटेऽस्थापयन्नित्यर्थः । रुचिरोऽभूदिति शेष इति कतकव्याख्यानुसारी पाठो मृग्यः क्वचित् । 'शकटैर्बहुभिः पूर्णैः फलमूलैश्च शोभनैः । वाल्मीकिवाटो रुचिरः शोभयन्निव सर्वतः ॥' इति पाठः स इत्यन्ये ॥ ३ ॥

रा० टी०—शकटानिति । फलमूलान् फलमूलविशिष्टान् पूर्णान् शकटान् दूरतः एव विद्यमाने वाल्मीकिवाटे अस्थापयन् शिष्या इति शेषः एतेन रामदत्तं तेन न भुज्यते इति सूचितम् तेन तस्यातिस्नेहान्मिथिलाधिपतादात्म्यं सूचितम् फलमूलैरितिपाठान्तरम् इवशब्दः एवार्थे ॥ ३ ॥

गो० टी०—शकटानिति । रुचिर इति । अभूदिति शेषः ॥ ३ ॥ ६ ॥

४ ] ति० टी०—शिष्यौ कुशलवौ ॥ ४ ॥

५ ] ति० टी०—रथ्यासमार्गेषु ॥ ५ ॥

रा० टी०—स इति । स वाल्मीकिः शिष्यौ कुशलवौ अब्रवीत् तदाकारमाह युवामृषिवाटादिषु गत्वा रामायणं काव्यं गायतां श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

६ ] ति० टी०—यत्र कर्म । अश्वमेधयाग इत्यर्थः ॥ ६ ॥

रा० टी०—रामस्येति । रामस्य भवनद्वारि यत्र च कर्म कुर्वते ब्राह्मणा इति शेषः तत्र च ऋत्विजामग्रतश्च विशेषतो गेयम् ॥ ६ ॥

गो० टी०—रामस्येति । यत्र कर्म चेति । अश्वमेधयाग इत्यर्थः ॥ ७ ॥

७ ] ति० टी०—अत्रास्मद्वाटसमीपपर्वताग्रे विद्यमानानि फलान्यास्वाद्य गायताम् । लोट्प्रथमपुरुषद्विवचनम् । यदा यदा श्रमस्तदा तदा भवन्ताविति शेषः ॥ ७ ॥

रा० टी०—इमानीति । पर्वताग्रेषु जातानि फलानि आस्वाद्य आस्वाद्य गायताम् ॥ ७ ॥

गो० टी०—इमानीति । अत्रास्माकं वाटे । विद्यमानान्यास्वाद्य । गायतामिति लोट्प्रथमपुरुषद्विवचनम् । यदा यदा श्रमः तदा तदैवं कुरुतम् । भवन्ताविति शेषः ॥ ८ ॥

८ ] ति० टी०—फलानि भुक्त्वा न श्रमं यास्यथो नापि रागात्कण्ठमाधुर्यात्परिहास्यथः । ' नगराद्बहिरास्यथः ' इति पाठे रात्रिकाले इति शेषः । उटजेष्वित्यर्थः । आस्यथोऽवतिष्ठेताम् । आसेरार्षे श्यन्परस्मैपदे ॥ ८ ॥

रा० टी०—नेति । फलादीनि भक्षयित्वा श्रमं न यास्यथः रागात्परिहास्यथश्च न ॥ ८ ॥

गो० टी०—नेति । नगराद्बहिरास्यथः । क्षत्रियकुलेष्विति शेषः । नगराद्बहिः उटज इत्यर्थः । आस्यथः अधितिष्ठतमिति यावत् । आसेश्छान्दसः श्यन् परस्मैपदं च ॥ ९ ॥

९ ] ति० टी०—शब्दापयेदाह्वयेत् । ऋषीणामग्रे इति शेषः ॥ ९ ॥

रा० टी०—यदीति । ऋषीणां मध्ये विद्यमानो रामः श्रवणाय यदि शब्दापयेत् तदा यथायोगं गीतयोगमनतिक्रम्य प्रवर्त्ततां प्रवर्त्तेताम् ॥ ९ ॥

गो० टी०—यदीति । शब्दापयेत् आह्वयेत् ॥ १० ॥

---

१ वाटानामिति गो. संघात इति रा. पा. । २ मूलैरिति गो. पाठः । ३ पद्यमिदमधिकं गो. पाठे । ४ गायेथामिति गो. पाठः । ५ प्रवर्तेत इति गो. पाठः । ६ वै इति गो. पाठः । ७ बहिरास्यथ इति गो. पाठः । ८ तत्तो गेयमिति गो. पाठः ।

दिवसे विंशतिः सर्गा गेया मधुरया गिरा । प्रमाणैर्बहुभिस्तत्र यथोद्दिष्टं[1] मया पुरा ॥ १० ॥
लोभश्चापि न कर्तव्यः स्वल्पोऽपि धनवाञ्छया । किं धनेनाश्रमस्थानां फलमूलाशिनां[2] सदा ॥ ११ ॥
यदि पृच्छेत्स काकुत्स्थो युवां कस्येति दारकौ । वाल्मीकेरथ शिष्यौ द्वौ[3] ब्रूतमेवं नराधिपम् ॥ १२ ॥
इमास्तन्त्रीः सुमधुराः स्थानं वापूर्वदर्शनम् । मूर्च्छयित्वा सुमधुरं गायतां[4] विगतज्वरौ ॥ १३ ॥
आदिप्रभृति गेयं स्यान्न चावज्ञाय पार्थिवम् । पिता हि सर्वभूतानां राजा भवति धर्मतः ॥ १४ ॥
तद्युवां हृष्टमनसौ श्वः प्रभाते समाहितौ[5] । गायतं[6] मधुरं गेयं तन्त्रीलयसमन्वितम् ॥ १५ ॥
इति संदिश्य बहुशो मुनिः प्राचेतसस्तदा । वाल्मीकिः परमोदारस्तूष्णीमासीन्महामुनिः[7] ॥ १६ ॥
संदिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ । तथैव करवावेति निर्जग्मतुररिंदमौ ॥ १७ ॥
तामद्भुतां तौ हृदये कुमारौ निवेश्य वाणीमृषिभाषितां तदा[8] ।
समुत्सुकौ तौ सुखमूषतुर्निशां यथाश्विनौ भार्गवनीतिसंहिताम् ॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

१०-११ ] ति० टी०-**दिवसे इति** । तत्र रामायणे बहुभिः प्रमाणैर्नानासंख्यश्लोकैर्यथा पुरा मया सर्गाआदिष्टास्तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गा गेयाः ॥ १० ॥ ११ ॥

रा० टी०-गानविधिमाह-**दिवस इति** । बहुभिः प्रमाणैः श्रुत्यर्थैर्विशिष्टं यद्रामायणं तस्य विंशतिस्सर्गाः दिवसे एकदिने मया यथोद्दिष्टमुपदिष्टं यथा भवति तथा गेयाः ॥ १० ॥

रा० टी०-**लोभ इति** । फलमूलाशिनां धनेन किं न किमपीत्यर्थः अतः धनवाञ्छया स्वल्पोपि लोभो न कर्त्तव्यः॥११॥

गो० टी०-**दिवस इति** । तत्र रामायणे बहुभिः सर्गप्रमाणैर्यथा मया पुरा सर्गा उद्दिष्टाः तेषु सर्गेषु दिवसे दिवसे विंशतिसर्गा गेयाः ॥ ११-१२ ॥

१२ ] ति० टी०-आवां वाल्मीकेः शिष्यौ स्व इत्येवमेव ब्रूतम्, नामुकदारकाविति ॥ १२ ॥

रा० टी०-**यदीति** । तदा आवां वाल्मीकेश्शिष्यौ एवं नराधिपं रामं ब्रूताम् ॥ १२ ॥

गो० टी०-**यदीति** । आवां वाल्मीकिशिष्यौ स्व इत्येवं ब्रूतम्, नामुकदारकाविति ॥ १३ ॥

१३ ] ति० टी०-इमास्तन्त्रीः वीणाशिरा इत्यर्थः । मधुरा मधुरशब्दाः । अपूर्वदर्शनमपूर्वाणां स्वराणां दर्शनं यत्र तादृशं स्थानं षड्जादिस्वरभेदसिद्धये वीणादण्डोपरि कल्पितशिराधारकाष्ठपङ्क्तिरूपं तच मूर्च्छयित्वा तत्रापि नादव्याप्तिं कृत्वा सुमधुरं गायताम् ॥ १३ ॥

रा० टी०-**इमा इति** । तंत्रीः वीणास्वंनान् मूर्छयित्वा मूर्छनया निष्पाद्य मधुराणामनेकविधमधुररसानामास्थानं स्थितिर्यस्मिन् अत एव अपूर्वदर्शनं अदृष्टपूर्वं रामायणं समधुरं यथा भवति तथैव गायतां वा शब्द एवार्थे ॥ १३ ॥

गो० टी०-**इमा इति** । इमास्तन्त्रीरिति । वीणाशिरा इत्यर्थः । अपूर्वदर्शनम् अपूर्वस्वराणां दर्शनम् यत्र तत्तथा तादृशं स्थानं, षड्जादिस्वरभेदसिद्धये वीणादण्डोपरि कल्पितं शिराणां स्पर्शविशेषसिद्धिप्रयोजनस्थानपङ्क्तिः स्थानमित्युच्यते । तद्वा मूर्छयित्वा तत्र वा नादव्याप्तिं कृत्वा ॥ १४ ॥

१४-१७ ] ति० टी०-आदिप्रभृति । संक्षेपमारभ्येत्यर्थः । पार्थिवं न चावज्ञाय । स्थलान्तर इव तत्समीपे लीलापरिहासादिकं न कर्तव्यमित्यर्थः । तत्र हेतुः—**पिता हीति** ॥ १४-१७ ॥

रा० टी०-**आदीति** । हि यतः राजा सर्वभूतानां पिता अतः नावज्ञाय तदाह्वानेन तं गत्वैवेत्यर्थः आदिप्रभृति रामायणं ज्ञेयं स्यात् त्वयेति शेषः ॥ १४ ॥

रा० टी०-**तदिति** । स्वरागामिनि प्रभाते समास्थितौ युवां गेयं गातुं योग्यं तंत्रीलयसमन्वितमत एव मधुरं यथा भवति तथा गायेतम् ॥ १६ ॥

रा० टी०-**इतीति** । वाल्मीकिरिति सन्दिश्य तूष्णीमासीत् ॥ १६ ॥

रा० टी०-**सन्दिष्टाविति** । मैथिलीसुतौ तथैव करवावेत्युक्त्या निर्जग्मतुः ॥ १७ ॥

गो० टी०-**आदीति** । आदिप्रभृतीति संक्षेपमारभ्येत्यर्थः । पार्थिवं न चावज्ञायेति । तत्समीपे स्थलान्तर इव लीलापरिहासादिकं न कर्तव्यमित्यर्थः । तत्र हेतुः—**पिता हि सर्वभूतानामिति** ॥ १९-१८ ॥

१८ ] ति० टी०-भार्गवनीतिसंहितामश्विनाविव तौ तां वाणीं हृदये निवेश्य श्वो गातव्यमित्येवंरूपां गातुं समुत्सुकौ निशामृषिणा सहोषतुः ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

१ उद्दिष्ट इति गो. पाठः । २ उपजीविनामिति गो. पाठः । ३ स्व इति गो. पा. । ४ गायेथामिति गो. पाठः । ५ आस्थिताविति गो. पाठः । गायेथामिति गो. गायेतमिति रा. पा. । ७ महायशा इति गो. पाठः । ८ समामिति गो. पाठः ।

# चतुर्नवतितमः सर्गः ।

यदा रामोऽध्वरशालायामृषिभिर्नानाशास्त्रकलाविद्भिः सममुपविष्टस्तदैव तौ कुशलवौ प्राचेतसादधीतं रामचरितं तन्त्रीलयसमन्वितं सुगीतसंपत्प्रचुरं प्रथमात्प्रभृतिविंशतिसर्गपर्यन्तं प्रागायतां तच्छ्रवणतुष्टकाकुत्स्थवितीर्णं बहुसुवर्णं किमनेनावयोः फलमूलाशिनोर्वनवास्तव्ययोरिति न्यवक्कृतवन्तौ तदत्युत्कण्ठितेन रामेण पृष्टौ वाल्मीकिरस्य कर्तेत्याद्यकथयताम् ।

तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ । यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥ १ ॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्यविनिर्मिताम् । अपूर्वां पाठ्यजातिं च गेयेन समलंकृताम् ॥ २ ॥
प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम् । बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥ ३ ॥
अथ कर्मान्तरे राजा समाहूय महामुनीन् । पार्थिवांश्च नरव्याघ्रः पण्डितान्नैगमांस्तथा ॥ ४ ॥
पौराणिकाञ्शब्दविदो ये वृद्धाश्च द्विजातयः । स्वराणां लक्षणज्ञांश्च उत्सुकान्द्विजसत्तमान् ॥ ५ ॥

रा० टी०—तामिति । अश्विनौ भार्गवेनोपदिष्टां नीतिसंहितामिव ऋषिभाषितां वाणीं हृदये निवेश्य निशां सुखमूषतुः काळाध्वनोरिति द्वितीया ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

गो० टी०—तामिति भार्गवनीतिसंहिताम् अश्विनाविव तौ तां वाणीं हृदये निवेश्य । श्वो गातव्यां स्मृत्वेत्यर्थः निशां निशायाम् । सममिति । ऋषिभिरित्यर्थः । सममूषतुरिति च पाठः । भार्गवनीतिसंस्कृतौ इति पाठान्तरे तु वाल्मीकिशिक्षितावित्यर्थः ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्रिनवतितमः सर्गः ॥ ९३ ॥

१ ] ति० टी०—अथ राघवेण परिषदा सह रामायणश्रवणम्—ताविति ॥ १ ॥

रा० टी०—लवकुशकर्तृकमुनिवचनस्वीकारानन्तरकालिकं वृत्तमाह—तावित्यादिभिः । तौ कुशीलवौ ऋषिणा यथोक्तं तत्र ऋष्यादिसमीपे उपगायताम् ॥ १ ॥

गो० टी०—तौ रजन्यामित्यादि । हुतहुताशनौ कृतसमिदाधानौ ॥ १ ॥

२–३ ] ति० टी०—पूर्वाचार्यविनिर्मितां गाथकानां गानसिद्धये पूर्वाचार्येण भरतेन निर्मिताम् । 'पूर्वचर्यां ततस्ततः' इति पाठे ततस्ततोऽयोध्यावनादौ कृतं स्वकीयं पूर्वचरितमित्यर्थः । अपूर्वां प्रागश्रुताम् । पाठ्यजातिं पाठ्यस्य गेयस्य जातिं षड्जादिस्वररूपामिति कतकः । 'पाठ्यजातम्' इति पठित्वा पाठ्यं नाम गानाधारस्य केवलवाक्यस्य स्वरूपोच्चारणमात्रमिति तीर्थ आह । गेयेन गानधर्मेण स्वरविशेषेण समलंकृताम् । प्रमाणैर्ध्वनिपरिच्छेदसाधनैर्द्रुतमध्यविलम्बितावृत्तिभिः प्रागुक्तस्थानैर्वा युक्तां तां गीतिं शुश्राव । बालाभ्यां गीतां तां श्रुत्वा कौतूहलपरः । विस्मयवानित्यर्थः ॥ २ ॥ ३ ॥

रा० टी०—तामिति । पूर्वाचार्येण विनिर्मिताम् अपूर्वां पूर्वमश्रुतां पाठ्यस्य गानविशेषस्य जातिरुत्पत्तिर्यस्यां गेयेन स्वरेण समलंकृतां बहुभिः प्रमाणैः श्रुत्यर्थैः बद्धां संयुक्तां तन्त्रीलयसमन्वितां तां गाथां काकुत्स्थः शुश्राव श्रुत्वा च कौतूहलपरोभवत् श्लोकद्वयमेकान्वयि ॥ २ ॥ ३ ॥

गो० टी०—तामिति । पूर्वेति । गायकाभ्यां पूर्वमाचार्येण निर्मिताम् अपूर्वां प्रागश्रुताम् । पाठ्यस्य गेयस्य जातिः षड्जादिः । गेयेन गानधर्मेण ॥ २ ॥

गो० टी०—प्रमाणैरिति । प्रमाणैः ध्वनिपरिच्छेदसाधनैः । कौतूहलपरः विस्मयवान् ॥ ३ ॥

४ ] ति० टी०—कर्मान्तरे । अश्वमेधप्रयोगाणां विरामकाले इत्यर्थः ॥ ४ ॥

रा० टी०—अथेति । कार्मान्तरे यागप्रयोगविरामकाले राजा रामः एतान् महामुनिप्रभृतीन् समाहूय गातारौ समवेशयत् वृद्धा द्विजातय इत्यत्र सुबन्तसमुदायस्य कर्मत्वेनान्वयात्र द्वितीया तत्र पण्डिताः परमहंसाः नैगमाः वेदाभिज्ञाः शब्दविदः शब्दशास्त्रनिपुणाः लक्षणज्ञाः सामुद्रिकाः नैगमाः पौराः अत एव न पौनरुक्त्यम् पादाक्षरसमासज्ञाः साहित्यविदः कलामात्राविशेषज्ञाः प्रस्तारविदः क्रियाकल्पविदः कल्पक्रियाभिज्ञत्वहेतुकविचारकुशलाः व्यवहारकाले युक्तप्रयोगप्रतिपादनसमर्थाः हैतुकाः हेतुप्रतिपादननिपुणाः नैयायिका इत्यर्थः छन्दोविदः वैदिकच्छन्दोभिज्ञाः पुराणज्ञाः प्राचीनवस्तुज्ञानवन्तः चित्रज्ञाः आलेख्यकरणे समर्थाः चित्रकाव्यकरणे समर्था वा सूत्रज्ञाः अल्पोक्त्यैव ज्ञानसमर्थाः श्लोकषट्कमेकान्वयि ॥ ४–९ ॥

गो० टी०—अथेति । कर्मान्तरे अश्वमेधस्य प्रयोगावसाने ॥ ४ ॥

५ ] ति० टी०—स्वराणां षड्जादिस्वराणाम् । उत्सुकान्रामायणश्रवणोत्सुकान् ॥ ५ ॥

गो० टी०—पौराणिकानिति । स्वराणां षड्जादिस्वराणाम् । उत्सुकान् रामायणश्रवणोत्सुकानित्यर्थः ॥ ५ ॥

१ युक्तामिति गो. पाठः ।

लक्षणज्ञांश्च गान्धर्वान्नैगमांश्च विशेषतः । पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान् ॥ ६ ॥
कलामात्राविशेषज्ञाञ्ज्योतिषे च परं गतान् । क्रियाकल्पविदश्चैव तथा कार्यविशारदान् ॥ ७ ॥
[ भाषाज्ञानिङ्गितज्ञांश्च नैगमांश्चाप्यशेषतः । ]
हेतूपचारकुशलान्हैतुकांश्च बहुश्रुतान् । छन्दोविदः पुराणज्ञान्वैदिकान्द्विजसत्तमान् ॥ ८ ॥
चित्रज्ञान्वृत्तसूत्रज्ञान्गीतनृत्यविशारदान् । [ शास्त्रज्ञान्नीतिनिपुणान्वेदान्तार्थप्रकाशकान् । ]
एतान्सर्वान्समानीय गातारौ समवेशयत् । ॥ ९ ॥
तेषां संवदतां तत्र श्रोतॄणां हर्षवर्धनम् । गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥ १० ॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् । न च तृप्तिं ययुः सर्वे श्रोतारो गेयसंपदा ॥ ११ ॥
हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः । पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥ १२ ॥
ऊचुः परस्परं चेदं सर्व एव समाहिताः । उभौ रामस्य सदृशौ बिम्बाद्बिम्बमिवोद्धृतौ ॥ १३ ॥
जटिलौ यदि न स्यातां न वल्कलधरौ यदि । विशेषं नाधिगच्छामो गायतो राघवस्य च ॥ १४ ॥

६ ] ति० टी०—लक्षणज्ञान्सामुद्रिकलक्षणज्ञान्, गान्धर्वान्संगीतशास्त्रज्ञान्, नैगमान्पौरान् । पादाक्षराणां गुरुलघुप्रयोगलक्षणं समासं संबन्धं जानन्ति तान् । छन्दःसु वेदेषु गायत्र्यादिच्छन्दःप्रतिपादकशास्त्रेषु ॥ ६ ॥

गो० टी०—लक्षणज्ञानिति । गान्धर्वान् गान्धर्वशास्त्रज्ञान् । पादाक्षरसमासज्ञान् पादाक्षराणां गुरुलघुसामान्यज्ञान् छन्दस्सु वेदेषु ॥ ६ ॥

७ ] ति० टी०—कलाः स्वरास्तेषां मात्रा एकद्वित्रिलक्षणास्तेषां विभागज्ञान् । परं गतानन्तर्ज्ञानवतः । क्रियां तत्प्रतिपादकं कल्पसूत्रं च विदन्ति तान् । कार्यविशारदानावापोद्धारादिकृत्यविशेषज्ञान् ॥ ७ ॥

गो० टी०—कलामात्रेति । कलामात्रविभागज्ञान् कलाः स्वराः तेषां मात्राः एकद्वित्रिलक्षणाः तेषां विभागज्ञान् । परं पारं गतान् । क्रियाकल्पविदः क्रियाकल्पः क्रियाप्रयोगप्रतिपादकं कल्पसूत्रं तद्विदस्तज्ज्ञान् । काव्यविदः काव्यलक्षणलक्ष्यविद इत्यर्थः । काव्यविदो जनानिति च पाठः ॥ ७ ॥

८ ] ति० टी०—हेतुपचारकुशलान्केवलव्यवहारकाले युक्तिप्रयोगसमर्थान् । हैतुकांस्तार्किकान् । छन्दो गायत्र्यादि । वैदिकान्वैदिकपावादिलक्षणज्ञान् ॥ ८ ॥

गो० टी०—भाषाज्ञानिति । भाषाज्ञान् अष्टादशभाषास्वरूपज्ञान् । इङ्गितज्ञान् अभिप्रायविदः । नैगमान्वणिजः । पूर्वत्र पौरानित्यर्थः । वचने चापि केवलव्यवहारेपि, हेतूपचारकुशलान् युक्तिप्रयोगसमर्थान् । हैतुकान् तार्किकान् ॥८॥

गो० टी०—छन्द इति । वृत्तज्ञान् । वृत्तशास्त्रज्ञान् । चित्रज्ञान् चक्रबन्धादिसहितचित्रकाव्यरचनानिपुणान् ॥ ९ ॥

९–१२ ] ति० टी०—चित्रज्ञान्गोमूत्रमुरजादिचित्रश्लोकनिबन्धनचतुरान् । वृत्तज्ञान्धर्मशास्त्रमुखेन सदाचारज्ञान् । सूत्राणि पदवाक्यादिसूत्राणि तज्ज्ञान् । एतानिति । एतेनाशेषविद्यास्थानं रामायणमिति दर्शितम् । समवेशयत् । सर्वपरिषन्मध्ये गानायेति शेषः ॥ ९–१२ ॥

गो० टी०—शास्त्रेति । शास्त्रज्ञान् व्याकरणादिशास्त्रज्ञान् समवेशयत् । सभामध्ये इति शेषः ॥ १०–१६ ॥

रा० टी०—तेषामिति । श्रोतॄणां हर्षवर्द्धनं वचनं संवदतां तौ कुशीलवौ गेयं प्रचक्रमतुः ॥ १० ॥

रा० टी०—तत इति । अतिमानुषं गान्धर्वं गान्धर्वविद्याप्रवृत्तमत एव श्रोतारः गेयसम्पदा तृप्तिं न ययुः ॥११॥

रा० टी०—हृष्टा इति । मुनिगणाः पार्थिवाश्च चक्षुर्भिः पिबन्त इव मुहुर्मुहुः पश्यन्ति स्म ॥ १२ ॥

१३ ] ति० टी०—बिम्बाद्रवेर्बिम्बाद्विनिम्बान्तरमिवोद्धृतौ ॥ १३ ॥

रा० टी०—ऊचुरिति । समाहिता एकाग्रचित्ताः सर्वे परस्परमूचुः तदाकारमाह बिम्बाद् राममूर्तेः बिम्बं प्रतिबिम्बमिव उद्धृतौ अत एव रामस्य सदृशौ स्त इति शेषः ॥१३॥

१४ ] ति० टी०—जटिलौ वल्कलधरौ यदि न स्यातां तदा राघवस्य गायतोश्च विशेषं नाधिगच्छाम इत्यूचुः ॥ १४ ॥

रा० टी०—जटिलौ इति । जटिलौ वल्कलधरौ च यदि न स्यातां तर्हि गायतोः लवकुशयोः राघवस्य च विशेषं नाधिगच्छामः ॥ १४ ॥

१ भागज्ञाञ्ज्यौतिषे इति गो. पाठः । २ विदो जनानिति गो. पा. । ३ अर्धमिदमधिकं गो. पु. । ४ वचने चापि हैतुकानिति गो. पाठः । ५ अर्द्धमिदमधिकं गो. पु. । ६ गानेति गो. पा. । ७ हृष्टेति गो. पा. । ८ पद्यमिदं गतनवमपद्योत्तरं गो. पुस्तके । ९ चक्षुर्भ्यां राजानं गायकौ च ताविति गो. पा. । १० समंतत इति गो. पा. । ११ उत्थिताविति गो. पा. । १२ अस्मात्परतो गतदशमैकादशपद्ये गो. पुस्तके दृश्येते ।

एवं प्रभाषमाणेषु पौरजानपदेषु च । प्रवृत्तमादितः पूर्वसर्गं नारददर्शितम् ॥ १५ ॥
ततः प्रभृति सर्गांश्च यावद्विंशत्यगायताम् । ततोऽपराह्णसमये राघवः समभाषत ॥ १६ ॥
श्रुत्वा विंशतिसर्गांस्तान्भ्रातरं भ्रातृवत्सलः । अष्टादश सहस्राणि सुवर्णस्य महात्मनोः ॥ १७ ॥
प्रयच्छ शीघ्रं काकुत्स्थ यदन्यदभिकाङ्क्षितम् । ददौ स शीघ्रं काकुत्स्थो बालयोर्वै पृथक्पृथक् ॥ १८ ॥
दीयमानं सुवर्णं तु नागृह्णीतां कुशीलवौ । ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥ १९ ॥
वन्येन फलमूलेन निरतौ वनवासिनौ । सुवर्णेन हिरण्येन किं करिष्यावहे वने ॥ २० ॥
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः । श्रोतारश्चैव रामश्च सर्व एव सुविस्मिताः ॥ २१ ॥
तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः । पप्रच्छ तौ महातेजास्तावुभौ मुनिदारकौ ॥ २२ ॥
किंप्रमाणमिदं काव्यं का प्रतिष्ठा महात्मनः । कर्ता काव्यस्य महतः क्व चासौ मुनिपुंगवः ॥ २३ ॥
•पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ । वाल्मीकिर्भगवान्कर्ता संप्राप्तो यज्ञसंविधम् ॥
येनेदं चरितं तुभ्यमशेषं संप्रदर्शितम् । ॥ २४ ॥

१५–१८ ] ति० टी०–तत्र गेये नारददर्शितं पूर्वसर्गमादितः प्रवृत्तं कृत्वा ततःप्रभृति यावद्विंशतिसर्गानगायताम् । अनेन प्रत्यहं संक्षेपरामायणमादितः कृत्वा यावद्रामायणसमाप्ति विंशतिसर्गाण्णां गानमिति तीर्थः ॥ १६–१८ ॥

रा० टी०–एवमिति । आदितः आदौ नारददर्शितं पूर्वं सर्गं मूलरामायणमित्यर्थः प्रवृत्तम् ॥ १५ ॥

रा० टी०–तत इति । ततः प्रभृति मूलरामायणादारभ्य यावद्विंशतिसर्गानगायताम् अर्द्धं पृथक् । तत इति । राघवः विंशतिसर्गान् श्रुत्वा भ्रातरं समभाषत ॥ १६ ॥

रा० टी०–तदाकारमाह—अष्टादशेति । सुवर्णस्य स्वर्णमुद्रायाः अष्टादशसहस्राणि अन्यत् ततो भिन्नं यदभिकाङ्क्षितं तच्च महात्मनोः पप्रच्छ ॥ १७ ॥

रा० टी०–ददाविति । काकुत्स्थः भरतः बालयोः पृथक्पृथक् ददौ अष्टादशसहस्राकस्वर्णमुद्रामिति शेषः कुशीलवौ तु दीयमानं सुवर्णं नागृह्णीताम् ॥ १८ ॥

गो० टी०–प्रवृत्तमिति । तत्र गेयेन नारददर्शितं पूर्वसर्गमादितः प्रवृत्तम् ॥ १६–१८ ॥

१९ ] ति० टी०–कुशीलवौ कुशलवौ विस्मितौ सकृदेव बहुदानतो विस्मयवन्तौ ॥ १९ ॥

रा० टी०–ऊचतुरिति । महात्मानौ कुशलवौ ऊचतुः तदाकारमाह अनेन सुवर्णेन नौ आवयोः किं प्रयोजनमिति शेषः न किमपीत्यर्थः अर्द्धं पृथक् ॥ १९ ॥

गो० टी०–दीयमानमिति । कुशीलवौ, विस्मितौ सकृदेव बहुप्रदानतः विस्मयवन्तौ, किमनेनेत्येवोचतुश्च ॥ १९ ॥

२०–२१ ] ति० टी०–किमनेनेति क्षेपाशयमेव स्पष्टीकुरुतः—वन्येनेति । निरतौ निरताहारौ । नियताहाराविति यावत् । सुवर्णेन सुवर्णरूपेण हिरण्येन । द्रव्येणेत्यर्थः ॥ २० ॥ २१ ॥

रा० टी०–तदेव भंग्यन्तरेणाह–वन्येनेति । फलमूलेन नियतौ नियताहारौ आवां सुवर्णेन अतिशोभनवर्णेन हिरण्येन किं करिष्यावहे ॥ २० ॥

रा० टी०–तथेति । कौतूहलसमन्विताः आश्चर्यगाथाश्रवणविशिष्टाः श्रोतारो रामश्च सुविस्मिता अभवन्निति शेषः ॥ २१ ॥

गो० टी०–तदेव स्पष्टीकरोति—वन्येनेत्यादि । निरतौ निरताहारौ ॥ २० ॥ २१ ॥

२२ ] ति० टी०–आगमं कुशलवयोस्तत्प्राप्तिकारणम् । तौ ताविति वीप्सा ॥ २२ ॥

रा० टी०–तस्येति । तस्य काव्यस्यागमं प्राप्तिं श्रोतुमुत्सुको रामः मुनिदारकौ पप्रच्छ ॥ २२ ॥

गो० टी०–तस्येति । आगमं प्राप्तिम् ॥ २२ ॥

२३ ] ति० टी०–प्रथमदिवसश्रुतविंशतिसर्गमध्ये श्रुतस्यैव प्रमाणाद्यर्थस्यादरात्प्रश्ने पुनस्ताभ्यां प्रतिपादनं मुनिना च तदीयोत्तरत्वेन तत्प्रतिपादकग्रन्थग्रथनं किंप्रमाणमित्यादि । महात्मनः कवेः का प्रतिष्ठा । को विषय इत्यर्थः । 'महात्मनोः' इति पाठे महात्मनोर्भवतोः प्रतिष्ठा आश्रयः क इत्यर्थः । कर्ता काव्यस्येत्यत्र क इत्यनुकर्षः । क्व चासौ । आस्ते इति शेषः ॥ २३ ॥

रा० टी०–तदाकारमाह—किमिति । इदं काव्यं किम्प्रमाणं कियत्परिमितिकम् महात्मनः अतिप्रयत्नान्निष्पन्नस्य काव्यस्य का प्रतिष्ठा कियत्कालपर्यन्तं स्थितिरित्यर्थः काव्यकर्ता मुनिपुंगवः क्व चास्ति कर्तुः स्थितिमात्रप्रश्नेन कर्तृत्वस्य मुनौ निश्चयोऽस्तीति सूचितम् ॥ २३ ॥

गो० टी०–किंप्रमाणमिदमित्यादि । का प्रतिष्ठा कियत्पर्यन्तमित्याशयः । काव्यस्य कः कर्तेत्यनुकर्षः । मुनिपुङ्गव इति । आस्त इति शेषः ॥ २३ ॥ २४ ॥

२४ ] ति० टी०–येन काव्येनाशेषमिदं तुभ्यं तव चरितं

१ इदमर्धं गो. पुस्तके न दृश्यते ।

संनिबद्धं हि श्लोकानां चतुर्विंशत्सहस्रकम् । उपाख्यानशतं चैव भार्गवेण तपस्विना ॥ २५ ॥
आदिप्रभृति वै राजन्पञ्चसर्गशतानि च । काण्डानि षट् कृतानीह सोत्तराणि महात्मना ॥२६॥
कृतानि गुरुणास्माकमृषिणा चरितं तव । प्रतिष्ठा जीवितं यावत्तावत्सर्वस्य वर्तते ॥ २७ ॥
यदि बुद्धिः कृता राजञ्छ्रवणाय महारथ । कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः ॥ २८ ॥
बाढमित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवौ । प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुंगवः ॥ २९ ॥
रामोऽपि मुनिभिः सार्धं पार्थिवैश्च महात्मभिः । श्रुत्वा तद्गीतिमाधुर्यं कर्मशालामुपागमत् ॥ ३० ॥
शुश्राव तत्तालयोपपन्नं सर्गान्वितं सुस्वरशब्दयुक्तम् ।
तन्त्रीलयव्यञ्जनयोगयुक्तं कुशीलवाभ्यां परिगीयमानम् ॥ ३१ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

---

संप्रदर्शितं तस्य काव्यस्य कर्ता वाल्मीकिः । क्वास्ते इत्यस्योत्तरं संप्राप्तो यज्ञसंविधम् । अनुस्वार आर्षः । यज्ञसदःसविधदेशं संप्राप्तः । तत्र तिष्ठतीति भावः । 'संविदम्' इति वा पाठ इति कश्चित् ॥ २४ ॥

रा० टी०–पृच्छन्तामिति । मुनि तारकौ ऊचतुः अहं पृथक् तदाकारमाह–वाल्मीकिरिति । येन इदं चरितं तुभ्यं प्रदर्शितं त्वत्समीपे प्रेषितमित्यर्थः तस्य कर्ता वाल्मीकिः यज्ञसम्विधं यागसमीपं प्राप्तः संविधमित्यत्र सकारोत्तरवर्त्यनुस्वार आर्षः इति भट्टाः सार्द्धश्लोक एकान्वयी ॥ २४ ॥ २५ ॥

गो० टी०–वाल्मीकिरित्यादि । येन कृतमिदमशेषं चरितं काव्यं तुभ्यं संप्रदर्शितं सोस्य काव्यस्य कर्ता भगवान् वाल्मीकिः । यज्ञसंविधम् । बिन्दुश्छान्दसः । यज्ञवाटसविधदेशं प्राप्तः ॥ २५ ॥

२५ ] ति० टी०–चतुर्विंशत्सहस्रकमिति काव्यसंख्या । उपाख्यानशतमिलोपाख्यानान्तम् । भार्गवः कविः । काव्यनिर्माणे तत्तुल्येनेत्यर्थः । यद्वा प्राचेतसत्वेनास्यापि भार्गवत्वम् । भृगोर्वरुणपुत्रत्वात् । भृगोर्भ्राता भार्गव इत्यर्थ इत्यन्ये ॥२५॥

रा० टी०–समिति । श्लोकानां चतुर्विंशत्सहस्राणि यस्मिन् उपाख्यानानां शतानि यस्मिन् तत्काव्यम् भार्गवेण वाल्मीकिना सन्निबद्धं कृतम् ॥ २६ ॥

गो० टी०–सन्निबद्धमिति । चतुर्विंशतिसाहस्रमित्यादिकमग्रे स्पष्टीकरिष्यामः । चतुर्विंशतिसाहस्रं श्लोकानां सन्निबन्धनमिति च पाठः । उपाख्यानशतम् इलोपाख्यानान्तम् । भार्गवेण भृगुवंश्येन । वाल्मीकेरेवं भार्गवत्वं प्राचेतसत्वं चाविरुद्धमिति दर्शितम् "तपस्स्वाध्यायनिरतम्" इति श्लोकव्याख्याने ॥ २६ ॥

२६ ] ति० टी०–यानि सोत्तराणि षट् काण्डानीह कृतानि तत्सर्गसंख्यापञ्चशतानीत्युपलभ्यमानसर्गसंख्याधिक्यं तु केषांचिदेकैकस्य द्विसर्गत्वकरणेन लेखकप्रमादात्पञ्चसर्गशतानीति षट्काण्डसंख्या । चकारादुत्तरकाण्डसर्गसंख्यासमुच्चय इति कश्चित् ॥ २६ ॥

रा० टी०–आदीति । इह रामायणे आदिप्रभृतिषट्काण्डानि कृतानि तत्र पञ्चसर्गशतानि कृतानि सोत्तराणिदशाधिकशतसर्गविशिष्टोत्तरं च कृतानि तथा हि सशब्दो व्योमवाचकः सो वायुः पुत्रोस्यास्तीति व्युत्पत्तेः तेन शून्यलाभः अशब्दः परमात्मवाचकः तेन एको देवः इत्यादिश्रुत्या एकलाभः तयोरेकशेषेण एकद्वयलाभः तैः सहितानि उत्तराणीति समासः बहुत्वं तु तद्गतोपाख्यानानां बहुत्वात् अत एव तथोत्तरमिति बालकाण्डषट्कीभूतेन न वैपरीत्यम् अत एव न प्रत्यक्षविरोधः सोत्तराणीत्यस्य बहुव्रीहिणा षट्काण्डानीत्यस्य विशेषणत्वं वा ॥ २७ ॥

गो० टी०–आदिप्रभृतीति । पञ्चसर्गशतानीति षट्काण्डाभिप्रायेण । चकारादुत्तरकाण्डसर्गसंख्यासमुच्चयः २७

२७ ] ति० टी०–तव चरितमुद्दिश्यास्माकं गुरुणा कृतानि प्रतिष्ठा आजीवितमिति छेदः । काव्यनायकस्य तत्र जीवितं यावद्यच्छुभाशुभं कर्म तस्य सर्वस्यात्र प्रतिष्ठा निबन्धनं वर्तत इत्यर्थः ॥ २७ ॥

रा० टी०–कृतानीति । अस्माकं गुरुणा यत्तव चरितं कृतं तस्य प्रतिष्ठा यावत्सर्वं लोकस्य जीवितं वर्त्तते तावदस्तीति शेषः ॥ २८ ॥

गो० टी०–प्रतिष्ठेत्यादि । आजीवितमिति पदम् । यावत् काव्यनायकस्य जीवितं तावत्तस्य यत् शुभाशुभं तस्य सर्वस्यात्र प्रतिष्ठा निबन्धनमस्ति ॥ २८ ॥

२८–३१ ] ति० टी०–हे राजन् ! अस्य सर्वस्य श्रवणाय श्रवणं कर्तुं यदि बुद्धिः कृता तदा कर्मान्तरे यागप्रयोगविरामसमये क्षणीभूतः सुलभीभूतस्तच्छृणुष्व ॥ २८–३१ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

रा० टी०–यदीति । यदि श्रवणाय बुद्धिः कृता तर्हि कर्मान्तरे कर्मविरामसमये क्षणीभूतः लब्धोत्सवस्त्वं शृणुष्व ॥२९॥

---

१ राघवाविति गो. पा. । २ सस्तोनि गो. पाठः ।

# पञ्चनवतितमः सर्गः ।

राघवस्तौ सीतात्मजौ ज्ञात्वा जानकी श्वः सर्वेषामपरोक्षं स्वसच्चरितविषये यदि शपथं कुर्यात्तर्हीदं निःशङ्कमङ्गीकर्तास्मीति संदेशं प्राचेतसाय प्राहिणोत् तं तु तेनानुमतं दूतमुखाज्ज्ञात्वा श्वोभूते इदं करिष्याम इति निखिलानुमत्या निर्णीय सर्वान्विससर्ज ।

रामो बहून्यहान्येवं तद्गीतं परमं शुभम् । शुश्राव मुनिभिः सार्धं पार्थिवैः सह वानरैः ॥ १ ॥
तस्मिन्गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ । तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥ २ ॥
दूताञ्शुद्धसमाचारानाहूयात्ममनीषया । मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥ ३ ॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा । करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥ ४ ॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् । प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥ ५ ॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा । करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥ ६ ॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् । दूताः संप्रययुर्वाढं यत्र वै मुनिपुंगवः ॥ ७ ॥

---

रा० टी०—बाढमिति । रामः बाढमित्यब्रवीत् राघवौ कुशलवौ तु जग्मतुः ॥ ३० ॥

रा० टी०—राम इति । रामः कर्मशालामुपागमत् ॥ ३१ ॥

रा० टी०—प्रथमदिनश्रवणमुपसंहरन्नाह—शुश्रावेति सर्गैः दशाधिकषट्शतसंख्याकैः अन्वितं सस्वरैः षड्जादिसप्तस्वरविशिष्टैः शब्दैर्युक्तं तन्त्र्यादियोगेन युक्तं कुशीलवाभ्यां परिगीयमानं रामायणं शुश्राव राम इति शेषः ॥ ३२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुर्नवतितमः सर्गः ॥ ९४ ॥

गो० टी०—यदीति । हे राजन्यदि ! तस्य सर्वस्य श्रवणाय बुद्धिः कृता, तदा कर्मान्तरे क्षणीभूतः सुखीभूतः शृणु ॥ २९—३२ ॥

इति श्रीगो० विर० श्रीरा० भूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुर्नवतितमः सर्गः ॥ ९४ ॥

१ ] ति० टी०—अथ सीतापरिग्रहेच्छया दूतमुखेन कर्तव्यांशप्रतिपादनम्—राम इति ॥ १ ॥

रा० टी०—दिनान्तरश्रवणं वर्णयन्नाह—राम इत्यादिभिः रामःबहून्यहानि तयोर्गीतं शुश्राव ॥ १ ॥

गो० टी०—राम इत्यादि ॥ १ ॥

२ ] ति० टी०—तस्मिन्गीते तस्मिन्नेव प्रबन्धे सीताप्रसववृत्तान्तप्रतिपादककाव्यश्रवणेन कुशीलवौ सीतापुत्राविति ज्ञात्वा, न तु ततः पूर्वं कस्य चिन्मुखादित्यर्थः ॥ २ ॥

३ ] ति० टी०—हे दूताः ! इतो गच्छध्वम् । भगवतोऽन्तिके गत्वा चैतन्मद्वचो ब्रूत ॥ ३ ॥

रा० टी०—तस्मिन्निति । गीते गानसमये कुशीलवौ सीतापुत्रौ विज्ञाय परिषदः सभाया मध्ये आत्ममनीषया स्वकीयशुद्धबुद्ध्या विशिष्टान् अत एव शुद्धः समाचारो येषां तान् दूतानाहूय भगवतो वाल्मीकेरन्तिकं गच्छध्वं मद्वचो ब्रूत इति वचनं रामोऽब्रवीत् श्लोकद्वयमेकान्वयि ॥ २—३ ॥

गो० टी०—तस्मिन्निति । गीते तु गीत एव । नतु ततः पूर्वं कस्य चिन्मुखादित्यर्थः ॥ २ ॥ ३ ॥

४ ] ति० टी०—किं तदित्यत्राह—यदिति । सीतेति शेषः । शुद्धसमाचारानुत्पन्नदोषा यदि वेति । तपोवनवासेन विनष्टदोषा वेत्यर्थः । महामुनिमनुमान्य । तदनुमतिं गृहीत्वेत्यर्थः ॥ ४ ॥

रा० टी०—तदाकारमाह—यदीत्यादिभिः । वीतं नित्यं निवृत्तं कल्मषं यस्याः सा सीता यद्यागतेति शेषः तदा शुद्धमाचाराय शुद्धसमाचारं प्रवर्तयितुं सद्व्यवहारप्रवृत्त्यर्थमित्यर्थः महामुनिमनुमान्य तत्संमतिं गृहीत्वा दिवा दिनमेव आत्मना स्वसञ्चारेण इह यागस्थले शुद्धिं करोतु आगच्छत्वित्यर्थः यदि तु यदीत्यस्य यस्य प्रजापतिनिर्मितस्य दारशोधनं यस्मिन् स तस्मिन्निति यागविशेषणं तदानाध्याहारकल्पनेति दिक् ॥ ४ ॥

गो० टी०—यदीति । महामुनिमनुमान्य महामुनेरनुमतिं कृत्वेत्यर्थः ॥ ४ ॥

५ ] ति० टी०—छन्दमभिप्रायम् । प्रत्ययं दातुकामाया मनोगतं प्रत्ययदानं यदि तदा तद्विज्ञाय ततो लघु शीघ्रं मे शंसत ॥ ५ ॥

रा० टी०—छन्दमिति । प्रत्ययम् एतल्लोकाधिकरणकस्वस्थितिविषयकजनविश्वासं दातुं छेत्तुं कामोभिलाषो यस्याः सा तस्याः प्रकटसाकेतं जिगमिषोरित्यर्थः सीतायाः मुनेश्च मनोगतं छन्दमभिप्रायं विज्ञाय लघु शीघ्रं यथा भवति तथा मे शंसत एतेन सीतया स्वाभिप्रायः पूर्वं निवेदित इति सूचितम् प्रत्ययं दातुकामाया इत्यस्यार्थान्तरवर्णनं तु न युक्तमसम्भवादिति दिक् ॥ ५ ॥

गो० टी०—छन्दमिति । छन्दमभिप्रायम् ॥ ५—१० ॥

६—७ ] ति० टी०—यद्यपि सीताशुद्धिर्लङ्कायां ज्ञातपूर्वा तथापीदानीं प्राप्तापवादमार्जनेन सर्वलोकपुरतो ममैव कीर्तौ

---

१ प्रवमिति गो. पाठः । २ अन्तिकमिति गो. पा. । ३ वाढमिति गो. रा. पा. ।

ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् । ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥ ८ ॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् । विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ ९ ॥
एवं भवतु भद्रं वो यथा वदति राघवः । तथा करिष्यते सीता दैवतं हि पतिः स्त्रियः ॥ १० ॥
तथोक्ता मुनिना सर्वे राजदूता महौजसः । प्रत्येत्य राघवं सर्वे मुनिवाक्यं बभाषिरे ॥ ११ ॥
ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः । ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥ १२ ॥
भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः । पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते ॥ १३ ॥
तस्य तद्वचनं श्रुत्वा राघवस्य महात्मनः । सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥ १४ ॥
राजानश्च महात्मानः प्रशंसन्ति स्म राघवम् । उपपन्नं नरश्रेष्ठ त्वय्येव भुवि नान्यतः ॥ १५ ॥
एवं विनिश्चयं कृत्वा श्वोभूत इति राघवः । विसर्जयामास तदा सर्वांस्ताञ्छत्रुसूदनः ॥ १६ ॥

इति संप्रविचार्य राजसिंहः श्वोभूते शपथस्य निश्चयम् ।
विससर्ज मुनीन्नृपांश्च सर्वान्स महात्मा महतो महानुभावः ॥ ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

न्दर्यल्लुब्ध इति कलङ्कशोधनार्थं शुद्धयापि तया पुनः शपथः कार्य इत्याह—श्वः प्रभात इति ॥ ६ ॥ ७ ॥

रा० टी०–श्व इति । मम शोधनार्थं प्रसादार्थमित्यर्थः परिषन्मध्य आगत्येति शेषः मैथिली शपथं शापपरममङ्गलरूपाप्रकटसाकेताय पथं गमनं करोतु एतेन स्वस्यापि जिगमिषा सूचिता ॥ ६ ॥

रा० टी०–श्रुत्वेति । यत्र मुनिपुङ्गवः तं वाटं शालां दूतास्संप्रययुः ॥ ७ ॥

८–१० ] ति० टी०–मृदून्यपरुषाणि । मधुराणि मधुराक्षराणि ॥ ८–१० ॥

रा० टी०–ते इति । दूताः रामवाक्यानि ऊचुः ॥ ८ ॥

रा० टी०–तेषामिति । मुनिरब्रवीत् ॥ ९ ॥

रा० टी०–तदाकारमाह–एवमिति । हि यतः स्त्रियः पतिरेव दैवतमतः यथा राघवो वदति तथा सीता करिष्यते ॥ १० ॥

११–१२ ] ति० टी०–तथोक्ताः सीता तथैव करिष्यते इत्युक्ताः ॥ ११ ॥ १२ ॥

रा० टी०–तथेति । राजदूताः राघवं प्रत्येत्य मुनिवाक्यं बभाषिरे ॥ ११ ॥

रा० टी०–तत इति । काकुत्स्थः ऋषीन् राज्ञश्च अभ्यभाषत ॥ १२ ॥

गो० टी०–तथोक्ता इति । सीता तथैव करिष्यतीत्युक्ता इत्यर्थः ॥ ११ ॥ १२ ॥

१३–१७ ] ति० टी०–यश्चान्योऽपि सीतायां दोषारोपकर्ता, योऽपि शपथमाकाङ्क्षते सोऽपि पश्यत्वित्यर्थः॥१३–१७॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

रा० टी०–तदाकारमाह–भगवन्त इति । सशिष्याः भगवन्तो वशिष्ठप्रभृतयः नराधिपाश्च अन्यो यः कांक्षते सोपि सीताशपथं सीताकर्त्रीकसाकेतगमनम् पश्यन्तु ॥ १३ ॥

रा० टी०–तस्येति । राघवस्य वचनं श्रुत्वा विद्यमानानां ऋषिमुख्यानां महान् साधुवादोऽभूत् ॥ १४ ॥

रा० टी०–राजान इति । त्वय्येव उपपन्नं युक्तं सीतानयनमिति शेषः अन्यतः अन्यस्मिन् ॥ १५ ॥

रा० टी०–एवमिति । श्वोभूते आगामिदिवसे एवं सीतागमनं भविष्यतीति निश्चयं कृत्वा राघवः सर्वान् विसर्जयामास ॥ १६ ॥

रा० टी०–उपसंहरमाह—इतीति । राजसिंहो रामः श्वोभूते शपथस्य निश्चयमित्यनेन प्रकारेण संप्रविचार्य संप्रविचारेण कृत्वा विससर्ज ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चनवतितमः सर्गः ॥ ९५ ॥

गो० टी०–भगवन्त इति । यश्चैवान्योपीति । यश्च पापी पापजल्पः प्राकृतः सोपीत्यर्थः ॥ १३–१७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने पञ्चनवतितमः सर्गः ॥ ९५ ॥

---

१ स्त्रिया इति गो. पाठः । २ महौजसमिति गो. पाठः । ३ क्षिप्रमिति गो. पा. । ४ महात्मानमिति गो. पा. । ५ निश्चयं वै इति । गो. निश्चयं तदिति रा. पा. ।

## षण्णवतितमः सर्गः ।

प्रभातायां तु शर्वर्यां वसिष्ठादयोऽन्ये च तदपूर्वं द्रष्टुकामा यज्ञवाटे चित्रवदुपविष्टाः प्राचेतसश्च वैदेह्यनुगत आगत्य सीतां निर्देश्य भो पतिव्रतेयं पूताचारेति च ज्ञानेन चक्षुषापि चासंशयं जानामि यद्यसत्यं भाषेय तर्हि मत्कृतं तपो नश्येत् सापि तव प्रत्ययं दास्यति त्वया शुद्धां जानतापि जनापवादादेव या परित्यक्ता ।

तस्यां रजन्यां व्युष्टायां यज्ञवाटं गतो नृपः । ऋषीन्सर्वान्महातेजाः शब्दापयति राघवः ॥ १ ॥
वसिष्ठो वामदेवश्च जाबालिरथ काश्यपः । विश्वामित्रो दीर्घतमा दुर्वासाश्च महातपाः ॥ २ ॥
पुलस्त्योऽपि तथा शक्तिर्भार्गवश्चैव वामनः । मार्कण्डेयश्च दीर्घायुर्मौद्गल्यश्च महायशाः ॥ ३ ॥
गर्गश्च च्यवनश्चैव शतानन्दश्च धर्मवित् । भरद्वाजश्च तेजस्वी अग्निपुत्रश्च सुप्रभः ॥ ४ ॥
नारदः पर्वतश्चैव गौतमश्च महायशाः । [ कौत्यायनः सुयज्ञश्च त्वगस्त्यस्तपसां निधिः । ]
एते चान्ये च बहवो मुनयः संशितव्रताः । ॥ ५ ॥
कौतूहलसमाविष्टाः सर्वे एव समागताः । राक्षसाश्च महावीर्या वानराश्च महाबलाः ॥ ६ ॥
सर्व एव समाजग्मुर्महात्मानः कुतूहलात् । क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥ ७ ॥
नानादेशगताश्चैव ब्राह्मणाः संशितव्रताः । [ ज्ञाननिष्ठाः कर्मनिष्ठाः योगनिष्ठास्तथापरे । ]
सीताशपथवीक्षार्थं सर्वे एव समागताः । ॥ ८ ॥
तदा समागतं सर्वमश्मभूतमिवाचलम् । श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥ ९ ॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी । कृताञ्जलिर्बाष्पकला कृत्वा रामं मनोगतम् ॥ १० ॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् । वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ ११ ॥
ततो हलहलाशब्दः सर्वेषामेवमाबभौ । दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥ १२ ॥

१–८ ] ति० टी०—अथ संमिलितनानादेशीयपरिषन्मध्ये सीतया सह वाल्मीकिरागत्य तत्त्वभूतार्थप्रत्यभिज्ञापनं करोति—तस्यामिति । शब्दापयत्याह्वयति स्म ॥ १–८ ॥

रा० टी०—प्रातःकालिकं वृत्तमाह—तस्यामित्यादिभिः । रजन्यां व्युष्टायां व्यतीतायां सत्यां राघवः ऋषीन् वशिष्ठप्रभृतीन् शब्दापयति आह्वयत् ॥ १ ॥

रा० टी०—वशिष्ठ इति । दीर्घतमा अतिमहान्तः एते वशिष्ठादयः अन्ये च बहवो मुनयः कौतूहलसमाविष्टास्सन्तस्समागताः सार्द्धश्लोकचतुष्टयमेकान्वयि ॥ २–५ ॥

रा० टी०—राक्षसा इति । राक्षसा वानराश्च समाजग्मुः ॥ ६ ॥

रा० टी०—क्षत्रिया इति । नानादेशगताः नानादेशेभ्य आगताः क्षत्रियादयः सीताशपथवीक्षार्थं सीताकर्तृकाप्रकटसाकेतगमनदर्शनार्थं समागताः सार्द्धश्लोक एकान्वयी ॥७॥८॥

गो० टी०—तस्यामित्यादि । शब्दापयति आह्वयति स्म यक्भाव आर्षः ॥१–१२॥

९–१० ] ति० टी०—अश्मभूतमिवाचलं पर्वतवन्निश्चलं कौतुकदर्शनार्थमिति श्रुत्वा ॥ ९ ॥ १० ॥

रा० टी०—तदेति । समागतं सर्वमश्मभूतमिवाचलं जनजातं श्रुत्वा मुनिवरो वाल्मीकिः ससीतस्सन् समुपागमत् ॥ ९ ॥

रा० टी०—तमिति । सीता रामं मनोगतं कृत्वा पृष्ठतः पश्चाद्देशेन ऋषिमन्वगच्छत् ॥ १० ॥

११ ] ति० टी०—ब्रह्माणमनुगामिनीं श्रुतिमिव वाल्मीकेः पृष्ठतस्तां सीतामायान्तीं दृष्ट्वा । अनयोपमया सीतायाः श्रुतेश्च सकलदोषराहित्येन प्रमाणत्वं दर्शितम् ॥ ११ ॥

रा० टी०—तामिति । ब्रह्माणमनुगामिनीं श्रुतिमिव वाल्मीकेः पृष्ठतः आयान्तीं सीतां दृष्ट्वा महान् साधुवादोऽभूत् श्रुतिशब्दः आचारक्किबन्तप्रकृतिककर्तृक्किबन्तः लाक्षणिको वा॥ ११

१२ ] ति० टी०—एवं वक्ष्यमाणप्रकारेण । दुःखजन्मना दुःखोत्पत्त्या । विशालेन विस्तीर्णेन शोकेनाकुलात्मनां क्षुब्धान्तःकरणानाम् ॥ १२ ॥

रा० टी०—तत इति । दुःखजन्मनः वियुक्तसीतादर्शनजनितदुःखोत्पत्तेः विशालेन विस्तारेण अतिशोकेन च आकुलितात्मनां व्याकुलचित्तानां सर्वेषामृषिप्रभृतीनां हलहलाशब्द आबभौ ॥ १२ ॥

गो० टी०—तत इति । दुःखजन्मविशालेन दुःखोत्पत्त्या विस्तीर्णेन ॥ १३–१७ ॥

१ दीर्घतपा इति गो. पा. । २ इदमर्धमधिकं गो. पु. । ३ इदमर्धमधिकं गो. पु. ४ गर्गेति गो. पा. ५ दृष्ट्वा श्रुतिमिवायान्तीमिति को. पाठः ।

साधु रामेति केचित्तु साधु सीतेति चापरे । उभावेव च तत्रान्ये प्रेक्षकाः संप्रचुक्रुशुः ॥ १३ ॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुंगवः । सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥१४॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी । अपवादात्परित्यक्ता ममाश्रमसमीपतः ॥ १५ ॥
लोकापवादभीतस्य तव राम महाव्रत । प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥ १६ ॥
इमौ तु जानकीपुत्रावुभौ च यमजातकौ । सुतौ तवैव दुर्धर्षौ सत्यमेतद्ब्रवीमि ते ॥ १७ ॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन । न स्मराम्यनृतं वाक्यमिमौ तु तव पुत्रकौ ॥ १८ ॥
बहुवर्षसहस्राणि तपश्चर्या मया कृता । नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥ १९ ॥
मनसा कर्मणा वाचा भूतपूर्वं न किल्बिषम् । तस्याहं फलमश्नामि अपापा मैथिली यदि ॥ २० ॥
अहं पञ्चसु भूतेषु मनःषष्ठेषु राघव । विचिन्त्य सीतां शुद्धेति जग्राह वननिर्झरे ॥ २१ ॥
इयं शुद्धसमाचारा अपापा पतिदेवता । लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥ २२ ॥

---

१३-१४ ] ति० टी०—उभौ सीतारामौ साध्विति प्रचुक्रुशुः ॥ १३ ॥ १४ ॥

रा० टी०—साध्विति । केचित् हे राम ! त्वया साधु कृतमिति केचित्तु हे सीते ! त्वया साधु कृतमिति च अन्ये प्रेक्षकाः उभौ हे सीतारामौ ! युवाभ्यां साधु कृतमिति च सम्प्रचुक्रुशुः १३

रा० टी०—तत इति । वाल्मीकिः जनौघस्य मध्ये प्रविश्य राघवमित्युवाच ॥ १४ ॥

१५-१६ ] ति० टी०—अपवादैर्हेतुभिर्ममाश्रमसमीपे त्य...। इयं तव प्रत्ययं दास्यते तदनुज्ञातुमर्हसि ॥ १५ ॥ १६ ॥

रा० टी०—तदाकारमाह—इयमित्यादिभिः । अपवादात् प...नेन्दितासमयव्यवायादिभीतेः ममाश्रमसमीपतः परित्यक्ता धर्मचारिणी सीता इयमेव ॥ १५ ॥

रा० टी०—लोकेति । लोकापवादभीतस्य लोके शास्त्रे योऽपवादः असमयव्यवायादिनिन्दा तस्माद्भीतस्य तवाग्रे सीता प्रत्ययं स्वकर्तृकेहलोकस्थितिविषयकनिश्चयं दास्यते निवर्तयिष्यते अतः सीतामनुज्ञातुमर्हसि संज्ञापूर्वकविधेरनित्यत्वात्परस्मैपदाभावः ॥ १६ ॥

१७-१८ ] ति० टी०—यमजातकौ यमलतयोत्पन्नौ । यथाहं प्रचेतसो दशम औरसः पुत्रः, यद्वा प्रचेतसो दशमः संतानपरम्परया पुत्रोऽपत्यम्, अतोऽहमनृतं वाक्यं मनसापि न स्मरामि कथनं तु दूरे । अत इमौ तव पुत्रकाविति मद्वाक्यं सत्यमेव जानीहीति शेषः ॥ १७ ॥ १८ ॥

रा० टी०—इमाविति । इमौ जानकीपुत्रौ यमजातकौ यमत्वेन युग्मत्वेन जातमेककालावच्छेदेन जन्म ययोस्तावुभौ तवैव सुतौ एतदहं सत्यं ब्रवीमि ॥ १७ ॥

गो० टी०—इमौ त्विति । यमजातकौ यमलतयोत्पन्नौ १८

रा० टी०—प्रचेता इति । अहं प्रचेतसो दशमः पुत्रः अतः अनृतं वाक्यं स्ववचनं नैव स्मरामि अनृतं कदाचिन्नोक्तमित्यर्थः अतः इमौ तवैव पुत्रकौ ॥ १८ ॥

गो० टी०—प्रचेतस इति । यथाहं प्रचेतसो दशमः औरसः पुत्रः तथैव तवेमौ पुत्रौ । अनृतं वाक्यम् अहं मनसा न स्मरामि । कथनं तु दूरत एवेति भावः ॥ १९ ॥

१९ ] ति० टी०—अथ सीताचारित्रं प्रति मुनिना शपथकरणम्—बहुवर्षेति । यदि मैथिली दुष्टा तदा तपसः फलमहं न प्राप्नुयाम् ॥ १९ ॥

रा० टी०—सीताया दयालुत्वातिशयं बोधयितुमाह—बह्विति । यदीयं मैथिली दुष्टा दूषयित्री स्यात्तदा मया कृता या तपश्चर्या तस्याः फलं नोपाश्नीयां भुञ्जीय ॥ १९ ॥

गो० टी०—बह्विति । तस्याः फलमिति । यथेयमपापा एवं तपश्चर्यायाः फलम् उपाश्नीयाम् । यथा तपसः फलभोगः निश्चितस्तथेयमपापेत्यर्थः । तस्याः फलमुपाश्नीयामपापा यदि मैथिलीति च पाठः ॥ २० ॥

२० ] ति० टी०—मनआदिना मम किल्बिषं न भूतपूर्वम् । मया किंचिदपि न कृतमित्यर्थः । यद्यपापा मैथिली तदा तस्य किल्बिषानाचरणस्य फलमश्नाम्यश्नीयाम् । अनेन संकल्पपूर्वनिषिद्धत्यागोऽपि धर्मायेति सूचितम् ॥ २० ॥

रा० टी०—मनसेति । मैथिली यद्यपापा स्वाश्रितपापादर्शनशीला तदैव मनआदिना यत् किल्बिषं न भूतपूर्वं मया ज्ञानपूर्वकं न कृतमित्यर्थः तस्य किल्बिषानाचरणस्य फलमश्नामि अश्नीयामेतेनाज्ञातापराधस्यापि प्रबलत्वं सूचितम् ॥२०॥

गो० टी०—मनसेति । तस्य किल्बिषानाचरणस्येत्यर्थः २१

२१-२२ ] ति० टी०—पञ्चसु भूतेषु श्रोत्रादिपञ्चेन्द्रियेषु जग्राह गृहीतवान् ॥ २१ ॥ २२ ॥

रा० टी०—अहमिति । मनसा ग्रहणोन्तरिन्द्रियेण सृष्टेषु पञ्चसु भूतेषु पृथिव्यादिषु पर्यटितोहं सीतैव शुद्धा शुद्धिकर्त्रीति विचिन्त्य वननिर्झरे जग्राह आनन्दस्यातिशयात् पारोक्ष्यं ग्रहणकर्मत्वं तु प्रत्यासत्त्या सीताया एवेति बोध्यम् ॥२१॥

रा० टी०—सीताभिप्रायं बोधयन्नाह—इयमिति । इ

---

१ अपवादैरिति गो. पाठः । २ तस्याः फलमुपाश्नीयामिति गो. पाठः । ३ सीतामिति गो. पाठः

तस्मादियं नरवरात्मज शुद्धभावा दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवादकलुषीकृतचेतसा या त्यक्ता त्वया प्रियतमा विदितापि शुद्धा ॥ २३ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

## सप्तनवतितमः सर्गः ।

वाल्मीकेर्वचनश्रवणानन्तरं भो मुने यद्यपीयं पवित्रा वह्निप्रवेशाच्च देवादिभिरपि मतापि जनापवादात्त्यक्तेति रामो जगाद शपथं ब्रह्मादयो द्रष्टुमागताः तदा जानक्यपि परिषन्मध्ये यदि पतिव्रता अथवा रामैकचित्ता चेत्पृथिवी मह्य विवरं ददात्विति त्रिरुवाच एवं शपन्तीं तां धरणी दिव्यसिंहासनोपविष्टां बाहुभ्यां गृहीत्वा रसातलं प्रविष्टा तदा सर्वोऽपि प्रेक्षितृवर्गः सहसा संमोहितः ।

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत । प्राञ्जलिर्जगतो मध्ये दृष्ट्वा तां वरवर्णिनीम् ॥ १ ॥
एवमेतन्महाभाग यथा वदसि धर्मवित् । प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥ २ ॥
प्रत्ययश्च पुरा वृत्तो वैदेह्याः सुरसंनिधौ । शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥ ३ ॥
लोकापवादो बलवान्येन त्यक्ता हि मैथिली । सेयं लोकभयाद्ब्रह्मन्नपापेत्यभिजानता ॥
परित्यक्ता मया सीता तद्भवान्क्षन्तुमर्हति । ॥ ४ ॥

सीता लोकापवादभीतस्य शास्त्रनिन्दितासमयव्यवायादितो भयं प्राप्तस्य तव समीपे प्रत्ययमिहलोकस्थितिविषयकनिश्चयं दास्यति निवारयिष्यति ॥ २२ ॥

गो० टी०–अहमिति । पञ्चसु भूतेष्विति । श्रोत्रादिपञ्चेन्द्रियेष्वित्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीगोविन्दराजविर० श्रीरा० भूषणे मणिमुकुटाख्याने उ० रामायणव्याख्याने षण्णवतितमः सर्गः ॥ ९६ ॥

२३ ] ति० टी०–दिव्येन दृष्टिविषयेण दिव्यज्ञानेन तव शुद्धा विदितापि त्वया लोकापवादभीतेन त्यक्तेत्यन्वयः ॥२३॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

रा० टी०–तस्मादिति । लोकापवादकलुषीकृतचेतसा लोके शास्त्रे योपवादः अकालकव्यवायादिनिन्दा तेन कलुषीकृतं भीतं चेतो यस्य तेन त्वया शुद्धभावा कापत्यसंसर्गशून्याभिप्रायविशिष्टा अत एव शुद्धा या प्रियतमा त्वया त्यक्ता वनं प्रापिता सा मया प्रदिष्टा प्रकृष्टभाग्यसंपादिका विदिता ज्ञाता एतेन स्वकल्याणार्थमेवेयं मया सेवितेति सूचितम् ॥ २३ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षण्णवतितमः सर्गः ॥ ९६ ॥

१ ] ति० टी०–अथ सीतायाः शपथपूर्वं भूमिप्रवेशः—वाल्मीकिनेति । एवमुक्तस्तव प्रत्ययं दास्यतीत्युक्तः ॥ १ ॥

रा० टी०–वाल्मीकिवचनश्रवणानन्तरकालिकं वृत्तमाह–वाल्मीकिनेत्यादिभिः । राघवस्तां सीतां दृष्ट्वा जगतो मध्ये प्रत्यभाषत ॥ १ ॥

गो० टी०–वाल्मीकिनेत्यादि ॥ १ ॥

२–३ ] ति० टी०–एवमेतद्यद्यपि लङ्कायां सुरासुरसंनिधौ प्रत्ययो दत्तस्तव वाक्यैश्च शपथरूपैर्मम प्रत्ययो जात एव, तथापि हे महाभाग ब्रह्मन् ! त्वं यथा वदसि तदेवमेव प्रत्ययं करोत्वित्यर्थः ॥ २ ॥ ३ ॥

रा० टी०–तदाकारमाह–एवमिति । हे ब्रह्मन् ! अकल्मषैः कल्मषसंसर्गरहितैः तव वाक्यैः प्रत्ययः सीताप्रभावविषयक-विश्वासोस्तीति शेषः अतः यथा त्वं वदसि तदेतदेवमेव ॥ २ ॥

रा० टी०–प्रत्यय इति । सुरसंनिधौ सुराणां परज्ञानप्रदत्वेनातिदानिनां भवतां सन्निधौ वेश्म प्रवेशिता गृहे [1]प्रविष्टा या वैदेही तया वैदेह्या पुरैव प्रत्ययः सज्जनकल्याणविश्वासः वृत्तः कृतः तेन हेतुना तत्र समये एव शपथो मङ्गलगमनं कृतः ॥ ३ ॥

गो० टी०–एवमिति । यथा वदसीति । प्रत्ययं दास्यतीत्येवमात्मनेत्यर्थः । एतदेवमेव कर्तव्यमित्यर्थः । एवंकरणं च न मम विश्वासार्थमित्याह–प्रत्ययो हीति । जात एवेति शेषः । तव वाक्यैरिति । बहुवर्षेत्यादिना प्रागुक्तशपथवाक्यैरित्यर्थः ॥ २–९ ॥

४ ] ति० टी०–किमर्थं तर्हि पुनः प्रत्ययकरणं तत्राह—लोकेति । येन लोकापवादेन जानकी त्यक्ता स लोकापवादो बलवान्, अतस्तन्निवृत्तये पुनः प्रत्ययकरणमिति भावः । तवापि लोकवदेवास्यां शङ्कास्ति किं तत्र, नेत्याह—सेयमिति । अपापेत्यभिजानतापि मया लोकभयात्त्यक्ता ॥ ४ ॥

रा० टी०–ननु भवदतिप्रीतिविषय इयं सीता एतावत्कालपर्यन्तं त्वया कथं त्यक्तेत्यत आह–लोकेति । येन मैथिली त्यक्ता स लोकापवादः शास्त्रनिन्दितकर्मभयम् बलवान् अहं [2]पृथक्–सेति । सीता अपापा पापनिवर्तिका इत्यभिजानतापि मया लोकभयात् शास्त्रभीतेः त्यक्ता एतावत्कालपर्यन्तं नानीतेत्यर्थः तत् त्यागजनितमपराधं भवान् क्षन्तुमर्हति ॥ ४ ॥

१ प्रविष्टेति गो. पाठः । २ त्विति गो. पाठः ।

जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ । शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥ ५ ॥
अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः । सीतायाः शपथे तस्मिन्सर्वे एव समागताः ॥ ६ ॥
पितामहं पुरस्कृत्य सर्वे एव समागताः । आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ ७ ॥
साध्याश्च देवाः सर्वे ते सर्वे च परमर्षयः । नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः ॥ ८ ॥
दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् । प्रत्ययो मे नरश्रेष्ठ ऋषिवाक्यैरकल्मषैः ॥ ९ ॥
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे । सीताशपथसंभ्रान्ताः सर्व एव समागताः ॥ १० ॥
ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः । तं जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥ ११ ॥
तदद्भुतमिवाचिन्त्यं निरैक्षन्त समाहिताः । मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥ १२ ॥
सर्वान्समागतान्दृष्ट्वा सीता काषायवासिनी । अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ १३ ॥
यथाहं राघवादन्यं मनसापि न चिन्तये । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १४ ॥
मनसा कर्मणा वाचा यथा रामं समर्चये । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १५ ॥

---

५ ] ति० टी०—इमौ मे पुत्राविति च जानामि, अथापि जगतो मध्ये शुद्धायामेव मैथिल्यां मे प्रीतिरस्तु ॥ ५ ॥

रा० टी०—जानामीति । जगतो मध्ये शुद्धायां मैथिल्यां मे पुत्रौ कुशीलवौ जातौ अहं जानामि अतः मे प्रीतिरस्तु अस्ति॥५॥

६–९ ] ति० टी०—सीतायाः शपथे शपथप्रसङ्गे इत्यर्थः ॥ ६–९ ॥

रा० टी०—अभिप्रायमिति । शपथे सीताकर्त्रीकाप्रकटसाकेतगमने रामस्य सीतायाश्च अभिप्रायं विज्ञाय सर्वे सुरसत्तमाः समागताः ॥ ६ ॥

रा० टी०—तदेव सविशेषमाह—पितामहमिति । पितामहं पुरस्कृत्य आदित्यादयः समागताः अर्द्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

रा० टी०—दृष्ट्वेति । राघवोऽब्रवीत् अर्द्धं पृथक् तदाकारमाह—प्रत्यय इति । ऋषिवाक्यैः वाल्मीकिवचनैः मे प्रत्ययः सीताप्रभावविषयकविश्वासोऽभूदिति शेषः अत एव वैदेह्यां मे प्रीतिरधिकप्रेमास्तु अस्ति ॥ १० ॥

गो० टी०—अभिप्रायमिति । सीतायाः शपथ इति । शपथप्रसङ्ग इत्यर्थः ॥ ६–१२ ॥

१० ] ति० टी०—शुद्धायामिति । अस्य तथापीत्यादिः । सीताशपथे तद्दर्शने संभ्रान्ताः । आदृता इत्यर्थः ॥ १० ॥

रा० टी०—सीतेति । सीताशपथे अप्रकटसाकेतगमने संभ्रान्ताः आदृताः सन्तः सर्वे समागताः अर्द्धं पृथक् । तत इति । साकेतगमननिश्चयानन्तरं वायुर्जनौघमाह्लादयामास ॥ ११ ॥

११ ] ति० टी०—शुभपुण्यशब्दौ शैत्यमान्द्योपलक्षणौ । दिव्यगन्धः संनिहितसर्वदेवशरीरवर्तिदिव्यचन्दनमाल्यगन्धः । सुरश्रेष्ठः सर्वपुण्यपापसाक्षी ॥ ११ ॥

१२ ] ति० टी०—तदद्भुतं दिव्यगन्धवायुवहनं सर्वराष्ट्रेभ्य आगता मानवा निरैक्षन्त । पूर्वं यथा कृतयुगे दिव्यगन्धवायुस्पर्शनं तथा त्रेतायामप्यभूदित्यर्थः । रामसांनिध्यादनाश्चर्यमपि साधारणदृष्ट्याश्चर्यमितीवशब्दः ॥ १२ ॥

रा० टी०—तदिति । अचिन्त्यं चिन्तयितुमशक्यं कृतयुगे इव अद्भुतं तत् सीताकर्त्रीकसदेहसाकेतगमनं सर्वराष्ट्रेभ्यः पूर्वमागता मानवाः निरैक्षन्त ॥ १२ ॥

गो० टी०—तदिति । अचिन्त्यमचिन्त्यहेतुकं वायुस्वरूपं, यथा पूर्वं कृतयुगे पश्यन्ति स्म तथा तदानीं सर्वे मानवाः निरीक्षन्ते स्म ॥ १३–१६ ॥

१३ ] ति० टी०—ततः सीता चतुर्दशभुवनस्थजनानेकत्र मिलितान्दृष्ट्वापवादपरिहाराय शपथव्याजेन स्वपदं प्रवेष्टुकामाह—सर्वानिति । काषायवासिनी तपस्युचितवासोधारिणी पातिव्रत्योचिताधोदृष्टिः विवरयाचनाय महीनिरीक्षणार्थं च, अत एवावाङ्मुखी ॥ १३ ॥

रा० टी०—सर्वानिति । काषायेषु कषायरक्तवस्त्रधारिषु तपस्विसमीपेष्वित्यर्थः वसति तच्छीला सीता अब्रवीत् ॥१३॥

१४–१५ ] ति० टी०—यथाहं राघवादन्यं मनसापि न चिन्तये न चिन्तयामीति सत्यम्, तथा सत्येन चिरकालवियोगेऽपि पातिव्रत्यपरिपालनक्लेशखिन्नायास्तज्जनितपरमदुःखसमाप्तये पुनरपि भुवं प्रवेष्टुं माधवी देवी माधवपत्नी भूदेवी विवरं रन्ध्रं दातुमर्हति । एवमग्रेऽपि व्याख्येयम् १४।१५

रा० टी०—तदाकारमाह—यथेत्यादिभिः । यथाहं राघवादन्यं मनसापि न चिन्तये तथा माधवी माधवेनोढा देवी पृथ्वी राघवादन्यं न चिन्तयति अतः विवरं विमानश्रेष्ठमित्यर्थः दातुमर्हति एतेनोपमालङ्कारेण पृथिव्या अपि राममनोवेदित्रीत्वं सूचितम् तेनेदं प्रार्थनं रामाभिप्रेतमेवेति त्वयापि निश्चीयतामिति ध्वनितम् ॥ १४ ॥

रा० टी०—हर्षातिशयात्पुनस्तदेवाह—मनसेति । यथाहं राममेव समर्चये तथा देवी समर्चयति अतः दातुमर्हति ॥१५॥

---

१ महेन्द्राद्या महौजस इति गो. पा. । २ ह्यश्विनौ समरुद्गणा इति गो. पाठः । ३ सुरश्रेष्ठा इति गो. पाठः । ४ इदमर्धमष्टमपद्यानन्तरं गो. पुस्त. । ५ समागता इति गो. पाठः ।

यथैतत्सत्यमुक्तं मे वेद्मि रामात्परं न च । तथा मे माधवी देवी विवरं दातुमर्हति ॥ १६ ॥
तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् । भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ १७ ॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः । दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥ १८ ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ १९ ॥
तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् । पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥२०॥
साधुकारश्च सुमहान्देवानां सहसोत्थितः । साधुसाध्विति वै सीते यस्यास्ते शीलमीदृशम् ॥२१॥
एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः । व्याजह्रुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥ २२ ॥
यज्ञवाटगताश्चापि मुनयः सर्वे एव ते । राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥ २३ ॥
अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः । दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥ २४ ॥
केचिद्विनेदुः संहृष्टाः केचिद्ध्यानपरायणाः । केचिद्रामं निरीक्षन्ते केचित्सीतामचेतसः[१] ॥ २५ ॥

१६ ] ति० टी०–अयं स्वपदप्रवेशोद्योगः सीताया भृगुप्रार्थनयोपेन्द्रावतारे मानुषे लोकेऽङ्गीकृतपत्नीवियोगस्य प्रागुक्तास्मदीत्याङ्गीकृततदर्थवाल्मीकिशापस्य च रामस्याभिप्रायज्ञानादेव वाल्मीक्याश्रमगमनवदिति न रामप्रतिकूलाचरणप्रसक्तिः सीताया इति बोध्यम् । अनन्तरं रामस्य भूमिनाशपर्यन्तं कोपोदयस्तु मनुष्यावतारनटनमात्रमित्यदोषः ॥ १६ ॥

रा० टी०–पुनरुक्तदेवाह–यथेति । रामात्परमहं न वेद्मि एतद्वचः सत्यमुक्तमतो दातुमर्हति एतेनागमनकालकसीताविमानं पृथिव्यामेव स्थापितमिति सूचितम् ॥ १६ ॥

गो० टी०–यथेति । रामात्परमन्यं पुरुषं न वेद्मीति यथोक्तमेतत्सत्यं चेत् । माधवी माधवपत्नी भूमिः ॥ १७ ॥

१७–१९ ] ति० टी०–शपन्त्यां एवं त्रिः शपन्त्यां तदनिर्वाच्यमद्भुतं प्रादुरासीत् । किं तदद्भुतं तत्राह—भूतलादुत्थितम् । नागैस्तक्षकादिभिः शिरोभिर्ध्रियमाणं सिंहासनमदृश्यतेति शेषः । दिव्येन वपुषामानुषरचनाविशेषेणोपलक्षितम् । दिव्यरत्नभूषितैरनेकैरित्यर्थः पाद्मे तु—'नानारत्नमयं पीठं पृष्ठे कृत्वा खगेश्वरः । रसातलादाविरभूद्विस्मयं जनयन्नृणाम् ॥ तस्मिन्पीठे महादेवीं हस्ताभ्यां गृह्य मैथिलीम् । स्वागतेनाभिनन्द्येमां संनिवेश्य तिरोदधे ॥ सा च दिव्याप्सरोभिस्तु पूज्यमाना सनातनी । वैनतेयं समारुह्य अचिरादिपथाद्गमा ॥ दासीगणैः पूर्वभवैः संवृता जगदीश्वरी । संप्राप्ता परमं धाम योगिगम्यं सनातनम् ॥ रसातलप्रविष्टां तां दृष्ट्वा सर्वे प्रचुक्रुशुः ॥' इत्युक्तम् । नागैर्ध्रियमाणं प्रादुर्भूतं दृष्ट्वा दिव्येन वपुषा गरुडो जग्राहेति शेषो बोध्यः । रसातलं प्रविशन्तीमित्यस्यादृश्यायां जायमानायामित्यर्थः ॥ १७–१९ ॥

रा० टी०–तथेति । वैदेह्यां तथोक्तप्रकारेण शपन्त्यां स्वाभिप्रायं बोधयन्त्यां सत्यामद्भुतमाश्चर्यजनकमनुत्तमं सर्वश्रेष्ठं भूतलादुत्थितं दिव्यं विहारयोग्यं दिव्यं प्राकृतविलक्षणं दिव्येन वपुषोपलक्षितैः नागैर्दिव्यरत्नविभूषितैः शिरोभिर्ध्रियमाणं सिंहासनं सिंहासनविशिष्टविमानं प्रादुरासीत् शपथरूपोर्थस्त्वत्र न युज्यते परस्मैपदत्वानापत्तेः अर्द्धचतुष्टयमेकान्वयि १७–१८

रा० टी०–तस्मिन्निति । धरणी बाहुभ्यां मैथिलीं गृह्य गृहीत्वा स्वागतेनाभिनन्द्य च आसने उपवेशयत् उपावेशयत्१९

गो० टी०–यथेति । तथा शपन्त्याम् त्रिः शपन्त्याम् । तत्सिंहासनम् ॥ १८ ॥

गो० टी०–ध्रियमाणमिति । नागैः शिरोभिः ध्रियमाणमदृश्यतेति शेषः ॥ १९–२३ ॥

२०–२२ ] ति०टी०–दिव्या स्वर्गभवा । अतः परं भगवतोऽप्यागमनं शीघ्रमिति संतोषेण पुष्पवृष्टिः ॥ २०–२२ ॥

रा० टी०–तामिति । दिव्या पुष्पवृष्टिः सीता मवाकिरत् ॥ २० ॥

रा० टी०–साध्विति । देवानां महान् साधुकारः सहसोत्थितः अर्द्धं पृथक् ॥ २१ ॥

रा० टी०–साधुकाराकारं बोधयन्नाह–साध्विति । यस्यास्ते ईदृशं शीलं तस्यास्तव साधु साधुकृत्यमिति शेषः इत्येवं बहुविधा वाचः सुरा व्याजह्रुः सार्द्धश्लोक एकान्वयी ॥ २२ ॥

२३ ] ति० टी०–विस्मयादाश्चर्यमूलकाभिवन्दनव्यवहारान्नोपरेमिरे नोपरता बभूवुः ॥ २३ ॥

रा० टी०–यज्ञेति । मुनिप्रभृतयः विस्मयात् न उपरेमिरे निवृत्ता बभूवुः ॥ २३ ॥

गो० टी०–यज्ञवाटेति । विस्मयात् आश्चर्याभिज्ञावेदनव्यवहारान्नोपरेमिरे नोपरता बभूवुः ॥ २४ ॥

२४ ] ति० टी०–सर्वे स्थावरजङ्गमाश्चेतनाचेतनाः । तत्राचेतना अपि ससंज्ञा भूत्वा सीताया अयशो गतमिति संहृष्टा बभूवुः ॥ २४ ॥

२५ ] ति० टी०–अचेतसो विसंज्ञाः ॥ २५ ॥

रा० टी०–अन्तरिक्ष इति । स्थावरादयः ये सन्ति तेषां मध्ये इति शेषः केचिद्विनेदुः केचिद्ध्यानपरायणा बभूवुः केचि-

१ अचेतना इति गो. पाठः ।

सीताप्रवेशनं दृष्ट्वा तेषामासीत्समागमः । तन्मुहूर्तमिवात्यर्थं समं संमोहितं जगत् ॥ २६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

## अष्टनवतितमः सर्गः ।

सीतामदृश्यां ज्ञात्वा दाशरथिं महाशोकं ससुरगणो ब्रह्मासान्त्वयत् वाल्मीकिरचितोत्तरकथाश्रवणाय चोपादिशत् रामस्तु शोकमत्यक्त्वा पुत्रौ स्वीकृत्योत्तरचरितं श्रोतुं पर्णशालां प्राविशत् ।

रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः । चुक्रुशुः साधुसाध्वीति मुनयो रामसंनिधौ ॥ १ ॥
दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेक्षणः । अवाक्शिरा दीनमना रामो ह्यासीत्सुदुःखितः॥२॥
स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन् । क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ३ ॥
अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति । पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४ ॥
सादर्शनं पुरा सीता लङ्का पारे महोदधेः । ततश्चापि मयानीता किं पुनर्वसुधातलात् ॥ ५ ॥

द्रामं केचित् सीतां निरीक्षन्ते केचिदचेतसो बभूवुरिति शेषः अर्द्धचतुष्टयमेकान्वयि ॥ २४ ॥ २५ ॥

गो० टी०—अन्तरिक्ष इति । संहृष्टा इति । सीतायाः ऽायशो गतमिति संहृष्टाः । अचेतनाः विसंज्ञाः ॥ २५ ॥२६॥

२६ ] ति० टी०—सीताप्रवेशनं दृष्ट्वा तेषां मुन्यादीनां समागमः संबन्ध आसीत् । हर्षादिभिरिति शेषः । यदेवं तस्मात्सर्वं सर्वं जगन्मुहूर्तमत्यर्थं संमोहितमिव संमोहितमेवाभूत् ॥ २६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

रा० टी०—सीतेति । सीताप्रवेशनं दृष्ट्वा तेषां वाल्मीकिप्रभृतीनां समागमः आसीत् तत्तस्माद्धेतोः जगत् समं सहैव मुहूर्त्तं संमोहितमेवाभवत् ॥ २६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्तनवतितमः सर्गः ॥ ९७ ॥

गो० टी०—सीताप्रवेशनमिति । तेषां मुन्यादीनाम् । समागमः हर्षसंबन्धः । यदेवमतः संमोहितमिव संमोहितमेवाभूत् ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने सप्तनवतितमः सर्गः ॥ ९७ ॥

१ ] ति० टी०—अथ रामस्य सीतान्तर्धानजं क्रोधं भगवांस्तत्त्वबोधनेन शमयति—रसातलमिति । साधुसाध्वीति दीर्घ आर्षः ॥ १ ॥

रा० टी०—सीताप्रवेशानन्तरकालिकं वृत्तमाह—रसातलमित्यादिभिः । सर्ववानराः मुनयश्च साधु साध्विति चुक्रुशुः एतेन तेपि सीतारामाभिप्रायाभिज्ञा इति ध्वनितम् साधुसाध्वीति दीर्घ आर्ष इति भट्टाः ॥ १ ॥

गो० टी०—रसातलमित्यादि ॥ १ ॥

२–३ ] ति० टी०—दण्डरूपं काष्ठं दण्डकाष्ठम् । दीक्षितेन सोमक्रयपर्यन्तं धारणीयमौदुम्बरं दण्डमवष्टभ्येत्यर्थः । एतदवष्टम्भः शोकग्लानिवशात् ॥ २ ॥ ३ ॥

रा० टी०—दण्डेति । दण्डकाष्ठं सोमक्रयणपर्यन्तं धारणीयौदुम्बरदण्डरूपकाष्ठमवष्टभ्य रामः सुदुःखितः चिरकालादागतसीताया द्रुतं गमनेन दुःखविशिष्ट आसीत् ॥ २ ॥

रा० टी०—स इति । रामोऽब्रवीत् ॥ ३ ॥

गो० टी०—दण्डकाष्ठमिति । दण्डरूपं काष्ठं दण्डकाष्ठम् ॥ २ ॥ ३ ॥

४ ] ति० टी०—पूर्वं रावणेनासंनिधौ सीता नष्टा नाशमदर्शनं प्रापिता । संप्रति तु पश्यतो मे पश्यन्तं मामनादृत्य रूपिणी श्रीरिव सीता नष्टादर्शनं प्रापिता यथा यतः, अतो मे मनोऽभूतपूर्वं शोकं स्प्रष्टुमिवेच्छति ॥ ४ ॥

रा० टी०—तदाकारमाह—अभूतेत्यादिभिः । यथावत् पश्यतो मे अग्रे सीता नष्टा अदर्शनं प्राप्ता अतः मे मनः अभूतपूर्वमिव शोकं स्प्रष्टुमिच्छति एतेन चिरकालं मातृसन्निधौ सीता स्थास्यतीति रामनिश्चयस्सूचितः ॥ ४ ॥

गो० टी०—अभूतपूर्वमिति । मनः शोकमिव, मनः शोकमेव स्प्रष्टुमिति । पश्यतो मेव सा नष्टेति । मामप्यनादृत्य ॥४॥

५ ] ति० टी०—महोदधेः पारे लङ्कां गता सा सीतादर्शनं प्राप्ता । ततो लङ्कातः ॥ ५ ॥

रा० टी०—वियोगहेतुकरामविलापमाह—सेत्यादिभिः । पुरा सीता अदर्शनं यथा भवति तथा लंकां गतेति शेषः ततो लङ्कातोपि मया आनीता वसुधातलात् अनीता भविष्यतीति किम् ॥ ५ ॥

गो० टी०—सेति । नीता प्रापितवतीत्यर्थः । सा अदर्शनमिति पदच्छेदः ॥ ५–८ ॥

वसुधे देवि भवति सीता निर्यात्यतां मम । दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ६ ॥
कामं श्वश्रूर्ममैव त्वं त्वत्सकाशात्तु मैथिली । कर्षता फालहस्तेन जनकेनोद्धृता पुरा ॥ ७ ॥
तस्मान्निर्यात्यतां सीता विवरं वा प्रयच्छ मे । पाताले नाकपृष्ठे वा वसेयं सहितस्तया ॥ ८ ॥
आनय त्वं हि तां सीतां मत्तोऽहं मैथिलीकृते । न मे दास्यसि चेत्सीतां यथारूपां महीतले ॥ ९ ॥
सपर्वतवनां कृत्स्नां व्यथयिष्यामि ते स्थितिम् । नाशयिष्याम्यहं भूमिं सर्वमापो भवन्त्विह ॥ १० ॥
एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते । ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ११ ॥
राम राम न संतापं कर्तुमर्हसि सुव्रत । स्मर त्वं पूर्वकं भावं मन्त्रं चामित्रकर्शन ॥ १२ ॥
न खलु त्वां महाबाहो स्मारयेयमनुत्तमम् । इमं मुहूर्तं दुर्धर्ष स्मर त्वं जन्म वैष्णवम् ॥ १३ ॥
सीता हि विमला साध्वी तव पूर्वपरायणा । नागलोकं सुखं प्रायात्त्वदाश्रयतपोबलात् ॥ १४ ॥

६-७ ] ति० टी०-यथा मामवगच्छसि । मद्बलं वराहावतारादौ त्वमेव जानासीत्यर्थः ॥ ६ ॥ ७ ॥

रा० टी०-वसुधे इति । सीता निर्यात्यतां दीयतां यथा यदि मामवगच्छसि अवजानासि तदा रोषं कोपं दर्शयिष्याम्येव वाशब्द एवार्थे ॥ ६ ॥

रा० टी०-कोपमन्तरेव त्वया दातव्यमिति सूचयन्नाह—काममिति । फालहस्तेन कामं यथेष्टं कर्षता जनकेन त्वत्सकाशात् मैथिली उद्धृता अतः मम त्वं श्वश्रूरेव एतेन त्वयापहर्तुं न योग्येति व्यञ्जितम् ॥ ७ ॥

८ ] ति० टी०-विवरं वा प्रयच्छ । प्रविश्य तया सह स्थातुमिति भावः ॥ ८ ॥

रा० टी०-तस्मादिति । तस्माद्वियोगस्य अन्याय्यत्वाद्धेतोः तया सीतया सहित एवाहं वसेयमतः सीता निर्यात्यताम् दीयताम् मे मह्यमपि विवरं तत्सन्निधिप्रापकविमानविशेषं प्रयच्छ वा ॥ ८ ॥

९-११ ] ति० टी०-अहं मैथिलीकृते मत्तः । प्राप्तमोह इत्यर्थः । महीतले प्रविष्टामिति शेषः ॥ ९-११ ॥

रा० टी०-आनयेति । मैथिलीकृते अहं मत्तोस्मि अतः महीतले गतां सीतां चेद्यदि न दास्यसि तदा कृत्स्नां त्वां भूमिं व्यथयिष्यामि अत एव ते स्थितिं नाशयिष्यामि ध्वंसयिष्यामि अत एव सर्वं जगत् आपो भवन्तु श्लोकद्वयमेकान्वयि ॥ ९ ॥ १० ॥

रा० टी०-एवमिति । ब्रह्मा रघुनन्दनमुवाच ॥ ११ ॥

गो० टी०-आनयेति । मत्तः प्राप्तमोह इत्यर्थः । महीतल इति । प्रविष्टामिति शेषः ॥ ९-११ ॥

१२ ] ति० टी०-ननु कथमिदानीं संतापापगम इति चेत्तस्य स्वतत्त्वाज्ञाननटनादिमूलकत्वात् । स्वतत्त्वस्मरणनटनमेव कुर्वित्याह—स्मर त्वं पूर्वकं भावमिति । वैष्णवमित्यर्थः । 'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥' इति श्रुतेः । मन्त्रं देवैः महावतारसमये कृतम् । मानुषभावमूलरावणवधाश्वमेधयागान्तसर्वकृत्यानां निर्वृत्तत्वेनेदानीं तस्यावरणनाटनेन फलाभाव इति भावः ॥ १२ ॥

रा० टी०-तदाकारमाह—रामेत्यादिभिः । त्वं पूर्वकं भावमप्रकटसाकेतप्रेषणरूपस्वाभिप्रायं मन्त्रमस्माभिस्सह भाषणं च स्मर अतः सन्तापं कर्तुं नार्हसि ॥ १२ ॥

गो० टी०-राम रामेति । स्मर त्वं पूर्वकं भावं, पूर्वकं स्वभावं विष्णुत्वमित्यर्थः । मन्त्रं देवैः सहावताराय कृतं विचारम् ॥ १२ ॥

१३ ] ति० टी०-ननु किं मां त्वं स्मारयसीत्यत्राह—नेति । विस्मृततत्त्वमिव स्मरणं कुर्विति न प्रार्थयामि । किं त्विमं मुहूर्तमस्मिन्काले हे दुर्धर्ष ! वैष्णवमात्मानमिह जन्म प्राप्तवन्तं स्मर । ध्यानेन पश्येत्यर्थः । एतावत्पर्यन्तं कार्यनिर्वाहाय मनुष्योऽहमिति ध्यानेन तथाभावं नाटितवानपीदानीं तत्त्यजेत्यर्थः । 'तं खलु त्वाम्' इति पाठेऽनुत्तमं समाभ्यधिकरहितं ब्रह्मस्वरूपं तमुपनिषत्प्रसिद्धं स्मारयेयं स्मरणाय प्रार्थये । किं स्मर्तव्यत्वेन प्रार्थयसीत्यत्राह—इममिति । पूर्ववदेवार्थः । भृङ्गकीटन्यायेन तद्ध्यानतस्तद्भावनाटनमिति भावः । भगवतो रामस्य तथानाटनाद्ब्रह्मापि स्मारयेयमित्यादिप्रयुक्तवानिति ध्येयम् । न त्वेतावता भगवतो वस्तुतस्तद्भावप्राप्तिरिति ध्येयम् ॥ १३ ॥

रा० टी०-नेति । अनुत्तमं सर्वश्रेष्ठं त्वाम् अहं न स्मारयेयम् स्मारयितुं न समर्थ इत्यर्थः एतेन तस्य सर्वकालं विस्मृतिराहित्यं सूचितम् ननु तर्हि अहमपि सीतया सह गच्छेयमित्यत आह इमं संकल्पितयागसम्बन्धिनं मुहूर्तं कालं वैष्णवं विष्णुप्रार्थनासम्बन्धिजन्म स्वप्रादुर्भावं च स्मर एतेन संकल्पितयागं संत्यज्य भवतो गमनं नोचितमिति सूचितम् ॥ १३ ॥

गो० टी०-न खल्विति । त्वामहं न स्मारयेयम् । सर्वज्ञत्वादिति भावः । पूर्वकं भावमित्युक्तं विशिनष्टि-इममिति ॥ १३ ॥

१४ ] ति० टी०-मामाश्रिता सीता एवं गतेत्यपि न शोकः कार्य इत्याह—सीतेति । विमला स्वत एव सर्वावद्यशून्या । वस्तुतस्तस्यास्त्वदभिन्नत्वादिति भावः । तव पूर्व-

१ दीति गो. पाठः । २ विधमिष्यामीति गो. पाठः ।

स्वर्गे ते संगमो भूयो भविष्यति न संशयः । अस्यास्तु परिषन्मध्ये यद्ब्रवीमि निबोध तत् ॥१५॥
एतदेव हि काव्यं ते काव्यानामुत्तमं श्रुतम् । सर्वं विस्तरतो राम व्याख्यास्यति न संशयः ॥१६॥
जन्मप्रभृति ते वीर सुखदुःखोपसेवनम् । भविष्यदुत्तरं चेह सर्वं वाल्मीकिना कृतम् ॥ १७ ॥
आदिकाव्यमिदं राम त्वयि सर्वं प्रतिष्ठितम् । नह्यन्योऽर्हति काव्यानां यशोभाग्राघवादृते ॥ १८ ॥
श्रुतं ते पूर्वमेतद्धि मया सर्वं सुरैः सह । दिव्यमद्भुतरूपं च सत्यवाक्यमनावृतम् ॥ १९ ॥
स त्वं पुरुषशार्दूल धर्मेण सुसमाहितः । शेषं भविष्यं काकुत्स्थ काव्यं रामायणं शृणु ॥२०॥
उत्तरं नाम काव्यस्य शेषमत्र महायशः । तच्छृणुष्व महातेज ऋषिभिः सार्धमुत्तमम् ॥ २१ ॥

परायणा तव प्रकृतिप्राप्तिसमुत्सुका । त्वदाश्रयस्त्वदाश्रयणं तद्रूपतपोबलात् । नागलोकगमनव्याजेन नागलोकं विष्णुलोकं सुखं प्रायात् । 'तपःपूर्वपरायणा' इति पाठे पूर्वं वेदवतीदेहेऽनुष्ठिततपःशेषानुष्ठानपरायणेत्यर्थ इति कतकः । तदनुष्ठानं रावणवधादिरूपमेवेति भाति ॥ १४ ॥

रा० टी०–ननु सीता क्वास्तीत्यत आह—सीतेति । त्वदाश्रयतपोबलात् त्वदाश्रयणरूपतपोबलं प्राप्य वियमाना पूर्वस्मिन् सर्वादिभूते त्वय्येव परमयनं यस्याः सा सीता नागलोकं प्रायात् अगात् एतेन तस्मिन्नेव लोके पृथिव्यभिमानिदेवताया गृहमस्तीति सूचितम् ॥ १४ ॥

गो० टी०–सीतेति । तव पूर्वपरायणा तव पूर्वभावप्रवणा । तव प्रकृतिप्राप्तिसमुत्सुकेत्यर्थः ॥ १४ ॥ १५ ॥

१५ ] ति० टी०–अस्याः संगमश्च ते भूयः स्वर्गे परस्वर्गे ब्रह्मलोके भविष्यति नान्यत्र । परिषदिति लुप्तसप्तम्यन्तम्॥१५॥

रा० टी०–ननु कदा संङ्गमो भविष्यतीत्यत आह—स्वर्ग इति । स्वर्गे साकेते ते अस्याः सङ्गमो भूयोत्यन्तं भविष्यति अतः परिषन्मध्ये यद्ब्रवीमि तन्निबोध ॥ १५ ॥

१६ ] ति० टी०–एतत्काव्यमेवोत्तमं श्रुतं सर्वं ज्ञापनीयं विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥

रा० टी०–तद्वचनाकारमाह—एतदित्यादिभिः । यदेतत्काव्यं त्वया श्रुतं तदेतदेव ते कर्तव्यमिति शेषः विस्तरतो व्याख्यास्यति कथयिष्यति ॥ १६ ॥

गो० टी०–एतदित्यादि । एतत्काव्यमेवोत्तमं श्रुतं तत्सर्वं ज्ञापनीयम् विस्तरतो व्याख्यास्यति ज्ञापयिष्यति ॥ १६ ॥

१७ ] ति० टी०–कुत एवं तत्राह—जन्मेति । सुखदुःखोपसेवनं सुखदुःखोपसेवाकथनरूपं भविष्यदुत्तरं चेति । सीतोपसंहारादुत्तरं यत्ते चरितं भविष्यति तत्सर्वमिह काव्ये त्रिकालज्ञेन कृतं कृतनिबन्धनम् ॥ १७ ॥

रा० टी०–तथा कथने हेतुमाह—जन्मेति । जन्मप्रभृति जन्मकालादारभ्य ते सुखदुःखोपसेवनं भविष्यत् चिन्तयिष्यमाणमुत्तरमुत्तरकालककृत्यं च इह अस्मिन् काव्ये वाल्मीकिना कृतम् ॥ १७ ॥

गो०टी०–तदेवाह–जन्मप्रभृतीत्यादि । भविष्यदुत्तरं चेति । सीतोपसंहारादुत्तरं च यत्ते चरितं भविष्यति, तत्सर्वमपि मदनुग्रहात् त्रिकालज्ञेन वाल्मीकिना कृतं कृतनिबन्धनम् । इह काव्ये । भविष्यत्युत्तरं चेति च पाठः ॥ १७ ॥

१८ ] ति० टी०–त्वयि त्वच्चरितविषये । त्वत्तो राघवादृतेऽन्यः काव्यानां यशोभाक्काव्यप्रकाश्ययशोभाक्कश्चिदपि नार्हति । काव्यनायकतामिति भावः । अन्येषां वर्णनीयगुणशून्यत्वात्सर्वे कवयोऽद्यापि रामचरितमेव प्रायेणाश्रयन्ति१८॥

रा० टी०–आदीति । इदमादिकाव्यं त्वय्येव प्रतिष्ठितं परत्वेन त्वत्प्रतिपादकमित्यर्थः हि यतः काव्यानां सत्कविप्रणीतानां ग्रन्थानां यशोभाक् वर्ण्यमानयशसामाश्रयः राघवात्त्वत्तः ऋते विना न एतेन सर्वेषां काव्यानां त्वय्येव पर्यवसानमस्तीति सूचितम् ॥ १८ ॥

गो० टी०–आदिकाव्यमिति । त्वयि त्वच्चरितविषये । राघवादृतेन्यः काव्यप्रकाशितयशोभाक् कश्चिदपि काव्यनायकतां नार्हति । अत एवाद्यापि सर्वे कवयो रामचरितमेव प्रायेणाश्रयन्ते ॥ १८ ॥

१९ ] ति० टी०–अस्य काव्यस्य महत्त्वं सर्वमहता मयैव परिग्रहादित्याह—श्रुतमिति । ते एतत्त्वत्संबन्धीदं काव्यम् । स्वस्य श्रोतव्यत्वे हेतुः—सत्यवाक्यमिति । तत्रापि हेतुः—अनावृतमिति । अविद्यामूलप्रलापरहितम्, अतएव दिव्यम् । पूर्वं श्रुतं काव्यरूपिण्या देव्या मुखादेवेति शेषः ॥ १९ ॥

रा० टी०–ननु मत्पर्यवसानकमेवेदमिति त्वया कथं ज्ञातमित्यत आह—श्रुतमिति । दिव्यं प्रकृतविलक्षणवस्तुप्रतिपादकत्वेन प्राकृतविलक्षणमत एव अद्भुतरूपं सत्यानि वाक्यानि यस्मिन् तत् अनावृतमज्ञानावरणविनाशकमेतत्काव्यं मया सार्द्धं सुरैस्सह च त्वया श्रुतम् ॥ १९ ॥

गो०टी०–श्रुतमिति । अनावृतमज्ञानावरणरहितम् ॥१९

२० ] ति० टी०–भविष्यं भविष्यद्विषयं शेषं शृणु॥२०॥

रा० टी०–स इति । शेषं श्रवणादवशिष्टं भविष्यं भविष्यत्कालकचरितबोधकं रामायणं शृणु एतेन इतः प्रभृति एतदनुसारेणैव कर्तव्यमिति प्रार्थना सूचिता ॥ २० ॥

गो० टी०–स त्वमिति । भविष्यं भविष्यद्विषयम्॥२०॥

२१ ] ति० टी०–किं तत्राह—उत्तरं नामेति । उत्तराख्यो यः काव्यस्य शेषोऽस्ति तच्छृणुष्व । हे महातेजः ऋषिभिर्ब्रह्मलोकस्थैर्ऋषिभिः ॥ २१ ॥

१ भविष्यतीति गो. पा. ।

न खल्वन्येन काकुत्स्थ श्रोतव्यमिदमुत्तमम् । परमर्षिणा वीर त्वयैव रघुनन्दन ॥ २२ ॥
एतावदुक्त्वा वचनं ब्रह्मा त्रिभुवनेश्वरः । जगाम त्रिदिवं देवो देवैः सह सबान्धवैः ॥ २३ ॥
ये च तत्र महात्मान ऋषयो ब्राह्मलौकिकाः । ब्रह्मणा समनुज्ञाता न्यवर्तन्त महौजसः ॥ २४ ॥
उत्तरं श्रोतुमनसो भविष्यं यच्च राघवे । ततो रामः शुभां वाणीं देवदेवस्य भाषिताम् ॥२५॥
श्रुत्वा परमतेजस्वी वाल्मीकिमिदमब्रवीत् । भगवञ्श्रोतुमनस ऋषयो ब्राह्मलौकिकाः ॥ २६ ॥
भविष्यदुत्तरं यन्मे श्वोभूते संप्रवर्तताम् । एवं विनिश्चयं कृत्वा संप्रगृह्य कुशीलवौ ॥ २७ ॥
तं जनौघं विसृज्याथ पर्णशालामुपागमत् । तामेव शोचतः सीतां सा व्यतीता च शर्वरी ॥२८॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

## एकोनशततमः सर्गः ।

रामस्तु प्रभाते स्वपुत्रगीतमुत्तरचरितं श्रुत्वा तस्य क्रतोः समाप्तौ जानकीं विना विमनाः स्वमयोध्यां विवेश ततो बहुविधान्क्रतून् कृत्वापि भार्यान्तरमकुर्वन् काञ्चनीं सीतां चकार कौसल्यादिमातॄणां त्रिदिवगमनं ततो रामे शासति काले पर्जन्योऽभवदकालमृत्यादिकं नासीत् ।

रजन्यां तु प्रभातायां समानीय महामुनीन् । गीयतामविशङ्काभ्यां रामः पुत्रावुवाच ह ॥ १ ॥
ततः समुपविष्टेषु महर्षिषु महात्मसु । भविष्यदुत्तरं काव्यं जगतुस्तौ कुशीलवौ ॥ २ ॥

रा० टी०—तदेव भङ्ग्यन्तरेणाह—उत्तरमिति । उत्तरं नाम काव्यस्य शेषमत्र शृणुष्व ॥ २१ ॥

गो० टी०—उत्तरं नामेति । उत्तरकाण्डाख्यकाव्यं शेषभूतम् ॥ २१ ॥

२२ ] ति० टी०—अतिरहस्यत्वान्न नायमंशः सर्वैः श्रोतव्य इत्याह—नेति । परमऋषिणा परमराजर्षिणा त्वयैव श्रोतव्यम् । नान्येन लक्ष्मणादिनेत्यर्थः । एवं भगवतः परमादरः । काव्यस्य स्वावतारविषयत्वादिति बोध्यम् ॥ २२ ॥

रा० टी०—नेति । परमऋषिणा सर्वज्ञेन त्वयैव इदमुत्तरं काव्यं श्रोतव्यमन्येन भरतादिद्वारेत्यर्थः न श्रोतव्यम् एतेन रामस्य महान् खेदो ब्रह्मणावलोकित इति सूचितम् ॥ २२ ॥

गो०टी०—नेति । परमर्षिणा परमराजर्षिणा ॥२२॥२३॥

२३ ] ति० टी०—सबान्धवैर्देवैः सहेत्यर्थः ॥ २३ ॥

रा० टी०—एतावदिति । ब्रह्मा त्रिदिवं जगाम ॥२३॥

२४ ] ति० टी०—तत्र सदसि । ब्राह्मलौकिका ब्रह्मलौकिकार्हाः । न्यवर्तन्त । उत्तरं श्रोतुमिति शेषः ब्रह्मणा सह चलिता अपि पुनर्निवृत्ता इत्यर्थः ॥ २४ ॥

रा० टी०—ये इति । राघवे भविष्यं भविष्यत्कालकचरितविशिष्टमुत्तरं श्रोतुमनसो ब्रह्मलौकिका ब्रह्मलोकस्था अपि ये ऋषयस्तेपि ब्रह्मणा समनुज्ञाताः सन्तः न्यवर्त्तन्त ब्रह्मणा सह गमनादिति शेषः सार्द्धश्लोक एकान्वयी ॥ २४ ॥

गो० टी०—ये चेति । ये च तत्रेति । यज्ञसदसीत्यर्थः । ब्राह्मलौकिकाः ब्रह्मलोकार्हाः ॥ २४–२६ ॥

२५–२७ ] ति०टी०—तदेवाह—उत्तरमिति॥२५–२७॥

रा० टी०—तत इति । रामः वाल्मीकिमब्रवीत् ॥ २५ ॥

रा० टी०—तदाकारमाह—भगवन्निति । ब्रह्मलौकिकाः ऋषयः मे भविष्यदुत्तरं चरितं श्रोतुमनसः अतः श्वोभूते सम्प्रवर्तताम् ॥ २६ ॥

रा० टी०—एवमिति । कुशीलवौ सम्प्रगृह्य कर्मशालामुपागमत् राम इति शेषः ॥ २७ ॥

गो० टी०—एवमिति । पर्णशालामुपागमदिति । यज्ञावसान एव सीतान्तर्धानात्, ततः परं दीक्षाराहित्येन स्थलान्तरस्य सुगमत्वात्, पुत्राभ्यां सह वाल्मीकिपर्णशालामेव रामः प्राप्तवानित्यर्थः ॥ २७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टनवतितमः सर्गः ॥ ९८ ॥

२८ ] ति० टी०—'पर्णशालामुपागमत्' इति पाठे यज्ञावसान एव सीतान्तर्धानात्ततः परं दीक्षितत्वाभावेनान्यत्र गन्तुं शक्यत्वात्पुत्राभ्यां सह वाल्मीकिपर्णशालां रामः प्राप्तवानित्यर्थः । 'कर्मशालामुपागमत्' इति पाठान्तरम् ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टनवतितमः सर्गः ॥ ९८ ॥

रा० टी०—तामिति । सीतां शोचत एव रामस्य शर्वरी व्यतीयाय अर्द्धं पृथक् ॥ २८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टनवतितमः सर्गः ॥ ९८ ॥

१–२ ] ति० टी०—अथ राममातॄणां परलोकप्राप्तिः—

१ परममृषिणेति गो. पाठः । २ देवेनेति गो. पाठः । ३ कर्मेति रा. पा. । ४ व्यतीयायेति गो. पा. । ५ ब्रह्मर्षिष्विति गो. पा. ।

प्रविष्टायां तु सीतायां भूतलं सत्यसंपदा । तस्यावसाने यज्ञस्य रामः परमदुर्मनाः ॥ ३ ॥
अपश्यमानो वैदेहीं मेने शून्यमिदं जगत् । शोकेन परमायस्तो न शान्तिं मनसागमत् ॥ ४ ॥
विसृज्य पार्थिवान्सर्वानृक्षवानरराक्षसान् । जनौघं विप्रमुख्यानां वित्तपूर्वं विसृज्य च ॥ ५ ॥
[ एवं समाप्य यज्ञं तु विधिवत्स तु राघवः । ]
ततो विसृज्य तान्सर्वान्रामो राजीवलोचनः । हृदि कृत्वा सदा सीतामयोध्यां प्रविवेश ह ॥ ६ ॥
[ इष्टयज्ञो नरपतिः पुत्रद्वयसमन्वितः । ]
न सीतायाः परां भार्यां वव्रे स रघुनन्दनः । यज्ञे यज्ञे च पत्न्यर्थं जानकी काञ्चनीभवत् ॥ ७ ॥
दशवर्षसहस्राणि वाजिमेधानथाकरोत् । वाजपेयान्दशगुणांस्तथा बहुसुवर्णकान् ॥ ८ ॥
अग्निष्टोमातिरात्राभ्यां गोसवैश्च महाधनैः । ईजे क्रतुभिरन्यैश्च स श्रीमानाप्तदक्षिणैः ॥ ९ ॥
एवं स कालः सुमहान्राज्यस्थस्य महात्मनः । धर्मे प्रयतमानस्य व्यतीयाद्राघवस्य च ॥ १० ॥
ऋक्षवानररक्षांसि स्थिता रामस्य शासने । अनुरञ्जन्ति राजानो ह्यहन्यहनि राघवम् ॥ ११ ॥

---

रजन्यामिति । गीयतामित्युवाच । अविशङ्काभ्यां मत्पुत्रत्वविषयशङ्कारहिताभ्यां मातृवियोगदुःखरहिताभ्यां च ॥ १ ॥ २ ॥

रा० टी०–कर्मशालाप्रवेशानन्तरकालिकं वृत्तमाह–रजन्यामित्यादिभिः । अविशंकाभ्यां युवाभ्यां गीयतामिति रामः पुत्रावुवाच ॥ १ ॥

रा० टी०–तत इति । कुशीलवौ भविष्यत् भविष्यत्काकुत्स्थचरितप्रतिपादकमुत्तरं काव्यं जगतुः ॥ २ ॥

गो० टी०–रजन्यां त्वित्यादि । गीयतामित्युवाच । अविशङ्काभ्यां मत्पुत्रत्वविषयशङ्कारहिताभ्याम् । मातृवियोगदुःखरहिताभ्यां वा ॥ १ ॥ २ ॥

३–४ ] ति० टी०–सत्यसंपदा स्वस्य सत्यवैभवेन । तस्य यज्ञस्यावसाने सीतानिर्याणोत्तरकाले ॥ ३ ॥ ४ ॥

रा० टी०–प्रविष्टायामिति । सत्यसम्पदा सत्यरूपसंपत्त्योपलक्षितायां सीतायां भूतलं प्रविष्टायां सत्यां यज्ञस्य क्रत्वश्वमेधयोरवसाने च सति वैदेहीमपश्यमानः अत एव शोकेन परमायस्तः अत्यन्तं निविष्टः अत एव परमदुर्मनाः रामः इदं जगत् शून्यं प्रियवस्तुरहितं मेने अत एव शान्तिं नागमत् श्लोकद्वयमेकान्वयि ॥ ३ ॥ ४ ॥

गो० टी०–प्रविष्टायामिति । सत्यसंपदा सत्यवैभवेन । तस्यावसाने यज्ञस्येति । सीतानिर्याणासन्नपूर्वकाल इत्यर्थः ३ ॥ ४

५–६ ] ति० टी०–वित्तपूर्वं वित्तदानपूर्वम् ॥ ५ ॥ ६ ॥

रा० टी०–विसृज्येति । वित्तपूर्वं धनप्रदानपूर्वकं पार्थिवादीन् विसृज्य रामोवर्ततेति शेषः ॥ ५ ॥

रा० टी०–तत इति । रामः अयोध्यां प्रविवेश ॥ ६ ॥

गो० टी०–विसृज्येति । वित्तपूर्वं वित्तदानपूर्वमित्यर्थः ॥ ५–७ ॥

७ ] ति० टी०–यज्ञे यज्ञे प्रतिक्रयम् । भवदभवत् ॥ ७ ॥

रा० टी०–नेति । रघुनन्दनः सीतायाः परां भिन्नां भार्यां न वव्रे उदुवाह अत एव यज्ञे यज्ञे सर्वस्मिन् यागे पत्न्यर्थं पत्नीसाध्यकार्यसिध्यर्थं काञ्चनी सुवर्णमयी जानकी भवत् अभवत् ७

गो० टी०–नेति । न सीताया इत्यनेन रामस्य एकदारव्रतं सीताप्रतिनिधिनैव यज्ञनिर्वर्तनं च दर्शितम् ॥ ८ ॥

८–१० ] ति० टी०–दशवर्षसहस्राणीति यागकालमर्यादेयम्, न तु सीतावियोगानन्तरं तावान्यागकाल इति कतकः । तत्र सीतावियोगानन्तरं तावतो यागकालत्वे किं बाधकमिति चिन्त्यम् । न तु भूमौ सीतागमनोत्तरमिति वक्तुं युक्तम् ८–१० ॥

रा० टी०–यागसंख्यां बोधयन्नाह–दशेति । दशवर्षसहस्राणि त्रिंशद्वर्षसहस्राणीत्यर्थः राज्यं चकारेति शेषः अथ अनन्तरम् त्रिसहस्रवर्षाणीत्यर्थः वाजिमेधानकरोत् बहुसुवर्णकान् विपुलसुवर्णदक्षिणाकान् दशगुणान् अश्वमेधापेक्षया दशगुणाधिकान् वाजपेयान् अकरोत् किञ्च वर्षसहस्राणि सहस्रत्रयवर्षपर्यन्तमित्यर्थः दशवाजिमेधान् दशगुणान् शतसंख्याकानित्यर्थः वाजपेयांश्चाकरोत् अत एव दशवर्षसहस्राणि दशवर्षशतानि चेत्यादिना न विरोधः अत एव एवं प्रशासतस्तस्य राघवस्य महेश्वरि । अत्ययाद्दशसाहस्रं रममाणस्य सीतयेति पद्मपुराणं संगच्छते ॥ ८ ॥

रा० टी०–अग्नीति । आप्ता पूर्णा दक्षिणा येषु तैरग्निष्टोमादिभिः श्रीमान् राम ईजे ॥ ९ ॥

रा० टी०–एवमिति । धर्मे प्रयतमानस्य रामस्य सुमहान् कालो व्यतीयात् व्यत्ययात् ॥ १० ॥

गो० टी०–दशवर्षेति । दशवर्षसहस्राणीत्यनेन प्रथमयज्ञ एव सीताया भूप्रवेश इत्युक्तम् । बहुसुवर्णकान् बहुसुवर्णकयागान् ॥ ९ ॥

गो० टी०–अग्निष्टोममिति । गोसवैः गोसवाख्ययागैः । अश्वमेधसंक्षेपैरिति संक्षेपवचनमेतत्परं वेदितव्यम् (?) शतशब्दस्य बहुसंख्यावचनत्वात् । गोशतैश्चेति पाठः ॥ १०–१२ ॥

११ ] ति० टी०–स्थिता स्थितानि । अनुरञ्जन्त्यनुरञ्जयन्ति ॥ ११ ॥

---

१ इदमर्धमधिकं गो. पाठे । २ तदेति गो. पाठः । ३ इदमर्धमधिकं गो. पु. । ४ स्विति गो. पाठः । ५ अनयोरर्धयोर्व्यत्यासेन पाठो गो. पुस्त. ।

काले वर्षति पर्जन्यः सुभिक्षं विमला दिशः । हृष्टपुष्टजनाकीर्णं पुरं जनपदास्तथा ॥ १२ ॥
नाकाले म्रियते कश्चिन्न व्याधिः प्राणिनां तथा । नानर्थो विद्यते कश्चिद्रामे राज्यं प्रशासति ॥ १३ ॥
अथ दीर्घस्य कालस्य राममाता यशस्विनी । पुत्रपौत्रैः परिवृता कालधर्ममुपागमत् ॥ १४ ॥
अन्वियाय सुमित्रा च कैकेयी च यशस्विनी । धर्मं कृत्वा बहुविधं त्रिदिवे पर्यवस्थिता ॥ १५ ॥
सर्वाः प्रमुदिताः स्वर्गे राज्ञा दशरथेन च । समागता महाभागाः सर्वधर्मं च लेभिरे ॥ १६ ॥
तासां रामो महादानं काले काले प्रयच्छति । मातॄणामविशेषेण ब्राह्मणेषु तपस्विषु ॥ १७ ॥
पित्र्याणि ब्रह्मरत्नानि यज्ञान्परमदुस्तरान् । चकार रामो धर्मात्मा पितॄन्देवान्विवर्धयन् ॥ १८ ॥
एवं वर्षसहस्राणि बहून्यथ ययुः सुखम् । यज्ञैर्बहुविधं धर्मं वर्धयानस्य सर्वदा ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोनशततमः सर्गः ॥ ९९ ॥

---

रा० टी०–ऋक्षेति । रामस्य शासने स्थिताः ऋक्षादय-राजानश्च राघवमनुरञ्जन्ति ॥ ११ ॥

१२–१३] ति० टी०–सुभिक्षम् । अभवदिति शेषः१२-१३

रा० टी०–काल इति । पर्जन्यः काले उचितसमये एव वर्षति अत एव सुभिक्षमस्तीति शेषः अत एव दिशः विमलाः पुरं जनपदाश्च हृष्टपुष्टजनैराकीर्णम् ॥ १२ ॥

रा० टी०–नेति । रामे राज्यं प्रशासति सति अकाल-मरणादि न ॥ १३ ॥

गो० टी०–काल इति । सुभिक्षमिति । अभवदिति शेषः ॥ १३–१६ ॥

१४ ] ति० टी०–पौत्राः कुशलवाद्याः ॥ १४ ॥

रा० टी०–अथेति । दीर्घस्य कालस्य अपगमे सति राममाता न कालस्य धर्मो यत्र तं साकेतमुपागमत् ॥ १४ ॥

१५ ] ति० टी०–अन्वियाय तस्या अनु पश्चादियाय । कालधर्ममिति शेषः । बहुविधं नानाप्रकारम् ॥ १५ ॥

रा० टी०–अन्विति । सुमित्रा कैकेयी च त्रिदिवे त्रयाणां ब्रह्मादीनां दिवः स्तुतिर्यस्य तस्मिन्साकेते अन्वियाय प्राप अत एव पर्यवस्थिता तत्रैव स्थिता ॥ १५ ॥

१६–१७ ] ति० टी०–सर्वधर्मं सर्वधर्मसाध्यसुखभोगम् ॥ १६ ॥ १७ ॥

रा०टी०–सर्वा इति । स्वर्गे साकेते दशरथेन समागताः अत एव प्रमुदितास्सर्वाः स्त्रियस्सर्वधर्मं सकलधर्मसाध्यसुखं लेभिरे ॥ १६ ॥

रा० टी०–तासामिति । मातॄणां प्रीतये इति शेषः काले काले उचितनिखिलसमये अविशेषेण मातृषु समानभा-वेनेत्यर्थः महादानं प्रयच्छति ॥ १७ ॥

गो० टी०–सर्वा इति । सर्वधर्मं चेति । सर्वधर्मसाध्य-भोगमित्यर्थः ॥ १७–१८ ॥

१८ ] ति० टी०–पित्र्याणि पितृकर्मापेक्षितानि ब्रह्मरत्नानि ब्राह्मणदेयोत्तमवस्तूनि प्रयच्छति स्मेत्यनुकर्षः 'बहुरत्नानि' इति पाठान्तरम् । पितॄन्देवान्विवर्धयन्पूजयन् । यज्ञांश्चकारेति । पिण्डपितृयज्ञानित्यर्थः ॥ १८ ॥

रा० टी०–पित्र्याणीति । पित्र्याणि पितृसुखकारकाणि ब्रह्मरत्नानि ब्राह्मणयोग्योत्तमवस्तूनि ददाविति शेषः पितॄन् देवांश्च विवर्द्धयन् सन्तोषयन् सन् परमदुस्तरान् यज्ञान् चकार ॥ १८ ॥

गो० टी०–पित्र्याणीति । पित्र्याणि पितृकर्मापेक्षितानि ब्रह्मरत्नानि ब्राह्मणदेयवस्तूनि । प्रयच्छति स्मेत्यनु-कर्षः । पितॄन् देवान् विवर्धयन् यज्ञांश्चकारेति । पिण्डपितृ-यज्ञानित्यर्थः ॥ १९ ॥

१९ ] ति० टी०–वर्धयानस्य वर्धयमानस्य । 'यज्ञैर्बहु-विधैर्देवान्वर्धयानस्य' इति पाठान्तरम् । य 'एवं प्रशासत-स्तस्य राघवस्य महेश्वरि । अत्ययादब्दसाहस्रं रममाणस्य सीतया ॥' इति पाद्मे उक्तम्, तत्र सीतया भूमौ स्थितया स्थितस्य रममाणस्य राज्यं कुर्वत इत्यर्थः । साहस्रमिति स्वार्थेऽण् । 'अत्ययाद्वर्षसाहस्रम्' इति पाठे सहस्राणां समूहः साहस्रं सहस्रसमूह इत्यर्थकतया दशसहस्रेत्यर्थकमेव । आयुस्तस्यैकादशसहस्रवर्षाणि ॥ १९ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

रा० टी०–उपसंहरन्नाह—एवमिति । एवमनेन प्रकारेण यज्ञैर्बहुविधं धर्मं वर्द्धयानस्य वर्द्धयमानस्य रामस्य बहूनि वर्षसहस्राणि सुखं ययुः ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोनशततमः सर्गः ॥ ९९ ॥

गो० टी०–एवमिति । वर्धयानस्य वर्धमानस्येत्यर्थः* २०

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोनशततमः सर्गः ॥ ९९ ॥

---

* वर्धयमानस्येति युक्तं भाति ।

# शततमः सर्गः ।

स्वगुरुगार्ग्यद्वारा मातुलेन युधाजिता प्रेषितानि दशाश्वसहस्राणि रत्नानि शुभान्याभरणानि च राघवः प्रतिगृह्य गार्ग्यमुनिं संपूज्य मातुलप्रहितवार्तामपृच्छत् सिंधुमुभयतः पार्श्वे परमशोभनो देशोऽस्ति यं गन्धर्वा रक्षन्ति तान्विजित्य तत्र स्वे द्वे पुरे स्थापयेति मातुलसंदेशमृषिरकथयत् राघवस्तु तक्षपुष्कलाख्यौ भरतात्मजौ पूर्वमेव तद्देशराज्येऽभिषिच्य तद्गंधर्वजयाय भरतं तत्पुत्रसहितं प्राहिणोत् ।

कस्यचित्त्वथ कालस्य युधाजित्केकयो नृपः । स्वगुरुं प्रेषयामास राघवाय महात्मने ॥ १ ॥
गार्ग्यमङ्गिरसः पुत्रं ब्रह्मर्षिममितप्रभम् । दश चाश्वसहस्राणि प्रीतिदानमनुत्तमम् ॥ २ ॥
कम्बलानि च रत्नानि चित्रवस्त्रमथोत्तमम् । रामाय प्रददौ राजा शुभान्याभरणानि च ॥ ३ ॥
श्रुत्वा तु राघवो धीमान्महर्षिं गार्ग्यमागतम् । मातुलस्याश्वपतिनः प्रहितं तन्महाधनम् ॥ ४ ॥
प्रत्युद्गम्य च काकुत्स्थः क्रोशमात्रं सहानुजः । गार्ग्यं संपूजयामास यथा शक्रो बृहस्पतिम् ॥ ५ ॥
तथा संपूज्य तमृषिं तद्धनं प्रतिगृह्य च । पृष्ट्वा प्रतिपदं सर्वं कुशलं मातुलस्य च ॥ ६ ॥
उपविष्टं महाभागं रामः प्रष्टुं प्रचक्रमे । किमाह मातुलो वाक्यं यदर्थं भगवानिह ॥ ७ ॥
प्राप्तो वाक्यविदां श्रेष्ठः साक्षादिव बृहस्पतिः । रामस्य भाषितं श्रुत्वा महर्षिः कार्यविस्तरम् ॥ ८ ॥
वक्तुमद्भुतसंकाशं राघवायोपचक्रमे । मातुलस्ते महाबाहो वाक्यमाह नरर्षभः ॥ ९ ॥
युधाजित्प्रीतिसंयुक्तं श्रूयतां यदि रोचते । अयं गन्धर्वविषयः फलमूलोपशोभितः ॥ १० ॥
सिन्धोरुभयतः पार्श्वे देशः परमशोभनः । तं च रक्षन्ति गन्धर्वाः सायुधा युद्धकोविदाः ॥ ११ ॥
शैलूषस्य सुता वीर तिस्रः कोट्यो महाबलाः । तान्विनिर्जित्य काकुत्स्थ गन्धर्वनगरं शुभम् ॥ १२ ॥

---

१-३ ] ति० टी०-अथ रामेण गन्धर्वदेशं प्रति सपुत्रस्य भरतस्य प्रेषणम्-कस्यचिदिति ॥ १-३ ॥

रा० टी०-भरतपुत्रयोः राज्यप्राप्तिवृत्तमाह कस्यचिदित्यादिभिः । कस्यचित्कालस्य अपगमे सतीति शेषः युधाजित् अङ्गिरसः पुत्रं गार्ग्यं गर्गगोत्रं स्वगुरुं राघवाय प्रेषयामास सार्द्धश्लोक एकान्वयी ॥ १ ॥

रा० टी०-दशेति । राजा युधाजित् दशाश्वसहस्राणि कम्बलादीनि च प्रीतिदानं रामाय प्रददौ सार्द्धश्लोक एकान्वयी ॥ २ ॥ ३ ॥

गो० टी०-कस्यचित्त्वित्यादि ॥ १-३ ॥

४-५ ] ति० टी०-अश्वपतिनः । छान्दसः । अश्वपतेरित्यर्थः ॥ ४ ॥ ५ ॥

रा० टी०-श्रुत्वेति । राघवः आगतं महर्षिमश्वपतिनः अश्वपतेः प्रहितं प्रेषितं महाधनं च श्रुत्वा क्रोशमात्रं प्रत्युद्गम्य च गार्ग्यं सम्पूजयामास श्लोकद्वयमेकान्वयि ॥ ४ ॥ ५ ॥

गो० टी०-श्रुत्वेति । अश्वपतिनः अश्वपतेः ॥ ४ ॥ ५ ॥

६-९ ] ति० टी०-प्रतिपदं प्रत्येकं सर्वं सर्वप्रकारं कुशलं पृष्ट्वा मातुलस्य कुशलं पृष्ट्वा ॥ ६-९ ॥

रा० टी०-तथेति सम्पूजितमृषिं सम्पूजितात् ऋषेः तत् मातामहप्रेषितधनं प्रतिगृह्य प्रतिपदं प्रत्येकं सर्वं कुशलं पृष्ट्वा उपविष्टं महाभागम् ऋषिं प्रष्टुं प्रचक्रमे सार्द्धश्लोक एकान्वयी ॥ ६ ॥

रा० टी०-प्रश्नाकारमाह-किमिति । यदर्थं भगवान् इह प्राप्तः तत् किम् वाक्यं मातुल आह ॥ ७ ॥

रा० टी०-रामस्येति । महर्षिः कार्यस्य विस्तारो यस्मिन् तत् अद्भुतसङ्काशं राघवाय वक्तुमुपचक्रमे ॥ ८ ॥

रा० टी०-तदाकारमाह-मातुल इत्यादिभिः । ते मातुलः यद्वाक्यमाह तत् यदि रोचते तर्हि श्रूयताम् ॥ ९ ॥

गो० टी०-तथेति । प्रतिपदमिति । प्रत्येकं कुशलं पृष्ट्वेत्यर्थः ॥ ६-९ ॥

१० ] ति० टी०-गन्धर्वविषयो गन्धर्वदेशः ॥ १० ॥

रा० टी०-वाक्याकारमाह अयमित्यादिभिः । सिंधोरुभयतः पार्श्वे यः परमशोभनो देशः सोऽयं गंधर्वविषयः गन्धर्वाणां देशः ॥ १० ॥

गो० टी०-अयमिति । सिन्धोः सिन्धुनद्याः । अयं देशः अस्मद्देशसमीप इत्यर्थः ॥ १० ॥

११ ] ति० टी०-सिन्धोः सिन्धुनदस्योभयतः पार्श्वे वर्तमानः परमशोभनोऽयं देशोऽस्मद्देशसमीपे वर्तते ॥ ११ ॥

रा० टी०-तमिति । तिस्रः कोट्यः शैलूषस्य सुताः तं सिंधोरुभयतः पार्श्वदेशं रक्षन्ति ॥ ११ ॥

गो० टी०-तं चेति । शैलूषः गन्धर्वराजः ॥ ११ ॥

१२ ] ति० टी०-शैलूषो गन्धर्वराजः । गन्धर्वनगरं च विनिर्जित्येत्यनुकर्षः ॥ १२ ॥

---

१ ब्रह्मर्षिमिति गो. पाठः । २ भगवन्निति गो. पाठः । ३ ऋषभेति गो. पाठः ।

निवेशय महाबाहो स्वे पुरे सुसमाहिते । अन्यस्य न गतिस्तत्र देशः परमशोभनः ।
रोचतां ते महाबाहो नाहं त्वामहितं वदे । ॥ १३ ॥
तच्छ्रुत्वा राघवः प्रीतो महर्षेर्मातुलस्य च । उवाच बाढमित्येव भरतं चान्ववैक्षत ॥ १४ ॥
सोऽब्रवीद्राघवः प्रीतः साञ्जलिप्रग्रहो द्विजम् । इमौ कुमारौ तं देशं ब्रह्मर्षे विचरिष्यतः ॥ १५ ॥
भरतस्यात्मजौ वीरौ तक्षः पुष्कल एव च । मातुलेन सुगुप्तौ तु धर्मेण सुसमाहितौ ॥ १६ ॥
भरतं चाग्रतः कृत्वा कुमारौ सबलानुगौ । निहत्य गन्धर्वसुतान्द्वे पुरे विभजिष्यतः ॥ १७ ॥
निवेश्य ते पुरवरे आत्मजौ संनिवेश्य च । आगमिष्यति मे भूयः सकाशमतिधार्मिकः ॥ १८ ॥
ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् । आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् ॥ १९ ॥
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरःसुतम् । भरतः सह सैन्येन कुमाराभ्यां विनिर्ययौ ॥ २० ॥
सा सेना शक्रयुक्तेव नगरान्निर्ययावथ । राघवानुगता दूरं दुराधर्षा सुरैरपि ॥ २१ ॥
मांसाशिनश्च ये सत्त्वा रक्षांसि सुमहान्ति च । अनुजग्मुर्हि भरतं रुधिरस्य पिपासया ॥ २२ ॥
भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः । गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः ॥ २३ ॥

---

रा० टी०—तानिति । तान् गंधर्वान् विनिर्जित्य गन्धर्वनगरं स्वे पुरे निवेशय स्वकीयं पुरद्वयं निर्मापय ॥ १२ ॥

गो० टी०—तानिति । स्वपुरे चेति । तद्देश इति शेषः १२

१३ ] ति० टी०—स्वे पुरे निवेशय । तद्देशे इति शेषः । अन्यस्य त्वद्व्यतिरिक्तस्य तत्र देशे गतिः प्राप्तिप्रसक्तिर्जयप्रसक्तिश्च नास्ति । एवं तत्साधने को लाभस्तत्राह—देशः परमशोभन इति ॥ १३ ॥

रा० टी०—नतु त्वयैव जीयतामित्यत आह—अन्यस्येति । तत्र तेषां जये अन्यस्य न गतिः अतः परमशोभनो देशः ते रोचतामहं तु त्वामहितं न वदे एतेन तैः करो न दीयते इति सूचितम् ॥ १३ ॥

गो० टी०—अन्यस्येति । अन्यस्य त्वद्व्यतिरिक्तस्य तत्र देशे गतिः प्राप्तिप्रसङ्ग एव नास्तीत्यर्थः । तत्साधने फलमुक्तं—देशः परमशोभन इति ॥ १३ ॥

१४ ] ति० टी०—भरतं चान्ववैक्षत । तवायमंश इत्यबोधयदित्यर्थः ॥ १४ ॥

रा० टी०—तदिति । राघवः बाढमित्येव उवाच भरतमत्यवैक्षत च ॥ १४ ॥

गो० टी०—तच्छ्रुत्वेति । भरतं चान्ववैक्षतेति । पर्यालोचनार्थमित्यर्थः ॥ १४–२० ॥

१५ ] ति० टी०—अथ राघवो रामो द्विजमब्रवीत् ॥१५॥

रा० टी०—स इति । प्रीतो राघवः द्विजमब्रवीत् अर्द्धं पृथक् ॥ १५ ॥

१६–१७ ] ति० टी०—तक्ष इत्यकारान्तः । मातुलेन भरतमातुलेन युधाजिता ॥ १६ ॥ १७ ॥

रा० टी०—तदाकारमाह—इमावित्यादिभिः । तक्षः पुष्कलश्च कुमाराविमौ भरतस्यात्मजौ मातुलेन सुगुप्तौ सन्तौ तं गंधर्वीयं देशं विचरिष्यतः सार्धश्लोक एकान्वयी ॥ १६ ॥

रा० टी०—भरतमिति । कुमारौ भरतमग्रतः कृत्वा गन्धर्वसुतान्निहत्य द्वे पुरे विभजिष्यतः ॥ १७ ॥

१८–१९ ] ति० टी०—पुरवरे निवेश्य निर्मायात्मजौ संनिवेश्य । तयोः पुरयोरिति शेषः । अतिधार्मिको भरतः॥१८॥१९॥

रा०टी०—पुरविभागप्रकारमाह—निवेश्येति । अतिधार्मिको भरतः द्वे पुरवरे निवेश्य निर्माय आत्मजौ सन्निवेश्य तत्र संस्थाप्य च मत्सकाशमागमिष्यति ॥ १८ ॥

रा० टी०—ब्रह्मर्षिमिति । भरतमाज्ञापयामास कुमारौ अभ्यषेचयच्च ॥ १९ ॥

२० ] ति० टी०—अङ्गिरःसुतं गार्ग्यम् ॥ २० ॥

रा० टी०—नक्षत्रेणेति । सौम्येन नक्षत्रेण अङ्गिरस्सुतं पुरस्कृत्य सैन्येन कुमाराभ्यां च सह भरतो विनिर्ययौ ॥ २० ॥

२१–२३ ] ति० टी०—शक्रयुक्तेवेन्द्रनियुक्ता देवसेनेव राघवानुगता रामानुगता । दूरम् । एकद्विवासपर्यन्तमित्यर्थः ॥२१–२३ ॥

रा० टी०—सेति । शक्रेण युक्तेव दूरं राघवानुगता सेना नगरान्निर्ययौ ॥ २१ ॥

रा० टी०—मांसेति । मांसाशिनः व्याघ्रादयः रक्षांसि च रुधिरस्य पिपासया भरतमनुजग्मुः ॥ २२ ॥

रा० टी०—भूतेति । गन्धर्वपुत्रमांसानि भोक्तुकामा बहवो भूतग्रामाः सिंहादीनां बहूनि सहस्राणि च सेनाया अग्रतो ययुः अर्द्धचतुष्टयमेकान्वयि ॥ २३ ॥ २४ ॥

गो० टी०—सेति । शक्रयुक्तेव इन्द्रयुक्ता देवसेनेव, नगरान्निर्ययौ । दूरमिति । एकद्विवासरपर्यन्तमित्यर्थः ॥ २१ ॥

---

१ अत्यवैक्षतेति रा. पा. । २ मांसादानि च सत्त्वानीति गो. पाठः । * वासपर्यन्तमिति युक्तं भाति ।

सिंह्व्याघ्रवराहाणां खेचराणां च पक्षिणाम् । बहूनि वै सहस्राणि सेनाया ययुरग्रतः ॥ २४ ॥
अध्यर्धमासमुषिता पथि सेना निरामया । हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥ २५ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे शततमः सर्गः ॥ १०० ॥

## एकोत्तरशततमः सर्गः ।

भरतस्तु गन्धर्वैः सप्तरात्रं युध्यमानोऽपि नान्यतरजयं पश्यन् संवर्ताख्यं कालपाशं प्रयुज्य निमेषान्तरमात्रेणैव तान्हत्वा द्वे पुरे निर्माय तत्र प्रजापालनाय स्वपुत्रौ संस्थाप्य पञ्चभिर्वत्सरैः पुना राघवं द्रष्टुं प्रत्यागतः ।

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः । युधाजिद्गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १ ॥
स निर्ययौ जनौघेन महता केकयाधिपः । त्वरमाणोऽभिचक्राम गन्धर्वान्केकयाधिपः ॥२॥
भरतश्च युधाजिच्च समेतौ लघुविक्रमैः । गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३ ॥
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः । योद्धुकामा महावीर्या व्यनदंस्ते समन्ततः ॥ ४ ॥
ततः समभवद्युद्धं तुमुलं लोमहर्षणम् । सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५ ॥
खड्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः । नृकलेवरवाहिन्यः प्रवृत्ताः सर्वतोदिशम् ॥ ६ ॥
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् । संवर्तं नाम भरतो गन्धर्वेष्वभ्यचोदयत् ॥ ७ ॥
ते बद्धाः कालपाशेन संवर्तेन विदारिताः । क्षणेनाभिहतास्तेन तिस्रः कोट्यो महात्मना ॥८॥

---

२४ ] ति० टी०–सेनाया अग्रतो ययुः । पिशिताशिनामग्रतो यानं सुशकुनम् । अभिमुखागमनमेवापशकुनमिति भावः ॥ २४ ॥

गो० टी०–सिंहेति । सेनाया अग्रतो ययुरिति । पिशिताशनादीनामग्रतो यानं सुशकुनम् । अभिमुखतः आगमनमेवापशकुनम् ॥ २४ ॥

२५ ] ति० टी०–केकयं केकयदेशं युधाजितं वा ॥२५॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे शततमः सर्गः ॥ १०० ॥

रा० टी०–अध्यर्द्धेति । अध्यर्द्धमासं सार्द्धमासं पथ्युषिता सेना केकयं समुपागमत् ॥ २५ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे शततमः सर्गः ॥ १०० ॥

गो० टी०–अध्यर्धमासमिति । केकयम् युधाजितमित्यर्थः ॥ २५ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने शततमः सर्गः ॥ १०० ॥

१–२ ] ति० टी०–अथ भरतेन गन्धर्वविजयः—श्रुत्वेति । सेनापतिं प्राप्तं युद्धसंनाहवन्तमागतं श्रुत्वा ॥ १ ॥ २ ॥

रा० टी०–भरतागमनानन्तरकालिकं वृत्तमाह—श्रुत्वेत्यादिभिः । गर्गसहितं भरतं प्राप्तं श्रुत्वा युधाजित् परां प्रीतिमुपागमत् ॥ १ ॥

रा० टी०–स इति । केकयाधिपः युधाजित् जनौघेन सह निर्ययौ भरतसमीपं जगामेत्यर्थः अर्द्धं पृथक् । त्वरमाण इति । केकयाधिपः गंधर्वान् अभिचक्राम ॥ २ ॥

गो० टी०–श्रुत्वेत्यादि । सेनापतिं प्राप्तं युद्धसन्नाहं श्रुत्वा ॥ १ ॥ २ ॥

३ ] ति० टी०–लघुविक्रमैः । योधैरित्यर्थः । सबलौ चतुरङ्गबलसहितौ । सपदानुगौ शूद्रवैश्याद्यनुचरसहितौ ॥ ३ ॥

रा० टी०–भरत इति । भरतो युधाजिच्च गन्धर्वनगरं प्राप्तौ ॥ ३ ॥

गो० टी०–भरतश्चेति । सबलौ चतुरङ्गबलसहितौ सपदानुगौ शूद्रवैश्याद्यनुचरसहितौ ॥ ३ ॥

४–५ ] ति० टी०–व्यनदन्गर्जन्ति स्म ॥ ४ ॥ ५ ॥

रा० टी०–श्रुत्वेति । भरतं प्राप्तं श्रुत्वा समागताः गंधर्वा योद्धुकामाः सन्तः समन्ततो व्यनदन् ॥ ४ ॥

रा० टी०–तत इति । सप्तरात्रं महाभीमं युद्धं समभवत् जयस्तु अन्यतरयोरपि न ॥ ५ ॥

गो० टी०–श्रुत्वेति । व्यनदन् गर्जन्ति स्म ॥ ४ ॥ ५ ॥

६ ] ति० टी०–खड्गादिरूपा ग्राहा यासु ताः । नृकलेवराणि वहन्ति ताः ॥ ६ ॥

रा० टी०–खड्गेति । खड्गादयः ग्राहाः नक्रादयो यासु शोणितस्य संस्रवः प्रवाहो यासु ताः नृकलेवरवाहिन्यो नद्यः सर्वतो दिशं प्रवृत्ताः ॥ ६ ॥

गो० टी०–खड्गेति । खड्गादिरूपा ग्राहा यासु ताः । संस्रवः प्रवाहः । नृकलेवराणि नद्यः काष्ठानि वहन्तीति तथा ॥ ६ ॥

७–८ ] ति० टी०–संवर्तं नाम प्रलयकालानलाख्यम् ॥ ७ ॥ ८ ॥

---

१ मार्ग्येति गो.पाठः । २ कामरूपिण इति गो.पाठः । ३ मैं इति गो.पाठः । ४ समागता इति रा.पाठः । ५ तं घातं घोरसंकाशमिति गो.पाठः ।

तद्युद्धं तादृशं घोरं न स्मरन्ति दिवौकसः। निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ९ ॥
हतेषु तेषु सर्वेषु भरतः केकयीसुतः। निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ॥ १० ॥
तक्षं तक्षशिलायां तु पुष्कलं पुष्कलावते। गन्धर्वदेशे रुचिरे गान्धारविषये च सः ॥ ११ ॥
धनरत्नौघसंकीर्णे काननैरुपशोभिते। अन्योन्यसंघर्षकृते स्पर्धया गुणविस्तरैः ॥ १२ ॥
उभे सुरुचिरप्रख्ये व्यवहारैरकिल्बिषैः। उद्यानयानसंपूर्णे सुविभक्तान्तरापणे ॥ १३ ॥
उभे पुरवरे रम्ये विस्तरैरुपशोभिते। गृहमुख्यैः सुरुचिरैर्विमानैर्बहुभिर्वृते ॥ १४ ॥
शोभिते शोभनीयैश्च देवायतनविस्तरैः। तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते ॥ १५ ॥
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः। पुनरायान्महाबाहुरयोध्यां केकयीसुतः ॥ १६ ॥
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम्। राघवं भरतः श्रीमान्ब्रह्माणमिव वासवः ॥ १७ ॥
शशंस च यथावृत्तं गन्धर्ववधमुत्तमम्। निवेशनं च देशस्य श्रुत्वा प्रीतोऽस्य राघवः॥ १८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

---

रा० टी०—तत इति। रामानुजो भरतः संवर्त नाम कालस्यास्त्रं गंधर्वेषु अभ्यचोदयत् प्राक्षिपत् ॥ ७ ॥

रा० टी०—ते इति। कालपाशेन बद्धाः संवर्तेन विदारिताः तिस्रः कोट्यस्ते गंधर्वाः तेन भरतेन क्षणेनाभिहताः॥८॥

गो० टी०—तत इति। संवर्तं नामेति। प्रलयकालाग्न्याख्यामित्यर्थः ॥ ७ ॥ ८ ॥

९ ] ति० टी०—दिवौकसो न स्मरन्ति निमेषमात्रेण त्रिकोटिगन्धर्ववधोऽसंभाव्य इति स्थितवन्तः ॥ ९ ॥

रा० टी०—तदिति। दिवौकसः निमेषान्तरमात्रेण प्रवृत्तं महात्मनां तद्युद्धं न स्मरन्ति तेन स्मृतस्यापि तस्यातिभीतिजनकत्वं ध्वनितम् ॥ ९ ॥

गो० टी०—तमिति। तं घातं दिवौकसः न स्मरन्तीति। त्रिकोटिगन्धर्वघातोऽसंभाव्य इत्येव स्मृत्वा स्थितवन्त इत्यर्थः॥९॥

१०] ति०टी०—द्वे पुरोत्तमे तक्षशिलापुष्कलावताख्ये १०

रा० टी०—हतेष्विति। भरतः समृद्धे द्वे पुरोत्तमे निवेशयामास ॥ १० ॥

गो० टी०—हतेष्विति। द्वे पुरे इति। तक्षशिलापुष्कलावताख्ये ॥ १०–१२ ॥

११ ] ति० टी०—गन्धर्वदेशे तक्षशिलायां तक्षं तक्षाख्यं पुत्रम्। गान्धारदेशे पुष्कलावते नगरे पुष्कलम् ॥ ११ ॥

रा० टी०—तक्षमिति। स भरतः गंधर्वदेशे तक्षशिलायां पुरि तक्षं गान्धारविषये तदभिधदेशे पुष्कलावते पुरे पुष्कलं संस्थापयामासेति शेषः ॥ ११ ॥

१२ ] ति० टी०—गुणविस्तरैर्हेतुभिरन्योन्यस्पर्धयान्योन्यसंघर्षकृते कृतान्योन्यसंघर्षे। अहमेव गुणोत्तरमिति कृतान्योन्यविवादे इव दृश्यमाने इत्यर्थः ॥ १२ ॥

रा० टी०—पुरं वर्णयति धनेत्यादिभिः। धनरत्नानामुत्तमधनानामोघेन समूहेन संकीर्णे गुणविस्तरैः हेतुभिः स्पर्धया अन्योन्यसंघर्षकृते इव अकिल्बिषैः व्यवहारैः सुरुचिरप्रख्ये सुविभक्ता अन्तरापणाः ययोर्विस्तरैर्गृहमुख्यैरुपशोभिते विमानैर्वृते शोभनीयैर्देवायतनविस्तरैः शोभिते तालादिभिरुपशोभिते उभे ओः शंभुगृहस्य भा इव भा ययोस्ते उभे रम्ये पुरवरे पञ्चभिवर्षैर्निवेश्य सम्यक् सम्पाद्य राघवानुजो भरत अयोध्यां पुनरायात् श्लोकपञ्चकमेकान्वयि ॥ १२—१६ ॥

१३ ] ति० टी०—अकिल्बिषैर्धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः ॥ १३ ॥

गो० टी०—उभे इति। अकिल्बिषैः धर्मन्यायोपेतैर्व्यवहारैः क्रयविक्रयादिव्यापारैः ॥ १३ ॥

१४ ] ति० टी०—विस्तरैरुक्तपदार्थविस्तरैरुपशोभिते सुरुचिरैर्गृहमुख्यैरुपशोभिते। विमानैः सप्तभूमिप्रासादैः॥१४॥

गो० टी०—उभे इति। विमानसमवर्णिभिः देवायतनवद्विस्तारैः। गृहमुख्यैरभित उपशोभिते। विमानैर्बहुभिर्वृत इति च पाठः ॥ १४–१८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकोत्तरशततमः सर्गः ॥१०१॥

१५–१७ ] ति० टी०—देवतायतनविस्तरैः। विस्तारैरित्यर्थः ॥ १५–१७ ॥

१८ ] ति० टी०—स्वसमाग्रयथावृत्तं गन्धर्ववधं देशस्य निवेशनं च शशंस। अस्य भरतस्य वाक्यं श्रुत्वा राघवो रामः प्रीतो बभूव ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकोत्तरशततमः सर्गः ॥ १०१ ॥

रा० टी०—स इति। भरतः राघवमभिवाद्य यथावृत्तं गन्धर्ववधं शशंस राघवस्तु देशस्य निवेशनं श्रुत्वा अस्य भरतस्य प्रीतोऽभवत् श्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे एकोत्तरशततमः सर्गः ॥ १०१ ॥

---

१ तं घातं घोरसंकाशमिति गो. पा.। २ संपूर्णे इति गो. पा.। ३ विमानसमवर्णिभिरिति गो. पा. विश्राव्य राघवानुज इति ग. पा.।

## द्व्युत्तरशततमः सर्गः ।

अङ्गदचन्द्रकेत्वाभिधौ लक्ष्मणपुत्रौ पृथक्पुरे द्वे निर्माप्य तत्राभिषिच्य तत्पार्ष्णिग्राहौ यथाक्रमं लक्ष्मणभरतौ कृत्वा रामस्तौ प्रैषयत् लक्ष्मणभरतौ तु यथादेशमनुष्ठाय संवत्सरानन्तरं राममाजग्मतुः ।

तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह । वाक्यं चाद्भुतसंकाशं भ्रातॄन्प्रोवाच राघवः ॥ १ ॥
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ । अङ्गदश्चन्द्रकेतुश्च राज्यार्थे दृढविक्रमौ ॥ २ ॥
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् । रमणीयो ह्यसंबाधो रमेतां यत्र धन्विनौ ॥ ३ ॥
न राज्ञां यत्र पीडा स्यान्नाश्रमाणां विनाशनम् । स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ४ ॥
तथोक्तवति रामे तु भरतः प्रत्युवाच ह । अयं कारुपथो देशो रमणीयो निरामयः ॥ ५ ॥
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः । चन्द्रकेतोः सुरुचिरं चन्द्रकान्तं निरामयम् ॥ ६ ॥
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः । तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७ ॥
अङ्गदीया पुरी रम्याप्यङ्गदस्य निवेशिता । रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८ ॥
चन्द्रकेतोश्च[2] मल्लस्य मल्लभूम्यां निवेशिता । चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९ ॥

---

१ ] ति॰ टी॰—अथ लक्ष्मणकुमारयो राज्ये निवेशनम्—तदिति । भ्रातृभिरिति बहुवचनं द्वित्वे आर्षम् ॥ १ ॥

रा॰ टी॰—भरतविजयश्रवणानंतरकालिकं वृत्तमाह—तदित्यादिभिः । तत् भरतोक्तं श्रुत्वा हर्षमापेदे भ्रातॄन् प्रोवाच च ॥ १ ॥

गो॰ टी॰—तच्छ्रुत्वेत्यादि ॥ १ ॥

२ ] ति॰ टी॰—हे सौमित्रे ! तवेमौ कुमारौ राज्यार्थे राज्यरक्षणविषये दृढविक्रमौ ॥ २ ॥

३ ] ति॰ टी॰—अत इमौ राज्येऽभिषेक्ष्यामि । यत्रेमौ रमेतां तादृशो देशः साधु विधीयतां निरीक्ष्यताम् ॥ ३ ॥

रा॰टी॰—तदाकारमाह—इमावित्यादिभिः । हे सौमित्रे ! अङ्गदश्चन्द्रकेतुश्च तव कुमारौ राज्यार्हौ स्त इति शेषः अतः इमौ कुमारौ राज्ये अभिषेक्ष्यामि अतः यत्र धन्विनौ कुमारौ रमेतां स देशः साधु विधीयताम् श्लोकद्वयमेकान्वयि ॥२–३॥

गो॰टी॰—इमाविति । राज्यार्थं राज्यरक्षाविषये ॥२॥३॥

४ ] ति॰ टी॰—नापराध्यामहे । यथा कस्यापि भूतस्येति शेषः ॥ ४ ॥

रा॰ टी॰—नेति । यत्र राज्ञां पीडा न स्यात् आश्रमाणां विनाशनं च न स्यात् अत एव वयं नापराध्यामहे स देशो दृश्यतां कुमाररमणयोग्यत्वेन अन्विष्यताम् ॥ ४ ॥

गो॰ टी॰—नेति । नापराध्यामहे । कस्यापि भूतस्येति शेषः ॥ ४ ॥

५ ] ति॰ टी॰—कारुपथस्तदाख्यः पाश्चात्यौदीच्यदेशविशेषः ॥ ५ ॥

६ ] ति॰ टी॰—तत्र देशेऽङ्गदस्य पुरमङ्गदीयेत्याख्यं निवेश्यताम् । चन्द्रकेतोश्चन्द्रकान्ताख्यं पुरं निवेश्यताम् ॥ ६ ॥

रा॰ टी॰—तथेति । भरतः प्रत्युवाच अर्द्धं पृथक् तदाकारमाह—अयमिति । कारुपथो देशः निरामयोऽस्ति तत्र कारुपथे अंगदस्य पुरमङ्गदीयाभिधमित्यर्थः निवेश्यतां चन्द्रकेतोस्तु चन्द्रकान्तं तदभिधं पुरं निवेश्यताम् सार्द्धश्लोक एकान्वयी ॥ ५–६ ॥

गो॰ टी॰—तथेति । कारुपथः कारुपथाख्यः पाश्चात्यदेशविशेषः ॥ ५ ॥

गो॰ टी॰—निवेश्यतामिति । तत्र देशे अङ्गदस्य पुरम् अङ्गदीयाख्यम् निवेश्यतां चन्द्रकेतोः चन्द्रकान्ताख्यम् ६–८

७ ] ति॰ टी॰—वशे कृत्वा लक्ष्मणभरताभ्यां वशे कारयित्वाङ्गदस्य पुरीं न्यवेशयत् ॥ ७ ॥

रा॰ टी॰—यदिति । भरतेन यदुक्तं तद्राघवः प्रतिजग्राह अत एव तं देशं वशे कृत्वा अङ्गदस्य पुरमिति शेषः निवेशयत् न्यवेशयत् ॥ ७ ॥

८ ] ति॰ टी॰—तत्र देशेऽङ्गदस्य पुरी रामेण निवेशिता । लक्ष्मणद्वारेति शेषः ॥ ८ ॥

रा॰ टी॰—अङ्गदीयेति । रामेण निवेशिता निर्मापिता सुगुप्ता च अङ्गदस्य पुरी अङ्गदीया तदभिधाभवदिति शेषः ८

९ ] ति॰ टी॰—मल्लस्य दृढाङ्गस्य चन्द्रकेतोर्मल्लभूम्यां तदाख्ये औत्तरे । अस्यैव चन्द्रकान्तेति नामान्तरम् । तत्र चन्द्रकान्ताख्या पुरी निवेशिता ॥ ९ ॥

रा॰ टी॰—चन्द्रकेतोरिति । मल्लस्य युद्धक्रियानिपुणस्य चन्द्रकेतोः चन्द्रकान्तेति विख्याता पुरी मल्लभूम्यां कारुपथान्तर्गततदभिधदेशे निवेशिता रामेणेति शेषः ॥ ९ ॥

गो॰ टी॰—चन्द्रकेतोस्त्विति । मल्लस्य श्रेष्ठस्य । मल्लभूम्यां मल्लदेशे उत्तरे ॥ ९–१३ ॥

---

१ तदा प्रोवाच लक्ष्मणमिति गो॰ पाठः । २ स्त्विति गो॰ पाठः ।

ततो रामः परां प्रीतिं लक्ष्मणो भरतस्तथा । ययुर्युद्धे दुराधर्षा अभिषेकं च चक्रिरे ॥ १० ॥
अभिषिच्य कुमारौ द्वौ[1] प्रस्थाप्य सुसमाहितौ । अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् ॥ ११ ॥
अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह । चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ॥ १२ ॥
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः । पुत्रे स्थिते दुराधर्षे अयोध्यां पुनरागमत् ॥ १३ ॥
भरतोऽपि तथैवोष्य संवत्सरमतोऽधिकम् । अयोध्यां पुनरागम्य रामपादावुपास्त सः ॥ १४ ॥
उभौ सौमित्रिभरतौ रामपादावनुव्रतौ । कालं गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ ॥ १५ ॥
एवं वर्षसहस्राणि दश तेषां ययुस्तदा । धर्मे प्रयतमानानां पौरकार्येषु नित्यदा ॥ १६ ॥
विहृत्य कालं परिपूर्णमानसाः श्रिया वृता धर्मपुरे[4] च संस्थिताः ।
त्रयः समिद्धाहुतिदीप्ततेजसो हुताग्नयः[2] साधुमहाध्वरे त्रयः[3] ॥ ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

## त्र्युत्तरशततमः सर्गः ।

कालस्तापसरूपेण रामं प्रत्यागतस्तयोरहसि भाषणनियमः स्वयोर्भाषणं तृतीयः शृणुयाच्चेत्स मम वध्य इति रामप्रतिज्ञोद्घोषणं च ॥

कस्यचित्त्वथ कालस्य रामे धर्मपरे स्थिते । कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥

१०–१३ ] ति० टी०–युद्धे दुराधर्षा रामादयोऽभिषेकं चक्रिरे । अङ्गदचन्द्रकेत्वोरिति शेषः ॥ १०–१३ ॥

रा० टी०–तत इति । युद्धे दुराधर्षाः रामादयः परां प्रीतिं ययुः अभिषेकं चक्रिरे लक्ष्मणकुमारयोरिति शेषः॥१०॥

रा० टी०–अभिषिच्येति । कुमारावभिषिच्य अङ्गदं पश्चिमां भूमिं चन्द्रकेतुं तु उदङ्मुखं उदीचीं भूमिमित्यर्थः प्रस्थाप्यातिष्ठत् राम इति शेषः ॥ ११ ॥

रा० टी०–अङ्गदमिति । अङ्गदं सौमित्रिरनुजगाम चन्द्रकेतोः पार्ष्णिग्राहस्तु भरतो बभूव ॥ १२ ॥

रा० टी०–लक्ष्मण इति । अङ्गदीयायां पुत्रे स्थिते सति संवत्सरमुषितो लक्ष्मणः अयोध्यां पुनरागमत् ॥ १३ ॥

१४ ] ति०टी०–तथैवोष्य । चन्द्रकेतुसमीपे इति शेषः १४

रा० टी०–भरत इति । भरतः संवत्सरमतस्संवत्सरात् अधिकमपि उष्य उषित्वा अयोध्यामागम्य रामपादावुपास्त १४

गो० टी०–भरत इति । भरतोपि तथैवोष्येति । चन्द्रकेतुसमीप इति शेषः ॥ १४ ॥

१५ ] ति० टी०–न जज्ञाते नावगतवन्तौ । संधिरार्षः ॥ १५ ॥

रा० टी०–उभाविति । रामपादावनुव्रतौ सौमित्रिभरतौ गतमपि कालं न जज्ञाते नुबुधतुः ॥ १५ ॥

गो० टी० उभाविति । न जज्ञाते जानातेर्लिट्द्विवचनम् । नावगतवन्तौ । संधिः छान्दसः ॥ १५ ॥ १६ ॥

१६ ] ति० टी०–दशसहस्राणि आयुस्त्वेकादशसहस्राणीति स्पष्टमेव ॥ १६ ॥

रा० टी०–एवमिति । धर्मे प्रयतमानानां तेषां दशवर्षसहस्राणि ययुः उपलक्षणमिदं सहस्रत्रयस्यापि ॥ १६ ॥

१७ ] ति० टी०–धर्मपुरे धर्मसाधने पुरेऽयोध्यायाम् । 'अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायकाः ॥' इति स्मृतेः ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

रा० टी०–विहृत्येति । परिपूर्णं सर्वकामैः पर्याप्तं मानसं येषां धर्मपुरे अयोध्यायां संस्थिताः त्रयो रामादयः कालं यथानियमितसमयं विहृत्य प्रकटविहारं कृत्वा महाध्वरे समिद्धाहुतिभिः दीप्तानि तेजांसि येषां ते त्रयः दक्षिणाग्निगार्हपत्याहवनीयाः हुताग्नय इव विरेजुरिति शेषः ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे द्व्यधिकशततमः सर्गः ॥ १०२ ॥

गो० टी०–विहृत्येति । धर्मसाधनं पुरं धर्मपुरं तस्मिन् ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उ०श्रीरामायणव्याख्याने द्व्युत्तरशततमः सर्गः ॥ १०२ ॥

१ ] ति० टी०–अथ रामाय स्वीयवैष्णवधामागमनकालनिवेदनाय ब्रह्मणो दूतप्रेषणम्—कस्यचिदिति । कस्यचित्कालस्य । अपगमानन्तरमिति शेषः । रामे धर्मपरे स्थिते कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १ ॥

रा० टी०–रामनिर्याणमुपक्रमन्नाह–कस्यचिदित्यादिभिः । धर्मपरे रामे स्थिते सति कस्यचित्कालस्य अपगमे

१ स प्रस्थापयति राघव इति गो. पाठः । २ इवेति गो. पा. । ३ महाध्वरे साधुनाम्नयोऽभय इति गो. पाठः । ४ धर्मपथे इति गो. पाठः ।

[ सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनम् । मां निवेदय रामाय संप्राप्तं कार्यगौरवात् । ]
दूतो ह्यतिबलस्याहं महर्षेरमितौजसः । रामं दिदृक्षुरायातः कार्येण हि महाबल: ॥ २ ॥
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः । न्यवेदयत रामाय तापसं तं समागतम् ॥ ३ ॥
जयस्व राजधर्मेण उभौ लोकौ महाद्युते । दूतस्त्वां द्रष्टुमायातस्तपसा भास्करप्रभः ॥ ४ ॥
तद्वाक्यं लक्ष्मणेनोक्तं वै श्रुत्वा राम उवाच ह । प्रवेश्यतां मुनिस्तात महौजास्तस्य वाक्यधृक् ॥ ५ ॥
सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम् । ज्वलन्तमेवं तेजोभिः प्रदहन्तमिवांशुभिः ॥ ६ ॥
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा । ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम् ॥ ७ ॥
तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् । ददौ कुशलमव्यग्रं प्रष्टुं चैवोपचक्रमे ॥ ८ ॥
पृष्टश्च कुशलं तेन रामेण वदतां वरः । आसने काञ्चने दिव्ये निषसाद महायशाः ॥ ९ ॥
तमुवाच ततो रामः स्वागतं ते महामते । प्रापयास्य च वाक्यानि यतो दूतस्त्वमागतः ॥ १० ॥
चोदितो राजसिंहेन मुनिर्वाक्यमभाषत । द्वन्द्वे ह्येतत्प्रवक्तव्यं हितं वै यद्यवेक्षसे ॥ ११ ॥
यः शृणोति निरीक्षेद्वा स वध्यो भविता तव । भवेद्वै मुनिमुख्यस्य वचनं यद्यवेक्षसे ॥ १२ ॥

सतीति शेषः तापसरूपेणोपलक्षितः काल रामाज्ञानुसारेण सकलजगत्प्रवर्तकः समयविशेषः राजद्वारमुपागमत् तथा च श्रुतिः ज्ञः कालकालो गुणी सर्वविद्य इति ॥ १ ॥

गो० टी०–कस्यचिन्त्वित्यादि । कालस्य कस्यचिद्गमनानन्तरमिति शेषः ॥ १ ॥ २ ॥

२–३ ] ति० टी०–अतिबलस्य महर्षेः । जगत्प्राणरूपत्वाच्चतुर्वेदमुखत्वाच्च सत्यवचस्त्वाच्च ब्रह्मातिबलो महर्षिः ॥२॥३

रा० टी०–कालोक्तिमाह—दूत इति । अतिबलस्य महर्षेर्दूतोहं कार्येण हेतुना आयातः ॥ २ ॥

रा० टी०–तस्येति । सौमित्रिः समागतं तापसं रामाय न्यवेदयत् ॥ ३ ॥

गो० टी०–दूत इति । महर्षेरिति । ब्रह्मण इत्यर्थः ३–५

४ ] ति० टी०–उभौ लोकौ जयस्वेत्युक्त्या परलोकप्रवेशकालसूचनम् ॥ ४ ॥

रा० टी०–निवेदनाकारमाह—जयस्वेति । तपसा भास्करप्रभो दूतः त्वां द्रष्टुमायातः ॥ ४ ॥

५ ] ति० टी०–तस्य वाक्यधृक् । यस्य दूतस्तस्याज्ञाधारीत्यर्थः ॥ ५ ॥

रा० टी०–तदिति । मुनिः प्रवेश्यतामिति वचः राम उवाच ॥ ६ ॥

गो० टी०–तदिति । तस्य वाक्यस्य धृदिति, रामवाक्यधारीति सौमित्रिविशेषणम् ॥ ६–१० ॥

६–९ ] ति० टी०–तेजोभिरंशुभिरित्येते पदे शरीरकान्तिकिरणप्रतिपादके इति न पुनरुक्तिः ॥ ६–९ ॥

रा० टी०–सौमित्रिरिति । सौमित्रिः मुनिं प्रावेशयत ६

रा० टी०–स इति । स दूतः राघवमभिगम्य वर्द्धस्वेत्याह ॥ ७ ॥

रा० टी०–तस्मै इति । रामः तस्मै दूताय अर्घ्यपुरोगमां पूजां ददौ कुशलं प्रष्टुमुपचक्रमे च ॥ ८ ॥

रा० टी०–पृष्ट इति । महायशाः दूतः काञ्चने आसने निषसाद ॥ ९ ॥

१० ] ति० टी०–अस्य यस्य त्वं दूतस्तस्य वाक्यानि संदेशवाक्यानि प्रापयस्व निवेदय । तत्र हेतुः—यतो दूत इति ॥ १० ॥

रा० टी०–तमिति । ते तव स्वागतं यतस्त्वं दूत आगतः अतः अस्य स्वस्वामिनः वाक्यानि प्रापय कथय इति वचः तं दूतं राम उवाच ॥ १० ॥

गो० टी०–तमिति । वाक्यानि, प्रापयस्व निवेदय । तत्र हेतुः–यतो दूत इत्यादि ॥ ११ ॥

११ ] ति० टी०–द्वन्द्वे रहस्ये हितं वै यद्यवेक्षसे । देवानामिति शेषः । देवगोप्यगोपने हि देवानां हितं भवतीति भावः ॥ ११ ॥

रा० टी०–चोदित इति । मुनिरभाषत तदाकारमाह यदि हितमस्माकमिति शेषः अवेक्षसे तर्हि एतत् भवत्पृष्टं द्वन्द्वे द्वयोरेव स्थितौ वक्तव्यम् ॥ ११ ॥

गो० टी०–चोदित इति । मुनिवाक्यं प्रागुक्तमहर्षिसंदिष्टवाक्यम् । द्वन्द्वमेतदिति । " द्वन्द्वं रहस्य० " इत्यादि द्वन्द्वशब्दस्य रहस्यार्थे द्विवचननिपातः । रहस्यमेतत्प्रवक्तव्यमित्यर्थः । द्वन्द्वे हि तत्प्रवक्तव्यमिति च पाठः । तदेव विशिनष्टि—न चैषामित्यादि । एषां त्वत्समीपवर्तिलोकानामित्यर्थः १२

१२ ] ति० टी०–नैतावदेव, किं त्वन्यापि प्रतिज्ञा कार्येत्याह—य इति । यः शृणोत्यस्य तद्वचनं निरीक्षेद्वा । मन्त्रयिताराविति शेषः । स तव वध्य इति । कथमेवमतिक्रूरा प्रतिज्ञा तत्राह—भवेदिति । तस्य मुनिमुख्यस्य वचनमेवं

१ इदं पद्यमधिकं गो. पु. । २ अस्यातिबलस्येति गो. पाठः । ३ महाबलेति गो. पाठः । ४ रामेति गो. पाठः । ५ लक्ष्मणेनोक्तमिति गो. पाठः । ६ दिति गो. पाठः । ७ वर्द्धस्वेति गो. रा. पा. । ८ महामुने इति गो. पाठः । ९ द्वन्द्वमिति गो. पा. । १० अपेक्षसे इति गो. पाठः ।

तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् । द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ॥ १३ ॥
स मे वध्यः खलु भवेद्वाचं द्वन्द्वसमीरितम् । ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ॥ १४ ॥
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम् । तमुवाच मुने वाक्यं कथयस्वेति राघवः ॥ १५ ॥
तत्ते मनीषितं वाक्यं येन वासि समाहितः । कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्तते ॥ १६ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

## चतुरधिकशततमः सर्गः ।

एकादशसहस्राणि संवत्सराणां मया मानुषत्वेन स्थेयमिति परिगणनं भवतैवावतारारम्भे प्रतिज्ञातं तावत्समयस्तु समाप्तोऽतः आजिगमिषाथवाधिकं विवत्सात्र देवः प्रमाणमिति मन्मुखेन पितामहो विज्ञापयतीति तापसवचो निशम्य तदङ्गीकृत्य रामस्तं प्रशशंस ।

शृणु राजन्महासत्त्व यदर्थमहमागतः । पितामहेन देवेन प्रेषितोऽस्मि महाबल ॥ १ ॥
तवाहं पूर्वके भावे पुत्रः परपुरंजय । मायासंभावितो वीर कालः सर्वसमाहरः ॥ २ ॥

वै भवेत् । उक्तसंकेतपूर्वमेव ब्रूहीत्येवाभवदित्यर्थः । यद्यवेक्षसे तथा संकेतपरिपालनमिति शेषः ॥ १२ ॥

रा० टी०—य इति । मुनिमुख्यस्य वचनं यद्यवेक्षसे मन्यसे तदा भवेत्कुर्वित्यर्थः ननु किंतद्वचनमित्यत आह यः शृणोति आवयोरेकान्तवचनमिति शेषः निरीक्षेद्वा वक्तृश्रोतारावावामिति शेषः स तव वध्यो भविता भवेत् ॥ १२ ॥

गो० टी०—य इति । अस्मद्वचनं निरीक्षेत् मन्त्रयितारौ (?) स तव वध्यः । कथमेवमतिक्रूरसंकेत इत्यत्राह—भवेदिति । तस्य मुनिमुख्यस्य वचनमित्थं संकेतपूर्वकम् वदेति चोदितवानित्यर्थः ॥ यद्यपेक्षस इति । तथा संकेतपरिपालनमिति शेषः ॥ १३ ॥

१३ ] ति० टी०—प्रतिहारं द्वारपालं विसर्जयान्यतो प्रस्थापय ॥ १३ ॥

रा० टी०—तथेति । रामोऽब्रवीत् तदाकारमाह प्रतिहारं द्वारपालं विसर्जय ॥ १३ ॥

गो०टी०—स इति । प्रतिहारं विसर्जय अन्यतोपसारय १४

१४ ] ति० टी०—किमर्थं तत्राह—स मे इति । सौमित्रे मम ऋषेश्च द्वन्द्वं रहस्यां वाचं यः शृणुयात्पश्च नौ पश्येद्वा स मे मया वध्य इति खलु समीरितं प्रतिज्ञातम् ॥ १४ ॥

रा० टी०—स्थितेः प्रयोजनमाह—स इति । ऋषेर्मम च द्वन्द्वं परस्परं समीरितां वाचं यः शृणुयात् पश्येद्वा स मे वध्यो भवेत् पश्येद्वेत्यत्र उच्चारयितारावितिं प्रत्यासत्त्या लभ्यते ॥ १४ ॥

गो० टी०—स म इत्यादि । हे सौमित्रे ! ऋषेर्मम च कथाद्वन्द्वं कथारहस्यम् । वाचं द्वन्द्वमिति च पाठः । यः शृणुयात् ॥ १५ ॥

१५ ] ति० टी०—संग्रहं सम्यगुक्तार्थग्रहणवन्तम् ॥ १५ ॥

रा० टी०—तत इति । संग्रहं स्वोक्तिसंग्रहकारकं लक्ष्मणं काकुत्स्थो द्वारि निक्षिप्य तं दूतमुवाच तदाकारमाह मुनेर्वाक्यं कथयस्वेति ॥ १५ ॥

गो० टी०—तत इति । संग्रहं रक्षितारम् ॥ १६ ॥

१६ ] ति० टी०—ते मनीषितं येन वा समाहितः प्रेषितस्तस्य मनीषितं कथयस्व । ममापि हृदि वर्तते । किमेवंविधं रहस्यं तदवश्यं मया श्रोतव्यमिति शेषः । यद्वा त्वया वक्ष्यमाणं वैकुण्ठगमनं ममापि हृदि वर्तत इत्यर्थः ॥ १६ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे त्र्युत्तरशततमः सर्गः ॥१०३॥

रा० टी०—यदिति । यद्वाक्यं ते मनीषितं विचारितं येन हेतुना त्वं समाहितः इहागतः तं हेतुं च कथयस्व ममापि हृदि वर्त्तते तव प्रार्थनीयमिति शेषः ॥ १६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे त्र्यधिकशततमः सर्गः ॥ १०३ ॥

गो० टी०—यदिति । समाहितः । ममापि हृदि वर्तत इति । एवंविधं रहस्यं तन्मयापि श्रोतव्यमित्यर्थः । अहमपि जानामीत्यर्थः ॥ १७ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने त्र्युत्तरशततमः सर्गः ॥ १०३ ॥

१ ] ति० टी०—अथ ब्रह्मसंदेशकथनम्—शृण्विति । यत्संदेशकथनार्थमहमागतस्तं संदेशं शृणु । किंच येन संदेशः प्रेषितः स भगवान्पितामह एव न केवलं मुनिरेवेत्याह—पितामहेनेति ॥ १ ॥

रा० टी०—रामाज्ञापनानन्तरकालिकं वृत्तमाह—शृण्वित्यादिभिः । पितामहेन प्रेषितो यदर्थमहमागतोस्मि तच्छृणु १

गो० टी०—शृणु राजन्नित्यादि । येन संदेशः कृतः स पितामह एवेत्याह—पितामहेनेति ॥ १ ॥

२ ] ति० टी०—तत्प्रेषितदूतोऽप्यहं त्वत्संबन्ध्येवे-

१ कथा द्वन्द्वंसमीरितमिति गो. पाठः । द्वंद्वं समीरितामिति रा. पाठः । २ पूर्वसद्भावे इति गो. पाठः

पितामहश्च भगवानाह लोकपतिः प्रभुः। समयस्ते कृतः सौम्य लोकान्संपरिरक्षितुम् ॥ ३ ॥
संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि। महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥ ४ ॥
भोगवन्तं ततो नागमनन्तमुदकेशयम्। मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥ ५ ॥
मधुं च कैटभं चैव ययोरस्थिचयैर्वृता। इयं पर्वतसंबाधा मेदिनी चाभवत्तदा ॥ ६ ॥

त्याह—तवाहं पूर्वके भावे इति। पूर्वावस्थायां हिरण्यगर्भोत्पत्तिसमये हिरण्यगर्भावस्थायां वा। कथमहं पुत्रस्तत्राह—मायासंभावितो मायया संकल्पेन संभावित उत्पादितः। सर्वसमाहरः सर्ववस्तुसंहारकर्तेति तीर्थः। कतकस्तु—'तवाहं पूर्वसद्भावे' इति पाठः। पूर्वं सृष्टेः प्राक्सद्भावे 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः सत्तारूपब्रह्मभावे करिष्यमाणाखिलसंसारस्य सृष्टिस्थितिसंहारनिग्रहानुग्रहलक्षणपञ्चकृत्यनिर्वाहकः कालाख्यः क्षणधारारूपो नाडीदिनपक्षादिविभागनिर्वाहकः पुत्रो मायासंभावितः। त्वदीयमायापरिणाम इत्यर्थः। शेषं प्राग्वत्। यद्यपि रामो हिरण्यगर्भांशविष्णोरेवावतारस्तथापि तस्य स्वस्वरूपांशेनावृतज्ञानत्वाद्रामदेववदेवं व्यपदेशे न दोष इत्याह। यत्तु कतकेन सद्भावशब्देन हिरण्यगर्भ उक्तस्तत्तु तुच्छमिति स्पष्टमेवाद्वैतविद्याविदाम् ॥ २ ॥

रा० टी०—ननु त्वं कोसीत्यत आह—तवेति। पूर्वके प्रथमे भावे उत्पत्तिसमये तव मायया कृपया सम्भावितः उत्पादितः अत एव तव पुत्रः सर्वसमाहरः तवाज्ञानुसारेण सकल[सं]हारकर्त्ता कालोहमस्मीति शेषः ॥ २ ॥

गो० टी०—अहं च न तापसः किन्तु काल इत्याह—तवाहमित्यादि। पूर्वसद्भावे पूर्वजन्मनि, अहं तव पुत्रः। सर्वसमाहरः कालरुद्र इति यावत्। परपुरंजयः त्रिपुरसंहारकः। तवाहं पूर्वके भावे पुत्रः परपुरंजय इति च पाठः। केवलं यमस्य पूर्वभावादुत्थितत्वाभावात्, मायासंभावितः मायया उत्पादितः (?) ॥ २ ॥

३] ति० टी०—एवं स्वस्वरूपमुक्त्वा तत्संदेशमाह—पितामहश्चेति। चतुर्मुखाज्जातानां प्रजापतीनां लोकपितृत्वाच्चतुर्मुखः पितामहः। स लोकानां भूरादीनां पतिः पालयिता। स यदाह तद्वदामीति शेषः। तदेवाह—समयस्ते इति। 'भवन्तु विगतज्वराः' इत्यन्तो ब्रह्मसंदेशः। लोकान्देवमनुष्यादीन्रावणादितो रक्षितुं यः समयः कृतः। 'दशवर्षसहस्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ॥' इत्येवंरूपकालविषयः कृतः। स परिपूर्ण इति शेषः ॥ ३ ॥

रा० टी०—आगमनप्रयोजनमाह—पितामह इति। पितामह आह तदाकारमाह लोकान्सम्परिरक्षितुं ते त्वया समयः 'दशवर्षसहस्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोके पालयन् पृथिवीमिमा' मित्येवंविधः संकेतः कृतः ॥ ३ ॥

गो० टी०—पितामहवाक्यमाह—पितामहश्चेत्यादि। स्वान्[1] ब्रह्मलोकादीन् परिरक्षितुं ते समयः। स्वलोकं प्राप्तुं समय इत्यर्थः। लोकान्संपरिरक्षितुमिति च पाठः ॥ ३ ॥

४] ति० टी०—अथ तत्त्वतो ज्ञातमस्वरूपस्य मम कथं मानुषदेहपरिग्रह इत्यत्र सप्रयोजनं तत्प्रक्रियामाह—संक्षिप्येति। पुरा जगत्सृष्टेः पूर्वकाले मायया सर्वसंहारसमर्थस्वशक्त्या संक्षिप्योपसंहृत्य। एतेनाप्रयासेन सकलसंहारकर्तृत्वं ब्रह्मलक्षणमुक्तम्। स्वयमेवेत्यनेनास्य संहारस्य न रुद्रादिद्वारकत्वम्। तेषामपि संहार्यकोटिनिविष्टत्वादिति दर्शितम्। एवं संहारं कृत्वा महदहंकारपञ्चतन्मात्रादिसृष्टिद्वारेणैवं तां सृष्टिं कृत्वा तद्रूपे महार्णवे शयान इत्यनेनैवोदकशायित्वे लब्धे पुनरप्स्विति तदा पृथिवीतत्त्वाद्यभावप्रदर्शनार्थम्। मां पूर्वमजीजनः। 'यो ब्रह्माणं विदधाति पूर्वम्' इति श्रुतेः। हिरण्यगर्भसृष्टिद्वारा ब्रह्माण्डसृष्टौ क्रियमाणायां तदण्डान्ममोद्भव इत्यर्थः ॥ ४ ॥

रा० टी०—ननु तव मम च कस्सम्बन्धः येन तव सन्निधौ संकेतः कृत इत्यत आह—संक्षिप्येति। मायया कृपया स्वयमेव लोकान्संक्षिप्य संक्षेपरूपेण कृत्वा महार्णवे अः विष्णुश्शयानो येन स त्वं मामजीजनः त्वन्नाभिकमलद्वारा अजनयः ४

गो० टी०—न केवलं त्वं रक्षकः, किन्तु संहर्ता स्रष्टा चेत्याह—संक्षिप्येत्यादि। लोकान् चराचरात्मकाः प्रजाः। मायया विचित्रशक्त्या जनयित्वा। त्वं महाकालाग्निरूपः। सत्त्वौ प्राणिनौ। अजीजन इत्यनुषङ्गः ॥ ४ ॥ ५ ॥

५] ति० टी०—तदुत्पत्तिप्रकारमाह—भोगवन्तमिति। ततः परं सृष्टये सृष्टव्यभूधरणक्षमं भोगवन्तं प्रशस्तभोगमनन्ताख्यं नागमुदकेशयं मायया जनयित्वा तत्र च निर्माय स्थापयित्वा तदुरगेशयनवांस्त्वमभूः। अथ कर्दमप्रायभूविग्रहस्थैर्याय महाबलौ द्वौ सत्त्वौ प्राणिनावजीजनः ॥ ५ ॥

रा० टी०—भोगवन्तमिति। भोगवन्तमनन्तं शेषं च जनयित्वा ययोरस्थिचयैर्वृता इयं मेदिनी पर्वतैस्सम्बाधा निबिडाभवत् अभवत् तौ मधुं कैटभं च सत्त्वौ जनयित्वा विष्णुकर्णमलादुत्पाद्य च नाभ्यां विष्णुनाभीप्रदेशे उत्पादिते अर्कसंकाशे पद्मे मामप्युत्पाद्य च प्राजापत्यं सर्वं कर्म मयि त्वया निवेशितं प्रकाशितं श्लोकत्रयमेकान्वयि ॥ ६—७ ॥

६] ति० टी०—कौ तौ तत्राह—मधुं चेति। तत्र मधुमेदःप्रधानः, कैटभोऽस्थिप्रधानः। तत्सृष्टिप्रयोजनमाह—ययोरित्यादि। ययोर्वधानन्तरमियं निर्मिता भूरस्थिचयैर्वृता सती

१ स्वान्लोकान्परिरक्षितुमिति गो. पाठः।

पद्मे दिव्येऽर्कसंकाशे नाभ्यामुत्पाद्य मामपि । प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥ ७ ॥
सोऽहं संन्यस्तभारो हि त्वामुपास्य जगत्पतिम् । रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥ ८ ॥
ततस्त्वमसि दुर्धर्षात्तस्माद्भावात्सनातनात् । रक्षां विधास्यन्भूतानां विष्णुत्वमुपजग्मिवान् ॥ ९ ॥
अदित्यां वीर्यवान्पुत्रो भ्रातॄणां वीर्यवर्धनः । समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥ १० ॥
स त्वमुज्जास्यमानासु प्रजासु जगतोवर । रावणस्य वधाकाङ्क्षी मानुषेषु मनोऽदधाः ॥ ११ ॥
दशवर्षसहस्राणि दशवर्षशतानि च । कृत्वा वासस्य नियमं स्वयमेवात्मना पुरा ॥ १२ ॥

पर्वतसंबाधा मेदोयुक्ततया वृक्षागुल्मप्रचितस्निग्धभूप्रदेशयुक्ततया मेदिनीति नामाभूत् । एवं च तस्याः प्रजासर्गयोग्यता सिद्धा ॥ ६ ॥

गो० टी०—का तावित्यत आह—मधुं च कैटभं चैवेति । तत्र मधुः जलोत्पन्नमकरादिवत् मेदःप्रधानः । कैटभस्तु कमठगुल्मयादिवत् अस्थिप्रधानः । तत्सृष्टिप्रयोजनमाह—ययोरित्यादि । ययोरस्थिचयैर्वृता इयं मही पर्वतसंबाधा मती मेदिनी तन्मेदोयुक्ता । पृषोदरादित्वात्सकारलोपः । अस्थिचयैः शिलापर्वतस्थितिहेतुभूता मेदोमयत्वाद्वृक्षलतागुल्मोत्पत्तिहेतुमृद्भूप्रदेशाश्चाभूदित्यर्थः ॥ ६ ॥

७ ] ति० टी०—अथ चतुर्मुखसृष्टिः—पद्मे इति । ततः स्वनिर्मितोरगेशयस्वविग्रहस्य नाभिप्रदेशेऽर्कसंकाशमर्कप्रभं दिव्यं पद्ममुत्पाद्य तस्मिन्दिव्ये पद्मे मां चतुर्मुखमुत्पाद्य प्राजापत्यं सृष्टिरूपं कर्म मयि त्वया निवेशितमित्यन्वयं मे प्रजापतिरिति नाम ॥ ७ ॥

गो० टी०—मां त्वं पूर्वमजीजन इत्येतद्विवृणोति—पद्म इत्यादि । नाभ्यां वर्तमाने पद्मे नाभिकमले मामुत्पाद्य, मयि प्राजापत्यं प्रजापतित्वं निवेशितम् । मम प्रजापतित्वं दत्तवानसीत्यर्थः ॥ ७ ॥

८ ] ति० टी०—ततः सोऽहं त्वया संन्यस्तभारः संन्यस्तसृष्टिभारः स्वकार्यं सृष्टिलक्षणं संपाद्य तदृक्षणमपश्यञ्जगत्पतिं त्वामुपास्य यतो भवान्मम तेजस्करः सृष्टिसमर्थज्ञानक्रियाशक्तिमयतेजःप्रदोऽभूः, अतस्त्वमेव भूतेषु रक्षां विधत्स्वेति प्रार्थितवानिति शेषः ॥ ८ ॥

रा० टी०—स इति । सः त्वन्निवेशितकर्मा अत एव संन्यस्तः संस्थापितः भारो यस्मिन् सोहं त्वामुपास्य वर्त इति शेषः अतः भूतेषु रक्षां त्वं विधत्स्व ननु रक्षाकरणे त्वमेव समर्थोसीत्यत आह मम तेजस्करो भवानेव ॥ ८ ॥

गो० टी०—सोहमिति । त्वयि संन्यस्तभारः अहं त्वामुपासे निरन्तरं चिन्तयामि । भूतेषु मत्सृष्टेषु रक्षां विधत्स्व ॥ ८ ॥

९ ] ति० टी०—ततो हेतो रक्षणस्य सर्वशक्तौ त्वय्येव निवेशितत्वहेतोः । दुर्धर्षात्तस्माद्भावात् 'ब्रह्मैव भूतानां ज्येष्ठम् । तेन कोऽर्हति स्पर्धितुम्' इति दुर्धर्षत्वस्वभावात् । सनातनात्सकलसंसारमूलकारणत्वेन कालापरिच्छेद्यात् । त्रिगुणमहत्तत्त्वाख्यहैरण्यगर्भभावात्सत्त्वप्राधान्येन विष्णुत्वं प्राप्तवान् ॥ ९ ॥

रा० टी०—ननु भवतामेव तेजस्करत्वेन प्रसिद्धत्वात् कथमहं तव तेजस्कर इत्यत आह—तत इति । दुर्धर्षात् सनातनात् सनस्य ब्रह्मणोपि आतनात् विस्तारकत्वाद्धेतोः भूतानां रक्षां विधास्यन् त्वमेव विष्णुत्वं पालनशक्तिमुपजग्मिवान् विष्णौ प्रापितवान् असि अत एव भ्रातॄणां वीर्यवर्द्धनः अत एव वीर्यवान् योऽदित्यां पुत्रो विष्णुस्तं कृत्येषु समुत्पन्नेषु सत्सु तेषां भ्रातॄणामिन्द्रादीनां साह्याय साहाय्याय कल्पसे प्रवर्तयसि श्लोकद्वयमेकान्वयि ॥ ९–१० ॥

गो० टी०—तत इति । ततः मत्कृतभारसमर्पणेन दुर्धर्षात् दुर्जयात्, सनातनात्, भावात् परवासुदेवस्वभावात्सर्वभूतानां रक्षार्थं विष्णुत्वमुपजग्मिवान् प्राप्तवान् । रक्षां विधास्यन् भूतानामिति च पाठः । यद्वा सनातनात्तस्मात् वासुदेवविग्रहात्, अदित्यां विष्णुत्वमुपजग्मिवानित्यर्थः । परवासुदेवस्त्वं प्रथमं ब्रह्मरुद्रमध्ये आदिविष्णुतयावतीर्णोसीत्यर्थः ॥ ९ ॥

१० ] ति० टी०—ततोऽदित्यां वीर्यवान्दिव्यज्ञानक्रियालक्षणवीर्यवान्पुत्रोऽभूस्त्वं भ्रातॄणामदितिपुत्रेन्द्रादीनां वीर्यवर्धनः उपेन्द्राख्योऽभूः स च तत्तत्कृत्यकाले तेषां साह्याय कल्पसे ॥ १० ॥

गो० टी०—अथ तस्मादुपेन्द्रावतारमाह—अदित्यामिति । भ्रातॄणामिन्द्रादीनाम् वीर्यवर्धनः सन् लोकस्य कृत्येषु रक्षणकार्येषूत्पन्नेषु साह्याय तत्संपादनयोग्यत्वाय कल्पसे । ततो लोकसंरक्षणार्थमुपेन्द्रोऽभूरित्यर्थः ॥ १० ॥

११–१२ ] ति० टी०—अतः स त्वं सकलप्रजारक्षणासाधारणकृत्य उपेन्द्रः सांप्रतं रावणेन प्रजासूज्जास्यमानासु हिंस्यमानासु हे जगतोवर जगच्छ्रेष्ठ स्वयमेव सर्वलोकानुग्रहाय रावणस्य वधाकाङ्क्षी भूत्वा दशवर्षसहस्राणि दशवर्षशतानि च वासस्य नियमं परिच्छेदं पुरात्मना स्वयमेव कृत्वा मानुषेषु मानुषभावेषु मनोऽदधाः ॥ ११ ॥ १२ ॥

रा० टी०—स इति सः । विष्ण्वादीनामपि प्रवर्त्तकः त्वं प्रजासु वित्रास्यमानासु सतीषु रावणस्य वधाकाङ्क्षी सन् दशवर्षसहस्राणि त्रिंशत्सहस्रसंख्याकवर्षाणि दशवर्षशतानि त्रिसहस्रसंख्याकवर्षाणि च स्वयमेव वासस्य नियमं कृत्वा

१ वपामे ऽगि गो. पाठः । २ रक्षार्थं सर्वभूतानामिति गो. पाठः । ३ वित्रास्यमानास्विति गो. रा. पाठः । ४ नियमिति गो. पाठः ।

**स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह । कालो नरवरश्रेष्ठ समीपमुपवर्तितुम् ॥ १३ ॥**
**यदि भूयो महाराज प्रजा इच्छस्युपासितुम् । वस वा वीर भद्रं ते एवमाह पितामहः ॥ १४ ॥**
**अथ वा विजिगीषा ते सुरलोकाय राघव । सनाथा विष्णुना देवा भवन्तु विगतज्वराः ॥ १५ ॥**
**श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् । राघवः प्रहसन्वाक्यं सर्वसंहारमब्रवीत् ॥ १६ ॥**
**श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् । प्रीतिर्हि महती जाता तवागमनसंभवा ॥ १७ ॥**
**त्रयाणामपि लोकानां कार्यार्थं मम संभवः । भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥ १८ ॥**

त्वं मानुषेषु लोकेषु मनोऽदधाः वस्तुमिति शेषः । श्लोकद्वयमेकान्वयि ॥ ११-१२ ॥

**गो० टी०—**एवं महाविष्णुरूपादुपेन्द्रावतारमुक्त्वा पुरस्ताद्रामावतारमाह—**स त्वमिति** । हे जगतां वर ! प्रजासु वित्रास्यमानासु सतीषु रावणस्य वधाकाङ्क्षी सन् । स त्वमुत्रास्यमानासु प्रजासु जगतो वरेति च पाठः । आत्मना स्वातन्त्र्येण स्वयमेव पुरा दशवर्षसहस्राणि दशवर्षशतानि च, वासस्य नियतिं वासस्य नियमम् कृत्वा । वासस्य नियममिति च पाठः । मानुषेषु मनोदधा इति श्लोकद्वयमेकान्वयम् ॥ ११ ॥ १२

१३ ] **ति० टी०—**स त्वं मानुषेषु मनोमयः स्वसंकल्पमयः स्वसंकल्पादेव कस्यचित्पुत्रो जातः स च तत्र पूर्णायुः । त्वत्संकल्पितायुषः पूर्णत्वमित्यर्थः । यद्वा श्रीमदादिगुरोस्तुरीयब्रह्मणः 'यस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिसिद्धस्य संकल्पमयो ज्येष्ठपुत्रो हिरण्यगर्भः कार्यब्रह्मरूपस्तदभिन्नस्वभूतब्रह्मण्यनावृतज्ञानः स्वसंकल्पादेव मानुषेष्वपि कस्यचित्पुत्रस्तत्रापि पूर्णायुर्जातः । यदेवमतः हे नरवरश्रेष्ठ ! अयं कालस्ते समीपमुपगत्योपवर्तितुं विज्ञापयितुं प्रेषित इति शेषः ॥ १३ ॥

**रा० टी०—स इति** । सः कृतवासनियमः मनोमयः प्राकृतमनसामविषयः पुत्रः दशरथनित्यसुनुस्त्वं मानुषेषु लोकेषु पूर्णायुः समापितस्वकृतवासावधिरसीति शेषः अतः अनुवर्तितुं संस्मारयितुमित्यर्थः समीपं त्वत्सन्निधिं कालः त्वदाज्ञानुसारी समयविशेषः ब्रह्मणा प्रेषितोहमस्मीति शेषः ॥ १३ ॥

**गो० टी०—स त्वमिति** । स त्वमुपेन्द्रो भूत्वा वर्तमानस्त्वं, मनोमयः पुत्र इच्छाकृतदशरथपुत्रभावः । स त्वं पूर्णायुरसि, संकल्पितकालस्य निवृत्तत्वादिति भावः । अतो मत्समीपमुपवर्तितुं प्राप्तमयं कालः समयः ॥ १३ ॥

१४] **ति० टी०—**अस्मत्कृत्यमेतावत् । अतः परं त्वं स्वतन्त्रत्वाद्यदि भूयोऽपि प्रजा उपासितुमिह स्थित्वा रक्षितुमिच्छसि तदा हे वीर राम, वस ॥ १४ ॥

**रा० टी०—यदिति** । प्रजाः मानुषजनान् यदि भूयोऽधिकमुपासितुमिच्छसि तर्हि वस एवं पितामह आह ॥ १४ ॥

**गो० टी०—यदीति** । उपासितुं रक्षितुम् । तव स्वतन्त्रत्वादिति भावः ॥ १४ ॥

१५ ] **ति० टी०—**अथवाथ चेत्स्वकृतनियममङ्गीकृत्य सुरलोकाय विजिगीषा सुरलोकं पालयितुं यदीच्छा तदोपेन्द्ररूपेण विष्णुना देवाः सनाथा विगतज्वरा भवन्त्वित्येवं पितामहः आहेत्यन्वयः ॥ १५ ॥

**रा० टी०—**ननु स्वकृतनियमं न हास्यामीत्यत आह—**अथवेति** । अथवा साकेतलोकजिगमिषायामित्यर्थः सुरलोकाय सुरलोकं द्रष्टुं यदि ते विजिगीषा तदा विष्णुना सह देवास्सनाथा भवन्तु एतेन स्वर्गमार्गेणैव साकेतो गन्तव्य इति ब्रह्मणः प्रार्थना व्यञ्जिता ॥ १५ ॥

**गो० टी०—अथवेति** । भूलोकं विहाय स्वर्गलोकाय विजिगीषा चेत्तदा विष्णुना पुनर्विष्णुत्वं प्राप्तेन त्वया देवाः सनाथाः सन्तो विगतज्वराः भवन्तु । भवदागमनमेव समस्तदेवसुखकरं स्यादिति भावः ॥ १५ ॥

१६ ] **ति० टी०—**कालसमीरितं दूतरूपकालोक्तम् । **प्रहसन्निति** । अहमेव स्वकृतमर्यादां न त्यक्ष्यामि । वृथायं संभ्रमः पितामहस्येति हासः । सर्वसंहारं कालम् ॥ १६ ॥

**रा० टी०—श्रुत्वेति** । कालेन समीरितं कथितं पितामहोक्तं वाक्यं श्रुत्वा राघवः सर्वसंहारं कालमब्रवीत् ॥ १६ ॥

**गो० टी०—श्रुत्वेति** । प्रहसन्निति । स्वयमेवोपयुक्तस्य पितामहोक्त्या प्रहासः । सर्वसंहारं रुद्रम् ॥ १६ ॥

१७ ] **ति० टी०—**देवदेवस्य सर्वदेवोपास्यस्य । परममद्भुतं परमं मदभिप्रायप्रकाशकत्वात् । वाक्यं श्रुत्वा महती प्रीतिर्जाता । तवागमनसंभवा च महती प्रीतिर्जाता ॥ १७ ॥

**रा० टी०—श्रुत्वेति** । देवदेवस्य देवानां पूज्यस्य ब्रह्मणो वाक्यं श्रुत्वा तवागमनेन संभवः उत्पत्तिर्यस्याः सा मे प्रीतिर्महती जाता प्रीतिर्जातेत्यनेन ममापि तदीप्सितमिति सूचितम् ॥ १७ ॥

**गो० टी०—श्रुत्वेति** । तवागमनसंभवा प्रीतिर्महती जायत इति योज्यम् ॥ १७ ॥

१८ ] **ति० टी०—**एवं संदेशानुमोदनं कृत्वा प्रतिसंदेशमाह—**त्रयाणामिति** । त्रयाणां भूर्भुवःस्वर्लोकानां कार्यार्थं प्रयोजनार्थं मम स्वेच्छामूलः संभव इति मयाप्यवगम्यते । यद्वा तत्तद्वेषधार्यपि नटस्तत्तद्वेषानुरूपं व्यवहरन्नप्यात्मानं जानात्येव, तद्वत्सोऽहं यतो यस्माल्लोकादिहागतस्तमेव गमिष्यामि ॥ १८ ॥

**रा० टी०—त्रयाणामिति** । मम संभवः प्राकट्यं

१ अयं नरश्रेष्ठेति गो. पाठः ।

हृद्गतो ह्यसि संप्राप्तो न मे तत्र विचारणा। मया हि सर्वकृत्येषु देवानां वशवर्तिनाम्[1] ॥
स्थातव्यं सर्वसंहार यथा ह्याह पितामहः। ॥ १९ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुरधिकशततमः सर्गः ॥ १०४ ॥

## पञ्चाधिकशततमः सर्गः।

तापसरामयो रहसि भाषमाणयोर्दुर्वासा आगत्य रामं दिदृक्ष इति द्वाःस्थं लक्ष्मणमभाषत रामप्रतिज्ञां जानन्नपि मुनिशापभीतो लक्ष्मणोऽग्रजं न्यवेदयत् स तु तमृषिं यथेष्टभोजिनं विसृज्य लक्ष्मणकृतं स्वप्रतिज्ञाभङ्गं विचिन्त्य दीनमुखो बभूव।

तथा तयोः संवदतोर्दुर्वासा भगवानृषिः। रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥ १ ॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः। रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते ॥ २ ॥
मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा। अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥ ३ ॥
किं कार्यं[2] ब्रूहि भगवन्को ह्यर्थः किं करोम्यहम्। व्यग्रो हि राघवो ब्रह्मन्मुहूर्तं परिपाल्यताम्[3] ॥ ४ ॥
तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः। उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥ ५ ॥

त्रयाणां लोकानां कार्यार्थं एव अतः यतोऽहमागतः तत्र गमिष्यामि तेऽपि भद्रमस्त्वित्यनेन तल्लोकमार्गेणैव गमिष्यामीति सूचितम् ॥ १८ ॥

गो० टी०–एवं पितामहसन्देशं श्रुत्वा प्रतिसन्देशमाह–त्रयाणामित्यादि। यत एवाहमागतः तदेव स्थानं गमिष्यामि ॥ १८ ॥

१९ ] ति० टी०–हे संहाररूप काल! त्वं मे हृद्गत एव प्राप्तोऽसि। अतस्तत्र गमने विचारणा नास्ति। 'हृद्गतो ह्यसि संप्राप्तः' इति पाठे यो भावो मम हृद्गतः शुद्धब्रह्मात्मकः प्राप्तव्यत्वेन स मे प्राप्त एवास्ति, तत्र मे न विचारणा। ननु तर्हि तदेव प्राप्यतां किमनेनोपेन्द्रादिलोकगमनेन तत्राह—मया हीति। वशवर्तिनां मद्विधेयानां सर्वकृत्येषु स्थातव्यम्, अतो यथा पितामह आह तथा करिष्यामीति शेषः। 'वशवर्तिना' इति तृतीयान्तपाठे देवानां सर्वकृत्येषु पितामहस्य वशवर्तिना स्थातव्यमित्यर्थः। प्रजारक्षणोद्देश्यकतपःकालिकमद्वरप्रदानादिति भावः १९॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे चतुरधिकशततमः सर्गः ॥१०४॥

रा० टी०–कालं प्रत्याह–हृदिति। हृदि गतः हृदयेन चिन्तित एवं त्वं संप्राप्तः अतः तत्र गमने मे विचारणा संशयो न गमिष्याम्येवेत्यर्थः हि यतः देवानां सर्वकृत्येषु मया स्थातव्यम् पितामहश्च तथैवाह सार्द्धश्लोक एकान्वयी ॥ १९ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे चतुरधिकशततमस्सर्गः ॥ १०४ ॥

गो० टी०–हृदिति। हृद्गतो मम संप्राप्तः। मम हृदि यद्वर्तते तदेव पितामहेन प्रेषितमित्यर्थः। अत्र गमने विषये मे विचारणा नास्ति। ब्रह्माज्ञयैव ममात्रावतरणमित्याह–मया हीति। देवानां वशवर्तिना भक्तपरतन्त्रेण मया, पितामहो देवेष्वन्यतमः यथाह, तथा मया सर्वकृत्येषु स्थितिगमनादिषु स्थातव्यम्। तन्नातिक्रमणीयमित्यर्थः। अनेन ब्रह्मणः सृज्यत्वकथनात्परतत्त्वशङ्का निरस्ता ॥ १९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने चतुरुत्तरशततमः सर्गः ॥ १०४॥

१ ] ति० टी०–एवं द्वन्द्वकथासमये कालात्मकभगवत्प्रेरणया दुर्वाससः आगमनम्—तथेति ॥ १ ॥

रा० टी०–दुर्वाससः आगमनादि वर्णयति–तथेत्यादिभिः। दुर्वासा राजद्वारमुपागमत् ॥ १ ॥

गो० टी०–तथेत्यादि ॥ १ ॥

२–३ ] ति० टी०–मेऽर्थोऽतिवर्ततेऽतिक्रामति अतः पुरा पूर्वमेव शीघ्रं रामं दर्शय ॥ २–३ ॥

रा० टी०–स इति। स दुर्वासा पुरा सकलप्रयोजनपूर्त्योपलक्षितं रामं दर्शय मेऽर्थः प्रयोजनम् निवर्त्तते अतिक्रान्तो भवति इति वचनं सौमित्रिमुवाच ॥ २ ॥

रा० टी०–मुनेरिति। लक्ष्मणः एतद्वाक्यमुवाच ॥३॥

गो० टी०–स इति। पुरा मेर्थोतिवर्तत इति। यावन्मे प्रयोजनमतिक्रामति ततः पूर्वमेव रामं शीघ्रं दर्शयेत्यर्थः॥ २॥३॥

४–५ ] ति० टी०–किं कार्यं वक्तव्यं कोऽर्थः किं प्रयोजनम् किं करोमि। वर्तमानसामीप्ये लट्। किं करिष्ये। कस्त एवं संकटकालस्तत्राह—व्यग्रो हीति ॥ ४–५ ॥

रा० टी०–तदाकारमाह–किमिति। राघवो मुहूर्तं व्यग्रः अतः अहं किं करोमि किंचिदपि कर्तुं न समर्थ इत्यर्थः अतः मया किं कार्यं तत्त्वं ब्रूहि तदापि वक्तुं न योग्य इत्यर्थः अतः मुहूर्तं परिपाल्यताम् कोऽर्थः प्रयोजनम् सोऽप्युच्यतामित्यर्थः ॥ ४ ॥

रा० टी०–तदिति। ऋषिशार्दूलः लक्ष्मणमुवाच ॥ ५ ॥

१ वर्तिनेति गो. पाठः। २ वार्यं इति गो. पाठः। ३ प्रतीक्षतां गो. पाठः।

अस्मिन्क्षणे मां सौमित्रे रामाय प्रतिवेदय । [ अस्मिन्क्षणे मां सौमित्रे न निवेदयते यदि । ]
विषयं त्वां पुरं चैव शपिष्ये राघवं तथा । ॥ ६ ॥
भरतं चैव सौमित्रे युष्माकं या च संततिः । नै हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि ॥ ७ ॥
तच्छ्रुत्वा घोरसंकाशं वाक्यं तस्य महात्मनः । चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥ ८ ॥
एकस्य मरणं मेऽस्तु मा भूत्सर्वविनाशनम् । इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ॥ ९ ॥
लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च । निःसृत्य त्वरितो राजा अत्रेः पुत्रं ददर्श ह ॥ १० ॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा । किं कार्यमिति काकुत्स्थः कृताञ्जलिरभाषत ॥ ११ ॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुः । प्रत्याह रामं दुर्वासाः श्रूयतां धर्मवत्सल ॥ १२ ॥
अद्य वर्षसहस्रस्य समाप्तिर्मम राघव । सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ ॥ १३ ॥
तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः । भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ॥ १४ ॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् । साधु रामेति संभाष्य स्वमाश्रममुपागमत् ॥ १५ ॥
[ तस्मिन् गते मुनिवरे स्वाश्रमं लक्ष्मणाग्रजः । ]
संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत् । दुःखेन च सुसंतप्तः स्मृत्वा तद्घोरदर्शनम् ॥ १६ ॥

गो० टी०–किं कार्यमिति । किं कार्यं किं कर्तव्यं, को वाथः किं प्रयोजनम्, अहमस्मिन् काले किं करोमि । वर्तमानसामीप्ये भविष्यति लट् । किं करिष्ये ॥ ४ ॥ ९ ॥

६–८ ] ति० टी०–रामाय प्रतिवेदय । यदि न प्रतिवेदयेस्तर्हि विषयादिकं शपे इत्यर्थः ॥ ६–८ ॥

रा० टी०–तदाकारमाह—अस्मिन्नित्यादिभिः । अस्मिन् क्षणे एव मां रामाय प्रतिवेदय बोधय हि यतः मन्युं हृदि धारयितुं नियन्तुं अहं न शक्ष्यामि ॥ ६ ॥

रा० टी०–ननु किं मन्युनेत्यत आह—विषयमिति । विषयादीन् युष्माकं या सन्ततिस्तां च शपिष्ये विनाशयिष्ये इत्यर्थः ॥ ७ ॥

रा० टी०–तदिति । तस्य दुर्वाससः वाक्यस्य निश्चयं चिन्तयामास लक्ष्मण इति शेषः ॥ ८ ॥

गो० टी०–अस्मिन्निति । मां राघवाय निवेदयेति । न निवेदयसि यदि तर्हि शपिष्य इति ॥ ६–१२ ॥

९–१२ ] ति० टी०–एकस्य मरणं मेऽस्तु । द्वन्द्वमध्ये पुरुषान्तरसंदर्शकत्वे यथाप्रतिज्ञं मम वधस्य प्राप्तत्वादिति भावः ॥ ९–१२ ॥

रा० टी०–चिन्ताकारमाह—एकस्येति । एकस्यैव मे मरणमस्तु निवेदने ममैव विनाशो भविष्यतीत्यर्थः सर्वस्य विनाशनं माभूत् निवेदनाभावे सर्वेषां विनाशो भविष्यतीत्यर्थः इति निश्चित्य न्यवेदयत् ॥ ९ ॥

रा० टी०–लक्ष्मणस्येति । रामः अत्रेः पुत्रं दुर्वाससं ददर्श ॥ १० ॥

रा० टी०–स इति । कृताञ्जलिः काकुत्स्थः मया किं कार्यमित्यभाषत ॥ ११ ॥

रा० टी०–तदिति । दुर्वासाः श्रूयतामिति रामं प्रत्याह ॥ १२ ॥

१३ ] ति० टी०–वर्षसहस्रस्य । अनशननियमपरिगृहीतवर्षसहस्रस्येत्यर्थः । यथासिद्धं यथोपपन्नम् ॥ १३ ॥

रा० टी०–तदाकारमाह—अद्येति । मम वर्षसहस्रस्य वर्षसहस्रसंख्यातानशनव्रतस्याद्य समाप्तिः अतः सः वर्षसहस्रपर्यन्तं कृतोपवासोऽहम् सिद्धं भोजनमिच्छामि ॥ १३ ॥

गो० टी०–अद्येत्यादि । वर्षसहस्रस्येति । अनशननियमोपगृहीतवर्षसहस्रस्येत्यर्थः यथासिद्धं यथोपपन्नम् ॥ १३ ॥

१४–१५ ] ति० टी०–राघवः प्रीतमानसः । मुनिकोपः परिहृत इति प्राप्तसंतोषः ॥ १४–१८ ॥

रा० टी०–तदिति । राघवः मुनिमुख्याय यथावत्सिद्धं भोजनमुपाहरत् ॥ १४ ॥

रा० टी०–स इति । अमृतोपमं तदन्नं भुक्त्वा साधु रामेति संभाष्य उपागमत् ॥ १५ ॥

गो० टी०–तच्छ्रुत्वेति । राघवः प्रीतमानस इति । मुनिकोपः परिहृत इति प्राप्तसंतोष इत्यर्थः ॥ १४–१७ ॥

१६ ] ति० टी०–ततोऽनन्तरं कालवाक्यानि मन्त्रश्रोतुरावयोर्द्रष्टुश्च वधविषयकाणि ॥ १६ ॥

रा० टी०–संस्मृत्येति । ततः दुर्वासोगमनानन्तरं कालवाक्यानि यः पश्यति स न भविष्यति इत्यादिवचनानि संस्मृत्य दुःखमुपागमत् राम इति शेषः अर्धं पृथक्—

१ प्रतिपादयेति गो. पाठः २ इदमर्धमधिकं गो. पु. । ३ इदमर्धम् " अस्मिन्क्षणे मां सौमित्रे " इति षष्ठपद्यपूर्वार्धोत्तरं दृश्यते गो. पु. ।
४ प्रभुरिति गो. पाठः । ५ तपसो ममेति गो. पा. । ६ इदमर्धमधिकं गो. पुस्त. ।

अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह । ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः ॥
नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः । ॥ १७ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

## षडुत्तरशततमः सर्गः ।

कृतप्रतिज्ञाभङ्गमात्मानं प्रेक्ष्यावाङ्मुखं दीनमग्रजं "जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय । हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नरा" इत्यादि लक्ष्मणेनोक्तो रामः कथमपि वसिष्ठामात्यादिसंमत्या तं व्यसृजत्, ततः सरयूतीरे सर्वस्रोतांसि निगृह्य निरुद्धश्वासं तं शक्रादयः सशरीरं स्वर्निन्युस्तत्र तेबहु तं सत्कृतवन्तश्च ।

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् । राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥ १ ॥
न संतापं महाबाहो मदर्थं कर्तुमर्हसि । पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥ २ ॥
जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय । हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥ ३ ॥
यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि । जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव ॥ ४ ॥
लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः । मन्त्रिणः समुपानीय तथैव च पुरोधसः[1] ॥ ५ ॥
अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः । दुर्वासोऽभिगमं चैव प्रतिज्ञां तापसस्य च ॥ ६ ॥

---

दुःखेनेति । घोरदर्शनं तल्लक्ष्मणवियोगाभासं संस्मृत्य निश्चित्य दुःखेन सुसंतप्तः अत एव दीनमनाः अत एव अवाङ्मुखः रामः व्याहर्तुं न शशाक ॥ १६ ॥

१७ ] ति० टी०—कालवाक्यानि बुद्ध्या निश्चित्य सभ्रातृभृत्यवर्गस्योपसंहारः कालप्राप्त उचित एवेति निश्चित्य । तन्मम भ्रातृभृत्यादि सर्वं नास्तीति च निश्चित्य तूष्णीमासीत् ॥ १७ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

रा० टी०—तत इति । राघवः कालवाक्यानि विनिश्चित्य एतत्सर्वम् न अस्ति इह स्थास्यति इति निश्चित्य तूष्णीमासीत् ॥ १७ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे पञ्चाधिकशततमः सर्गः ॥ १०५ ॥

गो० टी०—तत इति । ततोऽनन्तरम्, कालवाक्यानि बुद्ध्या विनिश्चित्य सभ्रातृपुत्रभृत्यवर्गस्य मम सर्वोपसंहारकालः प्राप्तः उचित एवेति निश्चित्य, सामान्यतो नैतदस्तीति एतन्मम भ्रातृभृत्यादिपरिकरजातं सर्वमपि नास्तीति चोक्त्वा तूष्णीमासीत् । लक्ष्मणस्यापराधं नोद्भावितवानित्यर्थः ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरा० भूषणे मणिमुकुटाख्याने उ० श्रीरामायणव्याख्याने पञ्चोत्तरशततमः सर्गः ॥ १०५ ॥

१ ] ति० टी०—अथ लक्ष्मणविसर्जनम्—अवाङ्मुखमिति । आप्लुतं राहुग्रस्तम् । हृष्टः । सुमन्त्रवाक्यतः पूर्वमेव रामकर्तव्यस्वपरित्यागस्यावगतत्वाद्विषादरहित इत्यर्थः ॥ १ ॥

रा० टी०—रामं प्रति लक्ष्मणोक्तिमाह—अवाङ्मुखमित्यादिभिः । आप्लुतं राहुणा ग्रस्तं सोममिव दीनं तत्त्वेन प्रतीयमानं राघवं लक्ष्मणोऽब्रवीत् ॥ १ ॥

गो० टी०—अवाङ्मुखमित्यादि । आप्लुतं राहुग्रस्तम् । हृष्ट इति । सुमन्त्रवाक्यतः पूर्वमेव रामेण स्वपरित्यागस्यावगतत्वादविषाद इत्यर्थः ॥ १ ॥

२–४ ] ति० टी०—तदेवाह—पूर्वेति । पूर्वनिर्माणेन प्राग्भवीयकर्मणा बद्धा कल्पितेदृशी 'संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्' इत्युपदिष्टन्यायवतीत्यर्थः ॥ २–४ ॥

रा० टी०—तदाकारमाह—नेत्यादिभिः । मदर्थं मत्त्यागनिमित्तं संतापं कर्तुं त्वं नार्हसि हि यतः ईदृशी एवं प्रतीयमाना कालस्य समयविशेषस्य गतिः प्राप्तिः पूर्वनिर्माणबद्धा पौर्वकालिकसंकेतसिद्धा ॥ २ ॥

रा० टी०—जहीति । हीनप्रतिज्ञा नराः नरकं प्रयान्ति अतः प्रतिज्ञां स्वकृतनिश्चयं परिपालय अत एव विस्रब्धं यथा भवति तत्तथा मां जहि एतेन त्वत्कर्तृकप्रतिज्ञाया हानौ महाजनो येन गतस्स पंथा इत्यादिरीत्या प्राकृतानामपि प्रतिज्ञायाः हानौ तेषां कल्याणाभावः प्रसज्जेत् इति ध्वनितम् ॥ ३ ॥

रा० टी०—यदीति । मयि यदि प्रीतिः यद्यनुग्राह्यता स्वत्कर्तृकानुग्रहकर्मता तदा त्वं मां जहि अत एव धर्मं वर्द्धय ४

गो० टी०—नेति । तदेव दर्शयति—पूर्वेत्यादि । पूर्वनिर्माणेन प्राग्भवीयकर्मणा, बद्धा कल्पिता प्रथा । ईदृशीति । "संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्" इत्युपदिष्टन्यायवतीत्यर्थः ॥ २–४ ॥

५–६ ] ति० टी०—प्रचलितेन्द्रियस्त्यक्तावाङ्मुखमौनतया प्रवृत्तवाग्व्यापारः ॥ ५ ॥ ६ ॥

---

[1] पुरोधसमिति गो. पाठः ।

तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत। वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥ ७ ॥
दृष्टमेतन्महाबाहो क्षयं ते रोमहर्षणम्। लक्ष्मणेन वियोगश्च तव राम महायशः ॥ ८ ॥
त्यजैनं बलवान्कालो मा प्रतिज्ञां वृथा कृथाः। प्रतिज्ञायां हि नष्टायां धर्मो हि विलयं व्रजेत् ॥९॥
ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम्। सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥ १० ॥
स त्वं पुरुषशार्दूल त्रैलोक्यस्याभिपालनात्। लक्ष्मणेन विना चाद्य जगत्स्वस्थं कुरुष्व ह ॥ ११ ॥
तेषां तत्समवेतानां वाक्यं धर्मार्थसंहितम्। श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥१२॥
विसर्जये त्वां सौमित्रे मा भूद्धर्मविपर्ययः। त्यागो वधो वा विहितः साधूनां ह्युभयं समम् १३
रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः। लक्ष्मणस्त्वरितैः प्रायात्स्वगृहं न विवेश ह ॥ १४ ॥
स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः। निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह ॥१५॥
अनिःश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः। देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥ १६ ॥

---

रा० टी०—लक्ष्मणेनेति। रामः मन्त्रिणः पुरोधसश्च समुपानीय तेषां मध्ये दुर्वासोऽभिगमं दुर्वासोभिगमहेतुकलक्ष्मणकर्तृकवृत्तनिवेदनम् तापसस्य समीपे प्रतिज्ञां च वृत्तमब्रवीत् श्लोकद्वयमेकान्वयि ॥ ५ ॥ ६ ॥

गो० टी०—लक्ष्मणेनेति। प्रचलितेन्द्रियः त्यक्तावाङ्मुखसमौनतया प्रवृत्तवागादीन्द्रियः ॥ ६–१० ॥

७ ] ति० टी०—समासत तूष्णीं स्थिताः ॥ ७ ॥

रा० टी०—तदिति। सोपाध्यायाः मन्त्रिणस्समासत तूष्णीं बभूवुः वशिष्ठस्तु एतदुवाच ॥ ७ ॥

८ ] ति० टी०—दृष्टमेतत्क्षयं क्षय एव दृष्टः। मया तपोबलेनेति शेषः। मां द्रष्टुमागतेन त्वत्पित्रा पृष्टम्य मदाश्रमस्थदुर्वाससो मुखादेति ॥ ८ ॥

रा० टी०—तदाकारमाह—दृष्टमित्यादिभिः। एतत् एवंप्रकारकं ते क्षयं क्षयः साकेतगमनं लक्ष्मणेन वियोगश्च मया दृष्टं प्रादुर्भावान्तरेष्विति शेषः एतेन एवं तत्र लीला सार्वकालिक्येवेति सूचितम् ॥ ८ ॥

९–१० ] ति० टी०—त्यजेत्यादिना प्रतिज्ञापालनं धर्मः क्षत्रियस्य विशेषत इति सूचितम् ॥ ९–१० ॥

रा० टी०—त्यजेति। कालः त्वत्कृतोपदेशः बलवान् अन्यथा न भवतीत्यर्थः अतः एनं लक्ष्मणं त्यज अत एव प्रतिज्ञां वृथा मा कृथा वृथाकरणे दोषमाह धर्मो लोकमर्यादा विलयं विध्वंसं व्रजेत् ॥ ९ ॥

रा० टी०—तत इति। धर्मे विनष्टे सति सर्वं विनश्येत् १०

११–१२] ति० टी०—अभिपालनादभिरक्षणसिद्धिहेतोः। लक्ष्मणेन विना चाद्य। लक्ष्मणत्यागपूर्वकमवस्थानेनेत्यर्थः ॥ ११ ॥ १२ ॥

रा० टी०—उपसंहरन्नाह—स इति। त्रैलोक्यस्य अभिपालनात् धर्मस्थापनद्वारा रक्षणात् हेतोः लक्ष्मणेन विना त्वं जगत् स्वस्थं स्वस्वधर्मे स्थितं कुरुष्व ॥ ११ ॥

रा० टी०—तेषामिति। समवेतानां संघीभूतानां तेषां मन्त्रिप्रभृतीनां परिषदस्सभाया मध्ये तत् वसिष्ठोक्तं वाक्यं श्रुत्वा रामोऽब्रवीत् ॥ १२ ॥

गो० टी०—स त्वमिति। अभिपालनात्। हेतौ पञ्चमी। अभिपालनार्थमित्यर्थः ॥ ११–१३ ॥

१३ ] ति० टी०—इष्टस्य त्यागो वा वधो वा तदुभयं साधूनां सममेवेति त्वां विसर्जये। वधप्रतिज्ञापालनायेति भावः॥१३॥

रा० टी०—तदाकारमाह—विसर्जय इति। त्वामहं विसर्जये त्यजामि अत एव धर्मस्य प्रतिज्ञापालनस्य विपर्ययः अन्यथाभावो माभूत् वधेन विना प्रतिज्ञापालनं कथं भविष्यतीत्यत आह त्यागो वधश्च उभयं साधूनां महात्मभिः समं तुल्यं विहितः कथित इत्यर्थः ॥ १३ ॥

१४ ] ति० टी०—रामेण भाषित इत्युक्तरीत्येति शेषः। बाष्पव्याकुलितेन्द्रियो रामवियोगासहिष्णुतया, न तु स्वशरीरहानिभयेनेति भावः। तदेवाह—स्वगृहं न विवेश हेति। प्रायात्। सरयूतीरमिति शेषः ॥ १४ ॥

रा० टी०—रामेणेति। त्वरितः रामाज्ञाकरणे वेगवान् लक्ष्मणः स्वगृहमप्रकटसाकेतं प्रायात् स्वगृहं प्रकटीभूतायोध्यावेश्म न विवेश काकाक्षिगोलकन्यायेन शब्दावृत्त्या स्वगृहशब्दः उभयान्वयी ॥ १४ ॥

गो० टी०—रामेणेत्ति। रामेण भाषित इत्युक्तरीत्येति शेषः ॥ १४ ॥

१५ ] ति० टी०—सर्वस्रोतांसि सर्वेन्द्रियद्वाराणि ॥ १५ ॥

रा० टी०—गमनप्रकारमाह—स इत्यादिभिः। स लक्ष्मणः सरयूतीरं गत्वा उपस्पृश्य आचम्य सर्वस्रोतांसि इन्द्रियद्वाराणि निगृह्य निःश्वासं न मुमोच ॥ १५ ॥

गो० टी०—स इति। सर्वस्रोतांसि सर्वेन्द्रियाणि ॥ १५ ॥

१६ ] ति० टी०—युक्तं योगयुक्तम्। अभ्यकिरन्- भिवृष्टवन्तः ॥ १६ ॥

---

१ त्वरितमिति गो. पाठः।

अदृश्यं सर्वमनुजैः सशरीरं महाबलम् । प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥ १७ ॥
ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः । हृष्टाः प्रमुदिताः सर्वे पूजयन्ति स्म राघवम् १८
इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

## सप्तोत्तरशततमः सर्गः ।

सौमित्रिविरहमहसमानस्तत्रभवान्कोसल्येयस्तद्व्रतपथं जिगमिषुर्भरतं राज्येऽभिषेक्तुमैच्छत् तदनङ्गीकृत्य तत्सहगतिमिच्छन्तं भरतं परमार्ताः प्रकृतीश्च वसिष्ठोपदेशेन किमपेक्षितं भवतामित्यपृच्छच्च पौरास्तु यदि घृणा तर्हि सपुत्रदारा वयं भवन्तमनुयास्याम इति प्रार्थयन्त खरहन्ता तु बाढमित्यनुगृह्य कुशलवावभिषिच्य शत्रुघ्नाय संदेशहरं प्राहिणोत् ।

विसृज्य लक्ष्मणं रामो दुःखशोकसमन्वितः । पुरोधसं मन्त्रिणश्च नैगमांश्चेदमब्रवीत् ॥ १ ॥
अद्य राज्येऽभिषेक्ष्यामि भरतं धर्मवत्सलम् । अयोध्यायाः पतिं वीरं ततो यास्याम्यहं वनम् ॥२॥
प्रवेशयत संभारान्मा भूत्कालात्ययो यथा । अद्यैवाहं गमिष्यामि लक्ष्मणेन गतां गतिम् ॥ ३ ॥
तच्छ्रुत्वा राघवेणोक्तं सर्वाः प्रकृतयो भृशम् । मूर्धभिः प्रणता भूमौ गतसत्त्वा इवाभवन् ॥ ४ ॥
भरतश्च विसंज्ञोऽभूच्छ्रुत्वा राघवभाषितम् । राज्यं विगर्हयामास वचनं चेदमब्रवीत् ॥ ५ ॥

---

रा० टी०—अनिःश्वसन्तमिति । युक्तं स्वाप्रकटयोगाभ्यां कृतमनस्कमनिःश्वसन्तमनिःश्वासरहितं तं लक्ष्मणं देवाः पुष्पैरभ्यकिरन् ॥ १६ ॥

गो० टी०—अनिःश्वसन्तमिति । युक्तं योगयुक्तम्, अभ्यकिरन् ॥ १६ ॥

१७ ] ति० टी०—अदृश्यं योगबलादन्तर्धानमुपगतम्, यद्वा दृश्यं यथा तथा सशरीरं लक्ष्मणं प्रगृह्य शक्रस्त्रिदिवं संविवेश । अनेन मनुष्यशरीरसंस्थानमेव देवशरीरसंस्थानं प्राप्तम्, न तु पूर्वशरीरपरित्यागः शरीरान्तरपरिग्रहश्चेति सूचितम् । एतेन जन्मापि तथैवेति च सूचितम् ॥ १७ ॥

रा० टी०—अदृश्यमिति । सर्वमनुजैरदृश्यं सशरीरं शरीरेण सहितं लक्ष्मणं शक्रः प्रगृह्य त्रिदिवं संविवेश ॥ १७ ॥

गो० टी०—अदृश्यमिति । अदृश्यं यथा तथा ॥ १७ ॥

१८ ] ति० टी०—चतुर्भागं चतुर्थं भागम् । अत्र कतकः—शेषसुपर्णविष्वक्सेनैः शेषशायी विष्णुः स्वमूर्त्या चतुर्भागवान् । तत्र शेषांशो लक्ष्मणः, गरुडांशो भरतः, विष्वक्सेनांशः शत्रुघ्न इति । इदं पाद्मविरुद्धम् । तत्र हि भरतशत्रुघ्नौ शङ्खचक्रांशावित्युक्तमिति प्रागदर्शितम् । गरुडस्य स्वरूपेणैव रामसविधे आगमनमुक्तं युद्धकाण्डे तेन विरुद्धं च ॥ १८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे षडुत्तरशततमः सर्गः ॥ १०६ ॥

रा० टी०—तत इति । विष्णोः क्षीराब्धीशस्य चत्वारो भागाः सर्वांशा इत्यर्थः यस्मिन् तं राघवं लक्ष्मणम् हृष्टास्तुष्टाः अत एव प्रमुदितास्सुरसत्तमाः पूजयन्ति स्म ॥ १८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे षडधिकशततमः सर्गः ॥१०६॥

गो० टी०—तत इति । चतुर्थो भागश्चतुर्भागः । शेषसुपर्णविष्वक्सेनविष्णुरूपेण चतुर्विभागो विष्णुस्तत्र शेषरूपश्चतुर्थांशो लक्ष्मणः । सुपर्णभूतो भरतः । विष्वक्सेनरूपः शत्रुघ्न इति रहस्यार्थः । अत एव पुराणान्तरेषु शेषावतारो लक्ष्मण इति प्रसिद्धिः । अनन्तगरुडविष्वक्सेनविष्णुरूपेणात्मानं चतुर्धा व्यूह्य वर्तते सर्वेश्वर इति ज्ञेयम् ॥ १८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकटाख्याने उत्तरश्रीरामायणव्याख्याने षडुत्तरशततमः सर्गः ॥ १०६ ॥

१ ] ति० टी०—अथ भरतवचनेन कुशलवयो राज्याभिषेकपूर्वं प्रस्थापनं शत्रुघ्नाय दूतप्रेषणं च—विसृज्येति ॥ १ ॥

रा० टी०—लक्ष्मणगमनानन्तरकालिकं वृत्तमाह—विसृज्येत्यादिभिः । रामः पुरोधःप्रभृतीन् अब्रवीत् तत्र नैगमा वणिजः ॥ १ ॥

गो० टी०—विसृज्येत्यादि ॥ १ ॥

२ ] ति० टी०—भरतमयोध्यायाः पतिमभिषेक्ष्यामीति मनोरथं करोमि ततोऽहं वनं यास्यामि । महाप्रस्थानविधिनेति शेषः ॥ २ ॥

रा० टी०—तदाकारमाह—अद्येति द्वाभ्याम् । अयोध्यायाः पतिं भरतं राज्ये अद्याभिषेक्ष्यामि ततोऽनन्तरमहं वनमप्रकटसाकेते प्रमोदाटवीं यास्यामि ॥ २ ॥

गो० टी०—अद्येति । भरतमयोध्याधिपतिमभिषेक्ष्यामीति मनोरथं करोमि । ततो वनं यास्यामि । महाप्रस्थानविधिनेति शेषः ॥ २ ॥

३–५ ] ति० टी०—संभारान्भरताभिषेकार्थान् ॥ ३–६ ॥

रा० टी०—प्रवेशयतेति । लक्ष्मणेन गतां गतिं मार्गमह-

---

१ दृष्टेति गो. पा. । २ ऽपूजयन्समहर्षय इति गो. पा. । ३ पुरोधसमिति गो. पा. । ४ कालस्यात्ययं इति गो. पा. । ५ राघवमिति गो. पा. ।

सत्येनाहं शपे राजन्स्वर्गभोगेन चैव हि। न कामये यथा राज्यं त्वां विना रघुनन्दन॥ ६ ॥
इमौ कुशीलवौ राजन्नभिषिच्य नराधिप। कोशलेषु कुशं वीरमुत्तरेषु तथा लवम्॥ ७ ॥
शत्रुघ्नस्य च गच्छन्तु दूतास्त्वरितविक्रमाः। इदं गमनमस्माकं शीघ्रमाख्यातुं मा चिरम्॥ ८ ॥
तच्छ्रुत्वा भरतेनोक्तं दृष्ट्वा चापि ह्यधोमुखान्। पौरान्दुःखेन संतप्तान्वसिष्ठो वाक्यमब्रवीत्॥ ९ ॥
वत्स राम इमाः पश्य धरणीं प्रकृतीर्गताः। ज्ञात्वैषामीप्सितं कार्यं मा चैषां विप्रियं कृथाः॥१०॥
वसिष्ठस्य तु वाक्येन उत्थाप्य प्रकृतीजनम्। किं करोमीति काकुत्स्थः सर्वान्वचनमब्रवीत्॥११॥
ततः सर्वाः प्रकृतयो रामं वचनमब्रुवन्। गच्छन्तमनुगच्छामो यत्र राम गमिष्यसि॥ १२ ॥
पौरेषु यदि ते प्रीतिर्यदि स्नेहो ह्यनुत्तमः। सपुत्रदाराः काकुत्स्थ समं गच्छाम सत्पथम्॥ १३ ॥

मयवै गमिष्यामि अतः यथा कालात्ययो माभूत् तथा सम्भारान् अभिषेकसामग्रीः प्रवेशयत ॥ ३ ॥

रा० टी०-तदिति । राघवेणोक्तं श्रुत्वा मूर्द्धभिर्भूमौ प्रणतास्सर्वाः प्रकृतयः गतसत्वा इवाभवन् ॥ ४ ॥

रा० टी०-भरत इति । भरतो विसंज्ञोऽभूत् इदमब्रवीच ॥ ५ ॥

गो० टी०-प्रवेशयतेति । संभारानिति । भरताभिषेकार्थानित्यर्थः ॥ ३ ॥

गो० टी०-तदिति । सर्वाः प्रकृतयः सुमन्त्रादयः ॥४॥५॥

६ ] ति० टी०-त्वां विना यथा राज्यं च त्वदाज्ञया यथानुक्रमप्राप्तमयोध्याराज्यं न कामये, त्वां विना प्राप्येण स्वर्गभोगेन च कामये । सुखभोगमिति शेषः । हे राजन् ! इममर्थं सत्येन शपे ॥ ६ ॥

रा० टी०-तदाकारमाह—सत्येनेत्यादिभिः। त्वां विना राज्यमहं यथावन्न कामये सत्येन स्वर्गेण सुखविशेषेण च शपे अत्रार्थे सत्यादिशपथं करोमीत्यर्थः ॥ ६ ॥

गो० टी०-सत्येनेति । स्वर्गलोके न चेत्यादि । हे रघुनन्दन ! त्वां विना प्राप्ये स्वर्गलोके न च कामये । सुखभोगमिति शेषः । तथा त्वां विना यथा राज्यं त्वदाज्ञया यथानुक्रमप्राप्तमयोध्याराज्यं न च कामये । हे राजन् ! इममर्थं सत्येन शपे ॥ ६ ॥

७ ] ति० टी०-तर्हि किं राज्यं शून्यमेवास्तु तत्राह-इमाविति । उत्तरेषूत्तरकोशलेषु ॥ ७ ॥

रा० टी०-ननु राज्यपालनं कथं भविष्यतीत्यत आह-इमाविति । इमौ कुशीलवौ राज्यार्हाविति शेषः अतः कोशलेषु दक्षिणकोशलदेशेषु कुशमुत्तरेषु उत्तरकोशलेषु लवं चाभिषिच्य गच्छेति शेषः ॥ ७ ॥

गो०टी०-एवं भरत उक्त्वानन्तरं कुशलवावभिषिञ्चेत्याह-इमौ कुशलवावित्यादि । उत्तरेष्विति । उत्तरकोसलेष्वित्यर्थः ॥ ७ ॥

८-९ ] ति० टी०-इदमस्माकं प्रवर्तमानं गमनं गमनोद्योगं शत्रुघ्नस्य शीघ्रमाख्यातुं कथयितुं मा चिरमविलम्बं यथा भवति तथा दूता गच्छन्तु। आख्यातु मा चिरमित्यत्र तु मोऽनुस्वारलोप आर्षः ॥ ८ ॥ ९ ॥

रा० टी०-शत्रुघ्नस्येति । दूताः अस्माकं गमनमाख्यातु आख्यातुं शत्रुघ्नस्य समीपं गच्छन्तु तुमो मकारलोप आर्षः॥८॥

रा० टी०-तदिति । वसिष्ठोऽब्रवीत् ॥ ९ ॥

गो० टी०-शत्रुघ्नस्येति । इदम् अस्माकं प्रवर्तमानं स्वर्गाय गमनवृत्तान्तं शत्रुघ्नस्याख्यातुं दूता गच्छन्तु, गत्वा चाख्यान्तु । मा चिरं विलम्बो मा भूत् । इदं गमनमस्माकं शीघ्रमाख्यान्तु मा चिरमिति च पाठः ॥ ८ ॥

१० ] ति० टी०-एषामीप्सितं ज्ञात्वा यत्कार्यं यत्करणार्हं तत्कर्तव्यम् ॥ १० ॥

रा० टी०-तदाकारमाह-वत्सेत्यादिभिः। धरणीं गताः इमाः प्रकृतीः त्वं पश्य एषां प्रकृतीनामीप्सितं ज्ञात्वा कार्यं साधनीयं एषां विप्रियं मा कृथाः—एषामिति । सामान्ये नपुंसकम् ॥ १० ॥

११ ] ति० टी०-प्रकृतीजनमित्यत्र दीर्घ आर्षः ॥ ११॥

रा० टी०-वसिष्ठस्येति । वसिष्ठस्य वाक्येन प्रकृतीजनं प्रकृतिजनान् उत्थाप्य सम्बोध्य काकुत्स्थः किंकरोमीति सर्वानब्रवीत् ॥ ११ ॥

गो० टी०-वसिष्ठस्येति । प्रकृतीजनम् । छान्दसो दीर्घः ॥ ११ ॥ १२ ॥

१२ ] ति० टी०-हे राम ! यत्र त्वं गमिष्यसि तत्र गच्छन्तं त्वामनुगच्छामः ॥ १२ ॥

रा० टी०-तत इति । सर्वाः प्रकृतयः राममब्रुवन् तदाकारमाह हे ! राम यत्र त्वं गमिष्यसि तत्र गच्छन्तं त्वामनुगच्छामः ॥ १२ ॥

१३ ] ति० टी०-सत्पथम् । त्वया गम्यमानं स्वर्गमार्गमित्यर्थः ॥ १३ ॥

रा० टी०-तदेव भङ्ग्यन्तरेणाह—पौरेष्विति । पौरेषु यदि ते प्रीतिः स्नेहः तदा सपुत्रदाराः वयं सत्पथं समं गच्छाम ॥ १३ ॥

१ कोकेनेति गो. पाठः । २ स्वर्गायेति गो. पाठः । ३ आख्यान्त्विति गो. आख्यातेति रा. पाठः । ४ समागच्छामेति गो. पाठः ।

तपोवनं वा दुर्गं वा नदीमम्भोनिधिं तथा । वयं ते यदि न त्याज्याः सर्वान्नो नय ईश्वर ॥ १४ ॥
एषा नः परमा प्रीतिरेष नः परमो वरः । हृद्गता नः सदा प्रीतिस्तवानुगमने नृप ॥ १५ ॥
पौराणां दृढभक्तिं च बाढमित्येव सोऽब्रवीत् । स्वकृतान्तं चान्ववेक्ष्य तस्मिन्नहनि राघवः ॥ १६ ॥
कोशलेषु कुशं वीरमुत्तरेषु तथा लवम् । अभिषिच्य महात्मानावुभौ रामः कुशीलवौ ॥ १७ ॥
अभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य पुरे ततः । [ परिष्वज्य महाबाहुर्मूर्ध्न्युपाघ्राय चासकृत् । ]
रथानां तु सहस्राणि नागानामयुतानि च । दश चाश्वसहस्राणि एकैकस्य धनं ददौ ॥ १८ ॥
बहुरत्नौ बहुधनौ हृष्टपुष्टजनौ श्रयौ । स्वे पुरे प्रेषयामास भ्रातरौ तौ कुशीलवौ ॥ १९ ॥
अभिषिच्य ततो वीरौ प्रस्थाप्य स्वपुरे तदा । दूतान्संप्रेषयामास शत्रुघ्नाय महात्मने ॥ २० ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

## अष्टोत्तरशततमः सर्गः ।

भरतसंदेशश्रवणेनातिदुःखी शत्रुघ्नो द्राक्स्वात्मजद्वितयाय राज्यं धनादिकं च विभज्य जानकीजानिमुपस्थायात्मानं तमनुजिगमिषुं न्यवेदयत अन्ये च देवर्षिगन्धर्वात्मजाः सुग्रीवश्चाङ्गदमभिषिच्य सकपिर्विभीषणादयश्च तमनुगन्तुमागताः तत्र हनुमद्विभीषणौ यावच्चन्द्रमेदिनीसूर्यं जाम्बवदादींश्च कपीन् यावत्कलि तिष्ठतेत्यादिश्येतरानखिलान्स्वानुगमनेऽन्वमन्यत भगवान् दाशरथिः ।

ते दूता रामवाक्येन चोदिता लघुविक्रमाः । प्रजग्मुर्मधुरां शीघ्रं चक्रुर्वासं न चाध्वनि ॥ १ ॥
ततस्त्रिभिरहोरात्रैः संप्राप्य मधुरामथ । शत्रुघ्नाय यथातत्त्वमाचख्युः सर्वं एव तत् ॥ २ ॥

गो० टी०—पौरेष्विति । सत्पथं ब्रह्मलोकमार्गम् । त्वया गम्यमानमिति शेषः ॥ १३ ॥

१४-१५ ] ति० टी०—वयं त्वदेकशरणा यदि ते न त्याज्यास्तदा गम्यमानतपोवनाद्यन्यतमं नः सर्वान्नय । तत्र हेतुः—ईश्वरेति । भगवदवतारत्वात्सर्वस्वभक्तलोकनयनसमर्थो यतस्त्वमित्यर्थः ॥ १४ ॥ १५ ॥

रा० टी०—तप इति । तपोवनाद्यन्यतमं गच्छतोपीति शेषः ते तव यदि यतो वयं न त्याज्या अतस्सर्वान्नोऽस्मान्नय १४

रा० टी०—एषेति । तवानुगमने हृद्गता नः प्रीतिः सदैवास्त्विति शेषः एषैव नोऽस्माकं परमा प्रीतिः तृप्तिः अतः एष एव नः परमो वरः अतीप्सीतः ॥ १५ ॥

गो० टी०—तपोवनमिति । वयं चेति । न त्याज्या अतः सर्वान्नय । तत्र हेतुः—ईश्वरेति ॥ १४ ॥ १५ ॥

१६] ति०टी०—पौराणामनुगमनविषयां दृढभक्तिमन्ववेक्ष्य स्वकृतान्तं स्वकर्तव्यसिद्धान्तं चान्ववेक्ष्य बाढमित्यब्रवीत्॥ १६॥

रा० टी०—पौराणामिति । स रामः पौराणां दृढभक्तिं स्वकृतान्तं स्वकृतसिद्धान्तं च अन्ववेक्ष्य बाढमित्येवाब्रवीत् १६

गो० टी०—पौराणामिति । कृतान्तं च कर्तव्यतासिद्धान्तं च ॥ १६ ॥

१७] ति०टी०—अभिषिच्य । प्रस्थापयामासेति शेषः १७

रा० टी०—कोशलेष्विति । पुरे अयोध्यायां स्थितो रामः कोशलेषु दक्षिणकोशलदेशेषु कुशम् उत्तरेषु उत्तरकोशलदेशेषु लवं च अभिषिच्य अभिषिक्तौ कुशीलवौ अङ्के प्रतिष्ठाप्य च एकैकस्य रथादीनां सहस्रादीनि धनं ददौ सार्धश्लोकद्वयमेकान्वयि ॥ १७ ॥ १८ ॥

गो० टी०—कोसलेष्विति । सुतावभिषिच्य प्रस्थापयामास ॥ १७ ॥

१८-२०] ति० टी०—पुरेऽयोध्यायां स्वसमीपे कोशलद्वयराज्यार्थमभिषिक्तौ सुतावङ्के प्रतिष्ठाप्य परिष्वज्य मूर्ध्न्युपाघ्राय च रथादिकं ददौ ॥ १८-२० ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे सप्ताधिकशततमः सर्गः ॥१०७॥

रा० टी०—बह्विति । कुशीलवौ स्वे पुरे तत्तदीयत्वेन प्रसिद्धपुर्यौ प्रेषयामास राम इति शेषः ॥ १९ ॥

रा० टी०—अभिषिच्येति । शत्रुघ्नाय दूतान् सम्प्रेषयामास राम इति शेषः ॥ २० ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे सप्ताधिकशततमः सर्गः ॥ १०७ ॥

गो० टी०—अभिषिक्तौ सुताविति । पुरे अयोध्यायाम्, स्वसमीपे कोसलद्वयराज्यार्थमभिषिक्तौ अङ्के प्रतिष्ठाप्य मूर्ध्न्युपाघ्राय परिष्वज्य रक्षादिकं ददौ । रथानां त्वित्यादि । पुनर्दीयमानं राजोपवाह्यदिव्यरथादिविषयम् अभिषिच्येत्युक्तार्थम् ॥ १८-२१ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उ० श्रीरामायणव्याख्याने सप्तोत्तरशततमः सर्गः ॥ १०७ ॥

१-२ ] ति० टी०—अथानुगमनायागतानां शत्रुघ्न-

१ दृढमर्थमधिकं गो. पाठे । २ दशायुतानि चाश्वानामिति गो. पाठः ३ आवृताविति गो. पाठः । ४ त्विति गो. पाः । ५ सुतौ वीरौ प्रतिष्ठाप्येति गो. पाठः । ६ सर्वमिति गो. पाठः ।

लक्ष्मणस्य परित्यागं प्रतिज्ञां राघवस्य च। पुत्रयोरभिषेकं च पौरानुगमनं तथा ॥ ३ ॥
कुशस्य नगरी रम्या विन्ध्यपर्वतरोधसि। कुशावतीति नाम्ना सा कृता रामेण धीमता ॥ ४ ॥
श्रावस्तीति पुरी रम्या श्राविता च लवस्य ह। अयोध्यां विजनां कृत्वा राघवो भरतस्तथा ॥ ५ ॥
स्वर्गस्य गमनोद्योगं कृतवन्तौ महारथौ। एवं सर्वं निवेद्याशु शत्रुघ्नाय महात्मने ॥ ६ ॥
विरेमुस्ते ततो दूतास्त्वर राजेति चाब्रुवन्। तच्छ्रुत्वा घोरसंकाशं कुलक्षयमुपस्थितम् ॥ ७ ॥
प्रकृतीस्तु समानीय काञ्चनं च पुरोधसम्। तेषां सर्वं यथावृत्तमब्रवीद्रघुनन्दनः ॥ ८ ॥
आत्मनश्च विपर्यासं भविष्यं भ्रातृभिः सह। ततः पुत्रद्वयं वीरः सोऽभ्यषिञ्चन्नराधिपः ॥ ९ ॥
सुबाहुर्मधुरां लेभे शत्रुघाती च वै दिशम्। द्विधा कृत्वा तु तां सेनां माधुरीं पुत्रयोर्द्वयोः ॥
धनं च युक्तं कृत्वा वै स्थापयामास पार्थिवः। ॥ १० ॥
सुबाहुं मधुरायां च वैदिशे शत्रुघातिनम्। ययौ स्थाप्य तदायोध्यां रथेनैकेन राघवः ॥ ११ ॥

---

सुग्रीवविभीषणादीनामनुगमनावस्थानव्यवस्था—तैं दूता इति ॥ १ ॥ २ ॥

रा० टी०—दूतप्रेषणानन्तरकालिकं वृत्तमाह—ते इत्यादिभिः। दूताः अध्वनि वासं न चक्रुः अत एव मधुरां शीघ्रं जग्मुः ॥ १ ॥

रा० टी०—तत इति। सर्वे दूताः त्रिभिरहोरात्रैः मधुरां सम्प्राप्य शत्रुघ्नाय यथातत्वं याथार्थ्यमनतिक्रम्य आचख्युः॥२॥

गो० टी०—ते दूता इत्यादि ॥ १ ॥ २ ॥

३ ] ति० टी०—राघवस्य प्रतिज्ञां कालपुरुषं प्रति ब्रह्मलोकागमनप्रतिज्ञाम्। पौरानुगमनं पौरानुगमनानुमतिम् ॥३॥

४ ] ति० टी०—कुशस्य कुशावतीति नाम्ना पुरी रामेण कृता ॥ ४ ॥

५–६ ] ति० टी०—लवस्य च पुरी श्रावस्तीति नाम्ना श्राविता लोके प्रसिद्धिं प्रापिता ॥ ५ ॥ ६ ॥

रा० टी०—आख्यानप्रकारं बोधयन्नाह—लक्ष्मणस्येत्यादिभिः। पुत्रयोः कुशलवयोरभिषेकं च निवेद्य विन्ध्यपर्वतरोधसि कुशावतीतिनाम्ना सा प्रसिद्धा कुशस्य नगरी श्रावस्तीति नाम्ना श्राविता प्रसिद्धा लवस्य पुरी च रामेण कृतेति च राघवो भरतश्च स्वर्गस्य साकेतस्य गमनोद्योगं कृतवन्तौ एवमिति च सर्वं शत्रुघ्नाय निवेद्य हे राजन्! त्वं त्वर शीघ्रं गच्छ इति ब्रुवन् अब्रुवन् ततोऽनन्तरं विरेमुश्च सार्द्धश्लोकचतुष्टयमेकान्वयि ॥ ३–६ ॥

गो० टी०—लक्ष्मणस्येति। राघवस्य प्रतिज्ञामिति। कालपुरुषं प्रति ब्रह्मलोकागमनप्रतिज्ञामित्यर्थः। पौरानुगमनं पौरानुगमनानुमतिम् ॥ ३ ॥

गो० टी०—कुशस्येति। कुशस्य कुशावती पुरी, लवस्य श्रावस्तीति श्राविते त्यन्वयः ॥ ४ ॥ ५ ॥

गो० टी०—त्वरामात। त्वर गमनाय त्वारता भव। राजेति। राजन्नित्यर्थः ॥ ६ ॥

७ ] ति० टी०—त्वर गमनाय त्वरितो भवेति। राजेति राजन्नित्यर्थः ॥ ७ ॥

८ ] ति० टी०—काञ्चनं काञ्चनाख्यम्। यथावृत्तमब्रवीत्। लक्ष्मणत्यागस्य निर्हेतुकत्वशङ्कान्यावृत्त्यर्थमिति भावः ॥ ८ ॥

९ ] ति० टी०—विपर्यासं देहवियोगम्। भविष्यं भविष्यन्तम्। तत एतत्कथनानन्तरम् ॥ ९ ॥

रा० टी०—तदिति। घोरसंकाशं घोरवत्प्रतीयमानमुपस्थितं तत् प्रसिद्धं कुलक्षयं कुलकर्तृकगमनं श्रुत्वा प्रकृतीः कांचनं तदभिधं पुरोधसं च समानीय तेषां मध्ये रघुनन्दनः शत्रुघ्नः भविष्यं भविष्यंतं भ्रातृभिस्सह आत्मनो विपर्यासमप्राकृतत्वेन स्थितिं यथावृत्तमब्रवीत् अर्द्धचतुष्टयमेकान्वयि ॥ ७ ॥ ८ ॥

रा० टी०—तत इति। नराधिपः शत्रुघ्नः पुत्रद्वयमभ्यषिञ्चत् अत एव सुबाहुर्ज्येष्ठः मधुरां लेभे शत्रुघाती कनिष्ठस्तु वैदिशं तदभिधनगरं लेभे ॥ ९ ॥

गो० टी०—तच्छ्रुत्वेति। काञ्चनं काञ्चनाख्यम्। विपर्यासं देहवियोगम् ॥ ७–९ ॥

१०–११ ] ति० टी०—वैदिशं तदाख्यं नगरम्। धनं च युक्तं कृत्वा किंचिदधिकं ज्येष्ठाय कनिष्ठाय च समविभागं दत्त्वा ॥ १० ॥ ११ ॥

रा० टी०—पुत्रयोः प्राप्तिप्रकारं बोधयन्नाह—द्विधेति। माधुरीं मधुरासम्बन्धिनीं सेनां युक्तं विभागार्हं धनं च द्विधा कृत्वा द्वयोः पुत्रयोरग्रे पार्थिवश्शत्रुघ्नः स्थापयामास ॥ १० ॥

रा० टी०—सुबाहुमिति। राघवश्शत्रुघ्नः स्थाप्य स्थापयित्वा एकेन रथेनैव अयोध्यां ययौ ॥ ११ ॥

गो० टी०—द्विधेति। धनं युक्तं च कृत्वेति। यथोचितं यथाशास्त्रम् विभागं कृत्वेत्यर्थः ॥ १०–११ ॥

स ददर्श महात्मानं ज्वलन्तमिव पावकम् । सूक्ष्मक्षौमाम्बरधरं मुनिभिः सार्धमक्षयैः ॥ १२ ॥
सोऽभिवाद्य ततो रामं प्राञ्जलिः प्रयतेन्द्रियः । उवाच वाक्यं धर्मज्ञं धर्ममेवानुचिन्तयन् ॥ १३ ॥
कृत्वाभिषेकं सुतयोर्द्वयो[1] राघवनन्दन । तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ १४ ॥
न चान्यदद्य वक्तव्यमतो वीर न शासनम् । विहन्यमानमिच्छामि मद्विधेन विशेषतः ॥ १५ ॥
तस्य तां बुद्धिमक्लीबां विज्ञाय रघुनन्दनः । बाढमित्येव शत्रुघ्नं रामो वाक्यमुवाच ह ॥१६॥
तस्य वाक्यस्य वाक्यान्ते वानराः कामरूपिणः । ऋक्षराक्षससङ्घाश्च समापेतुरनेकशः ॥ १७ ॥
सुग्रीवं ते पुरस्कृत्य सर्वे एव समागताः । तं[3] रामं द्रष्टुमनसः स्वर्गायाभिमुखं स्थितम् ॥१८॥
देवपुत्रा ऋषिसुता गन्धर्वाणां सुतास्तथा । रामक्षयं विदित्वा ते सर्वे एव समागताः ॥१९॥
[ ते राममभिवाद्योचुः सर्वे वानरराक्षसाः । ]
तवानुगमने राजन्संप्राप्ताः स्म समागताः । यदि राम विनास्माभिर्गच्छेस्त्वं पुरुषोत्तम॥२०॥
यमदण्डमिवोद्यम्य त्वया स्म विनिपातिताः । एतस्मिन्नन्तरे रामं सुग्रीवोऽपि महाबलः ॥
प्रणम्य विधिवद्वीरं विज्ञापयितुमुद्यतः । ॥ २१ ॥
अभिषिच्याङ्गदं वीरमागतोऽस्मि नरेश्वर । तवानुगमने राजन्विद्धि मां कृतनिश्चयम् ॥ २२ ॥

१२-१४ ] ति० टी०—मुनिभिः सार्धम् । आसीनमिति शेषः ॥ १२ ॥ १४ ॥

रा० टी०—स इति । स शत्रुघ्नः अक्षयैर्मुनिभिस्सार्द्धं सूक्ष्मक्षौमाम्बरधरं रामं ददर्श ॥ १२ ॥

रा० टी०—स इति । स शत्रुघ्नः धर्मं स्वसेवाप्राप्तिमनुचिन्तयन् सन् धर्मज्ञं राममुवाच ॥ १३ ॥

रा० टी०—तदाकारमाह—कृत्वेति द्वाभ्याम् सुतयोरभिषेकं कृत्वा तवानुगमने कृतनिश्चयं माम् विद्धि ॥ १४ ॥

१५-१६ ] ति० टी०—अन्यदद्य न वक्तव्यम् । मां मानुगच्छेति न वक्तव्यमित्यर्थः । अतोऽस्माद्वाक्यादधिकं हे वीर, शासनं दण्डो नेत्यर्थः । 'विलोक्यमानमिच्छामि त्वद्विधेन विशेषतः, इतिपाठे त्वद्विधेन परमानुग्रहसमर्थेन विलोक्यमानमनुगृह्यमाणमेवेच्छामि । आत्मानमिति शेष इत्यर्थः । 'विहन्यमानमिच्छामि मद्विधेन विशेषतः, इति पाठे हे वीर ! तव शासनं मद्विधेन विहन्यमानं नेच्छामीति संबन्धः ॥ १५ ॥ १६ ॥

रा० टी०—नेति । अतः मत्प्रार्थितात् अन्यत् शासनमाज्ञा न वक्तव्यं तत्र हेतुमाह मद्विधेन निहन्यमानमक्रियमाणं शासनं तवाज्ञां विशेषतोऽहं नेच्छामि एतेन तवानुगमनमवश्यमेव करिष्यामीति सूचितम् शासनशब्दः शब्दावृत्त्योभयान्वयी यदि च त्वया वक्तव्यमन्यत् शासनं नेच्छामीत्यन्वयः तदेच्छामीत्यस्याप्यावृत्तिः अत्र पक्षे न शब्दावृत्तिरिति दिक् अत्रत्योत्तरार्द्धं विलोक्यमानमिच्छामि त्वद्विधेन विशेषत इति पाठान्तरं तत्र पक्षे ततोऽन्यत् शासनं मयोग्या नास्ति अतो न वक्तव्यम् तत्र हेतुः त्वद्विधेन विलोक्यमानमात्मानमिति शेषः इच्छामि ॥ १५ ॥

रा० टी०—तस्येति । तस्य शत्रुघ्नस्य अक्लीबां बुद्धिं निश्चयं विज्ञाय रामः बाढमित्येवोवाच ॥ १६ ॥

गो० टी०—न चेति । अन्यन्न वक्तव्यमिति । मास्त्विति न वक्तव्यमित्यर्थः । विलोक्यमानमित्यादि । त्वद्विधेन परमानुग्रहसमर्थेन विलोक्यमानमनुगृह्यमाणमेव संपादयितुमात्मानमिच्छामि ॥ १५-२० ॥

१७-१९ ] ति० टी०—तस्य वाक्यस्य वाक्यान्ते । उच्चारणान्ते इत्यर्थः ॥ १७ ॥ १९ ॥

२० ] ति० टी०—समागता मिलिताः ॥ २० ॥

रा० टी०—तस्येति । वाक्यस्य प्रशस्तवाक्यविशिष्टस्य तस्य रामस्य वाक्यान्ते कामरूपिणः अनेकशो वानरादयः समापेतुः ॥ १७ ॥

रा० टी०—सुग्रीवमिति । सुग्रीवं पुरस्कृत्य समागताः ते वानरादयः स्वर्गायाभिमुखं स्थितं रामं द्रष्टुमनसः ज्ञातुकामा बभूवुरिति शेषः स्वस्वविषयकतदभिप्रायं जिज्ञासवो बभूवुरित्यर्थः ॥ १८ ॥

रा० टी०—देवेति । रामस्य क्षयं साकेतगमनं विदित्वा समागताः ते प्रसिद्धा देवपुत्रादयः हे राजन् ! तवानुगमने सम्प्राप्ताः कृतनिश्चयाः वयं समागताः अतः यदि अस्माभिर्विना त्वं गच्छेस्तदा त्वया यमदण्डमुद्यम्येव वयं विनिपातिताः स्म इत्यूचुरिति शेषः सार्द्धश्लोकद्वयमेकान्वयि ॥ १९ ॥ २० ॥

२१-२२ ] ति० टी०—यमदण्डमुद्यम्येव त्वया निपातिताः स्म । हताः स्मेत्यर्थः ॥ २१ ॥ २२ ॥

रा० टी०—एतस्मिन्निति । एतस्मिन्नन्तरे समये सुग्रीवोपि रामं विज्ञापयितुमुद्यतो बभूवेति शेषः ॥ २२ ॥

१ युक्तमिति गो. पाठः । २ विलोक्यमानमिच्छामि त्वद्विधेनेति गो. पाठः । ३ ते राममिति गो. पाठः । ४ इदमर्धमधिकं गो. पु. । ५ [illegible] इति गो. पाठः ।

[ तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः । वानरेन्द्रमथोवाच मैत्रं तस्यानुचिन्तयन् ॥
सखे शृणुष्व सुग्रीव न त्वयाहं विनाकृतः । गच्छेयं देवलोकं वा परमं वा पदं महत् ॥ ]
तैरेवमुक्तः काकुत्स्थो बाढमित्यब्रवीत्स्मयन् । बिभीषणमथोवाच राक्षसेन्द्रं महायशाः ॥ २३ ॥
यावत्प्रजा धरिष्यन्ति तावत्त्वं वै बिभीषण । राक्षसेन्द्र महावीर्य लङ्कास्थः स्वं धरिष्यसि ॥ २४ ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी । यावच्च मत्कथा लोके तावद्राज्यं तवास्त्विह ॥ २५ ॥
शासितश्च सखित्वेन कार्यं ते मम शासनम् । प्रजाः संरक्ष धर्मेण नोत्तरं वक्तुमर्हसि ॥ २६ ॥
किंचान्यद्वक्तुमिच्छामि राक्षसेन्द्र महाबल । आराधय जगन्नाथमिक्ष्वाकुकुलदैवतम् ॥ २७ ॥
आराधनीयमनिशं देवैरपि सवासवैः । तथेति प्रतिजग्राह रामवाक्यं बिभीषणः ॥
राजा राक्षसमुख्यानां राघवाज्ञामनुस्मरन् ॥ ॥ २८ ॥
तमेवमुक्त्वा काकुत्स्थो हनूमन्तमथाब्रवीत् । जीविते कृतबुद्धिस्त्वं मा प्रतिज्ञां वृथा कृथाः ॥ २९ ॥

रा० टी०–तद्विज्ञापनाकारमाह—**अभिषिच्येति** । अङ्गदमभिषिच्याहमागतोस्मि अतः तत्रानुगमने कृतनिश्चयं मां विद्धि ॥ २३ ॥

**गो० टी०–यदीति** । यमदण्डमुग्रमप्येव त्वया विनिपातिताः स्म । हताः स्मेत्यर्थः ॥ २१–२६ ॥

२३ ] **ति० टी०**–एवं तेषामनुगमनवचः श्रुत्वा ब्रह्माज्ञापरिपालनाय व्यवस्थामाह—**बिभीषणमिति** ॥ २३ ॥

**रा० टी०–तैरिति** । काकुत्स्थो रामः बाढमित्येवाब्रवीत् अथानन्तरं बिभीषणमुवाच ॥ २४ ॥

२४–२५ ] **ति० टी०**–तत्र बिभीषणस्य ब्रह्मणामरत्वप्रदानादिहावस्थानमेव शास्ति—**यावदिति** । प्रजा धरिष्यन्ति स्थास्यन्ति तावत्त्वं स्वं स्वीयदेहं धरिष्यसि ॥ २४ ॥ २५ ॥

**रा० टी०**–तदाकारमाह—**यावदित्यादिभिः** । यावत् प्रजाः जनाः धरिष्यन्ति लोकानिति शेषः तावत्कालं लंकास्थः त्वं स्वं स्वकीयं देहं धरिष्यसि ॥ २५ ॥

**रा० टी०–यावदिति** । यावच्चन्द्रसूर्यश्च तिष्ठति यावन्मेदिनी तिष्ठति यावच्च लोके मत्कथा तिष्ठति तावत्कालमिह राज्यं तवास्तु ॥ २६ ॥

**गो० टी०**–एवं तेषामनुगमनार्थवचनं श्रुत्वा व्यवस्थामाह–**बिभीषणमित्यादि** । बिभीषणस्य ब्रह्मणा अमरत्वप्रदानप्रदर्शनात् स्नेहेनैवावस्थानं शास्ति–**यावत्प्रजा इति** । धरिष्यसीति । देहमिति शेषः ॥ २७–३२ ॥

२६ ] **ति० टी०**–शासित आज्ञप्तः ॥ २६ ॥

**रा० टी०–शासित इति** । सखित्वेन हेतुना त्वं मया शासितः अतः मम शासनं ते त्वया कार्यमत एव प्रजास्संरक्ष अत एव उत्तरं प्रतिवचनं वक्तुं नार्हसि ॥ २७ ॥

२७–२८ ] **ति० टी०**–अत्र स्थाने पाठे विशेषः—'तावद्रमस्व राज्यस्थः काले मम पदं व्रज । इत्युक्त्वा प्रददौ तस्मै स्वविश्लेषासहिष्णवे ॥ श्रीरङ्गशायिनं स्वार्चामिक्ष्वाकुकुलदैवतम् । रङ्गं विमानमादाय लङ्कां प्रायाद्बिभीषणः ॥ इति' तदाह–**किंचेति** । इदं सार्धश्लोकद्वयं प्रक्षिप्तमित्यन्ये २७।२८॥

**रा० टी०**–ननु त्वां विना कथं स्थास्यामीत्यत आह—**किमिति** । अन्यदपि वक्तुमिच्छामि अहं पृथक् ननु वदेत्यत आह—**आराधयेति** । इक्ष्वाकुकुलदैवतमत एव देवैरप्याराधनीयम् जगन्नाथं त्वमाराधय एतेनाराधनसमये सदैव मां द्रक्ष्यसीति सूचितम् ॥ २८ ॥

**रा० टी०–तथेति** । राघवाज्ञामनुस्मरन् अनुचिन्तयन् राक्षसमुख्यानां राजा बिभीषणः रामवाक्यं तथेति प्रतिजग्राह ॥ २९ ॥

२९ ] **ति० टी०**–अथ हनुमतोऽपि ब्रह्मदत्तामरत्वाद्यावद्रामकथाप्रचारं भूलोके तच्छ्रवणस्य प्रार्थितत्वात्तथा रामेणानुज्ञातत्वाच्च तं स्थापयति—**जीवित इति** । जीवदवस्थाने कृतबुद्धिः कृतनिश्चयः । अतः स्वकृतां प्रतिज्ञां मा वृथा कृथाः । मा विलोपयेत्यर्थः ॥ २९ ॥

**रा० टी०–तमिति** । काकुत्स्थः हनूमन्तमब्रवीत् तदाकारमाह जीविते प्राणिमात्रे कृतबुद्धिः तत्कल्याणे कृतनिश्चयस्त्वं प्रतिज्ञां वृथा माकृथाः ॥ ३० ॥

**गो० टी०–तमिति** । अथ हनुमतोपि अमरत्वं प्रति ब्रह्मदत्तवरत्वात् यावद्रामकथाप्रचारः भूलोके तावत् तच्छ्रवणस्य प्रार्थितत्वात् तथा रामेणानुज्ञातत्वाच्च तस्य च स्थापनम् । जीवित इत्यादि । जीविते जीवितावस्थाने, कृतबुद्धिः कृतनिश्चयः सन्, प्रतिज्ञां त्वत्कृतां मा विलोपय । मा प्रतिज्ञां वृथा कृथा इति च पाठः ॥ ३३ ॥

१ पद्यद्वयमिदमधिकं गो. पाठे । २ इदमर्धं गो. पु. न दृश्यते । ३ मते इति गो. पा. । ४ सर्वैर्देवैरिति गो. पा. । ५ विलोपयेति गो. पा. ।

मत्कथाः प्रचरिष्यन्ति यावल्लोके हरीश्वर । तावद्रमस्व सुप्रीतो मद्वाक्यमनुपालयन् ॥ ३० ॥
एवमुक्तस्तु हनुमान्राघवेण महात्मना । वाक्यं विज्ञापयामास परं हर्षमवाप च ॥ ३१ ॥
यावत्तव कथा लोके विचरिष्यति पावनी । तावत्स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन् ॥ ३२ ॥
जाम्बवन्तं तथोक्त्वा तु वृद्धं ब्रह्मसुतं तदा । मैन्दं च द्विविदं चैव पञ्च जाम्बवता सह ॥
यावत्कलिश्च संप्राप्तस्तावज्जीवत सर्वदा ॥ ॥ ३३ ॥
तदेवमुक्त्वा काकुत्स्थः सर्वांस्तानृक्षवानरान् । उवाच बाढं गच्छध्वं मया सार्धं यथोदितम् ॥३४॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

## नवाधिकशततमः सर्गः ।

दक्षिणसव्यपार्श्वयोः श्रीमहीभ्यामुपाश्रितो व्यवसायं पुरस्कृत्य नानाविधायुधैर्गृहीतपुरुषविग्रहैर्ब्राह्मणरूपिभिर्वेदैरनुगतो रामः प्रातिष्ठत तमन्तःपुरस्त्रियो बालदासीसहिताः सप्रकृतयोऽमात्यवर्गा भरतशत्रुघ्नौ द्रष्टुमागतो जानपदोऽपि तिर्यग्योनयः किं बहुना स्थावरचरभूतानि सुसूक्ष्माण्यपि सानन्दमनुजग्मुर्दाशरथिम् ।

प्रभातायां तु शर्वर्यां पृथुवक्षा महायशाः । रामः कमलपत्राक्षः पुरोधसमथाब्रवीत् ॥ १ ॥
अग्निहोत्रं व्रजत्वग्रे दीप्यमानं सह द्विजैः । वाजपेयातपत्रं च शोभमानं महापथे ॥ २ ॥

३०-३२ ] ति० टी०-उक्तमेवार्थं स्पष्टयति—मत्कथा इति ॥ ३० ॥ ३२ ॥

रा० टी०-प्रतिपालनोपायमाह—मदिति । यावत् लोके मत्कथाः प्रचरिष्यन्ति तावत् सुप्रीतस्त्वं मद्वाक्यमनुपालयन् सन् रमस्व एतेन मत्कथयैव सर्वेषां कल्याणं भविष्यतीति सूचितं तेन कथाप्रचारं लोकेषु कारयेत्याज्ञा सूचिता ॥ ३१ ॥

रा० टी०-एवमिति । हनुमान् परं हर्षमवाप वाक्यं विज्ञापयामास उवाच च ॥ ३२ ॥

रा० टी०-तदाकारमाह—यावदिति । मेदिन्यां पृथिव्यां स्थास्यामि ॥ ३३ ॥

गो०टी०-उक्त एवार्थः स्पष्टीक्रियते-मत्कथा इति ३४-३६

३३ ] ति० टी०-एवं जाम्बवतोऽपि ब्रह्मपुत्रत्वाद्ब्रह्मणैव दत्तामरत्वात्स्थापनम् । तथा मैन्दद्विविदयोरपि तत्पित्राश्विनीकुमारानुग्रहेणामृतप्राशनात्स्थापनम् । जाम्बवन्तमिति । ब्रह्मसुतं वृद्धं जाम्बवन्तं मैन्दं द्विविदं तथोक्त्वा प्राणान्धारयतेत्युक्त्वा तेषां देहत्यागकालं तन्त्रेणाह—पञ्चेति । जाम्बवता सह ये पञ्चविभीषणहनुमन्मैन्दद्विविदा अमरास्ते यूयं यावत्कलिः प्रलयरूपो नाशः कलियुगं च तावत्कालं जीवत । तत्र हनुमद्विभीषणयोः प्रलये इतरेषां तु कलौ कृष्णावतारे नाश इति बोध्यम् ॥ ३३ ॥

रा० टी०-जाम्बवन्तमिति । जाम्बवन्तं मैन्दं द्विविदं च तथोक्त्वा सर्वान् प्रत्याहेति शेषः तदाकारमाह जाम्बवता सह पञ्च जाम्बवद्विभीषणहनुमन्मैन्दद्विविदा इत्यर्थः यूयं यावत्कलिं लोके विवादः सम्प्राप्तः तावत् प्रलयकालपर्यन्तमित्यर्थः सर्वदा जीवत सार्द्धश्लोक एकान्वयी ॥ ३४ ॥ ३५ ॥

गो० टी०-जाम्बवन्तमिति । जाम्बवतोपि ब्रह्मपुत्रत्वात् ब्रह्मणैव दत्तवरत्वाच्च स्थापनम् । मैन्दद्विविदयोरपि पित्रोरश्विनोरनुग्रहादमृतप्राशित्वाच्च स्थापनम् । विभीषणादयोमराः पञ्च, ते यूयं यावत्कलिः यावत्प्रलयः तावज्जीवत । कलौ प्रलये संप्राप्ते सति देहं त्यजतेति शेषः ॥ ३७ ॥

३४ ] ति० टी०-तदिति । विभीषणादीन्प्रत्येवमुक्त्वा इतरान्प्रति गमनानुज्ञामाहेत्यर्थः । सर्वांस्तान्पूर्वोक्तपञ्चव्यतिरिक्तान् ॥ ३४ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डेऽष्टोत्तरशततमः सर्गः ॥ १०८ ॥

रा० टी०-तदिति । एवमुक्त्वा यथोदितं भवद्भिर्यथाप्रार्थितम् तथैव बाढमस्त्विति शेषः अत एव मया सार्द्धं गच्छध्वम् इति वचनं काकुत्स्थः ऋक्षवानरानुवाच ॥ ३६ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे अष्टाधिकशततमः सर्गः ॥ १०८ ॥

गो० टी०-तानिति । सर्वांस्तानिति । पञ्चामरव्यतिरिक्तानित्यर्थः ॥ ३८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने अष्टोत्तरशततमः सर्गः ॥ १०८ ॥

१ ] ति० टी०-अथ महाप्रस्थानविधिना भगवति निर्याते सर्वेषां तदनुगमनम्—प्रभातायामिति ॥ १ ॥

रा० टी०-रामकर्तृकवानरादिप्रार्थनास्वीकारानन्तरकालिकं वृत्तमाह—प्रभातायामित्यादिभिः । रामः पुरोधसमब्रवीत् ॥ १ ॥

गो० टी०-प्रभातायामित्यादि ॥ १ ॥

२ ] ति० टी०-वाजपेयातपत्रम् । तस्यैव धर्मानुष्ठाने साधनत्वात् । राजचिह्नस्य च संत्यक्तत्वादिति भावः ॥ २ ॥

१ अवाप्येति गो. पाठः । २ तथेति गो. पाठः । ३ तामिति गो. पाठः । ४ यथेप्सितमिति गो. पाठः ।

ततो वसिष्ठस्तेजस्वी सर्वं निरवशेषतः । चकार विधिवद्धर्मं माहाप्रस्थानिकं विधिम् ॥ ३ ॥
ततः सूक्ष्माम्बरधरो ब्रह्ममावर्तयन्परम् । कुशान्गृहीत्वा पाणिभ्यां सरयूं प्रययावथ ॥ ४ ॥
अव्याहरन्क्वचित्किंचिन्निश्चेष्टो निःसुखः पथि । निर्जगाम गृहात्तस्माद्दीप्यमानो यथांशुमान् ॥ ५ ॥
रामस्य दक्षिणे पार्श्वे पद्मा श्रीः समुपाश्रिता । सव्येऽपि च मही देवी व्यवसायस्तथाग्रतः ॥ ६ ॥
शरा नानाविधाश्चापि धनुरायतमुत्तमम् । तथायुधाश्च ते सर्वे ययुः पुरुषविग्रहाः ॥ ७ ॥
वेदा ब्राह्मणरूपेण गायत्री सर्वरक्षिणी । ओङ्कारोऽथ वषट्कारः सर्वे राममनुव्रताः ॥ ८ ॥
ऋषयश्च महात्मानः सर्वे एव महीसुराः । अन्वगच्छन्महात्मानं स्वर्गद्वारमपावृतम् ॥ ९ ॥

रा० टी०—तदाकारमाह—अग्निहोत्रमिति । दीप्यमानमग्निहोत्रं शोभमानं वाजपेयातपत्रं च महापथे साकेतमार्गे अग्रे व्रजतु ॥ २ ॥

गो० टी०—अग्निहोत्रमिति । वाजपेयातपत्रं चेति । तस्य धर्मानुष्ठानबलप्राप्तत्वाद्राजचिह्नस्य सन्यस्तत्वाच्च सीतायाः पत्न्याः स्थितत्वादग्रेऽपि स्थितिरिति पूर्वमेवोक्तम् ॥ २ ॥

३ ] ति० टी०—महाप्रस्थानं नाम परलोकगमनाय संकल्पपूर्वकं प्रस्थानं तदर्हति माहाप्रस्थानिकं विधिमुद्दिश्य यो धर्मः कर्तव्यस्तं धर्मं विधिवच्चकार ॥ ३ ॥

रा० टी०—तत इति । विधिवत् विधीनां वक्ता वशिष्ठः धर्मं वेदविहितं सर्वं महाप्रास्थानिकं विधिं निरवशेषतश्चकार ॥ ३ ॥

गो० टी०—तत इति । महाप्रस्थानमर्हतीति महाप्रास्थानिकम् ॥ ३ ॥

४ ] ति० टी०—ब्रह्ममावर्तयन्नित्यकारान्तत्वमार्षम् । परं ब्रह्मेत्यर्थः । प्रागगस्त्योपदिष्टं ब्रह्मसिद्धान्तप्रधानमहामन्त्रसर्वस्वं श्रीमद्ब्रह्महृदयमावर्तयन्सम्यङ्मनोवाग्वृत्तिभ्यामनुसंदधान इत्यर्थ इति कतकः । ब्रह्मप्रतिपादकोपनिषद आवर्तयन्नित्यर्थ इत्यन्ये कुशान्गृहीत्वाङ्गुलिविवरप्रसक्तान्कृत्वा प्रययौ । वक्ष्यमाणलक्षणमहाप्रस्थानविधिनेति शेषः ॥ ४ ॥

रा० टी०—तत इति । ततः प्रास्थानिकविधिसमाप्त्यनंतरं सूक्ष्माम्बरधरो रामः पाणिभ्यां कुशान् गृहीत्वा परब्रह्म उपनिषद्भागमित्यर्थः आवर्त्तयन् उच्चारयन्सन् सरयूं तत्तीरं प्रययौ ॥ ४ ॥

गो० टी०—तत इति । परं ब्रह्मावर्तयन्निति । अकारान्तत्वमार्षम् । देवमन्त्रमित्यर्थः । प्रसज्य गृहीत्वेति । अङ्गुलीविवरप्रसक्तं कृत्वेत्यर्थः ॥ ४ ॥

५ ] ति० टी०—तदेवाह अव्याहरन्निति । निश्चेष्टः किंचित्पदार्थदर्शनश्रवणस्पर्शनादिविषयकेन्द्रियचेष्टारहितः । निःसुखः पथि पादुकासुखमप्युपेक्ष्य शर्कराकण्टकादिदुःखसहिष्णुः ॥ ५ ॥

रा० टी०—गमनप्रकारमाह—अव्याहरन्नित्यादिभिः । क्वचित् कस्मिंश्चिद्देशे किञ्चित् वेदोच्चारणातिरिक्तशब्दजातम् अव्याहरन् अनुच्चारयन् निश्चेष्टः गमनातिरिक्तव्यापाररहितः निस्सुखः नित्यं प्राकृतसुखापेक्षारहितः अंशुमान् सूर्य इव दीप्यमानो रामः तस्मात् प्रकटीभूतात् गृहात् निर्जगाम ॥ ५ ॥

गो० टी०—अव्याहरन्निति । निश्चेष्टः किंचित्पदार्थदर्शनश्रवणस्पर्शनादिविषयकेन्द्रियचेष्टारहित इत्यर्थः । निःसुखः पथि पादुकादिसुखमुपेक्ष्य शर्कराकण्टकबाधां सोढुमुद्युक्तः । निर्जगामेत्यर्थः ॥ ५ ॥

६ ] ति० टी०—पद्मा पद्महस्ता, श्रीर्लक्ष्मीः, मही देवी । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ, इति श्रुतेः । श्रुतौ ह्रीर्मही । व्यवसायो व्यवसायशक्तिः संहारशक्तिः ॥ ६ ॥

रा० टी०—रामस्येति । पद्मा भरतस्य श्री श्रीः क्षीराब्धीशलक्ष्मणस्य श्री च रामस्य दक्षिणे पार्श्वे समुपाश्रिता मही देवी भूमनारायणशत्रुघ्नश्री सव्ये समुपाश्रिता व्यवसायः रामस्य शक्तिस्तु अग्रतस्समुपाश्रितः लिङ्गविपरिणामेनान्वयः ॥ ६ ॥

गो० टी०—रामस्येति । सपद्मा पद्महस्ता ॥ ६–९ ॥

७ ] ति० टी०—तथा संहारशक्तिसहकारिणामपि मूर्ततयोपासकत्वमाह—शरा इति । एवं रौद्रशक्तिसेवा दर्शिता ॥ ७ ॥

रा० टी०—शरा इति । शरादयः पुरुषविग्रहास्सन्तो ययुः ॥ ७ ॥

८ ] ति० टी०—अथ हैरण्यगर्भशक्तिसेवां दर्शयति—वेदा इति । गायत्री सर्वरक्षिणी सर्ववेदतन्मूलयज्ञयज्ञाधिकृताशेषजगद्रक्षिका तस्या अपि मूलमोङ्कारोऽप्यनुगतः । अनेन सर्वज्ञानयोगो दर्शितः । वषट्कारः कर्मयोगः ॥ ८ ॥

रा० टी०—वेदा इति । वेदायधुस्सर्वे ब्राह्मणरूपेण राममनुव्रता बभूवुरिति शेषः ॥ ८ ॥

९ ] ति० टी०—स्वर्गद्वारमपावृतं परस्वर्गस्य ब्रह्मलोकस्य द्वारमपावृतमनावृतम् । रामेण सहोपेन्द्रलोकगमनद्वारा रामेण सहागतानां सर्वजन्तूनां ब्रह्मलोकस्यैव प्राप्तेरिति बोध्यम् । अतएव बहुशः प्रागुक्तम् । 'रामो राज्यमुपासित्वा ब्रह्मलोकं गमिष्यति, इति रामस्थितिलोकस्यैव ब्रह्मलोकत्वाच्च ॥ ९ ॥

रा० टी०—ऋषय इति । अपावृतं मायावरणरहितं स्वर्गद्वारं साकेतप्राप्तिसाधकं महात्मानं राममृषिप्रभृतयोऽन्वगच्छन् ॥ ९ ॥

१ महाप्रास्थानिकमिति गो. रा. पा. । २ प्रसज्येति गो. पाठः । ३ सपद्मा श्रीरुपाश्रितेति गो. पाठः । ४ तु ह्रीर्महादेवीति गो. पाठः । ५ आयुधानीति गो. पाठः ।

तं यान्तमनुगच्छन्ति ह्यन्तःपुरचराः स्त्रियः । सवृद्धबालदासीकाः सवर्षवरकिंकराः ॥ १० ॥
सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ । रामं गतिमुपागम्य साग्निहोत्रमनुव्रताः ॥ ११ ॥
ते च सर्वे महात्मानः साग्निहोत्राः समागताः । सपुत्रदाराः काकुत्स्थमनुजग्मुर्महामतिम् ॥ १२ ॥
मन्त्रिणो भृत्यवर्गाश्च सपुत्रपशुबान्धवाः । सर्वे सहानुगा राममन्वगच्छन्प्रहृष्टवत् ॥ १३ ॥
ततः सर्वाः प्रकृतयो हृष्टपुष्टजनावृताः । गच्छन्तमनुगच्छन्ति राघवं गुणरञ्जिताः ॥ १४ ॥
ततः सस्त्रीपुमांसस्ते सपक्षिपशुबान्धवाः । राघवस्यानुगाः सर्वे हृष्टा विगतकल्मषाः ॥ १५ ॥
स्नाताः प्रमुदिताः सर्वे हृष्टपुष्टाश्च वानराः । दृढं किलकिलाशब्दैः सर्वं राममनुव्रतम् ॥ १६ ॥
न तत्र कश्चिद्दीनो वा व्रीडितो वापि दुःखितः । हृष्टं संमुदितं सर्वं बभूव परमाद्भुतम् ॥ १७ ॥
द्रष्टुकामोऽथ निर्यान्तं रामं जानपदो जनः । यः प्राप्तः सोपिऽ दृष्ट्वैव स्वर्गायानुगतो जनैः ॥१८॥
ऋक्षवानररक्षांसि जनाश्च पुरवासिनः । आगच्छन्परया भक्त्या पृष्ठतः सुसमाहिताः ॥१९॥
यानि भूतानि नगरेऽप्यन्तर्धानगतानि च । राघवं तान्यनुययुः स्वर्गाय समुपस्थितम् ॥ २० ॥
यानि पश्यन्ति काकुत्स्थं स्थावराणि चराणि च । सर्वाणि रामगमने अनुजग्मुर्हि तान्यपि ॥ २१ ॥

१० ] ति० टी०—वर्षवराः षण्ढाः ॥ १० ॥

रा० टी०—तमिति । सवृद्धबालदासीकाः वृद्धादिसहिताः सवर्षवरकिंकराः वर्षवरैः षण्ढैः किंकरैश्च सहिताः अंतःपुरचराः स्त्रियः तं राममनुगच्छन्ति ॥ १० ॥

गो० टी०—तमिति । नपुंसका वर्षधराः ॥ १०–१२ ॥

११ ] ति० टी०— सान्तःपुरोऽन्तःपुरस्त्रीसहितः । गतिं सर्वलोकगतिदम् । उपागम्य समीपमागत्यानुव्रतः । पश्चाच्चलित इत्यर्थः ॥ ११ ॥

रा० टी०—सान्त इति । सान्तःपुरः अन्तःपुरसामग्रीसहितोनुव्रतः नित्यं रामानुसारी भरतो गतिं सर्वाश्रयं साग्निहोत्रं राममुपागम्य ययौ ॥ ११ ॥

१२ ] ति० टी०—महात्मानो ब्राह्मणाः ॥ १२ ॥

रा० टी०—ते इति । समागताः सर्वे काकुत्स्थमनुजग्मुः ॥ १२ ॥

१३–१५ ति० टी०—प्रहृष्टवत् । देहविसर्जने समीपावस्थानलाभजः प्रहर्षः पुत्रैस्तु तल्लब्धमिति ॥ १३ ॥ १५ ॥

रा० टी०—मन्त्रिण इति । मन्त्रिप्रभृतयः प्रहृष्टवत् हर्षविशिष्टं यथा भवति तथा राममन्वगच्छन् ॥ १३ ॥

रा० टी०—तत इति । गुणेन रञ्जिताः रामेनुरक्ताः सर्वाः प्रकृतयः राघवमनुगच्छन्ति ॥ १४ ॥

रा० टी०—तत इति । सस्त्रीपुमांसः स्त्रीपुंसाभ्यां सहिताः सपक्षिपशुबान्धवाः विगतकल्मषाः सर्वे राघवस्यानुगाः हृष्टा बभूवुरिति शेषः ॥ १५ ॥

गो० टी०—मन्त्रिण इति । प्रहृष्टवत्, देहविसर्जनसमये समीपावस्थानजः प्रहर्षः ॥ १३–१५ ॥

१६ ] ति० टी०—दृढं दृढानुगमननिश्चयं किलकिलाशब्दैरुपलक्षितं सर्वं वानरबलमिति शेषः ॥ १६ ॥

रा० टी०—स्नाता इति । सर्वे वानराः हृष्टेन सन्तोषेण पुष्टाः अत एव प्रमुदिताः बभूवुरिति शेषः अत एव दृढं राममनुव्रतं सर्वं सैन्यं किलकिलाशब्दैरुपलक्षितं बभूवेति शेषः १६

गो० टी०—स्नाता इति । किलकिलाशब्दैरिति । उपलक्षितमिति शेषः । सर्वमिति । वानरबलमिति शेषः ॥ १६ ॥

१७–१९ ] ति० टी०—दीनो दीनाकृतिः । व्रीडितः । गते रामे कथमहं तिष्ठामीति लज्जावशान्न रामानुगमनम्, किंतु संतोषेणैवेत्यर्थः । समुदितं मिलितं सर्वं परमाद्भुतं परलोकगमनायैवंविधहर्षयुक्तमित्यत्याश्चर्यकरमभूदित्यर्थः १७–१९॥

रा० टी०—नेति । तत्र रामगमनकाले कश्चिदपि जनः दीनत्वादिविशिष्टो न बभूव तत्र हेतुः यतस्सर्वं स्त्रीपुत्रमित्रपशुप्रभृति समुदितं सहितं बभूव अत एव परमाद्भुतमत्याश्चर्यं बभूव ॥ १७ ॥

रा० टी०—द्रष्टुकाम इति । रामं द्रष्टुकामोपि यो जानपदो जनः प्राप्तः सोपि दृष्ट्वैव स्वर्गाय साकेताय गन्तुमनुगतः१८

रा० टी०—ऋक्षेति । सुसमाहिताः ऋक्षादयः परया भक्त्या पृष्ठत आगच्छन् ॥ १९ ॥

गो० टी०—नेति । व्रीडित इति । भगवदपराधादिना पूर्वकृतेनेति शेषः ॥ १७–१९ ॥

२० ] ति० टी०—अन्तर्धानगतानि भूतप्रेतपिशाचादीनि भद्रकाल्यादीनि च ॥ २० ॥

रा० टी०—यानीति । नगरे अयोध्यायां यान्यन्तर्धानगतान्यपि भूतानि तान्यपि राघवमनुययुः ॥ २० ॥

गो० टी०—यानीति । स्वर्गाय ब्रह्मलोकगमनाय ॥२०॥२१

२१ ] ति० टी०—स्थावराणीति । स्थावराणामनुगमनं भगवतो रामस्य सदयावलोकनेन तदानीं ज्ञानक्रियाशक्त्युद्भवाद्‍दुपपद्यते ॥ २१ ॥

१ अभ्यगच्छंस्तमिति गो. पाठः । २ वाहना इति गो. पा. । ३ प्रेति गो. पाठः । ४ मुदेति गो. पाठः ।

नोच्छ्वसत्तदयोध्यायां सुसूक्ष्ममपि दृश्यते । तिर्यग्योनिगताश्चैव सर्वे राममनुव्रताः ॥ २२ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे नवाधिकशततमः सर्गः ॥ १०९ ॥

## दशाधिकशततमः सर्गः ।

सर्वैः सह सरयूसमीपमागतः श्रीरामस्तत्रागतपितामहवचनेन सभ्रातृको निजेन शरीरेण वैष्णवतेजो विवेश स्वेन सहागतेभ्य उत्तमं लोकं देहीत्यादिष्टो विधिः सान्तानिकाँल्लोकांस्तेभ्यो ददौ सर्वे चैवं भगवत्प्रसादात्स्वर्गभाजोऽभवन् ।

अध्यर्धयोजनं गत्वा नदीं पश्चान्मुखाश्रिताम् । सरयूं पुण्यसलिलां ददर्श रघुनन्दनः ॥ १ ॥
तां नदीमाकुलावर्तां सर्वत्रानुसरन्नृपः । आगतः सप्रजो रामस्तं देशं रघुनन्दनः ॥ २ ॥
अथ तस्मिन्मुहूर्ते तु ब्रह्मा लोकपितामहः । सर्वैः परिवृतो देवैर्भूषितैश्च महात्मभिः ॥ ३ ॥
आययौ यत्र काकुत्स्थः स्वर्गाय समुपस्थितः । विमानशतकोटीभिर्दिव्याभिरभिसंवृतः ॥ ४ ॥
दिव्यतेजोवृतं व्योम ज्योतिर्भूतमनुत्तमम् । स्वयंप्रभैः स्वतेजोभिः स्वर्गिभिः पुण्यकर्मभिः ॥ ५ ॥
पुण्या वाता ववुश्चैव गन्धवन्तः सुखप्रदाः । पपात पुष्पवृष्टिश्च देवैर्मुक्ता महौघवत् ॥ ६ ॥
तस्मिंस्तूर्यशतैः कीर्णे गन्धर्वाप्सरसंकुले । सरयूसलिलं रामः पद्भ्यां समुपचक्रमे ॥ ७ ॥

---

**रा० टी०—**उपसंहरन्नाह—**यानीति** । यानि सर्वाणि काकुत्स्थं पश्यन्ति तानि सर्वाण्यपि रामगमने अनुजग्मुः २१

२२ ] **ति० टी०—**उच्छ्वसत् । प्राणिमात्रमित्यर्थः । सुसूक्ष्ममपि न दृश्यते । अननुयातमिति शेषः ॥ २२ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे नवाधिकशततमः सर्गः ॥ १०९ ॥

**रा० टी०—नेति** । तिर्यग्योनिगता अपि सर्वे राममनुव्रता बभूवुः अत एव यदुच्छ्वसत् श्वासं गृह्णत् तत्सूक्ष्ममपि अयोध्यायां न दृश्यते ॥ २२ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे नवाधिकशततमः सर्गः ॥ १०९ ॥

**गो० टी०—नेति** । उच्छ्वसत्प्राणमित्यर्थः । सुसूक्ष्ममपि न दृश्यते । अननुयातमिति शेषः ॥ २२ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने नवोत्तरशततमः सर्गः ॥ १०९ ॥

१ ] **ति० टी०—**अथ रामेण स्वस्वरूपं प्राप्य पश्चात्सर्वजन्तूनां पितामहानुमत्या ब्रह्मलोकादर्वाचीने ब्रह्मलोकसमे संतानकलोके प्रापणम्—**अध्यर्धेति** । अर्धाधिकं योजनं गत्वेत्यर्थः । पश्चान्मुखाश्रितां पश्चान्मुखेन स्वेनाश्रिताम् ॥१॥

**रा० टी०—**सरयूसमीपागमनानन्तरकालिकं वृत्तमाह—**अध्यर्धेत्यादिभिः** । पश्चान्मुखेन पश्चिमाभिमुखस्थितेन स्वेन आश्रितां सरयूमध्यर्धयोजनमर्धाधिकयोजनं गत्वा ददर्श तच्छोभामवलोकयामासेत्यर्थः ॥ १ ॥

**गो० टी०—अध्यर्धेत्यादि** । अर्धाधिकं योजनमध्यर्धयोजनम् । पश्चान्मुखाश्रितां पश्चान्मुखेन स्वेनाश्रिताम् ॥१–४॥

२ ] **ति० टी०—**तं देशं स्वर्गप्रापकं देशम् ॥ २ ॥

**रा० टी०—तामिति** । आकुलावर्तामावर्तैराकुलां तां सरयूं सर्वतः इतस्ततोऽनुसरन् गच्छन् रामः तमप्रकटसाकेतप्रापकं देशं गोप्रतारमित्यर्थः आगतः प्राप्तः ॥ २ ॥

३ ] **ति० टी०—**तस्मिन्मुहूर्ते लोकपितामहो ब्रह्मा आययौ इत्युत्तरेणान्वयः । रामपरिकरस्य यथोचितलोकप्रापणार्थमिति शेषः ॥ ३ ॥

४ ] **ति० टी०—**स्वर्गाय स्वर्गं गन्तुम् ॥ ४ ॥

**रा० टी०—अथेति** । देवैः परिवृतः महात्मभिर्महर्षिभिर्भूषितः अत एव दिव्याभिर्विमानशतकोटीभिरभिसंवृतः ब्रह्मा यत्र यस्मिन्देशे काकुत्स्थः स्वर्गाय स्वर्गं गन्तुं समुपस्थितः आगतः तत्राययौ श्लोकद्वयमेकान्वयि ॥ ३–४ ॥

५ ] **ति० टी०—**प्रथमतो दिव्यतेजसा व्याप्तं व्योम स्वयंप्रभैः स्वयमेव प्रकाशान्तरनैरपेक्ष्येण प्रकाशमानैः स्वर्गिभिः स्वतेजोभिः किरणैरनुत्तममतिशयेन ज्योतिर्भूतं ज्योतिर्मयमभूदित्यर्थः ॥ ५ ॥

**रा० टी०—दिव्येति** । स्वतेजोभिरुपलक्षितैः अत एव स्वयंप्रभैः स्वर्गिभिरनुगतमिति शेषः अत एव दिव्यतेजोवृतमत एव ज्योतिर्भूतं व्योम बभूवेति शेषः ॥ ५ ॥

**गो० टी०—दिव्येति** । स्वयंप्रभैः कोई विना स्वयमेव प्रकाशमानैः ॥ ५ ॥

६ ] **ति० टी०—महौघवत्** । महासमृद्धिमतीत्यर्थः ॥ ६ ॥

**रा० टी०—पुण्येति** । पुण्यवाताः ववुः देवैर्मुक्ता पुष्पवृष्टिः महौघवत् महासमृद्धिविशिष्टं यथा भवति तथा पपात ॥६॥

**गो० टी०—पुण्या इति** । महौघवत् महासमृद्धार्था ॥ ६ ॥

७ ] **ति० टी०—**तूर्यशतैः संकीर्णे । तस्मिन्काले इत्यर्थः ।

---

१ अपीति गो. पाठः । २ ऋषिभिरिति गो.

ततः पितामहो वाणीं त्वन्तरिक्षादभाषत । आगच्छ विष्णो भद्रं ते दिष्ट्या प्राप्तोऽसि राघव ॥८॥
भ्रातृभिः सह देवाभैः प्रविशस्व स्विकां तनुम् । यामिच्छसि महाबाहो तां तनुं प्रविश स्विकाम् ॥९॥
वैष्णवीं तां महातेजो यद्वाकाशं सनातनम् । त्वं हि लोकगतिर्देव न त्वां केचित्प्रजानते ॥ १० ॥
ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् । त्वामचिन्त्यं महद्भूतमक्षयं चाजरं तथा ॥ ॥
यामिच्छसि महातेजस्तां तनुं प्रविश स्वयम् ॥ ॥ ११ ॥

गन्धर्वाप्सरसंकुले । गन्धर्वाप्सरःसंकुल इति यावत् । पद्भ्यां समुपचक्रमे । गन्तुमिति शेषः ॥ ७ ॥

रा० टी०—तस्मिन्निति । तूर्यशतैः अनेकतूर्यैर्ध्वनिभिः कीर्णे व्याप्ते गंधर्वाप्सरैः गंधर्वाप्सरोभिस्सङ्कुले तस्मिन्समये रामः सरयूसलिलं समुपचक्रमे ॥ ७ ॥

गो० टी०—तस्मिन्निति । गन्धर्वाप्सरसंकुले गन्धर्वाप्सरःसंकुले । पद्भ्यां समुपचक्रमे गन्तुमिति शेषः ॥ ७ ॥

८ ] ति० टी०—अन्तरिक्षात्समीपमागत्य । अभाषतेत्यर्थः । हे विष्णो ! लोकानुग्रहाय गृहीतविष्णुशरीर ब्रह्मन्राघव, दिष्ट्या प्राप्तोऽसि । मायागृहीतदुःखमयनटनयोग्यमनुष्यशरीरविसर्जनकालं प्राप्तोऽसि । ते भद्रमस्तु कल्याणमस्तु । अथागच्छ । यतो लोकान्मनुष्यलोकं गतस्तं लोकमित्यर्थः॥८॥

रा० टी०—तत इति । अंतरिक्षात् अन्तरिक्षं प्राप्य पितामहोभाषत अर्द्धं पृथक् तदाकारमाह—आगच्छेति । हे विष्णो ! व्यापकव्यापक आगच्छ दिष्ट्या अस्मद्भाग्यवशेन भ्रातृभिस्सह सम्प्राप्तोसि अतः स्वकामात्मीयां तनुं तनुवत्प्रियं धामेत्यर्थः प्रविशस्व प्रविश ॥ ८ ॥

गो० टी०—तत इति । अन्तरिक्षादस्याशमागत्याभाषतेत्यर्थः ॥ ८ ॥

९ ] ति० टी०—तदर्थं च देवाभैर्देवस्य तव सदृशैर्भ्रातृभिः सह स्विकां तनुं स्वतनुवदत्यन्तप्रियं लोकं प्रविश । अत्र भ्रातृभिरिति बहुवचनेन लक्ष्मणस्यापि तदानीं तत्रागमनं सूचयतीति तीर्थः । कतकस्तु यद्यपि शत्रुघ्न एक एव सह गच्छति तथापि पुरोगतस्य सह गच्छतः पश्चादागमिष्यतश्च भ्रातुस्तत्र प्रवेशः सामान्येनायतनप्रवेश इत्युच्यते इति न विरोध इति व्याचख्यौ । भरतानुगमनं भगवद्देहविसर्जनदर्शनपर्यन्तमिति च पूर्वसर्गे 'सान्तःपुरश्च भरतः शत्रुघ्नसहितो ययौ' इति पद्ये व्याख्याति स्म च । तत्र भरतस्य पश्चाद्गमने मूलमन्वेष्टव्यम् । पूजायां बहुवचनमित्यन्ये । ननु मदीयतनूनामनेकत्वात्कचित्प्रविशेत्युच्यते तत्राह—यामिति ॥ ९ ॥

रा० टी०—रामप्रवेशानं संप्रार्थ्य रामेण सहागतानां प्रवेशं प्रार्थयन्नाह—यामिति । तां प्रसिद्धां वैष्णवीं विष्णुसम्बन्धिनीं तनुं धामेत्यर्थः सनातनं सनस्य ब्रह्मणः आतनः तत्तत्कार्ये नियोगो यत्र तत् आकाशमाकाशवद्विस्तीर्णं यत् स्वकां तनुं साकेतमित्यर्थः यां व्यक्तिमिच्छसि प्रवेशयितुमिति शेषः तां प्रविश प्रवेशय ॥ ९ ॥

गो० टी०—भ्रातृभिरिति । स्वकां तनुमिति । त्वं विष्णुतनुं लक्ष्मणः शेषतनुं भरतो गरुडतनुं शत्रुघ्नो विष्वक्सेनतनुमित्यर्थः । तद्वाकाशं सनातनम् । "ऋचो अक्षरे परमे व्योमन्" इति श्रुत्युक्तपरमाकाशं विष्ण्ववतारकुलस्थानं वैकुण्ठं वा प्रविशेत्यर्थः ॥ ९ ॥

१० ] ति० टी०—तदेव विशदयति—वैष्णवीमिति । हे महातेजः ! वैष्णवीमैन्द्रीम् । यतो मनुष्यदेहस्तां वा प्रविश । यद्वाकाशं सनातनम् । यद्वा सनातनमाकाशं शुद्धब्रह्मरूपं वा प्रविश । तद्रूपेण वा तिष्ठेत्यर्थः । आकाशशब्दो हि ब्रह्मणि तत्र तत्र श्रुतिषु प्रसिद्धः । कतकस्तु—'वैष्णवीं तां महातेजः स्वां तनुं प्रविश स्वयम्' इति पाङ्क्तः पाठः । यामिच्छसीत्येतत्प्राक्तनमर्धं च प्रामादिकमित्याह । अग्रे च पितामहवचं इति श्लोक इति तत्स्वरसः । तीर्थस्तु यद्वाकाशं सनातनमिति व्याख्यायातः परं ब्रह्मा स्तौति—त्वं हीति । लोकगतिः । लोकानां स्वर्गादिकं गमयिता लोकैर्गम्यश्च त्वमेवेत्यर्थः । त्वां केचिदतिशयिततपःसंपन्ना अपि न प्रजानते ॥ १० ॥

११ ] ति० टी०—तर्हि किमज्ञेय एव सर्वथा नेत्याह—ऋते इति । मायां ज्ञानशक्तिरूपां विनान्ये न जानन्तीत्यर्थः । विशालाक्षीमित्यनेन तस्याः सर्वविषयता सूचिता । पूर्वपरिग्रहाम् । तेन सहजत्वं सूचितम् । श्रवणमनननिदिध्यासनादिभिर्दृशी ज्ञानशक्तिर्येषां प्रादुर्भवति त एव त्वां जानन्तीति तात्पर्यम् । तत्र तादृशज्ञानविषयं स्वरूपमाह—त्वामिति । अचिन्त्यं देशतः परिच्छेदशून्यम् । अत एव महद्भूतं प्राप्तम् । अविशेषात्सर्ववस्तुभिरिति शेषः । तेन वस्तुपरिच्छेदशून्यम् । अक्षयं कालपरिच्छेदशून्यम् । अजरमविकारिणम् । एवं स्तुत्वा प्रकृतिं विज्ञापयति—यामिति ॥ ११ ॥

रा० टी०—ननु दिव्यलोकप्रवेशनाधिकारः तवैवास्त्वित्यत आह—त्वमिति । लोकानां निखिलजनानां गतिः निर्वाहकः त्वमेव त्वां तु मायां कृपामयीं तव पूर्वपरिग्रहां नित्यश्रियं सितामृते विना केचिन्न प्रजानते अत एव त्वां त्वामचिन्त्यत्वादिविशिष्टमाहुर्वेदा इति शेषः सार्द्धश्लोक एकान्वयी ॥ १०–११ ॥

गो० टी०—अनन्तरोक्तपक्षं विवृणोति—त्वं हीत्यादिना । मायां लक्ष्मीम् । पूर्वपरिग्रहाम् अनादितया परिगृह्यमाणाम् । नित्यानपायिनीमित्यर्थः । त्वामिति । सर्वसंग्रहं सर्वानुग्राहकम्' अक्षयं चाजरं तथेति च पाठः ॥ १०–११ ॥

१ तद्विति गो. पा. । २ सर्वसंग्रहमिति गो. पाठः ।

पितामहवचः श्रुत्वा विनिश्चित्य महामतिः । विवेश वैष्णवं तेजः सशरीरः सहानुजः ॥ १२ ॥
ततो विष्णुमयं देवं पूजयन्ति स्म देवताः । साध्या मरुद्गणाश्चैव सेन्द्राः साग्निपुरोगमाः ॥१३॥
ये च दिव्या ऋषिगणा गन्धर्वाप्सरसश्च याः । सुपर्णनागयक्षाश्च दैत्यदानवराक्षसाः ॥ १४ ॥
सर्वं पुष्टं प्रमुदितं सुसंपूर्णमनोरथम् । साधुसाध्विति तैर्देवैस्त्रिदिवं गतकल्मषम् ॥ १५ ॥
अथ विष्णुर्महातेजाः पितामहमुवाच ह । एषां लोकं जनौघानां दातुमर्हसि सुव्रत ॥ १६ ॥
इमे हि सर्वे स्नेहान्मामनुयाता यशस्विनः । भक्ता हि भजितव्याश्च त्यक्तात्मानश्च मत्कृते॥१७॥
तच्छ्रुत्वा विष्णुवचनं ब्रह्मा लोकगुरुः प्रभुः । लोकान्संतानकान्नाम यास्यन्तीमे समागताः ॥१८॥
यच्च तिर्यग्गतं किंचित्त्वामेवमनुचिन्तयत् । प्राणांस्त्यक्ष्यति भक्त्या तैत्संतानेषु निवत्स्यति १९

१२ ] ति० टी०-अथ स्वसालोक्यकाङ्क्षिणो जनान्संतानापरपर्यायं स्वलोकं प्रापय्य क्रमेण परमं पदं नेतुकामो दयालुर्भगवांस्त्वतोऽप्यस्मादुत्तमं लोकं प्रापितवानिति तत्तोषायैपेन्द्रं लोकमेव गच्छति स्मेत्याह—पितामहेति । महामतिः सर्वज्ञो भगवान्विनिश्चित्य प्रागुक्तं निश्चयं कृत्वा सशरीरो वैष्णवं तेजो यज्ञज्वालावत्तेजोमयमौपेन्द्रं विवेश । अनेन तेजोमय एव देहो मायया मनुष्यदेहादिभिर्मनुष्यदेहत्वेन गृहीत इति ध्वनितम् । तेजःप्रवेशे जले जलवद्विवेकेनाग्रहात्सहानुज इत्यनेनानुजशरीराणामपि तथैव तेजोमयत्वं सूचितम् । सशरीरशब्दबोधितस्वसाहचर्येण तेषामपि सशरीरप्रवेशबोधनात् ॥ १२ ॥

रा० टी०-यामिति । स्वयमपि यां तनुमिच्छसि तां प्रविश अर्द्धं पृथक्—पितामहेति । महामतिः रामः वैष्णवं विष्णुसम्बन्धि तेजः तन्मयवैकुण्ठमित्यर्थः सहानुजस्सशरीरो विवेश ॥ १२ ॥

१३-१४ ] ति० टी०-ततस्तत्प्रवेशात् । विष्णुमयमुपेन्द्राभेदमापन्नं देवं देवताः पूजयन्ति स्म । कास्ता देवतास्तत्राह—साध्या इत्यादि ॥ १३ ॥ १४ ॥

रा० टी०-तत इति । विष्णुमयभरतांशभूतविष्णुसमीपं प्राप्तं देवं नित्यक्रीडावन्तं रामं देवतादयः ऋषिगणादयश्च पूजयन्ति स्म दैत्यादिकर्तृकपूजनोक्त्या रामरूपस्य सर्वमोहकत्वं ध्वनितम् अर्द्धचतुष्टयमेकान्वयि ॥ १३-१४ ॥

१५ ] ति० टी०-सर्वमिति । त्वय्यत्रागते सर्वमिदं त्रिदिवस्थजनजातं पुष्टं प्रमुदितं सुसंपूर्णमनोरथं गतकल्मषं च जातमिति तैर्देवैः साधुसाध्विति भाषितम् ॥ १५ ॥

रा० टी०-सर्वमिति । गतकल्मषं सर्वं त्रिदिवमूर्द्धलोकमित्यर्थः सुसम्पूर्णमनोरथमत एव प्रमुदितमत एव पुष्टमासीदिति शेषः अत एव देवैः साधुसाध्वित्युच्चे इति शेषः ॥ १५ ॥

१६ ] ति० टी०-अथ विष्णुर्विष्णुशरीरसंक्रान्तशरीरो महातेजा रामः पितामहमुवाच किमुवाच तदाह—एषां लोकमिति । तल्लोकप्राप्तिद्वारा प्रतिसंचरे त्वया सह मोक्षप्रापकं लोकमेषां दातुमर्हसि ॥ १६ ॥

रा० टी०-अथेति । विष्णुर्भरतः पितामहमुवाच अर्द्धं पृथक् ॥ १६ ॥

गो० टी०-अथेत्यादि । विष्णुः विष्णुत्वं प्राप्तः रामः । लोकं दातुमर्हसि । आतिवाहिकतया दातुमर्हसीत्यर्थः ॥ १६ ॥

१७ ] ति० टी०-किमर्थमेवमेतन्मुक्तये यत्नस्तत्राह-इमे हीति । यतो मम स्नेहादेते मामनुयाता अनुगमनं प्राप्ताः । भक्ताः अत एव मे भजितव्या भजनीयाः । मत्कृते मद्वियोगासहिष्णुतया त्यक्तात्मानस्त्यक्तशरीराः । अत एषां तादृशलोकदानमुचितमिति भावः ' भक्ता हि भाषितव्या मे ' इति पाठे यत इमे भक्ताः, अत इमे भाषितव्याः । एतत्प्रयोजनार्थं भवन्तं प्रत्यवश्यं मया वक्तव्या इत्यर्थः ॥ १७ ॥

रा० टी०-तदाकारमाह—एषामिति । हि यतः स्नेहात् मामनुयाता अत एव मत्कृते त्यक्तात्मानः त्यक्तलौकिकप्रयत्नाः तपस्विनः प्रशस्तविचारवन्तः इमे सर्वे भक्ता अत एव भजितव्याः मयापि यथोचितं सेव्याः अतः एषामस्माभिस्सहागतानां जनौघानां लोकं दातुमर्हसि सार्द्धश्लोक एकान्वयी १७

गो० टी०-कथं ब्रह्मविद्यारहितानामेषां ब्रह्मलोकप्राप्तिरित्यत्राह-इमे हीति । भक्ताः भक्तिमन्तः, मत्कृते त्यक्तात्मानश्च ॥ १७ ॥

१८ ] ति० टी०-लोकगुरुः सर्वजगत्कर्ता वेदादिसर्वविद्योपदेष्टा च । प्रभुर्नित्यनैमित्तिकविहितनिषिद्धकर्मणां फलप्रापणे समर्थः । इमे त्वया सह समागताः संतानकान्नाम लोकान्क्रमेण ब्रह्मलोकप्राप्तिद्वारा मुक्तिजनकान्यास्यन्ति॥१८॥

रा० टी०-तदिति । विष्णोर्भरतस्य वचनं श्रुत्वा ब्रह्माब्रवीदिति शेषः अर्द्धं पृथक् तदाकारमाह—लोकानिति । समागताः भवद्भिस्सहागता इमे सन्तानकान्नाम लोकान् यास्यन्ति अर्धं पृथक् ॥ १८ ॥

गो० टी०-तदिति । सान्तानिकान् सान्तानिकाख्यान् लोकान्, संप्राप्ताः सन्तः यास्यन्ति । तल्लोकमिति शेषः ॥१८॥

१९ ] ति० टी०-ननु कथं ब्रह्मविद्भ्यो ब्रह्मलोको वानरप्राप्यस्तत्राह-यच्चेति । तिर्यग्गतमपि यत्किंचिदत्र क्वापि पदार्थे त्वामेव विष्णुमिति चिन्तयत्यत्किंचित्पदार्थं विष्णुत्वेन

सर्वैर्ब्रह्मगुणैर्युक्ते ब्रह्मलोकादनन्तरे । वानराश्च स्विकां योनिमृक्षाश्चैव तथा ययुः ॥२०॥
येभ्यो विनिःसृताः सर्वे सुरेभ्यः सुरसंभवाः । तेषु प्रविविशे चैव सुग्रीवः सूर्यमण्डलम् ॥ २१ ॥
पश्यतां सर्वदेवानां स्वान्पितॄन्प्रतिपेदिरे । तथा ब्रुवति देवेशे गोप्रतारमुपागताः ॥ २२ ॥
भेजिरे सरयूं सर्वे हर्षपूर्णाश्रुविक्लवाः । अवगाह्याप्सु यो यो वै प्राणांस्त्यक्त्वा प्रहृष्टवत् २३
मानुषं देहमुत्सृज्य विमानं सोऽध्यरोहत । तिर्यग्योनिगतानां च शतानि सरयूजलम् ॥२४॥
संप्राप्य त्रिदिवं जग्मुः प्रभासुरवपूंषि तु । दिव्या दिव्येन वपुषा देवा दीप्ता इवाभवन्॥२५॥
गत्वा तु सरयूतोयं स्थावराणि चराणि च । प्राप्य तत्तोयविक्लेदं देवलोकमुपागमन् ॥ २६ ॥

भावयस्त्वयि विष्णौ भक्त्या युक्तं प्राणांस्त्यक्ष्यति तत्संतानकनामकलोकेषु वत्स्यति । किं पुनर्वक्तव्यं य एते त्वदनुरागेण त्वदनुगमनपूर्वं प्राणांस्त्यजन्ति ते संतानकेषु वत्स्यन्तीति १९

रा० टी०–यदिति । तिर्यग्गतमपि यत्किञ्चित् त्वामनुचिन्तयन्सन् प्राणान् त्यक्ष्यति तत्सर्वं ब्रह्मगुणैः सत्यज्ञानानन्दादिभिर्युक्ते ब्रह्मलोकात् गोलोकादित्यर्थः अनन्तरसमीपवर्तिसाकेते विद्यमानेषु संतानेषु लोकविशेषेषु निवत्स्यति सार्धश्लोक एकान्वयी ॥ १९ २० ॥

गो० टी०–न केवलमेत एव, इतः परमपि ये रामभक्तास्तेपि विष्णुलोकं प्राप्नुवन्तीत्याह–यच्चेति । ब्रह्मलोकादनन्तरे अव्यवहितोपरिदेशस्थे सर्वैर्गुणैर्युक्ते । "एष सर्वतः प्रतिष्ठव-ह्नत्तमेषूत्तमेषु" इति श्रुतेः । सर्वगुणैर्नित्ययुक्ते सान्तानिके निवत्स्यतीत्यनुकर्षः ॥ १९ ॥ २० ॥

२० ] ति० टी०–कोऽसौ संतानकलोकस्तत्राह–सर्वैरिति । सर्वैर्ब्रह्मगुणैः सत्यसंकल्पत्वादिब्रह्मगुणैर्युक्ते । ब्रह्मलोकादनन्तरे तत्समीपस्थे । अनेन तत्र स्थितानामपि क्रमेण ब्रह्मलोकप्राप्त्या ब्रह्मणा सह मुक्तिः सूचिता । एवं सामान्यतो वानराणां सांतानिकलोकप्राप्तिमुपदिश्य देवांशानां सुग्रीवादीनां तत्तद्देवादिस्वरूपप्राप्तिमाह–वानराश्चेति । वानराः सुग्रीवादयः । ऋक्षा जाम्बवदतिरिक्ताः स्विकां स्वीयां योनिं देवयोनिं स्वस्वदेवरूपं ययुः ॥ २० ॥

रा० टी०–वानरा इति । सुरसम्भवाः सुरेभ्यस्समागताः ये वानराः ऋक्षाश्च साकेतागतवानरादिषु तत्प्रसादार्थं प्रविष्टाः ते सर्वे येभ्यस्सुरेभ्यो विनिःसृताः तां स्वकां योनिं तथागतप्रकारेणैव ययुः विविशुः ॥ २१ ॥

गो० टी०–वानराणां तु आधिकारिकदेवांशत्वात्तत्तद्देवशरीरप्रवेश एवेत्याह–वानराश्चेत्यादिना ॥ २१ ॥ २२ ॥

२१–२५ ] ति० टी०–उक्तमेवार्थं स्पष्टयति—येभ्य इति । सुरेभ्य इत्युपलक्षणम् । येभ्यो देवर्ष्यादिभ्यो ये विनिःसृतास्ते सुरसंभवाः स्वपितॄन्प्रतिपेदिरे । तेषु मध्ये सुग्रीवः सूर्यमण्डलं प्राविविशे । अत्र ययुः प्रतिपेदिरे इति निर्देशो भविष्यदर्थे । 'अवतीर्य समीकृत्य स्वांशान्स्वीकुर्वते पुनः' इति शास्त्रात् । उक्तार्थमुपसंहरति—तथेति । देवेशे पितामहे तथोक्तवति । आगच्छ प्रविश स्विकां तनुमित्युक्तवति इत्यर्थः । गोप्रतारं गोप्रताराख्यं तीर्थं सारवमुपागताः सन्तः सर्वे हर्षपूर्णाश्रुविक्लवा आनन्दजाश्रुपूर्णतया विक्लववीक्षणाः सरयूं भेजिरे । अथ यो यः प्राणी तदा सरयूजलमवगाह्य हृष्टवद्धृष्ट आसीत्स मानुषं देहमुत्सृज्य विमानमध्यरोहत । तिर्यग्योनिगतानां शतान्यनेकानि सरयूजलं तदवगाहं प्राप्य प्रभासुराणि वपूंषि येषां तादृशानि भूत्वा त्रिदिवं जग्मुः । दिव्या दिव्यवपुषः सन्तो दिव्येन वपुषा दीप्ता देवा इवाभवन् ॥२१–२५॥

रा० टी०–तत्र विशेषमाह—तेष्विति । तेषु वानरादिषु मध्ये सुग्रीवः सुग्रीवांशस्सूर्यमण्डलं विविशे अत एव स्वान् पितॄन् स्वयोनिं प्रतिपेदिरे सुग्रीवभिन्ना अपि वानरांशा इति शेषः ॥ २२ ॥

रा० टी०–तथेति । देवेशे ब्रह्मणि तथा ब्रुवति सति हर्षपूर्णाश्रुविक्लवाः सहागतभिन्ना अपि जना गोप्रतारमुपागतास्सन्तः सरयूं भेजिरे ॥ २३ ॥

गो० टी०–तथेति । गोप्रतारं गोप्रताराख्यं तीर्थम् । हर्षपूर्णाश्रुविक्लवाः आनन्दाश्रुपूर्णतया विक्लवदृष्टयः ॥२३–२५

रा० टी०–सहानागतानां वृत्तमाह—अवगाह्येति । अप्सु सरयूजलेषु यो योवगाह्यातिष्ठदिति शेषः स प्रहृष्टवत् प्रहर्षविशिष्टं यथाभवति तथा प्राणांस्त्यक्त्वा मानुषं देहं चोत्सृज्य विमानमध्यरोहत ॥ २४ ॥

रा० टी०–तिर्यगिति । तिर्यग्योनिगतानां शतानि अनेकानि सरयूजलं प्रभासुराणि अतिप्रकाशयुक्तानि वपूंषि च सम्प्राप्य त्रिदिवं जग्मुः ॥ २५ ॥

रा० टी०–दिव्या इति । दिव्येन वपुषोपलक्षिताः दिव्याः प्रमोदमयत्वेन प्राकृतविलक्षणाः देवा इव दीप्ता अभवन् सरयूजलं प्राप्ता इति शेषः अर्धं पृथक् तदेव भङ्ग्यन्तरेणाह–गत्वेति । स्थावराणि च चराणि सरयूतोये गत्वा तत्तोयविक्लेदं प्राप्य देवलोकं च साकेतमुपागमन् ॥ २६ ॥

२६ ] ति० टी०–अथ स्थावराणि चराणि च पश्वादीनि सरयूतोयं गत्वा तत्तोयविक्लेदं प्राप्य तत्तोयमज्जनं प्राप्य देवलोकमुपागमन् । कल्पवृक्षकामगव्यादिस्वरूपं प्राप्नुवन्तीत्यर्थः ॥ २६ ॥

१ जलं योयः प्राणी ह्यासीदिति गो. पा. । २ चेति गो. पा. ।

तस्मिन्येऽपि समापन्ना ऋक्षवानरराक्षसाः। तेऽपि स्वर्गं प्रविविशुर्देहान्निक्षिप्य चाम्भसि॥२७॥
ततः समागतान्सर्वान्स्थाप्य लोकगुरुर्दिवि। हृष्टैः प्रमुदितैर्देवैर्जगाम त्रिदिवं महत् ॥ २८ ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

## एकादशोत्तरशततमः सर्गः ।

पठनादिकर्तॄणां फलकथनम् इति श्रीः शुभं भवतु।

एतावदेतदाख्यानं सोत्तरं ब्रह्मपूजितम्। रामायणमिति ख्यातं मुख्यं वाल्मीकिना कृतम्॥१॥
ततः प्रतिष्ठितो विष्णुः स्वर्गलोके यथा पुरा। येन व्याप्तमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ २ ॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः। नित्यं शृण्वन्ति संहृष्टाः काव्यं रामायणं दिवि॥३॥

गो० टी०–गत्वेति। तत्तोयविक्लेदं तत्तोयसेचनम्२६॥२७

२७ ] ति० टी०–तस्मिन्सरयूजले समापन्नास्त्यक्तदेहास्तेऽपि सर्वे एतान्देहानम्भसि निक्षिप्य स्वर्गं संतानकलोकरूपं विविशुः ॥ २७ ॥

रा० टी०–तस्मिन्काले तत्र प्राप्ताः केचनापि न तत्र स्थिता इति बोधयन्नाह–तस्मिन्निति। सरयूजले ये समापन्नाः प्राप्ताः तेपि ऋक्षादयः देहान् अम्भसि निःक्षिप्य स्वर्गं साकेतं प्रविविशुः ॥ २७ ॥

२८ ] ति० टी०–ततः समागतान्दिव्यैर्देहैरन्तरिक्षे स्वसमीपं प्राप्तान्दिवि तत्तदुचितस्वर्गं स्थापयित्वा स्वयं भगवदागमनाद्धृष्टैर्देवैः सह महत्त्रिदिवं स्वलोकं जगाम ॥ २८ ॥

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्डे दशाधिकशततमः सर्गः ॥११०॥

रा० टी०–तत इति। लोकगुरुः सर्वनियन्ता रामः समागतान् सर्वान् वानरांशान् संस्थाप्य तत्तद्देवलोकेषु नियोज्य समुदितैः हृष्टैः नित्यं संतुष्टैः अत एव देवैः प्रमोदमयैः भ्रात्रादिभिः सह महत् सर्वेषां पूजनीयं त्रिदिवं सार्वकालिकप्रमोदविशिष्टं साकेतं जगाम ॥ २८ ॥

गो० टी०–तत इति। दिवं परमाकाशम् वैकुण्ठम्। त्रिदशैर्नित्यमरिभिः, सदा हृष्टैरिति विशेषणात् । हृष्टैः प्रमुदितो देवैर्जगाम त्रिदिवं महदिति च पाठः ॥ २८ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने दशोत्तरशततमः सर्गः ॥ ११० ॥

१ ] ति० टी०–अथ उक्तकाव्यफलोपदेशः—एतावदिति। सोत्तरमुत्तरकाण्डसहितम्। ब्रह्मणा चतुर्मुखेन भगवदवतारचरितविषयत्वात्पूजितम्। किंच ब्रह्मभिर्ब्रह्मर्षिभिः पूजितम्। ब्रह्मणा स्वयं प्रवर्त्य वाल्मीकिना कारितत्वात्सर्वाख्यानेभ्यः प्रशस्तं रामायणमिति ख्यातम्। 'परानन्दमयो रामो ज्ञायते श्रवणादिभिः। अतोऽस्य चाभिधा पुण्या रामायणमितीरिता॥' वाल्मीकिना कृतमेतदाख्यानमेतावदेव एतावच्छ्लोकसर्गकाण्डसंख्याकमेव। न न्यूनं नाधिकमित्यर्थः॥१॥

रा० टी०–एतावदिति। ब्रह्मभिः ब्राह्मणहिरण्यगर्भविष्णुप्रभृतिभिः पूजितं सोत्तरमुत्तरकाण्डसहितमेतावत् षट्काण्डात्मकमेव रामायणमिति ख्यातं मुख्यं सर्वाख्यानेभ्यः श्रेष्ठं वाल्मीकिना कृतमेतदेव ॥ २९ ॥

गो० टी०–अस्य काव्यस्य अपवर्गान्तसाधकतया कथाशेषानुवादपूर्वकं पठनश्रवणादिषु फलमुपदिश्यते–एतावदित्यादि। सोत्तरमुत्तरकाण्डसहितम्। मुख्यं सर्वाख्यानेभ्यः प्रशस्तमेतदाख्यानम्। एतावदेव समर्यादं एतावच्छ्लोकसर्गकाण्डसंख्याकमेव। न न्यूनं नाधिकम् ॥ १ ॥

२ ] ति० टी०–अथ पूर्वसर्गवृत्तानुवादपूर्वं काव्यस्यापवर्गान्तसाधकत्वेन श्रोतव्यार्थत्वप्रतिपादनम्—तत इति। ततो भक्तजनस्य स्वर्गप्रापणानन्तरं स्वयमपि विष्णुरुपेन्द्रत्वं प्राप्तः। स्वर्गलोके उपेन्द्रलोके यथा पुरा यथापूर्वं प्रतिष्ठितः। एवं तर्हि सपरिच्छेदः किं स नेत्याह—येनेति। येन सचराचरं सर्वं त्रैलोक्यं जगदुपादानत्वेन व्याप्तम् स्वर्गप्रतिष्ठितत्वं तु मनुष्यदेहधारणवन्मायिकमिति भावः ॥ २ ॥

रा० टी०–तत इति। ततः रामकर्तृकसाकेतगमनानन्तरं येन त्रैलोक्यं व्याप्तं स विष्णुः भरतांशभूतः स्वर्गलोके स्वर्गेपि गीयते प्रशस्यते स एव लोकः वैकुण्ठप्रभृतिः तस्मिन् यथा पुरा प्रतिष्ठितोभवदिति शेषः ॥ ३० ॥

गो० टी०–तत इति। ततः स्वभक्तजनस्य स्वलोकप्रापणानन्तरम्, विष्णुः स्वर्गलोके परमस्वर्गे वैकुण्ठे, यथापुरं यथापूर्वम् प्रतिष्ठितः स्वर्गशब्दस्य लोकपरत्वभ्रमव्यावृत्त्यर्थं विष्णुं विशिनष्टि–येनेति ॥ २ ॥

३ ] ति० टी०–ततोऽस्य काव्यस्य जगदुपादानकारणावतारचरित्राख्यानत्वतो देवादयोऽपि दिव्यं रामायणं दिवि शृण्वन्ति ॥ ३ ॥

रा० टी०–तत इति। ततः रामगमनकालादारभ्य दिवि स्थिता देवादयः रामायणं काव्यं नित्यं शृण्वन्ति ॥ ३१ ॥

गो० टी०–इदं च रामायणं न केवलं मनुष्याणां भोग्यं, किन्तु देवतानामपि भोग्यमेवेत्याह–तत इति। ततः ब्रह्मस्थानपूजितत्वादेः ॥ ३ ॥

१ तस्मिन्नपीति गो. पाठः। २ जगाम त्रिदशैः सार्धं सदा हृष्टैर्दिवं महदिति गो. पा.। ३ परमिति गो पाठः।

इदमाख्यानमायुष्यं सौभाग्यं पापनाशनम् । रामायणं वेदसमं श्राद्धेषु श्रावयेद्बुधः ॥ ४ ॥
अपुत्रो लभते पुत्रमधनो लभते धनम् । सर्वपापैः प्रमुच्येत पादमप्यस्य यः पठेत् ॥ ५ ॥
पापान्यपि च यः कुर्यादहन्यहनि मानवः । पठत्येकमपि श्लोकं पापात्स परिमुच्यते ॥ ६ ॥
वाचकाय च दातव्यं वस्त्रं धेनुर्हिरण्यकम् । वाचके परितुष्टे तु तुष्टाः स्युः सर्वदेवताः ॥ ७ ॥
एतदाख्यानमायुष्यं पठन्रामायणं नरः । सपुत्रपौत्रो लोकेऽस्मिन्प्रेत्य चेह महीयते ॥ ८ ॥
रामायणं गोविसर्गे मध्याह्ने वा समाहितः । सायाह्ने वापराह्णे च वाचयन्नावसीदति ॥ ९ ॥
अयोध्यापि पुरी रम्या शून्या वर्षगणान्बहून् । ऋषभं प्राप्य राजानं निवासमुपयास्यति ॥ १० ॥
एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् । कृतवान्प्रचेतसः पुत्रस्तद्ब्रह्माप्यन्वमन्यत ॥ ११ ॥
[ अश्वमेधसहस्रस्य वाजपेयायुतस्य च । लभते श्रवणादेव सर्गस्यैकस्य मानवः ॥
प्रयागादीनि तीर्थानि गङ्गाद्याः सरितस्तथा । नैमिशादीन्यरण्यानि कुरुक्षेत्रादिकान्यपि ॥
गतानि तेन लोकेस्मिन्येन रामायणं श्रुतम् । हेमभारं कुरुक्षेत्रे ग्रस्ते भानौ प्रयच्छति ॥
यश्च रामायणं लोके शृणोति सदृशावुभौ । सम्यक्छ्रद्धासमायुक्तः शृणुते राघवीं कथाम् ॥
सर्वपापात्प्रमुच्येत विष्णुलोकं स गच्छति । आदिकाव्यमिदं त्वार्षं पुरा वाल्मीकिना कृतम् ॥
यः शृणोति सदा भक्त्या स गच्छेद्वैष्णवीं तनुम् । पुत्रदाराश्च वर्धन्ते संपदः सन्ततिस्तथा ॥
सत्यमेतद्विदित्वा तु श्रोतव्यं नियतात्मभिः । गायत्र्याश्च स्वरूपं तद्रामायणमनुत्तमम् ॥
अपुत्रो लभते पुत्रमधनो लभते धनम् । सर्वपापैः प्रमुच्येत पदमप्यस्य यः पठेत् ॥

४-७ ] ति० टी०—यत एवमतः—इदमाख्यानमायुष्यमिति । श्रुतं पठितं च सदायुर्जनकमित्यर्थः । सौभाग्यं सौभाग्यवर्धनम् । वेदसमम् । वेदवद्ब्रह्मविषयत्वेऽपि पौरुषेयत्वेन वेदतः किंचिन्न्यूनमित्यर्थः ॥ ४-७ ॥

रा० टी०—इदमिति । आयुष्यमायुर्वर्द्धकं सौभाग्यं सौभाग्यजनकं वेदसमं सर्वान्तर्यामिप्रतिपादकत्वेन वेदसदृशमिदमाख्यानं रामायणं बुधः श्राद्धेषु श्रावयेत् एतेन श्रीमद्रामायणश्रुतेः पितॄणां तृप्तिकारकत्वं सूचितम् ॥ ३२ ॥

रा० टी०—ऐहिकमपि फलमस्तीति बोधयन्नाह—अपुत्र इति । अस्य रामायणश्लोकस्य पादमपि यः पठेत् सः सर्वपापैः प्रमुच्येत अत एव अपुत्रः पुत्रं लभते अधनश्च धनं लभते ॥ ३३ ॥

रा० टी०—पापानीति । यः अहन्यहनि प्रतिदिनं पापानि कुर्यात् सोपि एकमपि श्लोकं यदि पठेत् तदा पापात्परिमुच्यते ॥ ३४ ॥

रा० टी०—वाचकायेति । यतः वाचके परितुष्टे सति सर्वदेवताः तुष्टाः स्युः तस्मात् वाचकाय वस्त्रादि दातव्यम् ॥ ३५ ॥

गो० टी०—इदमिति । इदमाख्यानं रामायणरूपम्, आयुष्यम् आयुर्वर्धनम्, सौभाग्यं सौभाग्यवर्धनम्, श्राद्धं च श्रावयेत् । अक्षय्यपितृतृप्त्यर्थमिति शेषः ॥ ४-७ ॥

८-९ ] ति० टी०—लोकेऽस्मिन्महीयते इत्यर्थः । प्रेत्य मरणोत्तरमपि '…' च, चात्परलोके, इह लोके च महीयते । इह लोके पूजा च कीर्त्यविच्छेदात् ॥ ८-९ ॥

रा० टी०—एतदिति । एतद्रामायणमाख्यानं पठन्नरः सपुत्रपौत्रैः पुत्रपौत्रादिसहितैरैश्वर्यजातैरुपलक्षितो भूत्वा प्रेत्य लोकान्तरं गत्वा महीयते सर्वैः पूज्यते किंच इह लोके महीयते प्रेत्य च महीयते इत्यर्थः ॥ ३६ ॥

गो० टी०—एतदिति । लोकेस्मिन्महीयत इत्यनुकर्षः ॥ ८ ॥

१० ] ति० टी०—ततः परमयोध्या केन रूपेण स्थितेति शङ्कानिवृत्तये भविष्यद्वृत्तान्तान्तरमाह—अयोध्यापीति । रम्या अयोध्यापुर्यपि बहून्वर्षगणाञ्शून्या सती कालान्तर ऋषभं राजानमवाप्य निवासं जनाश्रयत्वमुपयास्यति । अत्र कतकः—एवं चायोध्याविषयेऽभिषिक्तेन भरतेनायोध्यादेशो नन्दिग्रामे स्थित्वैव रक्षित इति द्रष्टव्यमिति । तत्र मानं चिन्त्यम् । 'सत्येन च शपे राजन्स्वर्गलाभेन चैव हि । न कामये यथा राज्यं त्वां विना रघुनन्दन ॥' इति पूर्वभरतोक्त्या विरुद्धं च । तथा 'भरतश्चापि शत्रुघ्नस्तयोर्दारा उभे शुभे । राघवस्यानुगमने निश्चितार्थाः समाययुः ॥ राघवस्तु चतुर्बाहुरभूत्तस्य कराब्जयोः । उभौ भरतशत्रुघ्नौ शङ्खचक्रौ बभूवतुः ॥' इति पाद्मविरुद्धं चेत्यन्ये ॥ १० ॥

रा० टी०—अयोध्येति । बहून् वर्षगणान् शून्या जनरहिता अयोध्या पुरी ऋषभं राजानं प्राप्य निवासं जनस्थितिमुपयास्यति ॥ ३७ ॥

गो० टी०—अयोध्येति । निवासं सुजनाश्रयत्वम् ॥ ९ ॥

११ ] ति० टी०—एतदिति । सभविष्यं भगवध्यानानन्तरं

१ पदमिति गो. पादमप्येकमिति रा. पा. । २ पद्यमिदं गो. रा. पुस्तकयोर्न दृश्यते ।

यः पठेच्छृणुयान्नित्यं चरितं राघवस्य ह । भक्त्या निष्कल्मषो भूत्वा दीर्घमायुरवाप्नुयात् ॥
चिन्तयेद्राघवं नित्यं श्रेयः प्राप्तुं य इच्छति । श्रावयेदिदमाख्यानं ब्राह्मणेभ्यो दिने दिने ॥
यस्त्विदं रघुनाथस्य चरितं सकलं पठेत् । सोऽसुक्षये विष्णुलोकं गच्छत्येव न संशयः ॥
पिता पितामहस्तस्य तथैव प्रपितामहः । तत्पिता तत्पिता चैव विष्णुं यान्ति न संशयः ॥
चतुर्वर्गप्रदं नित्यं चरितं राघवस्य तु । तस्माद्यत्नवता नित्यं श्रोतव्यं परमं सदा ॥
शृण्वन्रामायणं भक्त्या यः पादं पदमेव वा । स याति ब्रह्मणः स्थानं ब्रह्मणा पूज्यते सदा ॥
एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः । प्रव्याहरत विस्रब्धं बलं विष्णोः प्रवर्धताम् ॥ ]

इत्यार्षे श्रीमद्रामायणे वाल्मीकीय आदिकाव्य उत्तरकाण्डे एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

भगवद्योध्यावृत्तान्तकथनसहितम् । सहोत्तरमेतावदेतदाख्यानमित्यतः प्राक्तनोत्तरकाण्डसहितम् । प्रचेतसः पुत्रो वाल्मीकिः । एतद्रामायणाख्यानं कृतवान् । प्रचेतसः पुत्र इत्यक्षराधिक्यमार्षत्वात् । तद्ब्रह्मा हिरण्यगर्भोऽप्यन्वमन्यत सत्यशब्दतया वेदोपबृंहणतया सर्वार्थसाधकतया चाङ्गीकृतवानिति सर्वेष्टसिद्धिः ॥ ११

इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीय आदिकाव्य उत्तरकाण्ड एकादशोत्तरशततमः सर्गः ॥ १११ ॥

निर्मलं कतकक्षोदादपि रामायणाम्बुधिम् ।
अत्यन्तं निर्मलं चक्रे रामः स्वमतिवाससा ॥
रामो रामायणाम्भोधौ सेतुं कृत्वा सुविस्तृतम् ।
पाखण्डिरक्षोवक्राणि ध्वस्तवान्साधुतोषकः ॥
उत्तरान्तैः सुवर्णिते निषेधावधिके परे ।
मम मे राघवे रामे रतिरस्तु चिदात्मके ॥

रा० टी०—उपसंहरन्नाह—एतदिति । सभविष्यं सभपु सभावत्सु विष्यं व्याप्तमेतदाख्यानं प्रचेतसः पुत्रः वाल्मीकिः कृतवान् तदाख्यानं ब्रह्मापि अन्वमन्यत अपूजयत् ॥ २८ ॥

स्वस्ति श्रीदाता निखिलविधाता श्रितविख्याता सकलपतिः ।
यस्य श्रीसहिता सीता दयिता त्रिभुवनमहिता निखिलनतिः ॥
सोऽयोध्यानाथो निगमसुगाथो गंगापाथोविदिततनुः ।
जयति श्रीरामो जलदश्यामो रमणललामो महाधनुः ॥ १ ॥
वन्दे श्रीभरतं रामे निरतं लक्ष्मणभरतं रिपुसूदम् ।
वन्दे विधिजातं रघुगुरुभातं श्रुतिवत् ख्यातं शिवभूतम् ॥
वन्देऽयोध्येशं दशरथमेशं सुतसवेशं रामेशम् ।
वन्दे श्रीजनकं सीताजनकं सज्जनकुलकं मिथिलेशम् ॥ २ ॥
जयति कपीशो रिपुगणदीशो यं जगदीशो भजति भृशम् ।
यो रघुपतिचरणे दुःखविदरणे जनसुखकरणे धरति दृशम् ॥
सोऽस्मत्प्रियकारी दुःखविहारी शुभसुखधारी पवनसुतः ।
श्रीहनुमन्नामा गुणगणधामा रघुवरकामाचरणयुतः ॥ ३ ॥
जयति श्रीगङ्गायमुनासङ्गा वाणी दङ्गा जन्हुसुता ।
यज्जललवपाता त्रिभुवनधाता भवति सुभाता शम्भुयुता ॥
यन्नामोद्धारी श्रीगिरिधारी त्रिभुवनकारी भवति सदा ।
सासुरसुरवन्द्या नतिभिर्नन्द्या योभिर्मन्या पातु सदा ॥ ४ ॥
यो वेदशास्त्राङ्गसुसारभूतं रामायणं रामसुखोपकारम् ।
सुनिर्ममे तं महतो महान्तं वाल्मीकिमाचार्यवरं नमामः ॥ ५ ॥
श्रीमद्रामकिशोरधूसरपिता श्रीतोडिरामात्मजात्
सीतारामसुधीवरात् सुजनितो वंशीधरः श्रीयुतः ।
प्रण्णस्तस्य हि कारणं समभवत् वाल्मीकिरामायण-
व्याख्याने यदिदं समाप्तिमगमत् श्रीमत्त्रिवेणीतटे ॥ ६ ॥
शिवसहायबुधनिर्मितिरेषा भाति
तत्त्वं दुर्जनवादात् सततं पाति ॥ ७ ॥
चन्द्रव्यङ्कशशाङ्कयुक्तशरदः शुक्लाश्विने दिक्तिथौ
पूर्णं श्रीरघुनाथपादकृपया रामायणाख्यं शिरः ।
अन्ते यस्य विराजते मणिपदं वाल्मीकिरामायण-
व्याख्यानं शुभदं समर्पितमिदं श्रीरामपादाब्जयोः ॥ ८ ॥

इति श्रीमद्वाल्मीकीयरामायणव्याख्याने रामायणशिरोमणौ उत्तरकाण्डे दशाधिकशततमः सर्गः ॥ ११० ॥

गो० टी०—एतदाख्यानमिति । सहोत्तरमिति । अभिषेकानन्तरवृत्तान्तः । सीताभूप्रवेशानन्तरभाविवृत्तान्तस्तु सभविष्यमित्युच्यते, कृतवान् प्रचेतस इति । तद्रामायणं ब्रह्माप्यन्वमन्यत । अपिः प्राधान्ये । अन्वमन्यत अङ्गीकृतवान् । सदा पठति स्मेत्यर्थः । अत्र यकारो गायत्र्यक्षरम् । तेन गायत्रीविवरणम् रामायणमिति सूचितम् ॥ १०—२९ ॥

इति श्रीगोविन्दराजविरचिते श्रीरामायणभूषणे मणिमुकुटाख्याने उत्तरश्रीरामायणव्याख्याने एकादशोत्तरशततमः सर्गः ॥ १११ ॥

---

## इति श्रीरामायणं समाप्तम् ।